सुमेरौ निर्मेरैरपि सपदि जग्मे तरुवरै-
र्धु गव्या दिव्यन्ते सलिलनिधौ चिन्तामणिगणैः । (?)
कलौ काले वीक्ष्यानवधिमभितो याचयगणं
न तस्थौ केनाऽपि स्थिरमभयचन्द्रस्तु विजयी ॥
धैर्यं ते स विलोकतानभय ! यः शैलेन्द्रधैर्योत्मना,
गाम्भीर्यं स तवेक्षतां जलनिधेर्गाम्भीर्यमिच्छुश्च यः ।
भक्तिं देवगुरौ स पश्यतु तव श्रीश्रेणिकं यः स्तुते,
यात्रां तीर्थपतेः स वेत्तु भवतो यः स सांप्रतीं झीप्सति ॥

[ कलियुग में चौतरफ अनगणित याचकों की फौज को देखकर कल्पद्रुम भाग कर सुमेरु पहाड़ पर चले गये । कामधेनु और चिन्तामणि वगैरा भी अपने-अपने स्थान पहुंच गये । याचकों की अधिकता को देखकर सब की स्थिरता जाती रही । परन्तु हमें इस बात को प्रकाशित करते हुए महान् हर्ष होता है कि दानवीर विजयी अभयचन्द्र की स्थिरता ज्यों की त्यों रही । ]

हे अभयचन्द्र ! दर्शकों को आपका धैर्य हिमाचल पहाड़ के समान दिखलाई देता है । जिस पुरुष को समुद्र के गाम्भीर्य का ज्ञान है, वही आपके गाम्भीर्य को भली-भांति अनुभव में ला सकता है । देवगुरु की भक्ति करने में आप श्रेणिक महाराज के समान यशस्वी हैं । जो पुरुष प्रियदर्शी राजा अशोक के पुत्र महाराज सम्प्रति की तीर्थ-यात्रा का वर्णन जानना चाहता है वह आपके द्वारा की गई तीर्थ यात्रा के वर्णन का मर्म समझे । ]

इसके बाद सं० १३२८ वैशाख सुदि चतुर्दशी के दिन जालोर में सेठ क्षेमसिंह ने श्रीचन्द्रप्रभ स्वामी की बड़ी मूर्ति की, महं० पूर्णसिंह ने ऋषभदेव की और महं० श्रीब्रह्मदेव ने श्री महावीर प्रतिमा की प्रतिष्ठा का महोत्सव किया । जेठ वदि ४ को हेमप्रभा को साध्वी बनाया । सं० १३३० वैशाख वदि ६ को प्रबोधमूर्तिगणि को वाचनाचार्य का पद और कल्याण ऋद्धि गणिनी को प्रवर्तिनी का पद दिया । तदनन्तर वैशाख वदि अष्टमी को सुवर्णगिरि में श्री चन्द्रप्रभ स्वामी महाराज की बड़ी प्रतिमा की स्थापना शिखर पर की ।

संसार के चित्त को चमत्कृत करने वाले चरित्रों को करते हुए श्रीमहावीर शासन की बढ़ती हुई आपदाओं की तरङ्गों से भयानक-संसार रूपी महासमुद्र में डूबते वाले, समस्त प्राणियों के मन में उत्पन्न होने वाले अनेक विध मनोरथों

श्रेष्ठि-देवचन्द्र लालभाई—जैनपुस्तकोद्धारे—ग्रन्थाङ्क २२

श्रीजिनेन्द्रदेशनानुसतप्रत्येकबुद्धादिऋषिप्रणीतानि श्रुतकेवलिधुरधश्रीमद्भद्रबाहुस्वामिसूत्रनिर्युक्तिकानि वादिवेतालश्रीशान्तिसूरिवर्यविवृतानि

# श्रीमन्त्युत्तराध्ययनानि ।

## ( विभाग प्रथम )

प्रसेधिका—देवचन्द्र लालभाई जैनपुस्तकोद्धारभाण्डागारसंस्था

विख्यातिकारक —शाह नगीनभाई घेलाभाई-जव्हेरी, अस्यैक कार्यवाहक' ।

इद पुस्तक मुम्बय्या शाह नगीनभाई घेलाभाई जव्हेरी ४२६ जव्हेरी बाजार इत्यनेन 'निर्णयसागर' मुद्रणास्पदे कोलभाटवीथ्यां २३ तमे गृहे रामचन्द्र येसू शेडगेद्वारा मुद्रापित प्रकाशित च ।

प्रथमसंस्कारे प्रतय ५०० ] अस्य पुनर्मुद्रणाद्या सर्वेऽधिकारा एतद्भाण्डागारकार्यवाहकाणामायत्ता स्थापिता । [ मोहमयीपत्तने

वीरसवत् २४४२ विक्रमसवत् १९७२ क्राइष्टस्य सन् १९१६

वेतन १-५-० [ Rs 1-5-0 ]

श्रेष्ठिदेवचन्द्रलालभाई-जैनपुस्तकोद्धार ग्रन्थाङ्क—

अर्हम्

पूर्वोद्धृतजिनभाषितश्रुतस्थविरसदृब्धानि ।

श्रीमद्भद्रबाहुस्वामिसकलितनिर्युक्तियुतानि ।

श्रीशान्त्याचार्यविहितशिष्यहितारव्यवृत्तियुक्तानि ।

# श्रीउत्तराध्ययनानि ।

शिवदा सन्तु तीर्थेशा, विघ्नसङ्घातघातिन । भवकूपोद्धृतौ येषा, वाग् वरत्रायते नृणाम् ॥ १ ॥
समस्तवस्तुविस्तारे, व्यासर्पत्तैलवज्जले । जीयात् श्रीशासन जैन, धीदीपोद्दीप्तिवर्द्धनम् ॥ २ ॥
यत्प्रभावादवाप्यन्ते, पदार्था कल्पना विना । सा देवी सविदे न स्तादस्तकल्पलतोपमा ॥ ३ ॥

व्याख्याकृतामखिलशास्त्रविशारदानां, सूच्यग्रवेधकधियां शिवमस्तु तेषाम् ।
यैरत्र गाढतरगूढविचित्रसूत्रग्रन्थिर्विभिद्य विहितोऽद्य ममापि गम्यः ॥ ४ ॥
अध्ययनानामेषां यदपि कृताश्चूर्णिवृत्तयः कृतिभिः । तदपि प्रवचनभक्तिस्त्वरयति मामत्र वृत्तिविधौ ॥ ५ ॥

इह खलु सकलकल्याणनिबन्धनं जिनागममवाप्य विवेकिनैवं विवेचनीयं—यदुत महार्थोऽयं मनोरथानामप्यपथभूतो भूरिजन्मान्तरोपचितपुण्यपरिपाकतो महानिधिरिव मयाऽधिगतः, तथाहि—महति संसारमण्डलेऽस्मिन् मानसादिदण्डैरभिहन्यमानाः कष्टेनेष्टविशिष्टार्थां महापुरीमिव मनुजगतिमनुप्रविशन्ति जन्तवः, अनुप्रविश्यापि चास्यामौद्धरैर्थिका इवाकृतसुकृतसम्भारा निरीक्षितुमपि नैनं क्षमन्ते, किमङ्ग पुनरवाप्तुमिति ?, एतदवाप्तौ सर्वथा कृतार्थोऽस्मि, सम्भवति चास्यां स्वोपकारवत्परोपकारेऽपि शक्तिरिति नेदानीं युक्ता कदर्यता, किन्तु ?, भवितव्यमुदाराशयेन, परोपकारपूर्विकैव च स्वोपकारप्रवृत्तिरुदाराशयतां ख्यापयतीति परोपकार एवादितः प्रवर्तितुमुचितम् । सन्ति चास्मिन् महितमाहात्म्याः समीहितसम्पादकाश्च मणय इव चरणकरणादिगोचराचाराद्यङ्गानुयोगाः, न चैत इदानीं सम्यग्दर्शनादिहेतुं मिथ्यात्वादिपिशाचशमनं धर्मकथात्मकोत्तराध्ययनानुयोगं रक्षाविधानमिवापहाय स्वयं ग्रहीतुमन्यस्मै वा दातुं युज्यन्ते, इत्यारभ्यत उत्तराध्ययनानुयोगः—तत्र च न तथाविधफलादिपरिज्ञान-

१ भिक्षाचराः । २ कृपणता ।

विकला प्रेक्षावता प्रवृत्ति, तस्यास्तद्व्यापकत्वाद्, व्याप्यस्य च व्यापकाविनाभावित्वात्, अत प्रेक्षावत्प्रवृत्त्यङ्गत्वात् फलयोगमङ्गलसमुदायार्थानुयोगद्वारतद्भेदनिरुक्तिक्रमप्रयोजनानि वाच्यानि । यच्च शब्दस्याप्रमाणत्वमभिधाय तदभिधानस्यानर्थकत्वमिह कैश्चिदुक्त, तदसाधु, शब्दस्याप्रमाणत्वे तत्प्रामाण्यमूलत्वेन सकलव्यवहाराणामुच्छेदप्रसङ्गात्, उक्त हि—"लौकिकव्यवहारोऽपि, यस्मिन्न व्यवतिष्ठते । तत्र साधुत्वविनान, व्यामोहोपनिबन्धनम् ॥१॥" इति । तथा च शास्त्रादौ फलादिप्रतिपादिका पूर्वाचार्यगाथा—'तस्स फलजोगमगलसमुदायत्था तहेव दाराइ । तब्भेयनिरुत्तिकमपयोयणाइ च वचाइ ॥ १ ॥' फलाभिलापिणा च सकलप्रेक्षावता प्रवृत्तिरिति प्रथमत फलस्याभिधान, तत्रापि किमिद सम्बद्धमुतासम्बद्धमिति विचारत एव विपश्चित प्रवर्तन्त इति तदनु योगस्य, इत्यादि क्रमप्रयोजन सर्वत्र योज्य, तत्र फल कर्तु श्रोतुश्चाव्यवहित विनेयानुग्रहो यथावदर्थावबोधश्च, व्यवहित पुनरुभयोरपि तदुत्तरोत्तरगुणप्रकर्षप्राप्त्याऽपवर्गावाप्तिरिति । योग सम्बन्ध, स च हेतुत फलतश्च, तत्र हेतुत उत्तराध्ययनानुयोगस्य साक्षात्कृतधर्माण सूत्रकृत एव यथास्व प्रणेतार ततस्तदवबोधिततदर्थास्तच्छिष्या ततोऽपि तद्विनेयास्तावद् यावद् भगवान् भद्रबाहु ततो भाष्यकृतस्ततश्चूर्णिकृत ततोऽपि वृत्तिकृतो यावदस्मद्गुरव इति गुरुपर्वक्रमलक्षण । फलतस्तूपायोपेयभावरूप अभिहितफलस्योपेयत्वात् प्रस्तुतानुयोगस्य च तदुपायत्वादिति । मङ्गलाति-

१ तस्य फलयोगमङ्गलसमुदायार्थास्तथैव द्वाराणि । तद् (द्वार) भेदनिरुक्तिक्रमप्रयोजनानि च वाच्यानि ॥ १ ॥

विनाशयति शास्त्रपारगमनविघ्नान् गमयति–प्रापयति शास्त्रस्थैर्यं लालयति च–श्लेषयति तदेव शिष्यप्रशिष्यपरम्परायामिति मङ्गलं, यद्वा मन्यन्ते अनापायसिद्धिं गायन्ति प्रबन्धप्रतिष्ठितिं लान्ति चाऽव्यवच्छिन्नसन्तानाः शिष्यप्रशिष्यादयः शास्त्रमस्मिन्निति मङ्गलम्, आदिमध्यावसानवर्तिनस्तस्योक्तरूपार्थप्रसाधकत्वेन प्रसिद्धत्वात्, उक्तं हि—"[1]तं मंगलमाईए मज्झे पज्जंतए य सत्थस्स। पढमं सत्थस्साविग्घपारगमणाय निद्दिट्ठं ॥ १ ॥ तस्सेव उ थिज्जत्थं मज्झिमयं अंतिमं च तस्सेव। अवोच्छित्तिनिमित्तं सिस्सपसिस्साइवंसस्स ॥ २ ॥" तच्च नामादिचतुर्भेदं, तत्र मङ्गलमिति नामैव नाममङ्गलं, स्थापनामङ्गलं मङ्गलाकारः, मङ्गलानि च दर्पणादीनि, यथोक्तम्—"[2]दप्पणभद्दासण वद्धमाण वरकलसमच्छसिरिवच्छा। सोत्थिय नंदावत्ता लिहिया अट्ठट्ठ मंगलगा ॥ १ ॥" इति, द्रव्यभावमङ्गले त्वावश्यकभाष्यानुसारतोऽवन्तोद्धव्ये। तत्र चेह भावमङ्गलेनाधिकारः, तच्च कृतमेव, नन्दिरूपत्वात् तस्य, नन्दिव्याख्यानपूर्वकत्वाच्च सकलानुयोगस्य, अपवादत उत्क्रमेणापि यदाऽनुयोगस्तदा भावत आदिमङ्गलं 'संजोगा विप्पमुक्कस्स अणगारस्स' त्ति अणगारग्रहणं, मध्यमङ्गलं, 'कंपिल्ले नयरे राया' इत्यादिनाऽनगारगुणवर्णनम्, अन्त्य-

---

१ तन्मङ्गलमादौ मध्ये पर्यन्ते च शास्त्रस्य। प्रथमं शास्त्रस्याविघ्नपारगमनाय निर्दिष्टम् ॥ १ ॥ तस्यैव तु स्थैर्यार्थं मध्यममन्तिमं च तस्यैव। अव्यवच्छित्तिनिमित्तं शिष्यप्रशिष्यादिवंशे ॥ २ ॥ २ दर्पण भद्रासनं वर्धमानो वरकलशो मत्स्यः श्रीवत्सः। स्वस्तिको नन्द्यावर्त्तो लिखितान्यष्टाष्ट मङ्गलानि ॥ १ ॥

मङ्गलम् 'इह पाउकरे बुद्धे' इत्यादिना बुद्धाद्यभिधानं । समुदायो वर्णपदवाक्यश्लोकाध्ययनकदम्बकात्मकश्रुतस्कन्धरूपस्तस्याभिधेयोऽर्थ समुदायार्थ, स चेह धर्मकथात्मक, विशेषतस्त्वेन 'पढमे विणओ' इत्यादिना निर्युक्तिकार एव वक्ष्यति । द्वाराणीति प्रक्रमादनुयोगद्वाराणि, तत्र चानुगतमनुरूप वा श्रुतस्य स्वेनाभिधेयेन योजन सम्बन्धन तस्मिन् वाऽनुरूपोऽनुकूलो वा योग श्रुतस्यैवाभिधानव्यापारोऽनुयोग, तदुक्तम्—"अणुजोयणमणुजोगो सुयस्स नियएण जमभिधेयेण । वावारो वा जोगो जो अणुरूवोऽणुकूलो वा ॥१॥" तस्य द्वाराणि उपक्रमादीनि अनुयोगद्वाराणि तानि तद्भेदनिरुक्तिक्रमप्रयोजनानि च 'तत्थज्झयण पढम' मित्यत्र वक्ष्याम । आह—प्रकृतोऽयमुत्तराध्ययनानुयोग, तत्र किमेतान्युत्तराध्ययनान्यङ्गमङ्गानि श्रुतस्कन्ध श्रुतकन्धा अध्ययनमध्ययनानि उद्देशक उद्देशका ?, उच्यते, नाङ्ग नाङ्गानि, श्रुतस्कन्धो न श्रुतस्कन्धा, नाध्ययनमध्ययनानि, नोद्देशको नोद्देशका इति । अस्य च नामनिक्षेपे 'उत्तराध्ययनश्रुतस्कन्ध' इति नाम, तत्रोत्तर निक्षेप्तव्यमध्ययन श्रुतस्कन्धश्च, तत्रोत्तरनिक्षेपाभिधानायाह भगवान् निर्युक्तिकार —

१ अनुयोजनमनुयोग सूत्रस्य निजकेन यदभिधेयेन। व्यापारो वा योगो योऽनुरूपोऽनुकूलो वा ॥ १ ॥

नामं ठवणा दविए खित्त दिसा तावखित्त पन्नवए। पइकालसंचयपहाणनाणकमगणणओ भावे ॥१॥

व्याख्या—इह च सुपो यत्रादर्शनं तत्र सूत्रत्वेन छान्दसत्वात् लुक्, तथोत्तरनिक्षेपप्रस्तावात् सूचकत्वात्सूत्रस्य 'कमउत्तरेण पगय' मित्युत्तरश्रवणाच्च 'नामं' ति नामोत्तरं 'ठवणं' ति स्थापनोत्तरमित्याद्यभिलापः कार्यः। तत्र नामोत्तरमिति नामैव यस्य वा जीवादेरुत्तरमिति नाम क्रियते, स्थापनोत्तरमक्षादि, उत्तरमिति वर्णविन्यासो वा, द्रव्योत्तरमागमतो ज्ञाताऽनुपयुक्तो नोआगमतो ज्ञशरीरभव्यशरीरे तद्व्यतिरिक्तं च, तत्र तद्व्यतिरिक्तं त्रिधा—सचित्ताचित्तमिश्रभेदेन, तत्र सचित्तं पितुः पुत्रः, अचित्तं क्षीरात् दधि, मिश्रं जननीशरीरतो रोमादिमदपत्यम्, इह च द्रव्यपर्यायोभयात्मकत्वेऽपि वस्तुनो द्रव्यप्राधान्यविवक्षया पित्रादेरूर्ध्वंभवनतश्च पुत्रादीनां द्रव्योत्तरत्वं भावनीयं, क्षेत्रोत्तरं मेर्वाद्यपेक्षया यदुत्तरं, यथोत्तराः कुरवः, यद्वा पूर्वं शालिक्षेत्रं तदेव पश्चादिक्षुक्षेत्रं, दिगुत्तरमुत्तरा दिग्, दक्षिणदिगपेक्षत्वादस्य, तापक्षेत्रोत्तरं यत्तापदिगपेक्षयोत्तरमित्युच्यते, यथा-सर्वेषामुत्तरो मन्दराद्रिः, प्रज्ञापकोत्तरं यत् प्रज्ञापकस्य वामं, प्रत्युत्तरमेकदिगवस्थितयोर्देवदत्तयज्ञदत्तयोर्देवदत्तात् परो यज्ञदत्त उत्तरः, कालोत्तरः समया-

१ कयपवयणप्पणामो वुच्छं धम्माणुओगसगहिअं। उत्तरज्झयणाणुओगं गुरूवएसाणुसारेण ॥१॥ इत्येपा गाथाऽऽदौ निर्युक्तिपुस्तके दृश्यते, न च व्याख्यातेत्युपेक्षिता, अनुबन्धादिदर्शितयोपयोगित्वे(कृतप्रवचनप्रणामो वक्ष्ये धर्मानुयोगसंगृहीतम्। उत्तराध्ययनानुयोगं गुरूपदेशानुसारेण) इति संस्करणं ज्ञेयम्।

दावलिका आवलिकातो मुहूर्तमित्यादि, सञ्चयोत्तर यत्सञ्चयस्योपरि, यथा धान्यराशे काष्ठ, प्रधानोत्तरमपि त्रिविध-सचित्ताचित्तमिश्रभेदात्, सचित्तप्रधानोत्तरमपि त्रिधैव, तद्यथा-द्विपद चतुष्पदमपद च, तत्र द्विपदमनुत्तरपुण्य-प्रकृतितीर्थकरनामाद्यनुभवनत तीर्थकर, चतुष्पदमनन्यसाधारणशौर्यधैर्यादियोगत सिंह, अपद रम्यत्वसुरसेव्य-त्वादिभिर्जात्यजाम्बूनदादिमयी जम्बूद्वीपमध्यस्थिता सुदर्शनाजम्बू, अचित्तमचिन्त्यमाहात्म्यश्चिन्तामणि, मिश्र तीर्थकर एव गृहस्थावस्थाया सर्वालङ्कारालङ्कृत, ज्ञानोत्तर केवलज्ञानं, विलीनसकलावरणत्वेन समस्तवस्तुस्वभावाभासितया च, यद्वा श्रुतज्ञान, तस्य स्वपरप्रकाशकत्वेन केवलादपि महर्द्धिकत्वात्, उक्त च—"सुयणाण महिड्ढीय, केवल तयणतर। अप्पणो य परेसिं च, जम्हा त परिभावण ॥ १ ॥" ति, क्रमोत्तर क्रम-माश्रित्य यद्भवति, तच्चतुर्विध—द्रव्यत क्षेत्रत कालतो भावतश्च, तत्र द्रव्यत परमाणोर्द्विप्रदेशिक ततोऽपि त्रिप्रदेशिक एव यावदन्त्योऽनन्तप्रदेशिक स्कन्ध, क्षेत्रत एकप्रदेशावगाढात् द्विप्रदेशावगाढ ततोऽपि त्रिप्रदे-शावगाढ एव यावदवसानवर्त्यसङ्ख्येयप्रदेशावगाढ, कालत एकसमयस्थितेर्द्विसमयस्थिति ततोऽपि त्रिसमयस्थिति एव यावदसङ्ख्येयसमयस्थिति, भावत एकगुणकृष्णात् द्विगुणकृष्ण ततोऽपि त्रिगुणकृष्ण एव यावदनन्तगु-णकृष्ण, यतो वा-क्षायोपशमिकादिभावादनन्तर य क्षायिकादिर्भवति, 'गणणओ'त्ति गणनात उत्तरमेककाद्

१ श्रुतज्ञान महर्द्धिक केवल तदनन्तरम्। आत्मनश्च परेषा च यस्मात्तत्परिभावनम् ॥ १ ॥

द्विकस्ततोऽपि त्रिक एवं यावच्छीर्षप्रहेलिका, भावोत्तरं क्षायिको भावः, तस्य केवलज्ञानदर्शनाद्यात्मकत्वेन सकलौदयिकादिभावप्रधानत्वाद् । आह—एवमस्य प्रधानोत्तर एवान्तर्भावादयुक्तं भेदेनाभिधानं, यद्येवमत्यल्पमिदमुच्यते, एवं हि नामादिचतुष्टय एव सर्वनिक्षेपाणामन्तर्भावात्तदेवाभिधेयं, तत इहान्यत्र च यन्नामादिचतुष्टयाधिकनिक्षेपाभिधानं तच्छिष्यमतिव्युत्पादनार्थं सामान्यविशेषोभयात्मकत्वख्यापनार्थं च सर्ववस्तूनामिति भावनीयमिति गाथार्थः ॥ १ ॥ इहानेकधोत्तराभिधानेऽपि क्रमोत्तरमेवाधिकरिष्यति, विषयज्ञाने च विषयी सुज्ञानो भवति इति मन्वानो यत्रास्य सम्भवो यत्र चासम्भवो यत्र चोभयं तदेवाह—

जहण्णं सुत्तरं खलु उक्कोसं वा अणुत्तरं होइ । सेसाइं उत्तराइं अणुत्तराइं च नेयाणि ॥ २ ॥

व्याख्या—जघन्यं सोत्तरं 'खलु' अवधारणे, सोत्तरमेव 'उक्कोसं' ति उत्कृष्टं, वाशब्दस्यैवकारार्थस्य भिन्नक्रमत्वाद् अनुत्तरमेव भवति, 'शेषाणि' मध्यमानि 'उत्तराणि' इति अर्शआदित्वेनाजन्तत्वात् मतुब्लोपाद्वोत्तरवन्ति अनुत्तराणि च ज्ञेयानि । द्रव्यक्रमोत्तरादीनि हि जघन्यान्येकप्रदेशिकादीनि उपरि द्विप्रदेशिकादिवस्त्वन्तरभावात् सोत्तराण्येव, तदपेक्षयैव तेषां जघन्यत्वात्, उत्कृष्टानि त्वनन्तानन्तप्रदेशिकादीन्यनुत्तराण्येव, तदुपरि वस्त्वन्तराभावाद्, अन्यथोत्कृष्टत्वायोगात्, मध्यमानि तु द्विप्रदेशिकादीनि त्रिप्रदेशिकाद्यपेक्षया सोत्तराणि एक-

॥ ४ ॥

प्रदेशापेक्षया त्वनुत्तराणि, उपरितनवस्त्वपेक्षयैव सोत्तरत्वात् इति गाथार्थ ॥ २ ॥ उत्तरस्यानेकविधत्वेन येनात्र प्रकृत तदाह—

कमउत्तरेण पगय आयारस्सेव उवरिमाइ तु । तम्हा उ उत्तरा खलु अज्झयणा हुति णायव्वा ॥ ३ ॥

व्याख्या—क्रमापेक्षमुत्तर क्रमोत्तर, शाकपार्थिवादित्वान्मध्यपदलोपी समास, तेन प्रकृतम्–अधिकृतम्, इह च क्रमोत्तरेणेति भावत क्रमोत्तरेण, एतानि हि श्रुतात्मकत्वेन क्षायोपशमिकभावरूपाणि तद्रूपस्यैवाऽऽचाराङ्गस्योपरि पठ्यमानत्वेनोत्तराणीत्युच्यन्ते, अत एवाह–'आयारस्सेव उवरिमाइ'ति एवकारो भिन्नक्रम, ततश्चाचारस्योपर्येव–उत्तरकालमेव 'इमानी'ति हृदि विपरिवर्तमानतया प्रत्यक्षाणि, पठितवन्त इति गम्यते, 'तु' विशेषणे, विशेषश्चाय यथा शय्यम्भव यावदेप क्रम, तदाऽऽरतस्तु दशवैकालिकोत्तरकाल पठ्यन्त इति,'तम्हा उ'त्ति 'तु' पूरणे, यत्तदोश्च नित्यमभिसम्बन्ध, ततो यस्मादाचारस्योपर्येवेमानि पठितवन्तस्तस्माद् 'उत्तराणि' उत्तरशब्दवाच्यानि, 'खलु' वाक्यालङ्कारेऽवधारणे वा, तत उत्तराण्येव 'अध्ययनानि' विनयश्रुतादीनि भवन्ति 'ज्ञातव्यानि' अवबोद्धव्यानि, प्राकृतत्वाच्च लिङ्गव्यत्यय इति गाथार्थ ॥३॥ आह—यद्याचारस्योपरि पठ्यमानत्वेनोत्तरा-

ण्यमूनि, तत्किं? यत एवाचारस्य प्रसूतिरेषामपि तत एव अभिधेयमपि यदेव तस्य तदेवोतान्यथेति संशयापनोदायाह—

अंगप्पभवा जिणभासिया य पत्तेयबुद्धसंवाया। बंधे मुक्खे य कया छत्तीसं उत्तरज्झयणा ॥ ४ ॥

व्याख्या—अङ्गाद्-दृष्टिवादादेः प्रभव-उत्पत्तिरेषामिति अङ्गप्रभवानि, यथा परीषहाध्ययनं, वक्ष्यति हि—"कम्मप्पवायपुव्वे सत्तरसे पाहुडंमि जं सुत्तं। सनयं सोदाहरणं तं चेव इहंपि णायव्वं ॥ १ ॥" जिनभाषितानि यथा द्रुमपुष्पिकाऽध्ययनं, तद्धि समुत्पन्नकेवलेन भगवता महावीरेण प्रणीतं, यद्वक्ष्यति—"तंणिस्साए भगवं सीसाणं देइ अणुसट्ठिं"ति, 'चः' समुच्चये, प्रत्येकबुद्धाश्च संवादश्च प्रत्येकबुद्धसंवादं तस्मादुत्पन्नानीति शेषः, तत्र प्रत्येकबुद्धाः-कपिलादयः तेभ्य उत्पन्नानि यथा कापिलीयाध्ययनं, वक्ष्यति हि—'धम्मट्ठया गीयं' तत्र हि कपिलेनेति प्रक्रमः, संवादः—सङ्गतप्रश्नोत्तरवचनरूपस्तत उत्पन्नानि, यथा-केशिगौतमीयं, वक्ष्यति च—"गोतमकेसीओ य संवायसमुट्ठियं तु जम्हेय"मित्यादि। ननु स्थविरविरचितान्येवैतानि, यत आह चूर्णिकृत्—"सुत्ते थेराण अत्तागमो"त्ति

१ कर्मप्रवादपूर्वे सप्तदशे प्राभृते यत्सूत्रम्। सनयं सोदाहरणं तदेवेहापि ज्ञातव्यम् ॥ १ ॥ २ तन्निश्रया भगवान् शिष्येभ्यो ददात्यनुशास्तिम्। ३ धर्मार्थाय गीतम्। ४ गौतमकेशीसंवादतश्च समुत्थितं तु यस्मादिदम्। ५ सूत्रे स्थविराणामात्मागम इति।

नन्द्यध्ययनेऽप्युक्तम्—"जस्स जेत्तिया सीसा उप्पत्तियाए वेणइयाए कम्मयाए परिणामियाए चउविहाए बुद्धीए उववेया तस्स तेत्तियाइ पइण्णगसहस्साइ" प्रकीर्णकानि चामूनि तत्कथ जिनदेशितत्वादि न विरुध्यते ?, उच्यते, तथास्थितानामेव जिनादिवचसामिह दृब्धत्वेन तद्देशितत्वाद्युक्तमिति न विरोध । बन्ध-आत्मकर्मणोरत्यन्तसंश्लेपस्तस्मिन्, मोक्ष तयोरेवाऽऽत्यन्तिक पृथग्भावस्तस्मिश्च कृतानि, कोऽभिप्राय ?—यथा बन्धो भवति यथा च मोक्षस्तथा प्रदर्शकानि, तत्र बन्धे यथा—"[2]आणाअणिद्देसकरे"त्ति" मोक्षे यथा—"[3]आणाणिद्देसकरे"त्ति, आभ्या यथाक्रममविनयो विनयश्च प्रदर्श्यते, तत्राविनयो मिथ्यात्वाद्यविनाभूतत्वेन बन्धस्य विनयश्चान्तरपौरुषत्वेन मोक्षस्य कारणमिति तत्त्वतस्तौ यथा भवतस्तदेवोक्त भवति, मोक्षप्राधान्येऽपि बन्धस्य प्रागुपादानमनादित्वोपदर्शनार्थं, यद्वा 'बधे मोक्खे य त्ति' चशब्द एवकारार्थो भिन्नक्रमश्च, ततो बन्ध एव सति यो मोक्षस्तस्मिन् कृतानि, अनेनानादिमुक्तमतव्यवच्छेदश्च कृत , तत्र हि मोक्षशब्दार्थानुपपत्ति सकलानुष्ठानवैफल्यापत्तिश्च, किमेव कतिचिदेव ?, नेत्याह—'षट्त्रिंशत्' षट्त्रिंशत्सङ्ख्यानि, कोऽर्थ ?—सर्वाणि उत्तराध्ययनानि इति गाथार्थ ॥४॥

इत्थ प्रसङ्गत उक्तरूप संशयमपाकृत्याध्ययननिक्षेप विनेयानुग्रहाय तत्पर्यायनिक्षेपातिदेश चाह—

---

१ यस्य यावन्त शिष्या औत्पत्तिक्या वैनयिक्या कर्मजया पारिणामिक्या चतुर्विधया बुद्ध्योपपेतास्तस्य तावन्ति प्रकीर्णकसहस्राणि । २ आज्ञाऽनिर्देशकर । ३ आज्ञानिर्देशकर ।

नामं ठवणज्झयणे दव्वज्झयणे य भावअज्झयणे । एमेव य अज्झीणे आयज्झवणेविय तहेव ॥ ५ ॥

व्याख्या—'नामं ठवणज्झयणे'त्ति प्रत्येकमध्ययनशब्दसम्बन्धान्नामाध्ययनं स्थापनाध्ययनं द्रव्याध्ययनं चस्य भिन्नक्रमत्वाद् भावाध्ययनं च, तत्र नामस्थापने गतार्थे, द्रव्याध्ययनमागमतो ज्ञातानुपयुक्तः, नोआगमतो ज्ञशरीरभव्यशरीरे तद्व्यतिरिक्तं च पुस्तकादिन्यस्तं, भावाध्ययनमागमतो ज्ञातोपयुक्तः, नोआगमतस्तु प्रस्तुताध्ययनान्येव, आगमैकदेशत्वादेषाम् । एवं चाक्षीणमायः क्षपणाऽपि च तथैव, कोऽर्थः ?—अध्ययनवदेतान्यपि नामादिभेदभिन्नान्येव ज्ञेयानीति गाथार्थः ॥ ५ ॥ साम्प्रतं नामाध्ययनादीनि त्रीणि प्रसिद्धान्येवेति मन्यमानो निर्युक्तिकारो निरुक्तिद्वारेण नोआगमतो भावाध्ययनं व्याख्यातुमाह—

अज्झप्पस्साणयणं कम्माणं अवचओ उवचियाणं । अणुवचओ व णवाणं तम्हा अज्झयणमिच्छंति ॥६॥

व्याख्या—'अज्झप्पस्स'त्ति सूत्रत्वादध्यात्ममात्मनि, कोऽर्थः ?—स्वस्वभावे, आनीयतेऽनेनेति आनयनं प्रस्तावादात्मनोऽध्ययनं, निरुक्तिविधिना चात्माकारनकारलोपः, कुत एतदित्याह—यतः 'कर्मणां' ज्ञानावरणीयादीनाम् 'अपचयः' चयापगमोऽभाव इत्यर्थः, 'उपचितानां' प्राग्बद्धानाम् 'अनुपचयश्च' अनुपचीयमानताऽनुपादानमितियावत्, 'नवानां' प्रत्यग्राणां, कोऽर्थः ?—प्राग्बद्धानाम्, एतदुपयुक्तस्येति गम्यते, उपसंहारमाह—तस्मात्

प्राग्वद्बध्यमानकर्माभावेनाऽऽत्मन स्वस्वभावानयनाद्धेतो अध्ययनम् 'इच्छन्ति' अभ्युपगच्छन्ति, पूर्वसूरय इति गम्यते, यद्वाऽध्यात्ममिति रूढितो मन , तच्च प्रस्तावात् शुभ, तस्याऽऽनयनमध्ययनम्, आनीयते ह्यनेन शुभ चेत , अस्मिन् उपयुक्तस्य वैराग्यभावात्, शेष प्राग्वत्, नवर वैराग्यभावात् कर्मणामिति क्लिष्टानामिति गाथार्थ ॥ ६ ॥ निरुक्त्यन्तरेणैतदेव व्याख्यातुमाह—

अहिगम्मति व अत्था अणेण अहिय व णयणमिच्छति। अहिय व साहु गच्छइ तम्हा अज्झयणमिच्छति ७

व्याख्या—'अधिगम्यन्ते वा' परिच्छिद्यन्ते वा 'अर्था' जीवादय अनेनाधिक वा नयन-प्रापणमर्थादात्मनि ज्ञानादीनामनेन इच्छन्ति, विद्वास इति शेष , 'अधिकम्' अर्गल शीघ्रतरमितियावत्, 'वा' सर्वत्र विकल्पार्थः, 'साधु'त्ति साधयति पौरुषेयीभिर्विशिष्टक्रियाभिरपवर्गमिति साधु 'गच्छति' यात्यर्थात् मुक्तिम्, अनेनेत्यत्रापि योज्यते, यस्मादेवमेव च तत किमित्याह—तस्मादध्ययनमिच्छन्ति, निरुक्तविधिनाऽर्थनिर्देशपरत्वाद्वाऽस्य, अयतेरेतेर्वाऽधिपूर्वस्याध्ययनम्, इच्छन्तीति चाभिधान सर्वत्र सूत्रार्थोबाधया व्याख्याविकल्पाना पूर्वाचार्यसम्मतत्वेनादुष्टत्वख्यापनार्थमिति गाथार्थं ॥ ७ ॥ नामाक्षीणादित्रयं प्रतीतमेवेति दृष्टान्तद्वारेण भावाक्षीणमाह—

जह दीवा दीवसय पईप्पए सो य दीप्पए दीवो। दीवसमा आयरिया अप्प च पर च दीवति ॥८॥

व्याख्या—यथा दीपाद्दीपशतं 'प्रदीप्यते' ज्वलति सोऽपि च दीप्यते दीपो, न पुनरन्यान्यदीपोत्पत्तावपि क्षीयते, तथा किमित्याह—दीपसमा आचार्या 'दीप्यन्ते' समस्तशास्त्रार्थविनिश्चयेन स्वयं प्रकाशन्ते 'परं च' शिष्यं 'दीपयन्ति' शास्त्रार्थप्रकाशनशक्तियुक्तं कुर्वन्ति, इह च 'तात्स्थ्यात् तद्व्यपदेश' इत्याचार्यशब्देन श्रुतज्ञानमेवोक्तं, भावाक्षीणस्य प्रस्तुतत्वात्तस्यैव चाक्षयत्वसम्भवादिति गाथार्थः ॥८॥ नामाऽऽयादयस्त्रयः सुज्ञाना इति भावायं व्याचष्टे—

भावे पसत्थमियरो नाणाई कोहमाइओ कमसो। आउत्ति आगमुत्ति य लाभुत्ति य हुंति एगट्ठा ॥९॥

व्याख्या—'भावे' विचार्ये इति शेषः, प्रशस्तः मुक्तिपदप्रापकत्वेन 'इतरः' अप्रशस्तो भवनिबन्धनत्वेन, प्रक्रमादायः, किंरूपः पुनरयं द्विविधोऽपीत्याह—'ज्ञानादिः' आदिशब्दाद्दर्शनादिपरिग्रहः, 'कोहमाइओ'त्ति मकारस्यालाक्षणिकत्वात् क्रोधादिकः, आदिशब्दान्मानादिपरिग्रहः, 'कमसो'त्ति आर्षत्वात् क्रमतः, किमुक्तं भवति ?—प्रशस्तो ज्ञानादिः, अप्रशस्तः क्रोधादिः। इह च ज्ञानादेः क्रोधादेश्च आयत्वमायविषयत्वाद्विषयविषयिणोरभेदोपचारेण आयते तमित्याय इति कर्मसाधनत्वेन वा, ज्ञानादिप्रशस्तभावायहेतुत्वाच्चाध्ययनमपि भावायः। 'तत्त्वभेदपर्यायैर्व्याख्ये'ति पर्यायकथनमपि व्याख्याङ्गमिति पर्यायानाह—आय इत्यागम इति च लाभ इति च भवन्त्येका-

र्थिका , शब्दा इति गम्यते, 'इति' प्रत्येकं पर्यायस्वरूपनिर्देशार्थं , 'च ' समुच्चय इति गाथार्थ ॥ ९ ॥ नामस्थापनाक्षपणे प्रसिद्धे इति द्रव्यक्षपणामाह—

पल्लत्थिया अपत्था तत्तो उप्पिट्टणा अपत्थयरी । निप्पीलणा अपत्था तिन्नि अपत्थाइ पुत्तीए ॥ १० ॥

व्याख्या—'पर्यस्तिका' प्रसिद्धा 'अपथ्या' अहिता, 'तत ' इति पर्यस्तिकात उत्प्राबल्येन पिट्टना उत्पिट्टना—उत्पिट्टनकादिना कुट्टनोत्पिट्टना अपथ्यतरा, 'निष्पीडना' अत्यन्तमावलनात्मिका 'अपथ्या' इति प्रस्तावादपथ्यतमा, सर्वत्र वस्त्रस्येति गम्यते, निगमयितुमाह—त्रीण्यपथ्यानि 'पोत्तीए'त्तिवस्त्रस्य, इह चाल्पाल्पतराल्पतमकालत आभिर्वस्त्रद्रव्य क्षप्यत इति पर्यस्तिकादीनामपथ्यापथ्यतरापथ्यतमत्व द्रव्यक्षपणत्वं चोक्तम्, अपथ्यानीति च निगमन सामान्यस्याशेपविशेपसङ्ग्राहकत्वाददुष्टमिति गाथार्थ ॥ १० ॥ भावक्षपणामाह—

अट्ठविह कम्मरय पोराण ज खवेइ जोगेहि । एय भावज्झयण णेयव्व आणुपुव्वीए ॥ ११ ॥

व्याख्या—'अष्टविधम्' अष्टप्रकार, क्रियत इति कर्म्म—ज्ञानावरणादि, रज इव रजो जीवशुद्धस्वरूपान्यथात्वकरणेन, इह चोपमावाचकशब्दमन्तरेणापि परार्थप्रयुक्तत्वात् अग्निर्माणवक इतिवदुपमानार्थोऽवगन्तव्य , कर्मरज इति समस्त वा पद, 'पुराणम्' अनेकभवोपात्तत्वेन चिरन्तन 'यत्' यस्मात् क्षपयति जन्तु 'योगै ' भावाध्ययन-

चिन्तनादिशुभव्यापारैः, तस्मादिदमेव भावरूपत्वात् क्षपणाहेतुत्वाद्भावक्षपणेत्युच्यते इति प्रक्रमः । प्रकृतमुपसंहर्तुमाह—'एतद्' इत्युक्तपर्यायाभिधेयं भावाध्ययनं 'नेतव्यं' प्रापयितव्यम् 'आनुपूर्व्यां' शिष्यप्रशिष्यपरम्परात्मिकायां, यद्वा-'नेतव्यं' संवेदनविषयतां प्रापणीयमानुपूर्व्या-क्रमेणेति गाथार्थः ॥ ११ ॥ तदित्थमुत्तराध्ययनानीति व्याख्यातम्, अधुना श्रुतस्कन्धयोर्निक्षेपं प्रत्यध्ययनं नामान्यर्थाधिकारांश्च वक्तुमवसर इति तदभिधानाय प्रतिज्ञामाह—

सुयखंधे निक्खेवं णामाइ चउविहं परूवेउं । णामाणि य अहिगारे अज्झयणाणं पवक्खामि ॥ १२ ॥

व्याख्या—श्रुतं च स्कन्धश्चेति समाहारद्वन्द्वस्तस्मिन् निक्षेपं नामादयश्चत्वारो विधाः-प्रकारा यस्य स तथा तं 'प्ररूप्य' प्रज्ञाप्य नामान्यधिकारांश्चाध्ययनानां प्रवक्ष्यामि इति गाथार्थः ॥ १२ ॥ इह च श्रुतस्कन्धनिक्षेपस्यान्यत्र सुप्रपञ्चितत्वात् प्रस्तावज्ञापनायैव श्रुतस्कन्धे निक्षेपं प्ररूप्येति निर्युक्तिकृतोक्तं, न तु प्ररूपयिष्यत इति । स्थानाशून्यार्थं किञ्चिदुच्यते-तत्र श्रुतं नामस्थापनात्मकं क्षुण्णं, द्रव्यश्रुतं तु द्विविधम्—आगमनोआगमभेदात्, तत्र यस्य श्रुतमिति पदं शिक्षितादिगुणान्वितं ज्ञातं न च तत्रोपयोगः तस्य आगमतो द्रव्यश्रुतम्, 'अनुपयोगो द्रव्य'मिति वचनात्, नोआगमतस्तु श्रुतपदार्थज्ञशरीरं भूतभविष्यत्पर्यायं, तद्व्यतिरिक्तं च पुस्तकादिन्यस्तम् अभिधीयमानं वा, भावश्रुतहेतुतया द्रव्यश्रुतं, तथा चाह—"भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके ।

तद् द्रव्य तत्त्वज्ञै सचेतनाचेतन कथितम् ॥ १ ॥" भावश्रुतमप्यागमनोआगमभेदतो द्विधैव, तत्राऽऽगमतस्तज्ज्ञस्तत्र चोपयुक्त, नोआगमतस्त्वेतान्येव प्रस्तुताध्ययनानि, आगमैकदेशत्वात् क्षायोपशमिकभाववृत्तित्वाद्यामीपामिति ॥ स्कन्धोऽपि नामस्थापनात्मक प्रसिद्ध एव, द्रव्यस्कन्ध आगमतस्तज्ज्ञोऽनुपयुक्त, नोआगमतो ज्ञशरीरभव्यशरीरे, तद्व्यतिरिक्तो द्रुमस्कन्धादि, भावस्कन्ध आगमतस्तज्ज्ञस्तत्रोपयुक्त, नोआगमत प्रक्रान्ताध्ययनसमूह इत्यल प्रसङ्गेन ॥ प्रतिज्ञातमनुसरन्नामान्याह—

विणयसुय च परीसह चउरगिज्ज असखय चेव । अकाममरण नियठि ओरब्भ काविलिज्ज च ॥१३॥
णमिपव्वज्जे दुमपत्तय च बहुसुयपुज्ज तहेव हरिएस। चित्तसभूइ उसुआरिज्ज सभिक्खु समाहिठाण च॥१४॥
पावसमणिज्ज तह सजइज्ज मियचारिया नियठिज्ज। समुद्दपालिज्ज रहनेमिय केसिगोयमिज्ज च ॥१५॥
समिईओ जन्नइज्ज सामायारी तहा खलुकिज्ज। मुक्खगइ अप्पमाओ तव चरण पमायठाण च ॥१६॥
कम्मप्पयडी लेसा बोद्धवे खलु णगारमग्गे य। जीवाजीवविभत्ति छत्तीस उत्तरज्झयणा ॥ १७ ॥

व्याख्या—निगदसिद्धाः । नवरमाभिरध्ययनविशेषनामान्युक्तानि, एतन्निरुक्त्यादि च नामनिष्पन्ननिक्षेपप्रस्ताव एवाभिधास्यते ॥ अधिकारानाह—

पढमे विणओ वीए परिसहा दुल्लहंगया तइए । अहिगारो य चउत्थे होइ पमायप्पमाएत्ति ॥ १८ ॥
मरणविभत्ती पुण पंचमम्मि विज्जा चरणं च छट्ठअज्झयणे । रसगेहिपरिच्चाओ सत्तमे अट्ठमि अलाभे॥१९॥
निक्कंपया य नवमे दसमे अणुसासणोवमा भणिया । इक्कारसमे पूया तवरिद्धी चेव बारसमे॥ २० ॥
तेरसमे अ नियाणं अनियाणं चेव होइ चउदसमे । भिक्खुगुणा पन्नरसे सोलसमे बंभगुत्तीओ ॥२१॥
पावाण वज्जणा खलु सत्तरसे भोगिड्ढिविजहणट्ठारे । एगुणि अप्परिकम्मे अणाहया चेव वीसइमे ॥२२॥
चरिया य विचित्ता इक्कवीसि बावीसिमे थिरं चरणं। तेवीसइमे धम्मो चउवीसइमे य समिइओ ॥२३॥
बंभगुण पन्नवीसे सामायारी य होइ छवीसे । सत्तावीसे असढया अट्ठावीसे य मुक्खगई ॥ २४ ॥
एगुणतीस आवस्सगप्पमाओ तवो अ होइ तीसइमे । चरणं च इक्कतीसे बत्तीसि पमायठाणाइं ॥२५॥

**तेत्तीसइमे कम्म चउतीसइमे य हुति लेसाओ । भिक्खुगुणा पणतीसे जीवाजीवा य छत्तीसे ॥२६॥**

व्यारया—आसामर्थं सुखावगम एव । नवर विनयमूलोऽय धर्म , यत आगम —"मूलाउ[1] खधप्पभवो दुमस्स, संधाउ पच्छा समुविति साहा । साहप्पसाहा विरुहति पत्ता, ततो उ पुप्फ च फल रसो य ॥ १ ॥ एव धम्मस्स विणओ मूल परमो से मोक्खो । जेण कित्ति सुय सिग्घ, णीसेस चाभिगच्छई ॥ २॥" इत्यत प्रथमाध्ययने विनयोऽधिकृत , विनयवतश्च तेषु तेषु गुरुनियोगेषु प्रवर्तमानस्य कदाचित् परीषहा उत्पद्येरन् ते च सम्यक् सोढव्या इति द्वितीयाध्ययने परीषहा इत्यादि क्रमप्रयोजनमभ्यूह्यम्, अध्ययनसम्बन्धाभिधानप्रस्तावे चाभिधास्याम । उपसहरन्नाह—

**उत्तरज्झयणाणेसो पिंडत्थो वण्णिओ समासेण । इत्तो इक्किक्क पुण अज्झयण कित्तइस्सामि ॥ २७ ॥**

व्यारया—उत्तराध्ययनानाम् 'एष ' अनन्तराभिहितसरूप 'पिण्डार्थ ' समुदायार्थ 'वर्णित ' उक्त 'समासेन' सङ्क्षेपेण, 'इत ' पिण्डार्थवर्णनाद् , अनन्तरमिति गम्यते, एकैकं 'पुन ' विशेषणे अध्ययन 'कीर्तयि-

1 मूलात् स्कन्धप्रभवो द्रुमस्य, स्कन्धात् पश्चात्समुपयन्ति शाखा । शाखाभ्य प्रशाखा ( ताभ्य ) विरोहन्ति पत्राणि ततस्तु पुष्प च फल रसश्च ॥ १ ॥ एव धर्मस्य विनयो मूल परम स मोक्ष । येन कीर्ति श्रुत शीघ्र नि श्रेयस चाभिगच्छति ॥ २ ॥ रसि

ष्यामि' व्याख्याद्वारेण संशब्दयिष्यामीति गाथार्थः ॥ २७ ॥ तत्र चाद्यं विनयश्रुतमिति तस्य कीर्तनावसरः, न च तद् उपक्रमाद्यनुयोगद्वारतद्भेदनिरुक्तिक्रमप्रयोजनप्रतिपादनमन्तरेण शक्यं कीर्तयितुमिति मन्वानः प्रस्तुताध्ययनस्यानुयोगविधानक्रममर्थाधिकारं चाह—

तत्थऽज्झयणं पढमं विणयसुयं तस्सुवक्कमाईणि। दाराणि पन्नवेउं अहिगारो इत्थ विणएणं ॥ २८ ॥

व्याख्या—'तत्र' एतेष्वध्ययनेषु मध्ये अध्ययनं 'प्रथमम्' आद्यं विनयाभिधानकं श्रुतं विनयश्रुतं मध्यपदलोपी समासः, 'तस्य' इति विनयश्रुतस्य उपक्रमादीनि द्वाराणि 'प्ररूप्य' तद्भेदनिरुक्तिक्रमप्रयोजनप्रतिपादनद्वारेण प्रज्ञाप्य, एतदनुयोगः कार्य इति शेषः, अधिकारश्चात्र विनयेन, तस्येहानेकधाऽभिधानात् । आह—'पढमे विणओ' इत्यनेनैवोक्तत्वात् पुनरुक्तमेतद्, उच्यते, शास्त्रपिण्डार्थविषयं तत्, एतच्च प्रस्तुतैकाध्ययनगोचरमिति न पौनरुक्त्यमिति गाथार्थः ॥ २८ ॥ अत्रापि 'प्ररूप्ये'त्यवसरज्ञापनार्थमेव निर्युक्तिकृतोक्तं, न तु प्ररूपयिष्यत इति, अनुयोगद्वारेषूक्तत्वात्, तदुक्तानुसारेण किञ्चिदुच्यते—इह चत्वार्यनुयोगद्वाराणि—उपक्रमो निक्षेपोऽनुगमो नयश्चेति, तद्भेदा यथाक्रमं द्वौ त्रयो द्वौ द्वौ चेति, निरुक्तिश्चैवम्-उपक्रमणं दूरस्थस्य सतो वस्तुनस्तैस्तैः प्रकारैः समीपानयनमुपक्रमः, नियतं निश्चितं वा नामादिसम्भवत्पक्षरचनात्मकं क्षेपणं—न्यसनं निक्षेपः, अनुरूपं सूत्रार्था-

वाधया तदनुगुण गमन-सहितादिक्रमेण व्याख्यातु प्रवर्तनमनुगमो, नयनम्—अनन्तधर्मात्मकस्य वस्तुनो नियतैकधर्मावलम्बेन प्रतीतौ प्रापण नय । क्रमप्रयोजन च-नानुपूर्व्यादिभिर्न्यासदेशमनानीत शास्त्र निक्षेप्तु शक्य, न चौघनिष्पन्नादिभिर्निक्षेपैरनिक्षिप्तमनुगन्तु, नापि सूत्राद्यनुगमेनाननुगत नयैर्विचारयितुमित्ययमेवैष क्रम, तथा च पूज्या —"दारंकमोऽयमेव उ निक्खिप्पइ जेण णासमीवत्थ । अणुगम्मइ णाणत्थ णाणुगमो णयमयविहूणो ॥ १ ॥" अत्र सङ्ग्रहश्लोका —'उपक्रमोऽथ निक्षेपोऽनुगमश्च नया क्रमात् । द्वाराण्येतानि भिद्यन्ते, द्वेधा त्रेधा द्विधा द्विधा ॥ १ ॥ उपक्रम उपक्रान्तिर्दूरस्थनिकटक्रिया । निक्षेपण तु निक्षेपो, नामादिन्यसनात्मक ॥ २ ॥ सूत्रस्यानुगतिश्चित्राऽनुगमो नयन नय । अनन्तधर्मणोऽर्थस्यैकांशेनेति निरुक्तय. ॥ ३ ॥ न्यासदेशागत शास्त्र, न्यसते न्यस्तमेव तत् । अन्वीयतेऽन्विते नीतिस्तेनैतेषामय क्रम ॥ ४ ॥' इत्थ विनेयस्मरणार्थं भेदनिरुक्तिक्रमप्रयोजनभाञ्जि द्वाराणि वर्णितानि, तद्वर्णनाच्च फलादीनि वाच्यानीति प्रतिज्ञात निर्वाहितम् । सम्प्रत्येभिरित्थ प्ररूपितैरेषामेव भेदप्रपञ्चनपुरस्सर प्रक्रान्ताध्ययन विचार्यते, तत्रोपक्रमो द्विधा—लौकिको लोकोत्तरश्च, तत्राद्यो नामस्थापनाद्रव्यक्षेत्रकालभावभेदत षोढा, तत्र च नामतश्चिरतरकालभाविन सन्निहितकाल एव करण नामोपक्रम', एव स्थापनोपक्रमोऽपि, द्रव्योपक्रम सचित्ताचित्तमिश्रभेदात् त्रिविध, प्रत्येकोऽपि परिकर्मनाशभेदतो द्विविध,

---

१ द्वारक्रमोऽयमेव तु निक्षिप्यते येन नासमीपस्थम् । अनुगम्यते नान्यस्य नानुगमो नयमतविहीन ॥१॥ २ सोऽप्येकैक परिकर्मविना० प्र

उक्तं च भाष्यकारेण—“णामाई छब्भेओ उवक्कमो दव्वओ सचित्ताई। तिविहो दुविहो य पुणो परिक्कमे वत्थुनासे य ॥ १ ॥” तत्र परिकर्मणि सचित्तद्रव्योपक्रमोऽवस्थितस्यैव द्विपदचतुष्पदापदरूपस्य नरतुरगतरुप्रभृतिसचित्तवस्तुनोऽविवक्षिताचित्तकेशाद्यवयवस्य यथाक्रमं रसायनशिक्षायुर्वेदादिवशतः तथाविधकर्मोदयादेः कालान्तरभाविनो वयःस्थैर्यविनयनप्रसूनोद्गमादिपरिणतिविशेषस्यापादनम्, अचित्तद्रव्योपक्रमः कनकादेः कटककुण्डलादिक्रिया, मिश्रद्रव्योपक्रमः सचित्तस्यैव द्विपदादेः अचित्तकेशादिसहितस्य स्नानादिसंस्कारकरणम्, एवं विनाशेऽपि द्रव्योपक्रमस्त्रिधा—तत्र सचित्तद्रव्योपक्रमोऽवस्थितस्यैव सचित्तद्रव्यस्याविवक्षितपर्यायान्तरोत्पत्ति प्रत्यभिज्ञानिवर्तकमसिपरश्वादितः प्राक्तनपर्यायापनयनम्, अचित्तद्रव्योपक्रम एवमेवाचित्तस्य रजतादेः पारदादिसम्पर्कतः स्वरूपादिभ्रंशनं, मिश्रद्रव्योपक्रमोऽपि तथैव शङ्खशृङ्खलाद्यलङ्कृतद्विरदादेः सचेतनस्य मुद्गरादिभिरभिघातः। एवं क्षेत्राद्युपक्रमा अपि परिकर्मविनाशभेदतो द्विभेदाः, तत्र यद्यपि क्षेत्रं नित्यममूर्तं च, ततो न तस्य परिकर्मविनाशौ स्तस्तथापि तदाधेयस्य जलादेर्नावादिहेतुतस्तौ सम्भवत इत्युपचारतस्तदुपक्रमः, उक्तं च—“खित्तमरूवं णिच्चं ण तस्स परिक-

१ नामादिः षड्भेद उपक्रमो द्रव्यतः सचित्तादिः। त्रिविधो द्विविधश्च पुनः परिकर्मणि वस्तुनाशे च ॥ १ ॥ २ क्षेत्रमरूपं नित्यं न तस्य परिकर्म न च विनाशः। आधेयगतवशेनैव करणविनाशोपचारोऽत्र ॥ १ ॥ नावोपक्कमणं हलकुलिकादिभिर्वाऽपि क्षेत्रस्य। संमार्जनभूमिकर्म च पथितटाकादीनां च ॥ २ ॥

म्मणं ण य विणासो । आहेयगयवसेण उ करणविणासोवयारोऽत्थ ॥ १ ॥ णावाए उवक्कमण हलकुलियाईहि वावि खेत्तस्स । समज्जभूमिकम्मे य पथतलागाइयाण च ॥ २ ॥" कालो वर्तनादिरूपत्वेन द्रव्यपर्यायात्मक एव, द्रव्यपर्यायौ च नरसिंहवदन्योऽन्यसवलितौ, ततस्तद्द्वारेण तस्य गुणविशेषाऽऽधानविनाशावुपक्रमशब्दवाच्यौ, आह च—"ज वत्तणादिरूवो कालो दव्वाण चेव पज्जाओ । तो तक्करणविणासे कीरइ कालोवयारो उ ॥ १ ॥" आह—मनुष्यक्षेत्रे सूर्यक्रियाव्यङ्ग्यो वर्तनादिद्रव्यपरिणतिनिरपेक्षोऽद्धाकालाख्यः कालोऽस्ति, यथोक्तम्—"सूरकिरियाविसिट्ठो गोदोहादिकिरियासु निरवेक्खो । अद्धाकालो भण्णइ समयक्खेत्तमि समयाई ॥ १ ॥" त्ति, तत्र का वार्ता?, उच्यते, तस्यापि शङ्कुच्छायादिना यथावत्परिज्ञानत ऋक्षादिचारैरतिपाततश्चामूर्तत्वेऽपि परिकर्मविनाशसम्भवादुपक्रम, तथा च पूज्या —"छायाइ नालियाइ व परिकम्म से जहत्थविन्नाण । रिक्खाईचारेहि य तस्स विणासो विवज्जासो ॥ १ ॥" भावोपक्रमस्तु यद्यपि भावस्य पर्यायत्वात् तस्य च द्रव्यात् कथञ्चिदनन्यत्वात्तदुपक्रमाभिधानत उक्त एव, तथापि जीवद्रव्यपर्यायोऽभिप्रायाख्यो भावशब्दाभिधेयोऽस्ति, यदुक्तम्—"भावा-

१ वर्तमाना० प्र २ यद्वर्त्तनादिरूप कालो द्रव्याणामेव पर्याय । ततस्तत्करणविनाशयो क्रियते कालोपचारोऽत्र ॥ २ सूरक्रियाविशिष्टो गोदोहादिक्रियासु निरपेक्ष । अद्धाकालो भण्यते समयक्षेत्रे समयादि ॥ १ ॥ ३ छायया नालिकया [redacted] परिकर्म तस्य यथार्थविज्ञानम् । ऋक्षादिचारैश्च तस्य विनाशो विपर्यास ॥ १ ॥

भिख्याः पञ्च स्वरूपसत्तात्मयोन्यभिप्रायाः" इति, ततस्तस्य परचित्तवर्तिनः संवेदनाविषयतया विप्रकर्षवत इङ्गिताकारादिना परिज्ञानतः सन्निहितकरणं ज्ञातस्य वा तथाऽननुगुणानुगुणचित्रचेष्टातः कुपितप्रसन्नतापादनं भावोपक्रम एव, स चावश्यमिहाभिधेयः, तदन्तर्गतत्वात् गुरुभावोपक्रमस्य, तस्य च सकलानुयोगप्रथमाङ्गत्वात्, उक्तं च—"[1]भण्णइ वक्खाणंगं गुरुचित्तोवक्कमो पढमं" ति, शेपोपक्रमाणामपि चैतदङ्गत्वात्, तथा चाह—"[2]जुत्तं गुरुमयगहणं को सेसोवक्कमोवयारोऽत्थ?। गुरुचित्तपसायत्थं तेऽवि जहाजोगमाजोज्जा ॥ १ ॥ परिकम्मणासणाओ देसे काले य जे जहा जोगा। तो ते दव्वाईणं कज्जाऽऽहाराइकज्जेसुं ॥ २ ॥" तत एतदभिधानाय द्रव्योपक्रमाद्भावोपक्रमः पृथगुच्यते, स च द्विविधः—प्रशस्ताप्रशस्तभेदात्, तत्राप्रशस्तो ब्राह्मणीगणिकाऽमात्यदृष्टान्ततोऽवसेयः, प्रशस्तश्च शिष्यस्य श्रुतादिहेतोर्गुरुभावोन्नयनं, यत आह—"[3]सीसो गुरुणो भावं जमुवक्कमए सुहं पसत्थमणो। सहियत्थं स पसत्थो इह भावोवक्कमोऽहिगतो ॥ १ ॥" इत्युक्तो लौकिक उपक्रमः, शास्त्रीयस्त्वानुपूर्वीनामप्रमाणवक्तव्यताऽर्थाधिकारसमवतारात्मकः, तत्रानुपूर्वी नामादिदशप्रकारा अन्यत्र प्रपञ्चत उक्ता, इह पुनरुत्कीर्तनगण-

१ भण्यते व्याख्यानाङ्ग गुरुचित्तोपक्रमः प्रथमम्। २ युक्तं गुरुमतग्रहणं कः शेपोपक्रमोपचारोऽत्र। गुरुचित्तप्रसादार्थं तेऽपि यथायोगमायोज्याः ॥ १ ॥ परिकर्मनाशनाभ्यां देशे काले च ये यथा योग्याः। ततस्ते द्रव्यादीनां कार्या आहारादिकार्येषु ॥ २ ॥ ३ शिष्यो गुरोर्भावं यदुपक्रमते शुभं प्रशस्तमनाः। स्वहितार्थं स प्रशस्त इह भावोपक्रमोऽधिकृतः ॥ १ ॥

नात्मिकया तयाऽधिकार इति सैव भण्यते—तत्रोत्कीर्तनं विनयश्रुत परीषहाध्ययन चतुरङ्गीयमित्यादि सशब्दनं, गणनं सङ्ख्यानं, तच्च पूर्वानुपूर्वीपश्चानुपूर्वीअनानुपूर्वीभेदतस्त्रिविधं, तत्र पूर्वानुपूर्व्या गण्यमानमिदमध्ययनं प्रथमं, पश्चानुपूर्व्या षट्त्रिंशत्तमम्, अनानुपूर्व्या त्वस्यामेवैकाद्येकोत्तरषट्त्रिंशद्गच्छगताया श्रेण्यामन्योऽन्याभ्यासतो द्विरूपोनसङ्ख्याभेद भवति, उक्तं च—"एकाद्या गच्छपर्यन्ता, परस्परसमाहता । राशयस्तद्धि विज्ञेयं, विकल्पगणिते फलम् ॥ १ ॥" इह चासम्मोहाय षट्पदाङ्गीकारतः प्रस्तारानयनोपाय उच्यते—तत्र चैकादीनि षडन्तानि षट् पदानि स्थाप्यन्ते, तानि चान्योऽन्यं गुण्यन्ते, ततश्च जातानि सप्त शतानि विंशत्युत्तराणि, तेषां चान्त्येन षट्केन भागहारः, तत्र लब्धं विंशत्युत्तरं शतं १२०, इयन्तः षष्ठपङ्क्तौ षट्का न्यस्यन्ते, तदधस्तावन्त एव क्रमेण पञ्चकचतुष्कत्रिकद्विकैककाः स्थाप्याः, इत्थं जातानि षष्ठपङ्क्तौ सप्त शतानि विंशत्युत्तराणि । ततो विंशत्युत्तरशतस्य पञ्चकेन भागहारः, तत्र च लब्धा चतुर्विंशतिः २४, तावत्सङ्ख्याः पञ्चमपङ्क्तौ क्रमेण पञ्चकचतुष्कत्रिकद्विकैकका न्यस्ताः, जातं विंशत्युत्तरं शतं, तस्य चाधस्तादग्रेतनपङ्क्तिस्थमङ्कमपहाय यथासहत्तसङ्ख्यमङ्कविन्यासः, तत्राग्रेतनपङ्क्तिस्थपञ्चकस्तत्परित्यागतश्च सर्वबृहत्सङ्ख्यः षट्कश्चतुर्विंशतिवारानमू स्थाप्यते, ततस्त्रिकापेक्षया चतुष्को द्विकापेक्षया च त्रिक एककापेक्षया च द्विको बृहत्सङ्ख्यः ततः एककश्च तावत एव वारान् न्यसनीयः, जातं पुनर्विंशत्युत्तरं शतम्, एवमग्रेतनपङ्क्तिस्थचतुष्कत्रिकद्विकैकपरिहारतस्तथैव तावन्नेयं यावत्पञ्चमपङ्क्तावपि पूर्णानि सप्त शतानि विंशत्युत्तराणि ।

ततश्चतुर्विंशतेश्चतुष्केण भागहारः, तत्र लब्धाः षट् ६, ततश्चतुर्थपङ्क्तौ तावन्त एवाधोऽधश्चतुष्कत्रिकद्विकैकका: स्थाप्याः, यावज्जाता चतुर्विंशतिः, ततश्चाग्रेतनपङ्क्तिस्थाङ्कपरिहारादिप्रागुक्तयुक्तित एव पङ्क्तिः पूरणीया। भूयः षट्कस्य त्रिकेण भागहारः, ततश्च लब्धो द्विकः, ततस्तृतीयपङ्क्तौ द्वौ त्रिकौ पुनर्द्वावेव द्विकौ भूय एककौ च द्वावधः स्थापनीयौ, अधस्ताच पुरःस्थिताङ्कत्यागतो बृहत्सङ्ख्याङ्कन्यासतश्च विंशत्युत्तरसप्तशतप्रमाणैव पङ्क्तिः पूरणीया। षड्भागहारलब्धस्य द्विकस्य विभजने लब्ध एकः, ततो द्वितीयपङ्क्तौ द्विक एककश्चैको विरचनीयः, तदधश्च पुरोदितपुरस्थाङ्कपरिहारादिन्यायतस्तावत्सङ्ख्यैव द्वितीयपङ्क्तिः कार्या। प्रथमपङ्क्तिस्तु पुरस्थाङ्कपरिहारतः पूरणीया। उक्तं च—"गणितेऽन्त्यविभक्ते तु, लब्धं शेषैर्विभाजयेत्। आदावन्ते च तत्स्थाप्यं, विकल्पगणिते क्रमात् ॥१॥" इह च परस्परगुणनागतराशिर्गणितमुच्यते, शेषास्तु षट्कापेक्षया पञ्चकादयः, 'आदा'विति च षष्ठपङ्क्तौ, 'अन्त' इति च पञ्चमादिपङ्क्ताविति। उक्ताऽऽनुपूर्वी, सम्प्रति नाम, तत्र नमति—ज्ञानरूपादिपर्यायभेदानुसारतो जीवपरमाण्वादिवस्तुप्रतिपादकतया प्रह्वीभवतीति नाम, तथा चाह—"जं वत्थुणोऽभिहाणं पज्जवभेयाणुसारि तं नाम। पइभेयं जं णमए पइभेयं जाइ जं भणियं ॥१॥" तच्चैकनामादि दशनामान्तम्, इह तु षड्विधनाम्नौदयिकादिषड्भावरूपेणाधिकारः, तदन्तर्भूतक्षायोपशमिकभावे श्रुतज्ञानात्मकत्वेन प्रस्तुताध्ययनस्यावतारात्, आह च—"छव्विहणामे भावे खओवसमिए सुयं समोयरइ। जं सुय-

१ यद्वस्तुनोऽभिधानं पर्यायभेदानुसारि तन्नाम। प्रतिभेदं यन्नमति प्रतिभेदं याति यद्भणितम् ॥ १ ॥ २ षड्विधनाम्नि भावे क्षायोपशमिके

णाणावरणक्खओवसमज तय सव ॥ १ ॥" प्रमीयते परिच्छिद्यतेऽनेनेति प्रमाण, तच्च द्रव्यक्षेत्रकालभावभेदाच्चतुर्विध, तत्रास्य क्षायोपशमिकभावरूपत्वेन भावप्रमाणेऽवतार, यत आह—"दव्वाइ चउब्भेय पमीयए जेण त पमाणति । इणमज्झयण भावोत्ति भावमाणे समोयरइ ॥ १ ॥" भावप्रमाण च गुणनयसङ्ख्याभेदतस्त्रिधा, तत्रास्य गुणप्रमाण-सङ्ख्याप्रमाणयोरेवावतार, नयप्रमाणे तु यद्यपि श्रुतकेवलिनोक्तम्—'अहिगारो तिहि उ ओसण्ण'ति, तथा 'णत्थि णएहिँ विहूण सुत्त अत्थो य जिणमए किंचि। आसज्ज उ सोयार णए णयविसारओ बूया ॥ १ ॥' तथापि सम्प्रति तथाविधनयविचारणाव्यवच्छेदतोऽनवतार एव, तथा च तेनैव भगवतोक्तम्—"मूढनइय सुय कालिय तु ण णया समोयरति इह । अपहुत्ते समोयारो नत्थि पहुत्ते समोयारो ॥ १ ॥" तथा—"जावति अज्जवइरा अपहुत्त कालि-याणुओगस्स । तेणारेण पहुत्त कालियसुयदिट्ठिवाए य ॥२॥" महामतिनाऽप्युक्त—'मूँढणय तु न सपइ णयप्पमाणे-

---

श्रुत समवतरति । यत् श्रुतज्ञानावरणक्षयोपशमज तकत् सर्वम् ॥ १ ॥ १ द्रव्यादिचतुर्भेद प्रमीयते येन तत्प्रमाणमिति । इदमध्ययन भाव इति भावमाने समवतरति ॥ १ ॥ २ अधिकारस्त्रिभिस्तु उत्सन्नमिति । ३ नास्ति नयैर्विहीन सूत्रमर्थो वा जिनमते किञ्चित् । आसाद्य तु श्रोतार नयान् नयविशारदो ब्रूयात् ॥ १ ॥ ४ मूढनयिक श्रुत कालिक तु न नया समवतरन्तीह । अपृथक्त्वे ( अनुयोगाना ) समवतार नास्ति पृथक्त्वे समवतार ॥१॥ यावदार्यवज्रा अपृथक्त्व कालिकानुयोगस्य । ततोऽर्वाक् पृथक्त्व कालिकश्रुते दृष्टिवादे च । ५ मूढनय तु न सम्प्रति नयप्रमाणेऽवतारस्तस्य

ऽवयारो से"। गुणप्रमाणं तु द्विधा—जीवगुणप्रमाणमजीवगुणप्रमाणं च, तत्रास्य जीवोपयोगरूपत्वाज्जीवगुणप्रमाणेऽवतारः, तस्मिन्नपि ज्ञानदर्शनचारित्रभेदतस्त्र्यात्मकेऽस्य ज्ञानरूपतया ज्ञानप्रमाणे, तत्रापि प्रत्यक्षानुमानोपमानाऽऽगमात्मके प्रकृताध्ययनस्याप्तोपदेशरूपतयाऽऽगमप्रमाणे, तत्रापि लौकिकलोकोत्तरभेदे परमगुरुप्रणीतत्वेन लोकोत्तरे सूत्रार्थोभयात्मनि, तथा चाह—"[1]जीवाणण्णत्तणओ जीवगुणेणेह भावओ नाणे। लोउत्तरसुत्तत्थोभयागमे तस्स भावाओ ॥ १ ॥" तत्राप्यात्मानन्तरपरम्परागमभेदतस्त्रिविधे अर्थतस्तीर्थकरगणधरतदन्तेवासिनः सूत्रतस्तु स्थविरतच्छिष्यतत्प्रशिष्यानपेक्ष्य यथाक्रममस्यात्मानन्तरपरम्परागमेष्ववतारः, सङ्ख्याप्रमाणमनुयोगद्वारादिषु प्रपञ्चितमिति तत एवावधारणीयं, तत्र चास्य परिमाणसङ्ख्यायामवतारः, तत्रापि कालिकश्रुतदृष्टिवादश्रुतपरिमाणभेदतो द्विभेदायां कालिकश्रुतपरिमाणसङ्ख्यायां, दिवा रात्रौ च प्रथमपश्चिमपौरुष्योरेवैतत्पाठनियमात्, तत्रापि शब्दापेक्षया सङ्ख्येयाक्षरपादश्लोकाद्यात्मकतया सङ्ख्यातपरिमाणात्मिकायां पर्यायापेक्षया त्वनन्तपरिमाणात्मिकायाम्, अनन्तगमपर्यायत्वादागमस्य, तथा चाह—"[2]अणंता गमा अणंता पज्जवा" इत्यादि। वक्तव्यता—पदार्थविचारः, सा च स्वपरोभयसमयभेदतस्त्रिधा, तत्र स्वसमयः—अर्हन्मतानुसारिशास्त्रात्मकः, परसमयः—कपिलाद्यभिप्रायानुवर्तिग्रन्थस्वरूपः, उभयसमयस्तूभयमतानुगतशास्त्रस्वभावः, तत्रास्य स्वसमयवक्तव्यतायामेवावतारः, स्वसमयपदार्थानामेवात्र वर्णनात्,

१ जीवानन्यत्वाज्जीवगुणेनेह भावतो ज्ञाने। लोकोत्तरसूत्रार्थोभयात्मके तस्य भावात्। १। २ अनन्ता गमा अनन्ताः पर्यवाः

यत्रापि परोभयसमयपदार्थवर्णन तत्रापि स्वसमयवक्तव्यतैव, परोभयसमययोरपि सम्यग्दृष्टिपरिगृहीतत्वेन स्वसमयत्वात्, अत एव सर्वाध्ययनानामपि स्वसमयवक्तव्यतायामेवावतार, तदुक्तम्–"परसमओ उभय या सम्मद्दिट्ठिस्स ससमओ जेण । तो सव्वज्झयणाइ ससमयवत्तव्वनिययाइ ॥ १ ॥" ति । अर्थाधिकार 'पढमे विणओ' इत्यनेन सत एव निर्युक्तिकृताऽभिहित इति नोच्यते। इह च वक्तव्यता प्रतिसूत्राभिधेयार्थविषया, अर्थाधिकारस्तु 'अहिगारो इत्थ विणएण' मित्यनेनैवाभिहित । समवतारस्त्वानुपूर्व्यादिषु लाघवार्थं यथासम्भवमुक्त एव इति न पुनरुच्यते, उक्त च–"अहुणा य समोयारो जेण समोयारिय पइद्दार । विणयसुय सोऽणुगतो लाघवओ ण उण पचेत्ति ॥ १ ॥" निक्षेपस्त्रिधा–ओघनिष्पन्नो नामनिष्पन्न सूत्रालापकनिष्पन्नश्च, आह च–"भण्णइ घेप्पइ य सुह णिक्खेवपयाणुसारओ सत्थ । ओहो नाम सुत्त निक्खेयव्व तओऽवस्स ॥ १ ॥" (ओघ) अध्ययनादि सामान्यनाम, आह च—ओहो ज सामन्नं सुयाभिहाण चउव्विह त च । अज्झयण अज्झीण आओ झवणा य पत्तेय ॥ १ ॥ णामादि चउब्भेय

१ परसमय उभय वा सम्यग्दृष्टे स्वसमयो येन । तत सर्वाण्यध्ययनानि स्वसमयवक्तव्यतानियतानि ॥ १ ॥ २ अधुना च समवतारो येन समवतारित प्रतिद्वारम् । विनयश्रुत सोऽनुगतो लाघवतो न पुनर्वाच्य इति ॥१॥ ३ भण्यते गृह्यते च सुख निक्षेपपदानुसारत शास्त्रम् । ओघो नाम सूत्र निक्षेप्तव्य ततोऽवश्यम् ॥ २ ॥ ४ ओघो यत् सामान्य श्रुताभिधान चतुर्विध तच्च । अध्ययनमक्षीणमायः क्षपणा च प्रत्येकम् ॥ ३० ॥ नामादि चतुर्भेद वर्णयित्वा श्रुतानुसारेण । विनयश्रुतमायोज्य चतुर्ष्वपि क्रमेण भावेषु ॥ ३१ ॥ येन शुभात्माध्ययनम

वण्णेऊणं सुयाणुसारेणं । विणयसुयं आउज्जं चउसुंपि कमेण भावेसुं ॥२॥ जेण सुहप्पज्झयणं अज्झप्पाणयणमहिय णयणं वा । वोहस्स संजमस्स य मोक्खस्स व तो तमज्झयणं ॥३॥ अक्खीणं दिज्जंतं अवोच्छित्तिणयतो अलोगो व । आओ णाणाईणं झवणा पावाण कम्माणं ॥ ४ ॥ प्रकटार्था एव, नवरं येन हेतुना शुभात्माध्ययनं शुभस्य—पुण्यस्यात्मन्याधिक्येनायनं—गमनं ततो भवति, पठ्यते वा—'सुहज्झप्पयणं'ति, तत्र शुभं—सङ्क्लेशविरहितमध्यात्मं—मनः तत्रायनमर्थादात्मनः ततः, ( अध्यात्मस्यानयनं प्रापणमात्मनि ततो भवति ) तथाऽधिकं नयनं—प्रकर्षवत्प्रापणं, कस्य ?—बोधस्य—तत्त्वावगमस्य संयमस्य वा—पृथिव्यादिसंरक्षणात्मकस्य मोक्षस्य वा—कृत्स्नकर्मक्षयलक्षणस्य ततो भवति, आत्मनीति गम्यते, 'ततः' तस्माद्धेतोः, प्राग्वदध्ययनमुच्यत इति शेषः, तथा 'अव्यवच्छित्तिनयतः' अव्यवच्छित्तिनयमाश्रित्य द्रव्यास्तिकनयाभिप्रायेणेत्यर्थः, 'अलोकवत्' इत्युपलक्षणत्वादलोकाकाशवदिति । नामनिष्पन्ननिक्षेपेऽस्य विनयश्रुतमिति द्विपदं नाम, ततो विनयस्य श्रुतस्य च निक्षेपः शास्त्रान्तर उक्तोऽप्यवश्यमिह वक्तव्यः । तत्र च विनयनिक्षेपो बहुवक्तव्य इति तमतिदेष्टुं श्रुतनिक्षेपस्तु न तथेति तमभिधातुमाह—

**विणओ पुव्वुद्दिट्ठो सुयस्स चउक्कओ उ निक्खेवो । दव्वसुय निण्हगाइ भावसुय सुए उ उवउत्तो ॥२९॥**



---

ध्यात्मानयनमधिकनयनं वा । बोधस्य संयमस्य च मोक्षस्य वा ततस्तदध्ययनम् ॥ ३२ ॥ अक्षीणं दीयमानमव्यवच्छित्तिनयतोऽलोक इव । आयो ज्ञानादीनां क्षपणा पापानां कर्मणाम् ॥ ३३ ॥ एताश्चतस्रोऽपि आवश्यकनिर्युक्तिगाथाः सोपयोगतरा इति च संस्कृता ज्ञेयाः

व्याख्या—विनीयते—अपनीयतेऽनेन कर्मेति विनय , स च पूर्वं—दशवैकालिकविनयसमाधिनामाध्ययने उद्दिष्ट—उक्त पूर्वोद्दिष्ट , स्थानाशून्यार्थं तदुक्तमेव किञ्चिदुच्यते—'विणयस्स य सुत्तस्स य णिक्खेवो होइ दुण्ह य चउक्को । दव्वविणयम्मि तिणिसो सुवण्णमिति एवमातीते ॥१॥ लोकोवयारविणओ अत्थनिमित्त च कामहेउ च । भयविणयमोक्खविणओ विणओ खलु पचहा णेओ ॥ २ ॥ अब्भुट्ठाण अजलि आसणदाण च अतिहिपूया य । लोगोवयारविणओ देवयपूया य विभवेण ॥३॥ अब्भासवत्तिछदाणुवत्तणा देसकालदाण च । अब्भुट्ठाण अजलि आसणदाण च अत्थकए ॥४॥ एमेव कामविणओ भए य णेयब आणुपुव्वीए । मोक्खमिवि पचविहो परूवणा तस्सिमा होइ ॥५॥ दसणणाणचरित्ते तवे य तह ओवयारिए चेव । एसो य मोक्खविणओ पचविहो होइ णायव्वो ॥ ६ ॥ दव्वाण सव-

१ विनयस्य च श्रुतस्य च निक्षेपो द्वयोश्च चतुष्करो भवति । द्रव्यविनये तिनिश सुवर्णमिति एवमादिक ॥१॥ २ समाहीए इति द०अ० ९ ३ सुवण्णमिचेवमाईणि द०अ०९ नि० । ४ लोकोपचारविनयोऽर्थनिमित्त च कामहेतोश्च । भयविनयो मोक्षविनयो विनय खलु पञ्चधा ज्ञेयः ॥ २ ॥ अभ्युत्थानमञ्जलिरासनदान चातिथिपूजा च । लोकोपचारविनयो देवतापूजा च विभवेन ॥ ३ ॥ अभ्यासवर्तिता छन्दोऽनुवर्तना देशकालदान च । अभ्युत्थानमञ्जलिरासनदान चार्थकृते ॥ ४ ॥ एवमेव कामविनयो भये च नेतव्य आनुपूर्व्या । मोक्षेऽपि पञ्चविध प्ररूपणा तस्येय भवति ॥ ५ ॥ दर्शनज्ञानचारित्रेषु तपसि च तथौपचारिके चैव । एष च मोक्षविनय पञ्चविधो भवति ज्ञातव्य ॥ ६ ॥ द्रव्याणा सर्वभावा उपदिष्टा ये यथा जिनेन्द्रै । तास्तथा श्रद्दधाति नरो दर्शनविनयो भवति तस्मात् ॥ ७ ॥ ज्ञान शिक्षते ज्ञान गुणयति

भावा उवइट्ठा जे जहा जिणिंदेहिं । ते तह सद्दहइ नरो दंसणविणओ भवइ तम्हा ॥ ७ ॥ नाणं सिक्खइ नाणं गुणेइ नाणेण कुणइ किच्चाइं । णाणी णवं ण वंधइ णाणविणीओ हवइ तम्हा ॥ ८ ॥ अट्ठविहं कम्मचयं जम्हा रित्तं करेइ जयमाणो । णवमण्णं च न वंधइ चरित्तविणओ हवइ तम्हा ॥ ९ ॥ अवणेइ तवेण तमं उवणेइ य सग्गमोक्खमप्पाणं । तवनियमनिच्छियमई तवोविणीओ हवइ तम्हा ॥ १० ॥ अह ओवयारिओ पुण दुविहो विणओ समासओ होइ । पडिरूवजोगजुंजण तहय अणासायणाविणओ ॥ ११ ॥ पडिरूवो खलु विणओ काइयजोगो य वायमाणसिओ । अट्ठचउविहदुविहो परूवणा तस्सिमा होइ ॥ १२ ॥ अब्भुट्ठाणं अंजलि आसणदाणं अभिग्गह किती य । सुस्सूसण अणुगच्छण संसाहण काय अट्ठविहो ॥ १३ ॥ हियमियअफरुसवाई अणुवीईभास वाइओ

---

ज्ञानेन करोति कृत्यानि । ज्ञानी नवं न बध्नाति ज्ञानविनीतो भवति तस्मात् ॥८॥ अष्टविधं कर्मचयं यस्माद्रिक्तं करोति यतमानः । नवमन्यच्च न बध्नाति चारित्रविनयो भवति तस्मात् ॥ ९ ॥ अपनयति तपसा तम उपनयति च स्वर्गमोक्षमात्मानम् । तपोनियमनिश्चितमतिस्तपोविनीतो भवति तस्मात् ॥ १० ॥ अथौपचारिकः पुनर्द्विविधो विनयः समासतो भवति । प्रतिरूपयोगयोजनं तथा च अनाशातनाविनयः ॥ ११ ॥ प्रतिरूपः खलु विनयः कायिकयोगश्च वाचिको मानसिकः । अष्टविधः चतुर्विधः द्विविधः प्ररूपणा तस्येयं भवति ॥ १२ ॥ अभ्युत्थानमञ्जलिरासनदानमभिग्रहः कृतिकर्म च । शुश्रूषणमनुगमनं संसाधनं कायिकोऽष्टविधः ॥१३॥ हितमितापरुषवादी अनुवीच्य भाषी वाचिको

विणओ । अकुसलमणोणिरोहो कुसलमणउदीरणा चेव ॥ १४ ॥ पडिरूवो खलु विणओ पराणुवित्तिमइओ मुणेयव्वो । अप्पडिरूवो विणओ णायव्वो केवलीण तु ॥ १५ ॥ एसो भे परिकहिओ विणओ पडिरूवलक्खणो तिविहो । बावन्नविहिविहाणं बिंति अणासायणाविणय ॥ १६ ॥ तित्थयर १ सिद्ध २ कुल ३ गण ४ संघ ५ किरिय ६ धम्म ७ णाण ८ णाणीण ९ । आयरिय १० थेर ११ उवज्झाय १२ गणीण १३ तेरस पयाइं ॥ १७ ॥ अणसायणा य भत्ती बहुमाणो वण्णसंजलणया य । तित्थयराई तेरस चउग्गुणा होंति बावन्ना ॥ १८ ॥' स्पष्टार्था, नवरं 'तिनिशो' वृक्षविशेष, लोकोपचारविनय लोकपङ्क्तिफल, अर्थनिमित्त चेति, विनय इति गम्यते, ततोऽर्थप्रासिहेतोरीश्वराद्यनुवर्तनमर्थविनय, कामहेतोश्चेति इहापि विनय इति प्रक्रम, ततश्च शब्दादिविषयसम्पत्तिनिमित्त तथा तथा प्रवर्तनं कामविनय, दुष्प्रधर्षनृपतिसामन्तादे प्राणादिभयेनानुवर्तनं भयविनय, इहलोकानपेक्षस्य श्रद्धानज्ञानशिक्षादिषु कर्मक्षयाय प्रवर्तनं मोक्षविनय, स च दर्शनज्ञानचारित्रतपउपचारभेदात्

---

विनय । अकुशलमनोनिरोध कुशलमनउदीरणैव ॥१४॥ प्रतिरूप खलु विनय परानुवृत्तिमयो मुणितव्य । अप्रतिरूपो विनयो ज्ञातव्य केवलिना तु ॥ १५ ॥ एष भवद्भ्य परिकथितो विनय प्रतिरूपलक्षणस्त्रिविध । द्वापञ्चाशद्विधिविधानं ब्रुवतेऽनाशातनाविनयम् ॥ १६ ॥ तीर्थंकर १ सिद्ध २ कुल ३ गण ४ सङ्घ ५ क्रिया ६ धर्म ७ ज्ञान ८ ज्ञानिनाम् ९ । आचार्य १० स्थविर ११ उपाध्याय १२ गणिना १३ त्रयोदश पदानि ॥१७॥ अनाशातना च भक्तिर्बहुमानो वर्णस वलनता च । तीर्थकराद्यास्त्रयोदश चतुर्गुणा भवति द्विपञ्चाशत् ॥ १८ ॥

पञ्चप्रकारः, तत्र चौपचारिकोऽनुरूपव्यापारसम्पादनानाशातनाभेदतो द्विभेदः, तत्र चाद्ये अभ्युत्थानम्—आगच्छति गच्छति च दृष्टे गुरावासनमोचनम्, अभिग्रहो—गुरुविश्रामणादिनियमः, कृतिः—द्वादशावर्तादिवन्दनं, शुश्रूषणं 'ण पक्खओ ण पुरओ' इत्यादिविधिना गुरुवचनश्रवणेच्छा, पर्युपासनमित्यर्थः, अनुगमनम्—आगच्छतः प्रत्युद्गमनं, संसाधनं-गच्छतः सम्यगनुव्रजनं, 'कुलं' नागेन्द्रादिः 'गणः' कोटिकादिः, 'क्रिया' अस्ति परलोकोऽस्त्यात्माऽस्ति च सकलक्लेशलेशाकलङ्कितं मुक्तिपदमित्यादिप्ररूपणात्मिकेह गृह्यते, 'धर्मः' श्रुतचारित्रात्मकः 'ज्ञानं' मत्यादि 'आचार्यः' अनुयोगाचार्यः 'गणी' गणाचार्यः अनाशातना—मनोवाक्कायैरप्रतीपप्रवर्तनं, भक्तिः—अभ्युत्थानादिरूपा, वहुमानो-मानसोऽत्यन्तप्रतिवन्धः, वर्णनं वर्णः—श्लाघनं तेन सञ्ज्वलना-ज्ञानादिगुणोद्दीपना वर्णसंज्वलना ॥ श्रुतस्य चत्वारः परिमाणमस्येति चतुष्कः, सङ्ख्याया अतिशदन्तायाः कन्निति ( पा०५-१-२२ ) कन्, तुशब्दश्चतुर्विधनिक्षेपोऽवश्यं सर्वत्र वक्तव्य इति विशेषद्योतकः, उक्तं हि—"जत्थ उ जं जाणेज्जा णिक्खेवं णिक्खिवे निरवसेसं। जत्थवि णवि जाणिज्जा चउकयं निक्खिवे तत्थ ॥ १ ॥" निक्षेपो-न्यासः, तत्राद्ययोः सुगमत्वात्तृतीयमाह—द्रव्यतो द्रव्यरूपं वा श्रुतं द्रव्यश्रुतम्, आगमतो नोआगमतश्च, तत्रागमतो ज्ञाताऽनुपयुक्तः, नोआगमतस्त्वाह—निह्नुते—आग-

१ न पक्षतो न पुरतः । २ अथ एकोनत्रिंशत्तमनिर्युक्तिगाथोपात्तस्य 'सुयस्स चउक्कओ उ निक्खेवो' इत्यस्य व्याख्या. ३ यत्र तु यं जानीयात् निक्षेपं निक्षिपेन्निरवशेषम् । यत्रापि नापि जानीयात् चतुष्ककं निक्षिपेत् तत्र । १ । ४ 'जत्थवि य न जाणिज्जा' इत्यनुयोगद्वारेषु ।

माभिहितमर्थमतिक्लिष्टकर्मोदयात् कुयुक्तिभिरपनयतीति निह्नवो-जमालिप्रभृति पश्चात्कृतश्रुतपरिणति, आदिश- ब्दात्पुरस्कृतश्रुतपरिणतिसत्त्वपरिग्रह, भावश्रुतमप्यागमनोआगमभेदतो द्विधा, तत्रागमतोऽभिधातुमाह-भावतो भावरूप वा श्रुत भावश्रुत, प्राकृतत्वादिह पूर्वत्र च बिन्दुलोप, 'श्रुते' श्रुतविषये, 'तु' अवधारणे भिन्नक्रम, तत उपयुक्त एव, कोऽर्थ ?—यस्य श्रुतमिति पद ज्ञात तत्र चोपयोग स भावश्रुत, तदुपयोगानन्यत्वाद्, अभ्युपयुक्तमाणवकाभि- वदिति गाथार्थ ॥ २९ ॥ उक्तावोघनामनिष्पन्ननिक्षेपौ, सम्प्रति सूत्रालापकनिष्पन्ननिक्षेप प्राप्तावसर, तथापि स नोच्यते, यत सति सूत्रेऽसौ सम्भवति, सूत्र च सूत्रानुगमे, स चानुगमभेद इति अनुगम एव तावदुपवर्ण्यते—द्विवि- धोऽनुगम —निर्युक्त्यनुगम सूत्रानुगमश्च, तत्राद्यो निक्षेपनिर्युक्तिउपोद्घातनिर्युक्तिसूत्रस्पर्शिकनिर्युक्त्यनुगमविधान- तस्त्रिविध, तत्र च निक्षेपनिर्युक्त्यनुगम उत्तरादिनिक्षेपप्रतिपादनादनुगत एव, उपोद्घातनिर्युक्त्यनुगमस्तु द्वारगा- थाद्वयादवसेय, तथेदम्—"उद्देसे णिद्देसे य णिग्गमे खेत्त काल पुरिसे य। कारण पच्चय लक्खण णए समोया- रणाणुमए ॥१॥ किं कइविह कस्स कहिं केसु कह केचिर हवइ काल ?। कइ सतरमविरहिय भवागरिस फासण णिरुत्ती ॥ २ ॥" एतदर्थ सामायिकनिर्युक्तितोऽवसेय, सूत्रस्पर्शिकनिर्युक्त्यनुगमस्तु सूत्रावयवव्याख्यानरूपत्वात् सूत्रस्प-

१ उद्देशो निर्देशश्च निर्गम क्षेत्र काल पुरुषश्च । कारण प्रत्ययो लक्षण नय समवतारणाऽनुमतम् ॥ १ ॥ किं कतिविध कस्य क केषु कथ कियच्चिर भवति कालम् । कतिसान्तरमविरहित भवाकर्षा स्पर्शना निरुक्ति ॥ २ ॥

शिकनिर्युक्तेः सति सूत्रे सम्भवति, तच्च सूत्रानुगम एवेति तत्रैव वक्ष्यते। नन्वेवमस्थानमिदमस्येति कस्मादिहोद्देशः?, उच्यते, निर्युक्त्यनुगममात्रसामान्यात्, तदुक्तम्—"संपइ सुत्तप्फासियनिज्जुत्ती जं सुयस्स वक्खाणं। तीसेऽवसरो सा पुण पत्तावि ण भण्णए इहइं ॥ १ ॥ किं जेणासइ सुत्ते कस्स तई तं जया कमप्पत्तो। सुत्ताणुगमो वोच्छं होही तीसे तया भावो ॥ २ ॥ अत्थाणमियं तीसे जइ तो सा कीस भण्णई इहयं?। सा भण्णइ निज्जुत्तीमेत्तसामण्णओ नवरं ॥ ३ ॥" साम्प्रतं सूत्रानुगमः, तत्रालीकोपघातजनकत्वादिदोषरहितं निर्दोषसारत्वा(वत्त्वा)दिगुणान्वितं सूत्रमुच्चारणीयं, तच्चेदम्—

संजोगा विप्पमुक्कस्स अणगारस्स भिक्खुणो। विणयं पाउक्करिस्सामि आणुपुव्विं सुणेह मे ॥ १ ॥

अस्य च संहितादिक्रमेण व्याख्या—तत्र चास्खलितपदोच्चारणं संहिता, सा चानुगतैव, सूत्रानुगमस्य तद्रूपत्वात्, तथा चाह—"होइ कयत्थो वोत्तुं सपयच्छेयं सुयं सुयाणुगमो" त्ति। पदं तु नामिकनैपातिकादि स्वधि-

१ सम्प्रति सूत्रस्पर्शिकनिर्युक्तिर्यत् श्रुतस्य व्याख्यानम्। तस्या अवसरः सा पुनः प्राप्ताऽपि न भण्यते इह। १। किं? येनासति सूत्रे कस्य सका तस्मात् यदा क्रमप्राप्तः। सूत्रानुगमो वक्ष्यते तदा भविष्यति तस्या भावः ॥२॥ अस्थानमिदं तस्या यदि तदा सा किं भण्यतेऽत्र। सा भण्यते निर्युक्तिमात्रसामान्यतो नवरम् ॥ ३ ॥ २ भवति कृतार्थ उक्त्वा सपदच्छेदं सूत्रं सूत्रानुगमः।

यैव भावनीय, पदार्थस्त्वयम्–अन्यसयुक्तस्यासयुक्तस्य वा सचित्तादिवस्तुनो द्रव्यादिना सयोजन–सयोग , स च सयुक्तसयोगादिभेदेनानेकधा वक्ष्यते, तस्मान्मात्रादिसयोगरूपादौदयिकादिक्लिष्टतरभावसयोगात्मकाच्च विविधै –ज्ञानभावनादिभिर्विचित्रै प्रकारै प्रकर्षेण–परीषहोपसर्गादिसहिष्णुतालक्षणेन मुक्तो–भ्रष्टो विप्रमुक्त , तस्य, 'अनगारस्से'-तिअविद्यमानमगारमस्येत्यनगार इति व्युत्पन्नोऽनगारशब्दो गृह्यते, यस्त्वव्युत्पन्नो रूढिशब्दो यतिवाचक , यथोक्तम्–'अनगारो मुनिर्मौनी, साधु प्रव्रजितो व्रती । श्रमण क्षपणश्चैव, यतिश्चैकार्थवाचका ॥१॥' इति, स इह न गृह्यते, भिक्षुशब्देनैव तदर्थस्य गतत्वात्, तत्र चागार द्विधा–द्रव्यभावभेदात्, तत्र द्रव्यागारमगै –द्रुमदृषदादिभिर्निर्वृत्त, भावागार पुनरगै –विपाककालेऽपि जीवविपाकतया शरीरपुद्गलादिषु वहि प्रवृत्तिरहितैरनन्तानुबन्ध्यादिभिर्निर्वृत्त कषायमोहनीय, तत्र च द्रव्यागारपक्षे तन्निषेधे ततोऽनगारस्याविद्यमानगृहस्येत्यर्थ , भावागारपक्षे त्वल्पताभिधायी, तत स्थितिप्रदेशानुभागतोऽल्पकषायमोहनीयस्येत्यर्थ , कषायमोहनीय हि कर्म, न च कर्मण स्थित्यादिभूयस्त्वे विरतिसङ्गम , यत आगम —"[1] सत्तण्ह पयडीण अब्भितरओ उ कोडिकोडीओ । काऊण सागराण जइ लहइ चउण्हमन्नयर ॥१॥" इत्यादि, क्लिष्टतरभावसयोगमुक्तत्वेनैव चास्य गतत्वे पुनरभिधान कषायमोहनीयस्यातिदुष्टताख्यापनार्थं,

१ सप्तानामपि प्रकृतीनामभ्यन्तरतस्तु कोटीकोट्या । कृत्वा सागरोपमाणा यदि लभते चतुर्णामन्यतरत् ॥ १ ॥

विशेष्यमाह—'भिक्षो'रिति,अत्र च पचनपाचनादिव्यापारोपरमतः साधुर्भिक्षते तद्धर्मा चेत्यर्थे "सनाशंसभिक्ष उ"रिति (पा० ३-२-१६८) ताच्छीलिक उप्रत्ययः, अस्य च वर्तमानाधिकारविहितत्वेऽपि 'सञ्ज्ञाप्रकारास्ताच्छीलिका' इति भाष्यकारवचनाद्भिक्षुशब्दस्त्रिकालविषयो यतिपर्यायः सिद्धो भवति, शेषविवक्षायां च षष्ठी, अथवा—'अणगाररसभिक्खुणो' त्ति अस्वेषु भिक्षुरस्वभिक्षुः—जात्याद्यनाजीवनादनात्मीकृतत्वेनानात्मीयानेव गृंहिणोऽन्नादि भिक्षत इतिकृत्वा, स च यतिरेव, ततोऽनगारश्चासावस्वभिक्षुश्च अनगारास्वभिक्षुस्तस्य, किमित्याह—विशिष्टो विविधो वा नयो—नीतिर्विनयः—साधुजनासेवितः समाचारस्तं, विनमनं वा विनतं 'णीयं सेज्जं गइं ठाणं' इत्याद्यागमात्, द्रव्यतो नीचैर्वृत्तिलक्षणं प्रह्वत्वं भावतश्च साध्वाचारं प्रति प्रवणत्वं 'प्रादुष्करिष्यामि' प्रकटयिष्यामि, कथमित्याह—पूर्वस्य पश्चादनुपूर्वं तस्य भाव इत्यर्थे "गुणवचनब्राह्मणादिभ्यः" (पा० ५-१-१२९) कर्मणि चेति ष्यञ्, तस्य च षित्करणसामर्थ्यात् स्त्रीत्वे "षिद् गौरादिभ्यश्चे"ति (पा० ४-१-४१) ङीष्यानुपूर्वी क्रमः परिपाटीतियावत् तया, द्वितीया तु 'छन्दोवत् सूत्राणी'ति न्यायतः छान्दसत्वे 'सुपां सुपो भवन्ती'ति वचनात् तृतीयार्थे, 'शृणुत' आकर्णयत श्रवणं प्रत्यनहिता भवत, यद्वा शृणु 'इहे'ति जगति जिनमते वा, व्याख्याद्वयेऽपि शिष्याभिमुखीकरणमित्यर्थः । अनेन च पराङ्मुखमपि प्रतिबोधयतो व्याख्यातुर्धर्म्म एवेति ख्यापितं भवति, तथा च वाचकः—"न ॥ १९ ॥

१ दुहादित्वाद्विकर्मत्वेन गृहिणोऽन्नादेश्च कर्मत्वं। २ नीचैः शय्यां गतिं स्थानम् ॥ १ ॥ ३ यू स्त्र्याख्यौ नदी (१-४-३) सूत्रे भाष्ये ।

पुत्र इति पितृद्वारेणासावितिकृत्वा तत उभयद्वारकत्वादुभयविषयसयोग उभयसम्बन्धनसयोग, इतिशब्दो मम पितु पिता मम भ्रातु पुत्र मम दासस्य कम्बल इत्येवप्रकारसम्बन्धान्तरव्यञ्जकान्योल्लेखसूचक', अनेन लौकिके स्वामित्व उभयसम्बन्धनसयोग उक्त, लोकोत्तरमेवाह—मम 'कुले' नागेन्द्रादावय साध्वादिरिति गम्यते, यद्वा कुलमेव कुलक तस्य, 'च' समुच्चये योक्ष्यते, ततोऽहमेव अहकम् अभ्यन्तर 'असि' भवामि, चशब्दादय च साध्वादिरित्येवविधोल्लेखद्वयव्यङ्ग्य एषोऽप्युभयसम्बन्धनसयोग इति वृद्धा, अत्र हि मच्छब्दवाच्यस्य कुलेन सहात्मद्वारक स्वस्वामिभावसम्बन्ध, कुलान्तर्वर्तिना च साध्वादिना परद्वारको, मम कुलेऽयमिति कुलद्वारकत्वादस्य, ततोऽयमपि प्राग्वदुभयसम्बन्धनसयोग, इहापि इतिशब्दोऽय मम गुरो साध्वादिरित्याद्येवप्रकारसम्बन्धान्तरव्यञ्जकान्योल्लेखसूचकार्थ, इह चोल्लेखद्वयाभिधानमेकत्राप्यनेकोल्लेखसम्भवख्यापनार्थमिति गाथार्थ ॥ ५९ ॥

पुनरन्यथा तमेवाह—

पच्चयओ य बहुविहो निव्वित्ती पच्चओ जिणस्सेव। देहा य बद्धमुक्का माइपिइसुआइ अ हवति ॥ ६० ॥

व्याख्या—प्रतीयतेऽनेनार्थ इति प्रत्यय—ज्ञानकारण घटादि, सर्वथा निरालम्बनज्ञानाभावेन तदविनाभावित्वात् ज्ञानस्य, ततस्तमाश्रित्य, चकारात् ज्ञानतश्च—ज्ञान चाश्रित्य 'बहुविध' बहुप्रकार, प्रक्रमादात्मनो य सयोग स उभयसम्बन्धनसयोग, तद्बहुत्व च प्रत्ययाना तद्विशिष्टज्ञानाना च बहुविधत्वात्, तथा च वृद्धा—घट

प्रतीत्य घटज्ञानं पटं प्रतीत्य पटज्ञानम् एवमादीनि प्रत्ययात् ज्ञानानि भवन्ति, तथा च सति ज्ञानेनात्मद्वारको, ममेदं ज्ञानमिति प्रत्ययेन परद्वारको, मम ज्ञानस्यायं विषय इति ज्ञानद्वारकत्वात्तस्य, तत उभयविषयत्वादुभयसम्बन्धनसंयोगः। आह–एवं केवलिनोऽप्युभयसंयोग एवेति, अत्रोच्यते, 'निर्वृत्तिः' इत्युत्तरत्रैवकारस्य भिन्नक्रमत्वान्निर्वृत्तिरेव—सकलावरणक्षयादुत्पत्तिरेव प्रत्ययो जिनस्य, जिनसम्बन्धिज्ञानस्येति गम्यते, इदमाकूतम्–छद्मस्थज्ञानं हि मत्यादिकं लब्धिरूपतयोत्पन्नमप्युपयोगरूपतायां बाह्यमपि घटादिकमपेक्षते, तथाहि–घटं प्रतीत्य घटज्ञानं पटं प्रतीत्य पटज्ञानं, केवलिनस्तु ज्ञानं लब्धिरूपतयोत्पन्नं पुनरुपयोगरूपतां प्रति न बाह्यं घटादिकमपेक्षते, तज्ज्ञानस्योत्पत्तिसमकालमेव सकलातीतानागतदूरान्तरितस्थूलसूक्ष्मार्थयाथात्म्यवेदितयैवोपयोगभावात्, यदुक्तम्–"उभयावरणाईतो केवलवरणाणदंसणसहावो। जाणइ पासइ य जिणो सव्वं णेयं सयाकालं ॥ १ ॥" ततः केवलज्ञानस्य सर्वत्र सततोपयोगेन नोपयोगं प्रति बाह्यापेक्षेति निर्वृत्तिरेव प्रत्ययः, ततो न छद्मस्थज्ञानस्येव प्रत्ययत उभयसंयोगः। आह–उक्त एव ज्ञानस्योभयसंयोगः, तत् किं पुनरुच्यते ?, सत्यम्, उक्तः स तत्राक्षेप्याक्षेपकभावेन, इह त्वेकस्यापि वस्तुन उपाधिभेदेनानेकसम्बन्धसम्भवख्यापनाय जन्यजनकभावेनोच्यते इति न दोषः। उभयसम्बन्धनसंयोगमेव पुनः स्वस्वामिभावेनाह—दिह्यन्ते–उपचीयन्ते पुद्गलैरिति देहाः–कायाः ते च बद्धा—इह जन्मनि जीवेन सम्बद्धा मुक्ता–

१ उभयावरणातीतः केवलवरज्ञानदर्शनस्वभावः। जानाति पश्यति च जिनः सर्वं ज्ञेयं सदाकालम् ॥ १ ॥

अन्यज मनि तेनैवोज्झिता अनयोर्द्वन्द्वे बद्धमुक्ता, 'माइपितिसुयाइ' त्ति 'णो जसूशसोर्लोपे' आर्षत्वाच्च 'लोपे दीर्घे' इति दीर्घत्वस्याभावे पितृमातृसुतादय, आदिशब्दाद् भ्रातृभगिन्यादयो, बद्धमुक्ता इत्यत्रापि योज्यते, चशब्दोऽय पूर्वस्य समुच्चये, एते च किमित्याह–'भवति' त्ति जायन्ते, प्राग्वदुभयसम्बन्धनसयोग, जीवस्येति गम्यते, इयमत्र भावना–बद्धा देहा मात्रादयश्चात्मरूपा, तत्र देहात्मनो क्षीरनीरवदन्योऽन्यानुगतत्वेन मात्रादयश्चात्यन्तस्नेहविषयतयाऽऽत्मवद् दृश्यमानत्वेन, मुक्तास्तूभयेऽपि बाह्या, तत्र देहा आत्मन पृथग्भूतत्वेन मात्रादयश्च तथाविधस्नेहाविषयतयाऽऽत्मवद्दृश्यमानत्वेन, अतो देहैर्मात्रादिभिश्च बद्धमुक्तै स्वस्वामिभावलक्षणसम्बन्धो जीवस्योभयसम्बन्धनसयोग। आह–देहादयो मुक्ताश्च स्वस्वामिविषयाश्चेति विरुद्धमेतत्, एवमेतद्, यदि भावतोऽपि मुक्ता स्यु, अथ भावतोऽप्यहमेषा स्वामी ममैते स्वमितिभावाभावान्मुक्ता एव ते, नन्वेवमैहिकेष्वप्यमीष्वपरापरोपयोगवत आत्मनो न सततमेव भावोऽस्तीति कथ तेष्वपि तद्विषयता ?, अथ तेष्वेव भावाभावेऽपि व्युत्सर्गाकरणतस्तद्विषयत्वम्, एतदिहापि समान, व्युत्सर्गाकरणत एव तद्विषयत्वस्येहापि विवक्षितत्वादिति गाथार्थ ॥ ६० ॥ इत्थमनेकधा सम्बन्धनसयोग उक्त, अय च कीदृशस्य कस्य भवतीत्याह–

सबधणसजोगो कसायबहुलस्स होइ जीवस्स । पहुणो वा अपहुस्स व मज्झति ममज्जमाणस्स ॥६१॥

व्याख्या–'सम्बन्धनसयोग' उक्तरूप, कषाया–क्रोधादयस्तैर्बहुलस्य–व्याप्तस्य, प्रभूतकषायस्येत्यर्थ, 'भवति'

जायते, कस्य ?–जीवस्य, पुनः कीदृशस्य ?–प्रभवति–सम्बन्धिवस्तु तत्र तत्र स्वकृत्ये नियोक्तुं समर्थो भवतीति प्रभुस्तस्य वा 'अप्रभोर्वा' उक्तविपरीतस्य, वाशब्दो समुच्चये, उभयोरपि संयोगसाम्यं प्रति कारणमाह–'मज्झंति ममज्जमाणस्स' त्ति ममेदं नगरजनपदादीति ममत्वमाचरतः, इदमुक्तं भवति–सत्यसति वा मत्सम्बन्धितया बाह्यवस्तुनि तत्त्वतोऽभिष्वङ्ग एव सम्बन्धनसंयोगः, अनेन च काका कषायबहुलत्वे हेतुरुक्तः, कषायबहुलस्येति च ब्रुवता कषायद्वारेण सम्बन्धनसंयोगस्य कर्मबन्धहेतुत्वं ख्यापितं भवति, आह–मिथ्यात्वादयो हि बन्धहेतवः, तत्कथं कषायसत्तामात्रेणैव तद्धेतुख्यापनम् ?, उच्यते, तेषामेव तत्र प्राधान्यात्, तत्प्राधान्यं च तत्तारतम्येनैव बन्धतारम्यात्, उक्तं च–"जईभागगया मत्ता रागाईणं तहा चउकम्मे"[1] इति, बाहुल्यापेक्षं च शुक्ला बलाकेत्यादिवत् कषायबहुलस्य जीवस्येत्युच्यते, ततोऽकषायहेतुकत्वेऽप्यौपशमिकादिभावे नामादिसंयोगानामजीवविषयत्वेऽपि च शीतोष्णादिविरोधिसंयोगानां सम्बन्धनसंयोगत्वं न विरुध्यते। आह–एवमभिप्रेतानभिप्रेतसंयोगयोरपि तत्त्वतः सकषायजीवविषयत्वात् सम्बन्धनसंयोगत्वप्राप्तिः, सत्यं, तथापीन्द्रियमनसोः साक्षात्तावुक्तौ, अयं तु जीवस्येति न दोषः। अन्यस्त्वाह–संयुक्तकसंयोगोऽपि द्विष्ठत्वेनेतरेतरस्यैव तथेतरेतरसंयोगोऽपि स्वपरधर्मैः संयुक्तत्वात् सर्ववस्तुनः संयुक्तस्यैवेति नानयोः प्रतिविशेषः, एवमेतत्, तथाऽप्येकस्कन्धताऽऽपन्नद्रव्यविषयः संयुक्तकसंयोगः, इतरेतर-

१ यतिभागगता मात्रा रागादीनां तथा चतुर्षु कर्मसु.

सयोगन्तु तथाऽन्यथा च, तत्र परमाणुसयोगस्तथा प्रदेशादिसयोगस्तु प्रायोऽन्यथेति युक्त एव तयोर्भेद, एव तर्हि परमाणुसयोगस्य सयुक्तकसयोगादभेदोऽस्तूभयोरपि एकस्कन्धताऽऽपन्नद्रव्यविपयत्वात्, अयमपि न दोप, यतो निष्पाद्यमानविपय इतरेतरसयोग, परिमण्डलादिसस्थितद्रव्यस्य तेनैव (वि)निष्पाद्यमानत्वात्, सयुक्तसयोगस्तु प्रायो निष्पन्नद्रव्यविपय, निष्पन्न हि मूलादिरूपेण वृक्षादिद्रव्य कन्दादिना युज्यते, इत्यस्त्यनयोर्विशेप इति गाथार्थ ॥ ६१ ॥ इत्थ सम्बन्धनसयोग स्वरूपत उक्त, सम्प्रति तस्यैव फलत प्ररूपणापूर्वक विप्रमुक्तस्येति प्रकृतसूत्रपद व्याख्यानयन् यथा ततो विप्रमुक्ता भवन्ति यच्च तेपा फल तदाह—

सबधणसजोगो ससाराओ अणुत्तरणवासो । त छित्तु विप्पमुक्का माइपिइसुआइ ये हवति ॥ ६२ ॥

व्याख्या—'सम्बन्धनसयोग' उक्तरूप, ससरन्त्यस्मिन् कर्मवशवर्तिजन्तव इति ससारस्तस्मात्, न विद्यते उत्तरण-पारगमनमस्मिन् सतीत्यनुत्तरण, स चासौ वासश्च—अवस्थानमनुत्तरणवास, अनुत्तरणवासहेतुत्वादायुर्घृतमित्यादि-वदनुत्तरणवास, अथवा 'अनुत्तरणवासो'त्ति आत्मन पारतन्त्र्यहेतुतया पाशवत् पाश, ततोऽनुत्तरणश्चासौ पाशश्च अनुत्तरणपाश, उभयत्र च सापेक्षत्वेऽपि गमकत्वात् समास, अनेन ससारावस्थिति पारवश्य वा सम्बन्धनसयो गस्यार्थत फलमुक्त, 'तम्' एवविध सम्बन्धनसयोगम्, अर्थादौदयिकभावविपय मात्रादिविपय च 'छित्त्वा' द्विधा

१ दीपा—माइ पुत्ता तओ तेण ।

विधाय निर्णाश्येतियावत्, किमित्याह—विप्रमुक्ताः, श्रुतत्वादनन्तरोक्तसम्बन्धनसंयोगादेव, के ते ?—'साधवः' अनगाराः, येनैवं तेन किमित्याह—मुक्ताः 'ततः' संसारात्, तद्धेतुकत्वात्तस्य, 'तेन' हेतुना, अनेन च गाथापश्चार्धेन सम्बन्धच्छेदनलक्षणेन प्रकारेण विप्रमुक्ता भवन्ति, तेषां च फलं मुक्तिरित्यर्थत उक्तं भवति। यच्च विप्रमुक्तस्येत्येकत्वप्रक्रमेऽपि विप्रमुक्ता इतीह बहुवचनं तदेवंविधभिक्षोः पूज्यत्वख्यापनार्थमिति गाथार्थः ॥ ६२ ॥ एवं 'संजोगे निक्खेवो' इत्यादिमूलगाथोपक्षिप्तसंयुक्तकसंयोगेतरेतरसंयोगभेदतो द्विविधं द्रव्यसंयोगं निरूप्य तत्र संयुक्तकसंयोगं सचित्तादिभेदतस्त्रिविधम् इतरेतरसंयोगं तु परमाणुप्रदेशाभिप्रेतानभिप्रेताभिलापसम्बन्धनविधानतः षड्विधमभिधाय सम्बन्धनसंयोग एव च साक्षात् कर्मसम्बन्धनिबन्धनतया संसारहेतुरिति तत्त्याज्यतां च सम्प्रति तत्प्रतिपादनत एवान्यदुक्तप्रायमिति मन्वानः क्षेत्रादिनिक्षेपमविशिष्टमतिदेष्टुमाह—

संबंधणसंजोगे खित्ताईणं विभास जा भणिया। खित्ताइसु संजोगो सो चेव विभासियव्वो अ(उ) ॥६३॥

व्याख्या—सम्बन्धनसंयोगे क्षेत्रादीनाम्, आदिशब्दात् कालभावपरिग्रहः, विविधा—आदेशानादेशादिभेदादनेकभेदा भाषा विभाषा, या इति प्रस्तुतपरामर्शः, 'भणिता' अभिहिता, 'क्षेत्रादिषु' क्षेत्रादिविषयः संयोगः प्रथमद्वारगाथासूचितः, स चैव विभाषितव्यः, 'तुः' पूरणे, संयोगत्वं चात्र विभाषाया वचनरूपत्वाद्वचनपर्यायाणां कथञ्चिद्वाच्याद्भेदख्यापनार्थमुक्तं, ततोऽयमर्थः—सम्बन्धनसंयोगविषयक्षेत्रादिविभाषायां यत्संयोगस्वरूपमुक्तम्, इहापि

तदेव वक्तव्य, चकारस्यानुक्तसमुच्चयार्थत्वात्, सयुक्तकसयोग सम्भवन्त इतरेतरसयोगशेषभेदाश्च वाच्या, तत्र क्षेत्रस्य सयुक्तकसयोगो यथा—जम्बूद्वीप स्वप्रदेशसयुक्तक एव लवणसमुद्रेण युज्यते, इतरेतरसयोग क्षेत्रप्रदेशानामेव परस्पर धर्मास्तिकायादिप्रदेशैर्वा सयोग, एव कालभावयोरपि नेयमिति गाथार्थ ॥ ६३ ॥ इह चोक्तनीत्या सम्बन्धनसयोग एव साक्षादुपयोगी, इतरेषा तु तदुपकारितया तेषामपि कथञ्चिद्वाच्यतया च शिष्यमतिव्युत्पादनाय चोपन्यास इति भावनीयम्। उक्त सयोग, तदभिधानाच्च व्याख्यात प्रथमसूत्रम्॥१॥सम्प्रति यदुक्त 'विनय प्रादुष्करिष्यामी'ति, तत्र विनयो धर्म, स च धर्मिण कथञ्चिदभिन्न इति धर्मिद्वारेण तत्स्वरूपमाह—

आणानिद्देसयरे, गुरुणमुववायकारए। इंगियागारसपन्ने, से विणीएत्ति वुच्चइ ॥ २ ॥ ( सूत्रम् )

व्याख्या—आङिति स्वस्वभावावस्थानात्मिकया मर्यादयाऽभिव्याप्त्या वा ज्ञायन्तेऽर्था अनयेत्याज्ञा—भगवदभिहितागमरूपा तस्या निर्देश—उत्सर्गापवादाभ्या प्रतिपादनमाज्ञानिर्देश, इदमित्थ विधेयमिदमित्थ वेत्येवमात्मक तत्करणशीलस्तदनुलोमानुष्ठानो वा आज्ञानिर्देशकर, यद्वाऽऽज्ञा—सौम्य! इद कुरु इद च मा कार्षीरिति गुरुवचनमेव, तस्या निर्देश—इदमित्थमेव करोमि इति निश्चयाभिधान तत्कर, आज्ञानिर्देशेन वा तरति भवाम्भोधिमित्याज्ञानिर्देशतर इत्यादयोऽनन्तगमपर्यायत्वाद्भगवद्वचनस्य व्याख्याभेदा सम्भवन्तोऽपि मन्दमतीना व्यामोहहेतुतया बालाबलादिबोधोत्पादनार्थत्वाच्चास्य प्रयासस्य न प्रतिसूत्र प्रदर्शयिष्यन्ते, तथा 'गुरूणा' गौरवार्हाणामा-

चार्यादीनामुप-समीपे पतनं-स्थानमुपपातः-दृग्वचनविषयदेशावस्थानं तत्कारकः-तदनुष्ठाता, न तु गुर्वादेशादिभीत्या तद्व्यवहितदेशस्थायीतियावत्, तथेङ्गितं-निपुणमतिगम्यं प्रवृत्तिनिवृत्तिसूचकमीषद्भ्रूशिरःकम्पादि आकारः-स्थूलधीसंवेद्यः प्रस्थानादिभावाभिव्यञ्जको दिगवलोकनादिः, आह च-"अवलोयणं दिसाणं वियंभणं साडयस्स संठवणं । आसणसिढिलीकरणं पट्ठियलिंगाइं एयाइं ॥ १ ॥" अनयोर्द्वन्द्वे इङ्गिताकारौ तौ अर्थाद्गुरुगतौ सम्यक् प्रकर्षेण जानाति इङ्गिताकारसम्प्रज्ञः, यद्वा-इङ्गिताकाराभ्यां गुरुगतभावपरिज्ञानमेव कारणे कार्योपचारादिङ्गिताकारशब्देनोक्तं, तेन सम्पन्नो-युक्तः, 'स' इत्युक्तविशेषणान्वितः 'विनीतः' विनयान्वितः, 'इति' सूत्रपरामर्शे, उच्यते, तीर्थकृद्गणधरादिभिरिति गम्यते, अनेन च स्वमनीषिकाऽपोहमाह इति सूत्रार्थः ॥ २ ॥ इह विनयोऽभिधित्सितः, स च विपर्ययाभिधान एव तद्विविक्ततया सुखेन ज्ञातुं शक्यत इत्यविनयं धर्मिद्वारेणाह—

आणाऽनिद्देसकरे, गुरुणमणुववायकारए । पडिणीए असंबुद्धे, अविणीएत्ति वुच्चइ ॥ ३ ॥ (सूत्रम्)

व्याख्या—पादद्वयं प्राग्वत्, नवरं नञ्योजनाद्व्यतिरेकतो व्याख्येयं, 'प्रत्यनीकः' प्रतिकूलवर्ती शिलाऽऽक्षेपककूलवालकश्रमणवत्, दोषानीकं प्रति वर्तत इति प्रत्यनीकः, किमित्येवंविधोऽसावित्याह-'असम्बुद्धः' अनव-

१ अवलोकनं दिशां विजृम्भणं शाटकस्य संस्थापनम् । आसनशिथिली ( श्लथी )करणं प्रस्थितलिङ्गान्येतानि ॥ १ ॥

गततत्त्व , 'अविनीत ' अविनयवान् 'इत्युच्यते' इति पूर्ववदिति सूत्रार्थ ॥ ३ ॥ साम्प्रत दृष्टान्तपूर्वकमिहैवास्य सदोषतामाह—

जहा सुणी पुईकण्णी, णिक्कसिज्जइ सव्वसो। एव दुस्सीलपडिणीए, मुहरि निक्कसिज्जइ ॥४॥ (सूत्रम्)

व्याख्या—'यथा' इत्युपदर्शने, श्वसितीति शुनी, स्त्रीनिर्देशोऽत्यन्तकुत्सोपदर्शक , पूती–परिपाकत कुथितगन्धौ कृमिकुलाकुलत्वाद्युपलक्षणमेतत्, तथाविधौ कर्णौ–श्रुती यस्या पक्करक्त वा पूतिस्तद्वासौ कर्णौ यस्या सा पूतिकर्णी, सकलावयवकुत्सोपलक्षण चैतत्, सा चेदृशी शुनी किमित्याह–'निष्काश्यते' निर्वास्यते बहिर्निं सार्यत इतियावत्, कुत ?–'सव्वसो' त्ति सर्वत सर्वेभ्यो गोपुरगृहाङ्गणादिभ्य सर्वान् वा हतहतेत्यादिविरूक्षवचनलतालकुटलेष्टुघातादिकान् प्रकारानाश्रित्य 'छन्दोवत् सूत्राणि भवन्ती'ति छान्दसत्वाच्च सूत्रे शस्प्रत्यय । उपनयमाह–'एवम्' अनेनैव प्रकारेण, दुष्टमिति–रागद्वेषादिदोषविकृत शील–स्वभाव समाधिराचारो वा यस्यासौ दु शील , प्रत्यनीक प्राग्वत्, मुखेनारिमावहति मुखमेव वेहपरलोकापकारितयाऽरिरस्य मुधैव वा कार्य विनैवारयो यस्यासौ मुखारिर्मुधारिर्वा–चतुर्विधासम्बद्धभाषी, सूत्रत्वाद्वा 'मुहरि' त्ति मुखरो–वाचाटो निष्काश्यते 'सर्वत ' इतीहापि योज्यते, ततश्च सर्वतो निष्काश्यते, सर्वथा कुलगणसङ्घसमवायबहिर्वर्ती विधीयत इति सूत्रार्थ ॥ ४ ॥

आह—दौःशील्यनिमित्त एवायमविनीतस्य दोषः, प्रत्यनीकतामुखरत्वयोरपि तत्प्रभवत्वात् तत्र चैवमनर्थहेतौ किमसौ प्रवर्तत इति, अत्रोच्यते, पापोपहतमतित्वेन तत्रैवास्याभिरतिरितिकृत्वा, तामेव दृष्टान्तपूर्विकामाह—

**कणकुंडगं जहित्ता णं, विट्ठं भुंजइ सूयरो । एवं सीलं जहित्ता णं, दुस्सिले रमइ मिए ॥५॥ (सूत्रम्)**

व्याख्या—कणाः—तन्दुलास्तेषां तन्मिश्रो वा कुण्डकः—तत्क्षोदनोत्पन्नकुक्कुसः कणकुण्डकस्तं 'हित्वा' पाठान्ततरस्त्यक्त्वा वा 'विष्ठां' पुरीषं 'भुङ्क्ते' अभ्यवहरति 'सूकर' इति गर्तासूकरो, यथेति गम्यते, एवं 'शीलम्' उक्तरूपं प्रस्तावाच्छोभनं 'हित्वा' प्राग्वत्त्यक्त्वा वा दुष्टं शीलं दुःशीलं तस्मिन् भावप्रधानत्वाद्वा निर्देशस्य दुष्टं शीलमस्येति दुःशीलस्तद्भावो दौःशील्यं तस्मिन्, उभयत्र दुराचारादौ 'रमते' धृतिमाधत्ते मृग इव मृगः अज्ञत्वादविनीत इति प्रक्रमः, इदमत्र हृदयं—यथा मृग उद्गीर्णासिपुत्रिकगौरिगायनपुरुषहेतुकमायतौ मृत्युरूपमपायमपश्यन्नज्ञः, एवमयमपि दौःशील्यहेतुकमागामिनं भवभ्रमणलक्षणमपायमनालोकयन्नज्ञ एव सन् गर्तासूकरोपमः सदा पुष्टिदायिकणकुण्डकसदृशं शीलमपहाय विवेकिजनगर्हिततया विष्ठोपमे दुःशीले दौःशील्ये वा रमते, इह च दृष्टान्तेऽपि विड्भुक्त्यभिरतिरेवार्थत उक्ता, तदविनाभावित्वात्तस्याः, यद्वा शुभपरिहारेणाशुभाश्रयणमुभयत्रापि सादृश्यनिमित्तमस्तीति नोपमानोपमेयभावविरोध इति सूत्रार्थः ॥ ५ ॥ उक्तोपसंहारपूर्वकं कृत्योपदेशमाह—

सुणियाभाव साणस्स, सूयरस्स नरस्स य । विणए ठविज्ज अप्पाण, इच्छतो हियमप्पणो ॥६॥ (सूत्रम्)

व्याख्या—'श्रुत्वा' आकर्ण्य 'अभाव' नञ कुत्सायामपि दर्शनादशोभन भाव–सर्वतो निष्काशनलक्षण पर्याय 'साणस्स' त्ति प्राकृतत्वादिवेत्यस्य गम्यमानत्वात् शून्या इव 'सूकरस्स' उक्तन्यायेन शूकरोपमस्य नरस्य, 'च' पूरणे, यद्वा शून्या शूकरस्य च दृष्टान्तस्य नरस्य च दार्ष्टान्तिकस्याशोभन भाव त्रयाणामप्युक्तरूप श्रुत्वा, किमित्याह–'विनये' वक्ष्यमाणस्वरूपे, स्थापयेदात्मानम्, आत्मनैवेति गम्यते, 'इच्छन्' वाञ्छन् 'हितम्' ऐहिकमामुष्मिक च पथ्यम् 'आत्मन' स्वस्य, इह च पुनर्दृष्टान्ताभिधानमुपसहारत्वेनाविनये शिष्यस्याशुभभावस्योत्पादनार्थत्वेन वा नाप्रकृतमिति सूत्रार्थ ॥ ६ ॥ यतश्चैव तत किमित्याह—

तम्हा विणयमेसिज्जा, सील पडिलभे जओ । बुद्धउत्ते नियागट्ठी, न निक्कसिज्जइ कण्हुइ ॥७॥ (सूत्रम्)

व्याख्या—'तस्माद्' इति यस्मादविनयदोपदर्शनादात्मा विनये स्थापनीयस्तस्मात् विनयम् 'एषयेत्' अनेकार्थत्वेन धातूना पर्यवसितवृत्त्या वा कुर्यात्, एव ह्यात्मा विनये स्थाप्यत इति, किं पुनरस्य विनयस्य फल ? येनैवमत्रात्मनोऽनस्थापनमुद्दिश्यत इत्याशङ्क्याह—'शीलम्' उक्तरूप 'प्रतिलभेत' प्राप्नुयात् 'यत' इति विनयात्, अनेन विनयस्य शीलावाप्ति फलमुक्तम्, अस्यापि किं फलमित्याह–बुद्धै –अवगततत्त्वैस्तीर्थकरादिभिरुक्तम्–अभिहित,

तच्च तन्निजमेव निजकं च—ज्ञानादि तस्यैव बुद्धैरात्मीयत्वेन तत्त्वत उक्तत्वात्, बुद्धोक्तनिजकं, तदर्थयते—अभिलषतीत्येवंशीलः बुद्धोक्तनिजकार्थी सन्, पठन्ति च—'बुद्धवुत्ते णियागट्ठि त्ति' बुद्धैः—उक्तरूपैर्युक्तो—विशेपेणाभिहितः, स च द्वादशाङ्गरूप आगमस्तस्मिन् स्थित इति गम्यते, यद्वा बुद्धानाम्—आचार्यादीनां पुत्र इव पुत्रो बुद्धपुत्रः, 'पुत्ता य सीसा य समं विहित्ता' इति वचनात्, स्वरूपविशेषणमेतत्, नितरां यजनं यागः—पूजा यस्मिन् सोऽयं नियागो—मोक्षः, तत्रैव नितरां पूजासम्भवात्, तदर्थी सन्, किमित्याह—'न निष्काश्यते' न बहिष्क्रियते, कुतश्चिद् गच्छगणादेः, किन्तु विनीतत्वेन सर्वगुणाधारतया सर्वत्र मुख्य एव क्रियते इति भावः, इति सूत्रार्थः ॥ ७ ॥

कथं पुनर्विनय एपयितव्य इत्याह—

णिसंते सिया अमुहरि, बुद्धाणमंतिए सया। अट्ठजुत्ताणि सिक्खिज्जा, निरट्ठाणि उ वज्जए ॥८॥ (सूत्रम्)

व्याख्या—नितराम्—अतिशयेन शान्तः—उपशमवान् अन्तः क्रोधपरिहारेण बहिश्च प्रशान्ताकारतया निःशान्तः 'स्याद्' भवेत्, तथा 'अमुखारिः' प्राग्वत् अमुखरो वा सन् 'बुद्धानाम्' आचार्यादीनाम् 'अन्तिके' समीपे, न तु विनयभीत्याऽन्यथैव 'सदा' सर्वकालमर्यते—गम्यत इति अर्थः, अर्तेरौणादिकस्थन् (उपिकुषिगाऽर्तिभ्यस्थन् उ० २–४) स च हेय उपादेयश्चोभयस्याप्यर्यमाणत्वात्, तेन युक्तानि—अन्वितानि अर्थयुक्तानि, तानि च हेयोपादे-

१ पुत्रांश्च शिष्यांश्च समं विभज्य (विधाय).

याभिधायकानि, अर्थादागमवचांसि, यद्वा—मुमुक्षुभिरर्थ्यमानत्वादर्थो—मोक्षस्तत्र युक्तानि—उपायतया सङ्गतानि अर्थं वा—अभिधेयमाश्रित्य युक्तानि—यतिजनोचितानि 'शिक्षेत' अभ्यसेत्, अपश्चितविनेयानुग्रहाय व्यतिरेकत आह—'निरर्थकानि' उक्तविपरीतानि डित्थडवित्थादीनि, यद्वा वैद्यिकवात्स्यायनादीनि स्त्रीकथादीनि वा 'तु' पुनरथ 'वर्जयेत्' परिहरेत्, इह च निशान्त इत्यनेन प्रशमादीनामुपलक्षितत्वात् तेषां च दर्शनाविनाभावित्वाद् दर्शनस्य च जिनोक्तभावश्रद्धानरूपत्वात् तस्यैव दर्शननियत्वात् अर्थतो दर्शनविनयो दर्शित, उक्तं हि प्राक्—"दव्वाण सव्वभावा उवइट्ठा जे जहा जिणिंदेहिं। तं तह सद्दहइ णरो दसणविणओ हवति तम्हा ॥ १ ॥" शेषेण तु श्रुतज्ञानशिक्षाऽभिधायिना ज्ञानदर्शन(ज्ञान)विनय उक्त, तत्स्वरूपमाह—"णाण सिक्खइ णाण गुणेइ णाणेण" त्ति सूत्रार्थ ॥ ८ ॥ कथं पुनरर्थयुक्तानि शिक्षेतेत्याह—

अणुसासिओ न कुप्पिज्जा, खंतिं सेवेज्ज पंडिए। खुड्डेहिं सह संसग्गिं, हासं कीडं च वज्जए ॥९॥ (सूत्रम्)

व्याख्या—'अनुशिष्ट' इति अर्थयुक्तानि शिक्ष्यमाण कथञ्चित् स्खलितादिषु गुरुभि परुषोक्त्याऽपि शिक्षित 'न कुप्येत्' न कोपं गच्छेत्, किं तर्हि कुर्यादित्याह—'क्षान्तिं' परुषभाषणादिसहनात्मिकां 'सेवेत' भजेत, पण्डा—बुद्धि सा सञ्जाताऽस्येति पण्डित, तथा 'क्षुद्रै' बालै शीलहीनैर्वा पार्श्वस्थादिभि 'सह' समं 'संसर्गिं' ति प्राकृ-

१ विनयपाठस्थानसरे टीकायां निर्युक्ते गाथे क्रमेण सप्तमी अष्टमी च। २ गुरुभिरिति टीका ३ पण्डा तत्त्वानुगा बुद्धिरित्युक्ते

तत्वात्संसर्गं, हसनं हासस्तं, क्रीडां च अन्ताक्षरिकाप्रहेलिकादानादिजनितां च 'वर्जयेत्' परिहरेत् सर्वेषामप्येषां विशिष्टशिक्षाक्षितिहेतुत्वात् लोकागमविरुद्धत्वाच्चेति सूत्रार्थः ॥ ९ ॥ पुनरन्यथा विनयमाह—

मा य चंडालियं कासी, बहुयं मा य आलवे। कालेण य अहिज्जित्ता, तत्तो झाइज्ज इक्कओ ॥१०॥ (सूत्रम्)

व्याख्या—'मा' निषेधे 'चः' समुच्चये, चण्डः—क्रोधस्तद्वशादलीकम्—अनृतभाषणं चण्डालीकं, भयालीकाद्युपलक्षणमेतत्, यद्वा—चण्डेनाऽऽलमस्य चण्डेन वा कलितश्चण्डालः, स चातिक्रूरत्वाच्चण्डालजातिस्तस्मिन् भवं चाण्डालिकं कर्मेति गम्यते, अथवा अचण्ड! सौम्य! अलीकम्—अन्यथात्वविधानादिभिरसत्यं, गुरुवचनमागमं चेति गम्यते, 'मा कार्षीः' मा विधाः, भगवदुद्दिष्टतिलोत्पाटकस्वेच्छालापिगोशालकवत्, बह्वेव बहुकम्—अपरिमित मालजालरूपं 'मा च' इति प्राग्वत्, आङिति—रुयादिकथाऽभिव्याप्त्या लपेत्—भाषेत, बह्वालापनात् ध्यानाध्ययनक्षितिवातक्षोभादिसम्भवात्, किं पुनः कुर्यादित्याह—कालः अध्ययनाद्यवसरः प्रथमपौरुष्यादिस्तेन, 'चः' पुनरर्थे, 'अधीत्य' पठित्वा, प्रच्छनाद्युपलक्षणमेतत्, 'ततः' अध्ययनात्, अनन्तरमिति गम्यते, 'ध्यायेत्' चिन्तयेत्, 'एकक' इति भावतो रागद्वेषादिसाहित्यरहितः, द्रव्यतस्तु विविक्तशय्यादिसंस्थः, इत्थं हि चाण्डालिककरणाद्यनुत्थानमधीतार्थस्थिरीकरणं च कृतं भवतीति भावः। इह च पादत्रयेण साक्षाद्वाग्गुप्तिरुक्ता, ध्यायेदित्यनेन मनोगुप्तिः,

आद्यपादोत्तरव्याख्यानद्वयेन तु कायगुप्तिरपि, एताश्च चारित्रान्तर्गता एव, यदुक्तम्–"पणिहाणजोगजुत्तो पचहि समितीहि तिहिं गुत्तीहि । एस चरित्तायारो अट्ठविहो होइ णायव्वो ॥ १ ॥" न च चारित्राचारस्तत्त्वतश्चरित्रविनयादतिरिच्यते इति देशतस्तस्याप्यनेनाभिधानमिति सूत्रार्थ ॥ १० ॥ इत्थमकृत्यनिषेध कृत्यविधिश्चोपदिष्ट, कदाचिदेतद्विपर्ययसम्भवे च किं करणीयमित्याह—

आहच्च चडालिय कट्टु, न निण्हविज्ज कण्हुइ। कड कडति भासिज्जा, अकड नो कडति य॥११॥ (सूत्रम्)

व्याख्या—'आहत्य' कदाचित् चण्डालीक च चाण्डालिक चोक्तरूप यद्वा चण्डश्चालीक च चण्डालीक 'कृत्वा' विधाय 'न निन्हुवीत' न कृतमेवेति नापलपेत्, कदाचिदपि, यदा परैरुपलक्षितो यदा वा नोपलक्षितस्तदापीत्यर्थ, किं तर्हि कुर्यादित्याह–'कृत' विहित चाण्डालिकादि 'कृतमिति' इति कृतमेव, न भयलज्जादिभिरकृतमपि 'भाषेत' ब्रूयात्, 'अकृत' तदेवाविहित 'नो कृतमिति' अकृतमेव भाषेत, न तु मायोपरोधादिना कृतमपि, अन्यथा मृषावादादिदोषसम्भवात्, उपलक्षणत्वाच्चास्य बहुनालपनकालाध्ययनादिविपर्ययसम्भवेऽप्येतदेव कृत्यम्, इद चात्राकूत–कथञ्चिदतिचारसम्भवे लज्जाद्यकुर्वन् स्वय गुरुसमीपमागत्य–'जह बालो जपतो कज्जम-

१ प्रणिधानयोगयुक्त पञ्चभि समितिभिस्तिसृभिर्गुप्तिभि । एष चारित्राचारोऽष्टविधो भवति ज्ञातव्य ॥ १ ॥ २ यथा बालो जल्पन् कार्यमकार्यं च ऋजुक भणति । तत् तथाऽऽलोचयेत् मायामदविप्रमुक्तस्तु ॥ १ ॥

कज्जं च उज्जुयं भणति । तं तह आलोएज्जा मायामयविप्पमुक्को उ ॥ १ ॥' इत्याद्यागममनुसमरन् कथञ्चित् परैः प्रतीतमप्रतीतं वा मनःशल्यं यथावदालोचयेत्, ततश्चानेनान्तरतपोऽन्तर्गताऽऽलोचनाख्यप्रायश्चित्तभेदाभिधानम्, अनेन च शेषतपोभेदानामप्युपलक्षितत्वात् तपोविनयमाह इति सूत्रार्थः ॥ ११ ॥ इहैवं पुनः पुनरुपदेशश्रवणाद् यदेव गुरोरुपदेशस्तदैव प्रवर्तितव्यं निवर्तयितव्यं चेति स्यादाशङ्का, तदपनोदायाह—

मा गलियस्सेव कसं, वयणमिच्छे पुणो पुणो । कसं व दट्ठुमाइन्ने, पावगं परिवज्जए ॥१२॥ (सूत्रम्)

व्याख्या—'मा' निषेधे, गलिः—अविनीतः, स चासावश्वश्च गल्यश्वः स इव, कशतीति कशस्तम्, उपलक्षणत्वात् कशप्रहारं, 'वचनं' प्रवृत्तिनिवृत्तिविषयमुपदेशं, प्रस्तावाद्गुरूणाम्, 'इच्छेत्' अभिलषेत्, 'पुनः पुनः' वारं वारं, कोऽभिप्रायः ?—यथा गल्यश्वो दुर्विनीततया न पुनः पुनः कशप्रहारं विना प्रवर्तते निवर्त्तते वा, नैवं भवताऽपि प्रवृत्तिनिवृत्त्योः पुनः पुनर्गुरुवचनमपेक्षणीयं, किन्तु 'कसं व दट्ठुमाइण्णे'त्ति इवशब्दस्य भिन्नक्रमत्वात् कशं—चर्मयष्टिं दृष्ट्वाऽऽकीर्णो—विनीतः, स चेह प्रस्तावादश्वः स इव, सूचकत्वात् सूत्रस्य, सुशिष्यो गुरोराकारादि दृष्ट्वा, पापमेव पापकं, गम्यमानत्वादनुष्ठानं 'परिवर्जयेत्' सर्वप्रकारं परिहरेत्, उपलक्षणत्वादितरच्चानुतिष्ठेत्, पठन्ति च—'पावगं पडिवज्जइ' त्ति तत्र च पुनातीति पावकं—शुभमनुष्ठानं 'प्रतिपद्येत' अङ्गीकुर्यात्, इहापि प्राग्वदितरत् परिहरेत्, किमुक्तं भवति ?—यथाऽऽकीर्णोऽश्वः कशग्रहणादिनाऽऽरोहकाभिप्रायमुपलभ्य कशेनाताडित एव तदभिप्रायानुरूपं

प्रवर्तते निवर्तते वा, तथा सुशिष्येणा(ष्योऽ)प्याकारादिभिराचार्याशयमवगम्य, वचनेनाप्रेरित एव प्रवर्तते, मा भूदन्यथाऽऽरोहकस्येव गुरोरायास इति सूत्रार्थं ॥ १२ ॥ अत्र च निर्युक्तिकृत् गल्याकीर्णौ व्याचिख्यासु 'तत्त्वभेदपर्यायैर्व्याख्या' इति तत्पर्यायानाह—

गडी गली मराली अस्से गोणे य हुति एगट्ठा । आइन्ने य विणीए य भद्दए वावि एगट्ठा ॥ ६४ ॥

व्याख्या—गच्छति प्रेरित प्रतिपथादिना डीयते च कूर्दमानो विहायोगमनेनेति गण्डि, गिलत्येव केवल न तु वहति गच्छति वेति गलि, म्रियत इव शकटादौ योजितो राति च–ददाति लत्तादि लीयते च भुवि पतनेनेति मरालि, अमी च 'अश्वे' तुरगे 'गोणे च' बलीवर्दे भवन्ति 'एकार्था' एकोऽर्थो–दुष्टतालक्षण अनन्तरोक्तनीत्या प्रवृत्तिनिमित्तभेदेऽप्यमीषामिति कृत्वा । 'आकीर्यते' व्याप्यते विनयादिभिर्गुणैरिति आकीर्ण 'च' पूरणे, विशेषेण नीत–प्रापित प्रेरकचित्तानुवर्तनादिभि श्लाघादीति विनीत, भाति–शोभते स्वगुणैर्ददाति च प्रेरयितुश्चित्तनिर्वृतिमिति भद्र स एव भद्रक, चशब्द इहाप्यश्वे गोणे चेति विषयानुवृत्त्यर्थं, अपिशब्द इह पूर्वत्र चानुक्तपर्यायान्तरसमुच्चयार्थ, 'एकार्था' इति प्राग्वदिति गाथार्थ ॥ ६४ ॥ न चैव गल्याकीर्णतुल्यशिष्ययोर्गुरोरायासजननाजनने एव गुणदोषौ, किन्तु गलिसदृशस्यानाश्रवत्वादेराकीर्णतुल्यस्य चित्तानुगतत्वादे सम्भव इति तद्वशत कोपनप्रसादने अपि, अत एवाह—

अणासवा थूलवया कुसीला मिउंपि चंडं पकरंति सीसा।
चित्ताणुया लहु दक्खोववेया पसायए ते हु दुरासयंपि ॥ १३ ॥ (सूत्रम्)

व्याख्या—'अणासव' त्ति आ–समन्तात् शृण्वन्ति–गुरुवचनमाकर्णयन्तीत्याश्रवा न तथा प्रतिभासाविपयस्य तस्याश्रवणादनाश्रवाः, पठ्यते च–'अणासुण' त्ति अस्यार्थः स एव, स्थूलम्–अनिपुणं यतस्ततो भापितया वचो येपां ते स्थूलवचसः 'कुशीला' इति दुःशीलाः, 'मृदुमपि' अकोपनमपि कोमलालापिनमपि वा 'चण्डं' कोपनं परुपभापिणं वा 'प्रकुर्वन्ति' प्रकर्पेण विदधति 'शिष्याः' विनेयाः, सम्भवति ह्येवंविधशिष्यानुशासनाय पुनः पुनर्वचनात्मकं खेदमनुभवतो मृदोरपि गुरोः कोप इति। इत्थं गलितुल्यस्य दोपमभिधायेतरस्य गुणमाह—चित्तं–हृदयं प्रक्रमात् प्रेरकस्यानुगच्छन्ति–कसपातानपेक्ष्य जात्याश्ववदनुवर्तयन्तीति चित्तानुगाः 'लघु' शीघ्रमेव दक्षस्य भावो दाक्ष्यम्–अविलम्बितकारित्वं तेन 'उववेय' त्ति उपपेता–युक्ता दाक्ष्योपपेताः 'प्रसादयेयुः' सप्रसादं कुर्युः 'ते' इति शिष्याः, 'हुः' पुनरर्थः, दुःखेनाऽऽश्रयन्ति तमतिकोपनत्वादिभिरिति दुराश्रयस्तमपि, प्रक्रमाद्गुरुं, किं पुनरनुत्कटकपायमित्यपिशब्दार्थः। अत्रोदाहरणं चण्डरुद्राचार्यशिष्यः, तत्र च सम्प्रदायः—अवंतीजणवए उज्जेणीणयरीए ण्हवणुज्जाणे

१ अवन्तीजनपदे उज्जयिनीनगर्यां स्नपनोद्याने साधवः समवसृताः, तेपां सकाशे एको युवा उदात्तवेपो वयस्यसहित उपागतः, स तान्

साहुणो समोसरिया, तेसिं सगास एगो जुवा उद्त्तवेसो वयससहिओ उवागतो, सो ते वदिऊंण भणति—भयव! अम्हे ससाराउ उत्तारेह, पव्वयामित्ति, एस एमेव पवचेतित्ति काऊण 'घृष्यता कलिना कलिरि'ति चडरुद्द आयरिय उवदिसति, एस ते नित्थारेहित्ति, सोऽवि य सभावेण फरसो, तओ सो वदिऊण भणइ–भगव! पव्वावेह (हि)ममति, तेण भणितो–छार आणेहत्ति, आणिए लोय काऊण पव्वाविओ, वयसगा से अद्धीइ काऊण पडिगया, तेऽवि उवस्सय नियग गया, विलंबिए सूरे पथ पडिलेहेइ, पर पचूसे वचामित्ति विसज्जिओ, पडिलेहिउमागओ, पचूसे निग्गया, पुरतो वचति(त्ति) भणितो, वचतो पथातो फिडितो चडरुद्दो खाणुए पक्खलितो, रुसिएण हा दुट्ठसेहत्ति दडएण मत्थए आहतो, सिर फोडित, तहावि सम्म सहइ, विमले पहाए चडरुद्देण रुहिरोग्गलतमुद्धाणो

१ वन्दित्वा भणति–भगवन्त ! मा ससारादुत्तारयत, प्रव्रजामीति, एप एवमेव प्रवञ्चयते इतिकृत्वा चण्डरुद्रमाचार्यमुपदिशन्ति(उपदर्शयन्ति), एप त्वा निस्तारयिष्यति, सोऽपि च स्वभावेन परुप, तव स वन्दित्वा भणति–भगवन् ! प्रव्राजय मामिति, तेन भणित –क्षार ( भस्म ) आनयेति, आनीते लोच कृत्वा प्रव्राजित, वयस्यकास्तस्याधृतिं कृत्वा प्रतिगता, तेऽपि उपाश्रय निज गता, विलम्बिते ( किञ्चिच्छेपे) सूर्ये पन्थान प्रतिलेखय(स्वे)ति, पर प्रत्युपसि प्रजाव इति विसृष्ट, प्रतिलिख्यागत, प्रत्युपसि निर्गतौ, पुरतो व्रजेति भणित, व्रजन् पथ स्फिटित श्चण्डरुद्र स्थाणौ प्रस्खलित, रुष्टेन हा दुष्टशैक्ष ! इति दण्डेन मस्तके आहत, शिर स्फोटित, तथाऽपि सम्यक् सहते, विमले प्रभाते चण्डरुद्रेण गलद्रुधिरमूर्धा दृष्ट, हा दुष्ट कृतमिति सवेगमापन्नेन क्षमित ।

दिस्समागयं । पडिरूवं पडिवत्तिं, सम्मं संपडिवज्जई ॥ १६ ॥ पलालं फासुअं तत्थ, पंचमं कुसंतणाणि य । गोयमस्स निसिज्जाए, खिप्पं संपणामए ॥ १७ ॥

'अथे' त्यनन्तरं 'ते' इति तौ प्रक्रान्तौ 'तत्रे'ति श्रावस्त्यां प्रकर्षेण वितर्कितं–विकल्पितं प्रवितर्कितं 'समागमे' मीलके 'कृतमती' विहिताभिप्रायावभूतामिति शेषः, 'केसिगोयमे'त्ति केशिगौतमौ, ततश्च 'पडिरूवन्नु'त्ति प्रतिरूपविनयो–यथोचितप्रतिपत्तिरूपस्तं जानातीति प्रतिरूपज्ञः 'ज्येष्ठं' प्रथमभावितया 'कुलं' पार्श्वनाथसन्तानम् 'अपेक्षमाणः' विगणयन् 'प्रतिरूपाम्' उचितां 'प्रतिपत्तिम्' अभ्यागतकर्त्तव्यरूपां 'सम्यग्' अवैपरीत्येन समिति–सांमुख्येन प्रतिपद्यते–अङ्गीकरोति संप्रतिपद्यते । प्रतिपत्तिमेवाह–'पलालं' प्रतीतं 'प्रासुकं' विगतजीवं 'तत्रे'ति तस्मिंस्तिन्दुकोद्याने 'पंचमं'ति वचनव्यत्ययात् 'पञ्चमानि' पञ्चसङ्ख्यापूरणानि, कानीत्याह–कुशतृणानि, चशब्दादन्यान्यपि साधुयोग्यतृणानि, पञ्चमत्वं चैषां पलालभेदापेक्षया, तस्य हि शाल्यादिसम्बन्धिभेदापेक्षया चत्वारो भेदाः, यत उक्तम्–"तिणपणगं पुण भणियं, जिणेहिं कम्मट्ठगंठिमहणेहिं । साली वीही कोद्दवरालगरण्णे तिणाइं च ॥ १ ॥" गौतमस्य 'निपद्यायै' निपद्यानिमित्तमुपवेशनार्थमित्यर्थः, 'संपणामए'ति समर्पयति, शेषं सूत्रसिद्धमेवेति सूत्रचतुष्टयार्थः ॥ तौ च तत्रोपविष्टौ यथा प्रतिभातस्तथाऽऽह–

१ तृणपञ्चकं पुनर्भणितं जिनैः कर्माष्टकग्रन्थिमथनैः । शालीः व्रीहिः कोद्रवो रालकः अरण्यतृणानि च ॥ १ ॥

यस्मिन्नसौ पञ्चशिक्षित , तारकादेराकृतिगणत्वादितच् , यद्वा पञ्च शिक्षितानि—उक्तशिक्षारूपाणि यस्मिन्नसौ पञ्चशिक्षितो वर्द्धमानेन देशित इति योग , 'महामुणि'त्ति सुब्व्यत्ययान्महामुनिनेत्युभयोरपि विशेषण महामुनीना वा, अनयोर्विशेषे किं नु कारणमित्युत्तरेण सम्बन्ध , अनेन धर्मविषय सशयो व्यक्तीकृत । सम्प्रत्याचारधर्मप्रणिधिविषय तमेवाभिव्यनक्ति—'अचेलकश्च' उक्तन्यायेनाविद्यमानचेलक कुत्सितचेलको वा यो धर्मो वर्धमानेन देशित इत्यपेक्ष्यते, तथा 'जो इमो'त्ति पूर्ववद् यश्चाय सान्तराणि—वर्द्धमानस्वामिसत्कयतिवस्त्रापेक्षया कस्यचित्कदाचिन्मानवर्णविशेषतो विशेषितानि उत्तराणि च—महाधनमूल्यतया प्रधानानि प्रक्रमाद्वस्त्राणि यस्मिन्नसौ सान्तरोत्तरो धर्म पार्श्वेन देशित इतीहापेक्ष्यते, एक कार्य—मुक्तिलक्षणं फलं तदर्थं प्रपन्नो—प्रवृत्तावेककार्यप्रपन्नो तयो प्रक्रमात्पार्श्ववर्द्धमानयो , उभावपि हि मुक्त्यर्थमेव प्रवृत्तावितिकृत्वा, 'विशेषे' उक्तरूपे 'किमि'ति सशये 'नु' वितर्के 'कारण' हेतु ?, कारणभेदेन हि कार्यभेदसम्भव इति भाव , शेष स्पष्टमिति सूत्रपञ्चकार्थ ॥ एव च विनेयचिन्तोत्पत्तौ यत्केशिगौतमायकार्षां तदाह—

अह ते तत्थ सीसाण, विण्णाय पवियक्किय । समागमे कयमई, उभओ केसिगोयमा ॥ १४ ॥ गोअमो पडिरूवन्नू, सीससघसमाउले । जिट्ठ कुलमविक्खतो, तिंदुय वणमागओ ॥१५॥ केसी कुमारसमणे, गोअम

दिसमागयं । पडिरूवं पडिवत्तिं, सम्मं संपडिवज्जई ॥ १६ ॥ पलालं फासुअं तत्थ, पंचमं कुसतणाणि य । गोयमस्स निसिज्जाए, खिप्पं संपणामए ॥ १७ ॥

'अथे' त्यनन्तरं 'ते' इति तौ प्रक्रान्तौ 'तत्रे'ति श्रावस्त्यां प्रकर्षेण वितर्कितं–विकल्पितं प्रवितर्कितं 'समागमे' मीलके 'कृतमती' विहिताभिप्रायावभूतामिति शेषः, 'केसिगोयमे'त्ति केशिगौतमौ, ततश्च 'पडिरूवन्नु'त्ति प्रतिरूपविनयो–यथोचितप्रतिपत्तिरूपस्तं जानातीति प्रतिरूपज्ञः 'ज्येष्ठं' प्रथमभावितया 'कुलं' पार्श्वनाथसन्तानम् 'अपेक्षमाणः' विगणयन् 'प्रतिरूपाम्' उचितां 'प्रतिपत्तिम्' अभ्यागतकर्त्तव्यरूपां 'सम्यग्' अवैपरीत्येन समिति–सांमुख्येन प्रतिपद्यते–अङ्गीकरोति संप्रतिपद्यते । प्रतिपत्तिमेवाह–'पलालं' प्रतीतं 'प्रासुकं' विगतजीवं 'तत्रे'ति तस्मिंस्तिन्दुकोद्याने 'पंचमं'ति वचनव्यत्ययात् 'पञ्चमानि' पञ्चसङ्ख्यापूरणानि, कानीत्याह–कुशतृणानि, चशब्दादन्यान्यपि साधुयोग्यतृणानि, पञ्चमत्वं चैषां पलालभेदापेक्षया, तस्य हि शाल्यादिसम्बन्धिभेदापेक्षया चत्वारो भेदाः, यत उक्तम्–"तिणपणगं पुण भणियं, जिणेहिं कम्मट्ठगंठिमहणेहिं । साली वीही कोद्दवरालगरण्णे तिणाइं च ॥ १ ॥" गौतमस्य 'निषद्यायै' निषद्यानिमित्तमुपवेशनार्थमित्यर्थः, 'संपणामए'त्ति समर्पयति, शेषं सूत्रसिद्धमेवेति सूत्रचतुष्टयार्थः ॥ तौ च तत्रोपविष्टौ यथा प्रतिभातस्तथाऽऽह–

१ तृणपञ्चकं पुनर्भणितं जिनैः कर्माष्टकग्रन्थिमथनैः । शालीः व्रीहिः कोद्रवो रालकः अरण्यतृणानि च ॥ १ ॥

तिपत्त्यक्षमतया वक्रजडा 'च' समुच्चये 'पश्चिमा' पश्चिमतीर्थकृद्यतय 'मध्यमास्तु' मध्यमतीर्थकृत्सम्बन्धितपस्विन, 'ऋजुप्रज्ञा' ऋजवश्च ते प्रकर्षेण जानन्तीति प्रज्ञाश्च सुखेनैव विवक्षितमर्थं ग्राहयितु शक्यन्त इति ऋजुप्रज्ञा, तेन हेतुना धर्मो द्विभेद 'कृत' विहित, एककार्यप्रतिपन्नत्वेऽपीति प्रक्रम । यदि नाम पूर्वादीनामेवविधत्व तथाऽपि कथमेतद् द्वैविध्यमित्याह–'पुरिमाण'ति पूर्वेषा दु खेन विशोध्यो विशोधयितु–निर्मलता नेतु शक्यो दुर्विशोध्य, कल्प इति सबध्यते, ते ह्यतिऋजुतया गुरुभिरनुशिष्यमाणा अपि न तदनुशासन स्वप्रज्ञाऽपराधाद्यथावत्प्रतिपत्तु क्षमन्त इति तेषामसौ दुर्विशोध्य उच्यते, तुशब्द उत्तरेभ्यो विशेष द्योतयति, 'चरमाणा' चरमतीर्थकृत्तपस्विना दु खेनानुपाल्यत इति दुरनुपाल स एव दुरनुपालक 'कल्प' यतिक्रियाकलाप, ते हि वक्रत्वेन कुविकल्पाकुलितचित्ततया कथञ्चिज्जानाना अपि न यथावदनुष्ठातुमीशते, मध्यमकाना तु सुखेन विशोध्यो–विशोधयितु शक्य सुविशोध्य, 'सुपालउ'त्ति चशब्दस्य गम्यमानत्वात्सुपालकश्च, कोऽसौ ?–कल्प इतीहापि योज्यते, ते हि ऋजुप्रज्ञा इति सम्यग्मार्गानुसारिबोधतया सुखेनैव यथावदवगच्छन्ति पालयन्ति च, अतस्ते चतुर्यामोक्तावपि पञ्चममपि याममुक्तहेतोर्ज्ञातु पालयितु च क्षमा इति तदपेक्षया पार्श्वेण चतुर्याम उक्त, पूर्वपश्चिमाश्चोक्तनीतितो नेत्थमिति ऋषभवर्द्धमानाभ्या पञ्चम व्रतमुक्तम्, अयमर्थ –न यादृशाद्वाचकादेकस्य श्रोतुर्विवक्षितार्थप्रतिपत्तिस्तादृशादेवाशेषाणामपि, स्वप्रज्ञाऽपेक्षया हि कोऽपि कीदृशादेव वाचकादेकमप्यर्थं प्रतिपद्यत इति विचित्रप्रज्ञविनेयानुग्रहा-

केशिं 'ब्रुवन्तम्' अभिदधतं 'तुः' पुनरर्थे भिन्नक्रमश्च केशिं पुनर्ब्रुवन्तमिति योज्यते, 'जहिच्छं'ति इच्छाया अनतिक्रमेण यथेच्छं यदवभासत इत्यर्थोऽनुज्ञात इति–अनुमतो गौतमेनेति प्रक्रमः, शेषं प्रतीतमिति सूत्रद्वयार्थः ॥ यच्चासौ गौतमं पृष्टवांस्तत्सङ्ग्राहकं निर्युक्तिकृद् द्वारगाथात्रयमाह—

सिक्खावए अ लिंगे अ, सत्तूणं च पराजए । पासावगत्तणे चेव, तंतूद्धरणबंधणे ॥ ४५२ ॥
अगणिणिवावणे चेव, तहा दुट्ठस्स निग्गहे । तहा पहपरिन्नाय, महासोअनिवारणे ॥ ४५३ ॥
संसारपारगमणे, तमस्स अ विघायणे । ठाणोवसंपया चेव, एवं वारसमू कमो ॥ ४५४ ॥

एतच्च यथाऽवसरं सूत्रव्याख्यान एव व्याख्यास्यते, तत्र प्रथमं 'सिक्खावय'त्ति द्वारम्, अत्र च शिक्षा–अभ्यासस्तत्प्रधानानि व्रतानि प्रतिदिनं यतिभिरभ्यस्यमानतया शिक्षाव्रतानि शिक्षापदानि वा–प्राणिवधविरमणादीनि, सत्सु हि तेषु शेषाऽपि शिक्षा शिष्योपदेशात्मिका संभवतीति । एतदधिकृत्याह सूत्रकृत्—

चाउज्जामो अ जो धम्मो, जो इमो पंचसिक्खिओ । देसिओ वद्धमाणेणं, पासेण य महामुणी ॥ २३ ॥
एगकज्जपवन्नाणं, विसेसे किं नु कारणं? । धम्मे दुविहे मेहावी, कहं विप्पच्चओ न ते? ॥ २४ ॥

तिपत्त्यक्षमतया वक्रजडा 'च' समुच्चये 'पश्चिमा' पश्चिमतीर्थकृद्यतय 'मध्यमास्तु' मध्यमतीर्थकृत्सम्बन्धितपस्विन, 'ऋजुप्रज्ञा' ऋजवश्च ते प्रकर्षेण जानन्तीति प्रज्ञाश्च सुखेनैव विवक्षितमर्थं ग्राहयितु शक्यन्त इति ऋजुप्रज्ञा, तेन हेतुना धर्मो द्विभेद 'कृत' विहित, एककार्यप्रतिपन्नत्वेऽपीति प्रक्रम । यदि नाम पूर्वादीनामेवविधत्व तथाऽपि कथमेतद् द्वैविध्यमित्याह–'पुरिमाण'ति पूर्वेषा दु खेन विशोध्यो विशोधयितु–निर्मलता नेतु शक्यो दुर्विशोध्य, कल्प इति सबध्यते, ते ह्यतिऋजुतया गुरुभिरनुशिष्यमाणा अपि न तदनुशासन स्वप्रज्ञाऽपराधाद्यथावत्प्रतिपत्तु क्षमन्त इति तेषामसौ दुर्विशोध्य उच्यते, तुशब्द उत्तरेभ्यो विशेष द्योतयति, 'चरमाणा' चरमतीर्थकृत्तपस्विना दु खेनानुपाल्यत इति दुरनुपाल स एव दुरनुपालक 'कल्प' यतिक्रियाकलाप, ते हि वक्रत्वेन कुविकल्पाकुलितचित्ततया कथञ्चिज्जानाना अपि न यथावदनुष्ठातुमीशते, मध्यमकाना तु सुखेन विशोध्यो–विशोधयितु शक्य सुविशोध्य, 'सुपालउ'त्ति चशब्दस्य गम्यमानत्वात्सुपालकश्च, कोऽसौ ?–कल्प इतीहापि योज्यते, ते हि ऋजुप्रज्ञा इति सम्यग्मार्गानुसारिबोधतया सुखेनैव यथावदवगच्छन्ति पालयन्ति च, अतस्ते चतुर्यामोक्तावपि पञ्चममपि यामधुक्तहेतोर्ज्ञातु पालयितुं च क्षमा इति तदपेक्षया पार्श्वेण चतुर्याम उक्त, पूर्वपश्चिमाश्चोक्तनीतितो नेत्थमिति ऋषभवर्द्धमानाभ्या पञ्चम व्रतमुक्तम्, अयमर्थ –न यादृशाद्वाचकादेकस्य श्रोतुर्विवक्षितार्थप्रतिपत्तिस्तादृशादेवाशेषाणामपि, स्वप्रज्ञाऽपेक्षया हि कोऽपि कीदृशादेव वाचकादेकमप्यर्थं प्रतिपद्यत इति विचित्रप्रज्ञविनेयानुग्रहा-

तिपत्त्यक्षमतया वक्रजडाः 'चः' समुच्चये 'पश्चिमाः' पश्चिमतीर्थकृद्यतयः 'मध्यमास्तु' मध्यमतीर्थकृत्सम्बन्धितपस्विनः, 'ऋजुप्रज्ञाः' ऋजवश्च ते प्रकर्षेण जानन्तीति प्रज्ञाश्च सुखेनैव विवक्षितमर्थं ग्राहयितुं शक्यन्त इति ऋजुप्रज्ञाः, तेन हेतुना धर्मो द्विभेदः 'कृतः' विहितः, एककार्यप्रतिपन्नत्वेऽपीति प्रक्रमः । यदि नाम पूर्वादीनामेवंविधत्वं तथाऽपि कथमेतद् द्वैविध्यमित्याह—'पुरिमाणं'ति पूर्वेषां दुःखेन विशोध्यो विशोधयितुं—निर्मलतां नेतुं शक्यो दुर्विशोध्यः, कल्प इति संबध्यते, ते ह्यतिऋजुतया गुरुभिरनुशिष्यमाणा अपि न तदनुशासनं स्वप्रज्ञाऽपराधाद्यथावत्प्रतिपत्तुं क्षमन्त इति तेषामसौ दुर्विशोध्य उच्यते, तुशब्द उत्तरेभ्यो विशेषं द्योतयति, 'चरमाणां' चरमतीर्थकृत्तपस्विनां दुःखेनानुपाल्यत इति दुरनुपालः स एव दुरनुपालकः 'कल्पः' यतिक्रियाकलापः, ते हि वक्रत्वेन कुविकल्पाकुलितचित्ततया कथञ्चिज्जानाना अपि न यथावदनुष्ठातुमीशते, मध्यमकानां तु सुखेन विशोध्यो—विशोधयितुं शक्यः सुविशोध्यः, 'सुपालउ'त्ति चशब्दस्य गम्यमानत्वात्सुपालकश्च, कोऽसौ ?—कल्पः इतीहापि योज्यते, ते हि ऋजुप्रज्ञा इति सम्यग्मार्गानुसारिबोधतया सुखेनैव यथावदवगच्छन्ति पालयन्ति च, अतस्ते चतुर्यामोक्तावपि पञ्चममपि याममुक्तहेतोर्ज्ञातुं पालयितुं च क्षमा इति तदपेक्षया पार्श्वेण चतुर्याम उक्तः, पूर्वपश्चिमाश्चोक्तनीतितो नेत्थमिति ऋषभवर्द्धमानाभ्यां पञ्चमं व्रतमुक्तम्, अयमर्थः—न यादृशाद्वाचकादेकस्य श्रोतुर्विवक्षितार्थप्रतिपत्तिस्तादृशादेवाशेषाणामपि, स्वप्रज्ञाऽपेक्षया हि कोऽपि कीदृशादेव वाचकादेकमप्यर्थं प्रतिपद्यत इति विचित्रप्रज्ञविनेयानुग्रहा-

'चतुर्याम' हिंसाऽनृतस्तेयपरिग्रहोपरमात्मकव्रतचतुष्टयरूप 'पञ्चशिक्षितः' स एव मैथुनविरमणात्मकपञ्चमव्रत-सहित । इत्थ च 'धर्मे' साधुधर्मे 'द्विविधे' द्विभेदे हे 'मेधाविन् !' विशिष्टावधारणशक्त्यन्वित ! कथञ्चित् ( कथ 'विप्र ) प्रत्यय ' अनाश्वासो न 'ते' तव?, तुल्ये हि सर्वज्ञत्वे किंकृतोऽसौ मतभेद इत्यभिप्राय , शेष प्रकटार्थमेवेति सूत्रद्वयार्थ ॥ एव केशिनोक्ते—

तओ केसि बुवत तु, गोयमो इणमब्बवी । पन्ना समिक्खए धम्मंतत्त तत्तविणिच्छिय ॥ २५ ॥ पुरिमा उज्जुजड्डा उ, वक्कजड्डा य पच्छिमा । मज्झिमा उज्जुपन्ना उ, तेण धम्मे दुहा कए ॥२६॥ पुरिमाण दुव्विसुज्झो उ, चरिमाण दुरणुपालओ । कप्पो मज्झिमगाण तु, सुविसुज्झो सुपालओ ॥ २७ ॥

'तत ' तदनन्तर केशि ब्रुवन्त तु पूरणेऽवधारणे वा ततो ब्रुवन्तमेव जल्पादनुपरतमेव, अनेनादरातिशयमासन्नल ब्धप्रतिभता च गौतमस्याह । किं तदब्रवीदित्याह—'प्रज्ञा' बुद्धि 'समीक्षते' सम्यक् पश्यति, किं तदित्याह—'धम्म-तत्त'ति बिन्दुरलाक्षणिकस्तत 'धर्मतत्त्व' धर्मपरमार्थ तत्त्वाना—जीवादीना विनिश्चयो—विशिष्टनिर्णयात्मको यस्मिंस्तत्तथा, इदमुक्त भवति—न वाक्यश्रवणमात्रादेव वाक्यार्थनिर्णयो भवति, किन्तु प्रज्ञावशात्, तत 'पुरिम'त्ति 'पूर्वे' प्रथमतीर्थकृत्साधव 'उज्जुजड्डे'ति ऋजवश्च प्राञ्जलतया जडाश्च तत एव दुष्प्रतिपाद्यतया ऋजुजडाः, तुरिति यस्मात् 'वक्कजड्डा य'त्ति, वक्राश्च वक्रबोधतया जडाश्च तत एव सकानेककुविकल्पतो विवक्षितार्थप्र-

केसिं एवं बुवाणं तु, गोयमो इणमब्बवी । विन्नाणेण समागम्म, धम्मसाहणमिच्छियं ॥ ३१ ॥ पच्चयत्थं च लोगस्स, नाणाविहविकप्पणं । जत्तत्थं गहणत्थं च, लोगे लिंगपओअणं ॥ ३२ ॥ अह भवे पइन्ना उ, मुक्खसब्भूयसाहणा । नाणं च दंसणं चेव, चरित्तं चेव निच्छए ॥ ३३ ॥

अत्र च विशिष्टं ज्ञानं विज्ञानं-तच्च केवलमेव तेन समागम्य यद्यस्योचितं तत्तथैव ज्ञात्वा 'धर्मसाधनं' धर्मोपकरणं वर्षाकल्पादिकम् 'इच्छिय'न्ति 'इष्टम्' अनुमतं पार्श्वनाथवर्द्धमानतीर्थकृद्भ्यामिति प्रक्रमः, वर्द्धमानविनेयानां हि रक्तादिवस्त्रानुज्ञाने वक्रजडत्वेन वस्त्ररञ्जनादिषु प्रवृत्तिरतिदुर्निवारैव स्यादिति न तेन तदनुज्ञातं, पार्श्वशिष्यास्तु न तथेति रक्तादीनामपि ( धर्मोपकरणत्वं ) तेनानुज्ञातमिति भावः, किञ्च-प्रत्ययार्थं वा—अमी व्रतिन इति प्रतीतिनिमित्तं, कस्य ?—लोकस्य, अन्यथा हि यथाऽभिरुचितं वेषमादाय पूजादिनिमित्तं विडम्बकादयोऽपि वयं व्रतिन इत्यभिदधीरन्, ततो व्रतिष्वपि न लोकस्य व्रतिन इति प्रतीतिः स्यात् , किं तदेवमित्याह—'नानाविधविकल्पनं' प्रक्रमान्नानाप्रकारोपकरणपरिकल्पनं, नानाविधं हि वर्षाकल्पाद्युपकरणं यथावद्यतिष्वेव संभवतीति कथं न तत्प्रत्ययहेतुः स्यात् ?, तथा यात्रा-संयमनिर्वाहस्तदर्थं, विना हि वर्षाकल्पादिकं वृष्ट्यादौ संयमबाधैव स्यात्, ग्रहणं-ज्ञानं तदर्थं च, कथञ्चिच्चित्तविप्लवोत्पत्तावपि गृह्णातु-यथाऽहं व्रतीत्येतदर्थं, लोके लिङ्गस्य—वेषधारणस्य प्रयोजनमिति—प्रवर्त्तनं लिङ्गप्रयोजनम् । 'अथे' त्युपन्यासे 'भवे पइन्ना उ'त्ति तुशब्दस्यैवकारार्थत्वाद्भिन्नक्रमत्वाच्च भवे-

योपात्तौद्वाचिकभेदादेव धर्मस्य द्वैविध्य, न तु वस्तुभेदात्, यद्वाचकभेदेऽपि वस्तुतो व्रतपञ्चकस्यैवात्र विवक्षितत्वात्, प्रसङ्गतश्चेहाद्यजिनाभिधानमिति सूत्रत्रयार्थ ॥ इत्थ गौतमेनोक्ते केशिराह—

साहु गोयम! पन्ना ते, छिन्नो मे ससओ इमो। अन्नोऽवि ससओ मज्झ, त मे कहसु गोयमा! ॥ २८ ॥
अचेलओ अ जो धम्मो, जो इमो सतरुत्तरो। देसिओ वद्धमाणेण, पासेण य महाजसा ॥ २९ ॥ एगकज्जप वन्नाण, विसेसे किं नु कारण?। लिंगे दुविहे मेहावी!, कह विप्पचओ न ते? ॥ ३० ॥

'साधु'त्ति साधु –शोभना गौतम! 'प्रज्ञा' बुद्धि 'ते' तव, यत 'छिन्न' अपनीतस्त्वयेति गम्यते, मम 'सशय' सन्देह 'इमो'त्ति अयम्—उक्तरूप, पठन्ति च–'पण्णाए'त्ति, तत्र च साधु यथा भवत्येव गौतम! 'प्रज्ञया' बुद्ध्या छिन्नो मे सशयोऽय, त्वयेति व्याख्येय, विनेयापेक्ष चेत्यमभिधान, न तु तस्य मतिश्रुतावधिज्ञानत्रयसमन्वितस्यैवविध-सशयसम्भव इति सर्वत्र भावनीयम्। 'अन्योऽपि' वक्ष्यमाण सशयो मम त मे कथय गौतम!, तद्विषयमप्यर्थं यथावत्प्रतिपादयेति भाव। अत्र च द्वितीय द्वार 'लिंग'त्ति, लिङ्ग्यते—गम्यतेऽनेनाय व्रतीति लिङ्ग—वर्षाकल्पा-दिरूपो वेष, तदधिकृत्याह—'अचेलओ' इत्यादि, प्राग् व्याख्यातमेव, नवर 'महामुणि'त्ति महामुने!, पठन्ति च, 'महाजस'त्ति महायशा, लिङ्गे द्विविधे–अचेलकतया विविधवस्त्रधारकतया च द्विभेद इति सूत्रत्रयार्थ ॥ एव केशिनाऽभिहिते गौतमवचोऽभिधायक सूत्रत्रयम्—

दिट्ठो, हा ! दुट्ठु कयंति संवेगमावण्णेण खामिओ ॥ एवं गुरुप्रसादात् चण्डरुद्राचार्यशिष्यस्येव सकलसमीहितावाप्तिरिति मत्वा मनोवाक्कायैर्गुरुचित्तानुवृत्तिपरैर्भाव्यमिति, अनेनानन्तरेण च सूत्रेण प्रतिरूपयोगयोजनात्मक औपचारिको विनय उक्त इति सूत्रार्थः ॥ १३ ॥ कथं पुनर्गुरुचित्तमनुगमनीयमित्याह—

णापुट्ठो वागरे किंचि, पुट्ठो वा नालियं वए। कोहं असच्चं कुविज्जा, धारिज्जा पियमप्पियं ॥१४॥ (सूत्रम्)

व्याख्या—'नापृष्टः' कथमिदम् ? इत्याद्यजल्पितः, गुरुणेति गम्यते, 'व्यागृणीयात्' वदेत्, तथाविधं कारणं विना, 'किञ्चित्' स्तोकमपि, पृष्टो वा न 'अलीकम्' अनृतं 'वदेत्' कारणान्तरेण च गुरुभिरतिनिर्भर्त्सितोऽपि न तावत् कुध्येत्, कथञ्चिदुत्पन्नं वा क्रोधम् 'असत्यं' तदोत्पन्नकुविकल्पविफलीकरणेन 'कुर्वीत' विदध्यात्, कथम् ?—'धारयेत्' स्थापयेत्, मनसीति शेषः, 'पियमप्पियं' ति इवाप्योर्गम्यमानत्वात् प्रियमिवेष्टमिव सदा गुणकारणतया अप्रियमपि कर्णकटुकतया तदाऽनिष्टमपि, गुरुवचनमिति गम्यते, अत्र श्लोकपूर्वार्धेन वाचा यथा गुरुरनुवर्तनीयः तथोक्तमुत्तरार्धेन तु मनसेति, अथवा नापृष्ट इति न गुरुणैव किन्तु येन केनचिदपीत्यादिक्रमेण पादत्रयं सामान्येन प्राग्वन्नेयं, नवरं क्रोधम् उपलक्षणत्वान्मानादिकषायं चोत्पन्नमसत्यं कुर्वीत, क्रोधासत्यतायामुदाहरणसम्प्रदायः—[1]कस्सवि कुलपुत्तयस्स भाया वेरिएण वावाइओ, तओ सो जणणीए भण्णइ—पुत्त ! पुत्तघायगं घायसुत्ति, तओ सो

१ कस्यापि कुलपुत्रकस्य भ्राता वैरिणा व्यापादितः, ततः स जनन्या भण्यते—पुत्र ! पुत्रघातकं घातयेति, ततः स तेन जीवग्राहं

देव प्रतिज्ञान प्रतिज्ञा–अभ्युपगम , प्रक्रमात्पार्श्ववर्द्धमानयो , प्रतिज्ञास्वरूपमाह—'मोक्खसब्भूयसाहण'त्ति मोक्षस्य सद्भूतानि च तानि तात्त्विकत्वात्साधनानि च हेतुत्वान्मोक्षसद्भूतसाधनानि, कानीत्याह—'ज्ञानं च' यथावदवबोध 'दर्शन च' तत्त्वरुचि 'चारित्रं च' सर्वसावद्यविरति 'एवे' त्ववधारणे, स च लिङ्गस्य मुक्तिसद्भूतसाधनता व्यवच्छिनत्ति, ज्ञानाद्येव मुक्तिसाधन न तु लिङ्गमिति, श्रूयते हि भरतादीना लिङ्ग विनाऽपि केवलज्ञानोत्पत्ति , 'निश्चये' इति निश्चयनये विचार्य, व्यवहारनये तु लिङ्गस्यापि कथञ्चिन्मुक्तिसद्भूतहेतुतेष्यत एव, तदयमभिप्राय —निश्चयस्तावल्लिङ्ग प्रत्याद्रियत एव न, व्यवहार एव तूक्तहेतुभिस्तदिच्छतीति तद्भेदस्य तत्त्वतोऽकिञ्चित्करत्वान्न विदुषा विप्रत्ययहेतुता, शेष स्पष्टमिति सूत्रत्रयार्थ ॥

साहु गोयम ! पन्ना ते, छिन्नो मे ससओ इमो। अन्नोऽवि ससओ मज्झ, तं मे कहसु गोयमा ! ॥ ३४ ॥

प्राग्वत् । अत्र च तृतीयद्वार शत्रूणा पराजय इति, एतदधिकृत्याह—

अणेगाण सहस्साण, मज्झे चिट्ठसि गोयमा ! । ते अ ते अभिगच्छति, कह ते निज्जिया तुमे ? ॥ ३५ ॥ एगे जिए जिया पच, पच जिए जिया दस । दसहा उ जिणित्ता ण, सव्वसत्तू जिणामह ॥ ३६ ॥ सत्तू अ इइ के वुत्ते ?, केसी गोयममब्बवी । तओ केसि बुवत तु, गोयमो इणमब्बवी ॥ ३७ ॥ एगप्पा अजिए सत्तू, कसाया इदियाणि य । ते जिणित्तु जहानाय, विहरामि अह मुणी ॥ ३८ ॥

अविद्यमानमेक इति–भावप्रधानत्वान्निर्देशस्यैकत्वं येषु तेऽनेकास्तेषाम् अनेकानां—बहूनां सहस्राणां प्रक्रमाच्छत्रुसम्बन्धिनां मध्ये त्वं 'तिष्ठसि' आस्से गौतम !, 'ते च' अनेकसहस्रसङ्ख्याः शत्रवः 'ते' इति सूत्रत्वात्त्वामभिलक्षीकृत्य गच्छन्ति–धावन्ति, अर्थाज्जेतुम्, इत्थं चैतत् केवलानुपपत्तिदर्शनात्, दृश्यते च तज्जयफलमपि तव प्रशमादि, तत् 'कथं' केन प्रकारेण 'ते' इत्युक्तरूपाः शत्रवः 'निर्जिताः' अभिभूतास्त्वया ?, भूयस्त्वादभियोक्तृत्वाच्च तेषामिति भावः । इत्थं केशिनोक्ते गौतम आह–'एकस्मिन्' सकलभावशत्रुप्रधाने आत्मनि 'जिते' अभिभूते जिताः पञ्च, कथम् ?, एकः स एवान्ये च चत्वारः कषायाः, तथा 'पंच जिए'त्ति सूत्रत्वात्पञ्चसु जितेषु जिता दश, अत्रापि पञ्चोक्ता एवापराणि च पञ्चेन्द्रियाणि, ततः 'दशधा' दशप्रकारानुक्तरूपान् 'तुः' पुनरर्थे शत्रून् जित्वा 'णं'ति प्राग्वत् 'सर्वशत्रून्' नोकषायादींस्तदुत्तरोत्तरभेदांश्चानेकसहस्रसङ्ख्यान् 'जयामि' अभिभवाम्यहं, तदनेन प्रथमतः प्रधानजयो–जयनप्रकार उक्तः, ततश्च 'सत्तू य इइ'त्ति 'चः' पूरणे इति भिन्नक्रमो जातौ चैकवचनं, ततः शत्रुः क उक्त इति केशिर्गौतममब्रवीत्, ननु यत्रासौ शत्रूनपि न वेत्ति कथं तन्मध्यगतस्त्वं तिष्ठसीत्यादिकमनेन प्रागुक्तम् ?, उच्यते, अज्ञजनप्रतिबोधार्थं सर्वा अपि पृच्छा एताः, उक्तं हि प्राग् 'ज्ञानत्रयान्वितोऽसाविति कथमस्यैवंविधवस्तुपरिज्ञानसम्भव' इति, उत्तरार्धं प्राग्वत् । एक आत्मेति–जीवश्चित्तं वाऽतति–गच्छति तांस्तान् भावान् अर्थान्नेति व्युत्पत्तेः 'अजितः' अवशीकृतः अनेकानर्थावाप्तिहेतुत्वाच्छत्रुरिव शत्रुस्तथोक्तहेतोरेव 'कषायाः'

क्रोधादय 'इन्द्रियाणि' स्पर्शनादीनि, चशब्दान्नोकषायादय कषायाद्युत्तरोत्तरभेदाश्च, अजिता शत्रव इति वचनविपरिणामेन योज्यते। इह च कषायाणा प्रथमत उपादानमिन्द्रियाणामपि कषायवशत एवानर्थहेतुत्वख्यापनार्थं, सम्प्रत्युपसहरव्याजेन तज्जये फलमाह—'तान्' उक्तरूपान् शत्रून् 'जित्वा' अभिभूय 'यथान्याय' यथोक्तनीत्यनतिक्रमेण ततो विहरामि—तन्मध्येऽपि तिष्ठन्नप्रतिबद्धविहारितयेति गम्यते, तेषामेव प्रतिबन्धहेतुत्वेन तद्विबन्धकाभावादिति भाव,'अह'मित्यात्मनिर्देश 'मुने' इति केश्यामन्त्रणमिति सूत्रचतुष्टयार्थं ॥ एव गौतमेनाभिहिते—

साहु गोयम! पन्ना ते, छिन्नो मे ससओ इमो। अन्नोऽवि ससओ मज्झ, त मे कहसु गोयमा!॥ ३९॥

प्राग्वत्॥ सम्प्रति 'पासावगत्तण'ति चतुर्थद्वारमधिकृत्याह—

दीसति बहवे लोए, पासबद्धा सरीरिणो। मुक्कपासो लहुब्भूओ, कहं त विहरसी मुणी!॥४०॥ ते पासे सव्वसो छित्ता, निहतूण उवायओ। मुक्कपासो लहुब्भूओ, विहरामि अह मुणी!॥ ४१॥ पासा अ इइ के वुत्ता?, केसी गोयममब्बवी। केसि एव बुवत तु, गोयमो इणमब्बवी॥ ४२॥ रागद्दोसादओ तिव्वा, नेहपासा भयकरा। ते छिंदित्तु जहानाय, विहरामि जहक्कम॥ ४३॥

सूत्रचतुष्टय स्पष्टमेव नवर पाशैर्बद्धा—नियन्त्रिता पाशबद्धा 'शरीरिणः' प्राणिन, 'मुक्तपाश.' त्यक्तपाशोऽत एव लघुभूतो—वायु, ततो लघुभूत इव लघुभूत सर्वत्राप्रतिबद्धत्वात्। गौतम आह—'ते' इति तान्—लोकबन्धकान्

पाशान् 'सव्वसो'त्ति सूत्रत्वात्सर्वान् 'छित्त्वा' त्रोटयित्वा 'निहत्य' पुनर्बन्धाभावलक्षणेनातिशयेन विनाश्य, कथम् ?— 'उपायतः' सद्भूतभावनाऽभ्यासात् । ततः पाशाश्च—पाशशब्दवाच्याः के 'वुत्ते'ति उक्ताः । रागद्वेषादयः, आदिशब्दान्मोहपरिग्रहः 'तीव्राः' इति गाढाः, तथा 'णेह'त्ति स्नेहाः—पुत्रकलत्रादिसम्बन्धास्ते पाशा इव पारवश्यहेतुतया पाशा इत्युक्ता इति क्रमः,अतिगाढत्वाच्च रागान्तर्गतत्वेऽप्यमीषां पुनरुपादानं,'भयङ्कराः' अनर्थहेतुतया त्रासोत्पादका 'यथाक्रमम्' इति क्रमो—यतिविहित आचारस्तदनतिक्रमेणेति सूत्रचतुष्टयार्थः ॥

साहु गोयम ! पन्ना ते, छिन्नो मे संसओ इमो । अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा ! ॥४४॥

पूर्ववत् । सम्प्रति 'तन्तूद्धरणवंधणे'त्ति पञ्चमद्वारावसरः, तत्र च तन्यते भवोऽनेनेति तन्तुः—भवतृष्णा स एव बन्धहेतुत्वाद्बन्धनं तस्योद्धरणम्—उन्मूलनं तन्तुबन्धनोद्धरणं, प्राग्वत्परनिपातः ॥ तदधिकृत्याह—

अंतो हिअयसंभूया, लया चिट्ठइ गोयमा ! । फलेइ विसभक्खीणं, सा उ उद्धरिया कहं ? ॥ ४५ ॥ तं लयं सव्वसो छित्ता, उद्धरित्ता समूलियं । विहरामि जहानायं, मुक्कोमि विसभक्खणं ॥ ४६ ॥ लया य इति का वुत्ता ?, केसी गोयममब्बवी । केसिमेवं बुवंतं तु, गोयमो इणमब्बवी ॥४७॥ भवतण्हा लया वुत्ता, भीमा भीमफलोदया । तमुच्छित्तु जहानायं, विहरामि महामुणी ! ॥ ४८ ॥

हृदयस्यान्तरन्तर्हृदय–मन इत्यर्थस्तत्र सभूता–उत्पन्ना लता 'तिष्ठति' आस्ते हे गौतम!, 'फलेइ विसभक्खीण'ति आर्षत्वात्फलति विषवद्भक्ष्यन्त इति विषभक्ष्याणि—पर्यन्ते तदारुणतया विषोपमानि फलानीति गम्यते, सा पुन 'उद्धृता' उत्पाटिता त्वयेति गम्यते, 'कथ' केन प्रकारेण, इति केशिप्रश्न । गौतम आह—'ताम्' इत्युक्तविशेषणा लता 'सव्वसो'त्ति सर्वत 'छित्वा' खण्डीकृत्य 'उद्धृत्य' उत्पाट्य समूलामेव समूलिका रागद्वेषलक्षणमूलनिर्मूलनेन यथान्याय विहरामीति प्राग्वत्, अनेन सर्वच्छेदसमूलोद्धरण चोद्धरणप्रकार उक्त ,तत्फलमाह–मुक्तोऽस्मि 'विसभक्खण'ति सुब्व्यत्ययाद् विषभक्षणाद्–विषफलाभ्यवहारोपमात् क्लिष्टकर्मण । 'लते'त्यादि स्पष्ट, भव –ससारस्तस्मिन् तृष्णा–लोभात्मिका भवतृष्णा लतोक्ता 'भीमा' भयदा स्वरूपत कार्यतश्च भीमो दु खहेतुतया फलानामर्थात्क्लिष्टकर्मणामुदय —परिपाको यस्या सा तथा, न चेह प्राग् लतामात्रस्यैव प्रश्न इति विशेषणाभिधानमयुक्त, सविशेषणाया एव तस्या प्रक्रान्तत्वात्, प्रक्रमापेक्षत्वाच्च प्रश्नस्य,शेषमुपसहाराभिधायीति सूत्रचतुष्टयार्थ ॥

साहु गोयम! पन्ना ते, छिन्नो मे ससओ इमो। अन्नोऽवि ससओ मज्झ, त मे कहसु गोयमा! ॥ ४९ ॥

गतार्थम् । 'अग्निनिर्वापण चेव'त्ति षष्ठद्वारमङ्गीकृत्याह—

सपज्जलिया घोरा, अग्गी चिट्ठइ गोयमा!। जे डहति सरीरत्था, कह विज्झाविया तुमे? ॥ ५० ॥ महामेहपसूयाओ, गिज्झ वारि जलुत्तम। सिंचामि सयय ते उ, सित्ता नो व डहति मे ॥ ५१ ॥ अग्गी अ इइ

के वुत्ते?, केसी गोयममब्बवी। तओ केसिं वुवंतं तु, गोयमो इणमब्बवी ॥ ५२ ॥ कसाया अग्गिणो वुत्ता, सुअसीलतवो जलं। सुयधाराभिहया संता, भिन्ना हु न डहंति मे ॥ ५३ ॥

सूत्रचतुष्टयम्। समन्तात्प्रकर्षेण ज्वलिताः संप्रज्वलिता अत एव 'घोराः' रौद्राः 'अग्गी चिट्ठइ'त्ति आर्षत्वाद्वचनव्यत्ययात्ततोऽग्नयस्तिष्ठन्ति हे गौतम! ये दहन्तीव दहन्ति परितापकारितया 'शरीरस्थाः' देहस्थाः, न वहिर्वर्त्तिन इत्यर्थः, एते च यद्यप्यात्मस्थास्तथाऽपि शरीरात्मनोरन्योऽन्यानुगमख्यापनायेत्थमुक्ताः, कथं 'विध्यापिताः' निर्वापितास्त्वया?। गौतम आह–महामेघात् प्रसूतम्–उत्पन्नं महामेघप्रसूतं तस्मात्, महाश्रोतस इति गम्यते, 'गिज्झ'त्ति गृहीत्वा वारयति तृष्णादिदोषानिति वारि–पानीयं 'जलोत्तमं' शेषजलापेक्षया प्रधानं तेन 'सिञ्चामि' उक्षामि विध्यापयामीतियावत्, 'सततम्' अनवरतं 'ते उ'त्ति तुशब्दस्य भिन्न(ः)क्रमस्ततस्तानग्नीन्, प्रसङ्गतस्तत्सेचनफलमाह—सिक्तास्तु 'नो वे'ति नैव दहन्ति 'मे'त्ति मां, पठ्यते च–'सययं देहि'त्ति, इह च देहस्थितत्वेनाग्नयोऽपि देहा उक्ताः, उक्तं हि 'तास्थ्यात्तद्व्यपदेश'इति, अन्ये तु पूर्वसूत्रं पठन्ति–'जा डहेति सरीरत्थे'ति, अत्र तु पठन्ति—'सिंचामि सययं तं तु' इति, इह च 'त' मित्यग्निमन्यत् प्राग्वद्, एकवचनान्तत्वमेव तु सर्वत्र विशेषः। "अग्गी ये' त्यादि प्राग्वत्, नवरमग्निप्रश्नो महामेघादिप्रश्नोपलक्षणं, 'कषायाः' क्रोधादयः अग्नयः परितापकतया शोषकतया चोक्तास्तीर्थकृद्भिरिति गम्यते, श्रुतं चेहोपचारात्कषायोपशमहेतवः श्रुतान्तर्गतोपदेशाः शीलं च–महाव्रतानि तपश्च—अनशनप्रायश्चि-

त्तादि श्रुतशीलतप इति समाहार, तत्किमित्याह–जल–पानीयमुपलक्षणत्वाचास्य महामेघसिजगदानन्दकतया शेषमेघातिशायित्वेन भगवास्तीर्थकरो महाश्रोताश्च तत उत्पन्न आगम, उक्तमेवार्थं सविशेषमुपसहरन्नाह–श्रुतस्य–आगमस्योपलक्षणत्वाच्छीलतपसोश्च धारा इव धारा–आक्रोशहननतर्जनधर्मभ्रंशेपूत्तरोत्तरभावसालाभरूपतादिसततपरिभावनास्ताभिरभिहता –ताडिता श्रुतधाराभिहता सन्त प्रक्रमादुक्तरूपा अग्नय 'भिन्ना' विदारितास्तदभिघातेन लवमात्रीकृता इतियावत् 'दु' पूरणे न दहन्ति मामिति सूत्रचतुष्टयार्थ ॥

साहु गोयम! पन्ना ते, छिन्नो मे ससओ इमो। अन्नोऽवि ससओ मज्झ, त मे कहसु गोयमा!॥ ५४॥

प्राग्वत्। 'दुष्टाश्वनिग्रह' इति सप्तमद्वारमुररीकृत्याह—

अय साहस्सिओ भीमो, दुट्ठस्सो परिधावई। जसि गोयम! आरूढो, कह तेण न हीरसि? ॥ ५५॥
पहावत निगिण्हामि, सुयरस्सीसमाहिय। न मे गच्छइ उम्मग्ग, मग्ग च पडिवज्जइ ॥ ५६॥ अस्से इइ के
वुत्ते?, केसी गोयममब्बवी। तओ केसि बुवत तु, गोयमो इणमब्बवी ॥ ५७॥ मणो साहस्सिओ भीमो,
दुट्ठस्सो परिधावइ। त सम्म तु निगिण्हामि, धम्मसिक्खाइ कथग ॥ ५८॥

सूत्रचतुष्टयम्। 'अय' प्रत्यक्ष सहसा–असमीक्ष्य प्रवर्त्तत इति साहसिको भीम, प्राग्वत्, दुष्टश्चासावकार्य-

प्रवृत्त्याऽश्वश्च दुष्टाश्वः 'परिधावति' समन्ताद्गच्छति, यः कीदृगित्याह–यं दुष्टाश्वमभिभवसि, यदिवा 'यंसि'त्ति यस्मिन् हे गौतम ! 'आरूढः' चटितः, अनारूढस्य हि न वक्ष्यमाणापायहेतुरसौ स्यादित्येवमभिधानं, ततः कथमिति प्रश्ने 'तेन' इति दुष्टाश्वेन 'न ह्रियसे' प्रस्तावान्नोन्मार्गं नीयसे ? । गौतम आह–'प्रधावन्तम्' उन्मार्गाभिमुखं गच्छन्तं 'निगृह्णामि' निरुणध्मि, कीदृशं तमित्याह–श्रुतम्–आगमो नियन्त्रकतया रश्मिरिव रश्मिः–प्रग्रहः श्रुतरश्मिस्तेन समाहितो–बद्धः श्रुतरश्मिसमाहितस्तम्, अतो न 'मे' मम सम्बन्धी दुष्टाश्वः 'गच्छति' याति 'उन्मार्गम्' उत्पथं, ततो न मम तेन हरणमिति भावः, ततश्च किमुदास्त एवेत्याह–'मार्गं च' सत्पथं पुनः 'प्रतिपद्यते' अङ्गीकुरुते । 'अस्से य' इत्यादि सुगमं, नवरं 'मनः' चित्तम्, इह च साहसिक इत्याद्यभिधानं प्रक्रमानुसरणार्थं, विशेषमुपदर्शयन्नुपसंहारमाह–तं सम्यग् निगृह्णामि धर्मविषया शिक्षा–उपदेशो धर्मशिक्षा तया, यद्वा शिक्षा–अभ्यासस्ततो 'धर्मशिक्षायै' धर्माभ्यासनिमित्तं कन्थको–जात्याश्वस्ततश्च कन्थकमिव कन्थकं, किमुक्तं भवति ?–दुष्टाश्वोऽपि निग्रहणयोग्यः कन्थकप्राय एवेति सूत्रचतुष्टयार्थः ॥ केशिराह–

साहु गोयम ! पन्ना ते, छिन्नो मे संसओ इमो । अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा ! ॥ ५९ ॥

साहुसूत्रं तथैव । तथा 'पथपरिज्ञाते' सप्तमं द्वारमाश्रित्याह–

कुप्पहा बहवे लोए, जेसिं नासंति जंतवो । अद्धाणे कह वट्टंतो, तं न नाससि गोयमा ! ? ॥ ६० ॥ जे अ

मग्गेण गच्छति, जे अ उम्मग्गपट्ठिया । ते सव्वे विइया मज्झं, तो न नस्सामहं मुणी ! ॥ ६१ ॥ मग्गे अ इति के वुत्ते ?, केसी गोयममब्बवी । तओ केसिं बुवंतं तु, गोयमो इणमब्बवी ॥६२॥ कुप्पवयणपासंडी, सव्वे उम्मग्गपट्ठिया । सम्मग्गं तु जिणक्खायं, एस मग्गे हि उत्तमे ॥ ६३ ॥

सूत्राणि चत्वारि । कुत्सिता पथा कुपथा –अशोभनमार्गा 'बहव' अनेके 'लोके' जगति 'यै' कुपथै 'नश्यन्ति' सन्मार्गाद्भ्रश्यन्ति 'जन्तव' प्राणिन, तत्तथाध्वनि प्रस्तावात्सन्मार्गे 'कहं'न्ति कथं वर्त्तमानस्त्वं न 'नश्यसि ?' सत्पथाच्च्यवसे ? हे गौतम ! । गौतम आह–'ये' केचित् 'मार्गेणे'ति सन्मार्गेण 'गच्छन्ति' यान्ति ये च 'उन्मार्गप्रस्थिता' उत्पथप्रवृत्ता, ते 'सर्वे' निरवशेषा विदिता–प्रतीता मम, न चैते पथापथपरिज्ञानमन्तरेण सम्यग् ज्ञायन्त इति सैवानेन भङ्ग्यन्तरेणोक्ता, विचित्रत्वाच्च ऋषीणा सूत्रकृतेरेवमभिधानं, ततश्च 'तत' इति पथापथपरिज्ञातो न नश्याम्यहं मुने !, ये हि स्वयं कुपथसत्पथस्वरूपानभिज्ञा भवन्ति ते बहुतरकुपथदर्शनात्तेष्वेव सुपथभ्रान्त्या नश्येयु, अहं तु न तथेति कथं बहुतरकुपथदर्शनेऽपि नश्येयमिति भाव ? । 'मग्गे'त्यादि [सूत्रं] सुगमं, नवरं मार्ग –सन्मार्ग क ?, उपलक्षणत्वात्कुमार्गाश्च के ?, कुप्रवचनेषु–कपिलादिप्ररूपितकुत्सितदर्शनेषु पाषण्डिनो–व्रतिन कुप्रवचनपाषण्डिन सर्वे उन्मार्गप्रस्थिता, बहुविधापायभाजनत्वात्तेषामिति भाव, अनेनापि भङ्ग्या कुप्रवचनानि कुपथा इत्युक्तं भवति, 'सन्मार्गं तु' प्रशस्तमार्गं पुनर्विद्यादिति शेष 'जिनाख्यातं' जिनप्रणीतं मार्गमिति प्रक्रम, कुत

इत्याह—एष मार्गो 'ही'ति यस्माद् 'उत्तमः' अन्यमार्गेभ्यः प्रधानः, तस्मादयमेव सन्मार्ग इत्यभिप्रायः, उत्तमत्वं चास्य प्रणेतृणां रागादिविकलत्वेनेति भावनीयमिति सूत्रचतुष्टयार्थः ॥

साहु गोयम ! पन्ना ते, छिन्नो मे संसओ इमो । अन्नोऽवि संसओ मज्झं, तं मे कहसु गोयमा ! ॥६४॥

साधुसूत्रं प्राग्वत् । सम्प्रति 'महाश्रोतोनिवारणे'त्ति नवमद्वारमुररीकृत्याह—

महाउदगवेगेणं, वुज्झमाणाण पाणिणं । सरणं गई पइट्ठं च, दीवं कं मन्नसी ? मुणी ! ॥ ६५ ॥ अत्थि एगो महादीवो, वारिमज्झे महालओ । महाउदगवेगस्स, गई तत्थ न विज्जई ॥ ६६ ॥ दीवे अ इइ के वुत्ते ?, केसी गोयममब्बवी । तओ केसिं बुवंतं तु, गोयमो इणमब्बवी ॥ ६७ ॥ जरामरणवेगेणं, वुज्झमाणाण पाणिणं । धम्मो दीवो पइट्ठा य, गई सरणमुत्तमं ॥ ६८ ॥

सूत्रचतुष्टयम्, महदुदकं यत्र तत् महोदकं प्रक्रमान्महाश्रोतस्तस्य वेगो—रयो महोदकवेगस्तेन 'उह्यमानानां' नीयमानानां 'पाणिणं'ति प्राणिनां 'शरणं' तन्निवारणक्षममत एव गम्यमानत्वाद् गतिं तत एव च प्रतीत्य—आश्रित्य तिष्ठन्त्यत्र दुःखाभिहताः प्राणिन इति प्रतिष्ठा, 'अन्यत्रापी'ति (वा०) वचनाद् तां च द्वीपं कं मन्यसे ? मुने !, नास्त्येव कश्चन तादृशो द्वीप इति प्रश्नयितुराशयः । गौतम आह—अस्ति—विद्यते एको महांश्चासौ प्रशस्यतया द्वीपश्च महाद्वीपः, क्व ?—'वारिमध्ये' जलस्यान्तः समुद्रान्तर्वर्त्त्यन्तरद्वीप इत्यर्थः । कीदृक् ?—'महालओ'त्ति महान्—उच्चैस्त्वेन विस्तीर्णतया

तेण जीवग्गहो गिण्हिऊण जणणीसमीवमुवणीओ, भणिओ अणेण—मायघायय ! कहिं ते आहणामित्ति, तेण भणिओ—जहिं सरणागया आहम्मति, तेण जणणी अवलोकिया, ताए भण्णइ—ण पुत्त ! सरणागया आहम्मति, तेण भण्णइ—कह रोस सफल करेमित्ति, तेण भण्णइ—ण पुत्त ! सव्वत्थ रोसो सफलो कज्जइ, पच्छा सो तेण विसज्जिओ ॥ एव क्रोधमसत्य कुर्वीत, मानादिविफलीकरणे उदाहरणान्यागमादवधारणीयानि, इत्थमुदितानां क्रोधादीनां विफलीकरणमुपदिष्ट, सम्प्रति यथैषामुदय एव न स्यात् तथोपदेष्टुमाह—'धारयेत्' स्वरूपेणावधारयेत्, न तद्वशतो राग द्वेष वा कुर्यात्, 'प्रिय' प्रीत्युत्पादक शेषजनापेक्षया स्तुत्यादि, 'अप्रिय' तद्विपरीत निन्दादि, तत्रोदाहरणसम्प्रदाय —असिवोवहुए णयरे तिन्नि भूयवाईया रायाणमुवगया भणति—अम्हे असिव उवसमेमोत्ति, राइणा भणिय—सुणिमो केणोवाएणति, तत्थेगो भणइ—अत्थि महेग भूय, त सुरूय विउ-

गृहीत्वा जननीसमीपमुपनीत, भणितोऽनेन—भ्रातृघातक ! कुत्र त्वामाहन्मीति, तेन भणित —यत्र शरणागता आहन्यन्ते, तेन जननी अवलोकिता, तया भण्यते—पुत्र ! न शरणागता आहन्यन्ते, तेन भण्यते—कथ रोष सफल करोमीति, तया भण्यते—न पुत्र ! सर्वत्र रोष सफल क्रियते, पश्चात्स तेन विसृष्ट ।

१ अशिवोपद्रुते नगरे त्रयो भूतवादिका राजानमुपगता भणन्ति—वयमशिवमुपशमयाम इति, राज्ञा भणित—शृणुमः येनोपायेनेति, तत्रैको भणति—अस्ति ममैको भूत, स सुरूप विकुर्व्य गोपुररथ्यादिषु पर्यटति, सो न निभालयितव्य, स निभालितो रुष्यति, य पुनस्त

सूत्रचतुष्टयं, 'अण्णवंसि महोहंसि'त्ति, 'अर्णवे' समुद्रे 'महौघे' बृहज्जलप्रवाहे 'नावा विपरिधावइ'त्ति 'नौः' द्रोणी 'विपरिधावति' विशेषेण समन्ताद्गच्छति,'यां' नावम् 'असि' भवसि,यस्यां वा नावि हे गौतम ! 'आरूढः' चटितस्त्वमिति गम्यते, ततः 'कथं' केन प्रकारेण 'पारं' पर्यन्तं प्रक्रमादर्णवस्य 'गमिष्यसि ?' यास्यसि ?, न कथञ्चिदिति प्रष्टुराशयः। गौतम आह–'जा उ'त्ति या 'तुः' पूरणे आश्राविणी–जलसंग्राहिणी पाठान्तरतः साश्राविणी वा–सहाश्राविभिः–जलप्रवेशान्वितैः प्रक्रमात्सन्धिभिर्वर्त्तत इतिकृत्वा 'नौः' द्रोणी न सा 'पारस्य' प्रस्तावात्समुद्रपर्यन्तस्य 'गामिनी' अवश्यंयायिनी, 'जा निरस्साविणि'त्ति उत्तरत्र तुशब्दस्य भिन्नक्रमत्वाद् या पुनर्निष्क्रान्ता आश्राविभ्यः प्राग्वत् सन्धिभ्यो निराश्राविणी नौः सा 'पारस्य' उक्तरूपस्य 'गामिनी' अवश्यं पारप्रापिका, ततोऽहं निराश्राविणीमारूढ उपायतः पारगास्येव भविष्यामीति भावः। 'नावे'त्यादि प्रतीतार्थं, नवरं नावस्तरणत्वात्तरिता तार्यं च पृष्टमेवात एवोत्तरमाह–शरीरम् 'आहुः' ब्रुवते नौरिति, तस्यैव सम्यग्दर्शनादित्रयानुष्ठानहेतुतया, भवोदधिनिस्तारकत्वाज्जीवः 'उच्यते' प्रतिपाद्यते तीर्थकृद्भिरिति शेषो नाविकः, स ह्युक्तरूपया नावा भवोदधिं तरतीति, संसारः 'अर्णवः' समुद्र उक्तः, तस्यैव तत्त्वतस्तार्यत्वात्, 'यं' संसारमर्णवप्रायं तरन्ति 'महेसिणो'त्ति प्राग्वन्महदेषिणो महर्षयो वा, तदा च तथाविधमहर्षीणां प्रत्यक्षत्वात् श्रोतृप्रतीत्यर्थमेतदिति सूत्रचतुष्टयार्थः॥

च अत एव महोदकवेगस्य–क्षुभितपातालकलशवातेरितप्रवृद्धजलमहाश्रोतोवेगस्य 'गति' गमन 'तत्रे'ति महाद्वीपे न विद्यते। 'दीवे' इत्यादि, गतार्थं। जरामरणे एव च निरन्तरप्रवाहप्रवृत्ततया वेग प्रक्रमादुदकमहाश्रोतसो जरामरणवेगस्तेनोह्यमानानामपरापरपर्यायमयनेन 'प्राणिना' जीवाना 'धर्मे' श्रुतधर्मादि द्वीप इव द्वीप उक्त इति प्रक्रम, स हि भयोदधिमध्यवर्त्ती मुक्तिपदनिबन्धनतया न जरामरणवेगेन गन्तु शक्यत इति, तत्र तथाविधजरामरणाभावाद्, अत एव विवेकिनस्तमाश्रित्य तिष्ठन्तीति प्रतिष्ठा, तथा गति शरण चोत्तम प्राग्वत्। इहापि द्वीपमात्रप्रश्नाभिधानेऽपि शेषाभिधान प्रक्रमोपलक्षणत्वात्तत्प्रश्नस्येति भावनीयमिति सूत्रचतुष्टयार्थं ॥

साहु गोयम! पन्ना ते, छिन्नो मे ससओ इमो। अन्नोऽवि ससओ मज्झ, त मे कहसु गोयमा! ॥ ६८ ॥

साहुसूत्रमुक्तार्थम्। इदानी ससारपारगमनाख्य दशमद्वारमाश्रित्याह—

अन्नवसि महोहसि, नावा विपरिधावई। जसि गोयममारूढो, कह पार गमिस्ससी? ॥ ६९ ॥ जा उ अस्साविणी नावा, न सा पारस्स गामिणी। जा निरस्साविणी नावा, सा उ पारस्स गामिणी ॥ ७० ॥ नावा अ इइ का वुत्ता?, केसी गोयममब्बवी। तओ केसिं बुवत तु, गोयमो इणमब्बवी ॥ ७१ ॥ सरीरमाहु नावत्ति, जीवो वुच्चइ नाविओ। ससारो अन्नवो वुत्तो, ज तरति महेसिणो ॥ ७२ ॥

साहुसूत्रं तथैव। स्थानमेवोपसंपद्यते-प्राप्यत इति स्थानोपसम्पत्-प्राप्यं स्थानमिति द्वादशं द्वारमङ्गीकृत्याह—

सारीरमाणसे दुक्खे, वज्झमाणाण पाणिणं। खेमं सिवं अणाबाहं, ठाणं किं मन्नसी ? मुणी! ॥ ७९ ॥ अत्थि एगं धुवं ठाणं, लोगग्गंमि दुरारुहं। जत्थ नत्थि जरा मच्चू, वाहिणो वेयणा तहा ॥ ८० ॥ ठाणे अ इइ के वुत्ते ?, केसी गोयममब्बवी। तओ केसिं बुवंतं तु, गोयमो इणमब्बवी ॥ ८१ ॥ निव्वाणंति अबाहंति, सिद्धी लोगग्गमेव य। खेमं सिवं अणाबाहं, जं तरंति महेसिणो ॥ ८२ ॥ तं ठाणं सासयंवासं, लोगग्गंमि दुरारुहं। जं संपत्ता न सोयंति, भवोहंतकरा मुणी! ॥ ८३ ॥

सूत्राणि पञ्च प्रतीतान्येव, नवरं 'सारीरमाणसे दुक्खे'त्ति आर्षत्वाच्छारीरमानसैर्दुःखैः 'वज्झमाणाणं' बाध्यमानानां पीड्यमानानां, पठ्यते च—'पच्चमाणाणं'ति पच्यमानानामिव पच्यमानानामत्याकुलीक्रियमाणतया 'प्राणिनां' जीवानां क्षेमं व्याधिरहिततया शिवं सर्वोपद्रवाभावतः अनाबाधं स्वाभाविकबाधापगमतस्तिष्ठन्त्यस्मिन्निति स्थानम्-आश्रयस्तदेवंविधं किं मन्यसे ?—प्रतिजानीषे ?, न किञ्चिदीदृशमिदं निश्चिनुम इति भावः। गौतम आह-अस्ति 'एकम्' अद्वितीयं 'दुरारुहं'ति दुःखेनारुह्यते-अध्यास्यत इति दुरारोहं, दुरापेणैव सम्यग्दर्शनादित्रयेण तदवाप्यत इतिकृत्वा, वेदनाश्चेह शारीरमानसदुःखानुभवात्मिकाः, ततश्चास्य व्याध्यभावेन क्षेमत्वं जरामरणाभावेन शिवत्वं, वेदनाऽभावेनानाबाधकत्वमुक्तमिति यथायोगं भावनीयं, स्थानं किमुक्तं ? —ध्रुवादिविशेषण-

साहु गोयम ! पन्ना ते, छिन्नो मे ससओ इमो । अन्नोऽवि ससओ मज्झ, त मे कहसु गोयमा ! ॥७३॥

साहुसूत्र प्राग्वत् । अधुना 'तमसश्च विघाटने' सेकादशद्वारमधिकृत्याह—

अधयारे तमे घोरे, चिट्ठति पाणिणो बहू । को करिस्सइ उज्जोय ?, सव्वलोगमि पाणिणं ॥ ७४ ॥ उग्गओ विमलो भाणू, सव्वलोगपभकरो । सो करिस्सइ उज्जोय, सव्वलोगमि पाणिणं ॥ ७५ ॥ भाणू अ इति के वुत्ते ?, केसी गोयममब्बवी । तओ केसिं बुवत तु, गोयमो इणमब्बवी ॥ ७६ ॥ उग्गओ खीणससारो, सव्वण्णू जिणभक्खरो । सो करिस्सइ उज्जोय, सव्वलोगमि पाणिण ॥ ७७ ॥

सूत्रचतुष्टय, अन्धमिवान्ध चक्षु प्रवृत्तिनिवर्त्तकत्वेनार्थात् जन करोतीत्यन्धकारस्तस्मिन् 'तमसि' प्रतीते 'घोरे' भयानके तिष्ठन्ति प्राणिनो बहव , क करिष्यत्युद्द्योत 'सर्वलोके' समस्तजगति प्राणिना ?, न कश्चित्तादृश निर्द्धारयाम इति भाव । गौतम आह—'उद्गत ' उदित 'विमल ' निर्मल 'भानुः' आदित्य 'सवलोगपहकरे'त्ति सर्वलोकप्रभाकर —सकलजगत्प्रकाशविधाता, 'भाणू य'त्ति भानु क उक्तो य उद्योत करिष्यतीतिप्रक्रम , 'उद्गत ' उदय प्राप्त 'क्षीणससार ' अपगतभवभ्रमण सर्वज्ञ 'जिनभास्कर ' अर्हदादित्य 'उद्द्योत' समस्तवस्तुप्रकाशनं, तच्च तमोविघट्टनादेवेति तदेवानेन भङ्ग्योक्त, शेष स्पष्टमिति सूत्रचतुष्टयार्थ ॥

साहु गोयम ! पन्ना ते, छिन्नो मे ससओ इमो । अन्नोऽवि ससओ मज्झ, त मे कहसु गोयमा ! ॥७८॥

पाल्यान्येतानीति लिङ्गस्य, सत्यपि च लिङ्गे नात्मादिशत्रुजयं विनाऽसौ सुखेन पालयितुं शक्यत इति शत्रुजयस्य, तेष्वपि कषाया एवोत्कटास्तदात्मकौ च रागद्वेषाविति पाशावकर्त्तनस्य, तत्रापि लोभ एव दुरन्त इति लतोच्छेदस्य, तदुच्छेदोऽपि न कषायनिर्वापणं विनेत्यग्निनिर्वापणस्य, तद्विध्यापनमपि न मनस्यनिगृहीत इति दुष्टाश्वनिग्रहस्य तन्निग्रहेऽपि च न सम्यक्पथपरिज्ञानं विनाऽभिमतपदप्राप्तिरिति तस्य सम्यक्पथश्च जिनप्रणीतधर्म एवेति तस्यैव सन्मार्गत्वख्यापनाय महाश्रोतोनिवारणस्य ततस्तत्रैव दार्ढ्योत्पादनार्थं संसारपारगमनस्य अथ यद्ययमेव सन्मार्गस्तत्किमित्यन्येऽपि न वदन्तीत्याशङ्क्यान्येषामज्ञत्वख्यापनार्थं तमोविघटनस्य, एवमपि किमनेन सन्मार्गेण स्थानमवाप्यमित्याशङ्कासम्भवे स्थानोपसम्पद इति गाथापदतात्पर्यार्थः ॥ पुनस्तद्वक्तव्यतामेव सूत्रकृदाह—

एवं तु संसए छिन्ने, केसी घोरपरक्कमे । अभिवंदित्ता सिरसा, गोयमं तु महायसं ॥ ८५ ॥
पंचमहव्वयं धम्मं, पडिवज्जइ भावओ । पुरिमस्स पच्छिमंमी, मग्गे तत्थ सुहावहे ॥ ८६ ॥

'एवं तु'त्ति अमुनैव प्रकारेण 'संशये' उक्तरूपे 'छिन्ने' अपनीते, उभयत्र जातावेकवचनं, शेषं स्पष्टं, नवरं 'भावतः' इत्यभिप्रायतः, पूर्वं हि चतुर्याम एव धर्मः प्रतिपत्तव्य इत्यभिप्राय आसीत्, अधुना तु पञ्चयाम इति, क पुनरयं पञ्चयामो धर्म इत्याह—'पुरिमस्स'त्ति पूर्वस्य, कोऽर्थः ?—आद्यस्य सोपस्कारत्वात्सूत्रस्य तीर्थकृतोऽभिमते 'पश्चिमे' पश्चिमतीर्थकृ-

विशिष्टमिति प्रक्रम , निर्वान्ति—कर्मानलविध्यापनाच्छीतीभवन्त्यस्मिन् जन्तव इति निर्वाण, इतिशब्द स्वरूपपरामर्शको, यत्रापि नास्ति तत्राप्यध्याहर्त्तव्य , तत उच्यत इत्यध्याहृत्य निर्वाणमितिशब्देन यदुच्यत इत्यादिभावना विधेया, 'अवाह'त्ति अविद्यमानशारीरमानसपीडमिति प्राग्वत् , सिद्धयन्ति—निष्ठितार्था भवन्त्यस्या जन्तव इति सिद्धि 'लोकाग्र' सर्वजगदुपरिवर्त्ति 'एवे'त्ति पूरणे 'च' समुच्चये क्षेम शिवमनाबाधमिति च प्राग्वत् , तथा यत् 'तरन्ति' प्लवन्ते गच्छन्तीत्यर्थ , तत्स्थानमुक्तमिति प्रक्रम , सविशेषणस्य पृष्टत्वात्तदेव विशिनष्टि—'सासयवास'ति वि-दोरलाक्षणिकत्वात् 'शाश्वतवास' नित्यावस्थिति ध्रुवमितियावत्, लोकाग्रे दुरारोहमुपलक्षणत्वाज्जराद्यभावयत्, प्रसङ्गतस्तन्माहात्म्यमाह—यत्सम्प्राप्ता न शोचन्ते, कीदृशा सन्त इत्याह—भवा—नारकादयस्तेषामोघ —पुन पुनर्भवरूपप्रवाहस्तस्यान्तकरा —पर्यन्तविधायिनो भवौघान्तकरा 'मुणि'त्ति मुनय इति सूत्रपञ्चकार्थ ॥

साहु गोयम ! पन्ना ते, छिन्नो मे ससओ इमो । नमो ते ससयाईय !, सव्वसुत्तमहोयही ! ८४ ॥

नवर नमोऽस्त्विति शेष 'ते' तुभ्यमिति 'सशयातीत !' सन्देहातिक्रान्त ! सर्वसूत्राणा महोदधिरिव महोदधि सामस्त्येन तदाधारतया तत्सबोधन सर्वसूत्रमहोदधे !, अनेनोपबृंहणागर्भं स्तवनमाह । प्रश्नोपसहारमाह निर्युक्तिकृत्—'एव बारससु कमो'त्ति, एवमित्युक्तरूपो द्वादशसु प्रतिपादितप्रश्नेषु 'प्रक्रम' परिपाटी, किमुक्त भवति ?—अनेनैव क्रमेणामी केशिना कृता , तथाहि—धर्मार्थत्वात्सर्वानुष्ठानस्य शिक्षाव्रतरूपत्वाच्चास्य प्रथमतस्तेषा प्रश्न , ततो लिङ्ग-

संथुया ते पसीयंतु, भयवं केसी गोयमु ॥ ८८ ॥ त्तिबेमि ।

॥ केसिगोयमिज्जं ॥ २३ ॥

संथुएत्युत्तरार्द्धं । 'संस्तुतौ' सम्यगभिवन्दितौ 'तौ' उक्तरूपौ 'प्रसीदतां' प्रसादपरौ भवतां भगवत्केशिगौतमाविति सूत्रार्थः । 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः, सम्प्रति नयास्तेऽपि प्राग्वत् ॥ इत्युत्तराध्ययनश्रुतस्कन्धटीकायां श्रीशान्त्याचार्यविरचितायां शिष्यहितायां केशिगौतमीयं नाम त्रयोविंशमध्ययनं समाप्तमिति ॥

इति श्रीशान्त्याचार्यकृतायां शिष्यहितायामुत्तराध्ययनटी० त्रयोविंशमध्ययनं समाप्तम् ॥

इति श्रेष्ठि देवचन्द्र लालभाई–जैनपुस्तकोद्धारे–ग्रन्थाङ्कः ३६.

त्सम्बन्धितया 'मार्गे' पथि 'तत्रे'ति प्रक्रान्ते तत्र वा तिन्दुकोद्याने 'शुभावहे' कल्याणप्रापके मार्गस्य विशेषणमिति सूत्रद्वयार्थः ॥ सम्प्रत्यध्ययनार्थोपसंहारव्याजेन महापुरुषसङ्गमफलमाह—

केसीगोअमओ निच्चं, तम्मि आसि समागमे । सुयसीलसमुक्करिसो, महत्थत्थविणिच्छओ ॥ ८७ ॥

'केसिगौतमत' इति केशिगौतमावाश्रित्य 'नित्यं' सदा तत्पूर्वावस्थानापेक्षया 'तस्मिन्' प्रक्रान्तस्थाने आसीत् 'समागमे' मीलके, किमासीदित्याह—श्रुत—श्रुतज्ञानं शील—चारित्रं तयोः समुत्कर्षः—प्रकर्षः श्रुतशीलसमुत्कर्षः, तथा महार्थाः—महाप्रयोजना मुक्तिसाधकत्वेन येऽर्थाः—शिक्षाव्रतादयस्तेषां विनिश्चयो—विशिष्टो निर्णयो महार्थार्थविनिश्चयः, तच्छिष्याणामिति गम्यते, 'केसि'त्ति सुब्लोपात्केशेर्वा गौतमतः गौतमगणधरापेक्षयाऽपकर्षवत् श्रुतादिमत्त्वादित्थमुक्तम्, इदं तु क्वचिद् दृष्टमिति व्याख्यातमिति सूत्रार्थः ॥ शेषपर्षदो यदभूत्तदाह—

तोसिआ परिसा सव्वा, सम्मग्गं समुवट्ठिया ।

'तोषिता' परितोषं नीता 'परिषत्' सदेवमनुजासुरा सभा 'सर्वा' निरवशेषा 'सन्मार्गं' मुक्तिपथमनुष्ठातुमिति गम्यते, 'समुपस्थिता' पाठान्तरतः 'पर्युपस्थिता' वा उभयत्रोद्यता, अनेन चान्या पर्षत्फलमाह ॥ इत्थं सद्भूतगुणगर्भसच्चरित्रवर्णनद्वारेण तयोः स्तवनमुक्त्वा प्रणिधानमाह—

निक्खेवेत्यादि गाथाश्चतस्रः, निक्षेपः प्रवचने चतुर्विधो–नामादिः, तत्र नामस्थापने क्षुण्णे एवेत्यनादृत्य द्रव्यनिक्षेपमाह–द्विविधो भवति 'द्रव्ये' विचार्ये, निक्षेप इति गम्यते, द्वैविध्यमेवाह–आगमतो नोआगमतः, तत्रागमतो ज्ञाता तत्र चानुपयोगवान्, नोआगमतस्तु स त्रिविधः। कथमित्याह–'जाणगसरीरभविए तव्वतिरित्ते य'त्ति, ज्ञशरीरभव्यशरीरे प्रक्रमात्प्रवचने तद्व्यतिरिक्तं 'कुतित्थिमाईसु'त्ति कुतीर्थ्यादिषु प्रवचनमादिशब्दात्सुतीर्थेषु च ऋषभादिसम्बन्धिषु पुस्तकादिन्यस्तं भाष्यमाणं वा, भावे 'द्वादशाङ्गम्' आचारादिदृष्टिवादपर्यन्तं गणिनः–आचार्यास्तेषां पिटकमिव पिटकं–सर्वस्वाऽऽधारो गणिपिटकं 'भवति' ज्ञातव्यं प्रवचनं, नन्वेवं दृष्टिवादान्तर्गतत्वात्सकलकुदृष्टीनामपि भावप्रवचनतैव प्राप्ता?, उच्यते, अस्त्येतत्, किन्त्वेकपक्षावधारणपरतयाऽसद्दृष्टित्वाद्द्रव्यप्रवचनतैवाऽऽसामिति नोक्तदोषापत्तिः॥ मातशब्दं निक्षेप्तुमाह—'माते' मातशब्दे 'तुः' पूरणे निक्षेपश्चतुर्विधो–नामादिः, द्विविधो भवति द्रव्ये–आगमनोआगमतः, तत्रागमतस्तथैव, नोआगमतश्च स त्रिविधो–ज्ञशरीरभव्यशरीरे तद्व्यतिरिक्तं च 'भाजने' कांस्यपात्रादौ 'द्रव्यम्' मोदकादि, प्रस्तावाद्यत्र मातम्—अन्तः प्राप्तावस्थिति तद्द्रव्यं मातमुच्यते, भावे च 'समितयः' ईर्यासमित्यादयो माता अभिधीयन्ते 'मातम्' अन्तरवस्थितं 'खलु' निश्चितं 'प्रवचनं' द्वादशाङ्गं 'यत्र' इति यासु। तदेवं निर्युक्तिकृता मातशब्दो निक्षिप्तः, यदा तु 'माय'त्ति पदस्य मातर इति संस्कारस्तदा द्रव्यमातरो

## अथ चतुर्विंशतितममध्ययनं प्रवचनमात्राख्यम् ।

व्याख्यातं त्रयोविंशमध्ययनं, सम्प्रति चतुर्विंशमारभ्यते, अस्य चायमभिसम्बन्धः —अनन्तराध्ययने परेषामपि चित्तविप्लुतिमुपलभ्य तदपनयनाय केशिगौतमवद्यतितव्यमित्युक्तम्, इह तु तदपनयनं सम्यग्वाग्योगत एव, स च प्रवचनमातृस्वरूपपरिज्ञानत इति तत्स्वरूपमुच्यत इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य चोपक्रमादिचतुरनुयोगद्वारचर्चा प्राग्वत्तावत्कर्तव्या यावन्नामनिष्पन्ननिक्षेपे प्रवचनमातृ प्रवचनमातमिति वा द्विपदं नाम, तत्र तावत्प्रवचननिक्षेपाभिधानायाह निर्युक्तिकृत्—

निक्खेवु पवयणंमि(य)चउव्विहो दुविहो य होइ दव्वंमि । आगमनोआगमओ नोआगमओ अ सो तिविहो
जाणगसरीरभविए तव्वइरित्ते कुतित्थिमाईसु । भावे दुवालसंगं गणिपिडगं होइ नायव्वं ॥ ४५६ ॥
मायंमि उ निक्खेवो चउव्विहो दुविहो० ॥ ४५७ ॥
जाणगसरीरभविए तव्वइरित्ते अ भायणे दव्वं । भावंमि अ समिईओ माय खलु पवयणं जत्थ ४५८

विऊणं गोपुररत्थाइसु परियडइ, तं न णिहालेयव्वं, तं णिहालियं रुसइ, जो पुण तं निहालेति सो विणस्सइ, जो पुण विच्छिऊण अहोमुहो ठाइ सो रोगाओ मुच्चइ, राया भणति–अलाहि एएण अइरोसणेणंति । विइओ भणति–महच्चयं भूयं महतिमहालयं रूवं विउव्वति, लंबोयरं विवृतकुक्षिं पंचशिरं एगपादं विसिहं विस्सरुवं अट्टट्टहासं मुयंतं गायंतं पणच्चंतं, तं विकृतरूपं दट्ठूणं जो पहसति पवंचेति वा तस्स सत्तहा सिरं फुट्टइ, जो पुण तं सुहाहिं वायाहिं अभिणंदति धूवपुप्फाईहिं पूएइ सो सव्वहाऽऽमयातो मुच्चइ, राया भणइ—अलमेएणंपि । ततितो भणइ—ममवि एवंविहमेव णातिविसेसकरं भूयमत्थि, प्रियाप्रियकारिणं दरिसणादेव रोगेहिंतो मोचयति, एवं होउत्ति, तेण तहा-कए असिवं उवसंतं । एवं साधूवि असारूप्यत्वे सति शब्दादिप्रतिकूलत्वे च परेहिं परिभूयमाणो पवंचिज्जमाणो

---

निभालयति स विनश्यति, यस्तं प्रेक्ष्याधोमुखस्तिष्ठति स रोगान्मुच्यते, राजा भणति–अलमेतेनातिरोषणेनेति । द्वितीयो भणति–मामकीनो भूतो महातिमहालयं रूपं विकुर्वेति, लम्बोदरं विवृतकुक्षि पञ्चशिरस्कमेकपादं विशिखं विस्वरूपं ( विश्वरूपम् ) अट्टाट्टहासं मुञ्चत् गायत् प्रणृत्यत् , तं विकृतरूपं दृष्ट्वा यः प्रहसति प्रवञ्चयते वा तस्य सप्तधा शिरः स्फुटति, यः पुनस्तं शुभाभिर्वाग्भिरभिनन्दति धूपपुष्पादिभिः पूजयति स सर्वथाऽऽमयात् मुच्यते, राजा भणति–अलमेतेनापि । तृतीयो भणति–ममाप्येवंविध एव, नातिविशेषकरः भूतोऽस्ति, प्रियाप्रियकारिणं दर्शनादेव रोगेभ्यो मोचयति, एवं भवत्विति, तेन तथा कृते अशिवमुपशान्तम् । एवं साधुरपि असारूप्यत्वे सति शब्दादिप्रतिकूलत्वे च परैः परिभूयमानः प्रवञ्चयमानो हस्यमानो वा स्तूयमानो वा पूज्यमानो वा तत् प्रियाप्रियं सहेत १

जन्यो भावमातरस्तु समितय , एताभ्य प्रवचनप्रसवात्, उक्तं हि–"एया पवयणमाया दुवालसंग पसूयातो 'त्ति, गुप्तानत्वाग एतन्निक्षेप उपेक्षित इति गाथाचतुष्टयार्थ ॥ सम्प्रति नामान्वर्थमाह—

अट्ठसुवि समिईसु अ दुवालसंगं समोअरइ जम्हा । तम्हा पवयणमायाअज्झयणं होइ नायव्वं ४५२

'अष्टास्वपि' अष्टसङ्ख्यास्वपि समितिषु 'द्वादशाङ्गं' प्रवचनं समवतरति–समवैति यस्मात्, तासु तदभिधीयत इति गम्यते, तस्मात्प्रवचनमाता प्रवचनमातरो वोपचारत इदमध्ययन 'भवति' ज्ञातव्यमिति गाथार्थ ॥ गतो नामनिष्पन्नो निक्षेप , सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपावसर , स च सूत्रे सति भवतीति सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

अट्ठप्पवयणमायाओ, समिई गुत्ती तहेव य । पंचेव य समिईओ, तओ गुत्तीउ आहिया ॥ १ ॥ इरियाभासेसणादाणे, उच्चारे समिई इय । मणगुत्ती वयगुत्ती, कायगुत्ती उ अट्ठमा ॥ २ ॥ एयाओ अट्ठ समिईओ, समासेण वियाहिया । दुवालसंगं जिणक्खाय, मायं जत्थ उ पवयणं ॥ ३ ॥

सूत्रत्रय प्रकटार्थमेव, नवर 'समिति'त्ति समितय 'गुत्ति'त्ति गुप्तय , तत्र च समिति –सम्यक्–सर्वविदागमानुसारितया इति –आत्मन चेष्टा समिति तान्त्रिकी सञ्ज्ञा ईर्यादिचेष्टासु पञ्चसु, गोपन गुप्ति –सम्यग्योगनिग्रह तथैव चेति समुच्चये, उक्तं हि–'सम्यग्योगनिग्रहो गुप्ति रिति(तत्त्वा०अ०९ सू०४), भवन्त्येता प्रवचनमाता , अष्टसङ्ख्यत्व

१ क्वचि: प्रवचनमातरो द्वादशाङ्गप्रसूता

तु कथमासामिति संशये समितीना पञ्चत्वं गुप्तीना च त्रिकत्वमुक्तम् 'आहिया' इति आख्याताः—कथिताः, तीर्थकृदादिभिरिति गम्यते, ता एव नामग्राहमाह—ईरणमीर्या—गतिपरिणामो भाषणं भाषा एषणमेषो—गवेषणं तं करोतीति णिच् ततः स्त्रीलिङ्गे भावे युटि एषणा आदानं—ग्रहणं पात्रादेः निक्षेपोपलक्षणमेतत् तत एषां समाहारे ईर्याभाषैषणादानं तस्मिन्, 'उच्चारे समिई इय'त्ति चस्य भिन्नक्रमत्वादुच्चारशब्दस्य चोपलक्षणत्वादुच्चारादिपरिष्ठापनायां च समितिः, अस्य च प्रत्येकमभिसम्बन्धादीर्यासमितिरित्यादिरभिलापो विधेयः, 'इति' परिसमाप्तौ, एतावत्य एव समितयः, तथा मनसो गुप्तिर्मनोगुप्तिरिति तत्पुरुषः, एवमुत्तरयोरपि, निगमनमाह—'एताः' इत्यनन्तरोक्ताभिधाना अष्ट समितयो, गुप्तीनामपि 'प्रवचनविधिना मार्गव्यवस्थापनमुन्मार्गगमननिवारणं गुप्ति'रिति वचनात्कथञ्चित्सचेष्टात्मकत्वात्समितिशब्दवाच्यत्वमस्तीत्येनमुपन्यासः, यत्तु भेदेनोपादानं तत्समितीनां प्रवीचाररूपत्वेन गुप्तीनां प्रवीचाराप्रवीचारात्मकत्वेनान्योऽन्यं कथञ्चिद्भेदात्, तथा चागमः—"समिओ णियमा गुत्तो गुत्तो समियत्तणंमि भइयव्वो । कुसलवइमुदीरंतो जं वइगुत्तोऽवि समिओऽवि ॥ १ ॥" 'समासेन' सकलागमसङ्क्षेपेण व्याख्याताः, जिनाख्यातं मातम् उत्तरत्र तुशब्दस्यैवकारार्थस्य भिन्नक्रमत्वात् 'मातमेव' अन्तर्भूतमेव 'यत्र' इति यासु 'प्रवचनम्' आगमः, तथाहि—ईर्यासमितौ प्राणातिपातविरमणव्रतमवतरति, तद्वृत्तिकल्पानि च शेषव्रतानि तत्रैवान्त-

१ समितो नियमाद्गुप्तो गुप्तः समितत्वे भक्तव्यः । कुशलवच उदीरयन् यद्वचोगुप्तोऽपि समितोऽपि ॥ १ ॥

र्भावमुपयान्ति, तेषु च न तदस्ति यत्र समवतरति, यत उक्तम्—"पंढमंमि सव्वजीवा बीए चरिमे य सव्वदव्वाइं। सेसा महव्वया खलु तदेक्कदेसेण णायव्वा ॥ १ ॥" इत्यर्थत सर्वमपि प्रवचनमिह मातमुच्यते, भाषासमितिस्तु सावद्यवचनपरिहारतो निरवद्यवचोभाषणात्मिका तया च वचनपर्याय सकलोऽप्याक्षिप्त एव,न च तद्बहिर्भूत द्वादशाङ्गमस्ति, एवमेषणासमित्यादिष्वपि सुधिया भावनीय, यद्वा सर्वा अप्यमूश्चारित्ररूपा, ज्ञानदर्शनाविनाभावि च चारित्र, न चैतत्रयातिरिक्तमन्यदर्थतो द्वादशाङ्गमिति सर्वास्वप्येतासु प्रवचन मातमुच्यते, अन्यथा वाऽऽगमाविरोधेनाभिधेयमिति सूत्रत्रयार्थ ॥ तत्रेर्यासमितिस्वरूपमाह—

आलंबणेण कालेण, मग्गेण जयणाइ य। चउकारणपरिसुद्ध, संजए इरियं रिए ॥ ४ ॥ तत्थ आलंबणं नाण, दंसण चरण तहा। काले य दिवसे वुत्ते, मग्गे उप्पहवज्जिए ॥ ५ ॥ दव्वओ खित्तओ चेव, कालओ भावओ तहा। जयणा चउव्विहा वुत्ता, त मे कित्तयओ सुण ॥ ६ ॥ दव्वओ चक्खुसा पेहे, जुगमित्तं च खित्तओ। कालओ जाव रीइज्जा, उवउत्तो य भावओ ॥ ७ ॥ इदियत्थे विवज्जित्ता, सज्झायं चेव पंचहा। तम्मुत्ती तप्पुरक्कारे, उवउत्ते रियं रिए ॥ ८ ॥

आलम्बनेन कालेन मार्गेण यतनया च चतुष्कारणे—एभिरेवालम्बनादिभि परिशुद्धा–निर्दोषा चतुष्कारणपरि-

१ प्रथमे सर्वजीवा द्वितीये चरमे च सर्वद्रव्याणि। शेषाणि महाव्रतानि तदेकदेश एव ज्ञातव्यानि ॥ १ ॥

शुद्धा तां 'संयतः' यतिः 'इर्यां' गतिं 'रिये'त्ति रीयेत अनुष्ठानविषयतया प्राप्नुयात्, यद्वा सुव्यत्ययाच्चतुष्कारणपरिशुद्धया ईर्यया 'रीयेत' गच्छेत् । आलम्बनादीन्येव व्याख्यातुमाह—'तत्र' तेष्वालम्बनादिषु मध्ये आलम्बनं यदालम्ब्य गमनमनुज्ञायते, निरालम्बनस्य हि नानुज्ञातमेव गमनं, तत्किमित्याह—'ज्ञानं' सूत्रार्थोभयात्मकागमरूपं 'दर्शनं' दर्शनप्रयोजनं (शास्त्रं) 'चरणं' चारित्रं, तथाशब्दोऽनुक्तसमुच्चयार्थः, तेन द्वित्रादिभङ्गसूचकः, ततोऽयमर्थः—प्रत्येकं ज्ञानादीन्याश्रित्य द्विकादिसंयोगतो वा गमनमनुज्ञातम्, आलम्बनेनेति व्याख्यातं, कालेनेति व्याचष्टे—कालश्च प्रस्तावादीर्याया दिवस उक्तः, तीर्थकृदादिभिरिति गम्यते, रात्रौ ह्यचक्षुर्विषयत्वेन पुष्टतरालम्बनं विना नानुज्ञातमेव गमनं, मार्गेणेति द्वारं व्याख्यातुमाह—मार्ग इह सामान्येन पन्थाः स उत्पथेन—उन्मार्गेण वार्जितो—रहित उत्पथवर्जित उक्त इति सम्बन्धः, उत्पथे हि व्रजत आत्मसंयमविराधनादयो दोषाः । यतनेति बुबूर्षुराह—'दव्वतो' इत्यादि, सुगममेव, नवरं 'ताम्' इति चतुर्विधयतनां मे 'कीर्त्तयतः' सम्यक्स्वरूपाभिधानद्वारेण संशब्दयतः 'शृणु' आकर्णय शिष्येति गम्यते । यथाप्रतिज्ञातमेवाह—'द्रव्यत' इति जीवादिकं द्रव्यमाश्रित्येयं यतना—यत् 'चक्षुषा' दृष्ट्वा 'प्रेक्षेत' अवलोकयेत्, प्रक्रमाज्जीवादिकं द्रव्यम्, अवलोक्य च संयमात्मविराधनापरिहारेण गच्छेदिति भावः, 'युगमात्रं च' चतुर्हस्तप्रमाणं प्रस्तावात्क्षेत्रं प्रेक्षेत, इयं क्षेत्रतो यतना, कालतो यतना यावत् 'रीयिज'त्ति रीयते यावन्तं कालं पर्यटन्ति तावत्कालमानेति गम्यते, उपयुक्तश्च भावतो—दत्तावधानो यदी-

यते, इय भावमङ्गीकृत्य यतना । उपयुक्तत्वमेव स्पष्टयितुमाह—'इन्द्रियार्थान्' शब्दादीन् 'विवर्ज्य' तदनध्यवसानत परिहृत्य, स्वाध्याय चैव 'च' समुच्चये एवकारोऽपिशब्दार्थ, ततोऽयमर्थ—न केवलमिन्द्रियार्थान् विवर्ज्य किन्तु स्वाध्याय चापि 'पञ्चधे'ति वाचनादिभेदत पञ्चप्रकार, गत्युपयोगोपघातित्वात्, ततश्च तस्यामेवेर्याया मूर्त्ति—शरीरमर्थादीर्याप्रियमाणा यस्यासौ तन्मूर्त्ति, तथा तामेव पुरस्करोति–तत्रैवोपयुक्ततया प्राधान्येनाङ्गीकुरुत इति तत्पुरस्कार, अनेन कायमनसोस्तत्परतोक्ता, वचसो हि तत्र व्यापार एव न समस्ति, एवमुपयुक्त सन्नीर्यां रीयेत यतिरिति शेप, सर्वत्र च सयमात्मविराधनैव विपक्षे दोप इति सूत्रपञ्चकार्थ ॥ सम्प्रति भापासमितिमाह—

कोहे माणे य माया य, लोभे य उवउत्तया । हासे भय मोहरिए, विगहासु तहेव य ॥ ९ ॥

एयाइ अट्ठ ठाणाइ, परिवज्जित्तु सजओ । असावज्ज मिय काले, भास भासिज्ज पन्नव ॥ १० ॥

क्रोधे माने च मायाया लोभे च 'उपयुक्तता' क्रोधाद्युपयोगपरता तदेका यतनेतियावत्, हासे 'भय'त्ति भये मौखर्ये विकथासु तथैवोपयुक्ततेति सम्बन्ध, तत्र क्रोधे यथा कश्चिदतिकुपित पिता प्राह–न त्वं मम पुत्र, पार्श्ववर्त्तिनो वा प्रति प्राह—बध्नीत बध्नीतैनमित्यादि, माने यथा कश्चिदभिमानाध्मातचेता न कश्चिन्मम जात्यादिभिस्तुल्य इति वक्ति, मायाया यथा परव्यसनार्थमपरिचितस्थानवर्त्ती सुतादौ भणति–नाथ मम पुत्रो न चाहमस्य पितेत्यादि, लोभे यथा कश्चिद्वणिक् परकीयमपि भाण्डादिकमात्मीयमभिधत्ते, हासे यथा केलीकिलतया कञ्चन तथाविध कुलीनम

प्यकुलीनमित्युल्लपति, भये यथा तथाविधमकार्यमाचर्य स त्वं येन तत्तदाचरितमिति पृष्टः प्राह—नाहं तदाऽस्मिन् देशे एवाभूवमित्यादि, मौखर्ये यथा मुखरतया यत्तत्परपरिवादादि वदन्नास्ते, 'विकथासु' स्त्र्यादिकथासु—'अहो! कटाक्षविक्षेपास्तस्याः' इत्यादिकमाह, पठ्यते च—"कोहे य माणे य माया य लोभे य तहेव य। हासभयमोहरीए, विकहा य तहेव य॥ १॥" गतार्थमेव। 'एतानि' अनन्तरमुक्तरूपाण्यष्टौ स्थानानि 'परिवर्ज्य' परिहृत्य संयतः किमित्याह—'असावद्यां' निर्दोषां तामपि 'मितां' स्तोकां यावत्युपयुज्यते तावतीमेव 'काले' प्रस्तावे 'भाषां' वाचं 'भाषेत' वदेत् प्रज्ञा—बुद्धिस्तद्वानिति सूत्रद्वयार्थः॥ एषणासमितिमाह—

गवेसणाए गहणे य, परिभोगेसणा य जा। आहारोवहिसिज्जाए, एए तिन्नि विसोहए॥ ११॥

उग्गमुप्पायणं पढमे, बीए सोहिज्ज एसणं। परिभोगंमि चउक्कं, विसोहिज्ज जयं जई॥ १२॥

'गवेषणायाम्' अन्वेषणायां 'ग्रहणे च' स्वीकारे, उभयत्र प्राकृतत्वादेषणेति संबध्यते, ततो गवेषणायामेषणा ग्रहणे चैषणा, परिभोग—आसेवनं तद्विषयैषणा परिभोगैषणा च या, 'आहारोवहिसेज्जाए'त्ति वचनव्यत्ययाद् 'आहारोपधिशय्यासु' प्रतीतासु 'एताः' उक्तरूपा एषणाः सूत्रत्वाल्लिङ्गव्यत्ययात्तिस्रः 'विशोधयेत्' निर्दोषा विदध्यात्, पठ्यते च—"गवेसणाए गहणेणं, परिभोगेसणाणि य। आहरमुवहिं सेज्जं, एए तिन्नि विसोहिय॥ १॥"त्ति, अस्य च गवेषणादिभिराहारादीनि त्रीणि विशोधयेदिति सङ्क्षेपार्थः। कथं विशोधयेदित्याह—उद्गमश्चोत्पादना चोद्गमो-

त्पादनमिति समाहार , तत्किमित्याह–विशोधयेदित्युत्तरेण सम्बन्ध , किमुक्त भवति ?–आधाकर्मादिदोपपरिहारत उद्गम धात्र्यादिदोपपरित्यागतश्चोत्पादना शुद्धामादधीत 'पढमे'त्ति प्रथमाया गवेपणैपणाया, 'बीय'त्ति द्वितीयाया ग्रहणैपणाया शोधयेच्छङ्कितादिदोपत्यागत 'एपणा' ग्रहणकालभाविग्राह्यगतदोपान्वेपणात्मिका, 'परिभोग' इति परिभोगैपणाया चतुष्क पिण्डशय्यावस्त्रपात्रात्मकम्, उक्त हि–पिंड सेज्ज च वत्थ च, चउत्थ पायमेव य"त्ति, विशोधयेत्, इह चतुष्कशब्देन तद्विपय उपभोग उपलक्षित , ततस्त विशोधयेदिति, कोऽर्थ ?—उद्गमादिदोपत्यागत शुद्धमेव चतुष्क परिभुञ्जीत, यद्विोद्गमादीना दोपोपलक्षणत्वात् 'उग्गम'त्ति उद्गमदोपान् 'उप्पायण'ति उत्पादनादोपान् 'एसण'त्ति एपणादोपान् विशोधयेत्, 'चतुष्क च' सयोजनाप्रमाणाङ्गारधूमकारणात्मकम्, अङ्गारधूमयोर्मोहनीयान्तर्गतत्वेनैकतया विवक्षितत्वात् विशोधयेत् उभयत्र शोधनमपनयन, 'जय'ति यतमान 'यति' तपस्वी, व्याख्याद्वयेऽपि च पुनस्तस्या एव क्रियाया अभिधानमतिशयख्यापनार्थमिति सूत्रद्वयार्थ ॥ इदानीमादाननिक्षेपणसमितिमाह—

ओहोवहोवग्गहिय, भडय दुविह मुणी । गिण्हतो निक्खिवतो य, पउजिज्ज इम विहि ॥ १३ ॥

चक्खुसा पडिलेहित्ता, पमज्जिज्ज जय जई । आदिए निक्खिविज्जा वा, दुहओऽवि समिए सया ॥१४॥

---

१ पिण्ड शय्या च वस्त्र च पात्रमेव च चतुर्थम् ।

'ओहोवहोवग्गहियं'ति उपधिशब्दो मध्यनिर्दिष्टत्वात् डमरुकगुणग्रन्थिवदुभयत्र संबध्यते, तत ओघोपधिमौपग्रहिकोपधिं च 'भाण्डकम्' उपकरणं रजोहरणदण्डकादि 'द्विविधम्' उक्तभेदतो द्विभेदं मुनिः 'गृह्णन्' आददानः 'निक्षिपंश्च' क्वचित्स्थापयन् 'प्रयुञ्जीत' व्यापारयेत् 'इमं' वक्ष्यमाणं 'विधिं' न्यायं। तमेवाह—'चक्षुपा' दृष्ट्वा 'पडिलेहित्त'त्ति 'प्रत्युपेक्ष्य' अवलोक्य 'प्रमार्जयेत्' रजोहरणादिना विशोधयेत् यतमानो यतिस्ततः 'आदिए'त्ति 'आददीत' गृह्णीयात् 'निक्षिपेद्वा' स्थापयेत् 'दुहतोऽवि'त्ति द्वावपि प्रक्रमादौघिकोपग्राहिकोपधी, यद्वा 'द्विधाऽपि' द्रव्यतो भावतश्च 'समितः' प्रक्रमादादाननिक्षेपणासमितिमान् सन् 'सदा' सर्वकालमिति सूत्रद्वयार्थः ॥ सम्प्रति परिष्ठापनासमितिमाह—

उच्चारं पासवणं, खेलं सिंघाण जल्लियं। आहारं उवहिं देहं, अन्नं वावि तहाविहं ॥ १५ ॥ अणावायमसंलोए अणवाए चेव होइ संलोए। आवायमसंलोए आवाए चेव संलोए ॥ १६ ॥ अणवायमसंलोए, परस्सऽणुवघाइए। समे अज्झुसिरे वावि, अचिरकालकयंमि य ॥ १७ ॥ विच्छिन्ने दूरमोगाढे, णासन्ने बिलवज्जिए। तसपाणबीयरहिए, उच्चाराईणि वोसिरे ॥ १८ ॥

'उच्चारं' पुरीपं 'प्रश्रवणं' मूत्रं 'खेलं' मुखविनिर्गतं श्लेष्माणं 'सिंघाणं'ति नासिकानिष्क्रान्तं तमेव 'जल्लियं'ति आर्पत्वात् जल्लो—मलस्तम् 'आहारम्' अशनादिकम् 'उपधिं' वर्पाकल्पादि 'देहं' शरीरम् 'अन्यद्वा' कारणतो गृहीतं

गोमयादि 'अपि' पूरणे तथाविध परिष्ठापनार्हं प्रक्रमात्स्थण्डिले व्युत्सृजेदित्युत्तरेण सम्बन्ध । स्थण्डिल च दशविशेषणपदविशिष्टमिति मनसाधाय तद्गताखिलभङ्गोपलक्षणार्थमाद्यविशेषणपदयोर्भङ्गरचनामाह–अविद्यमान आपात - स्वपरोभयपक्षसमीपागमनरूपोऽस्मिन्नित्यनापात स्थण्डिलमिति गम्यते, 'असलोए'त्ति सूत्रत्वादिहोत्तरत्र च लिङ्गव्यत्यये न विद्यते सलोको–दूरस्थितस्यापि स्वपक्षादेरालोको यस्मिंस्तत्तथेति प्रथमो भङ्ग १, 'अनापात चैव भवति सलोक' यत्रापातो नास्ति सलोकश्चास्तीति द्वितीयो भङ्ग २, 'आपातमसलोक'मिति यत्रापातोऽस्ति न च सलोक इति तृतीय ३, 'आपात चैव सलोक' यत्रोभयमपि सभवतीति चतुर्थ ४, इह चापातसलोकमिति च अर्शआदेराकृतिगणत्वान्मत्वर्थीयेऽचि द्रष्टव्य काका दशविशेषणपदज्ञानार्थं, तानि यादृशे स्थण्डिले व्युत्सृजेत्तदाह–अनापाते असलोके, कस्य पुनरयमापात सलोकश्चेत्याह—'परस्स' स्वपक्षादे, गमकत्वाचोभयत्र सापेक्षत्वेऽपि समास, उपघात —सयमात्मप्रवचनबाधात्मको विद्यते यत्र तदुपघातिक न तथाऽनुपघातिक तस्मिन्, तथा 'समे' निम्नोन्नतत्ववर्जिते 'अशुषिरे वाऽपि' तृणपर्णाद्यनाकीर्णे 'अचिरकालकृते च' दाहादिना स्वल्पकालनिर्वर्त्तिते, चिरकालकृते हि पुन समूर्छन्त्येव पृथ्वीकायादय, 'विस्तीर्णे' जघन्यतोऽपि हस्तप्रमाणे 'दूरमवगाढे' जघन्यतोऽप्यधस्ताच्चतुरङ्गुलमचित्तीभूते 'नासन्ने' ग्रामारामादेर्दूरवर्त्तिनि 'बिलवर्जिते' मूषकादिरन्ध्ररहिते त्रसप्राणाश्च–द्वीन्द्रियादयो बीजानि च—शाल्यादीनि, सकलैकेन्द्रियोपलक्षणमेतत्, तैस्त्रसैराग तुकैश्च रहित–वर्जित त्रसप्राणबीजरहित तस्मिन्,

स्थण्डिल इति शेषः, 'उच्चारादीनि' उक्तरूपाणि 'व्युत्सृजेत्' परिष्ठापयेत्। इह चोच्चारं प्रश्रवणमित्यादावुक्तेऽपि पुनरुच्चारादीनीत्यभिधानं विस्मरणशीलस्मरणार्थमदुष्टमेवेति सूत्रचतुष्टयार्थः ॥ सम्प्रत्युक्तमुपसंहरन् वक्ष्यमाणार्थसम्बन्धाभिधानायाह—

एयाओ पंच समिईओ, समासेण वियाहिया। इत्तो उ तओ गुत्तीओ, वुच्छामि अणुपुव्वसो ॥ १९ ॥

निगदसिद्धं, नवरम् 'एत्तो'त्ति अतश्च समितिप्रतिपादनानन्तरं 'तओ'त्ति तिस्रः 'अणुपुव्वसो'त्ति आर्षत्वादानुपूर्व्या क्रमेणेत्यर्थः ॥ तत्राद्यां मनोगुप्तिमाह—

सच्चा तहेव मोसा य, सच्चामोसा तहेव य। चउत्थी असच्चमोसा य, मणगुत्ती चउव्विहा ॥ २० ॥

संरंभसमारंभे, आरंभे य तहेव य। मणं पवट्टमाणं तु, नियत्तिज्ज जयं जई ॥ २१ ॥

सत्त्यः—अर्थात्पदार्थेभ्यो हितो—यथावद्विकल्पनेनाप्तः सत्यो मनोयोगस्तद्विषया मनोगुप्तिरप्युपचारात्सत्या, तथैव मृषा च—तद्विपरीतमनोयोगविषया, 'सत्यामृषा' उभयात्मकमनोयोगगोचरा, तथैव चेति समुच्चये, चतुर्थी 'असत्यामृषा' उभयस्वभावविकलमनोदलिकव्यापाररूपमनोयोगगोचरा मनोगुप्तिः, प्रक्रमाच्च सर्वत्रैवं योजना, उपसंहारमाह—मनोगुप्तिः 'चतुर्विधा' उक्तभेदतश्चतुर्भेदा, अस्या एव स्वरूपं निरूपयन् काक्कोपदेष्टुमाह—संरम्भः—सङ्कल्पः स च मानसः; तथाऽहं ध्यास्यामि यथाऽसौ मरिष्यतीत्येवंविधः, समारम्भः—परपीडाकरोच्चाटनादिनिबन्धनं ध्यानम्,

हसिज्जमाणो वा तथा थुव्वमाणो वा पूइज्जमाणो वा त प्रियाप्रिय सहेत । अनेन च मनोगुप्त्यभिधानाचारित्रविनय उक्त, इति सूत्रार्थ ॥ १४ ॥ आह—क्रोधासत्यताकरणादिभिरात्मदमनोपाय उक्त, तत्र च बाह्येष्वपि दमनीयेषु सत्सु किमिति तस्यैव दमनोपाय उद्दिश्यते? किं वा तद्दमने फलमिति, अत्रोच्यते—

अप्पामेव दमेयव्वो,अप्पा हु खलु दुद्दमो।अप्पा दंतो सुही होइ, अस्सि लोए परत्थ य ॥१५॥ (सूत्रम्)

व्याख्या—अतति-सन्तत गच्छति शुद्धिसङ्क्लेशात्मकपरिणामान्तराणीत्यात्मा तमेव 'दमयेत्' इन्द्रियनोइन्द्रियदमेन मनोज्ञेतरविषयेषु रागद्वेषवशतो दुष्टगजमिवोन्मार्गगामिन स्वय विवेकाङ्कुशेनोपशमन नयेत्, पठन्ति च—'अप्पा चेव दमेयव्वो'त्ति स्पष्ट, किमेवमुपदिश्यत इत्याह—आत्मैव, हुशब्दस्यैवकारार्थत्वात् 'खलु' इति यस्मात् 'दुर्दम' दुर्जय, ततस्तद्दमने दमिता एव बाह्यदमनीया इति, न तद्दमनमुपदिश्यत इति भाव, उक्त हि—"सव्वमप्पे जिए जिय", क पुनरेष गुण इत्याह—आत्मा 'दान्त' उपशममानीत, सुखमस्यास्तीति सुखी, भवति, क?—'अस्मिन्' इत्यनुभूयमानायुषि विनेयाध्यक्षे 'लोके' भवे 'परत्र च' इत्यागामिनि भवान्तरे, दान्ताऽऽत्मानो हि परमर्षय इहैव सुरैरपि पूज्यन्ते, अदान्ताऽऽत्मानस्तु चौरपारदारिकादयो विनश्यन्ति, तथा—"सद्देण मओ रूवेण पयगो महुयरो (य) गधेण। आहारेण य मच्छो वज्झइ फरिसेण य गइदो ॥१॥" तद्विपर्ययतस्तु—इह परत्र च नन्दन्ति, तत्र

१ सर्वमात्मनि जिते जितम्। २ शब्देन मृगो रूपेण पतङ्गो मधुकरश्च गन्धेन। आहारेण च मत्स्यो बध्यते स्पर्शेन च गजेन्द्र ॥ १ ॥

'स्थाने' ऊर्द्धस्थाने 'णिसीयणि'त्ति 'निषदने' उपवेशने, चः तयोरेव विचित्रभेदसमुच्चयार्थः, 'एव' इति पूरणे, तथैव च 'त्वग्वर्त्तने' शयने 'उल्लङ्घने' तथाविधनिमित्तत ऊर्ध्वभूमिकाद्युत्क्रमणे गर्त्ताद्यतिक्रमणे वा 'प्रलङ्घने' सामान्येन गमने, उभयत्र सूत्रत्वात्सुपो लुक्, 'इन्द्रियाणां च' स्पर्शनादीनां 'जुंजणे'त्ति योजनं-शब्दादिविषयेषु व्यापारणं तस्मिन्, सर्वत्र च वर्त्तमान इति शेषः, ततः स्थानादिषु वर्त्तमानः संरम्भः-अभिघातो यष्टिमुष्ट्यादिसंस्थानमेव सङ्कल्पसूचकमुपचारात्सङ्कल्पशब्दवाच्यं सत् समारम्भः—परितापकरो मुष्ट्याद्यभिघातः, ततः संरम्भश्च समारम्भश्च संरम्भसमारम्भं तस्मिन्, 'आरम्भे' प्राणिवधात्मनि कायं प्रवर्त्तमानं निवर्त्तयेत्, शेषं प्राग्वदिति सूत्रद्वयार्थः ॥ सम्प्रति समितिगुप्त्योः परस्परविशेषं स्वयं सूत्रकृदाह—

एयाओ पंच समिईओ, चरणस्स य पवत्तणे। गुत्ती नियत्तणेऽवुत्ता, असुभत्थेसु य सव्वसो ॥ २६ ॥

'एताः' अनन्तरोक्ताः पञ्च समितयश्चरणं-चारित्रं सच्चेष्टेतियावत् तस्य प्रवर्त्तने पूर्वत्र चशब्दस्य भिन्नक्रमत्वादवधारणार्थत्वाच्च प्रवर्त्तन एव, किमुक्तं भवति ?—सच्चेष्टासु प्रवृत्तावेव समितयः, तथा 'गुत्ती'त्ति गुप्तयो निवर्त्तनेऽप्युक्ताः 'अशुभार्थेभ्यः' अशोभनमनोयोगादिभ्यः, सूत्रे तु सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमी, 'सव्वसो'त्ति सर्वेभ्योऽपि-शब्दाच्चरणप्रवर्त्तने च, उपलक्षणं चैतत् शुभार्थेभ्योऽपि निवृत्तेः, वाक्काययोर्निर्व्यापारताया अपि गुप्तिरूपत्वात्, उक्तं हि गन्धहस्तिना—"सम्यगागमानुसारेणारक्तद्विष्टपरिणतिसहचरितमनोव्यापारः कायव्यापारो वाग्व्यापारश्च

जनयो समाहारस्तस्मिन्, आरम्भ –अत्यन्तक्लेशत परप्राणापहारक्षममशुभध्यानमेव तस्मिन् 'च' समुच्चये 'तथैव' तेनैवागमप्रतीतेन तत्र मनसोऽसन्निवेशात्मकेन प्रकारेण 'च' पूरणे 'मन' चित्त 'प्रवर्त्तमान' व्याप्रियमाण 'तु' विशेषणे 'निवर्त्तयेत्' नियमयेत् 'जय'ति यतमान 'यति' तपस्वी । विशेषश्चायमिह–शुभसङ्कल्पेषु मन प्रवर्त्तयेत्, प्रवीचाराप्रवीचाररूपत्वाद्गुप्तेरिति सूत्रद्वयार्थं ॥ वाग्गुप्तिमाह—

सच्चा तहेव मोसा य, सच्चामोसा तहेव य । चउत्थी असच्चमोसा य, वयगुत्ती चउव्विहा ॥ २२ ॥

संरम्भसमारम्भे, आरम्भे य तहेव य । वय पवत्तमाण तु, नियत्तिज्ज जय जई ॥ २३ ॥

सूत्रद्वयमनन्तर व्याख्यातमेव, नवर मनोगुप्तिस्थाने वाग्गुप्तिरुच्चारयितव्या, तथा सत्या वाक् जीव जीवमिति प्ररूपयत असत्या जीवमजीवमिति सत्यामृषा कचिद्विवक्षितसमये मनुष्यशतमुत्पन्नमुपरत चेति असत्यामृषा तु विधेहि स्वाध्याय नैतत्सदृशमन्यत्तपोऽस्तीत्यादि, तथा वाचिक सरम्भ –परव्यापादनक्षमक्षुद्रविद्यादिपरावर्त्तनास-ङ्कल्पसूचको ध्वनिरेवोपचारात्सङ्कल्पशब्दवाच्य सन्, समारम्भ –परपरितापकरमन्त्रादिपरावर्त्तनम् 'आरम्भ' तथा-विधसक्लेशत प्राणिना प्राणव्यपरोपणक्षममन्त्रादिजपनमिति सूत्रद्वयार्थं ॥ इदानी कायगुप्तिमभिधातुमाह—

ठाणे निसीयणे चेव, तहेव य तुयट्टणे । उल्लघण पल्लघण, इंदियाण [illegible] जुंजणे ॥ २४ ॥

संरम्भसमारम्भे, आरम्भे य तहेव य । काय पवत्तमाण तु, नियत्तिज्ज जय जई ॥ २५ ॥

# अथ यज्ञीयाख्यं पञ्चविंशतितममध्ययनम् ।

व्याख्यातं चतुर्विंशमध्ययनम्, अधुना पञ्चविंशमारभ्यते, अस्य चायमभिसम्बन्धः—अनन्तराध्ययने प्रवचनमातरोऽभिहिताः, इह तु ता ब्रह्मगुणस्थितस्यैव तत्त्वतो भवन्तीति जयघोषचरितवर्णनाद्वारेण ब्रह्मगुणा उच्यन्त इत्यनेनाभिसम्बन्धेनायातमिदमध्ययनम्, अस्य चानुयोगद्वारचतुष्टयचर्चा प्राग्वद्यावन्नामनिष्पन्ननिक्षेपे यज्ञीयमिति नामातो यज्ञनिक्षेपायाह निर्युक्तिकृत्—

निक्खेवो जन्नंमि अ चउक्कओ दुविहो य होइ दव्वंमि। आगमनोआगमओ नोआगमओ अ सो तिविहो
जाणगसरीरभविए तव्वइरित्ते अ माहणाईसुं । तवसंजमेसु जयणा भावे जन्नो मुणेयव्वो॥ ४६१ ॥
जयघोसा अणगारा विजयघोसस्स जन्नकिच्चंमि । तत्तो समुट्ठियमिणं अज्झयणं जन्नइज्जंति ॥ ४६२ ॥

निक्षेपो यज्ञे चतुष्कको—नामादिः, द्विविधो भवति द्रव्ये—आगमनोआगमतः, तत्रागमतः प्राग्वत्, नोआगमतश्च 'स' इति यज्ञस्त्रिविधः ज्ञशरीरभव्यशरीरे तद्व्यतिरिक्तश्च, 'माहणाइसु'न्ति माहनादीनां प्रक्रमाद् यज्ञ आदि-

निर्व्यापारता वा वाक्काययोर्गुप्ति"रिति, तदनेन व्यापाराव्यापारात्मिका गुप्तिरुक्तेति सूत्रार्थः ॥ सम्प्रत्यध्ययनार्थ-मुपसंहरन्नेतदाचरणफलमाह—

एया पवयणमाया, जे सम्मं आयरे मुणी । सो खिप्पं सव्वसंसारा, विप्पमुच्चइ पंडिए ॥ २७ ॥ त्तिबेमि ॥

॥ पवयणमायरं अज्झयणं ॥

स्पष्टमेव । नवरं, 'सम्यक्' अवैपरीत्येन न तु दम्भादिनेति सूत्रार्थः ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः, सम्प्रति नयाः, तेऽपि प्राग्वत् ॥ इत्युत्तराध्ययनश्रुतस्कन्धटीकायां श्रीशान्त्याचार्यकृतायां शिष्यहितायां चतुर्विंशमध्ययनं समाप्तमिति ॥ २४ ॥

॥ श्रीशान्त्याचार्यकृतायामुत्तराध्ययनटी० शिष्य० प्रवच० नाम चतुर्विंशतितममध्ययनं समाप्तम् ॥

तं अन्नमन्नघायं जयघोसो पासिऊण पडिबुद्धो । गंगाओ उत्तरिउं समणाणं आगओ वसहिं ॥ ४६८॥
सो समणो पव्वइओ निग्गंथो सव्वगंथउम्मुक्को । वोसिरिऊण असारे केसेहि समं परिक्केसे ॥ ४६९ ॥
पंचमहव्वयजुत्तो पंचिंदिअसंवुडो गुणसमिद्धो । घडणजयणप्पहाणो जाओ समणो समिअपावो ४७०

आसामक्षरार्थः स्पष्ट एव, नवरं 'कासवसगोत्त'त्ति काश्यपकुलोत्पन्नाः काश्यपास्तैः समानं गोत्रं ययोस्तौ काश्यपसगोत्रौ 'छक्कम्मरय'त्ति षट् कर्माणि—यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहात्मकानि तेषु रतौ—आसक्तौ षट्कर्मरतौ, तथा द्वावपि 'यमलौ' युग्मौ उत्पन्नौ 'भाउय'त्ति भ्रातरौ 'संप्रीतौ' विद्यमानसम्यग्बाह्यप्रीती 'अन्योऽन्यमनुरक्तौ' आन्तरप्रीतियोगतः परस्परस्नेहवन्तौ, आगमः—श्रुतिस्मृत्यादिरूपस्तस्मिन् कुशलावागमकुशलौ, अत—एव स्वदाररतौ । 'ण्हाइउं'ति स्नातुं । 'कुररेण' मार्जारनाम्ना पक्षिविशेषेण 'उक्खित्तो'त्ति उत्क्षिप्तः, उत्क्षिप्य च कथं नामासौ म्रियतामिति पातितश्च भूमौ 'अक्कमिउ'न्ति आक्रम्य—अवष्टभ्य । सर्पः कुररवशगतः—कुराधीनतां प्राप्तः 'चिंचियायंतं'ति चिंचिमिति कुर्वन्तं 'चण्डैः' बृहत्खण्डनात्रोटनतोऽत्यन्तरौद्रैः 'ग्रासैः' प्रतीतैः। 'तम्' इत्युक्तरूपमन्योऽन्यघातं—कुररसर्पमण्डूकगतं 'पासिऊणं'ति दृष्ट्वा 'प्रतिबुद्धः' अहो ! दुरन्तोऽयं संसार इत्यादिपरिभावनया अवगततत्त्वः 'सः' इति जयघोषः समनाः—सहृदयो विशिष्टाभोगयुक्त इत्यर्थः 'प्रव्रजितः' हेयधर्मेभ्यो 'निर्ग्रन्थः' ग्रन्थ-

श॰दात्तथाविधनृपत्यादिपरिग्रह , तैर्हि प्राणिहिंसोपलक्षित एवाय क्रियते, तत स भावयज्ञफलाप्रसाधकत्वाद् द्रव्ययन उच्यते, भावयनमाह—'तप संयमेषु' प्रसिद्धेष्वेव 'यतना' तदनुष्ठानादरकरणरूपा भावे यज्ञ 'मुणितव्य' प्रतिनातव्य , अर्हार्थे चाय कृत्य , तत सर्गादियज्ञफलप्रसाधकतयैष एव यन प्रतिज्ञातुमुचितो, न त्वन्य , तस्य प्रत्युतानर्थहेतुत्वात्, जयघोषादनगाराद्विजयघोषस्य 'यज्ञकृत्ये' यज्ञक्रियायामागतात् जातमिति शेष , ततश्च यनस्यैव प्राधान्यविवक्षया 'तत' इति यज्ञात् समुत्थितमिदमध्ययन यज्ञीयमिति, तस्मादुच्यत इति शेष इति गाथाद्वयार्थ ॥ एव तावन्निक्षेप उक्त , सम्प्रत्यनुगमावसर , तत्रोपोद्घातनिर्युक्त्यनुगमान्तर्गत किञ्चिदभिधित्सुराह—

वाणारसिनयरीए दो विप्पा आसि कासवसगुत्ता । धणकणगविउलकोसा छक्कम्मरया चउव्वेया ४६३
दोवि अ जमला भाउअ सपीआ अन्नमन्नमणुरत्ता । जयघोसविजयघोसा आगमकुसला सदाररया ४६४
अह अन्नया कयाई जयघोसो ण्हाइउ गओ गग । अह पिच्छइ मडूक सप्पेण तहिं गसिज्जत ॥४६५॥
सप्पोऽवि अ कुललेण उक्खित्तो पाडिओ य भूमीए। सोऽवि अ कुललो सप्प अक्कमिउ अच्छए तत्थ॥४६६॥
सप्पोऽवि कुललवसगओ मडूक खाइ चिचिआइय। सोऽवि अ कुललो खायइ सप्पं चडेहि गासेहि४६७

माहणकुलसंभूओ, आसि विप्पो महायसो। जायाई जमजन्नंमि, जयघोसत्ति नामओ ॥ १ ॥ इंदियग्गामनिग्गाही, मग्गगामी महामुणी। गामाणुगामं रीयंते, पत्तो वाणारसिं पुरिं ॥२॥ वाणारसीइ बहिया, उज्जाणंमि मणोरमे। फासुएसिज्जसंथारे, तत्थ वासमुवागए ॥ ३ ॥

सूत्रत्रयं प्रायः प्रतीतार्थमेव, नवरं ब्राह्मणकुलसंभूत इत्यन्वयाभिधानं, ब्राह्मणकुलसंभूतोऽपि जननीजात्यन्यथात्वे ब्राह्मणो न स्यादत आह–विप्रः, 'जायाइ'त्ति अवश्यं यायजीति यायाजी, केत्याह–यमाः—प्राणातिपातविरत्यादिरूपाः पञ्च त एव यज्ञो—भावपूजात्मकत्वाद्विवक्षितपूजां प्रति यमयज्ञस्तस्मिन्, विषयसप्तमीयं, गार्हस्थ्यापेक्षया वैतद्व्याख्यायते, तत्र च विप्रो विप्राचारनिरतत्वेन, संभवति हि कश्चित्तत्कुलोत्पन्नोऽप्यन्यथेति विशेषणं, तथा यम इव प्राण्युपसंहारकारितया यमः स चासौ यज्ञश्च यमयज्ञः अर्थाद् द्रव्ययज्ञस्तस्मिन्। इन्द्रियग्रामं—स्पर्शनादिकसमूहं निगृह्णाति—स्वस्वविषयविनिवर्त्तनेन नियमयतीत्येवंशील इन्द्रियग्रामनिग्राही, अत एव 'मार्गगामी' मुक्तिपथयायी 'रीयंति'त्ति रीयमाणो विहरन्। 'वाणारसीय बहिय'त्ति वाणारस्या बहिरिति–बहिर्भागे यदुद्यानम्–उपवनं तस्मिन्निति सूत्रत्रयार्थः ॥ तदा च तत्पुरि यद्वर्त्तते यच्चासौ विधत्ते तदाह—

अह तेणेव कालेणं, पुरीए तत्थ माहणे। विजयघोसत्ति नामेणं, जन्नं जयइ वेयवी ॥ ४ ॥
अह से तत्थ अणगारे, मासक्खमणपारणे। विजयघोसस्स जन्नंमि, भिक्खमट्ठा उवट्ठिए ॥ ५ ॥

रहित , स च बाह्य थरहितोऽपि स्यादत आह–सर्वो–बाह्य आन्तरश्च यो ग्रन्थस्तेनोन्मुक्त सर्वग्रन्थोन्मुक्त ,वक्ष्यमाणश्रमणविशेषणान्येतानि, 'व्युत्सृज्य' त्यक्त्वा 'असारान्' परमार्थालोचनायामप्रधानान् 'केशै.' शिरोरुहै 'सम' सह परिक्लिशयन्तीति परिक्लेशा –प्रस्तावात्पुत्रकलत्रादिसम्बन्धास्तान्। घटन–सयमयोगविषय चेष्टन यतन—तत्रैवोपयुक्तत्व ताभ्या प्रधान —प्रवरो घटजयतनप्रधान 'जात ' भूत 'श्रमण ' तपस्वी शमितानि पापानि–मिथ्यात्वादिपापप्रकृतिरूपाणि येनासौ शमितपाप । भावार्थस्त्वासा सम्प्रदायादवसेय , स चायम्–वाणारसीए नयरीए दो विप्पभायरो यमला आसी जयघोसविजयघोसा, अन्नया जयघोसो ण्हाइउ गओ गग, तत्थ पेच्छइ सप्पेण मडूक गसिज्जंत, सप्पोवि मज्जारेण उच्छित्तो, मज्जारो सप्प अक्कमिउ ठिओ, तथावि सप्पो मडूक चिचियत खायति, मज्जारोवि सप्प चडप्फडत खायति, अन्नमन्न घाय पासित्ता पडिबुद्धो गगमुत्तरिऊण साहुसगासे समणो जातो त्ति । इति गाथाऽक्षरार्थ । इत्यभिहित किञ्चिदुपोद्घातनिर्युक्त्यनुगमान्तर्गत, सम्प्रति सूत्रस्पर्शिकनिर्युक्त्यनुगमावसर , स च सूत्रे सति भवतीति सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

१ वाराणस्या नगर्यां द्वौ विप्रभ्रातरौ यमलावास्ता जयघोषविजयघोषौ, अन्यदा जयघोषः स्नातु गतो गङ्गा, तत्र प्रेक्षते सर्पेण मण्डूक ग्रस्यमान, सर्पोऽपि मार्जारेणोत्क्षिप्त , मार्जार सर्पमाक्रम्य स्थित , तथापि सर्पो मण्डूक चिचिशब्दं कुर्वन्त खादति, मार्जारोऽपि सर्प कम्पमान खादति, अन्योऽन्यघात दृष्ट्वा प्रतिबुद्धो गङ्गामुत्तीर्य साधुसकाशे श्रमणो जात इति ॥

तत्, ततो ये चतुर्दशविद्यास्थानपारगताः, अत एव च ये 'समर्थाः' शक्तिमन्तः समुद्धर्त्तुं भवसमुद्रादिति गम्यते, 'तेसिं'ति सुब्व्यत्ययात् 'तेभ्यः' अनन्तरमुक्तरूपेभ्यः द्विजेभ्यः 'सव्वकामिय'न्ति सर्वाणि कामानि—अभिलषणीयवस्तूनि यस्मिंस्तत्सर्वकाम्यं, यद्वा सर्वकामैर्निर्वृत्तं तत्प्रयोजनं वा सर्वकामिकं, षड्रसोपेतमित्यर्थः, शेषं स्पष्टमिति सूत्रत्रयार्थः ॥ एवमुक्तो मुनिः स कीदृग् जातः ? किं वा कृतवान् ? इत्याह—

सो तत्थ एव पडिसिद्धो, जायगेण महामुणी । नवि रुट्ठो नवि तुट्ठो, उत्तमट्ठगवेसओ ॥ ९ ॥ नण्णट्ठं पाणहेउं वा, नवि निव्वाहणाय वा । तेसिं विमुक्खणट्ठाए, इमं वयणमब्बवी ॥ १० ॥ नवि जाणसि वेयमुहं, नवि जन्नाण जं मुहं । नक्खत्ताण मुहं जं च, जं च धम्माण वा मुहं ॥ ११ ॥ जे समत्था समुद्धत्तुं, परं अप्पाणमेव य । न ते तुमं विजाणासि, अह जाणासि तो भण ॥ १२ ॥

'सः' इति जयघोषनामा 'तत्रे'ति यज्ञे 'एवे'ति एवम्—उक्तप्रकारेण 'प्रतिषिद्धः' निराकृतः, केन ?—'याजकेन' यज्ञकर्त्रा विजयघोषब्राह्मणेन महामुनिर्नापि 'रुष्टः' इति रोषं गतः "[1]बहुं परघरे अत्थि विविहं खाइमसाइमं । न तत्थ पंडिओ कुप्पे, इच्छा दिज्ज परो ण वा ॥ १ ॥" इत्याद्यागमपरिभावनातो, नापि 'तुष्टः' परितोषं प्राप्तः, किन्तु समतयैव स्थित इति भावः, किमित्येवं ?, यत उत्तमार्थो—मोक्षस्तमेव गवेषयते—अन्वेषयते इत्युत्तमार्थगवेषको, मुक्ति

१ बहु परगृहेऽस्ति विविधं खाद्यं स्वाद्यं । न तस्मै पण्डितः कुप्येत् इच्छया परो दद्यान्नवा ॥ १ ॥

'अथे'ति च वक्तव्यतान्तरोपन्यासे 'तेणेव कालेण'त्ति सुव्व्यत्ययात्तस्मिन्नेव काले यत्रासौ वाणारसीमाजगाम, 'वेयवी'ति वेदवित्। 'अथे'ति प्रस्तुतोपन्यासे 'स' जयघोष 'तत्रे'ति यागे 'भिक्खमट्ठ'त्ति मकारोऽलाक्षणिक प्राकृतत्वाद् दीर्घो विन्द्वभावश्च ततो भिक्षार्थम् 'उपस्थित' प्राप्त, पठ्यते च—'भिक्खस्सऽट्ठ'त्ति भैक्ष्यस्यार्थे—भैक्ष्यनिमित्त, शेष सुगममिति सूत्रद्वयावयवार्थ ॥ तत्र च भिक्षार्थमुपस्थिते यदसौ याजक कृतवांस्तदाह—

समुवट्ठिय तहिं सत, जायगो पडिसेहए। न हु दाहामि ते भिक्ख, भिक्खू! जायाहि अन्नओ ॥ ६ ॥ जे य वेयविऊ विप्पा, जन्नट्ठा य जे दिया। जोइसगविऊ जे य, जे य धम्माण पारगा ॥ ७ ॥ जे समत्था समुद्धत्तु, पर अप्पाणमेव य। तेसिमन्नमिण देय, भो भिक्खू! सव्वकामिय ॥ ८ ॥

'समुपस्थित' भिक्षार्थमागत 'याजक' यष्टा स एव विजयघोषनामा ब्राह्मण 'प्रतिषेधति' निराकुरुते यथा 'न हु' नैव दास्यामि 'ते' तुभ्य भिक्षा 'जायाहि'त्ति याचस्व 'अन्यत' अस्मद्व्यतिरिक्तात्। किमित्येवमत आह—'जे विप्पा' इत्यादि, विप्रा जातित 'जण्णट्ठा य'त्ति 'यज्ञार्था' यज्ञप्रयोजना ये तत्रैव व्याप्रियन्ते ये 'द्विजा' सस्कारापेक्षया द्वितीयजन्मानो ज्योतिष—ज्योति शास्त्रमङ्गानि च विदन्ति ये ते ज्योतिषाङ्गविद, अत्र च ज्योतिषस्योपादान प्राधान्यख्यापकम्, अन्यथा हि शिक्षा १ कल्पो २ व्याकरण ३ निरुक्त ४ छन्दोविचिति ५ ज्योतिषमिति ६ षडङ्गानीत्यङ्गग्रहणेनैव तद्गृहीतमिति, धर्माणामुपलक्षणत्वाद् धर्मशास्त्राणा 'पारगा' पर्यन्तगामिन, अशेषविद्यास्थानोपलक्षणमे-

चोदाहरणम्–दो भायरो चोरा, तेसिं उवस्सए साहुणो वासावासं उवागया, तेहिं वासारत्तपरिसमत्तीए गच्छंतेहिं तेसिं चोराणं अन्नं वयं किंचि अपडिवज्जमाणाणं रत्तिं न भोत्तवंति वयं दिण्णं। अन्नया तेहिं उद्दाइएहिं सुबहुयं गोमाहिसं आणियं, तत्थ अन्ने महिसं मारेउं पइउमारद्धा, अन्ने मज्जस्स गया, मंसइत्ता संपहारेन्ति–अद्धगे मंसे विसं पक्खिवामो तो मज्जइत्ताणं दाहामो, तओ अम्हं सुबहुं गोमाहिसं भागेण आगमिस्सइ, मज्जइत्तावि एवं चेव सामत्थेहिंति, एवं तेहिं विसं पक्खित्तं, आइच्चो य अत्थं गतो, ते भायरो न भुत्ता, इयरे परोप्परं विससंजुत्तेण मज्जमंसेण उवभुत्तेण मया, मरिऊण य कुगइं गया, इयरे इह परलोए य सुहभागिणो जाया, एवं ताव जिब्भिंदियदमे,

---

१ द्वौ भ्रातरौ चौरौ, तयोरुपाश्रये साधवो वर्षावासमुपागताः, तैर्वर्षारात्रपरिसमाप्तौ गच्छद्भिस्तयोः चोरयोरन्यत् किञ्चिद्व्रतमप्रतिपद्यमानयो रात्रौ न भोक्तव्यमिति व्रतं दत्तम् । अन्यदा तैरुद्धावितैः सुबहुकं गोमाहिषमानीतं, तत्रान्ये महिषं मारयित्वा पक्तुमारब्धाः, अन्ये मद्याय गताः, मांसीयाः संप्रधारयन्ति–अर्धे मांसे विषं प्रक्षिपामः ततो मद्यीयेभ्यो दास्यामः, ततोऽस्माकं सुबहु गोमाहिषं भागेनागमिष्यति, मद्यीया अपि एवमेव संप्रधारयन्ति, एवं तैर्विषं प्रक्षिप्तम् , आदित्यश्चास्तं गतः, तौ भ्रातरौ न भुक्तौ, इतरे परस्परं विषसंयुक्तेन मद्यमांसेनोपभुक्तेन मृताः, मृत्वा च कुगतिं गताः, इतरौ इह परलोके च सुखभागिनौ जातौ, एवं तावत् जिह्वेन्द्रियदमे, एवं शेषेष्वपीन्द्रियेषु, आत्मा दान्तः सुखी भवति अस्मिन् लोके परत्र च ॥

विनाऽन्यत्र नि स्पृह इतियावत्,'न' नैवान्नम्—ओदनादि तदर्थं, पीयत इति 'कृत्यलुटोऽन्यत्रापी'(पा०३-३-११३) ति वचनात्कर्मणि ल्युटि पानम्—आचाम्लादि तद्धेतु वा—तन्निमित्त वा,नापि 'निर्वाहणाय वा' वस्त्राभ्यङ्गतैलादिना यापनार्थं सर्वत्रात्मन इति गम्यते, किमर्थं तर्हि ? इत्याह—'तेषा' याजकाना 'विमोक्षार्थं' यथा कथ नु नामामी विमुक्तिमाप्नुयुरिति प्रयोजनार्थम् 'इद' वक्ष्यमाण वचनमब्रवीत्, कि तदित्याह—'नवि'त्ति नैव जानासि वेदाना मुख वेदमुख-यत्तेषु प्रधान नापि यज्ञाना यन्मुखम्-उपायो नक्षत्राणा मुख-प्रधान यच, यच धर्माणा वा मुखम्-उपायस्तद्,अनेन तस्य वेदयज्ञज्योतिर्धर्मानभिज्ञत्वमुक्त। सम्प्रति पात्राविज्ञतामाह-'जे' इत्यादि, व्याख्यातप्रायमेव, नवरम्, अथ जानासि ततो भणेत्याक्षेपाभिधानमिति सूत्रचतुष्टयार्थं ॥ एव च तत्राक्षिप्तवति भगवति स किं कृतवानित्याह—

तस्सक्खेवपमुक्खं च, अचयतो तहिं दिओ। सपरिसो पजलीहोउ, पुच्छई त महामुणि ॥ १३ ॥ वेयाण च मुह बूहि, बूहि जन्नाण ज मुह। नक्खत्ताण मुह बूहि, बूहि धम्माण वा मुह ॥ १४ ॥ जे समत्था समुद्धत्तु, पर अप्पाणमेव य। एय मे ससय सव्व, साहू ! कहय पुच्छिओ ॥ १५ ॥

'तस्से'ति मुनेराक्षेप -प्रश्नस्तस्य प्रमोक्ष -प्रतिवचन त 'च' पूरणे 'अचयतो'त्ति अशक्नुवन् दातुमिति गम्यते 'तस्मिन्' इति यज्ञे 'द्विज.' ब्राह्मण 'सपर्षत्' सभाऽन्वित प्रकृतोऽञ्जलि -उभयकरसपुटात्मको येनासौ प्राञ्जलि-

भूत्वा पृच्छति 'त'मिति प्रक्रान्तं महामुनिम्। कथं पृष्टवानित्याह–'वेयाण' इत्यादि, गतार्थमेव, नवरं 'ब्रूहि' व्यक्तमभिधेहि, पुनः पुनर्ब्रूहीत्युच्चारणमत्यादरख्यापनार्थं 'एतद्' उक्तरूपं 'मे' मम संशेतेऽस्मिन् मन इति संशयस्तं–संशयविषयं–वेदमुखादि साधो! कथय पृष्ट इत्युपसंहारवचनमिति सूत्रत्रयार्थः॥ इत्थं पृष्टो मुनिराह—

अग्गिहुत्तमुहा वेया, जन्नट्ठी वेयसा मुहं। नक्खत्ताण मुहं चंदो, धम्माणं कासवो मुहं॥१६॥ जहा चंदं गहाइया, चिट्ठंते पंजलीउडा। वंदमाणा नमंसंता, उत्तमं मणहारिणो॥१७॥ अजाणगा जन्नवाई, विज्जामाहणसंपया। मूढा सज्झायतवसा, भासच्छन्ना इवग्गिणो॥१८॥ जो लोए बंभणो वुत्तो, अग्गी वा महिओ जहा। सदा कुसलसंदिट्ठं, तं वयं बूम माहणं॥ १९॥ जो न सज्जइ आगंतुं, पव्वयंतो न सोअई। रमए अज्जवयणंमि, तं वयं बूम माहणं॥ २०॥ जायरूवं जहामट्ठं, निद्धंतमलपावगं। रागद्दोसभयाईयं, तं वयं बूम माहणं॥ २१॥ [ तवस्सियं किसं दंतं, अवचियमंससोणिअं। सुव्वयं पत्तनिव्वाणं, तं वयं बूम माहणं॥ १॥ ] तसे पाणे वियाणित्ता, संगहेण य थावरे। जो न हिंसइ तिविहेणं, तं वयं बूम माहणं॥ २२॥ कोहा वा जइवा हासा, लोहा वा जइवा भया। मुसं न वयई जो उ, तं वयं बूम माहणं॥ २३॥ चित्तमंतमचित्तं वा, अप्पं वा जइवा बहुं। न गिण्हइ अदत्तं जो, तं वयं बूम माहणं॥ २४॥ दिव्वमाणुस्सतेरिच्छं, जो न

१ इतः प्राग् अधिकेयं गाथा पुस्तकान्तरे

सेवेइ मेहुण। मणसा कायवक्केण, त वय बूम माहण ॥ २५ ॥ जहा पोम्मं जले जाय, नोवलिप्पइ वारिणा। एव अलित्त कामेहिं, त वय बूम माहण ॥ २६ ॥ अलोलुय मुहाजीविं, अणगार अकिंचण। असंसत्तं गिहत्थेहिं, त वय बूम माहण ॥ २७ ॥ पंसुबधा स चवेया, जट्ठ च पावकम्मुणा । न त तायति दुस्सील, कम्माणि बलवंतिए ॥ २८ ॥ नवि मुडिएण समणो, न ॐकारेण बभणो। न मुणी रण्णवासेण, कुसचीरेण न तायसो ॥ २९ ॥ समयाए समणो होइ, बभचेरेण बभणो। नाणेण य मुणी होइ, तवेण होइ तावसो ॥ ३० ॥ कम्मुणा बभणो होइ, कम्मुणा होइ खत्तिओ। वइस्सो कम्मुणा होइ, सुद्दो हवइ कम्मुणा ॥ ३१ ॥ एए पाउकरे बुद्धे, जेहिं होइ सिणायओ। सव्वकम्मविणिम्मुक्क, त वय बूम माहण ॥३२॥ एव गुणसमाउत्ता, जे हवति दिउत्तमा। ते समत्था उ उद्धत्तु, पर अप्पाणमेव य ॥ ३३ ॥

अग्गिहोत्तेत्यादिसूत्राण्यष्टादश प्राय स्पष्टान्येव, नवरम्, अग्निहोत्रम्—अग्निकारिका, सा चेह—"कर्मेन्धन समाश्रित्य, दृढा सद्भावनाहुति । धर्मध्यानाग्निना कार्या, दीक्षितेनाग्निकारिका ॥ १ ॥" इत्यादिरूपा परिगृह्यते, तदेव मुख—प्रधान येषा तेऽग्निहोत्रमुखा वेदा', वेदाना हि दध्यादेरिव नवनीतादि आरण्यकमेव प्रधानम्, उक्तं हि—"नवनीत यथा दध्न' चन्दन मलयादिव। औषधिभ्योऽमृत यद्वद्वेदेष्वारण्यक तथा ॥१॥" तत्र च दशप्रकार एव

१ मत्यन्तरे गाथेहाधिकेक्ष्यते

धर्म उक्तः, तथा च तद्वचः—"सत्यं तपः सन्तोषः संयमश्चारित्रमार्जवं क्षमा धृतिः श्रद्धाऽहिंसेत्येतद्दशविधमिह धामे"ति, तत्र च धामशब्देन धर्म एव विवक्षितः, एतदनुवाद्युक्तरूपमेवाग्निहोत्रमिति, तथा यज्ञः प्रस्तावाद्भावयज्ञस्तदर्थी 'वेयसि'त्ति वेदेन हेतुनाऽस्यति—अशुभानि कर्माणि क्षिपतीति निरुक्तविधिना वेदसो—यागः, उक्तं च—निर्घण्टे—"अध्वरो वेषो वेषो मखो वेदा वितथः" इत्यादि, तेषां मुखम्—उपायः, ते हि सत्येव यज्ञार्थिनि प्रवर्त्तन्त इति। नक्षत्राणां 'मुखं' प्रधानं चन्द्रः, तस्यैव तदधिपतित्वात्। धर्माणां 'काश्यपः' भगवानृषभदेवः 'मुखम्' उपायः कारणात्मकः, तस्यैवादितत्प्ररूपकत्वात्, तथा चारण्यकम्—"ऋषभ एव भगवान् ब्रह्मा, तेन भगवता ब्रह्मणा स्वयमेव चीर्णानि ब्रह्माणि, यदा च तपसा प्राप्तः पदं यद् ब्रह्मकेवलं तदा च ब्रह्मर्षिणा प्रणीतानि, कानि पुनस्तानि ब्रह्माणि?" इत्यादि, किञ्च—भवतां ब्रह्माण्डपुराणमेव सर्गादिपुराणलक्षणोपेतत्वात्सकलपुराणज्येष्ठम्, उक्तञ्च—"नवनीतं यथा दध्नश्चन्दनं मलयादिव। ब्रह्माण्डं वै पुराणेभ्यस्तथा प्राहुर्मनीषिणः ॥१॥" तद्वचस्त्विदम्—"इह हि इक्ष्वाकुकुलवंशोद्भवेन नाभिसुतेन मरुदेव्या नन्दनेन महादेवेन ऋषभेण दशप्रकारो धर्मः स्वयमेव चीर्णः, केवलज्ञानलम्भाच्च महर्षिणो ये परमेष्ठिनो वीतरागाः स्नातका निर्ग्रन्था नैष्ठिकास्तेषां प्रवर्त्तित आख्यातः प्रणीतस्त्रेतायामादा"वित्यादि, काश्यपस्यैव माहात्म्यख्यापनतो धर्ममुखत्वं समर्थयितुमाह—यथा चन्द्रं ग्रहादिकाः, आदिशब्दान्नक्षत्रादिपरिग्रहः, 'पंजलीउड'त्ति प्राग्वत्कृतप्राञ्जलयस्तु 'वन्दमानाः' स्तुवन्तो 'नमसन्तो' नमस्कुर्वन्तः 'उत्तमं' प्रधानं 'मनोहारिणः'

अतिविनीततया प्रभुचित्ताक्षेपकारिणस्तिष्ठन्तीति सम्बन्ध , तथैनमपि भगवन्त देवेन्द्रप्रमुखा समस्तसुरासुरमनुजसमूहा इत्युपस्कार , पठ्यते च–जहा चदे गहाईए, चिट्ठती पजलीउडा । णमसमाणा वदती, उद्धत्तमणहारिणो ॥१॥"त्ति, अत्र यथा 'चन्द्रे' चन्द्रविषये ग्रहादिकास्तिष्ठन्तीति(न्ति) प्राञ्जलिपुटा , कोऽर्थ ?—तदायत्तै(त्ताए)वासते, अन्यच—नमस्य त प्रक्रमात्तमेव 'वन्दन्ते' स्तुवन्ति, अनेन तेषा भक्तियुक्तितामाह, 'वंदंतीउद्धत्त'त्ति सन्धिप्रयोगेण इतिश दा तर्भावादितीत्येव प्रक्रमात्काश्यप तिष्ठ ति प्राञ्जलिपुटास्त च नमस्यन्तो वन्दन्ते, के इत्याह—'उद्धत्तमणहारिणो'त्ति औद्धत्यम्–अहङ्कारस्तत्प्रधान मन औद्धत्यमनस्तद्धरणशीला औद्धत्यमनोहारिण —अत्यन्तशान्तचित्तवृत्तयो, यतय इत्यर्थ , पूर्वापरनिपातस्यात्रातन्त्रत्वेन वा मनऔद्धत्यहारिण , औद्धत्यग्रहण चास्यैव सकलदोषमूलत्वात्, पठन्ति च—'उद्धत्तमणगारिणो'त्ति अत्र चोद्धर्त्तुम्–उत्क्षेप्तु भवपङ्कमग्नमात्मानमिति गम्यते, अगारिणो–गृहिणस्तद्विपरीता अनगारिणो–यतय ,क्रियाकारकयोजना प्राग्वत्, इह च धर्मार्थिनामेव अभ्यर्हितत्वात् काश्यपो धर्ममुखमित्यभिप्राय । अनेन प्रश्नचतुष्टयप्रतिवचनमुक्त, सम्प्रति पञ्चम प्रश्नमधिकृत्याह–'अजाणग'त्ति अज्ञा न तत्त्ववेदिन इत्युक्त भवति, के ते ?–यज्ञवादिनो ये भवत पात्रत्वेनाभिमता , कासामित्याह—'विज्जामाहणसपय'त्ति सूत्रत्वात्सुव्यत्यय 'विद्याब्राह्मणसम्पदा' तत्र च विद्यते–ज्ञायत आभिस्तत्त्वमिति विद्या–आरण्यकब्रह्माण्डपुराणात्मिकास्ता एव ब्राह्मणसम्पदो विद्याब्राह्मणसम्पद , तात्त्विकब्राह्मणाना हि निष्किञ्चनत्वेन विद्या एव सम्पद , तद्वि-

ज्ञत्वे च कथमेते बृहदारण्यकाद्युक्तदशविधधर्मवेदिनो यागमेवं कुर्युः ?, तथा 'मूढाः' मोहवन्तः 'सज्झायत-
वस्स'त्ति सुव्यत्ययात्स्वाध्यायतपःसु तत्त्वतस्तत्स्वरूपापरिज्ञानाद्, अत एव 'भासच्छन्ना इवऽग्गिणो'त्ति इवशब्दस्य
भिन्नक्रमत्वाद्भस्मच्छन्ना अग्नय इव,ते हि बहिरुपशमभाज आभान्ति, अथ चान्तः कषायवत्तया ज्वलिताः, पठ्यते च-
'गूढा सज्झायतवस्स'त्ति तत्र च 'गूढाः' बहिः संवृतिमन्तः, केन हेतुना ?-'स्वाध्यायतपसा' वेदाध्ययनोपवासादिना-
ऽन्तश्च भस्मच्छन्नाग्नितुल्याः, एवं च न तत्त्वतो भवदभिमतब्राह्मणानां ब्राह्मण्यं, तदभावाच्चात्मनः परस्य चोद्धरणेन
पात्रत्वं दूरापास्तमेवेति भावः । कस्तर्हि भवदभिप्रायेण ब्राह्मणो ? यः पात्रमित्याह-'यः' इत्यनिर्दिष्टस्वरूपः 'लोके'
जगति ब्राह्मणः 'उक्तः' प्रतिपादितः कुशलैरिति गम्यते, 'अग्गी वा महितो जह'त्ति वेति पूरणे यथेत्यौपम्ये
भिन्नक्रमश्च, ततो यथाऽग्निर्यत्तदोर्नित्याभिसम्बन्धात्तथा 'महितः' पूजितः सन् 'सदा' सर्वकालम्, उपसंहारमाह-
कुशलैः-तत्त्वाभिज्ञैः संदिष्टः-कथितः कुशलसन्दिष्टस्तं 'तम्' इत्युक्तरूपं वयं ब्रूमो ब्राह्मणं, यदेव हि लोके विज्ञो-
पदिष्टं तदेव वस्त्वभ्युपगमार्हमिति भावः । इत उत्तरसूत्रैर्यादृशोऽसौ कुशलसन्दिष्टस्तत्स्वरूपमेव क्वचित्कथञ्चिदनुव-
दन् स्वाभिमतं ब्राह्मणमाह-यो न स्वजनेनाभिष्वङ्गं करोति 'आगन्तुं' प्राप्तुं स्वजनादिस्थानमिति गम्यते, आगतो
वा, ततः 'प्रव्रजन्' स्थानान्तरं गच्छन्न शोचते, यथा-कथमहममुना विना भविष्यामीति, तत एव रमते आर्याणां-
तीर्थकृतां वचनमार्यवचनम्-आगमस्तस्मिन्, किमुक्तं भवति ?-सर्वत्र निःस्पृहत्वेनागमार्थानुष्ठानपरतया तत्र रति-

मान् भवति, यद्वा यो न सजत्यागन्तु प्रव्रज्यापर्यायाद्गार्हस्थ्यपर्यायमिति गम्यते, तथा 'प्रव्रजन्' प्रव्रज्या गृह्णन् न शोचते–न खिद्यते, किन्त्विदमेव मनुजजन्मफलमिति मन्यमान स रमसैवाभिनिष्क्रामति, शेष तथैव, व्याख्याद्वयेऽपि च नि स्पृहतैवोच्यते। तथा 'जातरूप' स्वर्णं ततो जातरूपमिव जातरूपं, स कीदृश सन् ?–महामट्ठ'ति मकारस्यालाक्षणिकत्वान्महानर्थ –प्रयोजन मुक्तिरूपमस्येति महार्थो, जातरूपस्य त्वर्थो विषघातादि, तथा 'निद्धतमलपावक' निध्मातं–भस्मीकृत ततो निध्मातमिव निध्मात मल इवात्मनो विशुद्धस्वरूपघातितया पापमेव पापक येनासौ निध्मातमलपापको, जातरूप तु प्राकृतत्वात् पावकेन–अग्निना निध्मातो मल —किट्टात्मकोऽस्येति पावकनिध्मातमलम्, अन्यच्च–रागश्च–प्रतिबन्धात्मको द्वेषश्च–अप्रीतिरूपो भय च–इहलोकभयादि रागद्वेषभयानि तान्यतीतो–निष्क्रान्तो रागद्वेषभयातीतो रागादिरहित इत्यर्थ , सर्वत्र लिङ्गव्यत्यय प्राग्वत्, पठ्यते च–'जायरूव जहामट्ठ'ति 'यथे'त्यौपम्ये आमृष्ट–तेज प्रकर्षारोपणाय मन शिलादिना समन्तात्परामृष्टम्, अनेन जातरूपस्य बाह्यो गुण उक्तः, पावकनिध्मातमलमिति चान्तर, ततो जातरूपवद्बाह्यान्तरगुणान्वित , अत एव रागाद्यतीतश्च यस्त वय ब्रूमो ब्राह्मणम्। किञ्च–त्रसप्राणिनो विज्ञाय 'सङ्ग्रहेण' सङ्क्षेपेण चशब्दाद्विस्तरेण च, तथा 'स्थावरान्' पृथिव्यादीन्, यद्वा सगृह्यत इति सङ्ग्रहो–वर्षाकल्पादिस्तेन हेतुना, जीवरक्षार्थत्वात्तस्य, च–शब्दो भिन्नक्रम , तत एव स्थावराश्च, पठ्यते च–'सगहेण सथावरे'त्ति 'सस्थावरान्' स्थावरसहितान् यो 'न हिनस्ति'

न व्यपरोपयति 'एतान्' अनन्तरमुक्तरूपान् 'तुः' पूरणे, पठ्यते च–'विविधेन' मनोवाक्कायरूपतया योगेनेति गम्यते, तं वयं ब्रूमो ब्राह्मणं, तथा चारण्यकेऽप्युक्तम्–"यदा न कुरुते पापं, सर्वभूतेषु दारुणम्। कर्मणा मनसा वाचा, ब्रह्म सम्पद्यते तदा ॥ १ ॥" तथा क्रोधादिभ्यो मृषा न वदति यस्तु तं वयं ब्रूमो ब्राह्मणम्, इह च मानस्य क्रोधो मायायाश्च लोभ उपलक्षणं, प्रायस्तत्सहचरितत्वात्तयोः, तथा च तत्राप्यवाचि–"यदा सर्वानृतं त्यक्तं, मिथ्याभाषा विवर्जिता। अनवद्यं च भाषेत, ब्रह्म सम्पद्यते तदा ॥ १ ॥" किञ्च—"अश्वमेधसहस्रं च, सत्यं च तुलया धृतम्। अश्वमेधसहस्राद्धि, सत्यमेव विशिष्यते ॥ १ ॥" इति 'चित्तवत्' द्विपदादि 'अचित्तं च' स्वर्णादि 'अल्पं वा' सङ्ख्यया प्रमाणेन च स्तोकं यदिवा 'बहुं' ताभ्यामेव प्रचुरं न गृह्णाति 'अदत्तम्' अनिसृष्टं यस्तं वयं ब्रूमो ब्राह्मणं, तथा च तत्राप्युक्तम्–"परद्रव्यं यदा दृष्ट्वा, आकुले ह्यथवा रहे। धर्मकामो न गृह्णाति, ब्रह्म सम्पद्यते तदा ॥ १ ॥" अन्यच्च–दिव्यविषयत्वाद्दिव्यं मानुषविषयत्वान्मानुषं तिर्यक्षु भवं तैरश्चमेषां समाहारो दिव्यमानुषतैरश्चं यो न सेवते मैथुनं 'मनसा' चित्तेन कायश्च–शरीरं वाक्यं च–वचनं कायवाक्यं तेन तं वयं ब्रूमो ब्राह्मणं, तथा च तत्राप्युक्तम्–"देवमानुषतिर्यक्षु, मैथुनं वर्जयेद्यदा। कामरागविरक्तश्च, ब्रह्म सम्पद्यते तदा ॥ १ ॥"। अपि च–यथा 'पद्मं' कमलं जले उपलक्षणत्वाज्जलमध्ये 'जातम्' उत्पन्नं तत्परित्यागत उपरि व्यवस्थानतः 'नोपलिप्यते' न श्लिष्यते 'वारिणा' जलेन, 'एव'मिति पद्मवत् 'अलित्त'त्ति अलिप्तः–अश्लिष्टः काम्यमानत्वात् कामैः–मनोज्ञैः शब्दादिभिरावाल्यात्

तैरेव वृद्धिं नीयमानतया तन्मध्योत्पन्नोऽपि यस्त वय ब्रूमो ब्राह्मण, तथा च तत्राप्यभिधायि—"यदा सर्वं परित्यज्य, निस्सङ्गो निष्परिग्रह । निश्चिन्तश्च चरेद्धर्म, ब्रह्म सम्पद्यते तदा ॥ १ ॥" इति । इत्थ मूलगुणयोगात्तात्त्विक ब्राह्मणमभिधायोत्तरगुणयोगतस्तमेवाह—( ग्रन्थाग्रम् १३००० ) 'अलोलुपम्' आहारादिष्वलम्पट 'मुहाजीवि'त्ति सुब्व्यत्ययात् 'मुधाजीविनम्' अज्ञातोञ्छमात्रवृत्तिं, पठ्यते च—'मुहाजीवि'त्ति अनगारमकिञ्चन प्राग्वत् 'असंसक्तम्' असम्बद्ध, कै ?—गृहस्थै , तृतीयार्थे सप्तमी विपयसप्तमी वा, अनेन काका पिण्डविशुद्धिरूपोत्तरगुणयुक्तत्वमुक्त, 'तम्' उक्तगुणयुक्तमप्येवविध सन्त वय ब्रूमो ब्राह्मण, क्वचित् पठ्यते च—'जहित्ता पुव्वसजोग, णाइसगे य बधवे । जो न सज्जइ भोएहिं, त वय बूम बभण ॥' अत्र 'पूर्वसयोग' मात्रादिसम्बन्ध 'ज्ञातिसयोगान्' स्वस्त्रादिसम्बन्धान्, च—शब्दो भिन्नक्रमस्तत 'बान्धवांश्च' भ्रात्रादीन्, शेप स्पष्टम्, अनेन चातिनि स्पृहताभिधानेनोत्तरगुणा अप्याक्षिप्ता भवन्ति । स्यादेतद्—वेदाध्ययन यजन च भवत्रायकमिति तद्योगादेव पात्रभूतो ब्राह्मणो न तु यथा त्वयोक्त इत्याशङ्क्याह—पशूना—छागाना बन्धो—विनाशाय नियमन यैर्हेतुभिस्तेऽमी पशुबन्धा 'श्वेत छागमालभेत वायव्या दिशि भूतिकाम' इत्यादिवाक्योपलक्षिता , पाठान्तरत पशवो बद्धा यैस्ते आहिताग्न्यादेराकृतिगणत्वात् क्तान्तस्य परनिपाते पशुबद्धा , न तु ये 'आत्मा वारे ज्ञातव्यो मन्तव्यो निदिध्यासितव्य ' इत्यादिवाक्योपलक्षिता 'सर्ववेदा ' ऋग्वेदादय 'जट्ठं'ति इष्ट यजन 'वा' समुच्चये 'पापकर्मणा' पापहेतुभूतपशुबन्धाद्यनुष्ठानेन तु हरिकेशीयाध्ययनोक्त-

विधिनेतिभावः, किमित्याह—'न' नैव 'त'मिति प्रक्रमाद्वेदाध्येतारं यष्टारं वा 'त्रायन्ते' रक्षन्ति भवादिति गम्यते, किंविशिष्टं?—'दुःशीलं' ताभ्यामेव हिंसादिप्रवर्त्तनेन दुराचारं, किमिति?—यतः 'कर्माणि' ज्ञानावरणादीनि 'बलवन्ति' दुर्गतिनयनं प्रति समर्थानि 'इहे'ति भवदवगमविषये वेदाध्ययने यजने च भवन्तीति गम्यते, पशुबन्धादिप्रवर्त्तनेन तयोस्तद्बलाधायकत्वादिति भावः, अनेन दुर्गतिहेतुत्वात्स्वर्गहेतुत्वमप्यनयोः प्रत्युक्तम्, उक्तं हि—"यूपं छित्त्वा पशुं हत्वा, कृत्वा रुधिरकर्दमम्। यद्येवं प्राप्यते स्वर्गो, नरके केन गम्यते? ॥१॥" अतो नैतद्योगाद्ब्राह्मणः पात्रभूतो भवति, किन्त्वनन्तराभिहितगुण एवेति भावः। अन्यच्च—नेति निषेधे 'अपिः' पूरणे 'मुण्डितेन' केशापनयनात्मकेन समं मनोऽस्येति निरुक्तविधिना श्रमणः—निर्ग्रन्थः, 'न' नैव ॐकारो(रेणो)पलक्षणत्वाद् 'ॐभूर्भुवःस्व'रित्याद्युच्चारणरूपेण ब्राह्मणः, तथा न मुनिररण्यवासेन, कुशो—दर्भविशेषस्तन्मयं चीवरं कुशचीवरं, वल्कलोपलक्षणमेतत्, तेन तापसः, अनूदितं चैतद्वाचकैः—"मुण्डनात् श्रमणो नैव, संस्काराद्ब्राह्मणो न वा। मुनिर्नारण्यवासित्वाद्वल्कलान्न च तापसो ॥१॥" भवतीति सर्वत्र शेषः। कथममी तर्हि संभवन्तीत्याह—'समतया' रागद्वेषाभावरूपया श्रमणो भवति, ब्रह्मणश्चरणं ब्रह्मचर्यं, ब्रह्म च द्विधा, यत उक्तम्—"द्वे ब्रह्मणी वेदितव्ये, शब्दब्रह्मपरं च यत्। शब्दब्रह्मणि निष्णातः, परं ब्रह्माधिगच्छति ॥१॥" एतानि च पराणि ब्रह्माणि वरिष्ठानि यानि प्रागहिंसादीन्युक्तानीति, एतद्रूपमेवेह ब्रह्मोच्यते, तेन ब्राह्मणो भवति, 'ज्ञानेन' हिताहितावगमरूपेण मुनिर्भवति 'तपसा'

एव सेसेसुवि इदिएसु, 'अप्पा दतो सुही होइ, अस्सि लोए परत्थ य' इति सूत्रार्थ ॥ १५ ॥ किं पुन परिभावयन्नात्मान दमयेदित्याह—

वर मे अप्पा दतो, सजमेण तवेण य । माऽह परेहि दम्मतो, बधणेहि वहेहि य ॥१६॥ (सूत्रम्)

व्याख्या—'वर' प्रधान 'मे' मया 'आत्मा' अभिहितरूपस्तदाधाररूपो वा देह, 'दान्त' इति दम ग्राहित असमञ्जसचेष्टातो व्यावर्तित, केन हेतुना ?–'सयमेन' पञ्चाश्रवविरमणादिना, 'तपसा च' अनशनादिना, चशब्दो द्वयोरप्यनपेक्षितया मुक्तिहेतुताविरहात् परस्परसापेक्षतासूचनार्थं सम्यग्ज्ञानसमुच्चयार्थो वा, विपर्यये दोषदर्शनायाह–'मा' प्राग्वत्, 'अहम्' इत्यात्मनिर्देश, 'परै' आत्मव्यतिरिक्तै 'दम्मतो'त्ति आर्षत्वाद्दमित, कै ?–'बन्धनै' वर्धादिविरचितैर्मयूरबन्धादिभि 'वधैश्च' लतालकुटादिताडनै, अत्रोदाहरण सेयणओ गधहत्थी–अडवीए हत्थिजूह महल्ल परिवसइ, तत्थ जूहवती जाए जाए गयकलभए विणासेइ, तत्थेगा करिणी आवण्णसत्ता चितेइ–जइ कहचि गयकलभतो जायइ, सोऽवि एतेण विणासिज्जिहित्तिकाउ लगती ओसरइ, जूहाहिवेण जूहे छुब्भइ, पुणो

१ सेचनको गन्धहस्ती, अटव्या हस्तियूथ महत् परिवसति, तत्र यूथपतिर्जातान् जातान् गजकलभकान् विनाशयति, तत्रैका करिणी आपन्नसत्त्वा चिन्तयति—यदि कथञ्चिद् गजकलभको जायते (जनिष्यते) सोऽप्येतेन विनङ्क्ष्यते इतिकृत्वा शनै शनै (खञ्जन्ती)अवसर्पति, यूथाधिपेन यूथे क्षिप्यते, पुनरपसर्पति, ततो द्वितीयतृतीयदिवसे यूथेन मिलति, तत एकमप्याश्रमपद दृष्ट, सा तत्राश्रिता, परिचिताश्चानया

एवं तु संसए छिन्ने, विजयघोसे य बंभणे। समुदाय तओ तं तु, जयघोसं महामुणिं ॥ ३४ ॥ तुट्ठे य विजयघोसे, इणमुदाहु कयंजली। माहणत्तं जहाभूयं, सुट्ठु मे उवदंसियं ॥ ३५ ॥ तुब्भे जइया जन्नाणं, तुब्भे वेयविदो विऊ। जोइसंगविऊ तुब्भे, तुब्भे धम्माण पारगा ॥ ३६ ॥ तुब्भे समत्था उद्धत्तुं, परं अप्पाणमेव य। तमणुग्गहं करेहऽम्हं, भिक्खू णं भिक्खुउत्तमा ॥ ३७ ॥

सूत्रचतुष्टयं प्रतीतार्थम्, 'एवम्' उक्तप्रकारेण 'तुः' वाक्यान्तरोपन्यासे 'संशये' प्रागभिहितरूपे 'छिन्ने' अपनीते 'विजयघोषः' विजयघोषनामा 'चः' पूरणे 'ब्राह्मणः' माहणः पठ्यते च—'माहने' 'समुदाय'त्ति आर्षत्वात् 'समादाय' सम्यग् गृहीत्वाऽवधार्येति योऽर्थः 'तयं'ति तकां प्रक्रमाज्जयघोषवाचं, 'तं तु' त्ति तं च जयघोषं महामुनिं, यथैष मम भ्राता एष एव च महामुनिरिति, किं कृतवानित्याह—'तुट्ठे'इत्यादि, केचित्त्वनन्तरसूत्रे तृतीयपादमेवं पठन्ति—'संजाणंतो तओ तं तु' अत्र च 'संजानन्' स एवायं मम सोदर्य इति प्रत्यभिजानन्, युक्तं चैतद्, यतो वक्ष्यति सूत्रस्पर्शिकनिर्युक्तौ—'संजाणंतो भणई जयघोसं जायगो विजयघोसो'त्ति, तथा 'तुष्टः' परितोषितः 'चः' पूरणे विजयघोषः 'इदं' वक्ष्यमाणम् 'उदाहु'त्ति 'उदाह' ब्रूते, तत्कालापेक्षया वर्त्तमानता, कृताञ्जलिः प्राग्वत्, यदाह तद्दर्शयति—ब्राह्मणत्वं 'यथाभूतं' यथाऽवस्थितं सु इति—शोभनं यथा भवत्येवं तिष्ठन्तीति सुष्ठु, औणादिकः कुप्रत्ययः, 'मे' मम 'उपदर्शितम्' इति प्रकटितम्। किञ्च—यूयं 'जइय'त्ति यष्टारो यज्ञानां, यूयं 'वेदविदः' वेदज्ञाः

वाह्याभ्यन्तरभेदभिन्नेन भवति तापस , सर्वत्राभिधानान्यथाऽनुपपत्तिरिह हेतु , ननु चान्वर्थवत्वेऽभिधानस्यैष हेतु , तच्चान्यथाऽपि डित्थादिवत्स्यादत आह–'कर्मणा' क्रियया ब्राह्मणो भवति, उक्त हि–"क्षमा दान दमो ध्यानं, सत्य शौच धृतिर्घृ(दया घृ)णा। ज्ञानविज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ॥१॥" तथा 'कर्मणा' क्षतत्राणलक्षणेन भवति क्षत्रिय , वैश्य 'कर्मणा' कृपिपाशुपाल्यादिना भवति, शूद्रो भवति तु 'कर्मणा' शोचनादिहेतुप्रैषादिसंपादनरूपेण, कर्माभावे हि ब्राह्मणादिव्यपदेशा नाऽऽसन्नेवेति, ब्राह्मणप्रक्रमेऽपि यच्छेषाभिधान तन्मा भून्निरनुक्रोशतेति व्याप्ति दर्शनार्थं, किञ्च–भवन्मतेऽप्युक्तम्—"एकवर्णमिद सर्वं, पूर्वमासीद्युधिष्ठिर ! । क्रियाकर्मविभागेन, चातुर्वर्ण्यं व्यवस्थितम् ॥ १ ॥" किमिद स्वमनीषिकयैवोच्यते इत्याह–'एतान्' अनन्तरोक्तानहिंसाद्यर्थान् 'प्रादुरकार्षीत्' प्रकटितवान् 'बुद्ध ' अवगततत्त्व , पठ्यते च–'एए पाउकरा धम्मा' 'एते' उक्तरूपा 'प्रादुष्करा ' नैर्मल्यकारितयाऽऽत्मन प्रकाशहेतव 'धर्मा ' अहिंसादयो, यैर्भवति 'स्नातक ' केवली सर्वकर्मभिर्विनिर्मुक्त , इह च प्रत्यासन्नमुक्तितया सर्वकर्मविनिर्मुक्त ,सुव्व्यत्ययात्प्रथमार्थे द्वितीया,'त'मित्यभिहितगुण तत्वत स्नातक वा वय ब्रूमो ब्राह्मणम् । सम्प्रत्युपसंहर्तुमाह–'एवम्' उक्तप्रकारेण गुणै –अहिंसादिभि समायुक्ता –समन्विता गुणसमायुक्ता ये भवन्ति 'द्विजोत्तमा ' ब्राह्मणप्रधानास्ते 'समर्था ' शक्ता 'तु ' पूरणे उद्धर्तुं ससारादिति गम्यते अर्थान्मुक्तिपदे व्यवस्थापयितु 'परम्' आत्मव्यतिरिक्तमात्मानमेव वेत्यष्टादशसूत्रगर्भार्थः ॥ अभिधाय चेदमवस्थितो भगवान् , ततश्च—

भवा—मनुष्यभवादयः, अन्यत्प्राग्वत्, 'दीर्घे' आयते 'संसारसागरे' भवसमुद्रे, अनेन च विपर्ययदोष उक्तः । एतदेव समर्थयितुमाह—'उपलेपः' कर्मोपचयरूपो भवति 'भोगेसु' शब्दादिषु भुज्यमानेष्विति गम्यते, भोगी—शब्दादिभोगवान्न तथाऽभोगी 'न' नैव 'उपलिप्यते' कर्मणोपदिह्यते, ततश्च भोगी भ्रमति संसारे अभोगी विप्रमुच्यते, मुक्तो भवतीत्यर्थः, इह च गृहस्थभावे भोगित्वं निष्क्रमणे तु तदभाव इति गृहिभावस्य सदोपत्वान्निष्क्रमणमेव युक्तमित्युक्तं भवति । यथा भोगेपूपलेपस्तदभावे चान्यथात्वं तथा दृष्टान्तद्वारेण दर्शयितुमाह—'उल्लो'त्ति आर्द्रः शुष्कश्च—अनार्द्रो द्वावुभौ 'छूढ'त्ति क्षिप्तौ 'गोलकौ' पिण्डकौ मृत्तिकामयौ, द्वावपि 'आपतितौ' प्राप्तौ 'कुड्ये' भित्तौ, ततः किमित्याह—य आर्द्रः सो 'अत्रे'त्यनयोर्मध्ये 'लगति' श्लिष्यति प्रक्रमात्कुड्ये । दार्ष्टान्तिकयोजनामाह—एवं लगन्ति प्रस्तावात्कर्मणा 'दुर्मेधसः' दुर्बुद्धयो ये नराः 'कामलालसाः' विपयलम्पटाः, विरक्तास्तुशब्दस्य पुनरर्थत्वात्कामभोगपराङ्मुखाः पुनर्न लगन्ति, उत्तरत्र तुशब्दस्य भिन्नक्रमत्वेनैवकारार्थतया च नैव कर्मणा संश्लिष्यन्ते यथा शुष्को गोलकः, इह चान्वयानन्तरं व्यतिरेकः सुखेनैव बुध्यत इति तमुक्त्वा प्रथममुत्क्षिप्तस्यापि दृष्टान्तस्य पश्चादभिधानमिति सूत्रचतुष्टयार्थः ॥ यदित्थं प्रज्ञापितोऽसौ कृतवांस्तदाह—

एवं से विजयघोसे, जयघोसस्स अंतिए । अणगारस्स निक्खंतो, धम्मं सुचा अणुत्तरं ॥ ४२ ॥

'एवम्' उक्तप्रकारेण स विजयघोपो ब्राह्मणो जयघोपस्य 'अन्तिके' समीपे 'अनगारस्य' यतेः 'निष्क्रान्तः' प्रव्र-

'विदु'त्ति विद्वास , यद्वा हे 'विद ' यथाऽवस्थितवस्तुवेदिनो !, ज्योतिपाङ्गविदो यूय, यूय 'धर्माणा' सदाचाराणा पारगा , भवतामेव तत्त्ववेत्तृत्वेन सर्वशास्त्रवारिधिपारदर्शित्वान्निर्वाहितसदाचारत्वाचेत्यभिप्राय , तथा यूयं समर्था उद्धर्तु परमात्मानमेव च, युष्माकमेव तात्त्विकगुणसमन्वितत्वात्, 'तत्' तस्माद् 'अनुग्रह' भिक्षाग्रहणेनोपकार 'कुरुत' विधत्तास्माक 'भिक्षो !' तपस्विन् ! णमिति वाक्यालङ्कारे 'भिक्षूत्तम' यतिप्रधान !, यदिवा भिक्षूणामुत्तमेति सम्बन्ध 'भिक्षु त्ति भिक्षो ! इति सूत्रचतुष्टयार्थ ॥ एव ब्राह्मणेनोक्ते मुनिराह—

न कज्ज मज्झ भिक्खेण, खिप्प निक्खमसू दिया । मा भमिहिसि भयावत्ते, घोरे ससारसागरे ॥ ३८ ॥ उवलेवो होइ भोगेसु, अभोगी नोवलिप्पई । भोगी भमइ ससारे, अभोगी विप्पमुच्चई ॥ ३९ ॥ उल्लो सुक्खो य दो छूढा, गोलया मट्टियामया । दो वि आवडिया कुड्डे, जो उल्लो सोऽत्थ लग्गई ॥ ४० ॥ एव लग्गति दुम्मेहा, जे नरा कामलालसा । विरत्ता उ न लग्गति, जहा से सुक्कगोलए ॥ ४१ ॥

'ने'त्यादि सूत्रचतुष्टयम् , 'न कार्य' न प्रयोजन मम 'भिक्खेण'ति भिक्षया समुदानेन, किन्तु 'क्षिप्र' शीघ्रं 'निष्क्राम' प्रव्रज 'द्विज !' ब्राह्मण !, भवन्निष्क्रमणेनैव मम कार्यमिति भाव , किमेवमुपदिश्यते इत्याह—'मा भ्रमी ' मा पर्यटी , आर्षत्वाच्च सूत्रे लुट प्रयोग , यदिवा मा भ्रमीष्यसीत्यपि न दुष्ट, यतो माङि लुङुक्तोऽय तु मा, भयानि—इहलोकभयादीनि आवर्त्ता इव आवर्त्ता यस्मिन्नसौ भयावर्त्तस्तत्र 'घोरे' रौद्रे, पठ्यते च—'भवावत्ते दीहे'त्ति, अत्र च

भिक्खेण न मे कज्जं मज्झ करणं तु धम्मचरणेणं । पडिवज्ज धम्मचरणं मा संसारंमि हिंडिहिसि ४७८
सो समणो पव्वइओ धम्मं सोऊण तस्स समणस्स । जयघोसविजयघोसा सिद्धिं गया खीणसंसारा ४७९

गाथानवकं व्याख्यातप्रायमेव, नवरम्, 'एगराइयाए'त्ति एकरात्रिक्या 'प्रतिमया' तथाविधाभिग्रहविशेपरूपया न तु द्वादश्या भिक्षुप्रतिमया, तत्र मासक्षपणासम्भवात्, तथा च तत्स्वरूपम्—"एगराईयं भिक्खुपडिमं पडिवण्णस्स अणगारस्स णिच्चं वोसट्ठकाए (यस्स) जाव अहियासे॰ कप्पति से अट्ठमेणं भत्तेणं अपाणएणं वहिया गामस्स जाव रायहाणीए वा ईसिं दोवि पाए साहट्टु वग्घारियपाणिस्स एगपोग्गलदिट्ठिस्स अणिमिसनयणस्स ईसिपब्भारगएणं काएण अहापणिहिएहिं गत्तेहिं सव्विंदिएहिं गुत्तेहिं ठाणं ठाइत्तए" इत्यादि, तत्राष्टममेवोक्तमत्र तु वक्ष्यति—'मासक्षपणेन खेदितशरीर' इति । 'विहरन्' अप्रतिवद्धविहारमाचरन्, अयं च भावत एकस्थानस्थितस्यापि संभवत्यत उच्यते—'वसुधां' पृथ्वीं 'दूइज्जंतो'त्ति परिभ्रमन् तथा 'उद्यानैनिपण्णः' उद्यानाश्रितः सन् मासक्षपणेन खेदितं—श्रममानीतं शरीरं न पुनर्मनोऽस्येति मासक्षपणखेदितशरीरः 'बंभणिज्जे'त्ति ब्राह्मणानामिज्या—पूजा यस्मिन् स

१ एकरात्रिकी भिक्षुप्रतिमां प्रतिपन्नस्यानगारस्य नित्यं व्युत्सृष्टकायस्य यावदध्यासयतः कल्पते तस्याष्टमेन भक्तेनापानकेन वहिर्ग्रामात् यावद्राजधान्या वा ईपत् द्वावपि पादौ संहृत्य ( वर्तुलाकारेण भूमावलमतया वा स्थापयित्वा ) लम्बमानपाणेरेकपुद्गलदृष्टिकस्यानिमिपनयनस्येपत्प्राग्भारगतेन कायेन यथाप्रणिहितैः गात्रैः सर्वैरिन्द्रियैर्गुप्तैः स्थानं स्थातुं ( कायोत्सर्गं विधातुम् )

जित 'धर्मम्' अहिंसादि 'श्रुत्वा' आकर्ण्य 'अनुत्तर' प्रधान, पठ्यते च—'सोचा ण केवल'ति, तत्र च 'केवल' विशुद्धमिति सूत्रार्थं ॥ सम्प्रत्यध्ययनार्थमुपसंहरन्नयोर्निष्क्रमणफलमाह—

खवित्ता पुव्वकम्माइं, संजमेण तवेण य । जयघोसविजयघोसा, सिद्धिं पत्ता अणुत्तरं ॥ ४३ ॥ तिबेमि ॥

॥ जन्नइज्जं ॥ २५ ॥

सुगममेव ॥ सकलाध्ययनतात्पर्यार्थमुपदर्शयन् सूत्रस्पर्शिकनिर्युक्तिमाह निर्युक्तिकृत्—

अह एगराइआए पडिमाए सो मुणी विहरमाणो । वसुहं दूइज्जंतो पत्तो वाणारसिं नयरिं ॥ ४७१ ॥
सो उज्जाणनिसन्नो मासक्खमणेण खेइयसरीरो । भिक्खट्ठं वभणिज्जे उवट्ठिओ जन्नवाडंमि ॥ ४७२ ॥
अह भणई जयघोस कीस तुमं आगओ ? इह भंते ! । नहु ते दाहामि इओ जायाहि हु अन्नओ भिक्खं ॥
सो एव पडिसिद्धो जन्नवाडंमि जायगेण तहिं । परमत्थदिट्ठसारो नेव य तुट्ठो नवि अ रुट्ठो ॥४७४॥
अह भणई अणगारो जं जायग ! आउसो निसामेह । वयचरिय भिक्खचरिआ दिट्ठा साहूण चरणंमि ॥
रज्जाणि उ अवहाया रायसिरि अ(त)णुचरंति भिक्खाए । समणस्स उ मुक्कस्सा भिक्खा चरणं च करणं च ॥
संजाणंतो भणई जयघोसं जायगो विजयघोसो । अत्थि उ पभूअमन्नं भुंजउ भयवं ! पगामाए ॥४७७॥

## अथ षड्विंशतितममध्ययनम् ।

व्याख्यातं यज्ञीयाभिधानं पञ्चविंशमध्ययनम्, अधुना षड्विंशमारभ्यते, अस्य चायमभिसम्बन्धः—अनन्तराध्ययने ब्रह्मगुणा उक्ताः, तद्वांश्च यतिरेव भवति, तेन चावश्यं सामाचारी विधेयेति साऽस्मिन्नभिधीयते इत्यभिसम्बन्धागतस्यास्योपक्रमादि प्राग्वत्प्ररूप्यं यावन्नामनिष्पन्ननिक्षेपे सामाचारीति नाम, अतः साम आचार इति च निक्षेप्यमित्यभिप्रायेणाह निर्युक्तिकृत्—

निक्खेवो सामंमि(य)चउविहो दुविहो होइ दव्वंमि । आगमनोआगमओ नोआगमओ य सो तिविहो ४८०
जाणगसरीरभविए तव्वइरित्ते अ सक्कराईसुं । भावंमि दसविहं खलु इच्छामिच्छाइअं होइ ॥ ४८१ ॥
इच्छो मिच्छा तहक्कारो, आवस्सिआ अ निसीहिआ । आपुच्छणा य पडिपुच्छा, छंदणा य निमंतणा ॥
उवसंपया य काले सामायारी भवे दसविहा उ । एएसिं तु पयाणं पत्तेय परूवणं वुच्छं ॥ ४८३ ॥
आयारे निक्खेवो चउक्कओ दुवि० ॥ ४८४ ॥
जाणगसरीरभविए तव्वइरित्ते य नामणाईसुं । भावंमि दसविहाए सामायारीइ आयरणा ॥ ४८५ ॥

ब्राह्मणेज्यस्तस्मिन् 'इओ'त्ति 'इत' ब्राह्मणार्थमुपस्कृतादाहारात् 'जायाहि'त्ति याचस्व, 'हु' अवधारणे भिन्नक्रमश्च, ततश्च 'अन्यत एव' अस्मद्व्यतिरिक्तात् भिक्षां याचस्वेति सम्बन्ध । 'परमट्ठदिट्ठसारो'त्ति प्राकृतत्वाद् दृष्ट —उपलब्ध परमार्थाय—मोक्षाय सार —प्रस्तावात्क्षान्त्यादिरूप प्रधानोपाय परमार्थाना वा ज्ञानादीना सार —प्रधान येनासौ दृष्टपरमार्थसार , त्व याजक ! 'आउसो'त्ति आयुष्मन् ! कोमलामन्त्रणमेतत्, 'वयचरिय'त्ति इवशब्दस्य गम्यमानत्वाद् व्रतचर्येव भिक्षायै चर्या—पर्यटन भिक्षाचर्या'दृष्टा' विहितत्वेनोपलब्धा तीर्थकरादिभिरिति गम्यते,साधूना चर्यत इति चरणम्—आचारस्तस्मिन् । किञ्च—'राज्यानि' समाज्ञानि 'तु' समुच्चये भिन्नक्रमश्च 'अपहाय' त्यक्त्वा 'राज्यश्रिय' तु छत्रचामराद्यलङ्काररूपा किमित्याह—'अनुचरन्ति' पर्यटन्ति साधव इति प्रक्रम 'भिक्षायै'भिक्षार्थं, किमिति ?—श्रमणस्य तुरिति यस्मात् 'मुक्तस्य'नि सङ्गस्य,अकारोऽलाक्षणिक ,भिक्षेत्युपलक्षणत्वाद्भिक्षाचर्या 'चरण च' व्रतादि चरणहेतुत्वेन 'करण च' पिण्डविशुद्ध्यादिहेतुत्वेन, ततो विहितानुष्ठानरूपत्वाद्राजर्षिभिरपि सेवितत्वाच्च भिक्षाचर्यायास्तद्विधानार्थमहमिहायातो, भवास्तु ददातु मा वा भिक्षामिति भाव । 'सजानन्' प्रत्यभिजानान 'पकामाए'त्ति आर्षत्वात्प्रकामम्—अत्यर्थ । 'धर्मचरणेन' धर्मानुष्ठानेन भवेति गम्यते । 'स' इति विजयघोष सह मनसा—चित्तेन वर्त्तत इति समना , किमुक्त भवति ?—भावतो न तु बहिर्वृत्त्यैव, तस्य श्रामणस्यान्तिक इति गम्यत इति निर्युक्तिगाथानवकार्थ ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगम , सम्प्रति नया , तेऽपि प्राग्वदेव ॥

इत्युत्तराध्ययनश्रुतस्कन्धटीकाया श्रीशान्त्याचार्यविरचितायां पञ्चविंशमध्ययन समाप्तमिति ॥ २५ ॥

'इच्छादिसाम'त्ति सुव्व्यत्ययाद् इच्छादिसामसु 'एसु' अनन्तराभिहितेसु 'आचरणम्' एतद्विषयमनुष्ठानं 'वर्णितं' प्ररूपितं 'तुः' पूरणे यस्मादत्राध्ययने तस्मात्सामाचारीति—सामाचारीनामकमिदमिति प्रक्रमे अध्ययनं भवति ज्ञातव्यम्, अयमाशयः—समाचारोऽत्र वर्ण्यते ततः समाचारे भवमिति विवक्षायां शैषिकोऽण् रूढितश्च स्त्रीलिङ्गता, तथा च 'टिड्ढाणञ्' (पा०४–१–१५) इत्यादिना ङीपि सामाचारीति भवतीति गाथार्थः॥ गतो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

सामायारिं पवक्खामि, सव्वदुक्खविमुक्खणिं। जं चरित्ता ण निग्गन्था, तिण्णा संसारसागरं॥ १॥

समाचरणं—समाचारस्तस्य भावो 'गुणवचनब्राह्मणादिभ्य' इति (पा०५–१–१२४) ष्यञ्, तस्य च षित्करणसामर्थ्यात् स्त्रियामपि वृत्तिरिति 'षिद्गौरादिभ्यश्चे'(पा०४–१–४१)ति ङीपि सामाचारी तां—यतिजनेतिकर्त्तव्यतारूपामहं प्रवक्ष्यामि 'सर्वदुःखविमोक्षणीम्' अशेषशारीरमानसासातविमुक्तिहेतुम् अत एव यां सामाचारीं 'चरित्वा' आसेव्य 'ण' इति वाक्यालङ्कारे 'निर्ग्रन्थाः' यतयस्तीर्णाः संसारसागरं, मुक्तिं प्राप्ता इति भावः, उपलक्षणत्वाच्च तरन्ति तरिष्यन्ति चेति सूत्रार्थः॥ यथाप्रतिज्ञातमाह—

पढमा आवस्सिया नामं, बिइया य निसीहिया। आपुच्छणा य तइया, चउत्थी पडिपुच्छणा॥२॥ पंचमा

णिक्खेवोइत्यादि गाथा पट् प्राय प्रतीतार्था , सूत्रव्याख्याने च काश्चिद्व्याख्यास्यन्ते, नवर 'तद्यतिरिक्त च' ज्ञशरीरभव्यशरीरव्यतिरिक्त च द्रव्यसाम शर्करादिषु, आदिशब्दात्क्षीरादिपरिग्रह , ततश्च शर्कराक्षीरदधिगुडादीना यत्परस्परमविरोधेन व्यवस्थान, भावे साम दशविध 'खलु ' अवधारणे दशविधमेवेच्छामिथ्यादिक सामाचारीस्वरूपमिति गम्यते, भावसामत्व चास्य तात्त्विकस्य क्षायोपशमिकादिभावरूपत्वात् परस्परमविरोधेन चावस्थानात्, तथा प्रत्येकप्ररूपणा वक्ष्ये इति प्रतिज्ञामभिधाय यत् प्ररूपणानभिधान तदावश्यकनिर्युक्तौ कृतत्वात्तद्गाथयोरेव चैककर्तृकत्वेनेह लिखितत्वान्न दुष्टमिति भावनीय, सूत्रक्रमोल्लङ्घन तु यथाविषय सर्वेषा सदाकृत्यत्वेन पूर्वापरभावस्याभाव प्रदर्शनार्थ, तथा 'तव्वइरित्ते य णामणाईसु'न्ति सोपस्कारत्वा नामनधावनादिषु सुकराणि यानि द्रव्याणि तानि तद्यतिरिक्तो द्रव्याचार उच्यते, यत उक्तम्—"[1]णामणधोवणवासणसिक्खावणसुकरणाविरोहीणि । दव्वाणि जाणि लोए दव्वायार वियाणाहि ॥ १ ॥" भावे दशविधाया इच्छादिभेदेन सामाचार्या आचरणा, अत्र बहुलग्रहणात्क्रिया युद एवमाप्रच्छनादिष्वपि, भावत्व तु जीवद्रव्यपर्यायत्वादस्येति गाथाषट्कार्थ ॥ सम्प्रत्यध्ययननामान्वर्थमाह—

इच्छाइसाममेसु आयरण वण्णिअ तु जम्हेत्थ । तम्हा सामायारी अज्झयण होइ नायव्व ॥ ४८६ ॥

१ नामनधावनवासनशिक्षणसुकरणाविरोधीनि । द्रव्याणि यानि लोके द्रव्याचार विजानीहि ॥ १ ॥

ओसरइ, ताहे वितियततियदिवसे जूहेण मिलइ, ताहे एगं रिसिआसमपयं दिट्ठं, सा तत्थ अल्लीणा संवणिया य अणाए रिसिओ, सा पसूया गयकलहं, सो तेहिं रिसिकुमारेहिं सहिओ पुप्फारामं सिंचइ, सेयणउत्ति से नामं कयं, वयत्थो जातो, जूहं दट्ठूण जूहपतिं हंतूण जूहं णेण पडिवण्णं, गंतूण य अणेण सो आसमो विणासितो, नो अन्नावि कावि एवं काहितित्ति। ताहे ते रिसितो रुसिया, पुप्फफलगहियपाणी सेणियस्स रण्णो सयासं उवगया, कहियं चऽणेहिं–एरिसो सव्वलक्खणसंपुण्णो गंधहत्थी सेयणतो णाम, सेणिओ हत्थिगहणाय गतो, सो य हत्थी देवयाए परिगहितो, ताहे(ए) ओहिणा आभोइयं–जहा अवस्सं एसो घेप्पति, ताहे ताए सो भण्णइ–पुत्त! वरं ते अप्पा दंतो, ण यऽसि परेहिं दमंतो वंधणेहिं वहेहि य, सो एवं भणिओ सयमेव रत्तीए गंतूण आलाणखंभं अस्सितो।

---

१ ऋषयः, सा प्रसूता गजकलभं, स तैः ऋषिकुमारैः सहितः पुष्पारामं सिञ्चति, सेचनक इति तस्य नाम कृतं, वयःस्थो जातः, यूथं दृष्ट्वा यूथपतिं हत्वा यूथमनेन प्रतिपन्नं, गत्वा चानेन स आश्रमो विनाशितः, मा अन्याऽपि काऽप्येवं कार्षीदिति। ततस्ते ऋषयो रुष्टाः, पाणिगृहीतपुष्पफलाः श्रेणिकस्य राज्ञः सकाशमुपगताः, कथितं चैभिः–ईदृशः सर्वलक्षणसंपूर्णो गन्धहस्ती सेचनको नाम, श्रेणिको हस्तिग्रहणाय गतः, स च हस्ती देवतया परिगृहीतः, ततः (तया) अवधिना आभोगितं (अवलोकित)–यथा अवश्यमेषो ग्रहीष्यते, ततस्तया स भण्यते–पुत्र! वरं तव (त्वया) आत्मा दान्तः, न चासि परैर्दम्यमानो वन्धनैर्वधैश्च, स एव भणितः स्वयमेव रात्रावागत्यालानस्तम्भमाश्रितः।

छदणा नाम, इच्छाकारो अ छट्टओ। सत्तमो मिच्छकारो य, तहक्कारो य अट्ठमो ॥३॥ अब्भुट्ठाणं नवमा, दसमा उवसंपया। एसा दसंगा साहूणं, सामायारी पवेइया ॥ ४ ॥

सूत्रत्रय स्पष्टमेव, नवरं व्रतग्रहणादप्यारभ्य कारणं विना गुर्ववग्रहे आशातनादोपसम्भवान्न स्थेयं, किन्तु ततो निर्गन्तव्य, न च निर्गमनमावश्यकीं विनेति प्रथममावश्यकी, निर्गत्य च यत्रास्पदे स्थेयं तत्र नैषेधिकीपूर्वकमेव प्रवेष्टव्यमिति तदनु नैषेधिकी, तत्रापि तिष्ठतो भिक्षाटनादिविषयाभिप्रायोत्पत्तौ गुरुपृच्छापूर्वकमेव तत्साधनमित्यनन्तरमाप्रच्छना, आप्रच्छनायामपि गुरुनियुक्तेन पुनः प्रवृत्तिकाले क्वचित्प्रष्टव्या एव गुरव इति तत्पृष्ठतः प्रतिप्रच्छना, कृत्वाऽपि गुर्वनुज्ञया भिक्षाटनादिकं नात्मम्भरिणैव भवितव्यमिति तदनु छन्दना प्राग्गृहीतद्रव्यजातेन शेषयतिनिमन्त्रणात्मिका, तस्यामपि प्रयोक्तव्य एवेच्छाकार इति तदनु तस्याभिधानम्, अयं चात्यन्तमवद्यभीरुणैव तत्त्वतो विधीयते, तेन च कथञ्चिदतिचारसम्भवे आत्मा निन्दितव्य इति तदनु मिथ्याकारः, कृतेऽपि च तस्मिन् बृहत्तरदोपसम्भवे गुरूणामालोचना दातव्या, तत्र च यदादिशन्ति गुरवस्तत्तथेति मन्तव्य इति तथाकारः, तथेति प्रतिपद्य च सर्वकृत्येषूद्यमवता भाव्यमिति तदनु तद्रूपमभ्युत्थानम्, उद्यमवता च ज्ञानादिनिमित्तं गच्छान्तरसङ्क्रमोऽपि विधेयः तत्र चोपसम्पद् ग्रहीतव्येत्यनन्तरमुपसम्पदुक्ता, उपसंहारमाह—'एपा' अनन्तरोक्ता 'दशाङ्गा'

इच्छादिदशावयवा 'साधूनां' यतीनां सामाचारी 'प्रवेदिता' तीर्थंकरादिभिरुक्तेति सूत्रत्रयगर्भार्थः ॥ एतामेव प्रत्यवयवं विषयप्रदर्शनपूर्वकं विधेयतयाऽभिधातुमाह—

गमणे आवस्सियं कुज्जा, ठाणे कुज्जा निसीहियं। आपुच्छणा सयंकरणे, परकरणे पडिपुच्छणा ॥ ५ ॥ छंदणा दव्वजाएणं, इच्छकारो अ सारणे। मिच्छाकारो अ निंदाए, तहक्कारो पडिस्सुए ॥ ६ ॥ अब्भुट्ठाणं गुरुपूया, अच्छणे उवसंपया। एवं दुपंचसंजुत्ता, सामायारी पवेइया ॥ ७ ॥

'गमने' तथाविधालम्बनतो बहिर्निःसरणे आवश्यकेषु—अशेषावश्यकर्त्तव्यव्यापारेषु सत्सु भवाऽऽवश्यकी, उक्तं हि—"आवस्सिया उ आवस्सएहिं सव्वेहिं जुत्तजोगस्से"त्यादि, तां 'कुर्याद्' विदध्यात्, स्थीयतेऽस्मिन्निति स्थानम्—उपाश्रयस्तस्मिन् प्रविशन्निति शेषः, कुर्यात्, कां?—'नैषेधिकीं' निषेधनं निषेधः—पापानुष्ठानेभ्य आत्मनो व्यावर्त्तनं तस्मिन् भवा नैषेधिकी, निषिद्धात्मन एतत्सम्भवात्, उक्तं हि—"जो होइ निसिद्धप्पा निसीहिया तस्स भावओ होइ" इत्यादि, आङिति—सकलकृत्याभिव्याप्त्या प्रच्छना आप्रच्छना—इदमहं कुर्यां न वेत्येवंरूपा तां स्वयमित्यात्मनः करणं—कस्यचिद्विवक्षितकार्यस्य निर्वर्त्तनं स्वयंकरणं तस्मिन्, तथा 'परकरणे' अन्यप्रयोजनविधाने प्रतिप्रच्छना, गुरुनियुक्तोऽपि हि पुनः प्रवृत्तिकाले प्रतिपृच्छत्येव गुरुं, स हि कार्यान्तरमप्यादिशेत् सिद्धं वा तदन्यतः स्यादिति, उभयत्र

१-त्वश्यिकी तु आवश्यकेषु सर्वेषु योगयुक्तस्य। २. यो भवति निषिद्धात्मा नैषेधिकी तस्य भावतो भवति।

या स्वकरणपरकरणे उपलक्षणमिति–उच्छ्वासनि श्वासौ विहाय सर्वकार्येष्वपि स्वपरसम्बन्धिषु गुरव प्रष्टव्या अत सर्वविषयमपि प्रथमत प्रच्छनमापृच्छेत्युच्यते, तथा च निर्युक्तिकृता सामान्येनैवावाचि–"आपुच्छणा उ कज्जे"त्ति, तथा स्वपरसम्बधिनि सर्वत्रापि कृत्ये गुरुनियुक्तेन पुन प्रवृत्तिकाले यद्गुरुप्रच्छन सा प्रतिपृच्छा, तथा च–"पुव्वनिउत्तेण होइ पडिपुच्छ"त्यविशेषेणैवोक्त, 'छन्दना' उक्तरूपा विधेयेति शेष , एवमुत्तरत्रापि, 'द्रव्यजातेन' तथाविधाशनादिद्रव्यविशेषेण प्राग्गृहीतेनेति गम्यते, सूचकत्वात्सूत्रस्य, तथा चाह–"पुव्वगहिएण छंदण"ति, इच्छा–स्वकीयोऽभिप्रायस्तया करण–तत्कार्यनिर्वर्त्तनमिच्छाकार , 'सारणे' इत्यौचित्यत आत्मन परस्य वा कृत्य प्रति प्रवर्त्तने, तत्रात्मसारणे यथेच्छाकारेण युष्मच्चिकीर्षित कार्यमिदमह करोमीति, अन्वाह च–"अहंग तुब्भ एयं करेमि कज्ज तु इच्छाकारेण"त्ति, अन्यसारणे च मम पात्रलेपनादि सूत्रदानादि वा इच्छाकारेण कुरुतेति, तथा चान्वाह—"जइ अब्भत्थिज्ज पर कारणजाए करेज्ज से कोइ। तत्थवि इच्छाकारो ण कप्पइ बलाभिओगो उ ॥ १ ॥" तथा मिथ्येत्यलीक मिथ्याकरण मिथ्याकार –मिथ्येदमिति प्रतिपत्ति , सा चात्मनो निन्दा–जुगुप्सा तस्या, वितथाचरणे हि धिगिद मिथ्या मया कृतमिति नि घात एवात्मा विदितजिनवचनै , तथाकरण तथाकार –इदमित्थ चैवे-

१ आप्रच्छना [illegible] कार्ये। २ पूर्वनियुक्तेन भवति प्रतिपृच्छा। ३ पूर्वगृहीतेन छन्दना। ४ अह युष्माकमेतत् करोमि कार्य त्विच्छाकारेण ५ यद्यभ्यर्थयति पर कारणजाते कुर्यात्तस्य कश्चित्। तत्रापि इच्छाकारो न कल्पते एव बलाभियोगः ॥ १ ॥

त्यभ्युपगमः, स च किंविषयः इत्याह—प्रतिश्रवणं प्रतिश्रुतं—गुरौ वाचनादिकं यच्छत्येवमेतदित्यभ्युपगमस्तस्मिन्, तथा चान्वाह—"[1]वायणपडिसुणणाए उवएसे सुत्तअत्थकहणाए । अवितहमेयंति तहा अविकप्पेणं तहक्कारो ॥ १ ॥" अभीत्याभिमुख्येनोत्थानम्—उद्यमनमभ्युत्थानं तच्च 'गुरुपूय'त्ति सूत्रत्वाद् गुरुपूजायां, सा च गौरवार्हाणाम्—आचार्यग्लानबालादीनां यथोचिताहारभेषजादिसम्पादनम्, इह च सामान्याभिधानेऽप्यभ्युत्थानं निमन्त्रणारूपमेव परिगृह्यते, अत एव निर्युक्तिकृतैतत्स्थाने निमन्त्रणैवाभिहिता "छंदणा य निमंतणे"ति, तथा 'अच्छणे'त्ति आसने प्रक्रमादाचार्यान्तरादिसन्निधौ अवस्थाने उप—सामीप्येन सम्पादनं—गमनं सम्पदादित्वात्क्विपि उपसंपद्—इयन्तं कालं भवदन्तिके मयाऽऽसितव्यमित्येवंरूपा, इयं च ज्ञानार्थतादिभेदेन त्रिधा, तथा चोक्तम्—"[2]उवसंपया य तिविहा णाणे तह दंसणे चरित्ते य"त्ति 'एवम्' इत्युक्तप्रकारेण 'दुपंचसंजुत्त'त्ति आर्षत्वात् द्विपञ्चकसंयुक्तां दशसंख्यायुक्तामित्यर्थः, सामाचारीं 'प्रवेदयेत्' कथयेत् आर्षत्वाद् गुरुः शिष्यायेति शेषः, अनेन च गुरुणा सदा तदुपदेशपरेणैव भवितव्यमित्यर्थत उक्तं, पठ्यते च—'एसा दसंगा साहूणं, सामायारी पवेइय'त्ति, एतच्च स्पष्टमिति सूत्रत्रयार्थः ॥ एतावता दशविधसामाचारीमभिधायौघसामाचारीं विवक्षुरिदमाह—

१ वाचनाप्रतिश्रवणे उपदेशे तथा सूत्रार्थकथनायाम् । अवितथमेतदिति तथा अविकल्पेन तथाकारः ॥ १ ॥ २ उपसंपच्च त्रिविधा ज्ञाने तथा दर्शने चारित्रे च

पुव्विल्लंमि चउब्भागे, आइच्चमि समुट्ठिए । भंडय पडिलेहित्ता, वंदित्ता य तओ गुरु ॥ ८ ॥ पुच्छिज्जा पंजलिउडो, किं कायव्वं मए इहं ? । इच्छं निओइउं भंते !, वेयावच्चे व सज्झाए ॥ ९ ॥ वेयावच्चे निउत्तेण, कायव्वमगिलायओ । सज्झाए वा निउत्तेण, सव्वदुक्खविमुक्खणे ॥ १० ॥

'पुव्विल्लंमि'त्ति पूर्वस्मिंश्चतुर्भागे आदित्ये 'समुत्थिते' समुद्गते, इह च यथा दशाविकलोऽपि पटः पट एवोच्यते, एवं किञ्चिदूनोऽपि चतुर्भागश्चतुर्भाग उक्तः, ततोऽयमर्थः—बुद्ध्या नभश्चतुर्धा विभज्यते, तत्र पूर्वदिक्संबद्धे किञ्चिदूनन-भश्चतुर्भागे यदादित्यः समुदेति तदा, पादोनपौरुष्यामित्युक्तं भवति, 'भाण्डकं' पतद्ग्रहाद्युपकरणं 'प्रतिलेख्य' सामयि-कपरिभाषया चक्षुषा निरीक्ष्योपलक्षणत्वात्प्रमृज्य च 'वन्दित्वा च' नमस्कृत्य 'ततः' इति प्रतिलेखनानन्तरं 'गुरुम्' आचार्यादिकं, किमित्याह—'पृच्छेत्' पर्यनुयुञ्जीत प्रक्रमाद्गुरुमेव 'पंजलिउड'त्ति प्राग्वत्कृतप्राञ्जलिः, यथा—किं 'कर्त्त-व्यम्' अनुष्ठेयं 'मये'त्यात्मनिर्देशः 'इह' अस्मिन् समये इति गम्यते, कदाचिद्गुरवो मन्येरन्—स्वाध्यायवैयावृ-त्त्ययोरन्यतरस्मिन्नेवास्य नियोगो वाञ्छेत्ततो ब्रूयात्—'इच्छामि णियोइउं'ति अन्तर्भावितण्यर्थत्वान्नियोजयितुं युष्मा-भिरात्मानमिति शेषः 'भंते'त्ति भदन्त ! 'वेयावच्चे'त्ति वैयावृत्त्ये—ग्लानादिव्यापारे वाशब्दो भिन्नक्रमस्ततः 'सज्झा-ए'त्ति आर्षत्वात्स्वाध्याये वा, इह च पात्रप्रतिलेखनानन्तरं गुरुं पृच्छेदिति यदुक्तं तत्प्रायस्तदैव बहुतरवैयावृत्त्य-विधानसम्भवात्, यद्वा पूर्वस्मिन्नभश्चतुर्भागे आदित्ये समुत्थिते इव समुत्थिते, बहुतरप्रकाशीभवनात्तस्य, भाण्ड-

मेव भाण्डकं ततस्तदिव धर्मद्रविणोपार्जनाहेतुत्वेन मुखवस्त्रिकावर्षाकल्पादीह भाण्डकमुच्यते, तत्प्रतिलेख्य वन्दित्वा च ततो गुरुं पृच्छेत्, शेषं प्राग्वत्, उपलक्षणं चैतद्—यतः सकलमपि कृत्यं विधाय पुनरभिवन्दनापूर्वकं प्रष्टव्या एव गुरव इति, एवं च पृष्ट्वा यत्कर्त्तव्यं तदाह-वैयावृत्त्ये 'नियुक्तेन' व्यापारितेन कर्त्तव्यं प्रक्रमात् वैयावृत्त्यम्, 'अगिलायउ'त्ति अग्लान्यैव शरीरश्रममविचिन्त्यैवेतियावत्, स्वाध्याये वा नियुक्तेन सर्वदुःखविमोक्षणे, सकलतपःकर्मप्रधानत्वादस्य, स्वाध्यायोऽग्लान्यैव कर्त्तव्य इति प्रक्रम इति सूत्रत्रयार्थः ॥ इत्थं सकलौघसामाचारीमूलत्वात्प्रतिलेखनायास्तत्कालं सदाविधेयत्वाद्गुरुपारतन्त्र्यस्य तच्चाभिधायौत्सर्गिकं दिनकृत्यमाह—

दिवसस्स चउरो भागे, कुज्जा भिक्खू वियक्खणो। तओ उत्तरगुणे कुज्जा, दिणभागेसु चउसुवि ॥ ११ ॥
पढमं पोरिसिं सज्झायं, बीयं झाणं झियायई। तइयाए भिक्खायरियं, पुणो चउत्थीइ सज्झायं ॥ १२ ॥

सूत्रद्वयं स्पष्टमेव, नवरं चतुरो भागान् कुर्याद् बुद्ध्येत्युपस्कारः, 'तत' इति चतुर्भागकरणादनन्तरमिति गम्यते उत्तरगुणान् मूलगुणापेक्षया स्वाध्यायादींस्तत्कालोचितान् 'कुर्याद्' विदध्यात्, क दिनभागे कमुत्तरगुणं कुर्यादित्याह— प्रथमां पौरुषीं 'स्वाध्यायं' वाचनादिकं, सूत्रपौरुषीत्वादस्याः, कुर्यादितीहोत्तरत्र च क्रियान्तराभावेऽनुवर्त्यते, द्वितीयां प्रक्रमात्पौरुषीं ध्यानं 'झियायइ'त्ति ध्यायेत्, ध्यानं चेहार्थपौरुषीत्वादस्या अर्थविषय एव मानसादिव्यापारणमुच्यते, ध्यायेदिति वाऽनेकार्थत्वाद्धातूनां कुर्यात्, इह च प्रतिलेखनाकालस्याल्पत्वेनाविवक्षितत्वादुभयत्र

'कालाध्वनोरत्यन्तसंयोगे'(पा०२–३–५)इति द्वितीया, तृतीयायां भिक्षाचर्यां, पुनश्चतुर्थ्यां स्वाध्यायम्, उपलक्षणत्वात्तृतीयायां भोजनबहिर्गमनादीनि, इतरत्र तु प्रतिलेखनास्थण्डिलप्रत्युपेक्षणादीनि गृह्यन्ते, इत्थमभिधानं च कालापेक्षयैव कृष्यादेरिव सकलानुष्ठानस्य सफलत्वादिति सूत्रद्वयार्थः ॥ यदुक्तं प्रथमपौरुष्यां स्वाध्यायं कुर्यात्तत्परिज्ञानार्थमाह–

आसाढे मासे दुपया, पोसे मासे चउप्पया। चित्तासोएसु मासेसु, तिपया हवइ पोरसी ॥ १३ ॥ अंगुलं सत्तरत्तेणं, पक्खेण तु दुअंगुलं। वड्ढए हायए वावि, मासेणं चउरंगुलं ॥ १४ ॥ आसाढबहुलपक्खे, भद्दवए कत्तिए य पोसे य। फग्गुणवइसाहेसु य नायव्वा ओमरत्ता उ ॥ १५ ॥

तत्र प्रथमं प्रतीतमेव, द्वितीयमपि तथैव, नवरं सप्तरात्रेणेति दिनाविनाभावित्वाद्रात्रीणां सप्ताहोरात्रेण वर्द्धते दक्षिणायने हीयते उत्तरायणे, इह च सप्तरात्रेणेत्यत्र सार्द्धेनेति विशेषो द्रष्टव्यः, पक्षेण व्यङ्गुलवृद्ध्यभिधानात्, अन्यथा केषुचिन्मासेषु दिनचतुर्दशकेनापि पक्षः संभवति, तत्र च सप्ताहोरात्रेणाप्यङ्गुलवृद्धिहान्या न कश्चिद्दोषः ॥ केषु पुनर्मासेषु दिनचतुर्दशकेनापि पक्षसम्भव इत्याह–'आसाढे'त्यादि, इदमपि सुगममेव, नवरं बहुलपक्ष इति भाद्रपदादिष्वपि प्रत्येकमभिसम्बध्यते, ततः 'आसाढे'त्ति आषाढे बहुलपक्षे भाद्रपदादिषु च बहुलपक्षे 'ओम'त्ति 'अवमा' न्यूना एकेनेति शेषः, 'रत्त'त्ति पदैकदेशेऽपि पदप्रयोगदर्शनादहोरात्रा, एवं चैकदिनापहारे दिनचतुर्दशकेनैव कृष्णपक्ष एतेष्विति भावः, इदं च व्यवहारतः पौरुषीमानं, निश्चयतस्तु, "अयणाईयदिनगणे अट्ठगुणेगट्ठिभाइए लद्धं।

उत्तरदाहिणमाईं उत्तरपयसोज्झपक्खेवो ॥ १ ॥" अत्र चायनम्—उत्तरायणं दक्षिणायनं च तस्यातीतदिनानि—अतिक्रान्तदिवसास्तेषां गणः—समूहोऽयनातीतदिनगणः, स चोत्कृष्टतत्र्यशीतं शतं, तच्चाष्टगुणं जातानि चतुर्दश शतानि चतुःषष्ट्यधिकानि, तत्र चैकषष्ट्या भागे हृते लब्धानि चतुर्विंशतिरङ्गुलानि, तत्रापि द्वादशभिरङ्गुलैः पदमिति जाते द्वे पदे, एतयोश्च 'उत्तरदाहिणमाईं'त्ति उत्तरायणादौ दक्षिणायनादौ च 'उत्तरपद'त्तिउत्तरपदयोः 'सोज्झ'त्ति शुद्धिः प्रक्षेपश्च, तत्र हि उत्तरायणप्रथमदिने चत्वारि पदान्यासन् ततस्तन्मध्यात्पदद्वयोत्सारणे जाते कर्कटसंक्रान्त्यदिने द्वे पदे, दक्षिणायनाद्यदिने तु द्वे पदे अभूतां, तन्मध्ये च द्वयोः क्षिप्तयोर्जातानि मकरसङ्क्रान्तौ चत्वारि पदानि, इदं चोत्कृष्टजघन्यदिनयोः पौरुषीमानं, मध्यमदिनेष्वप्यभिहितनीतितः सुधिया भावनीयमिति सूत्रत्रयार्थः ॥ इह प्रथमपौरुष्यामुपलक्षणद्वारेण प्रतिलेखनाया अपि विधेयत्वमुक्तं, पादोनैव चासौ तत्कालत्वेन प्राक् प्रदर्शितेति तत्परिज्ञानोपायमाह—

जिट्ठामूले आसाढसावणे छहिं अंगुलेहिं पडिलेहा । अट्ठहिं बिइयतियंमी तइए दस अट्ठहिं चउत्थे ॥ १६ ॥

जिट्ठासूत्रम् । ज्येष्ठामूल इति ज्येष्ठे, आषाढश्च श्रावणश्चाषाढश्रावणं तत्र, कोऽर्थः ?—ज्येष्ठे आषाढे श्रावणे च षड्भिरङ्गुलैः प्रत्यहं प्रागुपदिष्टपौरुषीमाने प्रक्षिप्तैरिति चेहोत्तरत्र(च) गम्यते, प्रतिलेखेति प्रक्रमात्प्रतिलेखनाकालः, एवं तावदेकस्मिंस्त्रिके, तथाऽष्टभिरङ्गुलैरिति सर्वत्रानुवर्त्तते द्वितीयत्रिके भाद्रपदाश्वयुक्कार्त्तिकलक्षणे प्रतिलेखनाकालः, तथा

तृतीये प्रक्रमात्रिके मार्गशीर्षपौषमाघात्मनि दशभि प्रतिलेखनाकाल , तथाऽष्टभिश्चतुर्थे प्राग्वत्रिके फाल्गुन-चैत्रवैशाखस्वरूपे प्रतिलेखनाकाल , स्थापना चेयम्—

| | | | |
|---|---|---|---|
| ज्येष्ठे पदे २-४ । ६ अङ्गुल० २-१० | भाद्रपदे पदे २-८ अङ्गुल० ८=३-४ | मार्गशीर्षे पदानि ३-८ अङ्गुल० १०=४-६ | फाल्गुने पदानि ३-४ अङ्गुल० ८=४ |
| आषाढे पदे २ अङ्गुल० ६=२-६ | अश्विने पदानि ३ अङ्गुल० ८=३-८ | पौषे पदानि ४ अङ्गुल० १ =४-१० | चैत्रे पदानि ३ अङ्गुल० ८=३-८ |
| श्रावण पदे २-४ अङ्गुल० ६=२-१० | कार्तिके पदानि ३-४ अङ्गुल० ८=४ | माघे पदानि ३-८ अङ्गुल० १ =४-६ | वैशाखे पदे २-८ अङ्गुल० ८=३-४ |

इति सूत्रार्थ ॥ इत्थ दिनकृत्यमभिधाय रात्रौ यद्विधेय तदाह—

रत्तिपि चउरो भाए, भिक्खू कुज्जा वियक्खणो। तओ उत्तरगुणे कुज्जा राईभो(भा)गेसु चउसुवि ॥१७॥

पढम पोरिसि सज्झाय बीय झाण झियायई । तइयाए निद्दमुक्ख तु चउत्थी सुज्जोवि सज्झाय ॥१८॥

सूत्रद्वय स्पष्टमेव, नवर रात्रिमपि न केवल दिनमित्यपिशब्दार्थ । द्वितीया पौरुषी 'ध्यायति ध्यान' सूक्ष्मसूत्रार्थलक्षण क्षितिवलयद्वीपसागरभवनादि वा 'झियाए'त्ति 'ध्यायेत्' चिन्तयेत्, तृतीयाया निद्राया मोक्ष'–पूर्वनि-

रुद्धाया मुत्कलना निद्रामोक्षः–स्वाप इत्यर्थस्तं, कुर्यादिति सर्वत्र प्रक्रमाद्योज्यं, वृषभापेक्षं चैतत्, सामस्त्येन तु प्रथमचरमप्रहरजागरणमेव, तथा चागमः–'सव्वेसि पढमजामे दोन्नि उ वसभाण आदिमा जामा । ततितो होइ गुरूणं चउत्थओ होइ सव्वेसिं ॥ १ ॥'' शयनविधिश्चायम्–बहुपरिपुण्णाए पोरिसीए गुरुसगासं गंतूणं भणति–इच्छामि खमासमणो वंदिउं जावणिज्जाए णिसीहियाए मत्थएण वंदामि, बहुपडिपुण्णा पोरिसी अणुजाणह राइसंथारयं, ताहे पढमं काइयाभूमिं वच्चंति, ताहे जत्थ संथारभूमी तत्थ वच्चंति, ताहे उवहिंमि उवओगं करित्ता पमज्जेत्ता उ उवहीए दोरयं छोडंति, ताहे संथारपट्टयं उत्तरपट्टयं च पडिलेहित्ता दोवि एगत्थ लाइत्ता ऊरुंमि ठवंति,

---

१ सर्वेषां प्रथमयामो द्वौ तु वृषभाणामाद्यौ यामौ । तृतीयो भवति गुरूणां चतुर्थको भवति सर्वेषाम् ॥ १ ॥ २ बहुप्रतिपूर्णायां पौरुष्यां गुरुसकाशं गत्वा भणति–इच्छामि क्षमाश्रमण ! वन्दितुं यापनीयया नैषेधिक्या मस्तकेन वन्दे, बहुप्रतिपूर्णा पौरुषी अनुजानीत रात्रिसंस्तारकं, तदा प्रथमं कायिकीभूमिं व्रजन्ति, तदा यत्र संस्तारकभूमिस्तत्र व्रजन्ति, तदोपधौ उपयोगं कृत्वा प्रमार्ज्य तु उपधेर्दवरकं छोटयन्ति ( उन्मुञ्चन्ति ), तदा संस्तारकपट्टमुत्तरपट्टकं च प्रतिलिख्य द्वे अप्येकत्र लात्वोरौ स्थापयन्ति, तदा संस्तारकभूमिं प्रमार्जयन्ति, तदा संस्तारकमास्तृणन्ति सोत्तरपट्टकं, तत्र च लग्ना मुखवस्त्रिकयोपरितनं कायं प्रमार्जयन्ति इति अधस्तनं रजोहरणेन, कल्पांश्च वामपार्श्वे स्थापयन्ति, पुनः संस्तारकमारुह्य भणन्ति–ज्येष्ठार्यादीनां पुरतः स्थिताना–अनुजानीत, पुनः सागारिकं त्रीन् वारान् उक्त्वा स्वपन्तीति

यथा हि अस्य स्वयदमनान्महागुण तथा मुक्त्यर्थिनोऽपि विशिष्टनिर्जरात , इतरथा त्वकामनिर्जरातो न तथेति सूत्रार्थं ॥ १६ ॥ गुर्वनुवृत्त्यात्मक प्रतिरूपविनयमाह—

पडिणीय च बुद्धाण, वाया अदुव कम्मुणा। आवि वा जइवा रहस्से, नेव कुज्जा कयाइवि ॥१७॥(सूत्रम्)

व्याख्या—'प्रत्यनीकम्' इति प्रतिकूल, च पूरणे, चेष्टितमित्युपस्कार , भावप्रधानत्वाद्वा निर्देशस्य प्रत्यनीकत्व, केषाम् ?—'बुद्धानाम्' अवगतवस्तुतत्त्वाना गुरूणामितियावत् , कया ?—वाचा, किं त्वमपि किञ्चिज्जानीषे ? इत्येवरूपया विपरीतप्ररूपणाया प्रेरितस्त्वयैवैतदित्थमस्माक प्ररूपितमित्याद्यात्मिकया वा, अथवा 'कर्मणा' संस्तारकातिक्रमणकरचरणसस्पर्शनादिना 'आवि' जनसमक्ष प्रकाशदेश इतियावत् , यदिवा 'रहस्ये' विविक्तोपाश्रयादौ 'न' इति निषेधे 'एव' अवधारणे, स च 'शत्रोरपि गुणा ग्राह्या , दोषा वाच्या गुरोरपी'ति कुमतनिराकरणार्थं , 'कुर्यात्' इति विदध्यात् , 'कदाचित्' परुषभाषणादावपि इति सूत्रार्थं ॥ १७ ॥ पुन शुश्रूषणात्मक तमेवाह—

ण पक्खओ ण पुरओ, णेव किच्चाण पिट्ठओ। न जुजे उरुणा ऊरु, सयणे ण पडिस्सुणे ॥१८॥(सूत्रम्)

व्याख्या—'न पक्षत' दक्षिणादिपक्षमाश्रित्य, उपविशेदिति सर्वत्रोपस्कार , तथोपवेशने तत्पङ्क्तिसमावेशत तत्साम्यापादनेनाविनयभावात् , गुरोरपि वक्रावलोकने स्कन्धकन्धरादिबाधासम्भवात् , न 'पुरत' अग्रत , तत्र

तृतीयम्, अपिशब्दान्निजनिजसमये प्रादोपिकादिकं च कालं 'पडिलेहित्त'ति प्रत्युपेक्ष्य प्रतिजागर्यं मुनिः 'कुर्यात्, करोतेः सर्वधात्वर्थत्वाद् गृह्णीयात्, इह च काक्कोपलक्षणद्वारेण प्रथमादिषु नभश्चतुर्थभागेषु संप्राप्ते नेतरि नक्षत्रे रात्रेः प्रथमादयः प्रहरा इत्युक्तं भवतीति सूत्रद्वयार्थः ॥ इत्थं सामान्येन दिनरजनिकृत्यमुपदर्श्य पुनर्विशेषतस्तदेव दर्शयंस्तावद्दिनकृत्यमाह—

पुव्विल्लंमि चउब्भागे, पडिलेहित्ता ण भंडयं । गुरुं वंदित्तु सज्झायं, कुज्जा दुक्खविमुक्खणिं ॥ २१ ॥ पोरिसीए चउब्भाए, वंदित्ता ण तओ गुरुं । अपडिक्कमित्तु कालस्स, भायणं पडिलेहिए ॥ २२ ॥ मुहपत्तिं पडिलेहित्ता, पडिलेहिज्ज गुच्छयं । गुच्छगलइयंगुलिओ, वत्थाइं पडिलेहए ॥ २३ ॥ उड्ढं थिरं अतुरियं पुव्विं ता वत्थमेव पडिलेहे । तो बिइयं पप्फोडे तइयं च पुणो पमज्जिज्जा ॥ २४ ॥ अणच्चावियं अवलियं अणाणुबंधिं अमोसलिं चेव । छप्पुरिमा नव खोडा पाणीपाणिविसोहणं ॥ २५ ॥ आरभडा सम्मद्दा वज्जेयव्वा य मोसली तइया । पप्फोडणा चउत्थी विक्खित्ता वेइया छट्ठा ॥ २६ ॥ पसिढिलपलंबलोला एगामोसा अणेगरूवधुणा । कुणति पमाणि पमायं संकिय गणणोवगं कुज्जा ॥ २७ ॥ अणुणाइरित्तपडिलेहा अविवच्चासा तहेव य । पढमं पयं पसत्थं सेसाणि उ अप्पसत्थाणि ॥ २८ ॥ पडिलेहणं कुणंतो मिहो कहं कुणइ जणवयकहं वा । देइ व पच्चक्खाणं वाएइ सयं पडिच्छइ वा ॥२९॥ पुढवी आउक्काए तेऊ वाऊ वणस्सइ तसाणं ।

ताहे सथारभूमिं पमज्जति, ताहे सथारय उच्छुरति सउत्तरपट्टय, तत्थ (य) लग्गा मुहपोत्तियाए उवरिम काय पमज्जतित्ति हिट्ठिल्ल रयहरणेण, कप्पे य वामपासे ठवेंति, पुणो सथारय चडेत्ता भणति–जेट्ठज्जाईण पुरओ चिट्ठताण–अणुजाणेज्जह, पुणो सामाईय तिन्नि वारे कड्ढिऊण सुयति त्ति। सुयाना चाय विधि –"अणुजाणह सथार बाहुवहाणेण वामपासेण। पायपसारणि कुक्कुडि अतरत्तो पमज्जए भूमिं ॥ १ ॥ सकोए सडास उयत्तती य कायपडिलेहा। दव्वादीउवओग उस्सासनिरुभणालोय ॥ २ ॥ इति सूत्रद्वयार्थ ॥ सम्प्रति रात्रिभागचतुष्टयपरिज्ञानोपायमुपदर्शयन् समस्तयतिकृत्यमाह—

ज नेइ जया रत्ति नक्खत्त तमि नहचउब्भाए। सपत्ते विरमिज्जा सज्झाय पओसकालम्मि ॥ १९ ॥
तम्मेव य नक्खत्ते गयण चउभागसावसेसम्मि। वेरत्तियपि काल पडिलेहित्ता मुणी कुज्जा ॥ २० ॥

यत् 'नयति' प्रापयति परिसमाप्तिमिति गम्यते यदा रात्रिं नक्षत्र तस्मिन्नभश्चतुर्भागे सम्प्राप्ते 'विरमेत्' निवर्त्तेत 'सज्झाय'त्ति स्वाध्यायात्, 'प्रदोषकाले' रजनीमुखसमये प्रारब्धादिति शेष, तस्मिन्नेव नक्षत्रे प्रक्रमात्प्राप्ते, केत्याह–'गयण'त्ति गगने, कीदृशि ?–चतुर्भागेन गम्येन सावशेष–सोद्धरित चतुर्भागसावशेष तस्मिन् 'वैरात्रिक'

१ अनुजानीत सस्तारक बाहूपधानेन वामपार्श्वेन। पादप्रसारणे कुर्कुटी(वत्) अशक्नुवन् प्रमार्जयेत् भूमिम् ॥ १ ॥ सकोचे सदशान् (प्रमार्जयेत्) उद्वर्त्तने च कायप्रतिलेखना। द्रव्याद्युपयोग (जागरणे कुर्यात्) उच्छ्वासनिरोधमालोक ॥ २ ॥

'मुखवस्त्रिकां' प्रतीतामेव 'प्रतिलेख्य' प्रतिलेखयेत् 'गोच्छकं' पात्रकोपरिवर्त्युपकरणं, ततश्च 'गोच्छगलइअंगुलिउ'त्ति प्राकृतत्वादङ्गुलिभिर्लातो-गृहीतो गोच्छको येन सोऽयमङ्गुलिलातगोच्छकः 'वस्त्राणि' पटलकरूपाणि 'प्रतिलेखयेत्' प्रस्तावात्प्रमार्जयेदित्यर्थः। इत्थं तथाऽवस्थितान्येव पटलानि गोच्छकेन प्रमृज्य पुनर्यत्कुर्यात्तदाह-'ऊर्ध्वं' कायतो वस्त्रतश्च, तत्र कायत उत्कुटुकत्वेन स्थितत्वात्, वस्त्रतश्च तिर्यक्प्रसारितवस्त्रत्वात्, उक्तं हि-'उक्कुडुतो तिरियं पेहे जह विलित्तो' 'स्थिरं' दृढग्रहणेन 'अत्वरितम्' अद्रुतं स्तिमितं यथाभवत्येवं 'पूर्वं' प्रथमं 'ता' इति तावद् 'वस्त्रं' पटलकरूपं, जातावेकवचनं, पटलकप्रक्रमेऽपि सामान्यवाचकवस्त्रशब्दाभिधानं वर्षाकल्पादिप्रत्युपेक्षणायामप्ययमेव विधिरिति ख्यापनार्थम्, एवशब्दो भिन्नक्रमस्ततः 'पडिलेहि'त्ति 'प्रत्युपेक्षेतैव' आरतः परतश्च निरीक्षेतैव न तु प्रस्फोटयेत्, अथवा बिन्दुलोपाद् 'एवम्' अमुना ऊर्ध्वादिप्रकारेण प्रत्युपेक्षेत न त्वन्यथेति भावः, तत्र च यदि जन्तून् पश्यति ततो यतनयाऽन्यत्र सङ्क्रमयति, तददर्शने च 'तो' इति 'ततः' प्रत्युपेक्षणादनन्तरं द्वितीयमिदं कुर्यात् यदुत परिशुद्धं सत् प्रस्फोटयेत्-तत्प्रस्फोटनां कुर्यादित्यर्थः, तृतीयं च पुनरिदं कुर्यात्-यदुत प्रमृज्यात्, कोऽर्थः?—प्रत्युपेक्ष्य प्रस्फोट्य च हस्तगतान् प्राणिनः प्रमृज्यादित्यर्थः, कथं पुनः प्रस्फोटयेत्प्रमृज्याद्वेत्याह-'अनर्त्तितं' प्रस्फोटनं प्रमा-

१ उत्कटुकस्तिर्यक् प्रेक्षेत यथा विलिप्तः

पडिलेहणापमत्तो छण्हंपि विराहओ होइ ॥ ३० ॥ तइयाए पोरिसीए, भत्त पाण गवेसए। छण्ह अण्णय-रागंमि, कारणंमि समुट्ठिए ॥ ३१ ॥ वेयणवेयावच्चे इरियट्ठाए य संजमट्ठाए । तह पाणवत्तियाए छट्ठं पुण धम्मचिंताए ॥ ३२ ॥ निग्गंथो धिइमंतो निग्गंथीवि न करिज्ज छहिं चेव । ठाणेहिं तु इमेहिं अणइक्कमणा य से होइ ॥ ३३ ॥ आयंके उवसग्गे तितिक्खया बंभचेरगुत्तीसु । पाणिदयातवहेउं सरीरवुच्छेयणट्ठाए ॥ ३४ ॥ अवसेसं भंडगं गिज्झा, चक्खुसा पडिलेहए । परमद्धजोअणाओ, विहारं विहरे मुणी ॥ ३५ ॥ चउत्थीए पोरिसीए निक्खिवित्ता ण भायणं । सज्झायं च तओ कुज्जा, सव्वभावविभावणं ॥ ३६ ॥ पोरिसीए चउ-ब्भाए, वंदित्ता ण तओ गुरुं । पडिक्कमित्ता कालस्स, सिज्जं तु पडिलेहए ॥ ३७ ॥ पासवणुच्चारभूमिं च, पडिले-हिज्ज जयं जई ।

पुव्विल्लेत्यादिसूत्राणि सप्तदश सार्द्धानि, तत्र सूत्रद्वयं व्याख्यातप्रायमेव, नवरं 'पूर्वस्मिंश्चतुर्भागे' प्रथमपौ-रुषीलक्षणे प्रक्रमाद् दिनस्य प्रत्युपेक्ष्य 'भाण्डकं' प्राग्वद्वर्षाकल्पादि उपधिमादित्योदयसमय इति शेष, द्वितीयसूत्रे च पौरुष्याश्चतुर्थभागेऽवशिष्यमाण इति गम्यते, ततोऽयमर्थ —पादोनपौरुष्यां भाजनं प्रतिलेखयेदिति सम्बन्ध, स्वाध्यायादुपरतश्चेत्कालस्य प्रतिक्रम्यैव कृत्यान्तरमारब्धव्यमित्याशङ्कयेतात आह—अप्रतिक्रम्य कालस्य, तत्प्र-तिक्रमार्थं कायोत्सर्गमविधाय, चतुर्थपौरुष्यामपि स्वाध्यायस्य विधास्यमानत्वात् । प्रतिलेखनाविधिमेवाह—

पञ्चमीति गम्यते, रूढित्वाच्च स्त्रीलिङ्गता, उक्तं हि 'लिङ्गमशिष्यं लोकाश्रयत्वात्', सा च प्रत्युपेक्षितवस्त्रस्यान्यत्राप्रत्युपेक्षिते क्षेपणं, प्रत्युपेक्षमाणो वा वस्त्राञ्चलं यदूर्ध्वं क्षिपति, वेदिका 'छट्ठ'त्ति षष्ठी, अत्र सम्प्रदायः— "वेतिया पंचविहा पन्नत्ता, तंजहा–उड्ढवेतिया अहोवेतिया तिरियवेतिया दुहतोवेतिया एगतोवेतिया' तत्थ उड्ढवेतिया उवरिं जुण्णगाणं हत्थे काऊण पडिलेहेइ, अहोवेइया अहो जुण्णगाणं हत्थे काऊण पडिलेहेइ, तिरियवेइया संडासयाणं मज्झेण हत्थेण घित्तूण पडिलेहेइ, दुहतोवेइया वाहाणं अंतरे दोवि जुण्णगा काऊण पडिलेहेति, एगतो वेइया एगं जुण्णगं वाहाणमंतरे काउण पडिलेहेति।" एवमेते षड् दोषाः प्रतिलेखनायां परिहर्त्तव्याः। तथा प्रशिथिलं नाम दोषो यददृढमनिरायन्तं वा वस्त्रं गृह्यते, प्रलम्बो–यद्विषमग्रहणेन प्रत्युपेक्ष्यमाणवस्त्रकोणानां लम्बनं लोलो–यद्भूमौ करे वा प्रत्युपेक्ष्यमाणवस्त्रस्य लोलनमषीषां द्वन्द्वः, एकामर्शनं एकामर्शा प्राग्वत् स्त्रीलिङ्गता, मध्ये गृहीत्वा ग्रहणदेशं यावदुभयतो वस्त्रस्य यदेककालं संघर्षणमाकर्षणम्, उक्तञ्च "पसिढिलमघणं

वेदिकाः पञ्चविधाः प्रज्ञप्ताः, तद्यथा ऊर्ध्ववेदिका अधोवेदिका तिर्यग्वेदिका द्विधातो वेदिका एकतो वेदिका, तत्रोर्ध्ववेदिका उपरि जानुनोर्हस्तौ कृत्वा प्रतिलेखयति, अधोवेदिका अधो जान्वोर्हस्तौ कृत्वा प्रतिलेखयति, तिर्यग्वेदिका संदंशकयोर्मध्ये हस्तेन गृहीत्वा प्रतिलेखयति, द्विधातो वेदिका वाह्वोरन्तरे द्वे अपि जानुनी कृत्वा प्रतिलेखयति एकतो वेदिका एकं जानु वाह्वोरन्तरे कृत्वा प्रतिलेखयति २ प्रशिथिलमघनं अनिरायन्तं च (प्रलम्बम्) विषमग्रहणं कोणानां। भूमौ करे वा लोलनं आकर्षग्रहणमेकामर्शा ॥ १ ॥

र्जनं वा कुर्वतो वस्त्रं वपुर्वा यथा नर्त्तितं न भवति 'अवलितं' यथाऽऽत्मनो वस्त्रस्य च वलितमिति मोटनं न भवति 'अणाणुबंधि'न्ति 'अननुवन्धि' अनुबन्धेन–नैरन्तर्यलक्षणेन युक्तमनुवन्धि न तथा, कोऽर्थ ?–अलक्ष्यमाणविभागं यथा न भवति, 'आमोसलि'त्ति सूत्रत्वादामर्शवत्तिर्यगूर्ध्वमधो वा कुड्यादिपरामर्शवद्यथा न भवति, उक्तं हि— "तिरिउड्ढघट्टणाऽऽमुसलि' त्ति, तथा किमित्याह—'छप्पुरिम'त्ति षट् पूर्वा पूर्वं क्रियमाणतया तिर्यक्कृतवस्त्रप्रस्फोटनात्मका क्रियाविशेषा येषु ते षट्पूर्वा, 'नवखोड'त्ति खोटका समयप्रसिद्धाः स्फोटनात्मका कर्त्तव्या इति शेषः 'पाणी' पाणितले 'प्राणिनां' कुन्थ्वादिसत्त्वानां विशोधनं पाठान्तरतश्च–'प्रमार्जनं' प्रस्फोटनं त्रिकत्रिकोत्तरकालं त्रिकत्रिकसङ्ख्यं पाणिप्राणिविशोधनं पाणिप्राणिप्रमार्जनं वा कर्तव्यं। प्रतिलेखनादोषपरिहारार्थमाह— आरभटा विपरीतकरणमुच्यते त्वरितं वाऽन्यान्यवस्त्रग्रहणेनासौ भवति, उक्तं हि—"वितहकरणमारभडा तुरियं वा अन्नमन्नगहणेण" समर्दनं समर्दा रुढित्वात्स्त्रीलिङ्गता वस्त्रान्तः कोणसंचलनमुपधेर्वा उपरि निपदनम्, उक्तञ्च— "अंतो व होज्ज कोणा णिसियण तत्थेव सम्मद्दा" वर्जयितव्येति सर्वत्र सवध्यते, 'च' पूरणे 'मोसलि'त्ति तिर्यगूर्ध्वमधो वा घट्टना तृतीया, 'प्रस्फोटना' प्रकर्षेण रेणुगुण्डितस्येव वस्त्रस्य झाटना चतुर्थी, विक्षेपणं विक्षिप्ता

१ तिर्यगूर्ध्वमधो घट्टनाऽमोसलिरिति २ वितथकरणं आरभटा त्वरितं वा अन्याऽन्यग्रहणेन ३ अन्तर्वा भवेयुः कोणा निषीदनं तत्रैव समर्दा

शेपः, अत्र च त्रिभिर्विशेषणपदैरष्टौ भङ्गाः सूचिता भवन्ति, स्थापना चेयम्—

| | |
|---|---|
| ||| | S|| |
| ||S | S|S |
| |S| | SS| |
| |SS | SSS |

एतेषु च कः शुद्धः को वाऽशुद्धः इत्याह—'प्रथमपदम्' इहैवोपदर्शिताद्यभङ्गरूपं 'प्रशस्तं' निर्दोषतया श्लाघ्यं शुद्धमितियावत्, शेपाणि तु प्रक्रमात्पदानि द्वितीयादिभङ्गात्मकान्यप्रशस्तानि, तेषु न्यूनताद्यन्यतमदोपसम्भवात्, ततः प्रथमभङ्गानुपातिन्येव प्रतिलेखना विधेयेत्युक्तं भवति। एवंविधामप्येनां कुर्वता यत्परिहर्त्तव्यं तत् काक्वोपदेष्टुमाह—प्रतिलेखनां कुर्वन् 'मिथःकथां' परस्परसंभाषणात्मिकां करोति, जनपदकथां वा, स्त्र्यादिकथोपलक्षणमेतत्, ददाति वा प्रत्याख्यानमन्यस्मै, वाचयति—अपरं पाठयति, स्वयं प्रतीच्छति वा आलापादिकं गृह्णाति, य इति गम्यते, स किमित्याह, 'पुढवी'ति स्पष्टं, नवरं 'पुढवीआउकाय'त्ति पृथिव्यप्काययोः 'प्रतिलेखनाप्रमत्तो' मिथः कथादिना तत्रानवहितः सन् षण्णामपि, आस्तामेकैकादीनामित्यपिशब्दार्थः, विराधकश्चैवं—प्रमत्तो हि कुम्भकारशालादौ स्थितो जलभृतघटादिकमपि प्रलोठयेत्, ततस्तज्जलेन मृदग्निबीजकुन्थ्वादयः प्लाव्यन्ते, प्लावनातश्च विराध्यन्ते, यत्र चाग्निस्तत्रावश्यं वायुरिति षण्णामपि द्रव्यतो विराधकत्वं, भावतस्तु प्रमत्ततयाऽन्यथाऽपि विराधकत्वमेव, उक्तं हि—"इय दव्वओ उ छण्हं विराहतो भावतो इहरहावि। उवउत्तो पुण साहू संपत्तीए वऽवहओ उ ॥ १ ॥" तदनेन

१ एवं द्रव्यतः षण्णां विराधको भावत इतरथाऽपि। उपयुक्तः पुनः साधुः संपत्तावप्यवधक एव ॥ १ ॥

अणिराइय च विसमगहण च कोणे वा । भूमीकरलोलणयाऽऽक्कुणगहणेगआमोसा ॥ १ ॥" 'अणेगरूवधुणे'त्ति अनेकरूपा चासौ सङ्ख्यात्रयातिक्रमणतो युगपदनेकवस्त्रग्रहणतो वा धूनना च प्रकम्पनात्मिका अनेकरूपधूनना, पठ्यते च–'अणेगरूवधूय'त्ति तत्र च धुत–कम्पनमन्यत्प्राग्वत् ,तथा यत्करोति प्रमाणे–प्रस्फोटादिसङ्ख्यालक्षणे प्रमादम्–अनवधान यच्च शङ्किते–प्रमादत प्रमाण प्रति शङ्कोत्पत्तौ गणना कराङ्गुलिरेखास्पर्शनादिनैकद्वित्रिसङ्ख्यात्मिकामुपगच्छति–उपयाति गणनोपग यथाभवत्येव गम्यमानत्वात्प्रस्फोटनादि कुर्यात् , सम्भावने लिङ्, सोऽपि दोष ,सर्वत्र पूर्वसूत्रादनुवर्त्त्य वर्जनक्रिया योजनीया, उक्तञ्च–"धुणणा तिण्ह परेण बहूणि वा घेत्तु एक्कओ धुणति। खोडणपमज्जणासु य सकिय गणणे करे पमादी ॥ १ ॥" एव चानन्तरोक्तदोषैरन्विता सदोषा प्रत्युपेक्षणा, वियुक्ता तु निर्दोषेत्यर्थत उक्तम् । साम्प्रत त्वेनामेव भङ्गकनिदर्शनद्वारेण साक्षात्सदोषा निर्दोषा च किञ्चिद्विशेषतो वक्तुमाह–'अणूणाइरित्त'त्ति ऊना चासावतिरिक्ता ऊनातिरिक्ता न तथा अनूनातिरिक्ता प्रतिलेखा,इह च न्यूनताधिक्ये स्फोटनाप्रमार्जने वेला चाश्रित्य वाच्ये, यत उक्तम्—"खोडणपमज्जवेलासु चेव ऊणाहिया मुणेयव्वा " 'अविवच्चास'त्ति विविधो व्यत्यासो–विपर्यासो यस्या सा विव्यत्यासा न तथा अविव्यत्यासा–पुरुषोपधिविपर्यासरहिता कर्त्तव्येति

१ धूनना तिसृभ्य परतो बहूनि वा गृहीत्वैकतो धुनाति । स्फोटनप्रमार्जनासु च शङ्किते गणना कुर्यात्प्रमादी ॥ १ ॥ २ स्फोटनाप्रमार्जनावेलासु चैवोनाधिका मुणितव्या ।

जीवितनिमित्तम्, अविधिना ह्यात्मनोऽपि प्राणोपक्रमणे हिंसा स्याद्, अत एवोक्तम्–"[1]भावियजिणवयणाणं ममत्तरहियाण नत्थि हु विसेसो। अप्पाणंमि परंमि य तो वज्जे पीडमुभओऽवि ॥१॥" षष्ठं पुनरिदं कारणम्–यदुत धर्मचिन्तायै च, भक्तपानं गवेषयेदिति सर्वत्रानुवर्त्तते, अत्र च धर्मचिन्ता–धर्मध्यानचिन्ता श्रुतधर्मचिन्ता वा, इयं ह्युभयरूपाऽपि तदाकुलितचेतसो न स्यात्, आर्त्तध्यानसम्भवात्, इह च यद्यपि वेदनोपशमनादीनां शाब्द्या वृत्त्या तदुपलक्षितभोजनफलत्वेन प्रतीतिस्तथाऽपि तैर्विना तन्निषेधसूचनादार्थ्या वृत्त्या कारणत्वमेवैषामुपदर्शितं भवति, अत एव षष्ठमित्यत्र कारणमेव सम्बन्धितम्, आह—एतत्कारणोत्पत्तौ किमवश्यं भक्तपानगवेषणं कर्त्तव्यमुतान्यथेत्याह–'निर्ग्रन्थः' यतिः धृतिमान् धर्मचरणं प्रति 'निर्ग्रन्था' तपस्विनी साऽपि न कुर्याद्भक्तपानगवेषणमिति प्रक्रमः, षड्भिश्चैव स्थानैः 'तुः' पुनरर्थे 'एभिः' अनन्तरं वक्ष्यमाणैः, किमित्येवमत आह–'अणइक्कमणाइ'त्ति सूत्रत्वाद् 'अनतिक्रमणं' संयमयोगानामनुल्लङ्घनं, चशब्दो यस्मादर्थे, यस्मात् 'से'त्ति तस्य निर्ग्रन्थस्य तस्या वा निर्ग्रन्थतायाः (न्थ्याः) 'भवति' जायते, अन्यथा तदतिक्रमणसम्भवात्। षट् स्थानान्येवाह–आतङ्को–ज्वरादिरोगस्तस्मिन्, 'उपसर्ग'मिति स्वजनादिः कश्चिदुपसर्गमुन्निष्क्रमणार्थं करोति, विमर्शादिहेतोर्वा देवादिः, ततस्तस्मिन् सति, उभयत्र तन्निवारणार्थमिति गम्यते, तथा तितिक्षा—सहनं तथा हेतुभूतया, क्व विषये इत्याह—ब्रह्मचर्यगुप्तिषु, ता हि नान्यथा सोढुं शक्याः, तथा

१ भावितजिनवचनानां ममतारहितानां नास्त्येव विशेषः। आत्मनि परस्मिंश्च ततो वर्जयेत्पीडामुभयोरपि ॥ १ ॥

जीवरक्षार्थत्वात्प्रतिलेखनायास्तत्काले च प्रमादजनकत्वेन हिंसाहेतुत्वान्मिथ कथादीनां परिहार्यत्वमुक्तम् । इत्थ प्रथमपौरुषीकृत्यमुक्त, तदनन्तर द्वितीयपौरुषीकृत्याभिधानावसर ,तत्र "बीए झाण झियायई" इति वचनेन ध्यानमुक्तम्,उभय चैतदवश्यकर्त्तव्यमतस्तृतीयपौरुषीकृत्यमप्येवमुत कारण एवोत्पन्ने ? इत्याशङ्क्याह–'तइए'इत्यादि सुगम, नवरमौत्सर्गिकमेतत्, अन्यथा हि स्थविरकल्पिकाना यथाकालमेव भक्तादिगवेषण, तथा चाह–'सइकाले चरे भिक्खू'त्ति, षण्णा कारणानाम् 'अन्नयरायमि'त्ति अन्यतरस्मिन् कारणे 'समुत्थिते' सजाते, न तु कारणोत्पत्तिं विनेति भाव:, भोजनोपलक्षण चेह भक्तपानगवेषण, गुरुग्लानाद्यर्थमन्यथाऽपि तस्य सम्भवात्, तथा चान्यत्र भोजन एवैतानि कारणान्युक्तानि, तान्येव षट् कारणान्याह–'वेयण वेयावचे'त्ति,सुब्व्यत्ययाद् वेदनाशब्दस्य चोपलक्षणत्वात्क्षुत्पिपासाजनितवेदनोपशमनाय,तथा क्षुत्पिपासाभ्या(परिगतो)न गुर्वादिवैयावृत्त्यकरणक्षम इति वैयावृत्त्याय, तथा 'ईर्ये'ति ईर्यासमिति सैव निर्जरार्थिभिरर्थ्यमानतयाऽर्थस्तस्मै, 'च' समुच्चये, कथ नामासौ भवत्विति ?, इतरथा हि क्षुत्पिपासाभ्या पीडितस्य चक्षुर्भ्यामपश्यतः कथमिवासौ स्यादिति ?, तथा सयमार्थाय कथ नामासौ पालयितु शक्यतामिति ?,आकुलितस्य हि ताभ्या सचित्ताहारे तद्विघात एव स्यात्,तथा 'पाणवत्तियाए'त्ति प्राणप्रत्यय-

१ स्मृतिकाले चरेद् भिक्षुः × भयोननोप०

वन्दकजनस्य गुरुवदनानवलोकनादिनाऽप्रीतिभावात्, 'नैव' इति पूर्ववत्, कृतिः—वन्दनकं तदर्हन्ति कृत्याः 'दण्डादित्वाद् यप्रत्ययः' ते चार्थादाचार्यादयस्तेषां 'पृष्ठतः' पृष्ठदेशमाश्रित्य, द्वयोरपि मुखादर्शने तथाविधरसवत्ताऽभावादिदोषसंभवात्, 'न युज्यात्' न सङ्घट्टयेद् अत्यासन्नोपवेशादिभिः, 'उरुणा' आत्मीयेन, 'उरुं' कृत्यसम्बन्धिनं, तथाकरणेऽत्यन्ताविनयसम्भवात्, उपलक्षणं चैतत् शेषाङ्गस्पर्शपरिहारस्य, 'शयने' शय्यायां शयित आसीनो वेति शेषः, किमित्याह—न प्रतिशृणुयात्, किमुक्तं भवति ?—कदाचिच्छय्यागतो गुरुणाऽऽकारित उक्तो वा कृत्यं प्रति न तथास्थित एवावज्ञया कुर्म एवमित्यादिवचनतः प्रतिजानीयात्, किन्तु गुरुवचनसमनन्तरमेव सम्भ्रान्तचेता विनयविरचितकराञ्जलिः समीपमागत्य पादपतनपुरस्सरमनुगृहीतोऽहमिति मन्यमानो भगवन्निच्छामोऽनुशिष्टिमिति वदेदिति सूत्रार्थः ॥ १८ ॥ पुनस्तमेवाह—

नेव पल्हत्थियं कुज्जा, पक्खपिंडं व संजए। पाए पॅसारिए वावि, न चिट्ठे गुरुणंतिए ॥१९॥ (सूत्रम्)

व्याख्या—नैव 'पर्यस्तिकां' जानुजङ्घोपरिवस्त्रवेष्टनाऽऽत्मिकां कुर्यात्, 'पक्षपिण्डं वा' बाहुद्वयकायपिण्डात्मकं, 'संयतः' साधुः, तथा पादौ प्रसारयेत् वाऽपि नैव, वा समुच्चयार्थः, अपिः किं पुनरित इतो विक्षिपेदिति निदर्शनार्थः, अन्यच्च—'न तिष्ठेत्' नाऽऽसीत, क्व ?—गुरूणामन्तिके इति, प्रक्रमादतिसन्निधौ, किन्तूचितदेश एव, अन्य-

१ पसारे नो वावि प्र० ।

'पाणिदयातवहेउ'त्ति 'प्राणिदयाहेतोः' वर्षादौ निपतत्यप्कायादिजीवरक्षायै तप —चतुर्थादिरूप तद्धेतोश्च, तथा शरीरस्य व्यवच्छेद —परिहारस्तदर्थं च उचितकाले सलेखनामनशन वा कुर्वन्, भक्तपानगवेषणं न कुर्यादिति सर्वत्र योज्य, कारणत्वभावना चामीषा प्राग्वत्, तद्गवेषणां च कुर्वन् केन विधिना कियत्क्षेत्रं पर्यटेदित्याह—'अवशेष' भिक्षाप्रक्रमात्पात्रनिर्योगोद्धरित, चशब्दस्य गम्यमानत्वादवशेष च पात्रनिर्योगमेव, यद्वाऽपगत शेषमपशेष, कोऽर्थ ?–समस्त, 'भाण्डकम्' उपकरण 'गिज्झ'त्ति गृहीत्वा चक्षुषा प्रत्युपेक्षेत, उपलक्षणत्वात्प्रतिलेखयेच्च, इह च विशेषत इति गम्यते, सामान्यतो ह्यप्रत्युपेक्षितस्य ग्रहणमपि न युज्यत एव यतीनाम्, उपलक्षणत्वाच्चास्य तदादाय 'परम्' उत्कृष्टम् 'अर्धयोजनात्' अर्धयोजनमाश्रित्य, ल्यब्लोपे पञ्चमी, परतो हि क्षेत्रातीतमशनादि भवेत्, विहरन्त्यस्मिन् प्रदेश इति विहारस्त 'विहरए'त्ति विहरेत्—विचरेन्मुनि । इत्थ विदत्योपाश्रय चागत्य गुर्वालोचनादिपुरस्सर भोजनादि कृत्वा यत्कुर्यात्तदाह—चतुर्थ्यां पौरुष्या निक्षिप्य प्रत्युपेक्षणापूर्वक बद्धा 'भाजन' पात्र स्वाध्याय तत कुर्यात् सर्वभावा—जीवादयस्तेषा विभावन(क)—प्रकाशक सर्वभावविभावक, पठ्यते च—'सव्वदुक्खविमोक्खण'ति प्राग्वत्, पौरुष्या प्रक्रमाच्चतुर्थ्या चतुर्भागे–चतुर्थांशे शेष इति गम्यते, वन्दित्वा 'तत ' इति स्वाध्यायकरणादनन्तर 'गुरुम्' आचार्यादि प्रतिक्रम्य कालस्य 'शय्या' वसति 'तु ' पूरणे प्रतिलेखयेत्, ततश्च 'पासवणुच्चारभूमिं च'त्ति, भूमिशब्दस्य प्रत्येकमभिसम्बन्धात् प्रश्रवणभूमि उच्चारभूमिं च प्रत्येक द्वादशस्थण्डिलात्मिका

चशब्दात्कालभूमिं च स्थण्डिलत्रयात्मिकां प्रतिलेखयेत् 'जयं'ति 'यतम्' आरम्भादुपरतं यथा भवति यतमानो वा यतिः, एवं च सप्तविंशतिस्थण्डिलप्रत्युपेक्षणानन्तरमादित्योऽस्तमेति, तथा चोक्तम्—"चउभागावसेसाए चरिमाए पडिक्कमित्तु कालस्स । उच्चारे पासवणे थंडिलचउवीसइं पेहे ॥१॥ अहियासिया उ अंतो आसन्ने मज्झि दूरि तिन्नि तिन्नि भवे। तिण्णेव अणहियासी अंतो छच्छच बाहिरतो॥२॥ एमेव य पासवणे बारस चउवीसइं तु पेहेत्ता। कालस्स य तिन्नि भवे अह सूरो अत्थमुवयाइ ॥ ३ ॥" इति सार्द्धसप्तदशसूत्रार्थः । इत्थं विशेषतो दिनकृत्यमभिधाय सम्प्रति तथैव रात्रिकर्त्तव्यमाह—

काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमुक्खणं ॥३८॥ देसियं च अईयारं, चिंतिज्ज अणुपुव्वसो। नाणंमि दंसणे चेव, चरित्तंमि तहेव य ॥ ३९ ॥ पारियकाउस्सग्गो, वंदित्ता य तओ गुरुं। देसियं तु अईयारं, आलोइज्ज जहक्कमं ॥ ४० ॥ पडिक्कमित्ताण निस्सल्लो, वंदित्ताण तओ गुरुं। काउस्सग्गं तओ कुज्जा, सव्वदुक्खविमुक्खणं ॥ ४१ ॥ सिद्धाणं संथवं किच्चा, वंदित्ताण तओ गुरुं। थुइमंगलं च काऊणं, कालं संपडि-

१ चतुर्भागावशेषायां चरमायां प्रतिक्रम्य कालस्य । उच्चारस्य प्रश्रवणस्य स्थण्डिलानि चतुर्विंशतिं प्रेक्षेत ॥ १ ॥ अध्यासनीयानि तु अन्तरासन्ने मध्ये दूरे त्रीणि त्रीणि भवेयुः। त्रीण्येव अनध्यासनीयानि अन्तः षट् षट् च बाह्यतः ॥२॥ एवमेव च प्रश्रवणे द्वादश चतुर्विंशतिं तु प्रेक्ष्य । कालस्य च त्रीणि भवेयुरथ सूर्योऽस्तमुपयाति ॥ ३ ॥

लेहए ॥ ४२ ॥ पढम पोरिसिं सज्झाय, बीय झाण झियायई। तईयाए निद्दमुक्ख तु, चउत्थी भुज्जोवि सज्झाय ॥ ४३ ॥ पोरिसीए चउत्थीए, काल तु पडिलेहए। सज्झाय तु तओ कुज्जा, अबोहतो असजए ॥४४॥ पोरिसीए चउब्भाए, वदित्ताण ततो गुरु। पडिक्कमित्तु कालस्स, काल तु पडिलेहए ॥ ४५ ॥ आगए कायवुस्सग्गे, सव्वदुक्खविमुक्खणे। काउस्सग्ग तओ कुज्जा, सव्वदुक्खविमुक्खण ॥ ४६ ॥ राईय च अईयार, चिंतिज्ज अणुपुव्वसो। नाणमि दसणमि, चरित्तमि तवमि य ॥ ४७ ॥ पारियकाउस्सग्गो, वदित्ताण तओ गुरु। राईय तु अईयार, आलोइज्ज जहक्कम ॥४८॥ पडिक्कमित्तु निस्सल्लो, वदित्ता ण तओ गुरुं। काउस्सग्ग तओ कुज्जा, सव्वदुक्खविमुक्खण ॥ ४९ ॥ कि तव पडिवज्जामि ?, एव तत्थ विचितए। काउस्सग्ग तु पारित्ता, करिज्जा जिणसथव ॥ ५० ॥ पारियकाउस्सग्गो, वदित्ताण तओ गुरु। तव सपडिवज्जित्ता, करिज्ज सिद्धाण सथव ॥ ५१ ॥

काउस्सग्गमित्यादि सार्द्धानि त्रयोदश सूत्राणि। कायोत्सर्ग 'तत' प्रश्रवणादिभूमिप्रतिलेखनादनन्तर कुर्यात्सर्वदु खविमोक्षण, तथात्व चास्य कर्मोपचयहेतुत्वात्, उक्त हि—"[1]काउस्सग्गे जह सुट्ठियस्स भज्जंति अंगमगाइ। तह भिंदति सुविहिआ अट्ठविह कम्मसघाय ॥ १ ॥"ति तत्र च स्थितो यत्कुर्यात्तदाह—'देसिय'ति प्राकृतत्वाद्दैवसिकम्-

१ कायोत्सर्गे यथा सुस्थितस्य भज्यन्तेऽङ्गोपाङ्गानि। तथा भिन्दन्ति सुविहिता अष्टविध कर्मसङ्घातम् ॥ १ ॥

रस्य लोपे दैवसिकं 'चः' पूरणे 'अतिचारम्' अतिक्रमं 'चिन्तयेत्' ध्यायेत् 'अणुपुव्वसो'त्ति आनुपूर्व्या—क्रमेण, प्रभातमुखवस्त्रिकाप्रत्युपेक्षणातो यावदयमेव कायोत्सर्गः, उक्तं हि—"गोसमुहणंतगाई आलोइय देसिए य अइयारे। सव्वे समाणयित्ता हियए दोसे ठविज्जाह ॥ १ ॥" किंविषयमतीचारं चिन्तयेदित्याह—'ज्ञाने' ज्ञानविषयमेवं दर्शने चैव चारित्रे तथैव च। पारितः—समापितः कायोत्सर्गो येन स तथा वन्दित्वा प्रस्तावाद् द्वादशावर्त्तवन्दनेन 'तत' इत्यतीचारचिन्तनादनन्तरं 'गुरुम्' आचार्यादि 'देसियं'ति प्राग्वद् दैवसिकं 'तुः' पूरणेऽतीचारम् 'आलोचयेत्' प्रकाशयेद् गुरूणामेव 'यथाक्रमम्' आलोचनसेवनान्यतरानुलोम्यक्रमानतिक्रमेण 'प्रतिक्रम्य' प्रतीपमपराधस्थानेभ्यो निवृत्य, प्रतिक्रमणं च मनसा भावशुद्धितो वाचा तत्सूत्रपाठतः कायेनोत्तमाङ्गनमनादितः, 'निःशल्यः' मायादिशल्यरहितः, सूचकत्वात्सूत्रस्य वन्दनकपूर्वं क्षमयित्वा च वन्दित्वा द्वादशावर्त्तवन्दनेन 'ततः' इत्युक्तविधेरनन्तरं 'गुरुम्' आचार्यादिकं 'कायोत्सर्गं' चारित्रदर्शनश्रुतज्ञानशुद्धिनिमित्तव्युत्सर्गत्रयलक्षणं, जातावेकवचनं, 'ततः' गुरुवन्दनादनन्तरं कुर्यात्सर्वदुःखविमोक्षणम्। 'पारिये' त्यादि पूर्वार्द्धं व्याख्यातमेव, स्तुतिमङ्गलं च सिद्धस्तवरूपं कृत्वा पाठान्तरं वा—'सिद्धाणं संथवं किच'त्ति सुगमं, 'कालम्' आगमप्रतीतं 'संपडिलेहए'त्ति संप्रत्युपेक्षते, कोऽर्थः?—प्रतिजागर्त्ति, उपलक्षणत्वाद् गृह्णाति च, एतद्गतश्च विधिरागमादवसेयः। 'पढम'मित्यादि प्राग्वद्, व्याख्यातमेव, ॥५४५॥

१ प्राभातिकमुखवस्त्रिकादिप्रत्युपेक्षणाया आलोच्य दैवसिकांश्चातिचारान्। सर्वान् समानीय हृदये दोषान् स्थापयेत्॥ १॥

नवर पुनरभिधानमस्य पुन पुनरुपदेष्टव्यमेव गुरुभिर्न प्रयासो मन्तव्य इति ख्यापनार्थम् । कथ पुनश्चतुर्थपौरुष्या स्वाध्याय कुर्यादित्याह–पौरुष्या चतुर्थ्या 'काल' वैरात्रिक 'तु' पूरणे 'पडिलेहिय'त्ति प्रत्युपेक्ष्य–प्रतिजागर्य्य प्राग्वद् गृहीत्वा च स्वाध्याय तत कुर्यात् 'अबोधयन्' अनुत्थापयन् 'असयतान्' अगारिण, तदुत्थापने तत्पापस्थानेषु तेषा प्रवर्त्तनसम्भवात् । पौरुष्या प्रक्रमाच्चतुर्थ्याश्चतुर्भागेऽवशिष्यमाण इति शेष, तत्र हि कालवेलाया' सम्भव इति न कालस्य ग्रहण, वन्दित्वा ततो गुरु प्रतिक्रम्य 'कालस' वैरात्रिकस्य 'काल' प्राभातिक, तुशब्दो वक्ष्यमाण-विशेषद्योतक, 'पडिलेहए'त्ति प्रत्युपेक्षेत प्राग्वद् गृह्णीयाच्च, इह च साक्षात्प्रत्युपेक्षणस्यैव पुन पुनरभिधानं बहुतर-विषयत्वात्, अत्र च सम्प्रदाय –"ताहे गुरू उट्ठित्ता गुणति जाव चरिमो जामो पत्तो, चरिमे जामे सव्वे उट्ठित्ता वेरत्तिय घेत्तु सज्झाय करेति, ताहे गुरू सुवति, पत्ते पाभाइए काले जो पाभाइयकाल घेच्छति सो कालस्स पडि-क्कमिउ पाभाइय काल गिण्हइ, सेसा कालवेलाए कालस्स पडिक्कमति, तओ आवस्सयं कुणति" मध्यमप्रक्रमा-पेक्ष च कालत्रयग्रहणमुक्तम्, अन्यथा ह्युत्सर्गत उत्कर्षेण चत्वारो जघन्येन त्रय काला अपवादतश्चोत्कर्षेण द्वौ

१ तदा गुरव उत्थाय गुणयन्ति यावच्चरमो याम प्राप्त, चरमे यामे सर्व उत्थाय वैरात्रिक गृहीत्वा स्वाध्याय कुर्वन्ति, तदा गुरव: स्वपन्ति, प्राप्ते प्राभातिके काले य प्राभातिककाल ग्रहीष्यति स कालस्य प्रतिक्रम्य प्राभातिक काल गृह्णाति, शेषा कालवेलाया कालस्य प्रतिक्राम्यन्ति, तत आवश्यक कुर्वन्ति ।

जघन्येनैकोऽप्यनुज्ञात एव, यत उक्तम्—"[1]कालचउक्कं उक्कोसएण जघण्णओ तिण्णि हुंति बोद्धव्वा। बीयपयंमि दुगं तु मायामयविप्पमुक्काणं ॥ १ ॥" अत्र च तुशब्दादेकस्याप्यनुज्ञा, तथा चूर्णिकार एव—"[2]अमायाविणो तिण्णि वा अगेण्हंतस्स एक्को भवति" पठन्ति च—'पढमा पोरसि सज्झायं, बीए झाणं झियायति। ततियाए निद्दमोक्खं च, चउभाए चउत्थए ॥ १ ॥ कालं तु पडिलेहित्ता, अबोहिंतो असंजए। कुज्जा मुणी य सज्झायं, सव्वदुक्खविमोक्खणं ॥ २ ॥ पोरसीए चउब्भाए, सेसे वंदित्तु तो गुरुं। पडिक्कमित्तु कालस्स, कालं तु पडिलेहए ॥३॥" अत्रापि व्याख्या तथैव, पाठद्वयेऽपि चतुर्थप्रहरविशेषकृत्याभिधानप्रसङ्गेन पुनः प्रहरत्रयकृत्याभिधानमिति मन्तव्यम्। 'आगते' प्राप्ते 'कायव्युत्सर्गे' इत्युपचारात् कायव्युत्सर्गसमये सर्वदुःखानां विमोक्षणमर्थात् कायोत्सर्गद्वारेण यस्मिन् स तथा तस्मिन्, शेषं प्राग्वत्, यच्चेह सर्वदुःखविमोक्षणविशेषणं पुनः पुनरुच्यते तदस्यात्यन्तनिर्जराहेतुत्वख्यापनार्थं, तथेह कायोत्सर्गग्रहणेन चारित्रदर्शनश्रुतज्ञानविशुद्ध्यर्थं कायोत्सर्गत्रयं गृह्यते, तत्र च तृतीये रात्रिकोऽतीचारश्चिन्त्यते, यत उक्तम्—"[3]तत्थ पढमो चरित्ते, दंसणसुद्धीय बीयओ होइ। सुयणाणस्स य ततितो णवरं

१ कालचतुष्कं उत्कृष्टेन जघन्यतः त्रयो भवन्ति बोद्धव्याः। द्वितीयपदे द्विकं तु मायामदविप्रमुक्तानाम् ॥ १ ॥ २ अमायाविनस्त्रीन् वा अगृह्णत एको भवति। ३ तत्र प्रथमश्चारित्रे दर्शनशुद्ध्यै द्वितीयो भवति। श्रुतज्ञानस्य च तृतीयो नवरं चिन्तयति तत्रेदम् ॥ २ ॥ तृतीये निशातिचारान्।

चिंतेइ तत्थ इमं ॥ १ ॥ तइए निसाइयार"त्ति रात्रिकोऽतिचारश्च यथा यद्विषयश्च चिन्तनीयस्तथाऽऽह–रात्रौ भव रात्रिक 'च' पूरणे अतीचार चिन्तयेत् 'अणुपुव्वसो'त्ति आनुपूर्व्या–क्रमेण ज्ञाने दर्शने चारित्रे तपसि चशब्दा-द्वीर्ये च, शेषकायोत्सर्गेषु चतुर्विंशतिस्तव प्रतीतश्चिन्त्यतया साधारणश्चेति नोक्त । ततश्च पारितेत्यादिसूत्रद्वय व्याख्यातमेव, कायोत्सर्गस्थितश्च किं कुर्यादित्याह–'कि'मिति किंरूपं 'तपो' नमस्कारसहितादि प्रतिपद्येऽहम्, एव तत्र विचिन्तयेत्–वर्द्धमानो हि भगवान् षण्मास यावन्निरशनो विहृतवान्, तत्किमहमपि निरशन शक्नोम्ये-तावत्काल स्थातुमुत नेति ?, एव पञ्चमासाद्यपि यावन्नमस्कारसहित तावत्परिभावयेत्, उक्त हि–"चिंते चरमे उ किं तव काहं ? । छम्मासामेकदिणादिहाणि जा पोरिसि नमो वा ॥ २ ॥" उत्तरार्द्ध स्पष्टम्, एतदुक्तार्थानुवादत सामाचारीशेषमाह–'पारिय'त्यादि प्राग्वत्, नवर 'तप' यथाशक्ति चिन्तितमुपवासादि 'सम्प्रतिपद्य' अङ्गीकृत्य कुर्यात् सिद्धाना 'सस्तव' स्तुतित्रयरूप, तदनु च यत्र चैत्यानि सन्ति तत्र तद्वन्दन विधेय, तथा चाह भाष्यकार – "वंदित्तु निवेयंती काल तो चेइयाइ यदि अत्थि । तो वदंती काल जह य तुलेउ पडिक्कमण ॥१॥" इति सार्द्धत्रयो-दशसूत्रार्थ ॥ सम्प्रत्यध्ययनार्थमुपसहरन्नाह—

१ चिन्तयेत् चरमे तु किं तप करिष्यामि ? । षण्मास्या एकदिनादिहानि यावत् पौरुषी नमस्कारसहित वा ॥१॥ २ वन्दित्वा निवेद यन्ति काल ततश्चैत्यानि यदि सन्ति । तदा वन्दन्ते काल यथा च तोलयित्वा प्रतिक्रमणम् ॥ १ ॥

एसा सामायारी, समासेण वियाहिया । जं चरित्ता बहू जीवा, तिन्ना संसारसागरं ॥ ५२ ॥ तिबेमि ॥

॥ सामायारीयं ॥ २६ ॥

'एषा' अनन्तरोक्ता सामाचारी दशविधा, ओघरूपा [च] पदविभागात्मिका चेह नोक्ता, धर्मकथाऽनुयोगत्वादस्य, छेदसूत्रान्तर्गतत्वाच्च तस्याः, 'समासेन' सङ्क्षेपेण 'वियाहिय'त्ति व्याख्याता, अत्रैवादरख्यापनार्थमस्याः फलमाह–'यां' सामाचारीं 'चरित्वा' आसेव्य 'बहवः' अनेके जीवास्तीर्णाः संसारसागरं प्राग्वदिति सूत्रार्थः ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः, सम्प्रति नयाः, तेऽपि प्राग्वदेव ॥ इत्युत्तराध्ययनटीकायां श्रीशान्त्याचार्यविरचितायां सामाचारीनामकं षड्विंशमध्ययनं समाप्तम् ॥ २६ ॥

श्रीशान्त्याचार्यकृतायामुत्तराध्ययनटी० शिष्य० सामाचारीनामकं षड्विंशमध्ययनं समाप्तम् ॥

# अथ सप्तविंश खलुङ्कीयमध्ययनम् ।

व्याख्यात षड्विंशमध्ययनं, सम्प्रति सप्तविंशमारभ्यते, अस्य चायमभिसम्बन्ध —इहानन्तराध्ययने सामाचारी प्रतिपादिता, सा चाशठतयैव पालयितु शक्या, तद्विपक्षभूतशठताज्ञान एव च तद्विवेकेनासौ ज्ञायत इत्याशयेन दृष्टान्तत शठतास्वरूपनिरूपणद्वारेणाशठतैवानेनाभिधीयत इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य चतुरनुयोगद्वारप्ररूपणा प्राग्वद्यावन्नामनिष्पन्ने निक्षेपे खलुङ्कीयमिति नाम, अत खलुङ्क [नामत खलुक] निक्षेपायाह निर्युक्तिकृत्—

निक्खेवो खलुकमि चउविहो ॥ ४८७ ॥

जाणगसरीरभविए तव्वइरित्ते वइल्लमाईसु । पडिलोमो सव्वत्थेसु भावओ होइ उ खलुको ॥ ४८८ ॥

'निक्खेवो'गाथाद्वय व्याख्यातप्रायमेव, नवर बलीवर्दादिष्वित्यादिशब्देनाश्वादिपरिग्रह, निर्द्धारणे चेयं सप्तमी, ततो बलीवर्दादिषु यो गल्यादिरिति गम्यते स द्रव्यत खलुङ्क इति, 'प्रतिलोम' प्रतिकूलः सर्वार्थेषु, पाठान्तरत 'सर्वस्थानेषु' नानादिषु भावतो भवति खलुङ्क इति गाथाद्वयार्थ ॥ तद्व्यतिरिक्तद्रव्यखलुङ्कस्वरूपमाह—

अवदाली उत्तसओ जोत्तजुगभंज तुत्तभंजो अ। उप्पहविप्पहगामी एय खलुंका भवें गोणा ॥४८९॥
जं किर दव्वं खुज्जं कक्कडगुरुयं तहा दुरवणामं । तं दव्वेसु खलुंकं वंककुडिलवेढमाइद्धं ॥ ४९० ॥
सुचिरंपि वंकडाइं होहिंति अणुज्जइज्जमाणाइं । करमंदिदारुआइं गयंकुसा इव विंटाइं ॥ ४९१ ॥

'अवदालि'त्ति अवदारयति शकटं खस्वामिनं वा विनाशयतीत्येवंशीलोऽवदारी, उत्त्रसको यो यत्किञ्चनावलोक्योत्त्रसति, 'जुत्तजुगभंज'त्ति योत्रं–तथाविधसंयमनं युगं–प्रतीतमेव ते भनक्ति–विनाशयति योत्रयुगभञ्जः, तथा तोत्रं–प्राजनकस्तद्भनक्ति तोत्रभञ्जकश्च, उभयत्र 'कर्मण्यण्'(पा०३–२–१इत्यण्),'उत्पथविपथगामी' उत्पथः–उन्मार्गो विपथो–विरूपमार्गस्ताभ्यां गमनशीलः,'एते' अवदार्यादयः खलुङ्काः 'भवन्ति' भवेयुः 'गोणाः' बलीवर्दाः, उपलक्षणत्वादश्वादयश्च। अमुमेव प्रकारान्तरेणाह—'यदि'ति सामान्यनिर्देशे 'किले'ति परोक्षाप्तवादसूचकः 'द्रव्यं' दार्वादि कुब्जमिव कुब्जं मध्यस्थूलतया कर्कशं च तत्कठिनतया गुरुकं चातिनिचितपुद्गलतया कर्कशगुरुकं,तथाऽत एव दुःखेनावनामयितुं शक्यत इति दुरवनामं, करीरकाष्ठवत्, तद्द्रव्येषु खलुङ्कं वक्रमनृजुत्वात् कुटिलं विशिष्टकौटिल्ययोगात् 'वेढमाइद्धं'ति मकारोऽलाक्षणिकस्ततश्च वेष्टैः–ग्रन्थिभिराविद्धं–व्याप्तं वेष्टाविद्धम्, तेषां विशेषणसमासः । इहैव दृष्टान्तमाह–'सुचिरमपि' प्रभूतकालमपि 'वंकडाइ'न्ति वक्राणि, अवधारणाफलत्वाच्च वाक्यस्य वक्राण्येव भवि-

थाऽविनयदोपसम्भवात्, अथवा 'पाए पसारिए वावि'त्ति पाठात् पादौ प्रसारितौ वाऽपि, कृत्वेति शेप, एकारस्यालाक्षणिकत्वात् प्रसार्य वा न तिष्ठेद्गुरूणामन्तिके उचितप्रदेशेऽपीति, उपलक्षण चैतद्दण्डपादिकाऽवष्टम्भादीनामिति सूत्रार्थ ॥ १९ ॥ पुन प्रतिश्रवणविधिमेव सविशेपमाह—

आयरिएहि वाहितो, तुसिणीओ ण कयाइवि। पसायट्ठी नियागट्ठी, उवचिट्ठे गुरु सया॥२०॥(सूत्रम्)

व्याख्या—'आचार्यैः' उपलक्षणत्वादुपाध्यायादिभि 'वाहितो'त्ति व्याहृत –शब्दित 'तुसिणीओ'त्ति तूष्णीक तूष्णीशील 'न कदाचिदपि' ग्लानाद्यवस्थायामपि, भवेदिति गम्यते, किन्तु–'धन्यस्योपरि निपतत्यहितसमाचरण घर्मनिर्वापी। गुरुवदनमलयनिसृतो वचनरसश्चन्दनस्पर्श ॥ १ ॥' इति प्रसादोऽय यदन्यसद्भावेऽपि मामादिशन्ति गुरव इति प्रेक्षितुम्–आलोचितु शीलमस्येति प्रसादप्रेक्षी, पाठान्तरत 'प्रसादार्थी' वा गुरुपरितोपाभिलाषी 'णियागट्ठी'त्ति पूर्ववत्, 'उपतिष्ठेत' मस्तकेनाभिवन्द इत्यादि वदन् सविनयमुपसर्प्पेत्, गुरु 'सदा' सर्वकालमिति सूत्रार्थ ॥ २० ॥ तथा–

आलवते लवते वा, ण णिसीज्जा कयाइवि। चइत्ता आसण धीरो, जओ जत्त पडिस्सुणे॥२१॥ (सूत्रम्)

व्याख्या—आडिति ईपल्लपति–वदति 'लपति वा' वार वारमनेकधा वाऽभिदधति 'न निपीदेत्' न निपण्णो

क्षाश्चण्डाः–कोपनतया मार्दवेन चरन्ति मार्दविकाः–शतकृत्वोऽपि गुरुप्रेरिता न सम्यगनुष्ठानं प्रति प्रवर्त्तन्ते किन्त्वलसा एव, अमीषां द्वन्द्वः । अन्यच्च–ये किल 'गुरुप्रत्यनीकाः' आचार्यादिप्रतिकूलाः कूलवालकवत् 'शवलाः' शवलचारित्रयोगात् 'असमाधिकारकाः' गुर्वादीनामसमाधानजनकाः, अत एव पापाः 'अधिकरणकारकात्मानः' कलहकर्तृस्वभावाः सदनुष्ठानं प्रति प्रेर्यमाणा युद्धायैवोपतिष्ठन्ते, 'जिनवचने' सर्वज्ञशासने ते किल खलुङ्का इत्युच्यन्त इति शेषः । तथा 'पिशुनाः' सूचकाः, अत एव 'परोवयावि'त्ति परोपतापिनः 'भिन्नरहस्याः' विश्वस्तजनकथितरहस्यभेदिनः तथा 'परम्' अन्यं 'परिभवन्ति' येन केनचित्प्रकारेणाभिभवन्ति 'णिव्वेयणिज्ज'त्ति निर्वेदनीया निर्वेदं प्राप्य प्रक्रमाद्यतिकृत्येन, पाठान्तरतो निर्गता वचनीयाद्–उपदेशवाक्यात्मकाद् ये ते निर्वचनीयाः, चः समुच्चये भिन्नक्रमश्च, ततः 'शठाश्च' मायाविनः, पठ्यते च–'णिघया णिस्सीलसढ'त्ति, सुगममेव, 'जिनवचने' श्रीसर्वज्ञशासने भणिता ये इति शेषः, ते प्रागभिहितस्वरूपाः किल खलुङ्का इति गाथात्रयार्थः ॥ ततः किमित्याह—

तम्हा खलुंकभावं चइऊणं पंडिएण पुरिसेणं । कायव्वा होइ मई उज्जुसभावंमि भावेणं ॥ ४९५ ॥

तस्मादित्थं दोषवन्तं खलुङ्कभावं त्यक्त्वा 'पण्डितेन' बुद्धिमता पुरुषेण उपलक्षणत्वात् स्त्र्यादिना च कर्त्तव्या भवति 'मतिः' बुद्धिः, क ?–'ऋजुस्वभावे' आर्जवे भावे 'भावेन' परमार्थेन न तु बहिर्वृत्त्यैवेति गाथार्थः॥ अवसितो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

प्यन्ति न कदाचिदृजुभावमनुभविष्यन्ति, 'अणुज्जइज्जमाणाइ'ति एक सरूपतोऽनृजूनि अपर च तेपा क्वचित्कार्येऽनुपयोगात्केनचिदनृजूक्रियमाणानि, का येवविधानीत्याह—करमर्दी—गुल्मभेदस्तद्दारुकानि, तथा 'गयंकुसा इव विंटाइ'ति चस्य गम्यमानत्वाद् गजाङ्कुशानीव वक्रतया वृन्तानि च—फलबन्धनानि, प्रक्रमात्करमर्द्या एवोक्तरूपाणि । अनेकधा द्रव्यखलुङ्काभिधान च काकाऽनेकविधकुशिष्यदृष्टान्तप्रदर्शनार्थमिति गाथात्रयार्थः॥ सम्प्रति यदुक्त 'प्रतिलोम सर्वार्थपु भावतो भवति खलुङ्क' इति तदभिव्यक्तीकर्तुमाह—

दसमसगस्ससमाणा जलुयकविच्छुयसमा य जे हुति। ते किर होंति खलुंका तिक्खम्मिउचंडमद्दविआ४९२
जे किर गुरुपडिणीआ सबला असमाहिकारगा पावा। अहिगरणकारगऽप्पा जिणवयणे ते किर खलुंका॥
पिसुणा परोवतावी भिन्नरहस्सा पर परिभवति। निव्विअणिज्जा य सढा जिणवयणे ते किर खलुंका॥४९४॥

दशमशकै 'समाण'त्ति समाना —तुल्या दशमशकसमाना , ते हि जात्यादिभिस्तद्वत्तुदन्तीति, तथा जलौकाकपिच्छुकसमानाश्च प्रस्तावाच्छिष्या ये भवन्ति, दोषग्राहितयाऽप्रस्तुतपृच्छादिनोद्वेजकतया च, पठन्ति च—'जलूकविच्छुगसमा य'त्ति यथा वृश्चिकोऽजष्टव्धो विध्यत्येव कण्टकेन एव ये शिष्यमाणा गुरुं वचनकण्टकैर्विध्यन्ति 'ते' एवविधाः किल भवति खलुङ्का भावत इति गम्यते, तीक्ष्णा—असहिष्णवो मृदव'—अलसतया कार्यकारणं प्रत्यद-

च पामरकादेः 'कान्तारम्' अरण्यम् 'अतिवर्त्तते' सुखातिवर्त्तितया स्वयमेवातिक्रमतीति दृष्टान्तः, उपनयमाह— 'योगे' संयमव्यापारे 'वहतः' तथैव प्रवर्त्तमानस्य इहापि प्राग्वत्प्रवर्त्तकस्य चाचार्यादेः 'संसारः' भवः 'अतिवर्त्तते' प्राग्वत् स्वयमेवातिक्रामति, इह च योगवहनमशठतेति सैव प्रागध्ययनार्थत्वेनोपवर्णिता फलोपदर्शनद्वारेणानेनो-क्तेति भावनीयमिति सूत्रार्थः ॥ तदेवं कथममी अशठतामासेव्य पुनर्ज्ञानादिसमाधिमन्तः शिष्याः स्युरिति तस्या गुणमभिधाय तद्गुणज्ञानमिव तद्विपक्षदोषावधारणमपि तदासेवनाङ्गमिति तद्विपक्षभूतशठतादोषा अपि वाच्याः, ते च कुशिष्यस्वरूपाभिधानत एवाभिधातुं शक्यन्ते इति निर्वेदकत्वं स्वगं दोषदुष्टत्वं च तत्स्वरूपमवगमयितुं दृष्टा-न्तोपवर्णनायाह—

खलुंके जो उ जोएइ, विहम्माणो किलिस्सई । असमाहिं च वेएइ, तोत्तओ य से भज्जई ॥ ३ ॥ एगं डसइ पुच्छंमि, एगं विंधइऽभिक्खणं । एगो भंजइ समिलं, एगो उप्पहपट्ठिओ ॥ ४ ॥ एगो पडइ पासेणं, निवेसइ निविज्जई । उक्कुद्दइ उप्फिडई, सढे बालगवी वए ॥ ५ ॥ माई मुद्धेण पडई, कुद्धे गच्छइ पडिवहं । मयलक्खेण चिट्ठाई, वेगेण य पहावई ॥ ६ ॥ छिन्नाले छिंदई सिल्लिं, दुद्दंते भंजई जुगं । सेविय सुस्सुयाइत्ता, उज्जु-हित्ता पलायई ॥ ७ ॥

यद्वा धर्मकथाऽनुयोगत्वादस्य प्रथमसूत्रे गर्गनामाऽऽचार्यः कथञ्चित्कुशिष्यैर्भग्नसमाधिरात्मनः समाधिं प्रति-

थेरे गणहरे गग्गे, मुणी आसि विसारए । आइन्ने गणिभावम्मि, समाहिं पडिसधए ॥ १ ॥

धर्मेऽस्थिरान् स्थिरीकरोतीति स्थविर , उक्त हि—"थिरकरणा पुण थेरो" गण–गुणसमूहं धारयति–आत्मन्यव-स्थापयतीति गणधर 'गार्ग्य' गर्गसगोत्र तथा मुणिति–प्रतिजानीते सर्वसावद्यविरतिमिति मुनि 'आसीत्, अभूत् 'विशारद' कुशल सर्वशास्त्रेषु सङ्ग्रहोपग्रहयोर्वा, 'आकीर्ण' आचार्यगुणैराचारश्रुतसम्पदादिभिर्व्याप्त परिपूर्ण इतियावत्, 'गणिभावे' आचार्यत्वे स्थित इति गम्यते, 'समाहिं पडिसंधए'त्ति समाधान समाधि , स च द्विधा–द्रव्यतो भावतश्च, तत्र द्रव्यसमाधिर्यदुपयोगात्स्वास्थ्य भवति, यथा(वा) पय शर्करादिद्रव्याणा परस्परमवि-रोध , भावसमाधिस्तु ज्ञानादीनि, तदुपयोगादेवानुपमस्वास्थ्ययोगात्, तत्रेह भावसमाधिर्गृह्यते, तत समाधि 'प्रतिसधत्ते' कर्मोदयात् त्रुटितमपि सघट्टयति, तथाविधशिष्याणामिति गम्यते इति सूत्रार्थ ॥ समाधिं च प्रतिसद-धद्यथाऽसौ शिष्येभ्य उपदिशति तथाऽऽह—

वहणे वहमाणस्स, कतार अइवत्तए । जोए वहमाणस्स, ससारो अइवत्तए ॥ २ ॥

उह्यतेऽनेन वोढव्यमिति वहन–शकटादिस्तस्मिन् योजितस्येति गम्यते, 'वहमानस्य' सम्यक्प्रवर्त्तमानस्योत्तरत्र खलुङ्कग्रहणादिह विनीतगवादेरिति गम्यते, अतिक्रम्यातिक्रमणसम्बन्धे षष्ठी, वाहकाविनाभूतत्वाचास्य वाहकस्य

१ स्थिरकरणात्पुन स्थविर

कश्चिद् 'वालगवी वए'त्ति 'वालगवीम्' अवृद्धां गां 'व्रजेत्' तदभिमुखं धावेदित्यर्थः, यदिवाऽऽर्षत्वाद्वालगवीति व्यालगवो-दुष्टबलीवर्दः 'व्रजेत्' गच्छेद् अन्यत इति शेषः । अन्यश्च 'मायी' मायावान् 'मूर्ध्ना' मस्तकेन पतति, कोऽर्थः ?—अतिनिस्सहमिवात्मानमादर्शयन् भुवि शिरसा लुठति, अपरः 'क्रुद्धः' कुपितः सन् 'गच्छति प्रतिपथं' पश्चाद्वलति, अपरः 'मृतलक्ष्येण' मृतव्याजेन 'तिष्ठति' आस्ते, पठ्यते च—'पलयं(यलं)ते ण चिट्ठिय'त्ति प्रव(च)लन्—प्रकर्षेण कम्पमानस्तिष्ठति, कम्पान्न निवर्त्तत इत्यर्थः, कथञ्चित्प्रगुणीकृतः 'वेगेन च प्रधावति' यथा द्वितीयो गन्तुं न शक्नोति तथा गच्छतीति योऽर्थः । 'छिन्नालः' तथाविधदुष्टजातिः कश्चित् 'छिनत्ति' खण्डयति 'सि[खि]ल्लिं'ति रश्मिं संयमनरज्जुमितियावत्, अपरस्तु दुर्दान्तो भनक्ति युगं, सोऽपि च युगं भङ्क्त्वा 'सुस्सुयाइत्त'त्ति सूत्कारान् कृत्वा, तथा 'उज्जुहित्त'त्ति प्रेर्य स्वामिनं शकटं चेति गम्यते 'पलायते' अन्यतो धावतीति सूत्रपञ्चकार्थः ॥ इत्थं दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह—

खलुंका जारिसा जुज्जा, दुस्सीसावि हु तारिसा । जोइया धम्मजाणंमि, भज्जंता धिइदुब्बला ॥ ८ ॥

'खलुङ्काः' इहोक्तरूपा गावो यादृशाः 'योज्याः' घट्टनीयाः, दुःशिष्या अपि 'हुः' अवधारणे भिन्नक्रमश्च, ततस्तादृशा एव, यथा हि खलुङ्कगवाः स्वस्वामिनं क्ल(क्ला)मयन्त्यसमाधिं च प्रापयन्ति यथा च समिलाभञ्जादिना दुष्टत्वमादर्शयन्त्येवमेतेऽपि, किमिति ?—यतो 'योजिताः' व्यापारिता धर्मो यानमिव मुक्तिपुरप्रापकतया धर्मयानं तस्मिन्

सधत्त इति व्याख्यायते, द्वितीयसूत्रे तु वहने 'वहमाणस्स'त्ति अन्तर्भावितण्यर्थतया वाहयमानस्य विनीतगवादीन् यथा कान्तारमतिवर्त्तते तथा योग्यान् शिष्यान् वाहयमानस्य—कृत्येषु प्रवर्त्तयत संसारोऽतिवर्त्तते, तद्विनीततादर्शनादात्मनो विशेषत समाधिसम्भवादितिभाव इति सोपस्कारतया व्याख्यायते, इत्थमात्मन समाधिप्रतिसन्धानाय विनीतस्वरूप परिभाव्य स एवाविनीतस्वरूप यथा परिभावयति तथाऽऽह—खलुकेत्यादिसूत्रद्वादशकम् । खलुङ्कान् योऽनिर्दिष्टस्वरूपः 'तुः' विशेषणे योजयति—योक्त्रयति वहन इति प्रक्रम , स किमित्याह—'विहमाणो'त्ति सूत्रत्वाद् विशेषेण 'घ्नन्' ताडयन् 'क्लाम्यति' श्रम याति, पाठान्तरत क्लिश्यति, अत एव 'असमाधिं' चित्तोद्वेगरूप 'वेदयते' अनुभवति 'तोत्रक' प्राजनक , स च 'से' इति तस्य खलुङ्कयोजयितु 'भज्यते' अतिताडनाद्भङ्गं याति । ततश्चातिरुष्ट सन् यत् कुरुते तदाह—एक 'दशति' दशनैर्भक्षयति 'पुच्छे' वालधौ, 'एकम्' अन्य गलि 'विध्यति' प्राजनकारया तुदति, उपलक्षण चैतदश्लीलभाषणादीनाम्, 'अभीक्ष्ण' पुन पुन , अथ किमेते कुर्वन्ति ? येन योजयितुरेव निर्वेदहेतव इत्याह—'एक' कश्चित् खलुङ्को गौ 'भनक्ति' आमर्दयति, का ?—'समिला' युगरन्ध्रकीलिकाम्, 'एक' अन्यस्तामभङ्क्त्वाऽपि उत्पथम्—उन्मार्ग प्रस्थित उत्पथप्रस्थितो भवतीति गम्यते । तथा 'एक' अपर पतति 'पार्श्वेन' एकगात्रविभागेन, गम्यमानत्वाद् भूमौ, अन्यस्तु 'निवेसइ'त्ति निविशति—उपविशति, अपरश्च 'णिविज्जए'त्ति शेते, पर 'उत्कूर्दते' ऊर्द्ध्वं गच्छति 'उप्फिडइ'त्ति मण्डूकवत्प्लवते, अन्य 'शठः' शाठ्यवान्, अन्य

एकदा कुपितः कुपित एवास्ते, न क्लेषु प्रवर्त्तते। भिक्षायामालस्यकः—आलस्यवान् भिक्षाऽऽलस्यिक एको न विहर्त्तुमिच्छति, एकोऽपमानभीरुः—भिक्षां भ्रमन्नपि न यस्य तस्यैव वेश्मनि प्रवेष्टुमिच्छति, यदिवा 'ओमाणं'ति प्रवेशः स च स्वपक्षपरपक्षयोस्तद्भीरुर्गृहिप्रतिबन्धेन मा मां प्रविशन्तमवलोक्यान्ये साधवः सौगतादयो वाऽत्र प्रवेक्ष्यन्तीति, 'थद्धो'त्ति स्तब्धोऽहङ्कारवान्, न निजकुग्रहान्नमयितुं शक्य इति प्रक्रमः, एकं च दुःशिष्यम् 'अणुसासंमि'त्ति आर्षत्वादनुशास्ति गुरुरिति गम्यते, यदा त्वाचार्य आत्मनः समाधिं प्रतिसंधत्ते इति व्याख्या तदाऽनुशास्मीति व्याख्येयं, हेतुभिः कारणैश्चोक्तरूपैः। स चानुशिष्यमाणः किं कुरुते? इत्याह—सोऽपि दुःशिष्यः 'अंतरभासिल्ल'त्ति अन्तरभाषावान्, गुरुवचनांपान्तराल एव स्वाभिमतभाषक इत्यर्थः, 'दोषमेव' अपराधमेव 'प्रादुष्क(प्रक)रोति' प्रकर्षेण विधत्ते, न तु शिष्यमाणोऽपि तद्विच्छेदमिति भावः, पाठान्तरतश्च दोषमेव प्रभाषते, गुरूणामिति गम्यते, न चैतावता तिष्ठति, किन्त्वाचार्याणामुपलक्षणत्वादुपाध्यायादीनां द्वितीयपक्षे त्वाचार्याणां सतामस्माकमिति गम्यते, तदित्यनुशिष्ट्यभिधायकं वचनं वचः 'प्रतिकूलयति' विपरीतं करोति युक्त्युपन्यासेन विपरीतचेष्टया वा 'अभीक्ष्णं' पुनः पुनः, न त्वेकदैवेत्यभिप्रायः। यथा प्रतिकूलयति तथाऽऽह—न सा 'ममं'ति मां विजानाति, किमुक्तं भवति?—गुरुभिः कदाचित्प्रज्ञापितो यथा—आयुष्मन्! ग्लानप्रतिजागरणं महन्निर्जरास्थानमित्यमुकस्या अपि श्राविकायाः सकाशादमुकमौषधमाहारजातं वाऽऽनीयतां, ततः स तया ज्ञायमानोऽपि प्रतिकूलतया प्राह—

'भज्यन्ते' न सम्यक् प्रवर्त्तन्ते 'धिइदुब्बल'त्ति प्राकृतत्वाद् दुर्बलधृतयो धर्मानुष्ठान प्रतीति गम्यत इति सूत्रार्थ ॥ धृतिदुर्बलत्वमेव तेषा भावयितुमाह—

इड्ढीगारविए एगे, एगेत्थ रसगारवे । सायागारविए एगे, एगे सुचिरकोहणे ॥ ९ ॥ भिक्खालसिए एगे, एगे ओमाणभीरुए थद्धे । एग च अणुसासमी, हेऊहि कारणेहि य ॥ १० ॥ सोऽवि अतरभासिल्लो, दोस मेव पकुव्वई । आयरियाण त वयण, पडिकूलेइ अभिक्खण ॥ ११ ॥ न सा मम वियाणाइ, नवि सा मज्झ दाहिई । निग्गया होहिई मन्ने, साहू अन्नोऽत्थ वच्चउ ॥ १२ ॥ पेसिया पलिउचति, ते परियति समतओ । रायविट्ठि व मनता, करिति भिउडि मुहे ॥ १३ ॥ वाइया सगहिया चेव, भत्तपाणेहिं पोसिया । जायपक्खा जहा हसा, पक्कमति दिसोदिसि ॥ १४ ॥

'इड्ढीगारविए'त्ति ऋद्ध्या गौरव–श्राद्धा ऋद्धिमन्तो मम वश्या सपद्यते च यथाचिन्तितमुपकरणमित्याद्यात्मबहुमानरूपमृद्धिगौरव तदस्यास्तीति ऋद्धिगौरविको न गुरुनियोगे प्रवर्त्तते किमेतैर्ममेति एक –कश्चन, 'एक ' अन्योऽत्रेति–तु शिष्याधिकारे 'रसगारवे'त्ति रसेषु–मधुरादिषु गौरव–गार्ध्य यस्यासौ रसगौरवो बालग्लानादिसमुचिताहारदानतपोऽनुष्ठानादौ न प्रवर्त्तते, 'सायागारविए'त्ति साते–सुखे गौरव–प्रतिबन्ध सातगौरव तदस्यास्तीति सातगौरविक एक , सुखप्रतिबद्धो हि नाप्रतिबद्धविहारादौ प्रवर्त्तितु क्षम , एक 'सुचिरक्रोधन ' प्रभूतकालकोपनशील ,

दिशि दिशि यदृच्छाविहारिणो भवन्तीत्यर्थः । पूर्वत्रैकस्थानस्थितानामेव पर्यटनमुक्तम्, इह तु देशान्तरगमन इति न पौनरुक्त्यं, प्रागेकप्रक्रमेऽपि यदिह वहभिधानं तदीदृशां भूयस्त्वख्यापनार्थमिति सूत्रपञ्चकार्थः ॥ इत्थं खलुङ्कस्येव समिलाभङ्गादिना दुःशिष्यस्य धृतिदुर्बलत्वादिना दुष्टत्वम्, अत एव स्वस्वामिक्लमासमाधिजनकत्वं चोक्तम्, इदानीं तैरेव प्रापितक्लमासमाधिर्यदसावचेष्टत तदाह—

अह सारही विचिंतेइ, खलुंके हि समागए । किं मज्झ दुट्ठसीसेहिं ?, अप्पा मे अवसीअई ॥ १५ ॥
जारिसा मम सीसा उ, तारिसा गलिगद्दहा । गलिगद्दहे चइत्ताणं, दढं पगिण्हई तवं ॥ १६ ॥

'अथे'ति क्लमासमाधिसम्भवानन्तरं सारथिरिव सारथिः स्खलितप्रवर्त्तकतयाऽऽचार्यादिः 'विचिन्तयति' ध्यायति, आचार्यसमाधिप्रतिसन्धानपक्षे तु 'अथे'त्यनन्तरोक्तचिन्तानन्तरं 'सारथिः' स एव गर्गाचार्यः खलुङ्कैरिव खलुङ्कैः—दुः-शिष्यैः, हेतौ तृतीया, श्रमं—खेदमागतः—प्राप्तः श्रमागतः, ते हि दुष्टगववदनेकधा प्रेर्यमाणा अपि सन्मार्गमगच्छन्तो गुरुश्रमहेतव एव भवन्ति, यदिवा समागतः खलुङ्कैरिति च सहार्थे तृतीया, यद्विचिन्तयति तदाह—किं ?, न किञ्चि-दित्यर्थः, ममैहिकमामुष्मिकं वा प्रयोजनं सिध्यतीति गम्यते, कैः ?—दुष्टशिष्यैः प्रक्रमात्प्रेरितैः, किमेवमुच्यते इत्याह—आत्मा 'मे' ममावसीदति, एतत्प्रेरणादिव्यग्रतया तथाविधस्वस्वकृत्याकरणेन, तत एतत्त्यागतो वरमुद्यतविहारेणैव विहृतमिति भावः। अथैतत्प्रेरणान्तराले स्वकृत्यमपि किं न क्रियते ? इत्याह—यादृशा मम शिष्याः, 'तुः' पूरणे, तादृशा

न सा-श्राविका मा प्रत्यभिजानाति, अप्रत्यभिज्ञानाच्च न वेत्ति, नैव सा मह्य दास्यति विवक्षितमौषधादीति गम्यते इति हेतुहेतुमद्भावेन व्याख्येय, स्वतन्त्रतया वा न सा मां विजानाति, नापि सा मह्य दास्यतीत्याह, यद्विवा निर्गता गृहादिदानीं सा भविष्यतीति मन्ये इति वक्ति, अथवा साधु 'अन्य' मद्व्यतिरिक्त 'अत्र' विवक्षितप्रयोजने व्रजतु, किमहमेवैक साधुरस्मीत्यभिधत्ते। अन्यच्च 'प्रेपिता' कचित्तथाविधप्रयोजने प्रस्थापिता 'पलिउंचति'त्ति तत्प्रयोजनानिष्पादने पृष्टा सन्तोऽपह्नुवते-क वयमुक्ता ?, गता वा तत्र वय, न त्वसौ दृष्टेति, पठ्यते च-'पोसिया पलिउंचति' पोपिता -आहारोपकरणादिना श्रुतादिना च पुष्टि नीता अपह्नुवते-यथा किमस्माक गुरुभि कृतमित्यपलपन्ति 'ते' तु शिष्या 'परियति' पर्यटन्ति 'समन्तत' सर्वासु दिक्षु, न गुरुसन्निधौ कदाचिदासते, मा कदाचिदेपा किञ्चित्कृत्य भविष्यतीति, कथञ्चित्सन्निधाने वा कर्त्तुं प्रवृत्तौ 'राजवेष्टिमिव' नृपतिहठप्रवर्त्तितकृत्यमिव 'मन्यमाना' मनस्यवधारयन्त कुर्वन्ति 'भ्रुकुटीम्' आवेशवशकृतभ्रूक्षेपरूपा 'मुखे' वक्त्रे, अत्यन्तदुष्टताख्यापकमेतत् तदन्यवपुर्विकारोपलक्षण च। अपरञ्च-'वाचिता' शास्त्राणि पाठिता, उपलक्षणत्वात्तदर्थं च ग्राहिता, किमाचार्यान्तरसत्का एव सन्त उतान्यथेत्याह-'सगृहीता' परिगृहीताश्चरा दाद् दीक्षिता उपस्थिताश्च स्वयमिति गम्यते, एवेति पूरणे, 'भक्तपानेन' च सुस्निग्धमधुरादिना, सूत्रे च सुव्यत्ययात्तृतीयार्थे सप्तमी, 'पोपिता' उपचितीकृता, तथाऽपि 'जातपक्षा' उत्पन्नपतत्रा यथा हसा प्रकर्षेण-अतिविप्रकृष्टदेशान्तरगमनलक्षणेन क्रामन्ति-गच्छन्ति प्रक्रामन्ति 'दिसोदिसिं'ति

भवेत्, 'कदाचिदपि' व्याख्यानादिना व्याकुलतायामपि, किन्तु ?—'त्यक्त्वा' अपहाय 'आसनं' पादपुञ्छनादि, धिया राजते धीरः, अक्षोभ्यो वा परीषहादिभिः, 'यत' इति यतो यत्नवान् 'जत्तं' ति प्राकृतत्वाद्बिन्दुलोपे तस्य च द्वित्वे यद्गुरव आदिशन्ति तत् 'प्रतिशृणुयात्' अवश्यविधेयतया अभ्युपगच्छेदितियावत्, यद्वा यत इति यत्र गुरवः, तत्र गत्वेति गम्यते, 'यात्रां' संयमयात्रां प्रस्तावाद् गुरूपदिष्टां प्रतिशृणुयादिति सूत्रार्थः ॥ २१ ॥ पुनः प्रतिरूपविनयमेवाऽऽह—

आसणगओ ण पुच्छिज्जा, णेव सिज्जागओ कया। आगम्मुकुडुओ संतो, पुच्छिज्जा पंजलीगडे॥२२॥(सूत्रम्)

व्याख्या—'आसनगतः' इति आसनासीनो न पृच्छेत्, सूत्रादिकमिति गम्यते, नैव 'शय्यागत' इति संस्तारकस्थितः, तथाविधावस्थां विनेत्युपस्कारः, 'कदाचिदपि' बहुश्रुतत्वेऽपि, किमुक्तं भवति ?—बहुश्रुतेनापि संशये सति न न प्रष्टव्यं, पृच्छताऽपि नावज्ञया, सदा गुरुविनयस्यानतिक्रमणीयत्वात्, तथा चाऽऽगमः—"जहाहिअग्गी जलणं नमंसे, णाणाहुईमंतपयाहिसित्तं । एवायरियं उवचिट्ठएज्जा, अणंतणाणोवगओऽवि संतो ॥ १ ॥" किं तर्हि कुर्यादित्याह—'आगम्य' गुर्वन्तिकमेत्य 'उत्कुटुक' इति मुक्तासनः, कारणतो वा पादपुञ्छनादिगतः सन् शान्तो वा 'पृच्छेत्' पर्यनुयुञ्जीत, सूत्रादिकमितीहापि गम्यते, प्रकर्षेण—अन्तःप्रीत्यात्मकेन कृतो—विहितोऽञ्जलिः—उभयकरमी-

१ यथाऽऽहिताग्निर्ज्वलनं नमस्यति नानाहुतिमन्त्रपदाभिषिक्तम् । एवमाचार्यमुपतिष्ठेतानन्तज्ञानोपगतोऽपि सन् ॥ १ ॥

गलिगर्दभा , यदि परमित्युपस्कार , गर्दभग्रहणमतिकुत्सारयापक, ते हि स्वरूपतोऽप्यतिप्रेरणयैव प्रवर्त्तन्ते, ततस्तत्प्रेरणयैव कालोऽतिक्रामति, न तु तद तरालसम्भव इति भाव , यतश्चैव ततो गलिगर्दभानिव गलिगर्दभान्–दु शिष्यास्त्यक्त्वा 'दृढ' वाढ 'प्रगृह्णामि' पाठान्तरत 'परिगृह्णाति वा' अङ्गीकुरुते, तदनुशासनरूपपलिमन्थस्यागत ,एकत्र सामान्येन गुरुरन्यत्र तु गर्गनामा, कि तु 'तप ' अनशनादीति सूत्रद्वयार्थ ॥ तत कीदृश. सन् किमसौ कुरुते ? इत्याह—

मिउमद्दवसपन्ने, गभीरे सुसमाहिए । विहरइ महि महप्पा, सीलभूएण अप्पण ॥ १७ ॥ त्तिबेमि ॥

॥ खलुंकिज्ज ॥ २७ ॥

'मृदु ' बहिर्वृत्त्या विनयवान् 'मार्दवसपन्न ' अन्त करणतोऽपि तादृगेव, कुशिष्यसन्निधौ हि मृदुरपि स्वरूपतोऽमृदुरेवासीत्, उक्त हि प्राक्–"अणासवा थूलवया कुसीला, मिउपि चड पकरति सीसा" इति, अत एव 'गम्भीर ' अलब्धमध्य 'सुसमाहित ' सुष्ठु चित्तसमाधानवान् 'विहरति' अप्रतिबद्धविहारेण पर्यटति 'महीं' पृथ्वीं महात्मा शील—चारित्र भूत —प्राप्त शीलभूतस्तेनात्मना उपलक्षित , यतश्चैव गुरोरपि खलुङ्कत्यागत एव मार्दवादिगुणसपन्नतेति खलुङ्कताया इहैवात्मनो गुरूणा च दोषहेतुत्वेन तत्त्यागतोऽशठतैव सेवितव्येत्यध्ययनतात्पर्यार्थ ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगम , सम्प्रति नयास्तेऽपि प्राग्वदेव ॥ इत्युत्तराध्ययनश्रुतस्कन्धटीकाया शिष्यहिताया श्रीशान्त्याचार्यकृताया खलुङ्कीय नाम सप्तविंशमध्ययन समाप्तम् ॥ २७ ॥

# अथ मोक्षमार्गगत्याख्यमष्टाविंशमध्ययनम् ।

व्याख्यातं सप्तविंशमध्ययनम् अधुनाऽष्टाविंशमारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तराध्ययनेऽशठतयैव सामाचारी परिपालयितुं शक्यत इति तामभिहितवान्, इह तु तद्व्यवस्थितस्य न्यायप्राप्तैव मोक्षमार्गगतिप्राप्तिरिति तदभिधायकमिदमध्ययनमारभ्यते, अस्य चानुयोगद्वारचतुष्टयं प्राग्वत्प्ररूप्यं यावन्नामनिष्पन्ननिक्षेपे अस्य मोक्षमार्गगतिरिति नाम अतो मोक्षस्य मार्गस्य गतेश्च निक्षेपमभिधातुमाह निर्युक्तिकृत्—

निक्खेवो मुक्खंमि(य)चउविहो ॥ ४९६ ॥
जाणगसरीरभविए तव्वइरित्ते अ नियलमाईसु । अट्ठविहकम्ममुक्को नायव्वो भावओ मुक्खो ॥४९७॥
निक्खेवो मग्गंमि(वि)चउव्वि० ॥ ४९८ ॥
जाणगसरीरभविए तव्वइरित्ते अ जलथलाईसुं । भावंमि नाणदंसणतवचरणगुणा मुणेयव्वा ॥४९९॥
निक्खेवो उ गईए चउक्कओ दुवि० ॥ ५०० ॥
जाणगसरीरभविए तव्वइरित्ते अ पुग्गलाईसुं । भावे पंचविहा खलु मुक्खगईए अहीगारो ॥ ५०१ ॥

णिक्खवेत्यादि गाथा षट् प्रतीतार्था एव, नवर 'तघइरित्ते य नियलमाईसु'त्ति तद्यतिरिक्तश्च निगडादिभ्य , आदिशब्दात्कारागृहादिपरिग्रह , सूत्रत्वाच्च पञ्चम्यर्थे सप्तमी, इह च निगडादीना द्रव्यत्वात्तन्मोक्षोऽपि द्रव्यमोक्ष उक्त , अष्टविधकर्मणा–ज्ञानावरणादिना मुक्त –त्यक्त आत्मेति गम्यते ज्ञातव्यो भावतो मोक्ष , कथञ्चिद्द्रव्यपर्याययोरनन्यत्वख्यापनार्थमित्थमुक्तम्, अन्यथा हि क्षायिकभाव एवात्मनो मुक्तत्वलक्षणो मोक्ष इत्युच्यते, आह–कर्मणोऽपि द्रव्यत्वात्कर्मक्षयलक्षणत्वाच्चास्य कथ न द्रव्यमोक्षता ?, उच्यते, इह द्रव्यस्याविवक्षितत्वात्क्षायिकभावरूपस्यैव चास्याश्रितत्वान्न दोष , अथवा भावशब्दोऽत्र परमार्थवचन , तथा च वक्तारो भवन्ति–अयमत्र भाव –अयमत्र परमार्थ इत्यर्थ , ततश्चास्यैवैकान्तिकात्यन्तिकत्वेन तात्त्विकत्वाद्भावमोक्षत्वम्, इतरस्य तु तद्विपरीतत्वाद् द्रव्यमोक्षत्वमित्यनवकाश एव प्रेरणाया , 'तवइरित्ते य जलथलाईसु'न्ति जलस्थले–प्रतीते आदिशब्दादुभयपरिग्रहस्तेषु प्रक्रमाद्यो मार्ग स तद्यतिरिक्तो द्रव्ये मुणितव्य इति सटङ्क , भावे ज्ञानदर्शनतपश्चरणगुणा जीवपर्यायत्वान्मुक्तिपदावाप्तिनिमित्ततया च मुणितव्यो मार्ग इति प्रक्रम । 'तवइरित्ते य पोग्गलाईसु'न्ति सूत्रत्वात्तद्यतिरिक्ता च प्रक्रमाद्द्रव्यगति पुद्गलादिषु, आदिशब्दाज्जीवपरिग्रह , व्यक्तिभेदविवक्षया च बहुवचननिर्देश , द्रव्यत्व चास्या द्रव्यप्राधान्यविवक्षया, अन्यथा हि पुद्गलादिपर्यायत्वाद्गतेर्भावरूपतैव, यदिवा द्रव्यस्य गति द्रव्यगतिरिति षष्ठीसमासाश्रयणान्न दोष , भावे

'पञ्चविधा' पञ्चप्रकारा प्रस्तावाद्गतिर्नारकतिर्यङ्नरामरसुक्त्याख्यगम्यभेदेन, मोक्षगत्या–सिद्धिगत्या त्वधिकारः, तस्या एवेहाभिधेयत्वादिति गाथापञ्चार्थः ॥ सम्प्रति यथाऽस्य मोक्षमार्गगतिरिति नाम तथा दर्शयितुमाह—

मुक्खो मग्गो अ गई वण्णिज्जइ जम्ह इत्थ अज्झयणे । तं एअं अज्झयणं नायव्वं मुक्खमग्गगई ५०२

मोक्षः प्राप्यतया मार्गस्तत्प्रापणोपायतया चशब्दो भिन्नक्रमः ततः 'गतिश्च' सिद्धिगमनरूपा तदुभयफलतया 'वर्ण्यते' प्ररूप्यते यस्माद् 'अत्रे'ति प्रस्तुतेऽध्ययने 'तत्' तस्मादेतदध्ययनं ज्ञातव्यं 'मोक्षमार्गगतिः' इति मोक्षमार्गगतिनामकम्, अभिधेयेऽभिधानोपचारादिति भाव इति गाथार्थः ॥ उक्तो नामनिष्पन्नो निक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

मुक्खमग्गगइं तच्चं (त्थं), सुणेह जिणभासियं । चउकारणसंजुत्तं, नाणदंसणलक्खणं ॥ १ ॥

मोक्षणं मोक्षः–अष्टविधकर्मोच्छेदस्तस्य मार्गः–उक्तरूपस्तेन गतिः–अनन्तरोक्ता मोक्षमार्गगतिस्तां, कथ्यमानामिति गम्यते, 'तच्चं'ति 'तथ्याम्' अवितथां 'शृणुत' आकर्णयत 'जिनभाषितां' तीर्थकृदभिहितां, चत्वारि कारणानि वक्ष्यमाणलक्षणानि तैः संयुक्ता–समन्विता चतुष्कारणसंयुक्ता तां, नन्वमूनि चत्वारि कारणानि कर्मक्षयलक्षणस्य मोक्षस्यैव, गतेस्तु तदनन्तरभावित्वात्स एवे (व ने)ति कथं चतुष्कारणवतीत्वमस्या न विरुध्यते ?, उच्यते, व्यवहारतः कारणकारणस्यापि कारणत्वाभिधानाददोषः, अत एव चानन्तरकारणस्यैव कारणत्वमित्याशङ्काऽपोहार्थ-

मस्य विशेषणस्योपन्यास, अन्यथा हि मोक्षमार्गेण गतिरिति विग्रहे गतिं प्रति मार्गस्य कारणत्वं प्रतीयत एव, तद्रूपाणि चामूनि चत्वारि कारणानीति, तथा ज्ञानदर्शने लक्षणं-चिह्नं यस्याः सा ज्ञानदर्शनलक्षणा, यस्य हि तत्सत्ता तस्यावश्यभाविनी मुक्तिरिति निश्चीयते, अत एव चानयोर्मूलकारणतां दर्शयितुमित्थमुपन्यास, यद्वा मोक्षे-उक्तलक्षणे मार्गे-शुद्धो 'मृजू शुद्धा'विति धातुपाठात्तस्य गति-प्राप्तिस्तां ज्ञानदर्शने-विशेषसामान्योपयोगरूपे लक्षणम्-असाधारणं स्वरूपं यस्याः सा तथा तां, न चेह निर्युक्तिकृता मार्गगत्योरन्यथाव्याख्यानात्तद्विरोध, अनन्तगमपर्यायत्वात्सूत्रस्य, शिष्यासंमोहाय कस्यचिदेवार्थस्य तेनाभिधानात्, शेषं प्राग्वदिति सूत्रार्थः ॥ यदुक्तं 'मोक्षमार्गगतिं श्रृणुते'ति, तत्र मोक्षमार्गं तावदाह—

नाणं च दंसणं चेव, चरित्तं च तवो तहा । एस मग्गुत्ति पन्नत्तो, जिणेहिं वरदंसिहिं ॥ २ ॥

ज्ञायते-अवबुध्यतेऽनेन वस्तुतत्त्वमिति ज्ञानं, तच्च सम्यग्ज्ञानमेव ज्ञानावरणक्षयक्षयोपशमसमुत्थं मत्यादिभेदं, दृश्यते तत्त्वमस्मिन्निति दर्शनम्, इदमपि सम्यग्रूपमेव, दर्शनमोहनीयक्षयक्षयोपशमोपशमसमुत्पादितमर्हदभिहितजीवादितत्त्वरुचिलक्षणात्मशुभभावरूपम्, 'एव' अवधारणे भिन्नक्रमश्चोत्तरत्र योक्ष्यते, चरन्ति-गच्छन्त्यनेन मुक्तिमिति चरित्रम्, एतदपि सम्यग्रूपमेव चारित्रमोहनीयक्षयादित्रयप्रादुर्भूतसामायिकादिभेदं सदसत्क्रियाप्रवृत्तिनिवृत्तिलक्षणं, तपति पुरोपात्तकर्माणि क्षपणेनेति तपो-बाह्याभ्यन्तरभेदभिन्नं यदर्हद्वचनानुसारि तदेव समीची

नमुपादीयते, इत्थं चैतत्, सर्वत्र मोक्षमार्गगतिप्रस्तावाद्विपर्यस्तज्ञानादीनां तत्कारणताऽनुपपत्तेरन्यथाऽतिप्रसङ्गात्तथेति, सर्वत्र चशब्दः समुच्चये, सर्वत्र समुच्चयाभिधानं समुदितानामेव मुक्तिमार्गत्वख्यापकम्, एष एव 'मार्ग' इति मार्गशब्दवाच्यः, अस्यैव मुक्तिप्रापकत्वात् 'प्रज्ञप्तः' प्रज्ञापितः 'जिनैः' तीर्थकृद्भिः वरं—समस्तवस्तुव्यापितयाऽव्यभिचारितया च द्रष्टुं—प्रेक्षितुं शीलमेषां ते वरदर्शिनस्तैः, इह च चारित्रभेदत्वेऽपि तपसः पृथगुपादानमस्यैव क्षपणं प्रत्यसाधारणहेतुत्वमुपदर्शयितुं, तथा च वक्ष्यति—"तवसा (उ) विसुज्झइ"त्ति सूत्रार्थः ॥ सम्प्रत्येतस्यैवानुवादद्वारेण फलमुपदर्शयितुमाह—

नाणं च दंसणं चेव, चरित्तं च तवो तहा। एयं मग्गमणुप्पत्ता, जीवा गच्छंति सुग्गइं ॥ ३ ॥

पूर्वार्द्धं व्याख्यातमेव, 'एनम्' इत्यनन्तरमुक्तरूपं 'मार्गं' पन्थानम् 'अनुप्राप्ताः' आश्रिता जीवाः 'गच्छन्ति' यान्ति 'सोग्गइ'न्ति सुगतिं—शोभनगतिं, प्रक्रमान्मुक्तिमिति सूत्रार्थः ॥ ज्ञानादीनि मुक्तिमार्ग इत्युक्तमतस्तत्स्वरूपमिहाभिधेयं, तच्च तद्भेदाभिधानेऽभिहितमेव भवतीतिमत्वा 'यथोद्देशस्तथा निर्देश' इति न्यायतो ज्ञानभेदानाह—

तत्थ पंचविहं नाणं, सुअं आभिणिबोहियं। ओहियनाणं तइयं, मणनाणं च केवलं ॥ ४ ॥

'तत्र' इति तेषु ज्ञानादिषु मध्ये 'पञ्चविधं' पञ्चप्रकारं, किं तत्?—ज्ञानं, क एते पञ्च प्रकारा इत्याह—श्रूयते तदिति श्रुतं—शब्दमात्रं, तच्च द्रव्यश्रुतमेव, यत्पुनः शब्दमाकर्णयतः स्वयं वा वदतः पुस्तकादिन्यस्तानि वा चक्षुरा-

दिभिरक्षराण्युपलभमानस्य शेपेन्द्रियगृहीत वाऽर्थं विकल्पयतोऽक्षरारूपित विज्ञानमुपजायते तदिह भावश्रुत श्रुतशब्देनोक्त, तथाऽभिमुखो योग्यदेशावस्थितवस्त्वपेक्षया नियत स्वस्वविषयपरिच्छेदकतयाऽवबोध –अवगमोऽभिनिबोध स एवाभिनिबोधिक,विनयादित्वात्स्वार्थिकष्ठक्,'ओहि'त्ति अवशब्दोऽध शब्दार्थ , ततश्चाध इत्यधस्ताद्धावति अधोऽधो विस्तृतविषयवेदकतयेत्यवधि , औणादिको डि , यद्वा 'अवे'त्यध एव धान धातूनामनेकार्थत्वात्परिच्छेदोऽवधि , 'उपसर्गे घो कि'रिति (पा०३–३–९२)कि ,अथवाऽवधि –मर्यादा रूपिष्वेव द्रव्येषु परिच्छेदकतया प्रवृत्तिरित्येवरूपा, तदुपलक्षित ज्ञानमप्यवधि ,ज्ञायतेऽनेनेति ज्ञातिर्वा ज्ञान,ततोऽवधिश्चासौ ज्ञान चावधिज्ञान,तृतीय तृतीयस्थानवर्त्तित्वात्,'मणणाण'ति मन शब्देन द्रव्यपर्याययो कथञ्चिदभेदात् मनोद्रव्यपर्याया गृह्यन्ते,तेषु तत्तत्सञ्ज्ञिविकल्पहेतुषु ज्ञान मनोज्ञान, तानेव हि मन पर्यायज्ञानी साक्षादेव बुध्यते,न तु बाह्यान् ,अनुमानगम्यमानत्वात्तेषाम् ,उक्तं हि–"जाणति बज्झेऽणुमाणाओ"त्ति, 'च' समुच्चये भिन्नक्रमस्तत केवल च, तत्र केवलम्–एकमकलुष सकलमसाधारणमनन्त च ज्ञानमिति प्रक्रम , उक्तं हि—"केवलमेग सुद्ध सकलमसाधारण अणत च।" आह–नन्द्यादिषु मतिज्ञानानन्तर श्रुतज्ञानमुक्त तदिह किमर्थमादित एव श्रुतोपादानम् ?, उच्यते, शेपज्ञानानामपि स्वरूपज्ञानस्य प्रायस्तदधीनत्वेन प्राधान्यख्यापनार्थमिति सूत्रार्थ ॥ साम्प्रत ज्ञानशब्दस्य सम्बन्धिशब्दत्वाद्येपा तज्ज्ञान तान्यभिधातुमाह—

१ जानाति बाह्याननुमानात् २ केवलमेक शुद्ध सकलमसाधारणमनन्त च ।

एयं पंचविहं नाणं, दव्वाण य गुणाण य। पज्जवाणं च सव्वेसिं, नाणं नाणीहिं देसियं ॥ ५ ॥

'एतद्' अनन्तरोक्तं पञ्चविधं ज्ञानं द्रवन्ति–गच्छन्ति तांस्तान् पर्यायानिति द्रव्याणि–वक्ष्यमाणलक्षणानि तेषां, 'चः' तद्गतानेकभेदख्यापको, गुणानां–रूपादीनां, चः प्राग्वत्, परीति–सर्वतः, कोऽर्थः ?–द्रव्येषु गुणेषु सर्वेष्ववन्ति—गच्छन्तीति पर्यवास्तेषां च, 'सर्वेषाम्' अशेषाणां, केवलापेक्षया चायं द्रव्यकार्त्स्न्ये सर्वशब्दः शेषज्ञानापेक्षया तु प्रकारकार्त्स्न्ये, प्रतिनियतपर्यायग्राहित्वात्तेषां, 'ज्ञानम्' अवबोधकं 'ज्ञानिभिः' अतिशयज्ञानोपेतैः केवलिभिरितियावत् 'देशितं' कथितम्। अनेन च यदाहुः–ज्ञानं ज्ञानस्वरूपस्यैव ग्राहकं, बाह्याभिमतस्य वस्तुनो ज्ञानातिरिक्तस्यासत्त्वाद्, अत एवोक्तं–'स्वरूपस्य स्वतो गति'रिति, तन्निरस्तम्, अन्तः सुखादिप्रतिभासवद्बहिः स्थूलप्रतिभासस्यापि स्वसंविदितत्वात्, न च युगपद्वेद्यमानयोरेकस्य तात्त्विकत्वमितरस्य त्वन्यथात्वमिति निमित्तं विना कल्पयितुं शक्यम्, अथैकत्राविद्योपदर्शितत्वं तत्कल्पननिमित्तं, न, यतस्तदितरत्रापि किं न कल्प्यते ?, निमित्तं विना कल्पनाया उभयत्राविशेषात्, तथा च ज्ञानस्याप्यभावेन सर्वशून्यतापत्तिरित्यलं प्रसङ्गेनेति सूत्रार्थः ॥ अनेन द्रव्यादिविषयत्वं ज्ञानस्योक्तं, तत्र च द्रव्यादीनि किंलक्षणानीत्यत आह—

गुणाणं आसओ दव्वं, एगदव्वस्सिया गुणा। लक्खणं पज्जवाणं तु, उभओ अस्सिया भवे ॥ ६ ॥

'गुणानां' वक्ष्यमाणानाम् 'आश्रयः' आधारो यत्रस्थास्त उत्पद्यन्ते उत्पद्य चावतिष्ठन्ते प्रलीयन्ते च तद् द्रव्यम्,

अनेन रूपादय एव वस्तु न तद्व्यतिरिक्तमन्यदिति तथागतमतमपास्त, तथाहि—यदुत्पादविनाशयोर्न यस्योत्पादविनाशौ
न तत्ततोऽभिन्न, यथा घटात्पटो, न भवतश्च पर्यायोत्पादविनाशयोर्द्रव्यस्योत्पादविनाशौ, न चायमसिद्धो हेतु,
स्थासकोशकुशूलाद्यवस्थासु मृदादिद्रव्यस्यानुगामित्वेन दर्शनात्, न चास्य मिथ्यात्व, कदाचिदन्यथादर्शनासिद्धे,
उक्त हि—"यो ह्यन्यरूपसवेद्य, सवेद्येतान्यथा पुन.। स मिथ्या न तु तेनैव, यो नित्यमवगम्यते ॥१॥" तथैकस्मिन्
द्रव्ये स्वाधारभूते आश्रिता –स्थिता एकद्रव्याश्रिता, के ते ?—'गुणा' रूपादय, एतेन च ये द्रव्यमेवेच्छन्ति तद्व्य-
तिरिक्ताश्च रूपादीनविद्योपदर्शितानाहुस्तन्मतनिषेध कृत, सविन्निष्ठा हि विषयव्यवस्थितयो, न च रूपाद्युत्कलि-
तरूप कदाचित्केनचिद् द्रव्यमवगतमवगम्यते वा, अथ तद्विवर्त्त एव रूपादयो न तु तात्त्विका केचन तद्भेदेन
सन्ति, न चैव रूपादिविवर्त्तो द्रव्यमित्यपि किं न कल्प्यते ?, अथ तथैव प्रतीते, एव सति प्रतीतिरुभयत्र साधारणे-
त्युभयमुभयात्मकमस्तु, लक्ष्यतेऽनेनेति लक्षण 'पर्यवाणा' वक्ष्यमाणरूपाणा 'तु' विशेषणे 'उभयो' द्वयो. प्राकृत-
त्वाद् द्रव्यगुणयोराश्रिता 'भवे'त्ति 'भवेयु' स्यु । अनेन च य एवमाहु –यदाद्यन्तयोरसत् मध्येऽपि तत्तथैव, यथा
मरीचिकादौ जलादि, न सन्ति च कुशूलकपालाद्यवस्थयोर्घटादिपर्याया, ततो द्रव्यमेवादिमध्यान्तेषु सत्, पर्याया
पुनरसत्यैराकाशकेशादिभि सदृशा अपि भ्रान्तै. सत्यतया लक्ष्यन्ते, यथोक्तम्—"आदावन्ते च यन्नास्ति, मध्येऽपि
हि न तत्तथा। वितथै सदृशा सन्तोऽवितथा इव लक्षिता ॥ १ ॥" तेऽपाकृता, तथाहि—आद्यन्तयोरसत्त्वेन

मध्येऽप्यसत्त्वं साधयतामिदमाकूतं—यत्क्वचिदसत्तत्सर्वस्मिन्नसदिति, ततश्च मृद्द्रव्येऽप्यद्रव्यस्यासत्त्वात्सर्वस्मिन्नप्यसत्त्वप्रसङ्गः, अथेष्टमेवैतत्, सत्तामात्रस्यैव तत्त्वत इष्टत्वात्, उक्तं हि—"सर्वमेकं सदविशेषात्" नन्वेवमभावे भावाभावाद्भावस्यापि सर्वत्राभावप्रसङ्गः, तस्माद्बाधकप्रत्ययोदय एवासत्त्वे निबन्धनमिति न क्वचिदसत्त्वे तस्यावश्यंभावः, ततो द्रव्यवत्पर्यायाणामप्यबाधितबोधविषयत्वे सत्त्वमस्तु, तथा गुणेष्वपि नवपुराणादिपर्याया: प्रत्यक्षप्रतीता एव कियत्कालभाविनः, प्रतिसमयभाविनस्तु पुराणत्वाद्यन्यथानुपपत्तेरनुमानतोऽवसीयन्ते, ततश्च द्रव्यगुणपर्यायात्मकमेकं शबलमणिवच्चित्रपतङ्गादिवद्वा वस्त्विति स्थितमिति सूत्रार्थः ॥ आह—गृह्णीमो 'गुणानामाश्रयो द्रव्य'मिति द्रव्यलक्षणं, तच्चैवंलक्षणं द्रव्यं किमेकमेवोत तस्य भेदा अपि सन्तीत्याह—

धम्मो अधम्मो आगासं, कालो पुग्गलजंतवो। एस लोगुत्ति पन्नत्तो, जिणेहिं वरदंसिहिं ॥ ७ ॥

'धर्म' इति धर्मास्तिकायः 'अधर्म' इत्यधर्मास्तिकायः 'आकाश'मित्याकाशास्तिकायः 'कालः' अद्धासमयात्मकः 'पुद्गलजन्तव'इति पुद्गलास्तिकायः जीवास्तिकायः, एतानि द्रव्याणीति शेषः, प्रसङ्गतो लोकस्वरूपमप्याह—एष इत्यादि, सुगममेव, नवरमेष इति—सामान्यतः प्रतीतो लोक इतीत्येवंस्वरूपः, कोऽर्थः ?—अनन्तरोक्तद्रव्यषट्कात्मकः, उक्तं हि—"धर्मादीनां वृत्तिर्द्रव्याणां भवति यत्र तत्क्षेत्रम्। तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम् ॥१॥" इति सूत्रार्थः ॥ आह—किमेतेऽपि धर्मादयो भेदवन्त उतान्यथा ?, उभयथाऽपीति ब्रूमः, तथा चाह—

लनात्मकोऽनेनेति प्रकृताञ्जलि', प्राकृतत्वाच्च कृतशब्दस्य परनिपात , 'पजलिउड'त्ति पाठे च प्रकृष्ट–भावाचिततयाऽञ्जलिपुटमस्येति प्राञ्जलिपुट इति सूत्रार्थ ॥ २२ ॥ ईदृशस्य शिष्यस्य गुरुणा यत् कृत्य तदाह—

एव विणयजुत्तस्स,सुत्त अत्थ तदुभय। पुच्छमाणस्स सिस्सस्स, वागरिज्ज जहासुय ॥२३॥(सूत्रम्)

व्याख्या—'एवम्' इत्युक्तप्रकारेण 'विनययुक्तस्य' विनयान्वितस्य 'सूत्र' कालिकोत्कालिकादि 'अर्थ च' तस्यैवाभिधेय 'तदुभय' सूत्रार्थोभय 'पृच्छत' ज्ञीप्सत 'शिष्यस्य' स्वयदीक्षितस्योपसम्पन्नस्य वा 'व्यागृणीयात्' विविधमभिव्यास्याऽभिदध्यात् व्याकुर्याद्वा प्रकटयेत्, यथा–येन प्रकारेण श्रुतम्–आकर्णित, गुरुभ्य इति गम्यते, न तु स्वबुद्ध्योत्प्रेक्षितमित्यभिप्राय , अनेन च—'आयारे सुयविणए विक्खिवणे चेव होइ बोद्धवे। दोसस्स य निग्घाए विणए चउहेस पडिवत्ती ॥ १ ॥" इत्यागमाभिहितचतुर्विधाचार्यविनयान्तर्गतस्य 'सुत्त अत्थ च तहा हियकर णिस्सेसय च वाएइ । एसो चउविहो खलु सुयविणओ होइ णायवो ॥ १ ॥ सुत्त गाहेति उज्जुत्तो अत्थ च सुणा-

१ आचारे श्रुतविनये विक्षेपणे चैव भवति बोद्धव्य । दोषस्य च निर्घाते विनये चतुर्धैषा प्रतिपत्ति ॥१॥ २ सूत्रमर्थं च तथा हितकर नि शेष च वाचयति । एष चतुर्विध खलु श्रुतविनयो भवति ज्ञातव्य ॥१॥ सूत्र ग्राहयत्युद्युक्तोऽर्थं च श्रावयति प्रयत्नेन । यद्यस्य भवति योग्य परिणाम्यादि ( आश्रित्य ) तत्तु श्रुतम् ॥ २ ॥ निश्शेषमपरिशेष यावत्समाप्त च तावद्वाचयति । एष श्रुतविनय खलु निर्दिष्ट पूर्वसूरिभि ॥ ३ ॥

तत्वेन च सिद्धत्वात्, न च खपुष्पादिषु सङ्केतितैर्दुःखादिशुद्धपदैरनेकान्तो, वृद्धपरम्परायातसङ्केतविषयाणामेव शुद्धपदानां वाच्यत्वस्येह हेतुत्वेनेष्टत्वात्, निपुणेन प्रतिपत्त्रा भाव्यम्, अन्यथा धूमादेरपि गोपालघटादिष्वन्यथाभावदर्शनादेष प्रसङ्गो दुर्निवारः स्यात्, उक्तं च—"अत्थित्ति निव्वियप्पो जीवो नियमा उ सद्दतो सिद्धी। कम्हा ? सुद्धपयत्ता घडखरसिंगाणुमाणाओ ॥ १ ॥" इत्याद्यलं प्रसङ्गेन, तथा 'अधर्मः' अधर्मास्तिकायः स्थितिः स्थानं गतिनिवृत्तिरित्यर्थः, तल्लक्षणमस्येति स्थानलक्षणः, स हि स्थितिपरिणतानां जीवपुद्गलानां स्थितिलक्षणकार्यं प्रत्यपेक्षाकारणत्वेन व्याप्रियत इति तेनैव लक्ष्यत इत्युच्यते, अनेनाप्यनुमानमेव सूचितं, तच्चेदम्—यद्यत्कार्यं तत्तदपेक्षाकारणवद्, यथा घटादि, कार्यं चासौ स्थितिः, यच्च तदपेक्षाकारणं तदधर्मास्तिकाय इति, अत्र च नैयायिकादिः सौगतो वा वदेत्—नास्ति अधर्मास्तिकायः,अनुपलभ्यमानत्वात्, शशविषाणवत्, तत्र यदि नैयायिकादिस्तदाऽसौ वाच्यः—कथं भवतोऽपि दिगादयः सन्ति ?, अथ दिगादिप्रत्ययलक्षणकार्यदर्शनाद्, भवति हि कार्यात्कारणानुमानम्, एवं सति स्थितिलक्षणकार्यदर्शनादयमप्यस्तीति किं न गम्यते ?, अथ तत्र दिगादिप्रत्ययकार्यस्यान्यतोऽसम्भवात्कारणभूतान् दिगादीननुमिमीमह इति मतिः,इहाप्याकाशादीनामवगाहदानादिस्वस्वकार्यव्यापृतत्वेन ततोऽसम्भवादधर्मास्तिकायस्यैव स्थितिलक्षणं कार्यमिति किं नानुमीयते ?, अथासौ न कदाचिद् दृष्टः ?, एतद्दिगादिष्वपि समानम्। अथ सौगतः

१ अस्तीति निर्विकल्पो जीवो नियमात् शब्दत एव सिद्धिः। कस्मात् ? शुद्धपदत्वात् घट खरशृङ्गानुमानात् ॥ १ ॥

धम्मो अधम्मो आगास, दव्व इक्किक्कमाहियं । अणंताणि य दव्वाणि, कालो पुग्गलजंतवो ॥ ८ ॥

धर्मोऽधर्म आकाश द्रव्यमिति धर्मादिभि प्रत्येक योज्यते 'एकैक' एकसङ्ख्याया एवैतेषु भावाद् आख्यात तीर्थकृद्भिरिति गम्यते, तर्त्कि कालादिद्रव्याण्यप्येवमेवेत्याह—'अनन्तानि' अनन्तसङ्ख्यानि स्वगतभेदानन्त्यात्, 'च' पुनरर्थे उत्तरत्र योक्ष्यते, कानि ?, द्रव्याणि, कतमानि ?—काल पुद्गलजन्तवश्चोक्तरूपा, कालस्य चानन्त्यमतीतानागतापेक्षयेति सूत्रार्थ ॥ एषा परस्परभेदनिबन्धन लक्षणभेदमाह—

गइलक्खणो उ धम्मो, अहम्मो ठाणलक्खणो । भायणं सव्वदव्वाण, नहं ओगाहलक्खणं ॥ ९ ॥ वत्तणालक्खणो कालो, जीवो उवओगलक्खणो । नाणेणं दंसणेण च, सुहेण य दुहेण य ॥ १० ॥ नाणं च दंसणं चेव, चरित्तं च तवो तहा । वीरियं उवओगो य, एयं जीवस्स लक्खणं ॥ ११ ॥ सद्दंधयारउज्जोओ, पभा छाया तवुत्ति वा । वण्णरसगंधफासा, पुग्गलाणं तु लक्खणं ॥ १२ ॥

गमन गति —देशान्तरप्राप्ति लक्ष्यतेऽनेनेति लक्षण, गतिर्लक्षणमस्येति गतिलक्षणः, 'तु' पूरणे, कोऽसौ ?—धर्मास्तिकाय, आह—सिद्धे सति वस्तुनोऽस्तित्वे इदमनेन लक्ष्यत इति वक्तु युक्तम्, अस्य तु सत्त्वमेवासिद्धम्, अत्रोच्यते, यद्यच्छुद्धपदवाच्य तत्तदस्ति, यथा स्तम्भादि, शुद्धपदवाच्यश्च धर्मनामास्तिकायो, न चायमसिद्धो हेतु, धर्म इत्यस्यैतद्वाचकस्यासमस्तपदत्वेन तथाऽभिधेयार्थबाधकप्रमाणाभावात् प्रमाणान्तरबाधितविषयत्वाख्यदोषरहि-

तत्र तु धर्मास्तिकायस्य जीवादीनां चासत्त्वेन तस्यैवाभाव इति कस्यासौ समस्तु ?, नन्वेवमपि न तत्सिद्धिः, हेतोरसिद्धत्वात्, तदसिद्धिश्चान्वयाभावात्, सति हि तस्मिन् भवनमन्वयो, न च तत्सत्त्वसिद्धिरस्ति, अन्वयाभावे च व्यतिरेकस्याप्यसिद्धिरिति, ननु कथं न तत्सत्त्वसिद्धिः ?, अथ भित्त्याद्यभाव एवाकाशमिति, एवं सत्याकाशाभाव एव भित्त्यादय इत्यपि किं न भवति ?, अथ तेषां प्रमाणप्रतीतत्वाद्, इहापि किं न प्रमाणप्रतीतिः ?, तथाहि—वियति विहग इत्यादि प्रतीत्यन्यथानुपपत्त्याऽनुमानतस्तत्सिद्धिः, न चेयं प्रतीतिरन्यथाऽपि संभवतीति न ततस्तत्सिद्धिरिति ( वक्तुं ) युक्तम्, एवं हि भित्त्यादिप्रतीतेरपि भित्त्याद्यभावेऽपि भावकल्पनया तेषामप्यभावप्रसक्तिः, अथ तत्प्रतीतेः प्रामाण्यनिश्चय इति नान्यथात्वकल्पना, एवं तर्हि वक्तव्यं—कुतोऽस्याः प्रमाणनिश्चयः ?, किं प्रमाणान्तरानुग्रहाद्बाधकाभावाद्वा ?, यदि प्रमाणान्तरानुग्रहात् किं तत्प्रमाणान्तरं ?, य इहाबाधितप्रत्ययः स सर्वः प्रमाणं, यथा सुखादिप्रत्ययः, बाधितप्रत्ययाश्चामी भित्यादिप्रत्यया इत्यनुमानमिति चेद्यद्येवमिहापि यो य इहप्रत्ययः स सर्वः सालम्बनो यथेह कुण्डे दधीति प्रत्ययः, इहप्रत्ययश्चायम् इह विहग इति प्रत्ययः इत्यनुमानमस्त्येव, अथैवमाधारमात्रस्यैव सिद्धिर्नत्वाकाशस्य, कथं न तत्सिद्धिः ?, यदेव ह्याधारमात्रं तदेवाकाशमिति वयं ब्रूमः, अथ बाधकाभावात्, ननु बाधकमपि विपरीतप्रत्ययोत्पत्तिरूपं, तदभावश्चोभयत्र समान इति न भित्त्याद्यभाव एवाकाशं किन्तु शुपिररूपमन्यदेव,ततस्तद्भावभावित्वादवगाहस्य कथं न तत्कारणत्वसिद्धिराकाशस्य ?,

सोऽप्येव वक्तव्य यथा–भवत कथ बाह्यार्थससिद्धि ?, न हि कदाचिदसौ प्रत्यक्षगोचर, साकारज्ञानवादिन सदा तदाकारस्यैव सवेदनात्, तथा च तस्याप्यनुपलभ्यमानत्वादभाव एव, अथाकारसवेदनेऽपि तत्कारणमर्थं परिकल्प्यते, धूमज्ञान इवाग्नि, एव सति स्थितिदर्शनेऽपि किं न तत्कारणस्याधर्मास्तिकायस्य निश्चय ?, अथायमभ्यभिदधीत–न कदाचिदसौ तत्कारणत्वेनेक्षित इति, ननु बाह्यार्थेऽपि तुल्यमेतत्, न हि सोऽपि तदाकारकारितया कदाचिदवलोकित, अथ मनस्कारस्य चिद्रूपतायामेव व्यापारो न तु नियता(त)कारणत्वे, अतस्तत्रार्थ कारण कल्प्यते, एव तर्हि जीवपुद्गलौ परिणाममात्र एव कारण, स्थितिपरिणतौ पुनरधर्मास्तिकायोऽपेक्षाकारणत्वेन व्याप्रियत इति किं न कल्प्यते ?, अथासौ सर्वदा सर्वस्य सन्निहित इत्यनियमेन स्थितिकारण भवेत्, नन्वेवमर्थोऽपि किं सन्निहित इत्येव स्वाकारमर्पयति ?, अथ चक्षुरादिव्यापारमयमपेक्षते, अधर्मास्तिकायोऽपि तर्हि स्वपरगतौ विश्रसाप्रयोगावपेक्षत इति नानयोर्विशेपमुत्पश्याम, तथा 'भाजनम्' आधार 'सर्वद्रव्याणा' जीवादीना 'नभ' आकाशम्, अवगाह –अवकाशस्तल्लक्षणमस्येत्यवगाहलक्षण तद्ध्यवगाढु प्रवृत्तानामालम्बनीभवति, अनेनावगाहकारणत्वमाकाशस्योक्त, न चास्य तत्कारणत्वमसिद्ध, यतो यद्यदन्वयव्यतिरेकानुविधायि तत्तत्कार्य, यथा चक्षुराद्यन्वयव्यतिरेकानुविधायि रूपादिविज्ञानम्, आकाशान्वयव्यतिरेकानुविधायी चावगाह, तथाहि–शुपिररूपमाकाश, तत्रैव चावगाहो, न तु तद्विपरीते पुद्गलादौ, अथैवमलोकाकाशेऽपि कथ नावगाह ?, उच्यते, स्यादेव यदि कश्चिदवगाहिता भवेत्,

जीवस्य लक्षणम्, एतेन हि जीवोऽनन्यसाधारणतया लक्ष्यत इति। इत्थं जीवलक्षणमभिधाय पुद्गलानां लक्षणमाह—'शब्दः' ध्वनिः 'अन्धकारः' तिमिरम्, उभयत्र सूत्रत्वात्सुपो लुक्, 'उद्योतः' रत्नादिप्रकाशः 'प्रभा' चन्द्रादिदीधितिः 'छाया' शैत्यगुणाः 'आतपः' रविबिम्बजनित उष्णप्रकाशः, इतिशब्द आद्यर्थः, ततश्च सम्बन्धभेदादीनां परिग्रहः, वा समुच्चये, वर्णश्च—नीलादिः रसश्च—तिक्तादिः गन्धश्च—सुरभ्यादिः स्पर्शश्च—शीतादिरेषां द्वन्द्वः, इतिशब्देन चाद्यार्थेनैषां ग्रहणेऽपि पुनरुपादानं सर्वत्रानुयायिताख्यापनार्थं, 'पुद्गलानां' स्कन्धादीनां 'तुः' पुनरर्थः लक्षणम्, एतैरेव तेषां लक्ष्यत्वात्, आह—पौद्गलिकत्वे शब्दादीनां पुद्गललक्षणत्वं युक्तं तच्च कथम्?, उच्यते, शब्दस्तावन्मूर्त्तत्वात्पौद्गलिको, मूर्त्तिभावोऽस्य प्रतिघातविधायित्वादिभ्यः, उक्तं हि—"प्रतिघातविधायित्वाल्लोष्टवन्मूर्त्तता ध्वनेः। द्वारवातानुपाताच्च, धूमवच्च परिस्फुटम् ॥ १ ॥" अन्धकारोद्योतप्रभाणां तु पौद्गलिकत्वं चक्षुर्विज्ञानविषयत्वात्, प्रयोगश्चात्र—यत्पौद्गलिकं न भवति तच्चक्षुर्विज्ञानविषयमपि न भवति, यथाऽऽत्मादयः, चक्षुर्विज्ञानविषयाश्चान्धकारादयः, अथालोकाभावोऽन्धकारं, तथा च निरुपाख्यत्वेन तस्यासत्त्वमुच्यते, न, सतः सर्वथा निरन्वयाभावस्याभावेनाभावरूपत्वेऽपि निरूपाख्यत्वासिद्धेः, तथाहि—घटस्य कपालाख्यपर्यायान्तरोत्पत्तिरेवाभावो न पुनरुच्छेदमात्रम्, एवमलोकस्याप्यन्धकाराख्यपर्यायान्तरोत्पत्तिरेवाभावो न तु तथाविधपरमाणुरूपतयाऽप्यभाव एव, इत्थं चैतत्, परिणामित्वाद्वस्तुनः, परिणामस्य च सत एव वस्तुनः पूर्वरूपपरित्यागेन रूपान्तरोत्पत्तिरूपत्वात्,

एव च स्थितमेतद्–अवगाहेन कार्यरूपेण लक्ष्यमाणत्वादवगाहलक्षण नभ , तथा वर्त्तन्ते–भवन्ति भावास्तेन तेन रूपेण तान् प्रति प्रयोजकत्व वर्त्तना सा लक्षण–लिङ्गमस्येति वर्त्तनालक्षण , कोऽसौ ?–काल ,इदमुक्त भवति–यदमी शीतवातातपादय ऋतुविभागेन भवन्ति यच्च केचिच्छशधरकरनिकरानुकारिपारतीप्रसवा अन्ये तु तुहिनशिलाशकलविशदकुन्दमालतीकुसुमवासवाहिन अपरे च केशरतिलकुरुबकशिरीषाङ्कोलप्रसूनजृम्भमाणपरागभाज तदितरे च करिदशनसकलधवलमल्लिकाबहलपरिमलहारिण परे च कदम्बकेतकरज पूरपूरिताम्बरा अपरे तु सप्तच्छदकुसुमरजोधूलिधूसरितविश्वविश्वम्भरा अविशिष्टविशिष्टवस्तव प्रकाशन्ते क्रमेणैव भुवनभागास्तदवश्यममीषा नैयत्यहेतुना केनापि भवितव्य , स च काल इत्यल प्रसङ्गेन, सर्वथा वर्त्तनया लक्ष्यमाणत्वादस्ति काल इति स्थित, तथा 'जीव ' जन्तुरुपयोगो–मतिज्ञानादि लक्षण—रूप यस्यासौ उपयोगलक्षणो, मतिज्ञानादिको ह्युपयोगस्तद्धर्म , स च स्वसंविदित एवेति, तदनुभवतो रूपाद्यनुभवादिव घटादिर्जीवो लक्ष्यत इति तल्लक्षणमुच्यते, प्रपञ्चित चैतदिहैव प्रागन्यत्र चेति न पुन प्रतन्यते, अत एव 'ज्ञानेन' विशेषग्राहिणा 'दर्शनेन च' सामान्यविषयेण 'सुखेन च' आह्लादरूपेण दु खेन च–तद्विपरीतेन प्रक्रमाल्लक्ष्यत इति गम्यते, न हि ज्ञानादीन्यजीवेषु कदाचिदुपलभ्यन्त इतिकृत्वा । सम्प्रति विनेयाना दृढतरसस्काराधानाय उक्तलक्षणमनूद्य लक्षणान्तरमाह–'ज्ञान च' उक्तरूपमेव दर्शन चैव चरित्र च तपस्तथा 'वीर्य' वीर्यान्तरायक्षयोपशमसमुत्थ सामर्थ्यलक्षणम् 'उपयोगश्च' अवहितत्व, किमित्याह–'एतत्' ज्ञानादि

ततोऽवश्यममीषां निबन्धनेन भवितव्यं, तच्च न द्रव्यमेव, तस्य सदाऽवस्थितत्वेन प्रतिनियतकालैकत्वादिप्रत्ययानुत्पत्तिप्रसङ्गात्, ततश्च यदमीषां कालनियमेनोत्पत्तिनिबन्धनं न तत्पर्यवेभ्यस्तत्तत्परिणतिविशेषरूपेभ्योऽन्यत्, गुणानां तु लक्षणानभिधानं रूपादिरूपाणां तेषामतिप्रतीतत्वात् प्रायो विप्रतिपत्त्यविषयत्वाच्चेति सूत्रार्थः ॥ इत्थं स्वरूपतो विषयतश्च ज्ञानमभिधाय दर्शनमुपदर्शयितुमाह—

जीवा जीवा य बंधो य, पुण्णं पावाऽऽसवो तहा । संवरो निज्जरा मुक्खो, संतेए तहिया नव ॥१४॥
तहियाणं तु भावाणं, सब्भावे उवएसणं । भावेण सद्दहंतस्स, सम्मत्तं ति वियाहियं ॥ १५ ॥

'जीवाः' उक्तलक्षणाः 'अजीवाश्च' धर्मास्तिकायादय उक्तरूपा एव 'बन्धश्च' जीवकर्मणोरत्यन्तसंश्लेषः पुण्यं—शुभप्रकृतिरूपं पापम्—अशुभं मिथ्यात्वादि आश्रवति—आगच्छत्यनेन कर्मेत्याश्रवः—कर्मोपादानहेतुर्हिंसादिः, पुण्यादीनां च कृतद्वन्द्वानामिह निर्देशः, 'तथे'ति समुच्चये, संवरणं संवरः—गुप्त्यादिभिराश्रवनिरोधः निर्जरणं निर्जरा—विपाकात्तपसो वा कर्मपरिसाटः, 'मोक्षः' कृत्स्नकर्मक्षयात्स्वात्मन्यवस्थानं, 'सन्ति' विद्यन्ते 'एते' अनन्तरोक्ताः 'तथ्याः' अवितथा निरुपचरितवृत्तयो, न तु सुगतसाङ्ख्योलूकादिकल्पितपदार्थवद्विचाराक्षमाः, यथा चैतदेवं तथा सूत्रकृन्नाम्नि द्वितीयाङ्गे प्रपञ्चितमिति तत एवावधार्यम्, इह तु ग्रन्थगौरवभयान्नोच्यते, 'नवे'ति नवसङ्ख्याः, मध्यमप्रस्थानापेक्षया चैतद्, अन्यथा सङ्क्षेपापेक्षया जीवाजीवयोरेव बन्धादीनामन्तर्भावसम्भवात् द्वित्व-

उक्त हि—"परिणामो ह्यर्थान्तरगमन न च सर्वथा व्यवस्थानम्। न च सर्वथा विनाश परिणामस्तद्विदामिष्ट ॥१॥" एव छायाऽऽतपयोरपि पौद्गलिकत्व वस्तुत्व च भावनीय, तथा स्पर्शनग्राह्यत्वाचानयो पौद्गलिकत्व, तथाहि—छायाया शैत्यमातपस्य चोष्णत्व प्रतिप्राणि प्रतीतमेवेति, अतश्च यत्कैश्चिदुच्यते—शब्दोऽम्बरगुण इत्यादि, तदपास्त भवति, उक्तञ्च—"अणव सर्वशक्तित्वाद्भेदससर्गवृत्तय। छायाऽऽतपस्तम शब्दभावेन परिणामिन ॥१॥" इत्यादि, वर्णादीना च पौद्गलिकत्व सुप्रसिद्धमेवेति सूत्रचतुष्टयार्थ ॥ अनेन द्रव्यलक्षणमुक्त, पर्यायलक्षणमाह—

एगत्त च पुहुत्त च, सखा सठाणमेव य। सजोगा य विभागा य, पज्जवाण तु लक्खण ॥ १३ ॥

एकस्य भाव एकत्व—भिन्नेष्वपि परमाण्वादिषु यदेकोऽय घटादिरिति प्रतीतिहेतु सामान्यपरिणतिरूप, चशब्द उत्तरापेक्षया समुच्चये, पृथग्भाव पृथक्त्वम्—अयमस्मात्पृथगिति प्रत्ययोपनिबन्धन, 'च' सर्वत्र प्राग्वत्, सख्यान सङ्ख्या—यत एको द्वौ त्रय इत्यादिका प्रतीतिरुपजायते, सतिष्ठतेऽनेनाकारविशेषेण वस्त्विति सस्थान—परिमण्डलोऽयमित्यादिबुद्धिनिबन्धनम्, एवेति पूरणे, 'सयोगा' अयमङ्गुल्यो सयोग इत्यादिव्यपदेशहेतव, 'विभागाश्च' अयमितो विभक्त इति बुद्धिहेतव, उभयत्र सम्बन्धिभेदेन भेदमाश्रित्य बहुवचननिर्देश, चशब्दोऽनुक्तनवपुराणत्वादिपर्यायोपलक्षक, 'पर्यवाणाम्' उक्तनिरुक्ताना, 'तु' पूरणे 'लक्षणम्' असाधारणरूपम्, अयमभिप्राय—य कश्चिदस्खलितप्रत्यय स सर्वः सनिबन्धनो, यथा घटादिप्रत्यय, अस्खलितप्रत्ययाश्चामी एकोऽयमित्यादिप्रत्यया,

सम्यग्दर्शनमपायसद्द्रव्यतया सम्यग्दर्शनमपायो मतिज्ञानतृतीयांश' इत्यादि तत्कारणे कार्योपचारं कृत्वाऽऽयुर्घृतमित्यादिवदिति गुरवो व्याचक्षत इति सूत्रद्वयार्थः ॥ इत्थं सम्यक्त्वस्वरूपमभिधाय तद्भेदानाह—

निस्सग्गुवएसरुई आणारुइ सुत्तबीयरुइमेव । अभिगमवित्थाररुई किरिया संखेवधम्मरुई ॥ १६ ॥

'निसग्गुवएसरुति'त्ति रुचिशब्दः प्रत्येकं योज्यते, ततो निसर्गः—स्वभावस्तेन रुचिः—तत्त्वाभिलापरूपाऽस्येति निसर्गरुचिः, उपदेशो—गुर्वादिना कथनं तेन रुचिर्यस्येत्युपदेशरुचिः, आज्ञा—सर्वज्ञवचनात्मिका तया रुचिर्यस्य स तथा, 'सुत्तवीयरुइमेव'त्ति इहापि रुचिशब्दस्य प्रत्येकमभिसम्बन्धात् सूत्रेण—आगमेन रुचिर्यस्य स सूत्ररुचिः, वीजमिव वीजं—यदेकमप्यनेकार्थप्रबोधोत्पादकं वचस्तेन रुचिर्यस्य स वीजरुचिः, अनयोः समाहारद्वन्द्वः, एवेति समुच्चये, अभिगमो—ज्ञानं विस्तारो—व्यासस्ताभ्यां, प्रत्येकं रुचिशब्दो योज्यते, ततोऽभिगमरुचिविस्ताररुची इति, तथा क्रिया—अनुष्ठानं सङ्क्षेपः—सङ्ग्रहो धर्मः—श्रुतधर्मादिस्तेषु रुचिर्यस्येति, प्रत्येकं रुचिशब्दसम्बन्धात् क्रियारुचिर्धर्मरुचिः सङ्क्षेपरुचिश्च भवति विज्ञेय इति शेषः, यच्चेह सम्यक्त्वस्य जीवानन्यत्वेनाभिधानं तद्गुणगुणिनोः कथञ्चिदनन्यत्वख्यापनार्थमिति सूत्रसङ्क्षेपार्थः ॥ व्यासार्थं तु स्वत एवाह सूत्रकृत्—

भूअत्थेणाहिगया जीवाऽजीवा य पुण्ण पावं च । सहसंमुइआ आसवसंवरु रोएइ उ निसग्गो ॥ १७ ॥
जो जिणदिट्ठे भावे चउव्विहे सद्दहाइ सयमेव । एमेव नन्नहत्ति य निस्सग्गरुइत्ति नायव्वो ॥ १८ ॥ एए चेव

सङ्ख्यैवाभिधेया स्यात्, तथा च वक्ष्यति—"जीवा चेव अजीवा य, एस लोगे वियाहिए"त्ति, विस्तरतस्तु तदुत्तरोत्तरभेदविवक्षयाऽनन्तमेव स्यात्। यद्यमी नव तथ्यास्ततः किमित्याह—'तथ्यानां तु भावानाम्' अनन्तरोदितजीवादिस्वरूपाणां 'सद्भावे' सद्भावविषयं, किमुक्तं भवति?—एतदवितथसत्ताभिधायकम् 'उपदेशेन' गुर्वादिसम्बन्धिनमुपदेशं 'भावेन' अन्तःकरणेन 'श्रद्दधतः' तथेति प्रतिपद्यमानस्य सम्यग्भावः सम्यक्त्वं दर्शनमितियावत् 'तदि'ति भावश्रद्धानं विशेषेणाख्यातं तीर्थकृदादिभिरिति गम्यते, पठन्ति च—'सब्भावो(वेणो)वएसणे। भावेण उ सद्दहणा सम्मत्तं होति आहिअ' 'सद्दहणे'ति सूत्रत्वात् श्रद्धानं सम्यक्त्वं भवत्याख्यातं, तच्च श्रद्धास्यनेन जीवादितत्त्वमिति श्रद्धानसम्यक्त्वमोहनीयकर्माणुक्षयक्षयोप(शमोप)शमसमुत्थात्मपरिणामरूपम्, उक्तं हि—"से य सम्मत्ते पसत्थसम्मत्तमोहणीयकम्माणुवेयणोवसमक्खयसमुत्थे पसमसंवेगाइलिंगे सुहे आयपरिणामे पण्णत्ते"त्ति, अवश्यं हि स कश्चिदात्मनः परिणामोऽस्ति येन सत्यपि जीवादिस्वरूपावबोधे कस्यचिदेव सम्यक् प्रतिपत्तिर्भवति न पुनः सर्वस्य, यथा हि सत्यपि दर्शने कश्चित् शङ्खं श्वेतिमानं प्रतिपद्यते अन्यस्त्वयथाभावमिति तत्र कारणविशेषोऽनुमीयते, एवमिहापि, ततश्च जीवादिस्वरूपपरिज्ञानस्य सम्यग्भावहेतुरात्मपरिणामविशेषः सम्यक्त्वं, न तु ज्ञानस्वरूपमेव, अत एव हि ज्ञानादावरणभेदो विषयभेदः कारणभेदो ज्ञानकारणत्वं च सम्यक्त्वस्य श्रुतकेवलिनोक्तं, यत्तु 'तत्त्वार्थश्रद्धानं

१ तच्च सम्यक्त्वं प्रशस्तसम्यक्त्वमोहनीयकर्माणुवेदनोपशमक्षयसमुत्थं प्रशमसंवेगादिलिङ्गः शुभ आत्मपरिणामः प्रज्ञप्तः।

वए पयत्तेणं । जं जस्स होइ जोगं परिणामगमाइ तं तु सुयं ॥ २ ॥ निस्सेसमपरिसेसं जाव समत्तं च ताव वाएइ । एसो सुयविणओ खलु निद्दिट्ठो पुव्वसूरीहिं ॥ ३ ॥' इत्याद्यागमाभिहितस्य श्रुतविनयस्य साक्षादभिधानं, यच्च विनयं प्रादुष्करिष्यामीति प्रतिज्ञाय 'अब्भुट्ठाणं अंजलि' तथा 'दंसणणाणचरित्ते' इत्यादिना ग्रन्थेनेव न तस्य शुद्धस्वरूपाभिधानं,किन्तु 'णिसंते सिया अमुहरी' इत्यादि लिङन्तादिपदैरुपदेशरूपतया, तदपि प्रसङ्गत एव यथायोगमाचार्यविनयोपदर्शनपरमिति भावनीयमिति सूत्रार्थः ॥ २३ ॥ पुनः शिष्यस्य वाग्विनयमाह—

मुसं परिहरे भिक्खू, न य ओहारिणीं वए। भासादोसं परिहरे, मायं च वज्जए सया॥२४॥(सूत्रम्)

व्याख्या—'मृषा' इत्यसत्यं भूतनिह्नवादि 'परिहरेत्' सर्वप्रकारमपि त्यजेत्, भिक्षुः, 'न च' नैव 'अवधारणीं' गम्यमानत्वाद् वाचं गमिष्याम एव वक्ष्याम एव इत्येवमाद्यवधारणात्मिकां 'वदेत्' भाषेत, किं बहुना ? 'भाषादोषम्' अशेषमपि वाग्दूषणं सावद्यानुमोदनादिकं परिहरेत्, न च कारणोच्छेदं विना कार्योच्छेद इत्याह—मायां, चशब्दात् क्रोधादींश्च तद्धेतून् वर्जयेत् 'सदा' सर्वकालमिति सूत्रार्थः ॥ २४ ॥ किञ्च—

ण लविज्ज पुट्ठो सावज्जं, न निरट्ठं न मम्मयं। अप्पणट्ठा परट्ठा वा, उभयस्संतरेण वा॥२५॥ (सूत्रम्)

व्याख्या—'न लपेत्' न वदेत् 'पृष्ट' इति पर्यनुयुक्तः 'सावद्यं' सपापं न 'निरर्थम्' अर्थविरहितं दशदाडिमादि

उ भावे उवइट्ठे जो परेण सद्दहइ। छउमत्थेण जिणे व उवएसरुइत्ति नायव्वो॥१९॥ रागो दोसो मोहो अन्नाण जस्स अवगय होइ। आणाए रोयतो सो खलु आणारुईनाम ॥ २० ॥ जो सुत्तमहिज्जतो सुएण ओगाहई उ सम्मत्त। अगेण बाहिरेण व सो सुत्तरुइत्ति नायव्वो ॥ २१ ॥ एगेण अणेगाइ पयाइ जो पसरई उ सम्मत्त। उदए व तिल्लबिंदू सो बीयरुइत्ति नायव्वो ॥२२॥ सो होइ अभिगमरुई सुअनाण जस्स अत्थओ दिट्ठ। इक्कारस अगाइ पइण्णग दिट्ठिवाओ य ॥ २३ ॥ दव्वाण सव्वभावा सव्वपमाणेहिं जस्स उवलद्धा। सव्वाइ नयविहीहि य वित्थाररुइत्ति नायव्वो ॥ २४ ॥ दसणनाणचरित्ते तवविणए सच्चसमिइगुत्तीसु। जो किरियाभावरुई सो खलु किरियारुई नाम ॥ २५ ॥ अणभिग्गहियकुदिट्ठी सखेवरुइत्ति होइ नायव्वो। अविसारओ पवयणे अणभिग्गहिओ अ सेसेसु ॥ २६ ॥ जो अत्थिकायधम्म सुयधम्म खलु चरित्तधम्म च। सद्दहइ जिणाभिहिय सो धम्मरुइत्ति नायव्वो ॥ २७ ॥

भूत सद्भूतोऽवितथ इतियावत् तथाविधोऽर्थो-विषयो यस्य तद्भूतार्थं ज्ञानमिति गम्यते तेन, भावप्रधानत्वाद्वा निर्देश:(स), भूतार्थत्वेन-सद्भूता अमी अर्था इत्येवरूपेणाभिगता अधिगता वा परिच्छिन्ना येनेति गम्यते, जीवाजीवाद्योक्तरूपा पुण्य पाप च, कथममी अधिगता इत्याह—'सहसमुइअ'त्ति सोपस्कारत्वात्सूत्रत्वाच्च सहात्मना या सगता मति स(सहस)मति, कोऽर्थ ?—परोपदेशनिरपेक्षतया जातिस्मरणप्रतिभादिरूपया, 'आसवसवरे य'त्ति

आश्रवसंवरौ, चशब्दोऽनुक्तबन्धादिसमुच्चये, ततो बन्धादयश्च, तथा 'रोचते' श्रद्धत्ते, तुशब्दस्यैवकारार्थत्वाद्रोचत एव योऽन्यस्याश्रुतत्वादनन्तरन्यायेनाधिगतान् जीवाजीवादीनेव 'निसर्ग'इति निसर्गरुचिर्विज्ञेयः, स इति शेषः । अमुमेवार्थं पुनः स्पष्टतरमेवाह—यः 'जिनदृष्टान्' तीर्थकरोपलब्धान् 'भावान्' जीवादिपदार्थान् 'चतुर्विधान्' द्रव्यक्षेत्रकालभावभेदतो नामादिभेदतो वा चतुष्प्रकारान् 'श्रद्धाति' तथेति प्रतिपद्यते 'स्वयमेव' परोपदेशं विना.श्रद्धानोल्लेखमाह—'एमेय'त्ति एवमेतद्यथा जिनैर्दृष्टं जीवादि,'नान्यथेति' नैतद्विपरीतं,'चः' समुच्चये,स ईदृग्निसर्गरुचिरिति ज्ञातव्यः,निसर्गेण रुचिरस्येतिकृत्वा,उपदेशरुचिमाह—एतांश्चैवानन्तरोक्तान् (तुः पूरणे)'भावान्' जीवादीन् पदार्थान् 'उपदिष्टान्' कथितान् 'परेण' अन्येन श्रद्धाति, कीदृशा परेण ?—छादयतीति छद्म—घातिकर्मचतुष्टयं तत्र तिष्ठति छद्मस्थः—अनुत्पन्नकेवलस्तेन, जयति रागादीनिति जिनः,औणादिको नक् तेन चोत्पन्नकेवलज्ञानेन तीर्थकृदादिना, छद्मस्थस्य तु प्रागुपन्यासस्तत्पूर्वकत्वाज्जिनस्य प्राचुर्येण वा तथाविधोपदेष्टॄणां, स ईदृक् किमित्याह—उपदेशरुचिरिति ज्ञातव्यः उपदेशेन रुचिरस्येति हेतोः । आज्ञारुचिमाह—'रागः' अभिष्वङ्गः 'द्वेषः' अप्रीतिः 'मोहः' शेषमोहनीयप्रकृतयः 'अज्ञानं' मिथ्याज्ञानरूपं यस्य 'अपगतं' नष्टं भवति, सर्वथा चास्यैतदपगमासम्भवाद्देशत इति गम्यते, अपगतशब्दश्च लिङ्गविपरिणामतो रागादिभिः प्रत्येकमभिसंबध्यते, एतदपगमाच्च 'आणाए'त्ति अवधारणफलत्वाद्वाक्यस्य आज्ञयैव आचार्यादिसम्बन्धिन्या रोचमानः' क्वचित्कुग्रहाभावाज्जीवादि तथेति प्रतिपद्यमानो माषतुषादिवत् सः 'खलु'

निश्चितमाज्ञारुचिर्नामेत्यभ्युपगमे, ततश्चाज्ञारुचिरित्यभ्युपगन्तव्य, आज्ञया रुचिरस्य यत । सूत्ररुचिमाह—य 'सूत्रम्' आगमम् 'अधीयान' पठन् 'श्रुतेन' इति सूत्रेणाधीयमानेन 'अवगाहते' प्राप्नोति 'तु' पूरणे सम्यक्त्व, कीदृशा श्रुतेन ?—'अङ्गेन' आचारादिना 'बाह्येन' अनङ्गप्रविष्टेनोत्तराध्ययनादिना वा, वा विकल्पे, 'स' उक्तलक्षणो गोविन्दवाचकवत् सूत्ररुचिरिति ज्ञातव्य, सूत्रहेतुकत्वादस्य रुचे । बीजरुचिमाह—'एकेन' प्रक्रमात्पदेन जीवादिना 'अणेगाइ पयाइ'ति सुब्व्यत्ययाद् 'अनेकेषु' बहुषु 'पदेषु' जीवादिषु य 'प्रसरति' व्यापितया गच्छति 'तु' एवकारार्थे, प्रसरत्येव, सम्यक्त्वमित्यनेन रुचिरत्रोपलक्षिता, तदभेदोपचारादात्माऽपि सम्यक्त्वमुच्यते, उपचारनिमित्त च रुचिरूपेणैवात्मना प्रसरण, केव क प्रसरति ?—उदक इव तैलबिन्दु, यथोदकैकदेशगतोऽपि तैलबिन्दु समस्तमुदकमाक्रामति ( ग्रन्थाग्रम् १४००० ) तथा तत्त्वैकदेशोत्पन्नरुचिरप्यात्मा तथाविधक्षयोपशमवशादशेषतत्त्वेषु रुचिमान् भवति, स एवविधो बीजरुचिर्ज्ञातव्य, यथा हि बीज क्रमेणानेकबीजाना जनकमेवमस्यापि रुचिर्विषयभेदतो भिन्नाना रुच्यन्तराणामिति । अभिगमरुचिमाह—स भवत्यभिगमरुचि श्रुतज्ञान येनार्थत इत्यर्थ—अभिधेयस्तमाश्रित्य 'दृष्टम्' उपलब्ध, किमुक्त भवति ?—येन श्रुतज्ञानस्यार्थोऽधिगतो भवति, किं पुनस्तत् श्रुतज्ञानमित्याह—एकादशाङ्गानि आचारादीनि, प्रकीर्णकमिति जात्यावेकवचन, तत्त 'प्रकीर्णकानि' उत्तराध्ययनादीनि 'दृष्टिवाद' परिकर्मसूत्रादि, अङ्गत्वेऽपि पृथगुपादानमस्य प्राधान्यख्यापनार्थं, चशब्दादुपाङ्गान्यौ-

पपातिकादीनि, अभिगमान्वितत्वादस्य रुचेः । विस्ताररुचिमाह—'द्रव्याणां' धर्मास्तिकायादीनां 'सर्वभावाः' एकत्वपृथक्त्वाद्यशेषपर्यायाः 'सर्वप्रमाणैः' अशेषैः प्रत्यक्षादिभिर्यस्योपलब्धा—यस्य यत्र व्यापाररतेनैव प्रमाणेन प्रतीताः 'सव्वाहिं'ति 'सर्वैः' समस्तैः 'नयविधिभिः' नैगमादिभेदैरमुं भावमयममुं वाऽयं नयभेद इच्छतीति, 'चः' समुच्चये स ईदृग् विस्ताररुचिरिति ज्ञातव्यो, विस्तारविषयत्वेन ज्ञानस्य रुचेरपि तद्विषयत्वादस्य ज्ञानपूर्विका हि रुचिः, यत उक्तम्—"सद्दहइ जाणति जतो" । क्रियारुचिमाह—दर्शनं च ज्ञानं च चरित्रं च दर्शनज्ञानचरित्रं तस्मिन् प्रागुक्तरूपे तथा तपोविनये सत्याः—निरुपचरितास्ताश्च ताः समितिगुप्तयश्च, यदिवा सत्यं च—अविसंवादनयोगाद्यात्मकं समितिगुप्तयश्च सत्यसमितिगुप्तयस्तासु यः क्रियाभावरुचिः, किमुक्तं भवति ?—दर्शनाद्याचारानुष्ठाने यस्य भावतो रुचिरस्ति सः 'खलु' निश्चितं क्रियारुचिः, नामेति प्रकाशं, भण्यत इति शेषः, इह च चारित्रान्तर्गतत्वेऽपि तपःप्रभृतीनां पुनरुपादानं विशेषत एषां मुक्त्यङ्गत्वख्यापनार्थम् । सङ्क्षेपरुचिमाह—अनभिगृहीता—अनङ्गीकृता कुदृष्टिः—सौगतमतादिरूपा येन स तथा सङ्क्षेपरुचिरिति भवति ज्ञातव्यः, 'अविशारदः' अकुशलः प्रवचने' सर्वज्ञशासने 'अणभिग्गहिओ य सेसेसु'त्ति अविद्यमानमभीति—आभिमुख्येन गृहीतं ग्रहणं—ज्ञानमस्येत्यनभिगृहीतः अनभिज्ञ इत्यर्थः, 'चः' समुच्चये, अनभिगृहीतश्च क इत्याह—'शेषेषु' कपिलादिप्रणीतप्रवचनेषु, संभवति हि जिनप्रवचनानभिज्ञोऽपि शेषप्रवचनानभिज्ञ इति तद्व्यवच्छेदार्थमेतत्, अयमाशयः—य उक्तविशेषणः सङ्क्षेपेणैव चिलातीपुत्रवत्प्रशमादिपदत्रयेण

तत्त्वरुचिमवाप्नोति स सङ्क्षेपरुचिरुच्यते । धर्मरुचिमाह—योऽस्तिकायाना—धर्मादीना धर्मो—गत्युपष्टम्भादिरस्तिकायधर्मस्त जातावेकवचन, 'श्रुतधर्मम्' अङ्गप्रविष्टाद्यागमस्वरूप 'खलु' वाक्यालङ्कारे 'चरित्रधर्मं च' सामायिकादि, वस्य चार्थत्वात्, 'श्रद्धाति' तथेति प्रतिपद्यते 'जिनाभिहित' तीर्थकृदुक्त स धर्मरुचिरिति ज्ञातव्यो, धर्मेषु—पर्यायेषु धर्मे वा—श्रुतधर्मादौ रुचिरस्येतिकृत्वा, शिष्यमतिव्युत्पादनार्थं चेत्थमुपाधिभेदेन सम्यक्त्वभेदाभिधानम्, अन्यथा हि निसर्गोपदेशयोरधिगमादौ वा क्वचित्केषाचिदन्तर्भाव इति भावनीयमिति सूत्रैकादशकार्थ । कै पुनर्लिङ्गैरिद दशविधमपि सम्यक्त्वमुत्पन्नमस्तीति श्रद्धेयमित्याह—

परमत्थसथवो वा सुदिट्ठपरमत्थसेवणा वावि । वावन्नकुदंसणवज्जणा य समत्तसद्दहणा ॥ २८ ॥

परमाश्च ते तात्त्विकत्वेनाधीश्रायमाणत्वेन परमार्था —जीवादयस्तेषु सस्तवो—गुणकीर्त्तन तत्स्वरूप पुन पुन परिभावनाजनित परिचयो वा परमार्थसस्तवो, वाशब्द उत्तरापेक्ष समुच्चये, तथा सुष्ठु—यथावद्दर्शितया दृष्टा—उपलब्धा परमार्था—जीवादयो यैस्ते सुदृष्टपरमार्था—आचार्यादयस्तेषा सेवनं—पर्युपासनम्, इहोत्तरत्र च (प्राकृतत्वात्) सूत्रत्वाच्च स्त्रीलिङ्गनिर्देश , चेत्यनुक्तसमुच्चये,ततो यथाशक्ति तद्वैयावृत्यप्रवृत्तिश्च,'अपि' पूर्वापेक्ष समुच्चये, 'वावण्णकुदसण'त्ति दर्शनशब्द प्रत्येकमभिसबध्यते ततो व्यापन्न—विनष्ट दर्शनं येषा ते व्यापन्नदर्शना —यैरवाप्यापि सम्यक्त्व तथाविधकर्मोदयाद्वान्त, तथा कुत्सित दर्शन येषा ते कुदर्शना —शाक्यादयस्तेषा च वर्जन—परिहारो व्यापन्नकु

दर्शनवर्जनं, मा भूदेतदपरिहारतः सम्यक्त्वमालिन्यमिति, 'चः' समुच्चये, सम्यक्त्वं श्रद्धीयतेऽस्तीति प्रतिपद्यतेऽनेनेति सम्यक्त्वश्रद्धानं, प्रत्येकं च परमार्थसंस्तवादिभिरस्य सम्बन्धादेकवचनं, न चाङ्गारमर्दकादेरपि परमार्थसंस्तवादीनां संभवाद्व्यभिचारिता, तात्त्विकानामेवैषामिहाधिकृतत्वात्, तस्य च तथाविधानामेषामसंभवादिति सूत्रार्थः ॥ इत्थं सम्यक्त्वस्य लिङ्गान्यभिधाय सम्प्रति तस्यैव माहात्म्यमुपदर्शयन्निदमाह—

नत्थि चरित्तं संमत्तविहूणं दंसणे उ भइयव्वं । संमत्तचरित्ताइं जुगवं पुव्वं व संमत्तं ॥ २९ ॥
णादंसणिस्स नाणं नाणेण विणा न हुंति चरणगुणा ।
अगुणिस्स नत्थि मुक्खो नत्थि अमुक्खस्स निव्वाणं ॥ ३० ॥

'नास्ति' न विद्यते उपलक्षणत्वान्नासीन्न च भविष्यति, किं तत् ?—चारित्रं, कीदृक् ?—'सम्यक्त्वविहीनं' दर्शनेन विरहितं, किमुक्तं भवति ?—यावन्न सम्यक्त्वोत्पादो न तावच्चारित्रं, किमेवं दर्शनमपि चारित्रे नियतमित्याह—'दर्शने तु' सम्यक्त्वे पुनः सति भक्तव्यं—भवति वा न वा, प्रक्रमाच्चारित्रम्, अतो न तत्तत्र नियतं, किमित्येवमत आह—सम्यक्त्वचारित्रे 'युगपद्' एककालमुत्पद्येते इति शेषः । 'पुव्वं व'त्ति पूर्वं चारित्रोत्पादात् सम्यक्त्वमुत्पद्यते ततो यदा युगपदुत्पादस्तदा तयोः सहभावः, यदा तु तथाविधक्षयोपशमाभावतो न तथोत्पादस्तदा सत्यपि सम्यक्त्वे न चारित्रमिति तद्दर्शने भाज्यमुच्यते । अन्यच्च 'नादर्शनिनः' दर्शनविरहितस्य 'ज्ञान'मिति सम्यग्ज्ञानं 'ज्ञानेन

विना' ज्ञानविरहिता 'न भवन्ति' न जायन्ते, के ते ?—चरणगुणा, तत्र च चरण—व्रतादि गुणा—पिण्डविशुद्ध्यादय, 'अगुणिन' अविद्यमानगुणस्य चरणाविनाभावित्वाद्यथोक्तगुणानामविद्यमानचरणस्य च, यदिवा प्राक् चरणान्तर्गता गुणाश्चरणगुणा इति व्याख्यातास्त इहापि त एव गृह्यन्ते, नास्ति 'मोक्ष' सकलकर्मक्षयलक्षणो, नास्त्यमुक्तस्य कर्मणेति गम्यते 'निर्वाण' निर्वृतिर्मुक्तिपदप्राप्तिरितियावत्, तदत्र पूर्वसूत्रेण मुक्त्यनन्तरहेतोरपि चारित्रस्य सम्यक्त्वभाव एव भवन तन्माहात्म्यमुक्तम्, अनन्तरसूत्रेण तूत्तरोत्तरव्यतिरेकदर्शनिना शेषगुणाना, व्यतिरेकस्यान्वयाक्षेपकत्वादिति सूत्रद्वयार्थ ॥ अस्य चाष्टविधाचारसहितस्यैवोत्तरोत्तरगुणप्राप्तिहेतुतेति तानादर्शयितुमाह—

निस्सकिय निक्कखिय निव्वितिगिच्छ अमूढदिट्ठी य । उववूहथिरीकरण वच्छल्लपभावणेऽट्ठेते ॥ ३१ ॥

शङ्कन शङ्कित—देशसर्वशङ्कात्मक तस्याभावो नि शङ्कित, एव काङ्क्षण काङ्क्षित—युक्तियुक्तत्वादहिंसाद्यभिधायित्वाच्च शाक्योलूकादिदर्शनान्यपि सुन्दराण्येवेत्यन्यान्यदर्शनग्रहात्मक तदभावो निष्काङ्क्षित, प्राग्वदुभयत्र विन्दुलोप, विचिकित्सा—फल प्रति सन्देहो यथा—किमियत क्लेशस्य फल स्यादुत नेति ?, तत्रन्यायेन 'विद' विज्ञा ते च तत्त्वत साधव एव तज्जुगुप्सा वा यथा—किममी यतयो मलदिग्धदेहा ?, प्रासुकजलस्नाने हि क इव दोष स्यादित्यादिका निन्दा तदभावो निर्विचिकित्स निर्विजुगुप्स वा, आर्षत्वाच्च सूत्र एव पाठ, 'अमूढा' ऋद्धिमत्कुतीर्थिकदर्शनेऽप्यनवगीतमेवास्मद्दर्शनमिति मोहविरहिता सा चासौ दृष्टिश्च बुद्धिरूपा अमूढदृष्टि, स चाय चतुर्विधोऽप्यान्तर आचार,

वाद्यं त्वाह–'उववूह'त्ति, उपबृंहणमुपबृंहा–दर्शनादिगुणान्वितानां सुलब्धजन्मानो यूयं युक्तं च भवादृशामिदमित्यादिवचोभिस्तत्तद्गुणपरिवर्द्धनं सा च स्थिरीकरणं च–अभ्युपगम(त)धर्मानुष्ठानं प्रति विषीदतां स्थैर्योपादनमुपबृंहास्थिरीकरणे, वत्सलभावो वात्सल्यं–साधर्मिकजनस्य भक्तपानादिनोचितप्रतिपत्तिकरणं तच्च प्रभावना च–तथा तथा स्वतीर्थोन्नतिहेतुचेष्टासु प्रवर्त्तनात्मिका वात्सल्यप्रभावने, उपसंहारमाह–अष्टैते दर्शनाचारा भवन्तीतिशेषः, एभिरेवाष्टभिराचार्यमाणस्यास्योक्तफलसम्पादकतेति भावः, एतच्च ज्ञानाचाराद्युपलक्षकं, यद्वा दर्शनस्यैव यदाचाराभिधानं तदस्यैवोक्तन्यायेन मुक्तिमार्गमूलत्वसमर्थनार्थमिति सूत्रार्थः ॥ इत्थं ज्ञानदर्शनाख्यं मुक्तिमार्गमभिधाय पुनस्तमेव चारित्ररूपमुपदिदर्शयिषुर्भेदकथनत एव तत्स्वरूपमुपदर्शितं भवतीति मन्वान इदमाह—

सामाइयऽत्थ पढमं छेदोवट्ठावणं भवे बितियं। परिहारविसुद्धीयं सुहुमं तह संपरायं च ॥ ३२ ॥

अकसाय अहक्खायं, छउमत्थस्स जिणस्स वा। एयं चयरित्तकरं, चारित्तं होइ आहियं ॥ ३३ ॥

समिति–साङ्गत्येनैकीभावेन वा आयो–गमनं, कोऽर्थः?–प्रवर्त्तनं, समायः स प्रयोजनमस्य सामायिकं, तदस्य प्रयोजन"मिति (पा० ५–१–१०९) ठक्, तच्च सकलसावद्यपरिहार एव, तत्रैव सति साङ्गत्येन स्वपरविभागाभावेन च सर्वत्र प्रवृत्तिसम्भवात्, यद्वा समो–रागद्वेषविरहितः स चेह प्रस्तावाच्चित्तपरिणामस्तस्मिन्नायो–गमनं समायः स एव सामायिकं, विनयादेराकृतिगणत्वात्स्वार्थिकः ठक्, इदमपि सर्वसावद्यविरतिरूपमेव, चेति पूरणे, 'प्रथमम्' आद्यम्,

एतच्च द्विधा–इत्वर यावत्कथिक च, तत्रेत्वर भरतैरावतयो प्रथमचरमतीर्थंकरतीर्थयोरुपस्थापनायां छेदोपस्थापनीयचारित्रभावेन तत्र तद्व्यपदेशाभावात्, यावत्कथिक च तयोरेव मध्यमतीर्थंकरतीर्थेषु महाविदेहेषु चोपस्थापनाया अभावेन तद्व्यपदेशस्य यावज्जीवमपि सम्भवात्, तथा छेद –सातिचारस्य यतेर्निरतिचारस्य वा शिक्षकस्य तीर्थान्तरसम्बन्धिनो वा तीर्थान्तर प्रतिपद्यमानस्य पूर्वपर्यायव्यवच्छेदरूपस्तद्युक्तोपस्थापना महाव्रतारोपणरूपा यस्मिंस्तच्छेदोपस्थापन भवेद्द्वितीयम्, तथा परिहरण परिहारो विशिष्टतपोरूपस्तेन विशुद्धिरस्मिन्निति परिहारविशुद्धिक, तच्चैतद्गाथाभ्योऽवसेयम्–"परिहारियाण उ तवो जहन्न मज्झो तहेव उक्कोसो। सीउण्हवासकाले भणिओ धीरेहिं पत्तेय ॥ १ ॥ तत्थ जहण्णो गिम्हे चउत्थ छट्ठ तु होइ मज्झमओ। अट्ठममिहमुक्कोसो इत्तो सिसिरे पवक्खामि ॥२॥ सिसिरे उ जहन्नाई छट्ठाई दसमचरमगो होई। वासासु अट्ठमाई वारसपज्जतगो णेओ ॥ ३ ॥ पारणए आयाम पचसु पगहो दोसऽभिग्गहो भिक्खे। कप्पट्ठिया य पइदिण करेंति एमेव आयाम ॥ ४ ॥ एवं छम्मासतव चरिउ

१ पारिहारिकाणा तु तपो जघन्य मध्यम तथैवोत्कृष्टम्। शीतोष्णवर्षाकालेषु भणितो धीरै प्रत्येकम् ॥ १ ॥ तत्र जघन्यमपि ग्रीष्मे चतुर्थ षष्ठ तु भवति मध्यमत । अष्टम इह उत्कृष्टमत शिशिरे प्रवक्ष्यामि ॥ २ ॥ शिशिरे तु जघन्यादि षष्ठादि दशमचरमक भवति। वर्षास्वष्टमादि द्वादशपर्यन्त ज्ञेय ॥ ३ ॥ पारणये आचामाम्ल पञ्चाना ग्रहः द्वयोरभिग्रहो भिक्षायाम् । कल्पस्थिताश्च प्रतिदिन कुर्वन्त्ये वमेवाचामाम्लम् ॥ ४ ॥ एव षण्मासतपश्चरित्वा परिहारिका अनुचरन्ति। अनुचरकेषु परिहारपदस्थितेषु यावत् षण्मासा ॥ ५ ॥

परिहारिया अणुचरंति। अणुचरगे परिहारगपयट्ठिए जाव छम्मासा ॥५॥ कप्पट्ठिओऽवि एवं छम्मासतवं करेइ सेसा उ। अणुपरिहारगभावं चरंति कप्पट्ठियत्तं च ॥६॥ एवेसो अट्ठारसमासपमाणो उ वण्णिओ कप्पो। संखेवओ विसेसो विसेससुत्ताउ नेयव्वो ॥ ७ ॥ कप्पसमत्तीय तयं जिणकप्पं वा उवेंति गच्छं वा। पडिवज्जमाणगा पुण जिणस्सगासे पवज्जंति ॥८॥ तित्थयरसमीवासेवगस्स पासे णो य अण्णस्स। एएसिं जं चरणं परिहारविसुद्धिगं तं तु ॥९॥" 'सुहुमं तह संपरायं च'त्ति, 'तथे' त्यानन्तर्ये, छन्दोभङ्गतया चै(भयाच्चै)वमुपन्यस्तः, सूक्ष्मः—किट्टीकरणतः संपर्येति—पर्यटति अनेन संसारमिति संपरायो—लोभाख्यः कषायो यस्मिंस्तत्सूक्ष्मसम्परायम्, एतच्चोपशमश्रेणिक्षपकश्रेण्योर्लोभाणुवेदनसमये संभवति, यत उक्तम्—"लोभाणुं वेदंतो जो खलु उवसामओ व खमओ व। सो सुहुमसंपरायो अहखया ऊणओ किंचि ॥ १ ॥" तथा 'अकषायम्' अविद्यमानकषायं क्षपितोपशमितकषायावस्थाभावि, इह चोपशमितकषायावस्थायामकषायत्वं कषायकार्याभावात्, 'यथाख्यातम्' अर्हत्कथितस्वरूपानतिक्रमवत्, 'छद्मस्थस्य'

१ कल्पस्थितोऽपि एवं षण्मासतपः करोति शेषास्तु। अनुपरिहारिकभावं चरन्ति कल्पस्थितत्वं च ॥ ६ ॥ एवमेषोऽष्टादशमासप्रमाणस्तु वर्णितः कल्पः। संक्षेपतो विशेषो विशेषसूत्रात् ज्ञातव्यः ॥ ७ ॥ कल्पसमाप्तौ तकं जिनकल्पं वोपैति गच्छं वा। प्रतिपद्यमानकाः पुनर्जिनसकाशे प्रपद्यन्ते ॥ ८ ॥ तीर्थकरसमीपासेवकस्य पार्श्वे वा नैवान्यस्य। एतेषां यच्चरणं परिहारविशुद्धिकं तु तत् ॥ ९ ॥ २ लोभाणुं वेदयन् यः खलूपशमको वा क्षपको वा। स सूक्ष्मसंपरायो यथाख्यातादूनकः किञ्चित् ॥ १ ॥

एप वन्ध्यासुतो यातीत्यादि वा 'न' नैव, म्रियतेऽनेन राजादिविरुद्धेनोच्चारितेनेति मर्म तद्गच्छति वाचकतयेति मर्मग, वचनमिति सर्वत्र शेप , अतिसङ्क्लेशोत्पादकत्वात् तस्या , अत्राह च—"तहेवं काण काणत्ति, पडग पडगत्ति वा । वाहिय वावि रोगित्ति, तेण चोरोत्ति नो वए ॥१॥ एएणऽन्नेण अट्ठेण, परो जेणुवहम्मई । आयारभावदोसण्णू, ण त भासेज्ज पण्णव ॥ २ ॥" 'आत्मार्थम्' आत्मप्रयोजन 'परार्थं वा' परप्रयोजनम् 'उभयस्स'त्ति आत्मन परस्य च, प्रयोजनमिति गम्यते 'अतरेण व'त्ति विना वा प्रयोजनमित्युपस्कार , भापादोप परिहरेदित्यनेनैव गते पृष्टविपयत्वादस्यापौनरुक्त्य, यद्वा भापादोपो जकारमकारादिरेव तत्र गृह्यत इति न दोप , सूत्रद्वयेन चानेन वाग्गुप्त्यभिधानतश्चारित्रविनय उक्त इति सूत्रार्थ ॥ २५ ॥ इत्थ स्वगतदोपपरिहारमभिधायोपाधिकृतदोपपरिहारमाह—

समरेसु अगारेसु, गिहसंधिसु अ महापहेसु । एगो एगित्थीए सद्धिं, नेव चिट्ठे न संलवे ॥२६॥ ( सूत्रम् )

व्याख्या—'समरेषु' खरकुटीषु, तथा च चूर्णिकृत्—'समरं नाम जत्थ हेट्ठा लोयारा कम्म करेति ' उपलक्षणत्वादस्यान्येष्वपि नीचास्पदेषु 'अगारेषु' गृहेषु 'गृहसन्धिषु च' गृहद्वयान्तरालेषु च 'महापथेषु' राजमार्गादौ, किमित्याह—'एक ' असहाय एका—असहाया सा चासौ स्त्री च एकस्त्री तया 'सार्द्धं' सह 'नैव तिष्ठेत् ' असल-

१ तथैव काण काण इति, पण्डक पण्डक इति वा । व्याधिमन्त वाऽपि रोगी इति, स्तेन चौर इति नो वदेत् ॥१॥ एतेनान्येनार्थेन, परो येनोपहन्यते । आचारभावदोपज्ञो, न तद्भापेत प्रज्ञावान् ॥ २ ॥ २ समर नाम यत्राधस्तात् लोहकारा कर्म कुर्वन्ति ।

खवित्ता पुव्वकम्माइं, संजमेण तवेण य। सव्वदुक्खप्पहीणट्ठा, पक्कमंति महेसिणो ॥ ३६ ॥ त्तिबेमि

॥ मुक्खमग्गगईयं ॥ २८ ॥

'क्षपयित्वा' क्षयं नीत्वा 'पूर्वकर्माणि' पूर्वोपचितज्ञानावरणादीनि संयमः—सम्यक् पापेभ्य उपरमणं चारित्रमित्यर्थस्तेन 'तपसा' उक्तरूपेण चशब्दाज्ज्ञानदर्शनाभ्यां च, नन्वेवमनन्तरं तपस एव कर्मक्षपणहेतुत्वमुक्तम् इह तु ज्ञानादीनामपीति कथं न विरोध ?, उच्यते, तपसोऽप्येतत्पूर्वकस्यैव क्षपणहेतुत्वमिति ज्ञापनार्थमित्थमभिधानम्, अत एव मोक्षमार्गत्वमपि चतुर्णामप्युपपन्नं भवति, ततश्च 'सव्वदुक्खप्पहीणट्ठ'त्ति प्राकृतत्वात्प्रकर्षेण हीनानि—हानिं गतानि प्रक्षीणानि वा सर्वदुःखानि यस्मिन् यद्वा सर्वदुःखानां प्रहीणं प्रक्षीणं वा यस्मिंस्तत्तथा तच्च सिद्धिक्षेत्रमेव तदर्थयन्त इवार्थयन्ते सर्वार्थेच्छोपरमेऽपि तद्गामितया ये ते तथाविधाः 'प्रक्रामन्ति' भृशं गच्छन्ति अथवा प्रहीणानि वा सर्वदुःखान्यर्थाश्च—प्रयोजनानि येषां ते तथाविधाः प्रक्रामन्ति सिद्धिमिति शेषः, 'महेसिणो'त्ति महर्षयो महैषिणो वा प्राग्वन्महामुनय इति सूत्रार्थः॥ 'इति' परिसमाप्तौ ब्रवीमीति पूर्ववत्, उक्तोऽनुगमः, सम्प्रति नयाः, तेऽपि प्राग्वदेव ॥ इत्युत्तराध्ययनटीकायां शिष्यहितायां श्रीशान्त्याचार्यकृतायां मुक्तिमार्गगतिनामकमष्टाविंशमध्ययनं समाप्तमिति २८

श्रीशान्त्याचार्यकृतायामुत्तराध्ययनटी० शिष्य० मुक्तिमार्गगतिनामकमष्टाविंशमध्ययनं समाप्तम् ॥

उपशान्तक्षीणमोहाख्यगुणस्थानद्वयवर्त्तिन 'जिनस्य वा' केवलिन सयोग्ययोगिगुणस्थानद्वयस्थायिन, वा समुच्चये, यथैतत्पञ्चविधमपि चारित्रशब्दवाच्य तथाऽन्वर्थत आह—'एतद्' अनन्तरोक्त सामायिकादि चयस्य—राशे प्रस्तावात्कर्मणा रिक्त—विरेकोऽभाव इतियावत् तत्करोतीत्येवशील चयरिक्तकर चारित्रमिति नैरुक्तो विधि, आह—वक्ष्यति—"चरित्तेण णिगिण्हाति तवेण य वि(परि)सुज्झति'त्ति' कथ न तेनास्य विरोध ?, उच्यते, तपसोऽपि तत्त्वतश्चारित्रान्तर्गतत्वात्, भवति 'आख्यातं' कथितमर्हदादिभिरिति गम्यत इति सूत्रद्वयार्थ ॥ सम्प्रति तपश्चतुर्थं कारणमाह—

तवो अ दुविहो वुत्तो, बाहिरऽब्भतरो तहा। बाहिरो छव्विहो वुत्तो, एवमब्भितरो तवो ॥ ३४ ॥

तपश्च द्विविधमुक्त, 'बाहिर'त्ति बाह्यमाभ्यन्तर, तथा तत्र बाह्य षड्विधमुक्तमेवमिति—षड्विधमाभ्यन्तरं तप उक्तमिति सूत्रार्थ, भावार्थस्तु तपोऽध्ययन एवाभिधास्यते ॥ आह—एषा मुक्तिमार्गत्वे कस्य कतरो व्यापार ?, उच्यते—

नाणेण जाणई भावे, दसणेण य सद्दहे। चरित्तेण निगिण्हाइ, तवेण परिसुज्झई ॥३५॥

'ज्ञानेन' मत्यादिना 'जानाति' अवबुध्यते 'भावान्' जीवादीन् 'दर्शनेन च' उक्तरूपेण 'सद्दहि'त्ति श्रद्धत्ते चारित्रेण—अनन्तराभिहितेन 'निगिण्हाति'त्ति निराश्रवो भवति, पठ्यते च—'न गिण्हति'त्ति, तत्र 'न गृह्णाति' नादत्ते कर्मेति गम्यते 'तपसा परिशुद्ध्यति' पुरोपचितकर्मक्षपणत शुद्धो भवति, उक्त हि—"संजमे अणण्हयफले तवे वोदाणफले"त्ति, इति सूत्रार्थ ॥ अनेन मार्गस्य फल मोक्ष उक्त, सम्प्रति तत्फलभूता गतिमाह—

यणे पण्णत्ते''त्ति, गुणैर्हि निर्वृत्तं गौणं 'तुः' अवधारणे गौणमेव, अप्रमाद इत्युपलक्षणत्वाद् अप्रमादश्रुतम्, एके पुनर्वीतरागश्रुतं, कोऽर्थः?–संवेगादयोऽत्र वर्ण्यन्ते, तद्रूप एव च तत्त्वतोऽप्रमाद इति तदभिधायिश्रुतरूपत्वादप्रमादश्रुतमिति ब्रुवते, अन्ये त्वप्रमादोऽपि वीतरागताफल इति तत्प्राधान्याश्रयणतो वीतरागश्रुतमिति गाथार्थः ॥ अत्र चादानपदनाम्नः सूत्रान्तर्गतत्वात्सूत्रस्पर्शिकनिर्युक्तेरेव तत्र व्यापार इति तदुपेक्ष्य वीतरागश्रुतनाम च तस्य केषाञ्चिदेवाभिमतत्वात् 'मध्यग्रहणे आद्यन्तौ गृहीतावेव भवत' इति न्यायतो वा द्वयमप्यनादृत्याप्रमादश्रुतनिक्षेपमभिधातुमाह—

निक्खेवो अपमाए चउवि० । ॥ ५०४ ॥

जाणगभवियसरीरे तवइरित्ते अमित्तमाईसु । भावे अन्नाणअसंवराईसु होइ नायव्वो ॥ ५०५ ॥

निक्खेवो अ सुअंमि चउक्कओ दुवि० ॥ ५०६ ॥

जाणगभवियसरीरे तवइरित्ते अ सो उ पंचविहो । अंडयबोंडयवालय वागय तह कीडए चेव ॥५०७॥

भावसुअं पुण दुविहं सम्मसुअं चेव होइ मिच्छसुयं । अहियारो सम्मसुए इहमज्झयणंमि नायव्वो ॥५०८॥

## अथ एकोनत्रिंश सम्यक्त्वपराक्रमाध्ययनम्

व्याख्यातमष्टाविंशमध्ययनमेकोनत्रिंशमारभ्यते,अस्य चायमभिसम्बन्ध —अनन्तराध्ययने ज्ञानादीनि मुक्तिमार्गत्वेनोक्तानि, तानि च संवेगादिमूलान्यकर्मताऽवसानानि च तथा भवन्तीति तानीहोच्यन्ते, यद्वाऽनन्तराध्ययने मोक्षमार्गगतिरुक्ता इह पुनरप्रमाद एव तत्प्रधानोपायो, ज्ञानादीनामपि तत्पूर्वकत्वादिति, स एव वर्ण्यते, अथवाऽनन्तराध्ययने मुक्तिमार्गगतिरुक्ता, सा च वीतरागत्वपूर्विकेति यथा तद्भवति तथाऽनेनाभिधीयते, इत्यनेन सम्बन्धत्रयेणायातमिदमध्ययनम्, अस्य च महापुरस्येव चत्वार्यनुयोगद्वाराणि व्यावर्ण्य नामनिष्पननिक्षेपोऽभिधेय, स च नामपूर्वक इत्येतन्नामनिर्देशायाह निर्युक्तिकृत्—

आयाणपएणेय सम्मत्तपरक्कमंति अज्झयण । गुण्ण तु अप्पमाय एगे पुण वीयरागसुय ॥ ५०२ ॥

आदीयत इत्यादानम्—आदि प्रथममित्यर्थ, तच्च तत्पद च—निराकाङ्क्षतयाऽर्थगमकत्वेन वाक्यमेवादानपद तेन, उपचारतश्चेह तदभिहितमपि तथोक्त, तत आदानपदाभिहितेन प्रक्रमान्नाम्ना 'इद'मिति प्रस्तुत सम्यक्त्वपराक्रममिति —उपप्रदर्शने, उच्यत इति शेष 'अध्ययन' प्रागुक्तनिरुक्त, वक्ष्यति हि—"इह खलु सम्मत्तपरक्कमे णामऽज्झ-

तदनुष्ठानं प्रत्युद्यमदर्शनेन वा 'इहमज्झयणंमि'त्ति इहाध्ययने वर्णितो येन तस्मादेतदध्ययनं ज्ञातव्यम् 'अप्रमादश्रुतं' अप्रमादश्रुतनामकमिति गाथार्थः ॥ गतो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

सुअं मे आउसंतेणं भगवया एवमक्खायं—इह खलु सम्मत्तपरक्कमे नामऽज्झयणे समणेणं भगवया महावीरेणं कासवेणं पवेइए.जं सम्मं सद्दहइत्ता पत्तियाइत्ता रोयइत्ता फासइत्ता पालइत्ता तीरइत्ता किट्टइत्ता सोहइत्ता आराहइत्ता आणाए अणुपालइत्ता बहवे जीवा सिज्झंति बुज्झंति मुच्चंति परिनिव्वायंति सव्वदुक्खाणमंतं करेंति ॥ १ ॥

'श्रुतम्' आकर्णितं 'मे' मया आयुष्मन्निति शिष्यामन्त्रणम्, एतच्च सुधर्मस्वामी जम्बूस्वामिनं प्रत्याह, 'तेने'ति यः सर्वजगत्प्रतीतः, तेनापि कीदृशेत्याह—'भगवता' समग्रैश्वर्यादिमता प्रक्रमान्महावीरेण 'एव'मिति वक्ष्यमाणप्रकारेण 'आख्यातं' कथितं, तमेव प्रकारमाह—'इह' अस्मिन् जगति जिनप्रवचने वा 'खलु' निश्चितं सम्यक्त्वमिति गुणगुणिनोरनन्यत्वात्सम्यक्त्वगुणान्वितो जीवस्तस्य सम्यक्त्वे वोक्तरूपे सति पराक्रमः—उत्तरोत्तरगुणप्रतिपत्त्या कर्मारिजयसामर्थ्यलक्षणो वर्ण्यतेऽस्मिन्निति सम्यक्त्वपराक्रमं नामाध्ययनमस्तीति गम्यते, नन्वेवमिदमपि गौणमेव नाम तत्किमिति निर्युक्तिकृताऽऽदानपदेनैतदुक्तम् ?, इतरे तु गौणे इति, सत्यमेतत्, किन्तु नाम्नोऽनेकविधत्वसूचनार्थं निर्युक्तिकृतेत्थमुक्तं न त्वस्य गौणत्वव्यवच्छेदार्थं, तच्च केन प्रणीतमित्याह—'श्रमणेन' श्रामण्यमनुचरता

गाथापञ्चकं प्रायः प्रतीतार्थमेव, नवरम् 'अमिचमाईसु'त्ति अमित्रा –शत्रव आदिशब्दाद्यालादिपरिग्रहस्तेषु योऽप्रमादः स तद्व्यतिरिक्तोऽप्रमाद उच्यते, द्रव्यत्वं चास्य तथाविधाप्रमादकार्याप्रसाधकत्वात् द्रव्यविषयत्वाद्वा, 'भावे' इति भावे विचार्ये अज्ञान–मिथ्याज्ञानमसंवर –अनिरुद्धाश्रवता, आदिशब्दात्कषायपरिग्रहः, एतेषु प्रक्रमाद्प्रमादः –एतज्जयं प्रति सदा सावधानतारूपो भवति ज्ञातव्यः । तथा 'सो उ पचविधो'त्ति, स इति तत्–तद्व्यतिरिक्तसूत्रं 'तु' पुनरर्थे 'पञ्चविधं' पञ्चप्रकारं, पञ्चविधत्वमेवाह–'अण्डजं' हंसाद्यण्डकेभ्यो यज्जायते यथा क्वचित्पट्टसूत्रं, पौण्डकं (बोण्डजं) यद्वमनितिन्दुकोद्भवं यथा कर्पाससूत्रं, वालजं यदूरणकादिकेशोत्पन्नं यथोर्णासूत्रं, वाकजं सनातस्यादिवाकेभ्यो यज्जायते यथा सनसूत्रं, कीटजं च यत्तथाविधकीटेभ्यो लालात्मकं प्रभवति यथा पट्टसूत्रं, तथा 'सम्यक्श्रुतम्' अङ्गप्रविष्टादि 'मिथ्याश्रुतं' कनकसप्तत्यादि, अधिकारः –प्रकृतं सम्यक्श्रुतेन, सुव्यत्ययात्तृतीयार्थे सप्तमी, 'इह' अध्ययने 'ज्ञातव्यः' अवबोद्धव्यः, तद्रूपत्वादस्येति गाथापञ्चकार्थः ॥ सम्प्रति गौणतामेवास्य नाम्नो वक्तुमाह—

सम्मत्तमप्पमाओ इहमज्झयणंमि वण्णिओ जेणं । तम्हेयं अज्झयणं णायव्वं अप्पमायसुअं ॥ ५०९ ॥

'सम्मत्त'ति सुव्यत्ययात्सम्यक्त्वे उपलक्षणत्वाज्ज्ञानादिषु चाप्रमादः उक्तं यायेन संवेगादिफलोपदर्शनतः काक्वा

समाप्य 'कीर्त्तयित्वा' गुरोर्विनयपूर्वकमिदमित्थं मयाऽधीतमिति निवेद्य 'शोधयित्वा' गुरुवदनुभाषणादिभिः शुद्धं विधाय 'आराध्य' उत्सूत्रप्ररूपणादिपरिहारेणाबाधयित्वा शेषं प्राग्वन्नवरम् आज्ञयेति जिनाज्ञया, उक्तं हि–"फासिय जोगतिएणं पालियमविराहियं च एमेव । तीरियमंतं पाविय किट्टिय गुरुकहण जिणमाणा ॥ १ ॥" एवं च कृत्वा किमित्याह—'बहवः' अनेक एव 'जीवाः' प्राणिनः 'सिध्यन्ति' इहैवागमसिद्धत्वादिना, 'बुध्यन्ते' घातिकर्मक्षयेण, 'विमुच्यन्ते' भवोपग्राहिकर्मचतुष्टयेन, ततश्च 'परिनिर्वान्ति' कर्मदावानलोपशमेन अत एव 'सर्वदुःखानां शारीरमानसानाम् 'अन्तं' पर्यन्तं कुर्वन्ति मुक्तिपदावाप्त्येति सूत्रार्थः ॥ सम्प्रति विनेयानुग्रहार्थं सम्बन्धाभिधानपुरस्सरं प्रस्तुताध्ययनार्थमाह—

तस्स णं अयमट्ठे एवमाहिज्जइ, तंजहा–संवेगे १ निव्वेए २ धम्मसद्धा ३ गुरुसाहम्मियसुस्सूसणया ४ आलोयणया ५ निंदणया ६ गरिहणया ७ सामाइए ८ चउवीसत्थए ९ वंदणए १० पडिक्कमणे ११ काउस्सग्गे १२ पच्चक्खाणे १३ थयथुइमंगले १४ कालपडिलेहणया १५ पायच्छित्तकरणे १६ खमावणया १७ सज्झाए १८ वायणया १९ परिपुच्छणया २० परियट्टणया २१ अणुप्पेहा २२ धम्मकहा २३ सुयस्स आराहणया २४ एगग्गमणसंनिवेसणया २५ संजमे २६ तवे २७ वोदाणे २८ सुहसाए २९ अप्पडिबद्धया ३० विवित्तसयणासणसेवणया ३१ विणिवट्टणया ३२ संभोगपच्चक्खाणे ३३ उवहिपच्चक्खाणे ३४ आहारपच्चक्खाणे ३५ कसायपच्चक्खाणे

धर्मकायावस्थामास्थितेनेत्यर्थ , भगवता महावीरेण काश्यपेन 'प्रवेदित' स्वत प्रवेदितमेव भगवता ममेदमाख्यातमित्युक्त भवति, अनेन वक्तृद्वारेण प्रस्तुताध्ययनस्य माहात्म्यमाह । ननु सुधर्मस्वामिनोऽपि श्रुतकेवलित्वात्तद्वारेणाप्यस्य प्रामाण्य सिध्यत्येव तत्किमेवमुपन्यास ?, उच्यते, लब्धप्रतिष्ठैरपि गुरूपदिष्टं गुरुमाहात्म्य च ख्यापयद्भि सूत्रमर्थश्चाख्येय इति ख्यापनार्थमेवमुपन्यास , इत्थ वक्तृद्वारेणास्य माहात्म्यमभिधाय सप्रति फलद्वारेणाह–'यदि'ति प्रस्तुताध्ययन 'सम्यग्' अवैपरीत्येन 'श्रद्धाय' शब्दार्थोभयरूप सामान्येन प्रतिपद्य 'प्रतीत्य' उक्तरूपमेव विशेषत इत्थमेवेति निश्चित्य, यद्वा सवेगादिजनितफलानुभवलक्षणेन प्रत्ययेन प्रतीतिपथमवतार्य, 'रोचयित्वा' तदभिहितार्थानुष्ठानविषय तदध्ययनादिविषय वाऽभिलापमात्मन उत्पाद्य, सभवति हि क्वचिद्गुणवत्तयाऽवधारितेऽपि कदाचिदरुचिरित्येवमभिधान, 'फासित्त'त्ति तदुक्तानुष्ठानत स्पृष्ट्वा 'पालयित्वा' तद्विहितानुष्ठानस्यातीचाररक्षणेन 'तीरयित्वा' तदुक्तानुष्ठान पार नीत्वा 'कीर्त्तयित्वा' स्वाध्यायविधानत सशुध्य 'शोधयित्वा' तदुक्तानुष्ठानस्य तत्तद्गुणस्थानावाप्तित उत्तरोत्तरशुद्धिप्रापणेन 'आराध्य' यथावदुत्सर्गापवादकुशलतया यावज्जीव तदर्थासेवनेन, एतत् सर्व स्वमनीषिकातोऽपि स्यादत आह—'आनया' गुरुनियोगात्मिकया 'अनुपाल्य' सततमासेव्य, यद्वा 'स्पृष्ट्वा' योगत्रिकेण मनोवाक्कायलक्षणेन, तत्र मनसा–सूत्रार्थोभयचिन्तनेन वचसा–वचनादिना कायेन–भङ्गकरचनादिना, एव पालनाराधनयोरपि योगत्रयं वाच्य, 'पालयित्वा' परावर्त्तनादिनाऽभिरक्ष्य 'तीरयित्वा' अध्ययनादिना परि-

ग्रमनःसंनिवेशना २५ संयम २६ तपो २७ व्यवदानं २८ सुखशायो २९ ऽप्रतिबन्धता ३० विविक्तशयनासन- सेवना ३१ विनिवर्त्तना ३२ सम्भोगप्रत्याख्यानम् ३३ उपधिप्रत्याख्यानम् ३४ आहारप्रत्याख्यानं ३५ कषायप्रत्याख्यानं ३६ योगप्रत्याख्यानं ३७ शरीरप्रत्याख्यानं ३८ सहायप्रत्याख्यानं ३९ भक्तप्रत्याख्यानं ४० सद्भावप्रत्याख्यानं ४१ प्रतिरूपता ४२ वैयावृत्त्यं ४३ सर्वगुणसंपूर्णता ४४ वीतरागता ४५ क्षान्तिः ४६ मुक्तिः ४७ मार्दवं ४८ आर्जवं ४९ भावसत्यं ५० करणसत्यं ५१ योगसत्यं ५२ मनोगुप्तता ५३ वाग्गुप्तता ५४ कायगुप्तता ५५ मनःसमाधारणा ५६ वाक्समाधारणा ५७ कायसमाधारणा ५८ ज्ञानसंपन्नता ५९ दर्शनसंपन्नता ६० चारित्रसंपन्नता ६१ श्रोत्रेन्द्रियनिग्रहः ६२ चक्षुरिन्द्रियनिग्रहो ६३ घ्राणेन्द्रियनिग्रहो ६४ जिह्वेन्द्रियनिग्रहः ६५ स्पर्शनेन्द्रियनिग्रहः ६६ क्रोधविजयो ६७ मानविजयो ६८ मायाविजयो ६९ लोभविजयः ७० प्रेमद्वेषमिथ्यादर्शनविजयः ७१ शैलेशी ७२ अकर्मतेति ७३, इत्यक्षरसंस्कारः ॥ साम्प्रतमिदमेव प्रतिपदफलोपदर्शनद्वारेण व्याचिख्यासुराह सूत्रकारः—

संवेगेणं भंते ! जीवे किं जणयइ ?, संवेगेणं अणुत्तरं धम्मसद्धं जणयइ, अणुत्तराए धम्मसद्धाए संवेगं हव्वमागच्छइ, अणंताणुबंधिकोहमाणमायालोभे खवेइ, कम्मं न बंधइ, तप्पच्चइयं च मिच्छत्तविसोहिं काऊण दंसणाराहए भवइ, दंसणविसोहीए णं विसुद्धाए अत्थेगइया तेणेव णं भवग्गहणेणं सिज्झंति बुज्झंति विमुच्चंति परिनिव्वायंति सव्वदुक्खाणमंतं करेंति, सोहीए य णं विसुद्धाए तच्चं पुणो भवग्गहणं नाइक्कमंति १॥ निव्वेएणं भंते !

३६ जोगपचक्खाणे ३७ सरीरपचक्खाणे ३८ सहायपचक्खाणे ३९ भत्तपचक्खाणे ४० सब्भावपचक्खाणे ४१ पडिरूवया ४२ वेयावच्चे ४३ सव्वगुणसपुण्णया ४४ वीयरागया ४५ खती ४६ मुत्ती ४७ मद्दवे ४८ अज्जवे ४९ भावसच्चे ५० करणसच्चे ५१ जोगसच्चे ५२ मणगुत्तया ५३ वयगुत्तया ५४ कायगुत्तया ५५ मणसमाधारणया ५६ वयसमाधारणया ५७ कायसमाधारणया ५८ नाणसपन्नया ५९ दसणसपन्नया ६० चरित्तसपन्नया ६१ सोइदियनिग्गहे ६२ चक्खिदियनिग्गहे ६३ घाणिदियनिग्गहे ६४ जिब्भिदियनिग्गहे ६५ फासिदियनिग्गहे ६६ कोहविजए ६७ माणविजए ६८ मायाविजए ६९ लोभविजए ७० पिज्जदोसमिच्छादसणविजए ७१ सेलेसी ७२ अकम्मया ७३ (दाराणि)॥

'तस्से'ति सम्यक्त्वपराक्रमाध्ययनस्य णमिति सर्वत्र वाक्यालङ्कारे 'अय'मित्यनन्तरमेव वक्ष्यमाण 'अर्थ' अभिधेय 'एवम्' अमुना वक्ष्यमाणप्रकारेण 'आख्यायते' कथ्यते महावीरेणेति गम्यते, तद्यथेति वक्ष्यमाणतदर्थोपन्यासार्थे, सवेगो १ निर्वेदो २ धर्मश्रद्धा ३ 'गुरुसाहम्मियसुस्सूसण'त्ति साधर्मिकगुरुशुश्रूषणम् आर्षत्वाच्चेहोत्तरत्र च सूत्रेष्वन्यथा पाठ ४ आलोचना ५ निन्दा ६ गर्हा ७ सामायिक ८ चतुर्विंशतिस्तवो ९ वन्दन १० प्रतिक्रमण ११ कायोत्सर्ग १२ प्रत्याख्यान १३ स्तवस्तुतिमङ्गल १४ कालप्रत्युपेक्षणा १५ प्रायश्चित्तकरण १६ क्षमणा १७ स्वाध्यायो १८ वाचना १९ प्रतिप्रच्छना २० परावर्त्तना २१ अनुप्रेक्षा २२ धर्मकथा २३ श्रुतस्याराधना २४ एका-

पन्नेव चोर्द्धस्थानस्थो न भवेत्, 'न संलपेत्' न तयैव सह संभाषं कुर्यात्, अत्यन्तदुष्टतोद्भावनपरं चैकग्रहणम्, अन्यथा ससहायस्यापि ससहायया अपि च स्त्रिया सहावस्थानं सम्भाषणं चैवंविधास्पदेषु दोषायैव, प्रवचनमालिन्यादिदोषसम्भवात्, अथवा समसरिभिर्वर्तन्त इति समरा द्रव्यतो जनसंहारकारिणः संग्रामाः भावात्तु स्त्रीणामरिभूतत्वात् ज्ञानादिजीवस्वतत्त्वघातिनः तासामेव दृष्ट्या दृष्टिसम्बन्धाः, तत्रेह भावसमरैरधिकारः, सप्तमी चेयं, ततोऽयं भावार्थः—द्रव्यसमरा हि न स्युरपि प्राणापहारिणः, भावसमरास्तु ज्ञानादिभावप्राणापहारिण एव, विशेपतरत्वेकाकितायां, तत एवमेतेष्वपि दारुणेषु भावसमरेषु सत्सु नैक एकस्त्रिया सार्द्धमगारादिषु तिष्ठेत् संलपेद्वा, अनेनापि चारित्रविनय एवोक्तः, उपदेशाधिकाराच्च न पौनरुक्त्यम्, एवमन्यत्रापि भावनीयमिति सूत्रार्थः ॥ २६ ॥ कदाचित् स्खलिते च गुरुभिः शिक्षितो यत्कुर्यात् तदेवाह—

जं मे बुद्धाणुसासंति, सीएण फरुसेण वा । मम लाभुत्ति पेहाए, पयओ य (तं) पडिस्सुणे ॥२७॥(सूत्रम्)

व्याख्या—यन्मां बुद्धा 'अनुशासन्ति' शिक्षां ग्राहयन्ति 'शीतेन' सोपचारवचसा, 'शीलेन वे'ति पाठः, तत्र शीलं—महाव्रतादि उपचारात्तज्जनकं वचोऽपि शीलं तेन, यद्वा 'शील समाधौ' ततः शीलेन—समाधानकारिणा—भद्र ! भवादृशामिदमनुचितमित्यादिना, 'परुषेण' कर्कशेन, उभयत्र वचसेति गम्यते, तत् 'प्रतिशृणुयात्' विधेयतया अङ्गीकुर्यादित्युत्तरेण सम्बन्धः, किमभिसन्धायेत्याह—मम 'लाभः' अप्राप्तार्थप्राप्तिरूपः, यन्मामनाचारकारिणममी शास-

जीवे किं जणयइ ?,निव्वेएण दिव्वमाणुस्सतिरिच्छिएसु कामभोएसु निव्वेय हव्वमागच्छइ सव्वविसएसु विरज्जइ,सव्वविसएसु विरज्जमाणे आरंभपरिच्चायं करेइ,आरंभपरिच्चायं करेमाणे संसारमग्गं वुच्छिदइ सिद्धिमग्गं पडिवन्ने य हवइ २॥ धम्मसद्धाए णं भंते ! जीवे किं जणयइ ?,२ सायासुक्खेसु रज्जमाणे विरज्जइ अगारधम्मं च णं चयइ,अणगारिए णं जीवे सारीरमाणसाणं दुक्खाणं छेयणभेयणसंजोगाईणं वुच्छेयं करेइ अव्वाबाहं च णं सुहं निव्वत्तेइ ३॥ गुरुसाहम्मियसुस्सूसणयाए णं भंते ! जीवे किं जणेइ ?,२ विणयपडिवत्तिं जणेइ,विणयपडिवन्ने णं जीवे अणच्चासायणसीले नेरइयतिरिक्खजोणियमणुस्सदेवदुग्गईओ निरुंभइ, वण्णसंजलणभत्तिबहुमाणयाए माणुस्सदेवसुग्गइओ निबंधइ सिद्धिसुगइं च विसोहेइ पसत्थाइं य णं विणयमूलाइं सव्वकज्जाइं साहेइ, अन्ने य बहवे जीवे विणइत्ता हवइ ४॥ आलोयणाए णं भंते ! जीवे किं जणेइ ?, २ मायानियाणमिच्छादरिसणसल्लाणं मुक्खमग्गविग्घाणं अणंतसंसारवद्धणाणं उद्धरणं करेइ उज्जुभावं च जणेइ, उज्जुभावं पडिवन्ने य णं जीवे अमाई इत्थीवेयं नपुंसगवेयं च न बन्धइ, पुव्वबद्धं च णं निज्जरइ ५॥ निंदणयाए णं भंते ! जीवे किं जणेइ ?, २ पच्छाणुतावं जणइ,पच्छाणुतावेण विरज्जमाणे करणगुणसेढिं पडिवज्जइ, करणगुणसेढिपडिवन्ने य अणगारे मोहणिज्जं कम्मं उग्घाएइ ६॥ गरिहणाए णं भंते ! जीवे किं जणेइ ?, २ अपुरक्कारं जणेइ, अपुरक्कारगए णं जीवे अप्पसत्थेहिंतो जोगेहिंतो नियत्तइ पसत्थेहि य पडिवज्जइ,पसत्थजोगपडिवन्ने य णं अणगारे अणंतघाई पज्जवे खवेइ ७॥ सामाइएणं भंते ! जीवे किं जणेइ ?, २ सावज्जजोगविरइं जणयइ ८ ॥

चउवीसत्थएणं भंते! जीवे किं जणेइ?, २ दंसणविसोहिं जणइ ९ ॥ वंदणएणं भंते! जीवे किं जणेइ?, २ नीयागोयं कम्मं खवेइ उच्चागोयं निबंधइ सोहग्गं च णं अप्पडिहयं आणाफलं निवत्तेइ दाहिणभावं च णं जणेइ १० ॥ पडिक्कमणेणं भंते! जीवे किं जणेइ?, २ वयछिद्दाइं पिहेइ, पिहियवयछिद्दे पुण जीवे निरुद्धासवे असबलचरित्ते अट्ठसु पवयणमायासु उवउत्ते अपुहुत्ते सुप्पणिहिए विहरइ ११ ॥ काउस्सग्गेणं भंते! जीवे किं जणेइ?, २ तीयपडुप्पन्नं पायच्छित्तं विसोहेइ, विसुद्धपायच्छित्ते य जीवे निव्वुयहियए ओहरियभरुव्व भारवहे धम्मज्झाणोवगए सुहं सुहेणं विहरइ १२ ॥ पच्चक्खाणेणं भंते! जीवे किंजणेइ?, २ आसवदाराइं निरुंभइ १३ ॥ थयथुइमंगलेणं भंते! जीवे किं जणेइ?, २ नाणदंसणचरित्तबोहिलाभं संजणइ,नाणदंसणचरित्तबोहिलाभसंपन्ने णं जीवे अंतकिरियं कप्पविमाणोववत्तियं आराहणं आराहेइ १४॥ कालपडिलेहणाए णं भंते! जीवे किं जणेइ?, नाणावरणिज्जं कम्मं खवेइ १५ ॥ पायच्छित्तकरणेणं भंते! जीवे किं जणेइ?, २ पावकम्मविसोहिं जणेइ निरइयारे आविभवइ सम्मं च णं पायच्छित्तं पडिवज्जमाणे मग्गं च मग्गफलं च विसोहेइ आयारं आयारफलं च आराहेइ १६ ॥ खमावणयाए णं भंते! जीवे किं जणेइ?, २ पल्हायणभावं जणेइ, पल्हायणभावमुवगए य सव्वपाणभूयजीवसत्तेसु मित्तीभावं उप्पाएइ, मित्तीभावमुवगए य जीवे भावविसोहिं काऊण निब्भए भवइ १७ ॥ सज्झाएणं भंते! जीवे किं जणेइ?, २ नाणावरणिज्जं कम्मं खवेइ १८ ॥ वायणयाए णं भंते! जीवे किं जणेइ?, २

निज्जरं जणेइ सुअस्स य अणुसज्जणाए अणासायणाए वट्टइ, सुयस्स य अणुसज्जणाए अणासायणाए वट्टमाणे तित्थधम्मं अवलंबइ, तित्थधम्ममवलंबमाणे महानिज्जराए महापज्जवसाणे हवइ १९ ॥ पडिपुच्छणाए णं भंते ! जीवे किं जणेइ ?, २ सुत्तत्थतदुभयाइं विसोहेइ, कंखामोहणिज्जं कम्मं वुच्छिंदइ २० ॥ परियट्टणयाए णं भंते ! जीवे किं जणेइ ?, २ वंजणाइं जणेइ वंजणलद्धिं च उप्पाएइ २१ ॥ अणुप्पेहाए णं भंते ! जीवे किं जणेइ ?, २ आउयवज्जाओ सत्त कम्मपयडीओ धणियबंधणबद्धाओ सिढिलबंधणबद्धाओ पकरेइ, दीहकालट्ठिईयाओ हस्सकालट्ठिईयाओ पकरेइ, तिव्वाणुभावाओ मंदाणुभावाओ पकरेइ, बहुप्पएसग्गाओ अप्पपएसग्गाओ पकरेइ, आउं च णं कम्मं सिय बंधइ सिय नो बंधइ, अस्सायावेयणिज्जं च णं कम्मं नो भुज्जो भुज्जो उवचिणइ, अणाइयं च णं अणवयग्गं दीहमद्धं चाउरंतसंसारकंतारं खिप्पामेव वीइवयइ २२ ॥ धम्मकहाए णं भंते ! जीवे किं जणेइ ?, २ निज्जरं जणेइ, धम्मकहाए णं पवयणं पभावेइ, पवयणपभावएणं जीवे आगमिसस्सभद्दत्ताए कम्मं निबंधइ २३ ॥ सुयस्स आराहणयाए णं भंते ! किं जणेइ ?, २ अन्नाणं खवेइ, न य संकिलिस्सइ २४ ॥ एगग्गमणसंनिवेसणाए णं भंते ! जीवे किं जणेइ ?, २ चित्तनिरोहं करेइ २५ ॥ संजमेणं भंते ! जीवे किं जणेइ ?, २ अणण्हयत्तं जणेइ २६ ॥ तवेणं भंते ! जीवे किं जणेइ ?, २ वोयाणं जणेइ २७ ॥ वोयाणेणं भंते ! जीवे किं जणेइ ?, २ अकिरियं जणेइ, अकिरियाए भवित्ता तओ पच्छा सिज्झइ ५, २८ ॥ सुहसाएणं

भंते! जीवे किं जणेइ ?, २ अणुस्सुयत्तं जणेइ, अणुस्सुए णं जीवे अणुकंपए अणुब्भडे विगयसोगे चरित्तमोहणिज्जं कम्मं खवेइ २९ ॥ अपडिबद्धयाए णं भंते.! जीवे किं जणेइ ?, २ निस्संगत्तं जणेइ, निस्संगत्तेणं जीवे एगे एगग्गचित्ते दिया य राओ य असज्जमाणे अप्पडिबद्धे आवि विहरइ ३० ॥ विवित्तसयणासणयाए णं भंते! जीवे किं जणेइ ?, २ चरित्तगुत्तिं जणेइ, चरित्तगुत्ते णं जीवे विवित्ताहारे दढचरित्ते एगंतरए मुक्खभावपडिवन्ने अट्ठविहं कम्मगंठिं निज्जरेइ ३१ ॥ विणिवट्टणयाए णं भंते! जीवे किं जणेइ ?, २ पावकम्माणं अकरणयाए अब्भुट्ठेइ पुव्वबद्धाण य निज्जरणयाए पावं नियत्तेइ, तओ पच्छा चाउरंतं संसारकंतारं वीईवयइ ३२ ॥ संभोगपच्चक्खाणेणं भंते! जीवे किं जणेइ ?, २ आलंबणाइं खवेइ, निरालंबणस्स य आययट्ठिया जोगा भवन्ति, सएणं लाभेणं संतूसइ परस्स लाभं नो आसाएइ नो तक्केइ नो पीहेइ नो पत्थेइ नो अभिलसइ, परस्स लाभं अणासाएमाणे अतक्केमाणे अपीहेमाणे अपत्थेमाणे अणभिलसेमाणे दुच्चं सुहसिज्जं उवसंपज्जित्ता णं विहरइ ३३॥ उवहिपच्चक्खाणेणं भंते! जीवे किं जणेइ ?, २ अपलिमंथं जणेइ, निरुवहिए णं जीवे निक्कंखे उवहिमंतरेण य न संकिलिस्सइ ३४ ॥ आहारपच्चक्खाणेणं भंते! जीवे किं जणेइ ?, २ जीवियासंसप्पओगं वुच्छिदइ, जीवियासंसप्पओगं वुच्छिदित्ता जीवे आहारमंतरेण न संकिलिस्सइ ३५ ॥ कसायपच्चक्खाणेणं भंते ? जीवे किं जणेइ ?, २ वीयरायभावं जणेइ वीयरायभावं पडिवन्नेऽविय णं जीवे समसुहदुक्खे भवइ ३६ ॥ जोगपच्चक्खाणेणं भंते !, २ अजोगयं जणेइ, अजोगी णं जीवे नवं कम्मं न बन्धइ पुव्वबद्धं

निज्जरेइ ३७ ॥ सरीरपच्चक्खाणेण भते०, २ सिद्धाइसयगुणत्तण निव्वत्तेइ, सिद्धाइसयगुणसपन्ने य ण जीवे लोगग्गभावमुवगए परमसुही भवइ ३८ ॥ सहायपच्चक्खाणेण भते०, २ एगीभाव जणेइ, एगीभावभूए य जीवे एगग्ग भावेमाणे अप्पसद्दे अप्पझझे अप्पकलहे अप्पकसाए अप्पतुमतुमे सजमबहुले सवरबहुले समाहिए आविभवइ ३९ ॥ भत्तपच्चक्खाणेण भते० !, २ अणेगाइ भवसयाइ निरुभइ ४० ॥ सब्भावपच्चक्खाणेण भते० !, २ अणियट्टिं जणयइ, अनियट्टिं पडिवन्ने य अणगारे चत्तारि केवलिकमसे खवेइ, तजहा– वेयणिज्ज आउय नाम गोय, तओ पच्छा सिज्झइ ५, ४१ ॥ पडिरूवयाए ण भते० !, २ लाघविय जणेइ, लहुभूए ण जीवे अप्पमत्ते पागडलिगे पसत्थलिगे विसुद्धसमत्ते सत्तसमिइसमत्ते सव्वपाणभूयजीवसत्तेसु वीससणिज्जरूवे अप्पडिलेहे जिइदिए विपुलतवसमिइसमन्नागए आवि भवइ ४२ ॥ वेयावच्चेण भते० !, २ तित्थयरनामगुत्त कम्म निबधइ ४३ ॥ सव्वगुणसपुन्नयाए ण भते० !, २ अपुणरावत्ति जणेइ, अपुणरावत्ति पत्तए ण जीवे सारीरमाणसाण दुक्खाण नो भागी भवइ ४४ ॥ वीयरागयाए ण भते० !, २ नेहाणुबधणाणि तण्हाणुबधणाणि य वुच्छिदइ मणुण्णामणुण्णेसु सद्दरूवरसफरिसगधेसु सचित्ताचित्तमीसएसु चेव विरज्जइ ४५ ॥ खतीए ण भते० !, २ परीसहे जिणेइ ४६ ॥ मुत्तीए ण भते !, २ अकिंचण जणेइ, अकिंचणे य जीवे अत्थलोलाण पुरिसाण अपत्थणिज्जे भवइ ४७ ॥ अज्जवयाए ण भते०, २ काउज्जुयय भावुज्जुयय भासुज्जुयय अविसवायण जणेइ, अविसवायणसपन्नयाए ण जीवे धम्मस्स आराहए भवइ ४८॥ मद्दवयाए ण भते !,

२ अणुस्सियत्तं जणेइ, अणुस्सियत्ते णं जीवे मिउमद्दवसंपन्ने अट्ठ मयट्ठाणाइं निट्ठवेइ ४९ ॥ भावसच्चेणं भंते० २ भावविसोहिं जणेइ, भावविसोहीए वट्टमाणे अरहंतपन्नत्तस्स धम्मस्स आराहणयाए अब्भुट्ठेइ, अरहंतपन्नत्तस्स धम्मस्स आराहणयाए अब्भुट्ठित्ता परलोगधम्मस्स आराहए भवइ ५०॥ करणसच्चेणं भंते ?, २ करणसत्तिं जणेइ, करणसच्चे वट्टमाणो जहावाई तहाकारी भवइ ५१ ॥ जोगसच्चेणं भंते ! णं जीवे० ?, २ जोगे विसोहेइ ५२ ॥ मणगुत्तयाए णं भंते ?, २ एगग्गं जणेइ, एगग्गचित्तेणं मणगुत्ते संजमाराहए भवइ ५३ ॥ वयगुत्तयाए णं भंते० ?, २ निव्विकारत्तं जणेइ, निव्विकारेणं जीवे वइगुत्ते जोगे अज्झप्पजोगसाहणजुत्ते यावि भवइ ५४ ॥ कायगुत्तयाए णं भंते० ?, संवरं जणयइ, संवरेणं कायगुत्ते णं पुणो पावासवनिरोहं करेइ ५५ ॥ मणसमाधारणयाए णं भंते० ?, २ एगग्गं जणेइ, एगग्गं जणइत्ता नाणपज्जवे जणयइ, नाणपज्जवे जणइत्ता सम्मत्तं विसोहेइ, मिच्छत्तं च निज्जरेइ ५६ ॥ वयसमाहारणयाए णं भंते० ?, २ वयसाहारणं दंसणपज्जवे विसोहेइ, वइसाहारणं दंसणपज्जवे विसोहित्ता सुलहबोहियत्तं च निव्वत्तेइ दुल्लहबोहियत्तं निज्जरेइ ५७ ॥ कायसमाधारणयाए णं भंते० ?, २ चरित्तपज्जवे विसोहेइ, चरित्तपज्जवे विसोहित्ता अहक्खायचरित्तं विसोहेइ २ त्ता चत्तारि केवलिकम्मंसे खवेइ, तओ पच्छा सिज्झइ ५, ५८॥ नाणसंपन्नयाए णं भंते० ?, २ सव्वभावाभिगमं जणेइ, नाणसंपन्ने णं जीवे चाउरंते संसारकंतारे न विणस्सई–'जहा सूईससुत्ता, पडिया न विणस्सई । तहा जीवे ससुत्ते, संसारे न विणस्सई ॥ १ ॥ नाणविणयतवचरित्तजोगे संपाउणइ, ससमय-

परसमयविसारए य असंघायणिज्जे भवइ ५९ ॥ दंसणसंपन्नयाए णं भंते० ?, २ भवमिच्छत्तछेयणं करेइ परं न विज्झायइ, अणुत्तरेणं नाणदंसणेणं अप्पाणं संजोएमाणे सम्मं भावेमाणे विहरइ ६० ॥ चरित्तसंपन्नयाए णं भंते० ?, २ सेलेसीभावं जणेइ, सेलेसिं पडिवन्ने अणगारे चत्तारि कम्मंसे खवेइ, तओ पच्छा सिज्झइ ५, ६१ ॥ सोइंदियनिग्गहेणं भंते० ?, २ मणुन्नामणुन्नेसु सद्देसु रागदोसणिग्गहं जणेइ तप्पच्चइयं च णं कम्मं न बंधइ पुव्वबद्धं च निज्जरेइ ६२ ॥ एवं चक्खिंदिय० ६३ ॥ घाणिंदिय० ६४ ॥ जिब्भिंदिय० ६५॥ फासिंदिय० ६६॥ कोहविजएणं भंते !० ?, २ खंतिं जणेइ कोहवेयणिज्जं कम्मं न बंधइ पुव्वनिबद्धं च निज्जरेइ ६७॥ एवं माणविज० मद्दवं ६८॥ माया० अज्जवं ६९॥ लोभ० संतोसं ७०॥ पिज्जदोसमिच्छादंसणविजएणं भंते० ?, २ नाणदंसणचरित्ताराहणयाए अब्भुट्ठेइ अट्ठविहस्स कम्मस्स कम्मगंठिविमोयणयाए, तप्पढमयाए जहाणुपुव्विं अट्ठावीसइविहं मोहणिज्जं कम्मं उग्घाएइ, पंचविहं नाणावरणिज्जं नवविहं दंसणावरणिज्जं पंचविहं अंतरायं, एए तिन्नि कम्मंसे जुगवं खवेइ, तओ पच्छा अणुत्तरं अणंतं कसिणं पडिपुन्नं निरावरणं वितिमिरं विसुद्धं लोगालोगप्पभासगं केवलवरनाणदंसणं समुप्पाडेइ जाव सजोगी हवइ ताव य इरियावहियं कम्मं निबंधइ—सुहफरिसं दुसमयट्ठिईयं, तं पढमसमए बद्धं बिइयसमए वेइयं तइयसमए निज्जिन्नं, तं बद्धं पुट्ठं उदीरियं वेइयं निज्जिन्नं, सेयाले अकम्मं चावि भवइ ७१ ॥ अहाउयं पालइत्ता अंतोमुहुत्तद्धावसेसाए जोगनिरोहं करेमाणो सुहुमकिरियं अप्पडिवाइं सुक्कज्झाणं झायमाणे तप्पढमयाए

मणजोगं निरुंभइ वयजोगं निरुंभइ आणापाणनिरोहं करेइ, ईसिपंचहस्सक्खरुच्चारणद्धाए य णं अणगारे समुच्छिन्नकिरियं अणियट्टिसुक्कज्झाणं झियायमाणो वेयणिज्जं आउयं नामं गुत्तं च एए चत्तारिवि कम्मंसे जुगवं खवेइ ७२॥ तओ ओरालियं कम्माइं च सव्वाहिं विप्पजहणाहिं विप्पजहित्ता उज्जुसेढीपत्ते अफुसमाणगई उड्ढं एगसमएणं अविग्गहेणं तत्थ गंता सागारोवउत्ते सिज्झइ जाव अंतंकरेइ ॥ ७३ ॥

सर्वस्य चास्य प्रयासस्य मुक्तिरेव फलं तत्र च प्रवृत्तिरभिलापपूर्विका तद्रूपश्च संवेग इत्यादितस्तमाह—संवेगो—मुक्त्यभिलापस्तेन भदन्त ! इति पूज्याभिमन्त्रणं 'जीवः किं जनयति ?' जन्तुः कतरं गुणमुत्पादयतीति योऽर्थ ?, इति शिष्यप्रश्नः, अत्र प्रज्ञापकः प्रतिवचनमाह—संवेगेन 'अनुत्तरां' प्रधानां धर्मः—श्रुतधर्मादिस्तत्र श्रद्धा—तत्करणाभिलापरूपा धर्मश्रद्धा तां जनयति, तदभावे हि न तत्सम्भवो, भावेऽपि वा देवलोकादिफलैवासाविति नानुत्तरत्वमस्याः, तयाऽपि किमित्याह—अनुत्तरया धर्मश्रद्धया संवेगं तमेवार्थाद्विशिष्टतरं 'हव्वं'ति शीघ्रमागच्छति, तद्व्यतिरेकेण हि विषयाद्यभिलापतो न तथाऽस्मिन्नागमनम्, अनुत्तरधर्मश्रद्धायां त्वन्यत्र निरभिष्वङ्गतया नान्यथात्वसम्भवः, ततोऽपि किमित्याह—'अनन्तानुबन्धिक्रोधमानमायालोभान्' वक्ष्यमाणलक्षणान् क्षपयति, तथा 'कर्म' प्रस्तावादशुभप्रकृतिरूपं 'न बध्नाति' न श्लेषयति, एवमपि को गुणः ? इत्याह—स—कषायक्षयः प्रत्ययो—निमित्तं यस्याः सा तत्प्रत्यया सैव तत्प्रत्ययिका स्वार्थे कन् प्रत्ययस्तां, 'चः' कर्माबन्धकत्वापेक्षया समुच्चये, मिथ्यात्वस्य 'विसोहिं'त्ति विशोधनं—

विशुद्धि –सर्वथा क्षयो मिथ्यात्वविशुद्धिस्ता कृत्वा दर्शनस्य–प्रस्तावात्क्षायिकसम्यक्त्वस्याराधको–निरतिचारपालनाकृद्दर्शनाराधको भवति, तथाऽपि किमित्याह–दर्शनविशुद्ध्या च'विशुद्ध्या' अत्यन्तनिर्मलया 'अस्ति' विद्यते 'एगय'त्ति एकक कश्चित्तथाविधो भवस्तेनैव 'भवग्रहणेन' जन्मोपादानेन सिध्यति, किमुक्त भवति?–यस्मिन्नेव जन्मनि दर्शनस्य तथाविधा शुद्धिस्तत्रैव मुक्तिं गच्छति, यथा मरुदेवी स्वामिनी, यस्तु न तेनैव सिध्यति स किमित्याह–शुद्ध्या–प्रकृमाद्दर्शनस्य विशुद्ध्या 'तच'त्ति तृतीय पुनर्भवग्रहणम्–अन्यजन्मोपादानात्मक 'नातिक्रामति' नातिवर्त्तते, अवश्य तृतीयभवग्रहणे सिध्यतीत्यर्थं, उत्कृष्टदर्शनाराधकापेक्षयैतत्, यत उक्तम्—"उक्कोसदसणे ण भते! जीवे कइहिं भवग्गहणेहिं सिज्झिज्जा ?, गोयमा ! उक्कोसेण तेणेव, ततो मुक्के तइय णाइक्कमति" १ ॥ सवेगाचावश्यभावी निर्वेद इति तमाह–इत प्रभृति सर्वत्र सुगमत्वान्न प्रश्नव्याख्या, 'निर्वेदेन' सामान्यत ससारविषयेण–कदाऽसौ त्यक्ष्यामीत्येवरूपेण दिव्यमानुषतैरश्चेषु, सूत्रत्वात्कप्रत्यय, यथासम्भवं देवादिसम्बन्धिषु कामभोगेषूक्तरूपेण निर्वेद ह्यमागच्छति यथा–अलमेतैरनर्थहेतुभिरिति, तथा च 'सर्वविषयेषु विरज्यते' अशेषशब्दादिविषय विरागमाप्नोति, विरज्यमानस्तेषु आरम्भ –प्राण्युपमर्दको व्यापारस्तत्त्याग करोति, विषयार्थत्वात्सर्वारम्भाणा, तत्परित्याग कुर्वन् 'ससारमार्ग' मिथ्यात्वाविरत्यादिरूप व्यवच्छिनत्ति, तत्त्यागवत एव तत्त्वत आरम्भपरित्यागसम्भवात्, तद्व्यवच्छित्तौ च सुप्राप एव

१ उत्कृष्टदर्शनेन भद त ! जीवः कतिभिर्भवग्रहणैः सिध्येत् ?, गौतम ! उत्कर्षेण तेनैव, ततो मुक्तस्तृतीय नातिक्राम्यति ।

सिद्धिमार्गः—सम्यग्दर्शनादिरिति सिद्धिमार्गप्रतिपन्नश्च भवति २॥ सत्यपि निर्वेदे धर्मश्रद्धैव सकलकल्याणनिबन्धनमिति तामाह—'धर्मश्रद्धया' उक्तरूपया सातं—सातवेदनीयं तज्जनितानि सौख्यानि सातसौख्यानि प्राग्वन्मध्यपदलोपी समासस्तेषु वैषयिकसुखेष्वितियावत् 'रज्यमानः' पूर्वं रागं कुर्वन् 'विरज्यते' विरक्तिं गच्छति, 'अगारधर्मं च' गृहाचारं गार्हस्थ्यमितियावत्, चशब्दश्चेह वाक्यालङ्कारे, 'त्यजति' परिहरति, तदत्यागस्य विषयैकसुखानुरागनिबन्धनत्वात्, ततश्च 'अणगार'त्ति प्राकृतत्वाद् 'अनगारी' यतिः सन् जीवः शारीरमानसानां दुःखानां किंरूपाणामित्याह—'छेदनभेदनसंयोगादीना'मिति, छेदनं—खड्गादिना द्विधाकरणं भेदनं—कुन्तादिना विदारणम्, आदिशब्दस्येहापि सम्बन्धात्ताडनादयश्च गृह्यन्ते, ततश्छेदनभेदनादीनां शारीरदुःखानां संयोगः—प्रस्तावादनिष्टसम्बन्धः, आदिशब्दादिष्टवियोगादिपरिग्रहः, ततश्च संयोगादीनां मानसदुःखानां विशेषेण—पुनरसम्भवलक्षणेनोच्छेदः—अभावो व्युच्छेदस्तं करोति, तन्निबन्धनकर्मोच्छेदेनेति भावः, अत एव 'अव्याबाधम्' उपरतसकलपीडं मोक्षमितियावत्, 'चः' पुनरर्थे भिन्नक्रमस्ततः सुखं पुनः 'निर्वर्त्तयति' जनयति, पूर्वं संवेगफलाभिधानप्रसङ्गेन धर्मश्रद्धायाः फलनिरूपणमिह तु स्वातन्त्र्येणेत्यपौनरुक्त्यमिति भावनीयम् ३ ॥ धर्मश्रद्धायां चावश्यं गुरवः शुश्रूषितव्या इति गुरुशुश्रूषणमाह—गुरूणां शुश्रूषणं—पर्युपासनं तेन 'विनयप्रतिपत्तिम्' उचितकर्त्तव्यकरणाङ्गीकाररूपां जनयति 'विणयपडिवण्णे य'त्ति प्राग्वत् प्रतिपन्नः—अङ्गीकृतो विनयो येन स तथा 'चः' पुनरर्थे जीवः 'अणच्चासायणासीले'त्ति अतीवाऽऽयं—सम्य-

न्तीति 'पेहाएत्ति' एकारस्यालाक्षणिकत्वात् प्रेक्ष्य–आलोच्य प्रेक्षया वा एवविधबुद्ध्या 'पयतो'त्ति प्रयत –प्रयत्नवान्, पदतो वा–तथाविधानुस्मर्यमाणसूत्रालापकादिति सूत्रार्थ ॥ २७ ॥ किमिह परत्र चासन्तोपकारि गुरुवचनमपि कस्यचिदन्यथा सम्भवति ?, येनैवमुपदिश्यते इत्याह—

अणुसासणमोवाय, दुक्कडस्स य पेरण। हिय त मन्नए पन्नो, वेस्स भवइ असाहुणो ॥ २८ ॥ (सूत्रम्)

व्याख्या—'अनुशासनम्' उक्तरूपम् 'ओवाय'ति उपाये–मृदुपरुपभाषणादौ भवमौपाय, यद्वा 'ओवायति' सूत्रत्वात् उपपतनमुपपात –समीपभवन तत्र भवमौपपात–गुरुसस्तारास्तरणविश्रामणादिकृत्य 'दुष्कृतस्य च' कुत्सिताचरितस्य प्रेरण–हा ! किमिदमित्थमाचरितमित्याद्यात्मक, गुरुविहितमिति गम्यते, 'हितम्' इहपरलोकोपकारि, 'तदि'त्यनुशासनादि मन्यते 'प्राज्ञ' प्रज्ञावान् 'द्वेष्य' द्वेषोत्पादक 'भवति' जायते, कस्य ?–'असाधो' अपगतभावसाधुत्वस्य, तदनेनासाधोर्गुरुवचनस्याप्यन्यथात्वसम्भव उक्त इति सूत्रार्थ ॥ २८ ॥ अमुमेवार्थं व्यक्तीकर्तुमाह—

हिय विगयभया वुद्धा, फरुसमप्पणुसासण। वेस्स त होइ मूढाण, खतिसुद्धिकर पय ॥२९॥ (सूत्रम्)

व्याख्या—'हित' पथ्य 'विगतभया' सप्तभयरहिता 'बुद्धा' अवगततत्त्वा, मन्यन्त इति शेप, 'परुपमपि' कर्कशमपि, अनुशासन शिष्याणा गुरुविहितमिति प्रक्रम, 'द्वेष्यं' द्वेषोत्पादि 'तद्' इत्यनुशासन भवति 'मूढानाम्'

यथा हि तोमरादिशल्यानि तत्कालदुःखदानेऽप्यायतौ दुःखदायीनि एवं मायादीन्यपीत्येवमुच्यते तेषां 'मोक्षविघ्नानां' पापानुवन्धकर्मवन्धनिवन्धनत्वेन मुक्त्यन्तरायाणां, तथाऽनन्तसंसारं वर्द्धयन्ति—वृद्धिं नयन्तीत्यनन्तसंसारवर्द्धनानि तेपाम् 'उद्धरणम्' अपनयनं करोति, तदुद्धरणतश्च 'ऋजुभावं च' आर्जवं जनयति 'उज्जुभावपडिवण्णे य'त्ति प्रतिपन्नर्जुभावश्च जीवः 'अमायी' मायारहितस्ततः पुंस्त्वनिवन्धनत्वादमायित्वस्य 'इत्थिवेय'त्ति प्राग्वद्बिन्दुलोपे स्त्रीवेदं नपुंसकवेदं च न वध्नाति, पूर्ववद्धं च तदेव द्वयं यद्वा सकलमपि कर्म 'निर्जरयति' क्षपयति, तथा च मुक्तिपदमाप्नोतीत्यभिप्रायः, उक्तं हि—"उंद्धियदंडो साहू अचिरेण उवेइ सासयं ठाणं । सोवि अणुद्धियदंडो संसारपवड्ढओ होति ॥१॥" त्ति ५ । आलोचना च दुष्कृतनिन्दावत एव सफला भवतीति तामाह—'णिंदणयाए'त्ति, आर्पत्वान्निन्दनम्—आत्मनैवात्मदोषपरिभावनं तेन 'पश्चादनुतापं' हा ! दुष्टमनुष्ठितमिदं मयेत्यादिरूपं जनयति, ततः पश्चादनुतापेन 'विरज्यमानः' वैराग्यं गच्छन् करणेन—अपूर्वकरणेन गुणहेतुका श्रेणिः करणगुणश्रेणिः सर्वोपरितनस्थितेर्मोहनीयादिकर्मदलिकान्युपादायोदयसमयात्प्रभृति द्वितीयादिसमयेष्वसङ्ख्यातगुणपुद्गलप्रक्षेपरूपाऽऽन्तर्मौहूर्त्तिकी, यत उक्तम्—"उंवरिमठिईइ दलियं हेट्ठिमठाणेसु कुणइ गुणसेढी । गुणसंकमकरणं पुण असुहाओ सुहंमि पक्खिवइ ॥ १ ॥"

१ उद्धृतदण्डः साधुरचिरेणैवोपैति शाश्वतं स्थानम् । सोऽपि चानुद्धृतदण्डः संसारप्रवर्धको भवति ॥ १ ॥ २ उपरितनस्थितेर्दलिकमधस्तनस्थानेषु करोति गुणश्रेणिः । गुणसंक्रमकरणं पुनरशुभाः शुभे प्रक्षिपति ॥ २ ॥

त्वादिलाभं शातयति—विनाशयतीत्याशातना तस्या शीलं—तत्करणस्वभावात्मकमस्येत्याशातनाशीलो न तथाऽनत्याशातनाशील, कोऽर्थ ?—गुरुपरिवादादिपरिहारकृत्, एवंविधश्च नैरयिकतिर्यग्योनिकमनुष्यदेवदुर्गतीरिति—नैरयिकाश्च तिर्यञ्चश्च नैरयिकतिर्यञ्चस्तेषां योनि स्वार्थिके के नैरयिकतिर्यग्योनिके—प्रतीते 'मनुष्यदेवदुर्गती च' म्लेच्छकिल्बिषिकत्वादिलक्षणे 'निरुणद्धि' निषेधति, तद्धेतोरत्याशातनाया अभावेन तत्रागमनात्, तथा वर्ण —श्लाघा तेन सञ्ज्वलन—गुणोद्भासनं वर्णसञ्ज्वलन भक्ति —अञ्जलिप्रग्रहादिका बहुमानम्—आन्तरप्रीतिविशेष एषां द्वन्द्वे भावप्रत्यये च वर्णसञ्ज्वलनभक्तिबहुमानता तया—प्रक्रमाद्गुरूणा विनयप्रतिपत्तिरूपया 'माणुस्सदेवसोग्गइओ'त्ति मानुष्यदेवसुगती विशिष्टकुलैश्वर्येन्द्रत्वाद्युपलक्षिता निबध्नाति तत्प्रायोग्यकर्मबन्धनेनेति भाव, 'सिद्धिसोग्गइं'ति सिद्धिसुगतिं च विशोधयति, तन्मार्गभूतसम्यग्दर्शनादिविशोधनेन, 'प्रशस्तानि' च प्रशंसास्पदानि 'विनयमूलानि' विनयहेतुकानि सर्वकार्याणीह श्रुतज्ञानादीनि परत्र च मुक्तिं 'साधयति' निष्पादयति, तत्किमेव स्वार्थसाधक एवासाविलाह—अन्यांश्च बहून् जीवान् 'विनेता' विनयं ग्राहिता, स्वय सुस्थितस्योपादेयवचनात्, उक्तं हि—"ठिओ उ ठावए पर"ति, तथा च विनयमूलत्वादशेषश्रेयसां तत्प्रापणेन परार्थसाधकोऽप्यसौ भवत्येवेति भाव ४। गुरुशुश्रूषां कुर्वतोऽप्यतीचारसम्भवे आलोचनात एव विवक्षितफलप्राप्तिरिति तामाह—आडिति—सकलस्वदोषाभिव्याप्त्या लोचना—आत्मदोषाणां गुरुपुरत प्रकाशनाऽऽलोचना तया माया—शाठ्य निदान—ममातस्तप प्रभृत्यादेरिद स्यादिति प्रार्थनात्मकं मिथ्यादर्शन—सांशयिकादि एतानि शल्यानीव शल्यानि तत कर्मधारये मायानिदानमिथ्यादर्शनशल्यानि,

पेण सहावद्येन वर्त्तन्त इति सावद्याः—कर्मबन्धहेतवो योगा—व्यापारास्तेभ्यो विरतिः—उपरमः सावद्ययोगविरतिस्तां जनयति, तद्विरतिसहितस्यैव सामायिकसम्भवात्, न चैवं तुल्यकालत्वेनानयोः कार्यकारणभावासम्भव इति वाच्यं, केषुचित्तुल्यकालेष्वपि वृक्षच्छायादिवत्कार्यकारणभावदर्शनाद्, एवं सर्वत्र भावनीयम् ८। सामायिकं च प्रतिपत्तुकामेन तत्प्रणेतारः स्तोतव्याः, ते च तत्त्वतस्तीर्थकृत एवेति तत्सूत्रमाह—'चतुर्विंशतिस्तवेन' एतदवसर्पिणीप्रभवतीर्थकृदुत्कीर्त्तनात्मकेन दर्शनं—सम्यक्त्वं तस्य विशुद्धिः—तदुपघातिकर्मापगमतो निर्मलीभवनं दर्शनविशुद्धिस्तां जनयति ९। स्तुत्वाऽपि तीर्थकरान् गुरुवन्दनपूर्विकैव तत्प्रतिपत्तिरिति तदाह—'वन्दनकेन' आचार्याद्युचितप्रतिपत्तिरूपेण 'नीचैर्गोत्रम्' अधमकुलोत्पत्तिनिबन्धनं कर्म क्षपयति, 'उच्चैर्गोत्रं' तद्विपरीतरूपं निबध्नाति, 'सौभाग्यं च' सर्वजनस्पृहणीयतारूपम् 'अप्रतिहतं' सर्वत्राप्रतिस्खलितमत एवाज्ञा—जनेन यथोदितवचनप्रतिपत्तिरूपा फलं 'निर्वर्त्तयति' जनयति, तद्वतो हि प्राय आदेयकर्मणोऽप्युदयसम्भवादादेयवाक्यताऽपि संभवतीति, 'दक्षिणभावं च' अनुकूलभावं जनयति लोकस्येति गम्यते, तन्माहात्म्यतोऽपि सर्वः सर्वावस्थास्वनुकूल एव भवति १०। एतद्गुणस्थितेनापि मध्यमतीर्थकृतां तीर्थेषु स्खलितसम्भवे पूर्वपश्चिमयोस्तु तदभावेऽपि प्रतिक्रमितव्यमिति प्रतिक्रमणमाह—'प्रतिक्रमणेन' अपराधेभ्यः प्रतीपनिवर्त्तनात्मकेन व्रतानां—प्राणातिपातनिवृत्त्यादीनां छिद्राणि—अतिचाररूपाणि विवराणि व्रतच्छिद्राणि 'पिदधाति' स्थगयति अपनयतीतियावत्, तथाविधश्च कं गुणमवाप्नोती-

उपलभ्यमानादिस्थितिघातरसघातगुणसङ्क्रमबन्धाश्च निषिद्धाः, अथवा करणगुणेन—अपूर्वकरणादिमाहात्म्येन श्रेणि करणगुणश्रेणिः प्रक्रमात्क्षपकश्रेणिरेव गृह्यते, यद्वा करणं-पिण्डविशुद्ध्यादि तदुपलक्षितगुणानां ज्ञानादीनां श्रेणि-उत्तरोत्तरगुणपरम्परास्वरूपा तां प्रतिपद्यते 'करणगुणसेढीपडिवण्णे य त्ति प्राग्वत्प्रतिपन्नकरणगुणश्रेणिकश्चानगारः 'मोहनीयं' दर्शनमोहनीयादि कर्म 'उद्घातयति' क्षपयति, तत्क्षपणे च मुक्तिप्राप्तिरित्यर्थत उक्तैव भवति ६। कश्चिदात्मनोऽत्यन्तदुष्टतां परिभावयन् न निन्दामात्रेण तिष्ठेत् किन्तु गर्हामपि कुर्यादिति तामाह—'गरिहणयाए' त्ति गर्हणेन—परसमक्षमात्मनो दोषोद्भावनेन 'अपुरक्कारं' ति पुरस्करणं पुरस्कारो—गुणवानयमिति गौरवाध्यारोपो न तथाऽपुरस्कारः—अवज्ञास्पदत्वं तं जनयत्यात्मन इति गम्यते, तथा चापुरस्कारं गतः—प्राप्तः अपुरस्कारगतः—सर्वस्याप्यवज्ञास्पदीभूतो जीवः कदाचित्कदध्यवसायोत्पत्तावपि तद्भीतित एव 'अप्रशस्तेभ्यः' कर्मबन्धहेतुभ्यो योगेभ्यः 'निवर्तते' तान् न प्रतिपद्यते, प्रशस्तयोगांस्तु प्रतिपद्यत इति गम्यते, 'पसत्थजोगपडिवन्ने य' त्ति प्रतिपन्नप्रशस्त-योगोऽनगारोऽनन्तविषयतयाऽनन्ते ज्ञानदर्शने हन्तुं शीलं येषां तेऽनन्तघातिनस्तान् 'पर्यवान्' प्रस्तावात् ज्ञानावरणादिकर्मणस्तद्घातिसामर्थ्यलक्षणान् परिणतिविशेषान् 'क्षपयति' क्षयं नयति, पर्यवाभिधानं च तद्गततयैव द्रव्यस्य विनाश इति ख्यापनार्थम्, उपलक्षणं चैतन्मुक्तिप्राप्तेः, तदर्थत्वात्सर्वप्रयासस्य, एवमनुक्ताऽपि सर्वत्र मुक्तिप्राप्तिरेव फलत्वेन दृश्या ७। आलोचनादीनि च सामायिकवत एव तत्त्वतो भवन्तीति तदुच्यते—'सामायिकेन' उपलक्ष-

नेन[1] मूलगुणोत्तरगुणप्रत्याख्यानरूपेणाश्रवद्वाराणि निरुणद्धि, तन्निरोधहेतुत्वात्तस्य, उपलक्षणं चैतत्, पुरोपचितकर्मक्षये मुक्त्यङ्गत्वेनास्यान्यत्रोक्तत्वात्, तथा चाह–"पच्चक्खाणमिणं सेविऊण भावेण जिणवरुद्दिट्ठं । पत्ताऽणंता जीवा सासयसोक्खं लहुं मोक्खं ॥१॥" १३ । अत्र चोत्तरगुणप्रत्याख्यानान्तर्भूतं नमस्कारसहितादि, तद्ग्रहणानन्तरं च यत्र सन्निहितानि चैत्यानि(तत्र)तद्वन्दनं विधेयमित्युक्तं प्राक्, तच्च न स्तुतिस्तवमङ्गलं विनेति तदाह–तत्र स्तवा–देवेन्द्रस्तवादयः स्तुतय–एकादिसप्तश्लोकान्ताः, यत उक्तम्–"[2]एगदुगतिसिलोगा [थुइओ] अन्नेसिं जाव हुंति सत्तेव । देविंदत्थवमाई तेण परं थुत्तया होंति ॥ १ ॥"त्ति, ततश्च स्तुतयश्च स्तवाश्च स्तुतिस्तवाः, स्तुतिशब्दस्य त्त्यन्तत्वात्पूर्वनिपातः, सूत्रे तु प्राकृतत्वाद्व्यत्ययनिर्देशः, स्तुतिस्तवा एव मङ्गलं–भावमङ्गलरूपं स्तुतिस्तवमङ्गलं तेन ज्ञानदर्शनचारित्रात्मिका बोधिर्ज्ञानदर्शनचारित्रबोधिस्तस्य लाभो ज्ञानदर्शनचारित्रबोधिलाभः, परिपूर्णजिनधर्मावाप्तिरित्यर्थः, तं जनयति, उक्तञ्च–"[3]भत्तीए जिणवराणं परमाए खीणपिज्जदोसाणं । आरोगबोहिलाभं समाहिमरणं च पावेंति ॥ १ ॥" ज्ञानदर्शनचारित्रलाभबोधिसंपन्नश्च जीवोऽन्तः—पर्यन्तो भवस्य कर्मणां वा तस्य क्रिया–अभिनिर्वर्त्तनमन्तक्रिया, मुक्तिरित्यर्थः, ततश्चान्तक्रियाहेतुत्वादन्तक्रिया ताम्, अन्तक्रियाहेतुत्वं च तद्भवेऽपि स्यादत आह—

१ प्रत्याख्यानमिदं सेवित्वा भावेन जिनवरोद्दिष्टम् । प्राप्ता अनन्ता जीवाः शाश्वतसौख्यं लघु मोक्षम् ॥ १ ॥ २ एकद्वित्रिश्लोकाः स्तुतयोऽन्येषां यावद्भवन्ति सप्तैव । देवेन्द्रस्तवाद्यास्ततः परं स्तवा भवन्ति ॥ १ ॥ ३ भक्त्या जिनवराणां परमया क्षीणप्रेमद्वेषाणाम् । आरोग्यबोधिलाभं समाधिमरणं च प्राप्नुवन्ति ॥ १ ॥

स्याद्–विहितव्रतच्छिद्र पुनर्जीव 'निरुद्धाश्रव ' सर्वथा हिसाद्याश्रवाणा निरुद्धत्वात्, अत एवासबल–सबलस्थानैरकर्बुरीकृत चरित्र यस्य स तथा, 'अष्टसु प्रवचनमातृषु' उक्तरूपासु 'उपयुक्त ' अवधानवान् तत एवाविद्यमान पृथक्त्व–प्रस्तावात्सयमोद्योगेभ्यो वियुक्तस्वरूप यस्यासौ अपृथक्त्व –सदा सयमयोगवान्, (अ) प्रमत्तो वा पाठान्तरात्, तथा 'सुप्रणिहित ' सुष्ठु सयमे प्रणिधानवान्, पाठान्तरतो वा सुष्ठु प्रणिहितानि—असन्मार्गात् प्रच्याव्य सन्मार्गे व्यवस्थापितानीन्द्रियाण्यनेनेति सुप्रणिहितेन्द्रिय 'विहरति' सयमाध्वनि याति ११। अत्र चातीचारशुद्धिनिमित्त कायोत्सर्ग कर्त्तव्य इति तमाह–काय –शरीर तस्योत्सर्ग –आगमोक्तनीत्या परित्याग कायोत्सर्गस्तेन, अतीत चेह चिरकालभावित्वेन प्रत्युत्पन्नमिव प्रत्युत्पन्न चासन्नकालभावितयाऽतीतप्रत्युत्पन्न 'प्रायश्चित्तम्' उपचारात्प्रायश्चित्तार्हमतीचार 'विशोधयति' तदुपार्जितपापापनयतोऽपनयति, विशुद्धप्रायश्चित्तश्च जीवो निर्वृत्त–स्वस्थीभूत हृदयम्—अन्त करणमस्येति निर्वृत्तहृदय , क इव ?—'ओहरिय'त्ति अपहृत –अपसारितो भर इति–भारो यस्मात्स तथा, इवेति भिन्नक्रम , ततो भार वहतीति मूलविभुजादेराकृतिगणत्वात्कप्रत्यये भारवहो—वाहीकादि स इव, भारप्राया ह्यतीचारास्ततस्तदपनयनेऽपहृतभरभारवाह इव निर्वृत्तहृदयो भवतीति भावार्थ , स च ध्यान—धर्माद्युपगत —प्राप्तो ध्यानोपगत पाठान्तरत प्रशस्तध्यानध्यायी 'सुखसुखेन' सुखपरम्परावाप्त्या 'विहरति' इहपरलोकयोरवतिष्ठते, इहैव जीवन् मुक्त्यवाप्तेरिति भाव १२। एवमप्यशुध्यमाने प्रत्याख्यान विधेयमिति तदाह—'प्रत्याख्या-

पढमा अंतकिरियावत्थू १। अहावरे दोचे अंतकिरियावत्थू महाकम्मा पचायाए आविभवति समणाउसो! से णं मुंडे भवित्ता अगारातो अणगारियं पव्वयाइ, उवट्ठिए णेयाउयस्स जाव उवहाणवं दुक्खं खवेइ तवस्सी, तस्स णं तहप्पगारे तवे भवति, तहप्पगारा वेयणा भवति, से णं तहप्पगारे पुरिसजाए भवति, निरुद्धेणं परियाएणं सिज्झति जाव सव्वदुक्खाणमंतं करेति जहा से गयसुकुमाले अणगारे २।" अपरः पुनरल्पकर्मा श्रामण्यमवाप्य तथाविधतपसस्तथा वेदनायाश्चाभावात्तद्भवभाविना दीर्घपर्यायेण निर्वाणमाप्नोति, यथा भरतश्चक्रवर्त्ती, यथोक्तम्–"अहावरे तच्चे अंतकिरियावत्थू अप्पकम्मे पचायाए यावि भवति, समणाउसो! से णं मुंडे भवित्ता अगाराओ अणगारियं पव्वएत्ति, उवट्ठिए णेआउयस्स मग्गस्स संजमबहुले जाव सव्वदुक्खंखवे तवस्सी, तस्स णं णो तहप्पगारे तवे भवति नो तहप्पगारा वेयणा भवति, से णं तहप्पगारे पुरिसज्जाए दीहेणं परियाएणं सिज्झति, जहा से भरहे राया चाउरंतच-

१ प्रथमाऽन्तक्रियास्थान १ अथापरं द्वितीयमन्तक्रियास्थानं महाकर्मा प्रत्याजातश्चापि भवति श्रमणायुष्मन्! स मुण्डो भूत्वाऽगारात् अनगारितां प्रव्रजति, उपस्थितो नैयायिकाय मार्गाय यावदुपधानवान् दुःखं क्षपयति, तस्य तथाप्रकारं तपो भवति तथाप्रकारा वेदना भवति स तथाप्रकारः पुरुषजातो भवति, (येन) निरुद्धेन पर्यायेण सिध्यति यावत् सर्वदुःखानामन्तं करोति यथा स गजसुकुमालोऽनगारः २ अथापरं तृतीयमन्तक्रियावस्तु अल्पकर्मा प्रत्याजातश्चापि भवति, श्रमणायुष्मन्! स मुण्डो भूत्वाऽगारादनगारितां प्रव्रजति, उपस्थितो नैयायिकाय मार्गाय संयमबहुलो यावत् सर्वदुःखक्षपकः तपस्वी, तस्य तथाप्रकारं न तपो भवति न तथाप्रकारा वेदना भवति, स तथाप्रकारः पुरुषजातो दीर्घेण पर्यायेण सिध्यति, यथा स भरतो राजा चातुरन्तचक्रवर्त्ती,

कल्पा–देवलोका विमानानि–ग्रैवेयकानुत्तरविमानरूपाणि तेषूपपत्तिर्यस्यां सा कल्पविमानोपपत्तिका ता, किमुक्त भवति ?–अनन्तरजन्मनि कल्पादिषु विशिष्टदेवत्वावाप्तिफला परम्परया तु मुक्तिप्रापिकाम् 'आराधना' ज्ञानाद्याराधनात्मिकाम् 'आराधयति' साधयति, इय चैवविधाऽऽराधना तपस्वितायामपि तथाविधगुरुकर्माण तथाविधकर्मवेदनाऽभावयन्त च जीवमपेक्ष्योक्ता, अन्तक्रियाभाजन च जीववस्तु चतुर्धा भवति, तथाहि–कश्चित्प्रतिपद्यापि श्रामण्य पालयन्नपि सयम तथाविधगुरुकर्मतया तथाविधविशिष्टाध्यवसायासम्भवेन तथाविधकर्मवेदनाया अभावान्न तद्भव एव मुक्तिभाग् भवति, किन्तु भवान्तरे दीर्घपर्यायावाप्त्या, यथा सनत्कुमारचक्री, तथा च स्थानाङ्गम्—"तत्थ खलु इमे पढमे अतकिरियावत्थू–महाकम्मे पच्चायाए यावि भवति, समणाउसो ! से ण समणे भवेत्ता अगाराओ अणगारं पव्वइओ उवट्ठिए नेयाउयस्स मग्गस्स सजमबहुले समाहिबहुले (सवरबहुले) लूहे तीरट्ठीओ उवहाणव दुक्खखवे तवस्सी, तस्स ण तहप्पगारे तवे भवति णो तहप्पगारा वेयणा भवति, से ण तहप्पगारे पुरिसज्जाए दीहदीहेण परियाएण सिज्झइ बुज्झइ मुचइ परिणिव्वाति सव्वदुक्खाणमत करेइ, जहा से सणकुमारे राया चाउरतचक्कवट्टी

१ तत्र खलु इद प्रथमम तक्रियावस्तु–महाकर्मा प्रत्याजातश्चापि भवति, श्रमणायुष्मन् ! स श्रमणो भूत्वाऽगारात् अनगारिता प्रव्रजित उपस्थितो नैयायिकाय मार्गाय सयमबहुल समाधिबहुल ( सवरबहुल ) रूक्षस्तीरार्थी उपधानवान् दु खक्षपक तपस्वी, तस्य तथाप्रकार तपो भवति न तथाप्रकारा वेदना भवति, स तथाप्रकार पुरुषजातो दीर्घदीर्घेण पर्यायेण सिध्यति बुध्यति मुच्यते परिनिर्वाति सर्वदु खाना मन्त करोति, यथा स सनत्कुमारो राजा चातुरन्तचक्रवर्त्ती,

भावः १५। कथञ्चिदकालपाठे च प्रायश्चित्तं प्रतिपत्तव्यमिति प्रक्रमायातं तत्करणमाह–तत्र पापं छिनत्ति प्रायश्चित्तं वा विशोधयतीति नैरुक्तविधिना प्रायश्चित्तम्, उक्तं हि–"पावं छिंदति जम्हा पायच्छित्तंति भण्णए तेणं। पाएण वाऽवि चित्तं विसोहए तेण पच्छित्तं ॥ १ ॥"ति, तच्चालोचनादि तस्य करणं–विधानं प्रायश्चित्तकरणं तेन पापकर्मणां विशुद्धिः–अभावः पापकर्मविशुद्धिस्तां जनयति निरतिचारश्चापि भवति. तेनैव ज्ञानाचाराद्यतीचारविशोधनात्, सम्यक् च प्रायश्चित्तं प्रतिपद्यमानो मार्गः–इह ज्ञानप्राप्तिहेतुः सम्यक्त्वं तं च तत्फलं च ज्ञानं 'विशोधयति' निर्मलीकुरुते, ततश्चाचर्यत इत्याचारः–चारित्रं तच्च तत्फलं च–मुक्तिलक्षणमाराधयति, न च ज्ञानदर्शनयोर्युगपद्भावभावित्वाद्धेतुफलभावाभाव इति वाच्यं, यत आगमः–"कारणकज्जविभागो दीवपगासाण जुगवजम्मेवि। जुगवुप्पन्नंपि तहा हेऊ णाणस्स संमत्तं ॥ २ ॥" यद्वा मार्गं–चारित्रप्राप्तिनिबन्धनतया दर्शनज्ञानाख्यं तत्फलं च चारित्रं तत आचारं च–ज्ञानाचारादि तत्फलं–मोक्षमाराधयति, अथवा 'मार्गं च' मुक्तिमार्गं क्षायोपशमिकदर्शनादि तत्फलं च–तमेव प्रकर्षावस्थं क्षायिकदर्शनादि, शेषं प्राग्वत्, विशोधनाऽऽराधनयोश्च सर्वत्र निरतिचारतयैव हेतुरिति भावनीयम् १६। प्रायश्चित्तकरणं च क्षमणात एव भवतीत्यतस्तामाह–क्षमणा–दुष्कृतान-

१ पापं छिनत्ति यस्मात् प्रायश्चित्तमिति भण्यते तस्मात्। प्रायेण वापि चित्तं विशोधयति तेन प्रायश्चित्तम् ॥ १ ॥ २ कारणकार्यविभागो दीपप्रकाशयोर्युगपज्जन्मन्यपि। युगपदुत्पन्नमपि तथा हेतुर्ज्ञानस्य सम्यक्त्वम् ॥ २ ॥

कयट्टी ३ ॥" तदन्यस्त्वल्पकर्मा विरतिमवाप्य तथाविधविशुद्धाध्यवसायवशात्तथाविधतपस्तथाविधवेदना च लब्ध्वा झगित्येव मुक्तिमधिगच्छति, यथा मरुदेवी स्वामिनी, तथा च तत्रैवोक्तम्—"[1]अहावरे चउत्थे अंतकिरियावत्थू अप्पकम्मे पच्चायाते यावि भवति, समणाउसो! से णं मुंडे भवित्ता अगाराओ अणगारियं पव्वतिए उवट्ठिए णेयाउयस्स मग्गस्स संजमबहुले जाव सव्वदुक्खखवे तवस्सी, तस्स णं तहप्पगारे तवे भवति तहप्पगारा चेव वेयणा भवति, से णं तहप्पगारे पुरिसजाए णिरुद्धेण परियाएण सिज्झइ जाव सव्वदुक्खाण अंतं करेति, जहा से मरुदेवी भगवतित्ति" पठन्ति च 'अणंतकिरियं आराहणं आराहेति'त्ति" अत्र चाविद्यमानाऽन्तक्रिया—कर्मक्षयलक्षणा तद्भव एव यस्यां साऽनन्तक्रिया तां परम्परामुक्तिफलामित्यर्थः १४। अर्हद्वन्दनानन्तरं स्वाध्यायो विधेयः, स च काल एव, तत्परिज्ञानं च कालप्रत्युपेक्षणापूर्वकमिति तामाह—कालः—प्रादोषिकादिस्तस्य प्रत्युपेक्षणा—आगमविधिना यथावन्निरूपणा ग्रहणप्रतिजागरणरूपा कालप्रत्युपेक्षणा तया, ज्ञानावरणीयं कर्म क्षपयति, यथावत्प्रवृत्त्या तथाविधशुभभावसम्भवेनेति

---

१ अथापरं चतुर्थमन्तक्रियावस्तु अल्पकर्मा प्रत्यायातश्चापि भवति, श्रमणायुष्मन्! स मुण्डो भूत्वाऽगारात् अनगारितां प्रव्रजितः, उपस्थितो नैयायिकाय मार्गाय संयमबहुलो यावत्सर्वदुःखक्षपकस्तपस्वी, तस्य तथाप्रकारं तपो भवति तथाप्रकारैव वेदना भवति, स तथाप्रकारः पुरुषजातो निरुद्धेन पर्यायेण सिध्यति यावत् सर्वदुःखानामन्तं करोति यथा सा मरुदेवी भगवतीति

अज्ञानानां, क्षान्तिः—क्षमा शुद्धिः—आशयविशुद्धता तत्करणं, यद्वा—क्षान्तेः शुद्धिः—निर्मलता क्षान्तिशुद्धिस्तत्करम्, अमूढानां विशेषतः क्षान्तिहेतुत्वाद् गुर्वनुशासनस्य, मार्दवादिशुद्धिकरत्वोपलक्षणं चैतद्, अत एव पद्यते—गम्यते गुणैर्ज्ञानादिभिरिति पदं—ज्ञानादिगुणस्थानमित्यर्थः, अथवा—परुषमपीत्यपिशब्दो भिन्नक्रमः, ततश्च हितमप्यायत्यां विगतभयाद् 'बुद्धाद्' आचार्यादेः, उत्पन्नमिति शेषः, परुषं यच्छूल्यसुखदमनुशासनं, तत्किमित्याह—द्वेष्यं तद्भवति मूढानां, शेषं प्राग्वदिति सूत्रार्थः ॥ २९ ॥ पुनर्विनयमेवाह—

आसणे उवचिट्ठिज्जा, अनुच्चेऽकुक्कुए थिरे । अप्पुत्थाई निरुत्थाई, निसीज्जा अप्पकुक्कुई ॥३०॥ (सूत्रम्)

व्याख्या—'आसनं' पीठादि वर्षासु ऋतुबद्धे तु पादपुञ्छनं तत्र पीठादौ 'उपतिष्ठेत्' उपविशेत्, 'अनुच्चे' द्रव्यतो नीचे भावतस्त्वल्पमूल्यादौ, गुर्वासनात् इति गम्यते, 'अकुकुचे' अस्पन्दमाने, न तु तिनिशफलकवत् किञ्चिचलति, तस्य श्रृङ्गाराङ्गत्वात्, 'स्थिरे' समपादप्रतिष्ठिततया निश्चले, अन्यथा सत्त्वविराधनासम्भवात्, ईदृश्यप्यासने अल्पमुत्थातुं शीलमस्येति अल्पोत्थायी, प्रयोजनेऽपि न पुनः पुनरुत्थानशीलः, 'निरुत्थायी' न निमित्तं विनोत्थानशीलः, उभयत्रान्यथाऽनवस्थितत्वसम्भवात्, एवंविधश्च किमित्याह—'निषीदेत्' आसीत, 'अप्पकुकुइ' त्ति अल्पस्पन्दनः, करादिभिरल्पमेव चलन्, यद्वा—अल्पशब्दोऽभावाभिधायी, ततश्चाल्पम्—असत्, कुकु-

न्तर क्षमितव्यमिद मयेत्यादिरूपा तया 'पल्हाएणतभाव जणयइ'त्ति प्रह्लादेन–आत्मनो मनःप्रसत्त्यात्मकेनान्तर्भा-(भा)ध–विनाश प्रक्रमादनुशयस्य तज्जनितचित्तसक्लेशस्य च 'जनयति' उत्पादयति प्रह्लादेनान्तर्भावमुपगतश्च, पठन्ति च–'पल्हायणभाव जणयति, पल्हायणभावमुवगए य'त्ति, इह च प्रह्लादनभाव —चित्तप्रसत्तिरूपोऽभिप्राय, सर्वे च ते प्राणाश्चेह द्वित्रिचतुरिन्द्रिया भूताश्च—तरवो जीवाश्च–पञ्चेन्द्रिया सत्त्वाश्च—शेषजन्तव सर्वप्राणभूतजीवसत्त्वा, उक्त हि—"प्राणा द्वित्रिचतुष्प्रोक्ता, भूताश्च तरव स्मृता । जीवा पञ्चेन्द्रिया ज्ञेया, शेपा सत्त्वा इतीरिता ॥ १ ॥" तेपु 'मित्रीभाव' परहितचिन्तालक्षणमुत्पादयति, ततो मैत्रीभावमुपगतश्चापि जीव 'भावविशुद्धि' रागद्वेपविगमरूपा कृत्वा 'निर्भयः' इहलोकादिभयविकलो भवति, अशेपभयहेत्वभावादिति भाव १७। एवविधगुणावस्थितेन स्वाध्याये यतितव्यमिति तमाह–स्वाध्यायेन ज्ञानावरणीयमुपलक्षणत्वात् शेप च कर्म क्षपयति, यत आह—"कम्ममसखेज्जभव खवेइ अणुसमयमेव आउत्तो । अन्नयरम्मिवि जोए सज्झायमि य विसेसेण ॥१॥" १८। अत्र च प्रथम वाचनैव विधेयेति तामाह—वक्ति शिष्यस्त प्रति गुरा प्रयोजकभावो वाचना पाठनमित्यर्थस्तया 'निर्जरा' कर्मपरिशाटन जनयति, तथा 'श्रुतस्य' आगमस्य चस्य भिन्नक्रमत्वादनाशातनाया च वर्त्तते, तदकरणे ह्यवनात श्रुतमाशातित भवेत् न तु तत्करण इति, पठन्ति च–'अणुसज्जणाए वट्टइ' तत्रानुषङ्ग(ज्ञ)

१ कर्मासख्येयभविक क्षपयति अनुसमयमेवाऽऽयुक्त । अन्यतरस्मिन् योगेऽपि स्वाध्याये च विशेपेण ॥ १ ॥

नमनुवर्त्तनं तत्र वर्त्तते, कोऽर्थः ?–अन्यवच्छेदं करोति, ततः श्रुतस्यानाशातनायामनुपजने वा वर्त्तमानः तीर्थमिह गणधरस्तस्य धर्मः—आचारः श्रुतधर्मप्रदानलक्षणस्तीर्थधर्मः यदिवा तीर्थं–प्रवचनं श्रुतमित्यर्थस्तद्धर्मः–स्वाध्यायस्तमवलम्बमानः—आश्रयन् महती बहुतरकर्मविषयत्वान्निर्जराऽस्येति महानिर्जरो महत्–महाप्रमाणपर्यवसितत्वेन प्रशस्यं वा मुक्त्यवाप्त्या पर्यवसानम्—अन्तः कर्मणो भवस्य वा यस्य, चस्य गम्यमानत्वान्महापर्यवसानश्च भवति, मुक्तिभाग् भवतीति हृदयम् १९। गृहीतवाचनेनापि संशयाद्युत्पत्तौ मुदा प्रष्टव्यमिति प्रतिप्रच्छनावसर इति तामाह–तत्र प्रथमं कथितस्य सूत्रादेः पुनः प्रच्छनं प्रतिप्रच्छनं तेन सूत्रार्थतदुभयानि विशोधयति, संशयादिमालिन्यापनयनेन विशुद्धानि कुरुते, तथा काङ्क्षा—इदमित्थमित्थं च ममाध्येतुमुचितमित्यादिका वाञ्छा सैव मोहयति 'अन्यत्रापी'ति वचनादनीयरि काङ्क्षामोहनीयं कर्म अनभिग्रहिकमिथ्यात्वरूपं 'व्युच्छिनत्ति' विशेषेणापनयति २०। इत्थं विशोधितस्यापि सूत्रस्य मा भूद्विस्मरणमिति परावर्त्तनाऽवसरः, तत्र च 'परियट्टणाए'त्ति सूत्रत्वात्परावर्त्तना—गुणनं तया व्यज्यते एभिरर्थ इति व्यञ्जनानि–अक्षराणि 'जनयति' उत्पादयति, तानि हि विगलितान्यपि गुणयतो झगित्युत्पतन्तीत्युत्पादितान्युच्यन्ते, तथा तथाविधकर्मक्षयोपशमतो व्यञ्जनलब्धिं, चशब्दाद् व्यञ्जनसमुदायात्मकत्वाद्वा पदस्य तल्लब्धिं च पदानुसारितालक्षणामुत्पादयति २१। सूत्रवदर्थेऽपि संभवति विस्मरणमतः सोऽपि परिभावनीय इत्यनुप्रेक्षा प्रस्तावात्सूत्रानुप्रेक्षा–चिन्तनिका तया प्रकृष्टशुभभावोत्पत्तिनिबन्धन-

तयाऽऽयुष्कवर्जाः सप्त कर्मप्रकृती 'धणिय'त्ति वाढ बन्धन-श्लेषण तेन बद्धा निकाचिता इत्यर्थ 'शिथिलबन्धनबद्धा' किञ्चिमुत्कला, कोऽर्थ ?–अपवर्त्तनादिकरणयोग्या प्रकरोति, तपोरूपत्वादस्या, तपसश्च निकाचितकर्मक्षपणेऽपि क्षमत्वात्, उक्त हि–"तवसा उ निकाइयाणपि"त्ति, दीर्घकालस्थितिका ह्रस्वकालस्थितिका प्रकरोतीति, शुभाध्यवसायवशात्स्थितिख(क)ण्डकापहारेणेति भाव, एतच्चैव, सर्वकर्मणामपि स्थितेरशुभत्वात्, यत उक्तम्–"सव्वासिंपि ठितीओ सुभासुभाणपि होंति असुभाओ । माणुसतिरिच्छदेवाउय च मोत्तूण सेसाण ॥ १ ॥" तीव्रानुभावाश्चतु स्थानिकरसत्वेन मन्दानुभावा त्रिस्थानिकरसत्वाद्यापादनेन प्रकरोति, इह चाशुभप्रकृतय एव गृह्यन्ते, शुभभावस्य शुभाशुभतीव्रा(व्रमन्दा)नुभावहेतुत्वात्, उक्त हि–"सुभपयडीण विसोही[ए]तिव्वमसुभाण सकिलेसेण । अन्न हिऽविसोहीए"त्ति, शुभभावेन तीव्रमित्यनुभाग बध्नातीति प्रक्रम, क्वचिदिदमपि दृश्यते–"बहुपएसग्गाओ अप्पपएसग्गातो करेति" ननु केनाभिप्रायेणायुष्कवर्जा सप्तेत्यभिधान ?, शुभायुष एव सयतस्य सम्भवात्, तस्यैव चानुप्रेक्षा तात्त्विकी, न च शुभभावेन शुभप्रकृतीना शिथिलतादिकरण, सक्लेशहेतुकत्वात्तस्य, आह–शुभायुर्बन्धोऽप्यस्या कि न फलमुक्तम् ?, उच्यते, आयुष्क च कर्म स्याद्बध्नाति, तस्य त्रिभागादिशेषायुष्कताया-

१ तपसा तु निकाचितानामपि २ सर्वासामपि स्थितय शुभाशुभानामपि भवन्त्यशुभा । मनुष्यतिर्यग्देवायूंषि च मुक्त्वा शेषाणाम् ॥१॥
३ शुभप्रकृतीना विशुद्ध्या तीव्रमशुभाना सक्लेशेन । अन्य हि अविशुद्ध्या ॥ ४ बहुप्रदेशाग्रा अल्पप्रदेशाग्रा करोति

मेव बन्धसम्भवात्, उक्तं हि–"सिय तिभागे सिय तिभागतिभागे" इत्यादि, ततस्तस्य कादाचित्कत्वेन विवक्षितत्वात्तद्बतश्च कस्यचिन्मुक्तिप्राप्तेस्तद्बन्धानभिधानमिति भावः, अपरं च 'असातवेदनीयं' शारीरादिदुःखहेतुं कर्म चशब्दादन्याश्चाशुभप्रकृतीः 'नो' नैव भूयोभूयः 'उपचिनोति' बध्नाति, भूयोभूयोग्रहणं त्वन्यतमप्रमादतः प्रमत्तसंयतगुणस्थानवर्त्तितायां तद्बन्धस्यापि सम्भवात्, अन्ये त्वेवं पठन्ति–'सायावेयणिज्जं च णं कम्मं भुज्जो भुज्जो उवचिणाति' इह च शुभप्रकृतिसमुच्चयार्थश्चशब्दः, शेषं स्पष्टम्, 'अनादिकम्' आदेरसम्भवात्, 'चः' समुच्चयार्थो योक्ष्यते 'अणवयग्ग'न्ति अनवदत्–अनपगच्छत् 'अग्रं' परिमाणं यस्य सदाऽवस्थितानन्तपरिमाणत्वेन सोऽयमनवदग्रोऽनन्त इत्यर्थस्तं, प्रवाहापेक्षं चैतत्, अत एव 'दीहमद्धं'ति मकारोऽलाक्षणिकः 'दीर्घाद्धं' दीर्घकालं दीर्घो वाऽध्वा–तत्परिभ्रमणहेतुः कर्मरूपो मार्गो यस्मिंस्तत्तथा, चत्वारः–चतुर्गतिलक्षणा अन्ताः–अवयवा यस्मिंस्तच्चतुरन्तं संसारकान्तारं क्षिप्रमेव–शीघ्रमेव 'वीतीवयति'त्ति 'व्यतिव्रजति' विशेषेणातिक्रामति, किमुक्तं भवति ?–मुक्तिमवाप्नोति २२ । एवमभ्यस्तश्रुतेन च धर्मकथाऽपि विधेयेति तामाह–'धर्मकथगा' व्याख्यानरूपया निर्जरां जनयति, पाठान्तरतश्च प्रवचनं 'प्रभावयति' प्रकाशयति, उक्तं च–"पावयणी धम्मकही वादी णेमित्तिओ तवस्सी य। विज्जा सिद्धो य कवी अट्ठेव पभावगा भणिया ॥ १ ॥" 'आगमिसस्सभद्दत्ताए'त्ति सूत्रत्वादागमिष्यदिति–आगामिकालभावि

१ स्यात्रिभागे स्यात्रिभागत्रिभागे २ प्रावचनी धर्मकथिको वादी नैमित्तिकस्तपस्वी च । विद्या सिद्धश्च कविरष्टैव प्रभावका भणिताः ॥१॥

भद्र–कल्याण यस्मिंस्तथा तस्य भावस्तत्ता तया, यदिवाऽऽगमिष्यतीत्यागम –आगामी कालस्तस्मिन् शश्वद्भद्रतया–अनवरतकल्याणतयोपलक्षित कर्म निबध्नाति, शुभानुबन्धि शुभमुपार्जयतीति भाव २३। इत्थ च पञ्चविधस्वाध्यायरतेन श्रुतमाराधित भवतीति तदाराधनोच्यते–श्रुतस्य 'आराधनया' सम्यगासेवनया 'अज्ञानम्' अनवबोध 'क्षपयति' अपनयति, विशिष्टतत्त्वावबोधावाप्ते, 'न च सक्लिश्यते' नैव रागादिजनितसक्लेशभाग् भवति, तद्वशतो नवनवसवेगावाप्ते, उक्त हि–"जह जह सुयमो(मव)गाहइ अइसयरसपसरसजुयमपुव्व । तह तह पल्हाइ मुणी णवणवसवेगसद्धाए ॥ १ ॥"त्ति २४। श्रुताराधना चैकाग्रमन सनिवेशनात एव भवत्यतस्तामाह–एकमग्र–प्रस्तावाच्छुभमालम्बनमस्येत्येकाग्र तच्च तन्मनश्च तस्य सनिवेशना–स्थापना, एकाग्रे वा मन सनिवेशना तया चित्तस्येतस्तत उन्मार्गप्रस्थितस्य निरोधो–नियन्त्रणा चित्तनिरोधस्त करोति २५। एवविधस्यापि सयमादेवेष्टफलावाप्तिरिति तमाह–'सयमेन' पञ्चाश्रवविरमणादिना 'अणण्हयत्त'ति 'अनहस्कत्वम्' अविद्यमानकर्मत्व जनयति, आश्रवविरमणात्मकत्वादस्य २६। सयमवतोऽपि न तपो विना कर्मक्षय इति तदाह–'तपसा' वक्ष्यमाणेन 'वोदाण'ति 'व्यवदान' पूर्वबद्धकर्मापगमतो विशिष्टा शुद्धि जनयति २७। इत्थ व्यवदानस्य तपोऽनन्तरफलत्वात्त(स्य त)दाह–व्यवदानेन 'अक्रियम्' अविद्यमानक्रिय, कोऽर्थ –व्युपरतक्रियाख्य शुक्लध्यानचतुर्थ भेद जनयति, 'अक्रियाक ' व्युपरतक्रिया-

१ यथा यथा श्रुतमवगाहते अतिशयरसप्रसरसयुतमपूर्वम् । तथा तथा प्रह्लादयति मुनिर्नवनवसवेगश्रद्धया ॥ १ ॥

क्षयशुक्लध्यानवर्त्ती भूत्वा 'ततः पश्चात्' तदनन्तरं 'सिध्यति' निष्ठितार्थो भवति 'बुध्यते' ज्ञानदर्शनोपयोगाभ्यां च वस्तुतत्त्वमवगच्छति, न तु नवात्मगुणात्यन्तोच्छेदात्मकमुक्तिवादिनामिवाबुद्धिमान् भवति, मुच्यते संसारान्न तु 'दग्धेन्धनः पुनरुपैति भव'मित्यादिवादिपरिकल्पितमुक्तवत्पुनरिहागमनवान् अत एव परिनिर्वातीत्यादि प्राग्वत्, आह-अनन्तरं तपसो व्यवदानं फलमुक्तं, तच्च मुक्त्याख्यफलोपलक्षकमित्यतिदेशेनोक्तमिति किं पुनस्तत्फलत्वेन साक्षादस्याभिधानम् ?, उच्यते, सूत्रकृतां वैचित्र्यख्यापनार्थं, ते हि परार्थोद्यतचेतसः परेषां प्रज्ञाप्रकर्षापकर्षावपेक्ष्य क्वचित्साक्षादभिधानोचितानप्यर्थानस्पष्टतया निर्दिष्टवन्तः क्वचित्तु गम्यानपि च साक्षादन्यत्र तूभयथेति २८ । व्यवदानं च सत्स्वपि संयमादिषु सुखशायितायामेव भवतीति तामेवाह, तत्र च सुखं शेते, कोऽभिप्रायः ?- प्रवचनशङ्कादीनां परलाभकामभोगशरीरसंबाधनादिमदनस्पृहादीनां च क्रमेणाभावरूपासु चतसृषु सुखशय्यासु स्थितत्वेन मनोविघाताभावान्निराकुलतयाऽऽस्त इति सुखशायि तस्य भावः सुखशायिता, प्राकृतत्वात्सूत्रे यलोपः, तयाऽनुत्सुकत्वं कोऽर्थः ?-परलाभदिव्यमानुषकामभोगेषु सर्वदा निःस्पृहत्वं, यदिवा 'सुहसायाए'त्ति प्राकृतत्वात्सुखं-वैषयिकं शातयति-तद्गमनस्पृहानिवारणेनापनयतीति सुखशातस्तस्य भावः सुखशातता तया, पठन्ति च- 'सुहसाएणं'ति, तत्र च सुखशायः-सुखेन शयनं तेन, यदिवा सुखशातः-सुखस्य शातनं तेन जीवः 'अनुत्सुकत्वं' विषयसुखं प्रति निःस्पृहत्वं 'जनयति' उत्पादयति, संयमादिष्वेव निष्पन्नमानसत्वात्, अनुत्सुकश्च जीवोऽनु-

सह कम्पत इत्यनुकम्पक , सुखोत्सुको हि म्रियमाणमपि प्राणिनमवलोकयन् स्वसुखरसिक एवासीत् अयं तु तद्विपरीत इति दु खेन कम्पमानमवलोक्य तद्दु खदु खितया स्वयमपि तत्काल एव कम्पत इति, तथा 'अनुद्भट' अनुल्वण 'विगतशोक' नैहिकार्थभ्रंशेऽपि शोचते, शुक्तिपदबद्धस्पृहत्वात्, एवविधश्च प्रकृष्टशुभाध्यवसायतश्चारित्रमोहनीय कर्म क्षपयति २९। सुखशय्यास्थितस्य चाप्रतिबद्धता भवतीति तामभिधातुमाह—'अप्रतिबद्धतया' मनसि निरभिष्वङ्गतया 'नि सङ्गत्व' बहि सङ्गाभाव जनयति, नि सङ्गत्वेन जीव एको रागादिनिकलतया तत एव 'एकाग्रचित्त' धर्मैकतानमना एकाग्रताविबन्धकहेत्वभावात्, ततश्च दिवा वा रात्रौ वाऽसजन्, कोऽर्थ ?—सदा बहि सङ्ग त्यजन्नप्रतिबद्धश्चापि विहरति, कोऽभिप्राय ?—विशेषत. प्रतिबन्धविकलो मासकल्पादिनोद्यतविहारेण पर्यटति ३०। अप्रतिबद्धता च विविक्तशयनासनतायां संभवत्यतस्तामाह—विविक्तानि—स्त्र्याद्यसंसक्तानि शयनासनान्युपलक्षणत्वादुपाश्रयश्च यस्यासौ विविक्तशयनासनस्तद्भावस्तत्ता तया 'चारित्रगुप्तिं' चरणरक्षा जनयति 'चरित्तगुत्ते'त्ति प्राग्वद्, गुप्तचरित्रश्च जीवो विविक्तो—विकृत्यादिरहित आहारो यस्य स तथा, गुप्तचारित्रो हि सर्वत्र नि स्पृह एव भवति, तथा दृढ—निश्चल चरित्रमस्येति दृढचरित्रस्तत एवैकान्तेन—निश्चयेन रत—अभिरतिमानेकान्तरत संयम इति गम्यते, तथा मोक्षे—मुक्तौ भावेन—अन्त करणेन प्रतिपन्न—आश्रित मोक्षभावप्रतिपन्न मोक्ष एव मया साधयितव्य इत्यभिप्रायवान् अष्टविधकर्मग्रन्थिरिव ग्रन्थिर्दुर्भेदतयाऽष्टविधकर्मग्रन्थिस्त 'निर्ज-

रयति' क्षपकश्रेणिप्रतिपत्त्या क्षपयति ३१। विविक्तशयनासनतायां च विनिवर्त्तना भवतीति तामाह–'विनिवर्त्तनया' विषयेभ्य आत्मनः पराङ्मुखीकरणरूपया 'पापकर्मणां' सावद्यानुष्ठानानाम् 'अकरणतया' न मया पापानि कर्त्तव्यानीत्येवंरूपया 'अभ्युत्तिष्ठते' धर्मं प्रत्युत्सहते, पूर्ववद्धानां पापकर्मणामिति प्रक्रमः, चशब्दो निर्जरणानन्तरं द्रष्टव्यः ततः पूर्ववद्धानां निर्जरणया चशब्दादभिनवानुपादानेन च 'तदि'ति कर्म 'निवर्त्तयति' विनाशयति, यदिवा पापकर्मणां–ज्ञानावरणादीनाम् 'अकरणयाइ'त्ति आर्षत्वाद् 'अकरणेन' अपूर्वानुपार्जनेनाभ्युत्तिष्ठते मोक्षायेति शेषः, पूर्ववद्धानां च कर्मणां निर्जरणया, अन्यत्प्राग्वत् ४०। विषयनिवृत्तश्च कश्चित्सम्भोगप्रत्याख्यानवान् संभवत्यतस्तदाह–समिति–संकरेण–स्वपरलाभमीलनात्मकेन भोगः सम्भोगः,एकमण्डलीकभोक्तृत्वमिति योऽर्थः तस्य प्रत्याख्यानं–गीतार्थावस्थायां जिनकल्पाद्यभ्युद्यतविहारप्रतिपत्त्या परिहारः सम्भोगप्रत्याख्यानं तेन 'आलम्बनानि' ग्लानादीनि 'क्षपयति' तिरस्कुरुते, सदोद्यतत्वेन वीर्याचारमेवावलम्बते, निरालम्बनस्य चायतो–मोक्षः संयमो वा स एवार्थः–प्रयोजनं विद्यते येषामित्यायतार्थिकाः 'योगाः' व्यापारा भवन्ति प्रपञ्चतश्च प्रवर्त्तन्ते, तथा 'स्वकीयेन' आत्मीयेन लाभेन 'सन्तुष्यति' निरभिलापो भवति, परस्य लाभं नो तर्कयति नो स्पृहयति नो प्रार्थयति नो अभिलषति, तत्र तर्कणं–मनसा यदि मह्यमसौ ददातीति विकल्पनं, स्पृहणं–तच्छ्रद्धालुतयाऽऽत्मन आविष्करणं, प्रार्थनं–वाचा मह्यं देहीति याचनम्, अभिलषणं–तल्लालसतया वाञ्छनम्, एकार्थिकानि वैतानि नानादेशजविनेयानु-

ग्रहायोपात्तानि, एवंविधश्च य गुणमवाप्नोति तमेवोक्तानुवादेनाह–'परस्स लाभ आणासाएमाणे'त्ति, 'अनाशयमान' आस्वादविषयमकुर्वाणोऽनास्वादयन् वाऽभुञ्जानोऽतर्कयन्नस्पृहयन्नप्रार्थयमानोऽनभिलषन् 'दोच्चं'ति द्वितीया सुखशय्याम् 'उपसपद्य' प्राप्य विहरति, एवंविधरूपत्वात्तस्या , तथा च स्थानाङ्गम्–"अहावरा दोचा सुहसेज्जा–से ण मुंडे भवित्ता अगाराओ अणगारिय पव्वइए समाणे सएण लाभेण सन्तुसति परस्स लाभ नो आसाएति णो तक्केइ णो पीहेइ णो पत्थेइ नो अभिलसेति, से ण परस्स लाभ अणासाएमाणे अतक्केमाणे अपीहेमाणे अपत्थेमाणे अणभिलसमाणे णो मण उच्चावय नियच्छति णो विणिघायमावज्जइ'त्ति इह च 'अणासाएमाणे' इत्युत्तरत्र वचनात् स्थानाङ्गे च दर्शनात्, पूर्वत्रापि 'णो आसाएइ' इति [पद]वचनमनुमीयते, तच्च गम्यतया न निर्दिष्ट लेखकदोषेण वा न दृश्यत इति न विद्म ३३। सम्भोगप्रत्याख्यानवतश्चोपधिप्रत्याख्यानमपि सभवतीति तदाह, तत्रोपधि –उपकरण तस्य रजोहरणमुखवस्त्रिकाव्यतिरिक्तस्य प्रत्याख्यान न मयाऽसौ ग्रहीतव्य इत्येवंरूपा निवृत्तिरुपधिप्रत्याख्यान तेन परिमन्थ –स्वाध्यायादिक्षति-

१ अथापरा द्वितीया सुखशय्या स मुण्डो भूत्वाऽगारादनगारिता प्रव्रजित सन् स्वकेन लाभेन सतुष्यति परस्य लाभ नास्वादयति न तर्कयति न स्पृहयति न प्रार्थयति नाभिलष्यति, स परस्य लाभमनास्वादयन् अतर्कयन् अस्पृहयन् अप्रार्थयमानोऽनभिलष्यन् नो मन उच्चावच नियच्छति नो विनिघातमापद्यते

स्तदभावोऽपरिमन्थस्तं जनयति, तथा निष्क्रान्त उपधेर्निरुपधिको जीवः 'निष्काङ्क्षः' वस्त्राद्यभिलापरहितः सन्, एतच्च पदं क्वचिदेव दृश्यते, उपधिमन्तरेण चस्य भिन्नक्रमत्वान्न संक्लिश्यति—न च मानसं शारीरं वा क्लेशमाप्नोति, उक्तं हि—"तस्स णं भिक्खुस्स णो एवं भवति—परिजुन्ने मे वत्थे सूइं जाइस्सामि संधिस्सामि उक्कसिस्सामि तुणिस्सामि वोक्कसिस्सामि" इत्यादि ३४। उपधिप्रत्याख्याता चाहारमपि प्रत्याचष्टे, यतो जिनकल्पिकादिरेपणीयालाभे वहून्यपि दिनान्युपोषित एवास्तेऽत आहारप्रत्याख्यानमाह—'आहारप्रत्याख्यानेन' अनेपणीयभक्तपाननिराकरणरूपेण जीविते—प्राणधारणरूपे आशंसा—अभिलापो जीविताशंसा तस्याः प्रयोगो—व्यापारणं करणं जीविताशंसाप्रयोगस्तं व्यवच्छिनत्ति, आहाराधीनं हि मनुजानां जीवितमतस्तत्प्रत्याख्याने तदाशंसासु व्यवच्छेदो भवति, पठन्ति च—'जीवियासविप्पओगं वोच्छिंदिय'त्ति, तत्र जीविताशया विप्रयोगो—विविधव्यापारस्तं व्यवच्छिनत्ति, जीविताशया ह्याहार एव मुख्यो व्यापारस्ततस्तत्प्रत्याख्याने शेपव्यापारव्यवच्छेदः सुकर एव भवतीति, ततश्च जीविताशंसाप्रयोगं जीविताशाविप्रयोगं वा विच्छिद्य जीवः 'आहारम्' अशनादिकम् 'अन्तरेण' विना न संक्लिश्यति, कोऽर्थः ?—विकृष्टतपोऽनुष्ठानवानपि न वाधामनुभवति ३५। एतच्च प्रत्याख्यानत्रयमपि कषायाभाव एव फलवदिति तत्प्रत्याख्यानमुच्यते—कषायप्रत्याख्यानेन—क्रोधादिविनिवारणेन वीतो—विगतो रागो द्वेपविगमाविनाभावित्वात्तद्विगमस्य द्वेषश्चास्येति

१ तस्य भिक्षोर्नैवं भवति—परिजीर्णं मे वस्त्रं सूचिं याचयिष्यामि संधास्ये उत्कर्षयिष्यामि तूणयिष्यामि (व्येष्यामि) व्युत्कर्षयिष्यामि

य'ति कौत्कुच-करचरणभ्रूभ्रमणाद्यसचेष्टात्मकमस्येत्यल्पकौत्कुच , अनेनाप्यौपचारिकविनय प्रकारान्तरेणोक्त
इति सूत्रार्थ ॥ ३० ॥ सम्प्रति चरणकरणविनयात्मिकामेषणासमितिमाह—

**कालेण णिक्खमे भिक्खू, कालेण य पडिक्कमे। अकाल च विवज्जित्ता, काले काल समायरे॥३१॥(सूत्रम्)**

व्याख्या—'कालेण' त्ति सप्तम्यर्थे तृतीया, काले प्रस्तावे 'निष्क्रामेत्' गच्छेत् भिक्षु , अकालनिर्गमे आत्मक्लाम-
नादिदोषसम्भवात् , तथा कालेन च 'प्रतिक्रामेत्' प्रतिनिवर्त्तेत, भिक्षाटनादिति शेप , इदमुक्त भवति-अलाभेऽपि
-'अलाभोत्ति न सोइज्जा, तवोत्ति अहियासए' इति समयमनुसरन्, अल्प मया लब्ध न लब्ध वेति लाभार्थी
नाटन्नेव तिष्ठेत्, किमित्येवमत आह-'अकाल' तत्तत्क्रियाया असमय चेति, यस्माद्विपर्ययकाले प्रस्तावे प्रत्युप्रे-
क्षणादिसम्बन्धिनि 'कालमि'ति तत्तत्कालोचित क्रियाकाण्ड 'समाचरेत्' कुर्यात्, अन्यथा कृपीवलकृपीक्रियाया
इवाभिमतफलोपलम्भासम्भव इति गर्भार्थ, अनेन च कालनिष्क्रमणादौ हेतुरुक्त, प्रसङ्गात् शेपक्रियाविपयतया
या नेय, समुच्चयार्थश्च तदा चशब्द इति सूत्रार्थ ॥ ३१ ॥ निर्गतश्च यत्कुर्यात्तदाह-

**परिवाडिए ण चिट्ठिज्जा, भिक्खू दत्तेसण चरे। पडिरूवेण एसित्ता, मिय कालेण भक्खए॥३२॥(सूत्रम्)**

व्याख्या-'परिपाटी' गृहपङ्क्ति , तस्या 'न तिष्ठेत्' न पङ्क्तिस्थगृहभिक्षोपादानायैकत्रावस्थितो भवति, तत्र

१ अलाभ इति न शोचेत् तप इत्यध्यासीत ।

मानक्रोधादिः 'अप्पतुमंतुमि'त्ति अल्पम्-अविद्यमानं त्वं त्वमिति स्वल्पापराधिन्यपि त्वमेवं पुराऽपि कृतवान् त्वमेवं सदा करोपीत्यादि पुनः पुनः प्रलपनं यस्य स तथा,संयमबहुलः संवरबहुल इति प्राग्वद्, अत एव 'समाहीए यावि'त्ति 'समाहितः' ज्ञानादिसमाधिमांश्चापि भवति ३९। एवंविधश्चान्ते भक्तप्रत्याख्याता भवतीति तत्प्रत्याख्यानमाह-'भक्तप्रत्याख्यानेन' आहारपरित्यागरूपेण भक्तपरिज्ञादिना अनेकानि भवशतानि निरुणद्धि, तथाविधदृढाध्यवसायतया संसारालपत्वापादनादिति भावः ४०। साम्प्रतं सकलप्रत्याख्यानप्रधानं सद्भावप्रत्याख्यानमाह-तत्र सद्भावेन-सर्वथा पुनःकरणासंभवात्परमार्थेन प्रत्याख्यानं सद्भावप्रत्याख्यानं सर्वसंवररूपा शैलेशीतियावत् तेन, न विद्यते निवृत्तिः—मुक्तिमप्राप्य निवर्त्तनं यस्मिंस्तद् अनिवृत्ति शुक्लध्यानं चतुर्थभेदरूपं जनयति, पाठान्तरतश्च 'निवृत्तिं' द्विसमयस्थितिकस्यापि वेद्यकर्मणो बन्धव्यावृत्तिं जनयति, 'अणियट्टिं पडिवण्णे य'त्ति प्रतिपन्नानिवृत्तिः पाठान्तरतः प्रतिपन्ननिवृत्तिश्चानगारः 'चत्वारि' चतुःसङ्ख्यानि केवलिनः 'कम्मंस'त्ति कार्मग्रन्थिकपरिभापयाऽंशशब्दस्य सत्पर्यायत्वात् सत्कर्माणि केवलिसत्कर्माणि-भवोपग्राहीणि क्षपयति, शेपं स्पष्टम् ४१। एतच्च प्रत्याख्यानं प्रायः प्रतिरूपतायामेव भवतीति तामाह-'पडिरूवयाए'त्ति, प्रतिः-सादृश्ये, ततः प्रतीति-स्थविरकल्पिकादिसदृशं रूपं-वेपो यस्य स तथा तद्भावस्तत्ता तया—अधिकोपकरणपरिहाररूपया लाघवमस्यास्तीति लाघवी तद्भावो लाघविता तां द्रव्यतः स्वल्पोपकरणत्वेन भावतस्त्वप्रतिबद्धतया जनयति,लघुभूतश्च जीवः 'अप्रमत्तः' प्रमादहेतूनां परिहारत इतरेपां चाङ्गी-

वीतरागस्तद्भाव जनयति, 'वीतरागभावपडिवन्ने य' त्ति, अपिचेत्यस्य पुनरर्थत्वात्प्रतिपन्नवीतरागभाव पुनर्जीव समे—रागद्वेषाभावतस्तुल्ये सुखदु खे यस्य स तथाविधो भवति, रागद्वेषाभ्या हि तत्र वैषम्यसम्भव , तदभावे तु समतैवावशिष्यते ३६ । निष्कषायोऽपि योगप्रत्याख्यानादेव मुक्तिसाधक इति तदुच्यते, तत्र योगा—मनोवाक्काय-व्यापारास्तत्प्रत्याख्यानेन—तन्निरोधलक्षणेन 'अयोगत्व' वक्ष्यमाणन्यायेनायोगिभाव जनयति, अयोगी जीव ( 'नव' प्रत्यग्र 'कर्म' सातवेदनीयाद्यपि न बध्नाति तत्कारणयोगाभावात् , ) 'पूर्वबद्धम्' इति भवोपग्राहिकर्मचतुष्टयमन्यस्य तदाऽसभवात् 'निर्जरयति' क्षपयति ३७ । योगप्रत्याख्यानत शरीरमपि प्रत्याख्यातमेव भवति, तथाऽपि तदाधा-रत्वा मनोवाग्योगयोस्तत्प्राधान्यख्यापनार्थं तत्प्रत्याख्यानमेवाह, तत्र शरीरम्—औदारिकादि तत्प्रत्याख्यानेन सिद्धानामतिशयगुणा न कृष्णा न नीला इत्यादयो यस्य स सिद्धातिशयगुणो गमकत्वाद्बहुव्रीहिस्तद्भावस्तत्त्वम् ,उक्त हि—"से ण किण्हे ण नीले ण हालिद्दे" इत्यादि 'निर्वर्त्तयति' जनयति, सिद्धातिशयगुणसपन्नश्च जीवो लोकाग्रभवत्वात् लोकाग्र—मुक्तिपदम् 'उपगत 'प्राप्त 'परमसुखी' अतिशयसुखवान् भवति ३८। सम्भोगादिप्रत्याख्यानानि च प्राय सहायप्रत्याख्यान एव सुकराणि भव तीति तदुच्यते—सहाया —साहाय्यकारिणो यतयस्तत्प्रत्याख्यानेन—तथाविधयोग्य-ताभाविनाऽभिग्रहविशेषरूपेण 'एकभावम्' एकत्व जनयति 'एकीभावभूतश्च' एकत्वप्राप्तश्च जीव' एकालम्बनत्व 'भाव-यन्' अभ्यस्यन् 'अप्पसद्दे' त्ति अल्पशब्दोऽभाववचन , ततश्चाल्पशब्द —अविद्यमानवाक्कलहस्तथाऽल्पकषाय —अविद्य-

भावः ४४। सर्वगुणसंपन्नता च रागद्वेषपरित्यागतो जायत इति वीतरागतामाह—'वीतरागतया' रागद्वेषापगमरूपया बन्धनानि—रागद्वेषपरिणामात्मकानि, तृष्णा—लोभस्तद्रूपाणि बन्धनानि तानि च व्यवच्छिनत्ति, पाठान्तरतश्च 'नेहानुबन्धानि तृष्णानुबन्धानि च' तत्र स्नेहः—पुत्रादिविषयः तृष्णा—द्रव्यादिविषया तद्रूपाण्यनुबन्धनानि तु—अनुगतान्यनुकूलानि वा बन्धनानि, अतिदुरन्तत्वख्यापनार्थं च रागान्तर्गतत्वेऽपि पृथक् तृष्णास्नेहयोरुपादानं, ततश्च मनोज्ञेषु शब्दरसरूपगन्धेषु (सचित्ताचित्तमिश्रेषु—स्त्र्यादिद्रव्येषु) चैव विरज्यते, तृष्णास्नेहयोरेव रागहेतुत्वात्, आह—कषायप्रत्याख्यानफलेन वीतरागतोक्तेव तत्किमर्थमस्याः पृथगुपादानम्?, उच्यते, रागस्यैव सकलानर्थमूलत्वख्यापनार्थं ४५। रागद्वेषाभावे च तात्त्विकाः श्रमणगुणाः, तेषु च प्रथमव्रतपरिपालनोपायत्वात्क्षान्तिरेव प्रथमेति तामाह, तत्र क्षान्तिः—क्रोधजयस्तया 'परीषहान्' वधादीन् 'जयति' परीषहाध्ययनोक्तन्यायतोऽभिभवति ४६। क्षान्तिस्थितेनापि न मुक्तिं विनाऽशेषव्रतपरिपालनं कर्तुं शक्यमिति तामाह—मुक्तिः—निर्लोभता तया किञ्चनाभावोऽकिञ्चनं, कोऽर्थः?—निष्परिग्रहत्वं जनयति, अकिञ्चनश्च जीवोऽर्थे लोला—लम्पटा अर्थलोलाश्चौरादयस्तेषां न प्रार्थनीयः—प्रस्ताव्य बाधितुमनभिलषणीयो भवति ४७। लोभाविनाभाविनी च मायेति तदभावेऽवश्यंभाव्यार्जवमतस्तदाह—'अज्जवयाए'त्ति सूत्रत्वाद् ऋजुः—अवक्रस्तद्भाव आर्जवं तेन—मायापरिहाररूपेण कायेन ऋजुरेव ऋजुकः कायर्जुकस्तद्भावस्तत्ता—कुब्जादिवेषभ्रूविकाराद्यकरणतः प्राञ्जलता तां तथा भावः—अभिप्रायस्तस्मिंस्तेन वा ऋजुकता भावर्जुकता—यदन्य-

करणत , तथा 'प्रकटलिङ्ग' स्थविरादिकल्परूपेण प्रतीति विज्ञायमानत्वात् 'प्रशस्तलिङ्ग' जीवरक्षणहेतुरजोहरणादिधारकत्वाद् 'विशुद्धसम्यक्त्व' तथाप्रतिपत्त्या सम्यक्त्वविशोधनात्, तथा सत्त्व च–आपत्स्ववैकल्यकरमध्यवसानकर च समितयश्च—उक्तरूपा समाप्ता —परिपूर्णा यस्य स समाप्तसत्त्वसमिति , सूत्रे निष्ठान्तस्य प्राकृतत्वात्परनिपात , तत एव सर्वप्राणभूतजीवसत्त्वेषु विश्वसनीयरूप , तत्पीडापरिहारित्वात्, 'अपडिलेह'त्ति अल्पार्थे नञ्, ततोऽप्रत्युपेक्षित इत्यल्पोपकरणत्वादल्पप्रत्युपेक्ष , पठ्यते च–'अप्पपडिलेहि'त्ति, जितानि—वशीकृतानि यतिरहमितिप्रत्ययात्कथञ्चित्परिणामान्यथात्वेऽपीन्द्रियाणि येन स तथा, विपुलेन—अनेकभेदतया विस्तीर्णेन तपसा समितिभिश्च सर्वविषयानुगतत्वेन विपुलाभिरेव समन्वागतो–युक्तो विपुलतप समितिसमन्वागतश्चापि भवति, पूर्वत्र समितीना परिपूर्णत्वाभिधानेन सामस्त्यमुक्तम्, इह तु तासा सार्वत्रिकत्वमिति न पौनरुक्त्यम् ४२ । प्रतिरूपतायामपि वैयावृत्त्यादेव विशिष्टफलावाप्तिरित्येतदनन्तरं वैयावृत्त्य, तत्र व्यावृत —कुलादिकार्येषु व्यापारवास्तद्भावो वैयावृत्त्य तेन तीर्थकरनामगोत्र कर्म निबध्नाति, उक्त हि तद्धेतुकीर्त्तनावसरे–"वेयावच्चे समाही य"त्ति ४३ । वैयावृत्त्यवांश्च सर्वगुणभाजन भवतीति सर्वगुणसपन्नतामाह–सर्वगुणा–ज्ञानादयस्तै सपन्नो–युक्तस्तद्भाव सर्वगुणसपन्नता तया 'अपुनरावृत्ति' पुनरिहागमनाभावो मुक्तिरितियावत्ता जनयति, अपुनरावृत्ति प्राप्त एव प्राप्तको जीव शारीरमानसाना दु खाना 'नो' नैव 'भागी' भाजन भवति, तन्निबन्धनयोर्देहमनसोरभावात्, सिद्धिसुखभाजनमेव भवतीति

प्रेत्य जिनधर्मावाप्त्या विशिष्टभवान्तरप्राप्त्या वेति भावः ५० । भावसत्येन करणसत्यं संभवतीति तदाह—करणे सत्यं करणसत्यं—यत्प्रतिलेखनादिक्रियां यथोक्तां सम्यगुपयुक्तः कुरुते तेन करणशक्तिं तन्माहात्म्यात् पुराऽनध्यवसितक्रियासामर्थ्यरूपां जनयति, तथा करणसत्ये वर्त्तमानो जीवो यथावादी तथाकारी चापि भवति, स हि सूत्रमधीयानो यथैव क्रियाकलापवदनशीलः करणशीलोऽपि तथैवेति ५१ । एवंविधस्यैव योगसत्यमपि भवतीति तदाह—योगा—मनोवाक्कायास्तेषां सत्यम्—अवितथत्वं योगसत्यं तेन योगान् 'विशोधयति' क्लिष्टकर्मबन्धकत्वाभावतो निर्दोषान् करोति ५२ । एतच्च सत्यं गुप्त्यन्वितस्यैव भवत्यतो यथाक्रमं तदभिधानं, तत्र च 'मनोगुप्ततया' मनोगुप्तिरूपया जीवः 'ऐकाग्र्यं' प्रस्तावाद्धर्मैकतानचित्तत्वं जनयति, तथा चैकाग्रचित्तो जीवो गुप्तम्—अशुभाध्यवसायेषु गच्छद्रक्षितुं मनो येनासौ गुप्तमनाः सन्, निष्ठान्तस्य परनिपातः प्राग्वत्, संयमाराधको भवति, तत्र मनोनिरोधस्य प्रधानत्वादिति भावः ५३ । 'वाग्गुप्ततया' कुशलवागुदीरणरूपया 'निर्विकारं' विकथाद्यात्मकवाग्विकाराभावं जनयति, ततश्च निर्विकारो जीवो वाग्गुप्त इति, प्रवीचाराप्रवीचाररूपत्वेन द्विविधत्वात्तद्गुप्तेः सर्वथा वाग्निरोधलक्षणवाग्गुप्तिसमन्वितः सन्नध्यात्मं—मनस्तस्य योगा—व्यापारा धर्मध्यानादयस्तेषां साधनानि—एकाग्रतादीनि तैर्युक्तोऽध्यात्मयोगसाधनयुक्तो भवति, विशिष्टवाग्गुप्तिरहितो हि न चित्तैकाग्रतादिभाग् भवेदिति भावः, अन्ये तु 'निव्वियारे णं जीवे वयगुत्तयं जणयति' इत्येतावदेव पठन्ति, तच्च स्पष्टमेव ५४ । 'कायगुप्तः' शुभयोगप्रवृत्त्यात्मकका-

द्विचिन्तयन् लोकपङ्क्त्यादिनिमित्तम् अन्यद्वाचा कायेन वा समाचरति तत्परिहाररूपा, एवं भाषायामृजुकता भाषर्जुकता—यदुपहासादिहेतोरन्यदेशभाषया भाषणं तत्परित्यागात्मिका, तथा—'अविसंवादनं' पराविप्रतारणं जनयति, तथाविधश्चाविसंवादनसंपन्नतयोपलक्षणत्वात्कायर्जुकतादिसंपन्नतया च जीवो धर्मस्याराधको भवति, विशुद्धाध्यवसायत्वेनान्यजन्मन्यपि तदवाप्तेः ४८। एवंगुणस्यापि न विनयं विना समग्रफलावाप्तिः, स च मार्दवादेवेति तदाह—'मद्दवयाए'त्ति मार्दवेन गम्यमानत्वादभ्यस्यमानेन 'मिउमद्दवसंपन्ने'त्ति मृदुः—द्रव्यतो भावतश्चावनमनशीलस्तस्य (भावः कर्म वा) मार्दवं यत्सदा मार्दवोपेतस्यैव भवति तेन संपन्नः—तदभ्यासात्सदा मृदुस्वभावो मृदुमार्दवसंपन्नः सन् 'अष्टौ मदस्थानानि' जातिकुलबलरूपतपऐश्वर्यश्रुतलाभावलेपरूपाणि, उक्तं हि—"जातीकुलबलरूवे तवईसरिएसुयलाभे"त्ति, 'निष्ठापयति' विनाशयति, पठन्ति च—'मद्दवयाए णं जीवे अणुस्सियत्तं जणेति, अणुस्सिए णं जीवे मिउमद्दवसंपन्ने अट्ठ मयट्ठाणाणि णिट्ठवेति' अत्र चानुत्सिक्तत्वम्—अनुद्धतत्वमन्यत्प्राग्वत् ४९। एतदपि तत्त्वतः सत्यव्यवस्थितस्यैव भवति, तत्रापि च भावसत्यं प्रधानमिति तदाह—'भावसच्चेणं' शुद्धान्तरात्मतारूपेण पारमार्थिकावितथत्वेन 'भावविशुद्धिं' विशुद्धाध्यवसायात्मिकां जनयति, भावविशुद्धौ वर्त्तमानो जीवोऽर्हत्प्रज्ञप्तस्य धर्मस्य 'आराहणयाए'त्ति 'आराधनया' अनुष्ठानेन 'अभ्युत्तिष्ठते' मुक्त्यर्थमुत्सहते, यदिवाऽऽराधनायै—आवर्जनार्थमभ्युत्तिष्ठति, अर्हत्प्रज्ञप्तस्य धर्मस्याराधनयाऽऽराधनायै वाऽभ्युत्थाय परलोके—भवान्तररूपे धर्मः परलोकधर्मस्तस्य, पाठान्तरतः परलोके वाऽऽराधको भवति,

कत्वं निर्जरयति ५७। 'कायसमाहारणयाए'त्ति 'कायसमाधारणया' संयमयोगेषु शरीरस्य सम्यग्व्यवस्थापनरूपया 'चरित्रपर्यवान्' चारित्रभेदान् क्षायोपशमिकानिति गम्यते विशोधयति, तदुन्मार्गप्रवृत्तित एव प्रायस्तेषामतीचारकालुष्यसम्भवात्, चरित्रपर्यवान् विशोध्य यथाख्यातचारित्रं विशोधयति, सर्वथा ह्यसत उत्पत्त्यसम्भव इति पूर्वमपि कथञ्चित्सदेव यथाख्यातचारित्रं चारित्रमोहोदयमलिनितं तन्निर्जरणेन निर्मलीकुरुते, यथाख्यातचारित्रं विशोध्य चत्वारीत्यादि सर्वं प्राग्वत् ५८। एवं समाधारणात्रयाद्यथाक्रमं ज्ञानादित्रयस्य शुद्धिरुक्ता, फलं पुनरस्य किमित्याशङ्कायां यथाक्रममेतत्फलमाह-ज्ञानमिह प्रस्तावात् श्रुतज्ञानं तत्संपन्नतया जीवः सर्वभावानाम्-अशेषजीवादिपदार्थानामभिगमो-ज्ञानं सर्वभावाभिगमस्तं जनयति, तथा सं(तत्सं)पन्नो जीवः 'चाउरंते'त्ति उक्तनीतितश्चतुरन्तसंसारकान्तारे नैव 'विनश्यति' इतस्ततः पर्यटनेन मुक्तिमार्गाद्विशेषेण दूरीभवति, अमुमेवार्थं दृष्टान्तद्वारेण स्पष्टतरमाह-यथा 'सूची' प्रतीता ससूत्रा सुप्रापतया 'न विनश्यति' कचवरादिपतिताऽपि न विशेषेण दूरीभवति तथा जीवः सह सूत्रेण-श्रुतेन वर्त्तत इति ससूत्रः संसारे न विनश्यति, उक्तं च-"सूई जहा ससुत्ता ण णस्सई कयवरंमि पडियावि। जीवो तहा ससुत्तो ण णस्सइ गओवि संसारे ॥ १ ॥" तत एव ज्ञानं च-अवध्यादि विनयश्च-ज्ञानविनयादिः तपश्च-वक्ष्यमाणं चारित्रयोगाः-चारित्रप्रधाना व्यापारा ज्ञानविनयतपश्चारित्रयोगास्तान् प्राप्नोति,

१ सूचिर्यथा ससूत्रा न नश्यति कचवरे पतिताऽपि। जीवस्तथा सश्रुतो न नश्यति गतोऽपि संसारे ॥ १ ॥

यगुप्तिमान् 'सवरम्' अशुभयोगनिरोधरूप जनयति, सवरेण गम्यमानत्वादभ्यस्यमानेन कायगुप्त पुन सर्वथा निरुद्धकायिकव्यापार पापस्य–'पावे कम्मे वेरे' इत्यादिवचनात्कर्मण आश्रवा–उपादानहेतवो हिंसादय: पापाश्रवास्तन्निरोध करोति, तात्त्विक्या अस्या एतत्फलत्वेन सुप्रतीतत्वात् ५५ । इतश्च गुप्तित्रयाद्यथाक्रम मन समाधारणादिसम्भव इति तदाह–तत्र 'मणसमाहारणयाए'त्ति मनस समिति–सम्यग् आङिति–मर्यादयाऽऽगमाभिहितभावाभिव्याप्त्याऽवधारणा–व्यवस्थापन मन समाधारणा तया 'एकाग्र्यम्' उक्तरूप जनयति, एकाग्र्य जनयित्वा 'ज्ञानपर्यवान्' विशिष्टतरवस्तुतत्त्वावबोधरूपान् जनयति, ज्ञानपर्यवान् जनयित्वा सम्यक्त्व विशोधयति, विशुद्धत्व चास्य वस्तुतत्त्वावगमे तद्विषया रुचिरपि शुद्धतरैव सभवतीतिकृत्वा, अत एव च मिथ्यात्वं च निर्जरयति ५६ । 'वइसमाहारणयाए'त्ति 'वाक्समाधारणया' स्वाध्याय एव वाग्निवेशनात्मिकया, वाचा सधारणा वाक्समाधारणा, येन ते वचसोऽपि विषया, प्रज्ञापनीया इत्यर्थ, तेषामेवान्यथात्वसम्भवेन विशेषणसाफल्यात्, इह च तद्विषया दर्शनपर्यवा अप्युपचारतस्तथोक्तास्ततश्च वाक्साधारणाश्च ते दर्शनपर्यवाश्च–सम्यक्त्वभेदरूपा वाक्साधारणदर्शनपर्यवास्तान् विशोधयति, 'दविए दसणसोधी' इति वचनाद्द्रव्यानुयोगाभ्यासतस्तद्विषयाशङ्कादिमालिन्यापनयनेन विशुद्धान् करोति, वाक्साधारणदर्शनपर्यवान् विशोध्य सुलभबोधिकत्व निर्वर्त्तयति, तत एव दुर्लभबोधि-

१ द्रव्यानुयोगाद्दर्शनशुद्धि

होअलोवाओ ॥ २ ॥ सीलं व समाहाणं णिच्छयतो सवसंवरो सो य। तस्सेसो सीलेसो सेलेसी होइ तयवत्था ॥३॥" तमेवंविधं शैलेशीभावं जनयति, तज्जननाच शैलेशीप्रतिपन्नो 'विहरति' आस्तेऽन्तर्मुहूर्त्तमिति शेषः, पठन्ति च— 'सेलेसी पडिवन्ने अणगारे चत्तारि केवलिकम्मंसे खवेति, ततो पच्छा सिज्झति बुज्झइ' इत्यादि प्राग्वत् ६१ । चरित्रं चेन्द्रियनिग्रहादेव जायत इति प्रत्येकं तन्निग्रहमाह—श्रोत्रेन्द्रियस्य निग्रहः—स्वविषयाभिमुखमनुधावतो नियमनं श्रोत्रेन्द्रियनिग्रहस्तेन 'मनोज्ञामनोज्ञेषु' अभिमतेतरेषु शब्देषु यथाक्रमं रागद्वेषयोर्निग्रहो रागद्वेषनिग्रहस्तं जनयति, तथा च तत्प्रत्ययिकं—रागद्वेषनिमित्तं कर्म न बध्नाति पूर्वबद्धं च निर्जरयति, तन्निग्रहे शुभाध्यवसायप्रवृत्तेरिति भावः। एवं चक्षुरिन्द्रियनिग्रहेण ६३ घ्राणेन्द्रियनिग्रहेण ६४ जिह्वेन्द्रियनिग्रहेण ६५ स्पर्शनेन्द्रियनिग्रहेण च इदमेव वाच्यं, नवरं चक्षुरिन्द्रियेष्वित्युपचाराच्चक्षुरिन्द्रियग्राह्येषु रूपेष्विति योऽर्थः, यथाप्रधानं चात्रेन्द्रियनिर्देशः, प्राधान्यं च पाटवाद्यपेक्षमिति भावनीयम् ६६ । एतन्निग्रहोऽपि कषायविजयाद्भवत्यतः क्रमेण तद्विजयमाह—तत्र क्रोधस्य विजयो— दुरन्तादिपरिभावनेनोदयनिरोधः क्रोधविजयस्तेन क्रोधेन—कोपाध्यवसायेन वेद्यत इति क्रोधवेदनीयं—तद्धेतुभूतपुद्गलरूपं कर्म न बध्नाति "जं वेएइ तं बंधइ"त्ति वचनात्, तथा पूर्वबद्धं प्रक्रमात्तदेव निर्जरयति, तत एव विशिष्टजीववीर्योल्लासात् ६७ । एवं मानविजयेन ६८ मायाविजयेन ६९ लोभविजयेन ७० चाभिधेयम् । एतज्जयश्च न प्रेमद्वेषमि-

१ भवत्यलोपात् ॥ २ ॥ शीलं वा समाधानं निश्चयतः सर्वसंवरः स च । तस्येशः शैलेशः शैलेशी भवति तदवस्था ॥ ३ ॥

तथा स्वसमयपरसमययो सघातनीय —प्रमाणपुरूपतया मील्नीय स्वसमयपरसमयसघातनीयो भवति, इह च स्वसमयपरसमयशब्दाभ्या तद्वेदिन पुरुषा उच्यन्ते, तेष्वेव सशयादिव्यवच्छेदाय मीलनसम्भवात् ५९ । 'दर्शनसपन्नतया' क्षायोपशमिकसम्यक्त्वसमन्वितया भवहेतुभूत मिथ्यात्व भवमिथ्यात्व तस्य छेदन–क्षपण भवमिथ्यात्वच्छेदन करोति, कोऽर्थ ?–क्षायिकसम्यक्त्वमवाप्नोति, ततश्च परमिति–उत्तरकालमुत्कृष्टतस्तस्मिन्नेव भवे मध्यमजघन्यापेक्षया तृतीये तुर्ये वा जन्मन्युत्तरश्रेण्यारोहणेन केवलज्ञानावाप्तौ 'न विध्यायति' न ज्ञानदर्शनप्रकाशाभावरूप विध्यानमवाप्नोति, किन्तु 'अनुत्तरेण' क्षायिकत्वात्प्रधानेन ज्ञान च दर्शन च ज्ञानदर्शन तेन 'आत्मान' स 'सयोजयन्' प्रतिसमयमपरापरेणोपयोगरूपतयोत्पद्यमानेन घटयन्, सयोजन च भेदेऽपि स्यादत आह–(सम्म–सम्यक्) 'भावयन्' तेनात्मानमात्मसात्कुर्वन् 'विहरति' भवस्थकेवलितया मुक्ततया वाऽऽस्ते, पठन्ति च–'अणुत्तरेण णाणदसणेण विहरइ'त्ति' अत्र च लक्षणे तृतीया ६० । चरित्रसपन्नतया 'शैलेशीभाव'ति शिलानामिमे शैला –पर्वतास्तेषामीश शैलेशो—मेरु इव शैलेशो–मुनिर्निरुद्धयोगतयाऽत्यन्तस्थैर्येण तस्येयमवस्था—शैलेशी तस्या भाव अशैलेशस्य वा शैलेशीभवन शैलेशीभाव, इत्यादिरनेकधा व्युत्पत्ति, उक्त हि—"सेलेसो किर मेरू सेलेसी होइ तहाऽचलया । होउ च असेलेसो सेलेसी होइ थिरयाए ॥ १ ॥ अहवा सेलोव्व इसी सेलेसी होइ सो उ थिरयाते । सेव असेली होई सेलीसी

[१] शैलेश किल मेरुः शैलेशी भवति या तथाऽचलता । भूत्वा वाऽशैलेश शैलेशीभवति स्थिरतया ॥ १ ॥ अथवा शैल इव ऋषिः शैलर्षिः (सेलेसी) भवति स तु स्थिरतया । स एव अशैलीभवति शैलेशी

दायकदोषाऽनवगमप्रसङ्गात्, यद्वा—पङ्क्त्यां—भोक्तुमुपविष्टपुरुषादिसम्बन्धिन्यां न तिष्ठेत्, अप्रीत्यदृष्टकल्याणतादिदोषसम्भवात्, किञ्च ? 'भिक्षुः' यतिः, दत्तं—दानं तस्मिन् गृहिणा दीयमाने 'एषणां' तद्गतदोषान्वेषणात्मिकां 'चरेत्' आसेवेत, 'चरतिः आसेवायामपि वर्त्तते' इति वचनात्, अनेन ग्रहणैषणोक्ता, किं विधाय दत्तैषणां चरेत् ?—'प्रतिरूपेण' प्रधानेन रूपेणेति गम्यते, यद्वा—प्रतिप्रतिबिम्बं चिरन्तनमुनीनां यद्रूपं तेन, उभयत्र पतद्ग्रहादिधारणात्मकेन सकलान्यधार्मिकविलक्षणेन, न तु 'वस्त्रं छत्रं छात्रं पात्रं यष्टिं च वर्जयेद् भिक्षुः। वेषेण परिकरेण च कियताऽपि विना न भिक्षाऽपि ॥ १ ॥' इत्यादिवचनाकर्णनाद् विभूषणात्मकेनैषयित्वा, अनेन च गवेषणाविधिरुक्तः, ग्रासैषणाविधिमाह—'मितं' परिमितमतिभोजनात् स्वाध्यायविघातादिबहुदोषसंभवात्, 'कालेन' इति—'णमोक्कारेण पारित्ता, करित्ता जिणसंथवं। सज्झायं पट्ठवित्ता णं, वीसमेज्ज खणं मुणी ॥१॥' इत्याद्यागमोक्तप्रस्तावेनाद्रुताविलम्बितरूपेण वा 'भक्षयेत्' भुञ्जीतेति सूत्रार्थः ॥ ३२ ॥ यत्रान्यभिक्षुकासंभवस्तत्र विधिरुक्तः, यत्र तु पुराऽऽयातान्यभिक्षुकसम्भवस्तत्र विधिमाह—

नाइदूरे अणासण्णे, नन्नेसिं चक्खुफासओ। एगो चिट्ठेज्ज भत्तट्ठं, लंघित्ता तं नइक्कमे॥३३॥(सूत्रम्) ॥ ५९ ॥

व्याख्या—'नातिदूरं' सुव्यत्ययात् नातिदूरे—अतिविप्रकर्षवति देशे, तिष्ठेदिति सम्बन्धः, तत्र च तन्निर्गमावस्था-

१ नमस्कारेण पारयित्वा कृत्वा (च) जिनसंस्तवम्। स्वाध्याय प्रस्थाप्य विश्राम्येत् क्षणं मुनिः ॥ १ ॥

थ्यादर्शनविजय विनाऽत स उच्यते–'पिज्ज'त्ति प्रेम राग इत्यर्थ स च द्वेषश्च–अप्रीतिरूपो मिथ्यादर्शनं च–सांशयिकादि प्रेमद्वेषमिथ्यादर्शनानि तद्विजयेन 'णाणदंसणचरित्ताराहणयाए'त्ति ज्ञानदर्शनचारित्राराधनायाम् 'अब्भुट्ठेइ' उद्यच्छति प्रेमादिनिमित्तत्वात्तद्विराधनाया, ततश्चाष्टविधस्य कर्मणो मध्य इति गम्यते, 'कम्मगंठिविमोयणयाए'त्ति कर्मग्रन्थि –अतिदुर्भेदघातिकर्मरूपस्तस्य विमोचना–क्षपणा कर्मग्रन्थिविमोचना तस्यै च, चस्य गम्यमानत्वात्तदर्थं चाभ्युत्तिष्ठते इत्यनुवर्त्य योज्यते, पठन्ति च–'अट्ठविहकम्मविमोयणाए'त्ति स्पष्टम्, अभ्युत्थाय च किं करोतीत्याह–'तप्पढमयाए' तत्पूर्वतया, न हि तेन तत्पुरा क्षपितमासीदिति, आनुपूर्व्या अनतिक्रमेण यथानुपूर्वीम(विंअ)ष्टाविंशतिविध मोहनीय कर्म 'उग्घाएइ' क्षपयति, अत्र चेय क्षपणानुपूर्वी–प्रथममनन्तानुबन्धिन क्रोधादीन् युगपदन्तर्मुहूर्त्तेन क्षपयति, तदनन्तभाग च मिथ्यात्वे प्रक्षिपति, ततस्तेन सहैव मिथ्यात्व क्षपयति, प्रवर्द्धमानातितीव्रशुभपरिणामत्वात्, अतिसम्भृतदवानल इवार्द्धदग्धेन्धन इन्धनान्तर, ततो मिथ्यात्वांश सम्यग्मिथ्यात्वे प्रक्षिप्य तत्क्षपयति, ततोऽपि तदंशसहित सम्यक्त्व, तदनु सम्यक्त्वावशिष्टदलिकसहितमप्रत्याख्यानप्रत्याख्यानावरणकषायाष्टक युगपदेव क्षपितुमारभते, तत्क्षपण च कुर्वन्नेता प्रकृती क्षपयति, तद्यथा–"गइआणुपुव्वि दो दो जाईणाम च जाव चउरिंदी । आयाव उज्जोव थावरनाम च सुहुम च ॥ १ ॥ साहारमपज्जत्त णिद्दाणिद्द च

---

१ गत्यानुपूर्व्यौ द्वे द्वे जातिनाम च यावच्चतुरिन्द्रियम् । आतपमुद्योत स्थावरनाम च सूक्ष्म च ॥ १ ॥ साधारणमपर्याप्त निद्रानिद्रा च

पयलपयलं च। थीणं खवेइ ताहे अवसेसं जं च अट्ठण्हं ॥ २ ॥" ततोऽपि किञ्चित्सावशेषं नपुंसकवेदमध्ये प्रक्षिप्य तत्समन्वितं क्षपयति, एवं तदुद्धरितसहितं स्त्रीवेदं, तदवशिष्टान्वितं च हास्यादिषट्कं, तदंशसहितं च पुरुषवेदखण्डद्वयं यदि पुरुषः प्रतिपत्ता, अथ स्त्री नपुंसकं वा ततः स्वस्ववेदखण्डद्वयं, ततः क्षिप्यमाणवेदतृतीयखण्डसहितं संज्वलनकोपं क्षपयति, एवं पूर्वपूर्वांशसहितमुत्तरोत्तरं क्षपयति यावत् संज्वलनलोभः, तत्तृतीयखण्डं तु सङ्ख्येयानि खण्डानि कृत्वा पृथक्कालभेदेन क्षपयति, तत्र च तत्क्षपणाकालः प्रत्येकं सर्वत्र चान्तर्मुहूर्त्तमेव, इत्थं चैतदन्तर्मुहूर्त्तस्यासङ्ख्यभेदत्वात्, ततस्तच्चरमखण्डमपि पुनरसङ्ख्येयसूक्ष्मखण्डानि करोति, तानि च प्रतिसमयमेकैकतया क्षपयति, तच्चरमखण्डमपि पुनरसङ्ख्येयसूक्ष्मखण्डानि कृत्वा तथैव क्षपयति, एवं च मोहनीयं क्षपयित्वाऽन्तर्मुहूर्त्तं यथाख्यातचारित्रमनुभवंश्छद्मस्थवीतरागताद्विचरमसमययोः प्रथमसमये निद्राप्रचले नाम प्रकृतीश्च देवगत्याद्याः क्षपयति, यत उक्तम्—"वीसमिऊण नियंठो दोहि उ समएहिं केवले सेसे। पढमे णिद्दं पयलं णामस्स इमाओ पयडीओ ॥ १ ॥ देवगति आणुपुवी विउवि संघयण पढमवज्जाइं। अन्नयरं संठाणं तित्थयराहारणामं च ॥२॥" चरमसमये तु यत्क्ष-

१ प्रचलाप्रचलां च। स्त्यानर्द्धिं क्षपयति तदा अवशेषं यदष्टानाम् ॥ २ ॥ २ विश्रम्य निर्ग्रन्थो द्वाभ्यां तु समयाभ्यां केवले शेषे। प्रथमे निद्रां प्रचलां नाम्न इमाः प्रकृतीः ॥ १ ॥ देवगत्यानुपूर्व्यौ वैक्रियं संहननानि प्रथमवर्जानि। अन्यतरत् संस्थानं तीर्थकरमाहारकनाम च ॥ २ ॥

पयति तत्सूत्रकृदाह–पञ्चविध ज्ञानावरणीय नवविध दर्शनावरणीय पञ्चविधमन्तरायम्, 'एए'त्ति लिङ्गव्यत्ययादेतानि 'त्रीण्यपि' वक्ष्यमाणरूपाणि 'कम्मसे'त्ति सत्कर्माणि 'युगपत्' एककाल क्षपयति, स्थापना चेयम् ॥ 'तत' इति क्षपणात 'पश्चाद्' अनन्तर नास्योत्तर प्रधानमन्यत् ज्ञानमस्तीत्यनुत्तरम्, 'अनन्तम्' अविनाशितया विषयानन्ततया च 'कृत्स्न' कृत्स्नवस्तुविषयत्वात् 'परिपूर्ण' सकलस्वपरपर्यायपरिपूर्णवस्तुप्रकाशकत्वात् 'निरावरणम्' अशेषावरणविगमात् 'वितिमिर' तत्र सति क्वचिदप्यज्ञानतिमिराभावात् 'विशुद्ध' सकलदोषविगमात् 'लोकालोकप्रभावक तत्स्वरूपप्रकाशकत्वात्, पाठान्तरतश्च–'लोकालोकस्वभाव' सक्रान्तलोकालोकसकलस्वरूपत्वात् केवलम्–असहाय वरं शेषज्ञानापेक्षया ज्ञान च दर्शन च ज्ञानदर्शन तत केवलवरशब्दाभ्या विशेषणसमासे केवलवरज्ञानदर्शन 'समुत्पादयति' जनयत्यात्मन इति गम्यते, स च यावत् 'सयोगी' मनोवाक्कायव्यापारवान् भवति तावच्च किमित्याह–ईरणमीर्या–गतिस्तस्या पन्था यदाश्रिता सा भवति तस्मिन् भवमध्यात्मादित्वाट्ठकि ऐर्यापथिकम्, उपलक्षण च पथिग्रहण, तिष्ठतोऽपि सयोगस्येर्यासम्भवात्, सभवन्ति हि सयोगिताया केवलिनोऽपि सूक्ष्मा गात्रसञ्चारा, यत आह–"केवली ण भते ! अस्सि समयसि जेसु आगासपएसेसु हत्थ वा पाय वा ओगाहित्ताण साहरिज्जा पभू ण भते ! केवली

१ केवली भदन्त ! अस्मिन् समये येष्वाकाशप्रदेशेषु हस्त वा पाद वाऽवगाह्य सहरेत् प्रभुर्भदन्त ! केवल्ये—

तेसुं चेवागासपएसेसु पडिसाहरित्तए ? णो इणमट्ठे समट्ठे, केवलिस्स णं चलाइं सरीरोवगरणाइं हवंति, चलोवगरणत्ताए केवली णो संचाएति तेसु चेवागासपएसेसु हत्थं वा पायं वा पडिसाहरित्तए" तदेवं पथिस्थस्तिष्ठंश्चैर्यापथिकं कर्म बध्नाति, तच्च कीदृगित्याह–सुखयतीति सुखः स्पर्शः–आत्मप्रदेशैः सह संश्लेषो यस्य तत्सुखस्पर्शं द्वौ समयौ यस्याः सा द्विसमया तथाविधा स्थितिरस्येति द्विसमयस्थितिकं, द्विसमयस्थितिकत्वमेव भावयितुमाह–तत् प्रथमसमये बद्धम्–आत्मसात्कृतं स्पर्शाविनाभावित्वाच्चास्य स्पृष्टं च, द्वितीयसमये वेदितम्–अनुभूतमुदयान्यथानुपपत्त्या चास्योदितं च, तृतीयसमये निर्जीर्णं–परिशटितं, तदुत्तरकालस्थितेः कषायहेतुत्वात्, उक्तं हि—"जोगा पयडिपएसं ठितिअणुभागं कसायओ कुणति"त्ति, द्विसमयस्थितिकबन्धस्य तु योगसम्भवेऽवश्यम्भावित्वादिहाभिधानं, तदवश्यम्भाविता तु 'णो कम्मेहिँ विवरीयं जोगदवेहिँ भवति जीवस्स । तस्सावत्थाणे णणु सिद्धो दुसमयठितिबंधो ॥ १ ॥' इति युक्तितोऽवसेया, अतश्च तद्बद्धं–जीवप्रदेशैः श्लिष्टमाकाशेन घटवत् तथा स्पृष्टं मसृणमणिकुड्यापतितस्थूलशिलाशकलचूर्णवत्, अनेन विशेषणद्वयेन तस्य निधत्तनिकाचितावस्थयोरभावमाह, 'उदी-

१ तेष्वेवाकाशप्रदेशेषु प्रतिसंहर्तुं ?, नैषोऽर्थः समर्थः, केवलिनश्चलानि शरीरोपकरणानि भवन्ति, चलोपकरणतया केवली न शक्नोति तेष्वेवाकाशप्रदेशेषु हस्तं वा पादं वा प्रतिसंहर्तुम् ॥ २ योगात् प्रकृतिप्रदेशबन्धं स्थित्यनुभागबन्धं कषायतः करोति । ३ न कर्मद्रव्याणि विपरीतानि योगद्रव्येभ्यो भवन्ति जीवस्य । तस्यावस्थाने ननु सिद्धो द्विसमयस्थितिबन्धः ॥ १ ॥

रितम्' उदयप्रासम् उदीरणायास्तत्रासम्भवात् 'वेदित' तत्फलसुखानुभवनेन 'निर्जीर्णं' क्षयमुपागत 'सेयाले य'त्ति सूत्रत्वाद् 'एष्यत्काले' चतुर्थसमयादावकर्म चापि भवति, तज्जीवापेक्षया पुनस्तस्य तथाविधपरिणामाभावात्, एतच्चैवविधविशेषणान्वित सातकर्मैवासौ बध्नाति, यत उक्तम्—"अप्प बायर मउय बहु च रुक्ख च सुकिल चेव । मद महव्वयति य सायाबहुल च त कम्म ॥१॥" ७१ । अय च देशोनपूर्वकोटीमन्तर्मुहूर्त्तादिप्रमाण वा काल विहृत्य यथा शैलेशीमवाप्याकर्मता लभते तथा दर्शयन् शैलेश्यकर्मताद्वारमर्थतो व्याचिख्यासुराह—'अथे'ति केवलावाप्त्यनन्तरम् 'आयुष्क' जीवितमन्तर्मुहूर्त्तादिपरिमाण पालयित्वा, अन्तर्मुहूर्त्तपरिमाणाऽद्धा—कालोऽन्तर्मुहूर्त्ताद्धा साऽवशेषम्—उद्धरित यस्मिन्नाद् तर्मुहूर्त्ताद्धावशेष तथाविधमायुरस्येत्यन्तर्मुहूर्त्ताद्धावशेषायुष्क सन्, पाठान्तरतश्चान्तर्मुहूर्त्तावशेषायुष्क, पठन्ति च—'अतोमुहुत्तअद्धावसेसाए'त्ति प्राकृतत्वादन्तर्मुहूर्त्तावशेषाद्धाया 'योगनिरोह करेमाणे'त्ति योगनिरोध करिष्यमाण सूक्ष्मा क्रिया—व्यापारो यस्मिंस्तत्सूक्ष्मक्रियमप्रतिपतनशीलमप्रतिपाति अध पतनाभावात्, शुक्ल ध्यान 'समुदायेषु हि वृत्ता शब्दा अवयवेष्वपि वर्त्तन्त' इति शुक्लध्यानतृतीयभेद ध्यायन् 'तत्प्रथमतया' तदाद्यतया मनसो योगो मनोयोग —मनोद्रव्यसाचिव्यजनितो व्यापारस्त निरुणद्धि, तत्र च पर्याप्तमात्रस्य सञ्ज्ञिनो जघन्ययोगिनो यावन्ति मनोद्रव्याणि तज्जनितश्च यावद्व्यापारस्तदसङ्ख्यगुणविहीनानि मनोद्रव्याणि

१ अल्प बादर मृदु बहु च रूक्ष च शुक्ल चैव । म द महाव्ययमिति च सातबहुल च तत्कर्म ॥ १ ॥

तद्व्यापारं च प्रतिसमयं निरुन्धन्नसंख्येयसमयैस्तत्सर्वनिरोधं करोति, यत उक्तम्—"पज्जत्तमित्तसण्णिस्स जत्तियाइं जहण्णजोगिस्स । होन्ति मणोदव्वाइं तव्वावारो य जम्मेत्तो ॥ १ ॥ तयसंखगुणविहीणे समए समए निरुंभमाणो सो। मणसो सव्वणिरोहं कुणइ असंखेज्जसमएहिं ॥२॥" तदनन्तरं च वाचो वाचि वा योगो भाषाद्रव्यसाचिव्यजनितो जीवव्यापारस्तन्निरुणद्धि, तत्र च पर्याप्तमात्रद्वीन्द्रियजघन्यवाग्योगपर्यायेभ्योऽसंख्येयगुणविहीनांस्तत्पर्यायान् समये समये निरुन्धन्नसंख्येयसमयैः सर्ववाग्योगं निरुणद्धि,यत उक्तम्—"पज्जत्तमित्तबिंदिय जहन्नवइजोगपज्जवा जे उ। तदसंखगुणविहीणं समए समए निरुंभंतो ॥३॥ सव्ववइजोगरोहं संखाईएहि कुणइ समएहिं ।" 'आणापाणुणिरोहं'ति आनापानौ—उच्छ्वासनिःश्वासौ तन्निरोधं करोति, सकलकाययोगनिरोधोपलक्षणं चैतत्, तं च कुर्वन् प्रथमसमयोत्पन्नसूक्ष्मपनकजघन्यकाययोगतोऽसङ्ख्येयगुणहीनं काययोगेनैकैकसमये निरुन्धन् देहत्रिभागं च मुञ्चन्नसङ्ख्येयसमयैरेव सर्वं निरुणद्धि, यत उक्तं च—"तत्तो य सुहुमपणयस्स पढमसमओववण्णस्स ॥ ४ ॥ जो किर जहण्णजोओ तयसंखेज्जगुणहीणमेक्केके । समए निरुंभमाणो देहतिभागं च मुंचंतो ॥५॥ रुंभइ स कायजोगं संखाईएहिं चेव समएहिं । तो कयजोगनिरोहो सेलेसीभावणामेति ॥ ६ ॥" इत्थं योगत्रयनिरोधं विधाय ईषदिति—स्वल्पः प्रयत्नापेक्षया पञ्चानां ह्रस्वाक्षराणाम् अइउऋऌ इत्येवंरूपाणामुच्चरणमुच्चारो—भणनं तस्याद्धा—कालो यावता त उच्चार्यन्त ईषत्पञ्चाक्षरोच्चारणाद्धा तस्यां च णमिति प्राग्वत् अनगारः समुच्छिन्ना—उपरता क्रिया—मनोव्यापारादिरूपा यस्मिं-

न निवर्त्तते कर्मक्षयात्प्रागित्येवशीलम् अनिवर्त्ति शुक्लध्यानचतुर्थभेदरूप 'ध्यायन्' शैलेश्यवस्था-
स्तत्समुच्छिन्नक्रिय न निवर्त्तते कर्मक्षयात्प्रागित्येवशीलम् अनिवर्त्ति शुक्लध्यानचतुर्थभेदरूप 'ध्यायन्' शैलेश्यवस्था-

मनुभवन्निति भाव , ह्रस्वाक्षरोच्चारण च न विलम्बितं द्रुत वा किन्तु मध्यममेव गृह्यते, यत आह—"हस्सक्खराइ मज्झेण जेण कालेण पच भण्णति । अच्छइ सेलेसिगतो तत्तियमित्त तओ काल ॥१॥" एवविधश्च यत्कुरुते तदाह—'वेदनीय' सातादि 'आयुष्क' मनुष्यायु 'नाम' मनुजगत्यादि 'गोत्र च' उच्चैर्गोत्रम् 'एए'त्ति एतानि चत्वार्यपि 'कम्मसि'त्ति सत्कर्माणि युगपत्क्षपयति, एतत्क्षपणान्यायश्च भाष्यगाथाभ्योऽवसेय , ताश्चेमा —"तयसखेज्जगुणाए गुणसेढीएँ रइय पुराकम्म । समए समए खयय कम्म सेलेसिकालेण ॥ १ ॥ सव खवेति त पुण णिल्लेव किंचि दुचरिमे समए । किंचिच होइ चरिमे सेलेसीए तय वोच्छ ॥ २ ॥ मणुयगइजाइतसबायर च पज्जत्तसुभगमाएज्ज । अण्णयरवेयणिज्ज णराउमुच्च जसो णाम ॥ ३ ॥ सभवतो जिणणाम णराणुपुव्वी य चरिमसमयम्मि । सेसा जिण-सतातो दुचरिमसमयम्मि णिट्ठति॥४॥" 'तत ' इति वेदनीयादिक्षयानन्तरम् 'ओरालियकम्माइ च'त्ति औदारिककार्मणे शरीरे उपलक्षणत्वात्तैजस च 'सव्वाहि विप्पजहणाहि'न्ति 'सर्वाभि ' अशेषाभिर्विशेषेण विविध वा प्रकर्षतो हानय —

१ तदसख्यगुणया गुणश्रेण्या रचित पुराकर्म। समये २ क्षपयन् कम शैलेशीकालेन॥१॥ सर्व क्षपयति तत्पुनर्निर्लेप किञ्चिद्द्विचरमे समये । किञ्चिच भवति चरमे शैलेश्यास्तद्वक्ष्ये ॥२॥ मनुजगतिजातित्रसबादर च पर्याप्तसुभगमादेयम् । अन्यतरवेदनीय नरायुरुच्चैर्यशोनाम ॥३॥ सभवतो जिननाम नरानुपूर्वी च चरमे समये । शेषा जिनसत्का द्विचरमसमये निस्तिष्ठन्ति ॥ ४ ॥

त्यागा विप्रहाणयो, व्यक्त्यपेक्षं बहुवचनं, ताभिः, किमुक्तं भवति ?—सर्वथा परिशाटेन, न तु यथा पूर्वं सङ्घातपरिशाटाभ्यां देशत्यागतः, 'विप्पजहित्ता' विशेषेण प्रहाय—परिशाट्य, उक्तं हि—"ओरालियाहिं सवाहिं चयइ विप्पजहणाहि जं भणियं। णिस्सेसतया ण जधा देसच्चाएण सो पुवं ॥ १ ॥" चशब्दोऽत्रौदयिकादिभावनिवृत्तिमस्यानुक्तामपि समुचिनोति, यत उक्तम्—"तस्सोदइयाभावा भवत्तं च विणियत्तए जुगवं। सम्मत्तनाणदंसणसुहसिद्धत्ताणि मोत्तूणं ॥ १ ॥" ऋजुः—अवक्रा श्रेणिः—आकाशप्रदेशपङ्क्तिस्तां प्राप्त ऋजुश्रेणिप्राप्तः अनुश्रेणिगत इतियावत्, 'अफुसमाणगइ'त्ति अस्पृशद्गतिरिति, नायमर्थो यथा नायमाकाशप्रदेशान्न स्पृशति अपि तु यावत्सु जीवोऽवगाढस्तावत एव स्पृशति न तु ततोऽतिरिक्तमेकमपि प्रदेशम्, 'ऊर्द्धम्' उपरि 'एकसमयेन' द्वितीयादिसमयान्तरास्पर्शेन 'अविग्रहेण' वक्रगतिरूपविग्रहाभावेन, अन्वयव्यतिरेकाभ्यामुक्तोऽर्थः स्पष्टतरो भवतीति अनुश्रेणिप्राप्त इत्यनेन गतार्थत्वेऽपि पुनरभिधानं, 'तत्र' इति विवक्षिते मुक्तिपद इतियावत् 'गंत'त्ति गत्वा 'साकारोपयुक्तः' ज्ञानोपयोगवान् सिद्ध्यतीत्यादि यावदन्तं करोतीत्यादि प्राग्वत्, उक्तं च—"उजुसेढिं पडिवण्णो समयपएसंतरं अफुसमाणो। एगसमएण सिज्झइ अह सागारोवउत्तो सो ॥१॥" इति, द्वासप्ततिसूत्रार्थः। इह च चूर्णिकृता—"सेलेसी-

१ चत्तारि कम्मंसे खवेईत्यतः सूत्रपार्थक्यं ज्ञेयमत एवादौ त्रिसप्ततिप्रश्नाङ्काः त्रिसप्ततिसूत्राणीत्युपक्रमश्च, सूत्रसंख्या तु द्वासप्ततिरिति अतो द्वासप्ततिसूत्रार्थः इत्युपसंहारः, मन्ये चात एवाकर्मताफलदर्शकं चूर्णिकृन्मतं सूत्रविपर्यं मतान्तरमुपादर्शि सूरिणा।

ए ण भंते ! जीवे किं जणइ ?, अकम्मयं जणति, अकम्मयाए जीवा सिज्झन्ति" इति पाठः, पूर्वत्र च कचित्कि-ञ्चित्पाठभेदेनाल्पा एव प्रश्ना आश्रिता, अस्माभिस्तु भूयसीषु प्रतिषु यथाव्याख्यातपाठदर्शनादित्थमुन्नीतमिति ७२ । सम्प्रत्युपसंहर्तुमाह—

एसो खलु सम्मत्तपरक्कमस्स अज्झयणस्स अट्ठे समणेण भगवया महावीरेणं आघविए पन्नविए परूविए दंसिए निदंसिए उवदंसिए त्तिबेमि ॥ ॥ सम्मत्तपरक्कम ॥ २९ ॥

'एष' अनन्तरोक्त 'खलु' निश्चये सम्यक्त्वपराक्रमस्याध्ययनस्य 'अर्थः' अभिधेय श्रमणेन भगवता महावीरेण 'आघविए'त्ति आर्षत्वाद् 'आख्यात' सामान्यविशेषपर्यायाभिव्यासिकथनेन 'प्रज्ञापित' हेतुफलादिप्रकाशनात्मकप्रकर्षज्ञापनेन 'प्ररूपित' स्वरूपरूपनेन 'दर्शित' नानाविधभेददर्शनेन 'निदर्शित' दृष्टान्तोपन्यासेन 'उपदर्शित' उपसंहारद्वारेण, इदमपि चूर्णिमाश्रितमेव । 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत्, गतोऽनुगम, सम्प्रति नया, तेऽपि तथैव ॥ इत्युत्तराध्ययनश्रुतस्कन्धटीकाया श्रीशान्त्याचार्यविरचिताया शिष्यहिताया सम्यक्त्वपराक्रम नाम एकोनत्रिंशमध्ययन समाप्तम्

इत्युत्तराध्ययनटीकाया शिष्य० श्रीशान्तिसूरिकृताया सम्यक्त्वपराक्रमाभिधमेकोनत्रिंशमध्ययनम् ॥

## अथ त्रिंशं तपोमार्गगत्यध्ययनम् ।

व्याख्यातमेकोनत्रिंशमध्ययनम्, अधुना त्रिंशत्तममारभ्यते, अस्य चायमभिसम्बन्धः—अनन्तराध्ययनेऽप्रमाद उक्तः, इह तु तद्वता तपो विधेयमिति तत्स्वरूपमुच्यते, इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य चतुरनुयोगद्वारप्ररूपणा प्राग्वद्यावन्नामनिष्पन्ननिक्षेपे तपोमार्गगतिरिति त्रिपदं नाम, अत एव तत्पदत्रयनिक्षेपायाह निर्युक्तिकृत्—

निक्खेवो (उ) तवंमि चउव्वि० ॥ ५१० ॥

जाणगभवियसरीरे तव्वइरित्ते अ पंचतवमाई । भावंमि होइ दुविहो वज्झो अब्भिंतरो चेव ॥ ५११ ॥

मग्गगईणं दुण्हवि पुव्वुद्दिट्ठो चउक्कनिक्खेवो । पगयं तु भावमग्गे सिद्धिगईए उ नायव्वं ॥ ५१२ ॥

दुविहतवोमग्गगई वन्निज्जइ जम्ह इत्थ अज्झयणे । तम्हा एअज्झयणं तवमग्गगइत्ति नायव्वं ॥ ५१३ ॥

गाथाचतुष्टयं प्राग्वत्, नवरं 'पंचतवमाइ'त्ति पञ्चतपः—पञ्चाग्नितपः, यत्र चतसृष्वपि दिक्षु चत्वारोऽग्नयः पञ्चमश्च तपनस्तल्लोके प्रसिद्धम्, आदिशब्दाल्लोकप्रतीतमन्यदपि वृद्धतपःप्रभृति तपो गृह्यते, द्रव्यत्वं चास्याज्ञानमलमलिनत्वेन

नानयगमप्रसङ्गाद् एपणाशुद्ध्यसम्भवाच, तथा 'अणासण्णे'त्ति प्रसज्यप्रतिषेधार्थत्वात् नञोऽनासन्ने प्रत्यासत्ति- निरूपवर्त्तिनि भूभागे तिष्ठेत्, तत्र पुराप्रविष्टापरभिक्षुकाप्रीतिप्रसक्ते 'नान्येषां' भिक्षुकापेक्षया परेषां गृहस्थानां 'चक्षुःस्पर्शत' इति गम्यमानार्थ तसि, ततः चक्षुःस्पर्शे-दृग्गोचरे चक्षुःस्पर्शगो वा दृग्गोचरगतः 'तिष्ठेत्' आसीत, किंतु विविक्तप्रदेशस्थो यथा न गृहिणो विदन्ति,यदुत-एष भिक्षुको निष्क्रमणं प्रतीक्षत इति,तथा'एगो'त्ति किमगी मम पुरतः प्रविष्टा इति तदुपरि द्वेषरहितः 'भक्तार्थं' भोजननिमित्तं, न च 'लंघित्त'त्ति उल्लङ्घ्य, 'तम्' इति भिक्षुकम्, 'अतिक्रामेत्' प्रविशेत्, तत्रापि तदप्रीत्यपवादादिसम्भवाद्। इह च मित काले भक्षयेदिति भोजनमभिधाय यत्पुनर्भिक्षाटनाभिधानं तत् ग्लानादिनिमित्तं स्वयं वा बुभुक्षावेदनीयमसहिष्णोः पुनर्भ्रमणमपि न दोषायेति ज्ञापनार्थम्, उक्तं च—"जइ तेण न संथरे। तओ कारणमुप्पण्णे,भत्तपाणं गवेसए॥१॥"इत्यादि, सूत्रार्थः॥३३॥ पुनरुद्धतविधिमेवाभिधित्सुराह—

नाइउच्चे नाइनीए, नासन्ने नाइदूरओ। फासुयं परकडं पिंडं, पडिगाहिज्ज संजए॥३४॥ (सूत्रम्)

व्याख्या—'नात्युच्चे' प्रासादोपरिभूमिकादौ नीचे वा-भूमिगृहादौ, तत्र तदुत्क्षेपनिक्षेपनिरीक्षणासम्भवाद् दायकापायसम्भवाच, यद्वा 'नात्युच्चः' उच्चस्थानस्थितत्वेन ऊर्द्धीकृतकन्धरतया वा द्रव्यतो भावतस्त्वहो ! अह

१ यदि तेन न संस्तरेत्। ततः कारणे उत्पन्ने, भक्तपानं गवेषयेत्॥ १॥

सूत्रद्वयं प्रायः प्रतीतार्थमेव, नवरं निरत इति प्राणवधादिभिः प्रत्येकमभिसम्बध्यते, तथा भवत्यनाश्रव इति–अविद्यमानकर्मोपादानहेतुः । द्वितीयसूत्रेऽप्यनाश्रवः—समित्यादिविपर्ययाणां कर्मोपादानहेतुतोऽनाश्रवरूपत्वात्तेषां चाविद्यमानत्वादिति सूत्रद्वयार्थः ॥ एवंविधश्च यादृशं कर्म यथा च क्षपयति आदराधानाय पुनः शिष्याभिमुखीकरणपूर्वकं दृष्टान्तद्वारेण तदाह—

एएसिं तु विवज्जासे, रागद्दोससमज्जियं । खवेइ तं जहा भिक्खू, तं मे एगमणा सुण ॥४॥ जहा महातलागस्स, संनिरुद्धे जलागमे । उस्सिंचणाए तवणाए, कमेणं सोसणा भवे ॥ ५ ॥ एवं तु संजयस्सावि, पावकम्मनिरासवे । भवकोडीसंचियं कम्मं, तवसा निज्जरिज्जई ॥ ६ ॥

'एतेषां तु' प्राणिवधविरत्यादीनामनाश्रवहेतूनां 'विवज्जासे'त्ति विपर्यासे प्राणिवधादावसमितत्वादौ च रागद्वेषाभ्यां समर्जितम्–उपार्जितं रागद्वेषसमर्जितं कर्मेति गम्यते तद्यथा क्षपयति तन्मे कथयत इति शेषः, एकम्—एकत्र प्रस्तुते वस्तुन्यभिनिविष्टत्वेन मनो यस्यासावेकमनाः शृणिवति शिष्याभिमुखीकरणम् ॥ 'संनिरुद्धे' पाल्यादिना निषिद्धे 'जलागमे' जलप्रवेशे 'उस्सिंचणाए'त्ति सूत्रत्वाद् 'उत्सेचनेन' अरघट्टघटीनिवहादिभिरुदञ्चनेन 'तवणाए'त्ति प्राग्वत् 'तपनेन' रविकरनिकरसन्तापरूपेण 'क्रमेण' परिपाट्या 'शोषणा' जलाभावरूपा भवेत् ॥ 'पापकर्मनिराश्रवे' पापकर्मणामाश्रवाभावे 'भवकोटीसञ्चितम्' इत्यत्र कोटीग्रहणमतिबहुत्वोपलक्षणं, कोटीनियमास-

तथाविधगुञ्जनकत्वात्, तथा भावे प्रक्रमात्तपो बाह्यमभ्यन्तर चात्रैव वक्ष्यमाणस्वरूप ॥ तथा 'पुव्वुद्दिट्ठो'त्ति पूर्वत्र-मोक्षमार्गगतिनामकेऽध्ययने उद्दिष्ट –कथित पूर्वोद्दिष्ट 'भावमग्गो'त्ति सुब्व्यत्ययाद् 'भावमार्गेण' मुक्तिपथेन तपोरूपेण ज्ञानदर्शनचारित्राविनाभावित्वाद् भावतपस ॥ नामनिरुक्तिमाह–द्विविध तपो–बाह्यमभ्यन्तर च तदेव मार्गो भावमार्गस्तत्फलभूता च गति –सिद्धिगतिर्द्विविधतपोमार्गगतिर्भण्यते यस्मादत्र–अध्ययने तस्मादेतदध्ययन तपोमार्गगतिरिति ज्ञातव्यम्, अभिधेयेऽभिधानोपचारादिति भाव, इति निर्युक्तिगाथाचतुष्टयार्थ ॥गतो नामनिष्पन्नो निक्षेप, सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपावसर, तस्य च सूत्रानुगमाविनाभावित्वात सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

जहा उ पावग कम्म, रागदोससमज्जिय । खवेइ तवसा भिक्खू, तमेगग्गमणो सुणे ॥ १ ॥

'यथा' येन प्रकारेण 'तु' अवधारणे भिन्नक्रमो योक्ष्यते, 'पापक कर्म' ज्ञानावरणादि रागद्वेषाभ्या समिति–भृशमर्जितम्–उपात्त रागद्वेषसमर्जित क्षपयत्येव 'तपसा' वक्ष्यमाणलक्षणेन भिक्षु 'तदेकाग्रमना' अवहितचित्त' शृण्विति शिष्यमभिमुखीकरोति, मा भूदनभिमुखोपदेशनेनैतद्वैफल्यमिति सूत्रार्थ ॥ इह चानाश्रवेणैव सर्वथा कर्म क्षप्यत इति यथाऽसौ भवति तथाऽऽह—

पाणिवहमुसावाया अदत्तमेहुणपरिग्गहा विरओ । राईभोयणविरओ, जीवो भवइ अणासवो ॥ २ ॥

पचसमिओ तिगुत्तो, अकसाओ जिइदिओ । अगारवो अ निस्सल्लो, जीवो भवइ अणासवो ॥ ३ ॥

य वग्गवग्गो उ पंचमो छट्ठओ पइन्नतवो। मणइच्छियचित्तत्थो नायव्वो होइ इत्तरिओ ॥ ११ ॥ जा सा अणसणा मरणे, दुविहा सा वियाहिया। सवीयारमवीयारा, कायचिट्ठं पई भवे ॥ १२ ॥ अहवा सपरिकम्मा अपरिकम्मा य आहिया। नीहारिमणीहारी आहारच्छेअओ दुसुवि ॥ १३ ॥

'इत्तरिय'त्ति इत्वरमेवेत्वरकं-स्वल्पकालं नियतकालावधिकमिति योऽर्थः, मरणावसानः कालो यस्य तन्मरणकालं प्राग्वन्मध्यपदलोपी समासः, यावज्जीवमित्यर्थः, तथा मरणं कालः अवसरो यस्य तन्मरणकालं 'चः' समुच्चये, अश्यते—भुज्यत इत्यशनमशेषाहाराभिधानमेतत्, उक्तं हि—"सव्वोऽवि य आहारो असणं सव्वोऽवि वुच्चए पाणं। सव्वोऽवि खाइमंपि य सव्वोऽविय साइमं होइ ॥ १ ॥" ततश्चाविद्यमानं देशतः सर्वतो वाऽशनमस्मिन्नित्यनशनं 'द्विविधं' द्विप्रकारं भवेत्, तत्र 'इत्तरिय'त्ति इत्वरकं सहावकाङ्क्षया—घटिकाद्वयाद्युत्तरकालं भोजनाभिलापरूपया वर्त्तत इति सावकाङ्क्षं निष्क्रान्तमाकाङ्क्षातो निराकाङ्क्षं, तज्जन्मनि भोजनाशंसाभावात्, तुशब्दस्य भिन्नक्रमत्वाद् द्वितीयं पुनर्मरणकालं, पाठान्तरतश्च निरवकाङ्क्षं द्वितीयम्। 'यथोद्देशं निर्देश'इति न्यायत इत्वरकानशनस्य भेदानाह—यत्तदित्वरकं तपः—इत्वरकानशनरूपमनन्तरमुक्तं तत् 'समासेन' सङ्क्षेपेण षड्विधं, विस्तरेण तु बहुतरभेदमिति भावः ॥ षड्विधत्वमेवाह—'सेढितवो' इत्यादि, अत्र च श्रेणिः—पङ्क्तिस्तदुपलक्षितं तपः श्रेणितपः,

१ सर्वोऽपि चाहारोऽशनं सर्वमप्युच्यते पानम्। सर्वमपि खाद्यमेव स्वाद्यं सर्वमपि च ॥ १ ॥

म्भवात्, कर्म तपसा 'निर्जीर्यते' आधिक्येन क्षय नीयते, शेष स्पष्टमिति सूत्रत्रयार्थ ॥ तपसा कर्म निर्जीर्यत इत्युक्त, तत्र किं तत्तप ? इति सशये भेदाभिधान विनाऽशक्यत्वात्तत्स्वरूपाभिधानस्य तद्भेदानाह—

सो तवो दुविहो वुत्तो, बाहिरऽब्भतरो तहा। बाहिरो छव्विहो वुत्तो, एवमब्भितरो तवो ॥ ७ ॥

'तद्' अनन्तरप्रक्रान्त तपो द्विविधमुक्त 'बाहिरऽब्भतरो'त्ति 'बाह्य' बाह्यद्रव्यापेक्षत्वात् प्रायो मुक्त्यवासिबहिरङ्गत्वाच्च 'अभ्यतर' तद्विपरीत, यदिवा लोकप्रतीतत्वात्कुतीर्थिकैश्च स्वाभिप्रायेणासेव्यमानत्वाद्बाह्य तदितरत्त्वाभ्यन्तरम्, उक्तञ्च—"लोके परसमयेषु च यत्प्रथित तत्तपो भवति बाह्यम् । आभ्यन्तरमप्रथित कुशलजनेनैव तु ग्राह्यम् ॥ १ ॥" अन्ये त्वाहु —"प्रायेणान्त करणव्यापाररूपमेवाभ्यन्तर, बाह्य त्वन्यथे"ति, तथेति समुच्चये, बाह्य 'षड्विध' षड्भेदमुक्तमेवमिति—षड्विधमभ्यन्तर तप उक्तमिति सम्बन्ध , सर्वत्र सूत्रत्वाल्लिङ्गव्यत्यय इति सूत्रार्थ ॥ तत्र यथा बाह्य षड्विध तथाऽऽह—

अणसणमूणोअरिया भिक्खायरिया य रसपरिच्चाओ। कायकिलेसो सलीणया य बज्झो तवो होइ ॥ ८ ॥

अक्षरार्थ स्पष्ट एव ॥ भावार्थ तु प्रतिभेद सूत्रकार एवाभिधित्सुस्तावदनशनमाह—

इत्तरियमरणकाला य, अणसणा दुविहा भवे। इत्तरिया सावकखा, निरवकखा उ बिइज्जिया ॥ ९ ॥

जो सो इत्तरियतवो, सो समासेण छव्विहो। सेढितवो पयरतवो, घणो अ तह होइ वग्गो य ॥ १० ॥ तत्तो

गुणितो घनो भवति, आगतं चतुःषष्टिः ६४, स्थापना तु पूर्विकैव नवरं बाहल्यतोऽपि पदचतुष्टयात्मकत्वं विशेषः, एतदुपलक्षितं तपो घनतप उच्यते, 'चः' समुच्चये, 'तथा भवति वर्गश्चे'तीहापि प्रक्रमाद्वर्ग इति वर्गतपः, तत्र च घन एव घनेन गुणितो वर्गो भवति, ततश्चतुःषष्टिश्चतुःषष्ट्यैव गुणिता जातानि षण्णवत्यधिकानि चत्वारि सहस्राणि, एतदुपलक्षितं तपो वर्गतपः । 'ततश्च' वर्गतपसोऽनन्तरं 'वर्गवर्ग' इति वर्गवर्गतपः 'तुः' समुच्चये 'पञ्चमं' पञ्चसङ्ख्यापूरणम्, अत्र च वर्ग एव यदा वर्गेण गुण्यते तदा वर्गवर्गो भवति, तथा च चत्वारि सहस्राणि षण्णवत्यधिकानि तावतैव गुणितानि जातैका कोटिः सप्तषष्टिलक्षाः सप्तसप्ततिसहस्राणि द्वे शते षोडशाधिके, अङ्कतोऽपि १६७७७२१६, एतदुपलक्षितं तपो वर्गवर्गतप इत्युच्यते, एवं पदचतुष्टयमाश्रित्य श्रेण्यादितपो दर्शितम्, एतदनुसारेण पञ्चादिपदेष्वप्येतत्परिभावना कार्या, षष्ठकं 'प्रकीर्णतपः' यच्छ्रेण्यादिनियतरचनाविरहितं स्वशक्त्यपेक्षं यथाकथञ्चिद्विधीयते, तच्च नमस्कारसहितादि पूर्वपुरुषाचरितं यवमध्यवज्रमध्यचन्द्रप्रतिमादि च, इत्थं भेदानभिधायोपसंहारमाह—'मणइच्छियचित्तत्थो'त्ति मनसः—चित्तस्य ईप्सित—इष्टश्चित्रः—अनेकप्रकारोऽर्थः—स्वर्गापवर्गादिस्तेजोलेश्यादिर्वा यस्मात्तन्मनईप्सितचित्रार्थं ज्ञातव्यं भवति 'इत्वरकं' प्रक्रमादनशनाख्यं तपः । सम्प्रति मरणकालमनशनं वक्तुमाह—'जा सा अणसणा'इति यत्तदनशनं 'मरणे' मरणावसरे द्विविधं तद्विशेषेणाख्यातं—कथितं व्याख्यातं तीर्थकृदादिभिरिति गम्यते, तद्द्वैविध्यमेवाह—सह विचारेण—चेष्टात्मकेन वर्त्तते यत्तत्सविचारं

तच्चतुर्थादिक्रमेण क्रियमाणमिह षण्मासान्त परिगृह्यते, तथा श्रेणिरेव श्रेण्या गुणिता प्रतर उच्यते, तदुपलक्षित तप प्रतरतप, इह चाव्यामोहार्थं चतुर्थषष्ठाष्टमदशमाख्यपदचतुष्टयात्मिका श्रेणिर्विवक्ष्यते, सा च चतुर्भिर्गुणिता षोडशपदात्मक प्रतरो भवति, अय चायामतो विस्तरतश्च तुल्य इत्यस्य स्थापनोपाय उच्यते–"एकाद्याद्या व्यवस्थाप्या, पङ्क्तयोऽत्र यथाक्रमम्। एकादींश्च निवेश्यान्ते, क्रमात्पङ्क्तिं प्रपूरयेत् ॥ १ ॥" अस्यार्थ –एक आदिर्येषा ते एकादय –एककद्विकत्रिकचतुष्कास्ते आद्या यासु ता एकाद्याद्या 'व्यवस्थाप्या' न्यसनीया 'पङ्क्तय' श्रेणय 'यथाक्रम' क्रमानतिक्रमेण, कोऽर्थ ?–प्रथमा एकाद्या एककादारभ्य, द्वितीया द्विकाद्या द्विकादारभ्य, तृतीया–त्रिकाद्या त्रिकादारभ्य, चतुर्थी–चतुष्काद्या चतुष्कादारभ्य, आह–एव सति प्रथमपङ्क्तिरेव परिपूर्णा भवति द्वितीयाद्यास्तु न पूर्यन्त एव, तत्कथ पूरणीया ?, उच्यते, एकादींश्च निवेश्य व्यवस्थाप्या 'अन्ते' इत्यग्रे 'क्रमात्' इति क्रममाश्रित्य 'पङ्क्तिम्' अपूर्यमाणा श्रेणिं 'पूरयेत्' परिपूर्णा कुर्यात्, तत्र च द्वितीयपङ्क्तौ द्विकत्रिकचतुष्कानामग्रे एकक, तृतीयपङ्क्तौ त्रिकचतुष्कयो पर्यन्ते एकको द्विक, चतुर्थपङ्क्तौ चतुष्कावसान एककद्विकत्रिका स्थाप्यन्ते, स्थापना चेयम्—

| | | | |
|---|---|---|---|
| १ | २ | ३ | ४ |
| २ | ३ | ४ | १ |
| ३ | ४ | १ | २ |
| ४ | १ | २ | ३ |

चतुर्थषष्ठाष्टमदशमप्रक्रम, 'घन' इति घनतपः 'च' पूरणे तथेति समुच्चये भवतीति च क्रिया प्रतितपोभेदं योजनीया, अत्र च षोडशपदात्मक प्रतर पदचतुष्टयात्मिकया श्रेण्या

उव्वत्तइ परियत्तइ काइयमाईसु होइ उ विभासा। किंचंपि अप्पणुच्चिय जुंजइ नियमेण धीवलिओ ॥ ३ ॥" अविचारं तु पादपोपगमनं,तत्र हि सव्याघाताव्याघातभेदतो द्विभेदेऽपि पादपवन्निश्चेष्टतयैव स्थीयते,तथा च तद्विधिः— "[2]अभिवंदिऊण देवे जहाविहं सेसए य गुरुमाई। पच्चक्खाइत्तु ततो तयंतिए सव्वमाहारं ॥ १ ॥ समभावंमि ठियप्पा सम्मं सिद्धंतभणितमग्गेणं। गिरिकंदरं तु गंतुं पायवगमणं अह करेइ ॥ २ ॥ सव्वत्थापडिबद्धो दंडायय-मादिठाणमिह ठाउं। यावज्जीवं चिट्ठइ णिच्चिट्ठो पायवसमाणो ॥ ३ ॥" पुनर्द्वैविध्यमेव प्रकारान्तरेणाह—'अथवे'ति प्रकारान्तरसूचने सह परिकर्मणा—स्थाननिपदनत्वग्वर्त्तनादिना विश्रामणादिना च वर्त्तते यत्तत्सपरिकर्म अपरिकर्म च तद्विपरीतम् 'आख्यातं' कथितं, तत्र सपरिकर्म भक्तप्रत्याख्यानमिङ्गिनीमरणं च, एकत्र स्वयमन्येन वा कृतस्य अन्यत्र तु स्वयंविहितस्योद्वर्त्तनादिचेष्टात्मकपरिकर्मणोऽनुज्ञानात्, तथा चाह—"[3]आयपरपरिकम्मं भत्तपरिण्णाएँ दो अणुन्नाया। परवज्जिया य इंगिणि चउविहाहारविरई य ॥ १ ॥ ठाणनिसियणतुयट्टण इत्तरियाइं जहासमाहीए।

१ उद्वर्त्तते परिवर्त्तते कायिक्यादिषु भवति तु निभाषा। कृत्यमप्यात्मनैव युनक्ति नियमेन धृतिबलिकः ॥३॥ २ अभिवन्द्य देवान् यथाविधि शेषांश्च गुर्वादीन्। प्रत्याख्याय ततस्तदन्तिके सर्वमाहारम् ॥ १ ॥ समभावे स्थितात्मा सम्यक् सिद्धान्तभणितमार्गेण। गिरिकन्दरां तु गत्वा पादपोपगमनमथ करोति ॥२॥ सर्वत्राप्रतिबद्धो दण्डायतादि स्थानमिह स्थित्वा। यावज्जीवं तिष्ठन् निश्चेष्टः पादपसमानः ॥१॥ ३ आत्मपरपरिकर्मणी भक्तपरिज्ञायां द्वे अभ्यनुज्ञाते। परवर्जितं चेङ्गिते चतुर्विधाहारविरतिश्च ॥ १ ॥ स्थाननिषदनत्वग्वर्त्तनानीत्वराणि यथासमाधि।

तद्विपरीतमविचार, विचारश्च कायवाङ्मनोभेदात्रिविध इति तद्विशेषपरिज्ञानार्थमाह–'कायचेष्टाम्' उद्वर्तनपरिवर्त्तनादिककायप्रवीचार 'प्रती'ति आश्रित्य 'भवेत्' स्यात्, तत्र सविचारं भक्तप्रत्याख्यानमिङ्गिनीमरणं च, तथाहि–भक्तप्रत्याख्याने गच्छमध्यवर्त्ती गुरुदत्तालोचनो मरणायोद्यतो विधिना सलेखना विधाय ततस्त्रिविध चतुर्विधं वाऽऽहार प्रत्याचष्टे, स च समाश्रितमृदुसंस्तारक समुत्सृष्टशरीराद्युपकरणममत्व स्वयमेवोद्ग्राहितनमस्कार समीपवर्त्तिसाधुदत्तनमस्कारो वा सत्या शक्तौ स्वयमुद्वर्त्तते, शक्तिविकलतायां चापैरपि किञ्चित्कारयति, यत उक्तम्–"विंयडणमब्भुट्ठाण उचियं सलेहण च काऊणं । पचक्खति आहार तिविह च चउविह वावि ॥ १ ॥ उव्वत्तति परियत्तति सयमण्णेणावि कारए किंचि । जत्थ समत्थो नवर समाहिजणय अपडिबद्धो ॥ २ ॥" इङ्गिनीमरणमप्युक्तन्यायत प्रतिपद्य शुद्धस्थण्डिलस्थाता एकाक्येव कृतचतुर्विधाहारप्रत्याख्यानस्तत्स्थण्डिलस्य तच्छायात उष्णमुष्णाच्च छाया स्वय सक्रामति, तथा चाह–'इङ्गियमरणविहाणं आपवज्ज तु वियडणं दाउ । सलेहणं च काउ जहासमाही जहाकाल ॥ १ ॥ पचक्खति आहार चउविह णियमओ गुरुसगासे । इंगियदेसमि तहा चेट्ठपि हु इंगिय कुणइ ॥ २ ॥

१ आलोचनमभ्युत्थानमुचिता सलेखना च कृत्वा । प्रत्याख्याति आहार त्रिविध चतुर्विध वाऽपि ॥१॥ उद्वर्तते परिवर्त्तते स्वयमन्येनापि कारयेत् किञ्चित् । यदि समर्था नवर समाधिजनकमप्रतिबद्ध ॥२॥ २ इङ्गिनीमरणविधानमाप्रव्रज्य तु आलोचना दत्वा । सलेखना कृत्वा च यथासमाधि यथाकालम् ॥ १ ॥ प्रत्याख्याति आहार चतुर्विध नियमतो गुरुसकाशे । इङ्गितदेशे तथा चेष्टामपि इङ्गिता करोति ॥ २ ॥

होज्जाहि ॥ १ ॥ एएहिं कारणेहिं वाघाइमरण होइ बोद्धव्वं । परिकम्मकाऊणं पच्चक्खाई ततो भत्तं ॥ २ ॥" तथा निर्हरणं निर्हारो—गिरिकन्दरादिगमनेन ग्रामादेर्बहिर्गमनं तद्विद्यते यत्र तन्निर्हारि तदन्यदनिर्हारि यदुत्थातुकामे व्रजिकादौ विधीयते, एतच्च प्रकारद्वयमपि पादपोपगमनविषयं, तत्प्रस्ताव एवागमेऽस्याभिधानात्, तथा चागमः—"पव्वज्जाई काउं णेयव्वं जाव होयवोच्छित्ती । पंच तुले काऊण य सो पाओगमपरिणतो य ॥ ३ ॥ तं दुविहं णायव्वं णीहारिं चेव तहमणीहारिं । बहिया गामाईणं गिरिकंदरमाइ णीहारिं ॥ ४ ॥ वइयाइसु जं अंतो उट्ठेउमणाणं ठाइ अणिहारिं । कम्हा ? पायवगयाणं जं उवमा पायवेणऽत्थं ॥ ५ " आहारः—अशनादिस्तच्छेदः—तन्निराकरणम्, आहारच्छेदश्च द्वयोरपि सपरिकर्मापरिकर्मणोर्निर्हार्यनिर्हारिणोश्च सम इति शेषः, उभयत्र तद्व्यवच्छेदस्य तुल्यत्वादिति सूत्रपञ्चकार्थः ॥ उक्तमनशनमूनोदरतामाह—

---

१. तेन ॥ १ ॥ एतैः कारणैर्व्याघातिमं मरणं भवति बोद्धव्यम् । परिकर्माकृत्वा प्रत्याख्याति ततो भक्तम् ॥ २ ॥ २ प्रव्रज्यादि कृत्वा नेयं यावद्भवत्यव्युच्छित्तिः । पञ्च तुलनाः कृत्वा च स पादपोपगमने परिणतश्च ॥ ३ ॥ तद्विविधं ज्ञातव्यं निर्हार्यनिर्हारि चैव तथा । बहिर्ग्रामादेर्गिरिकन्दरादौ निर्हारि ॥ ४ ॥ व्रजिकादिषु यदन्तः उत्थातुमनसि तिष्ठति अनिर्हारि । कस्मात् ? पादपोपगतानां यदुपमा पादपेनात्र ॥ ४ ॥

सयमेव य सो कुणई उवसग्गपरिसहऽहियासे ॥ १ ॥" अपरिकर्म च पादपोपगमन, निष्प्रतिकर्मताया एव तत्रा-भिधानात्, तथा चागम —"समविसमंमि य पडिओ अच्छइ जह पायवो व्व णिक्कंपो। णिच्चलणिप्पडिकम्मो णिक्खिवई ज जहिं अंग ॥ २ ॥ त चिय होइ तहच्चिय णवर चलण परप्पओगाओ । वायाईहिं तरुस्स व पडिणीयाईहि तह तस्स ॥ ३ ॥" यद्वा परिकर्म—सलेखना सा यत्रास्ति तत्सपरिकर्म, तद्विपरीतं त्वपरिकर्म, तत्र चाव्याघाते त्रयमप्येतत्सूत्रार्थोभयनिष्ठितो निष्पादितशिष्य सलेखनापूर्वकमेव विधत्ते, अन्यथाऽऽर्त्तध्यानसम्भवात्, उक्तञ्च—"देहंम्मि असलिहिए सहसा धाऊहि खिज्जमाणाहिं । जायइ अट्टज्झाणं सरीरिणो चरिमकालंमि ॥ ४ ॥" इति स-परिकर्मोच्यते, यत्पुनर्व्याघाते गिरिभित्तिपतनाभिघातादिरूपे संलेखनामविधायैव भक्तप्रत्याख्यानादि क्रियते तद-परिकर्म, उक्तञ्चागमे—"अवि घातो या विज्जुगिरिभित्तीकोणगा य वा होज्जा । संबद्धहत्थपायादयो य वाएण

१ स्वयमेव च स करोति उपसर्गपरीषहान् अध्यास्ते ॥ १ ॥ २ समे विषमे च पतितो यथा तिष्ठति पादप इव निष्प्रकम्प । निश्चलो निष्प्रतिकर्मा निक्षिपति यथा यत्राङ्गम् ॥१॥ तत् तथैव भवति नवर चलन परप्रयोगात् । वातादिभिस्तरोरिव प्रत्यनीकादिभिस्तथा तस्य ॥२॥ ३ देहेऽसलिखिते सहसा धातुषु क्षीयमाणेषु । जायते आर्त्तध्यान शरीरिणश्चरमकाले ॥ ३ ॥ ४ अपि घातश्च गिरिविद्युद्भित्तिपतनाद्वा भवेत् । सबद्धहस्तपादादयो वा भवेयुर्वा-

लब्धिमानिति मदाध्मातमानसः, नीचोऽत्यन्तावनतकन्धरो निम्नस्थानस्थितो वा द्रव्यतः भावतस्तु न मयाऽद्य किञ्चित् कुतोऽप्यवाप्तमिति दैन्यवान्, उभयत्र वा समुच्चये, तथा 'नासन्ने' समीपवर्तिनि 'नातिदूरे' अतिविप्रकर्षवति प्रदेशे, स्थित इति गम्यते, यथायोगं जुगुप्साशङ्कैषणाशुद्ध्यसम्भवादयो दोषाः, अथवा अत एव नासन्नो नातिदूरगः, प्रगता असव इति सूत्रत्वेन मतुब्लोपादसुमन्तः—सहजसंसक्तिजन्मानो यस्मात् तत् प्रासुकं, परेण—गृहिणाऽऽत्मार्थं परार्थं वा कृतं—निर्वर्त्तितं परकृतं, किं तत् ?—'पिण्डम्' आहारं 'प्रतिगृह्णीयात्' स्वीकुर्यात्, 'संयतः' यतिरिति सूत्रार्थः ॥ ३४ ॥ इत्थं सूत्रद्वयेन गवेषणाग्रहणैषणाविषयं विधिमुक्त्वा ग्रासैषणाविधिमाह—

अप्पपाणेऽप्पवीए वा, पडिच्छन्ने य संवुडे। समयं संजओ भुंजे, जयं अप्परिसाडियं॥३५॥(सूत्रम्)

व्याख्या—अल्पशब्दोऽभावाभिधायी, तथेहापि सूत्रत्वेन मत्वर्थीयलोपात् प्राणाः—प्राणिनस्ततश्चाल्पा—अविद्यमानाः प्राणाः—प्राणिनो यस्मिंस्तदल्पप्राणं तस्मिन्—अवस्थितागन्तुकजन्तुविरहिते, उपाश्रयादाविति गम्यते, तथा अल्पानि—अविद्यमानानि वीजानि—शाल्यादीनि यस्मिंस्तदल्पवीजं तस्मिन्, उपलक्षणत्वाचास्य सकलैकेन्द्रियविरहिते, ननु चाल्पप्राण इत्युक्ते अल्पवीज इति गतार्थं, वीजानामपि प्राणत्वाद्, उच्यते, मुखनासिकाभ्यां यो निर्गच्छति वायुः स एवेह लोके रूढितः प्राणो गृह्यते, अयं च द्वीन्द्रियादीनामेव संभवति, न वीजाद्येकेन्द्रियाणामिति कथं गतार्थता ?, तत्रापि 'प्रतिच्छन्ने' उपरिप्रावरणान्विते, अन्यथा सम्पातिमसत्त्वसम्पातसम्भवात्, 'संवृते' पार्श्वतः

ओमोअरण पचहा, समासेण वियाहिय । दव्वओ खित्तकालेण, भावेण पज्जवेहि य ॥ १४ ॥ जो जस्स उ आहारो, तत्तो ओम तु जो करे । जहन्नेणेगसित्थाई, एव दव्वेण ऊ भवे ॥ १५ ॥ गामे नगरे तह रायहाणिनिगमे य आगरे पल्ली । खेडे कव्वडदोणमुहपट्टणमडवसयाहे ॥ १६ ॥ आसमपए विहारे सनिवेसे समायघोसे य । थलिसेणाखधारे सत्थे सवट्टकोट्टे य ॥१७॥ वाडेसु य रत्थासु य घरेसु वा एवमित्तिय खित्त । कप्पइ उ एवमाई एव खित्तेण ऊ भवे ॥ १८ ॥ पेडा य अद्धपेडा गोमुत्ति पयगवीहिया चेव । सबुक्कावट्टाय यगतुपच्छागया छट्ठा ॥ १९ ॥ दिवसस्स पोरिसीण चउण्हपि उ जत्तिओ भवे कालो । एव चरमाणो खलु कालोमाण मुणेयव्व ॥२०॥ अहवा तइयपोरिसीए, ऊणाए घासमेसतो । चउभागूणा एवा, एव कालेण ऊ भवे ॥ २१ ॥ इत्थी वा पुरिसो वा अलकिओ वाऽणलकिओ वावि । अन्नयरवयत्थो वा, अण्णयरेण च वत्थेण ॥ २२ ॥ अण्णेण विसेसेण वण्णेण भावमणुमुअते उ । एव चरमाणो खलु भावोमोण मुणेयव्व ॥२३॥ दव्वे खित्ते काले भावम्मि य आहिया उ जे भावा । एएहि ओमचरओ पज्जवचरओ भवे भिक्खू ॥ २४ ॥

तत्रावम—न्यूनमुदर–जठरमस्यासावचमोदरस्तद्भाव अवमौदर्यं—न्यूनोदरता, पठन्ति च—'ओमोयरण'न्ति तत्र चावम च तदुदर चावमोदर तस्मात्करोत्यर्थे णिचि ल्युटि चावमोदरणम्, अवमोदरकरणमित्यर्थ , तच 'पचह'त्ति 'पञ्चधा' पञ्चप्रकार 'समासेन' सक्षेपेण व्याख्यात, पञ्चधात्वमेवाह—'द्रव्यत'इति द्रव्यात् हेतौ पञ्चमी, क्षेत्र च

कालश्चेति क्षेत्रकालं तेन भावेन च पर्यायैश्चोपाधिभूतैः, सर्वत्र हेतौ तृतीया ॥ तत्र द्रव्यत आह—यो यस्य 'तुः' पूरणे आहारो—भोजनं ततः—स्वाहारादवमम्—ऊनं 'तुः' प्राग्वद् यः कुर्याद् भुञ्जान इति शेषः, अयमत्र भावार्थः—पुरुषस्य हि द्वात्रिंशत्कवलमान आहारः स्त्रियश्चाष्टाविंशतिकवलमानः, यत उक्तं—"बत्तीसं किरकवला आहारो कुच्छिपूरओ भणिओ । पुरिसस्स महिलियाए अट्ठावीसं भवे कवला ॥१॥ कवलाण य परिमाणं कुक्कुडिअंडगपमाणमेत्तं तु । जो वा अविगियवयणो वयणंमि छुहिज्ज वीसत्थो ॥ २ ॥" ततश्चैतन्मानादूनं यो भुङ्क्ते यत्तदोर्नित्यमभिसम्बन्धात्तस्य 'एवम्' अमुना प्रकारेण 'द्रव्येण' उपाधिभूतेन भवेदिति सण्टङ्कः, अवमौदार्यमिति प्रक्रमः, एतच्च जघन्येनैकसिक्थु—यत्रैकमेव सिक्थु भुज्यते तदादि, आदिशब्दात्सिक्थुद्वयादारभ्य यावदेककवलभोजनम्, एवं चाल्पाहाराख्यमवमौदार्यमाश्रित्योच्यते, यत उपार्द्धादिषु तेषु कवलनवकादिमानमेवैतत्, तथा च सम्प्रदायः—"अप्पाहारोमोयरिया एक्ककवलाहारोमोयरिया (जहण्णा अट्ठकवला॰) उक्कोसा सेसा अजहण्णुकोसा, अवड्ढाहारोमोयरिया जहन्निया नवकवला उक्कोसेणं बारस सेसा अजहन्नमणुकोसा" इत्यादि, एतद्भेदाभिधायिनी चेयं गाथा—"अप्पाहार १ अवड्ढे २ दुभाग ३ पत्ता ४ तहेव किंचूणा ५ । अट्ठ १ दुवालस २ सोलस ३ चउवीस ४ तहेक्कतीसा य

१ द्वात्रिंशत्किल कवला आहारः कुक्षिपूरको भणितः । पुरुषस्य महेलाया अष्टाविंशतिर्भवेयुः कवलाः ॥ १ ॥ कवलानां च परिमाणं कुक्कुट्यण्डकप्रमाणमात्रमेव । यं वाऽविकृतवदनो वदने क्षिपेद्विश्वस्तः ॥ २ ॥

॥ १ ॥" क्षेत्राधमौदर्यमाह—ग्रसति गुणान् गम्यो वाऽष्टादशाना कराणामिति ग्रामस्तस्मिन्, नात्र करोऽस्तीति नकर तस्मिन्, तथा राजाऽनया धीयत इति राजधानी-राज्ञ पीठिकास्थानमित्यर्थ, निगमयन्ति तस्मिन्ननेकविधभाण्डानीति निगम —प्रभूततरवणिजा निवासोऽनयो समाहारस्तस्मिंश्च, आकुर्वन्ति तस्मिन्नित्याकरो—हिरण्याद्युत्पत्तिस्थान तस्मिन्, 'पल्लि'त्ति सुब्व्यत्ययात् पाल्यन्तेऽनया दुष्कृतविधायिनो जना इति पल्ली, नैरुक्तो विधि, वृक्षगहनाद्याश्रित प्रान्तजननिवासस्तस्या, खेट्यन्ते—उत्त्रास्यन्तेऽस्मिन्नेव स्थितैः शत्रव इति खेट—पांशुप्राकारपरिक्षिप्तम्, उक्त हि—"खेड पुण होइ धूलिपायार" तस्मिन्, कर्बट—कर्बटजनावास, कुनगरमित्यर्थ, द्रोण्यो—नावो मुखमस्येति द्रोणमुख—जलस्थलनिर्गमप्रवेश यथा भृगुकच्छ ताम्रलिप्तिर्वा, पतन्ति तस्मिन् समस्तदिग्भ्यो जना इति पत्तन, तच्च जलपत्तन यज्जलमध्यवर्त्ति, यथा काननद्वीप, स्थलपत्तनं च निर्जलभूभागभावि यथा मथुरा, 'मडंब'त्ति देशीपद यस्य सर्वदिक्ष्वर्द्धतृतीययोजनान्तर्ग्रामो नास्ति, सम्मिति—भृश बाध्यन्तेऽस्मिन् जना इति संबाध —प्रभूतचातुर्वर्ण्यनिवास, कर्बटादीना चात्र समाहारद्वन्द्वस्तस्मिन्, आ—समन्तात् श्राम्यन्ति—तप कुर्वन्त्यस्मिन्नित्याश्रम —तापसावसथादिस्तदुपलक्षित पद—स्थानमाश्रमपद तस्मिन्, विहारो—भिक्षुनिवासो देवगृह वा तत्प्रधानो ग्रामादिरपि विहारस्तस्मिन्, 'सनिवेशे' यात्रादिसमायातजनावासे, समाज —पथिकसमूह. घोषो—गोकुलमनयो समाहारे समाजघोष तस्मिन्, 'च' समुच्चये, स्थल्याम्—उच्चभूभागे सेना—चातुरङ्गबलसमूह. स्कन्धावार स यत्राशेषसेनाद्युप-

लक्षितोऽनयोः समाहारे सेनास्कन्धावारं तस्मिन्, 'सार्थे' गणिमधरिमादिभृतवृषभादिसङ्घाते संवर्त्तन्ते–पिण्डीभवन्त्यस्मिन् भयत्रस्ता जना इति संवर्त्तस्तस्मिन्, कोट्टं–प्राकारोऽनयोः समाहारे संवर्त्तकोट्टं तस्मिन्, 'चः' समुच्चये, क्षेत्रप्रस्तावादिह समाजिकादिषु च क्षेत्रमेवोपलक्ष्यते। 'वाडेसु'त्ति वाटेषु पाटेषु वा वृत्तिवरण्डिकादिपरिक्षिप्तगृहसमूहात्मकेषु 'रथ्यासु' मेरिकासु 'गृहेषु' प्रतीतेषु, सर्वत्र वा विकल्पे, 'एव'मित्यनेन हृदयस्थप्रकारेण 'एत्तिय'न्ति 'एतावत्' विवक्षातो नियतपरिमाणं क्षेत्रं 'कल्पते' उपयोगं याति पर्यटितुमिति शेषः, 'तुः' पूरणे, एवमादि, आदिशब्दाद्गृहशालादिपरिग्रहः, 'एव'मित्यमुना क्षेत्रप्राधान्यादभिग्रहग्रहणलक्षणेन प्रकारेणेति 'क्षेत्रेण' इति क्षेत्रहेतुकं 'तुः' पूरणे भवेदवमौदार्यमिति प्रक्रमः ॥ पुनरन्यथा क्षेत्रावमौदार्यमाह–'पेडे'त्यादि, अत्र च सम्प्रदायः–"पेडा पेडिका इव चउकोणा अद्धपेडा इमीए चेव अद्धसंठिगा घरपरिवाडी गोमुत्तिया वंकावलिया पयंगविही अणियया पयंगुड्डाणसरिसा 'संबुकावट्टं'ति शम्बूकः–शङ्खस्तस्यावर्त्तः शम्बूकावर्त्तस्तद्वदावर्त्तो यस्यां सा शम्बूकावर्त्ता, सा च द्विविधा–यतः सम्प्रदायः–"अब्भितरसंबुका बाहिरसंबुका य, तत्थ अब्भंतरसंबुकाए संखनाभिखेत्तोवमाए आगिइए अंतो आढवति बाहिरओ संणियट्टइ, इयरीए विवज्जओ," 'आययगंतुंपच्चागय'त्ति, अत्रायतं–दीर्घं प्राञ्जलमित्यर्थः, तथा च सम्प्रदायः–"तत्थ उज्जुयं गंतूण नियट्टइ" 'छट्ठ'त्ति षष्ठी, नन्वत्र गोचररूपत्वाद्भिक्षाचर्यात्वमेवासां तत्कथमिह क्षेत्रावमौदार्यरूपतोक्ता ?, उच्यते, अवमौदार्यं ममास्त्वित्यभिसम्बन्धिना विधीयमानत्वादवमौदार्यव्यपदेशोऽ-

प्यदुष्ट एव, दृश्यते हि निमित्तभेदादेकत्रापि देवदत्तादौ पितृपुत्राद्यनेकव्यपदेश , एव पूर्वत्र ग्रामादिविपयस्योत्तरत्र कालादिविपयस्य च नैयतस्याभिग्रहत्वेन भिक्षाचर्यात्वप्रसङ्गे इदमेवोत्तर वाच्यम् ॥ कालावमौदार्यमाह–'दिवसस्य' अह्न 'पौरुपीणा' प्रहराणा चतसृणामपि 'तु ' प्राग्वद् यावान् भवेत्कालोऽभिग्रहविपय इति शेप , 'एव'मित्येव प्रक्रमात्कालेन 'चरमाण'त्ति तिङ्सुब्व्यत्ययाच्चरत 'खलु' निश्चित'कालोमाण'न्ति कालेनावमत्व प्रस्तावादुदरस्य कालावमत्व, कोऽर्थ ?–कालावमौदार्यं मुणितव्य, कालहेतुत्वादस्येति भाव , यदिवाऽभेदोपचारेण स एवाभिगृहीतकाले चरन्नवमौदार्यं मुणितव्य ॥ एतदेव प्रकारान्तरेणाह–अथवा तृतीयपौरुष्यामूनायां ग्रासम्–आहारमेपयन्–त्रिविधैपणया गवेपयन्, न्यूनत्वमेव विशेपत आह–चतुर्भागोनाया वाशब्दात्पञ्चादिभागोनाया वा तृतीयपौरुष्याम्, 'एवम्' अमुना कालविपयाभिग्रहलक्षणेन प्रकारेण चरन्नित्यनुवर्त्तते, कालेन तु भवेदवमौदार्ययोगाद् यतिरप्यवमौदार्यम् , औत्सर्गिकविधिविपय चैतत्, उत्सर्गतो हि तृतीयपौरुष्यामेव भिक्षाटनमनुज्ञात, यदुक्तम्–"पयो भिक्खा य तइयाए"त्ति। भावावमौदार्यमाह–स्त्री वा पुरुपो वा 'अलङ्कृतो वा' कटकाद्यलङ्कारविभूपितो वा 'अनलङ्कृतो वाऽपि' तद्विपरीत , तथाऽन्यतरच्च तद्वयश्च–बाल्याद्यन्यतरवयस्तत्स्थो वा, अन्यतरेण वा पट्टवाटकमयादिना 'वस्त्रेण' वाससा, लक्षणे तृतीया, सर्वत्र वा विकल्पे ॥ 'अन्येन' विशेपान्तराच्छिन्नेन 'विशेपेण' कुपितप्रहसितादिनाऽवस्थाभेदेन 'वर्णेन' कृष्णादिना प्रक्रमादन्यतरेणोपलक्षित 'भाव' पर्यायमुक्तरूपमेवालङ्कृतत्वादि 'अणुमुयते उ' त्ति तुशब्दस्यावधारण(णार्थ)त्वाद

'अनुन्मुञ्चन्नेव' अत्यजन्नेव यदि दाता दास्यति ततोऽहं ग्रहीष्ये न त्वन्यथेत्युपस्कारः, एवं चरन् 'खलु' निश्चितं 'भावोमोणं' ति भावावमत्वेनोपलक्षितः प्रक्रमादुदरस्य मुणितव्यः, यद्वा सुब्व्यत्ययादेवं चरतः खलु सुब्व्यत्ययाद् भावावमत्वेन हेतुना मुणितव्यमावमौदार्यमिति प्रक्रमः ॥ पर्यवावमौदार्यमाह—'द्रव्ये' अशनादौ 'क्षेत्रे' ग्रामादौ 'काले' पौरुष्यादौ 'भावे च' स्त्रीत्वादौ 'आख्याताः' कथिताः 'तुः' पूरणे ये 'भावाः' पर्याया एकसिक्थोनत्वादयः, एतैः सर्वैरपि द्रव्यादिपर्यायैः 'ओमत्ति' अवममुपलक्षणत्वादवमौदार्यं चरति—आसेवते अवमचरकः पर्यवचरको भवेद्भिक्षुः, इह च पर्यवग्रहणेन पर्यवप्राधान्यविवक्षया पर्यवावमौदार्यमुक्तम्, अथवा 'एएहिं अवमचरओ'त्ति 'एतेभ्यः' द्रव्यादिपर्यायेभ्यः 'अवमचरकः' न्यूनत्वासेवकः, किमुक्तं भवति ?—एकसिक्थोनत्वादावपि नवपुराणादिविशेषाभिग्रहवान्, एवं ग्रामपौरुषीस्त्रीत्वादिष्वपि विशिष्टाभिग्रहतः पूर्वस्मान्न्यूनत्वं भावनीयम् । आह—क्षेत्रावमौदार्यादिष्वप्यशनादिद्रव्येणैवोदरस्यावमत्वमिति कथं द्रव्यावमौदार्यादेषां विशेषः ?, उच्यते, क्षेत्रादिहेतुकत्वस्यैव तत्र प्राधान्येन विवक्षितत्वात्, तद्विवक्षा च द्रव्यावमौदार्यस्यापि तेषु तद्धेतुकत्वात्, यदिवा यत्रापि द्रव्यतो न्यूनत्वमुदरस्य नास्ति तत्रापि क्षेत्रादिन्यूनतामपेक्ष्य क्षेत्राद्यवमौदार्याणि भण्यन्त इति प्रश्नानवकाश एवेति सूत्रैकादशकगर्भार्थः ॥ इत्थमवमौदार्यमभिधाय भिक्षाचर्यामाह—

अट्ठविहगोयरग्गं तु, तहा सत्तेव एसणा । अभिग्गहा य जे अन्ने, भिक्खायरियमाहिया ॥ २५ ॥

'अट्ठविहगोयरग्ग'ति प्राकृतत्वाद् अष्टविध –अष्टप्रकारोऽग्र –प्रधान आधाकर्मादिपरिहारेण स चासौ गौरिव चरणम्–उच्चावचकुलेष्वविशेषेण पर्यटन गोचरश्चाष्टविधाग्रगोचर, 'तुः' उत्तरभेदापेक्षया समुच्चये, तथा ससैवेषणा अभिगृह्यन्त इत्यभिग्रहा' 'च' समुच्चये ये अन्ये एतदतिरिक्ता, ते किमित्याह–'भिक्खायरियमाहिय'त्ति सूत्रत्वेन भिक्षाचर्याविषयत्वात् भिक्षाचर्या वृत्तिसङ्क्षेपापरनामिकाऽऽख्याता, अत्र चाष्टावग्रगोचरभेदा, पेडादय एव शम्बूकावर्त्ताया द्वैविध्याश्रयणात तथा ऋज्व्याद्याश्चापराया प्रक्षेपात्, ससैषणाश्चेमा –"ससट्ठमससट्ठा उद्धड तह अप्पलेवडा चेव। उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया ॥ १ ॥" 'अभिग्रहाश्च' द्रव्यक्षेत्रकालभावविषयाः, तत्र द्रव्याभिग्रहा –कुन्ताग्रादिसस्थितमण्डकखण्डादि ग्रहीष्य इत्यादय क्षेत्राभिग्रहा –देहलीजङ्घयोरन्तर्विधाय यदि दास्यति ततो ग्राह्यमित्यादयः, कालाभिग्रहाः–सकलभिक्षाचरनिवर्त्तनावसरे मया पर्यटितव्यमित्यादय, भावाभिग्रहास्तु–हसन् रुदन् बद्धो वा यदि प्रतिलाभयिष्यति ततोऽहमादास्ये न त्वन्यथेत्येवमादय इति सूत्रभावार्थ' ॥ (ग्रन्थाग्रम् १५०००)॥

अभिहिता भिक्षाचर्या, रसपरित्यागमाह—

खीरदहिसप्पिमाई, पणीय पाणभोयण । परिवज्जणं रसाण तु, भणिय रसविवज्जण ॥ २६ ॥

क्षीर–दुग्ध दधि–तद्विकार सर्पि–घृत तदादि, आदिशब्दाद् गुडपक्वान्नादिपरिग्रह, 'प्रणीतम्' अतिबृंहक पीयत इति पान—खर्जूररसादि भुज्यत इति भोजन–गलद्बिन्दूदनादि अनयोः समाहारे पानभोजन सोपस्कारत्वादेषा

'परिवर्जनं' परिहरणं रसानां रस्यमानत्वेन 'तुः' पूरणे 'भणितम्' अभिहितं तीर्थकृदादिभिरिति गम्यते, रसविवर्जनं नाम बाह्यं तप इति सूत्रार्थः ॥ उक्तो रसपरित्यागः, कायक्लेशमाह—

ठाणा वीरासणाईया, जीवस्स उ सुहावहा । उग्गा जहा धरिज्जंति, कायकिलेसं तमाहियं ॥ २७ ॥

स्थीयत एभिरिति स्थानानि—कायावस्थितिभेदा वीरासनं—यत्सिंहासनस्थितस्य तदपनयने तथैवावस्थानं तदादिर्येषां तानि वीरासनादिकानि, आदिशब्दाद्गोदोहिकासनादिपरिग्रहः, सूत्रत्वाल्लिङ्गव्यत्ययात्, लोचाद्युपलक्षणं चैतत्, तथाऽऽह—"वीरासण उक्कुडुगासणाइ लोयाइओ अ विण्णेओ । कायकिलेसो संसारवासणिव्वेयहेउत्ति ॥ १ ॥" 'जीवस्य' जन्तोः 'तुः' अवधारणे भिन्नक्रमश्च, ततः सुखावहान्येव मुक्तिसुखप्रापकत्वेन शुभावहान्येव वा 'उग्राणि' दुरनुष्ठेयतयोत्कटानि 'यथा' येन प्रकारेण 'धार्यन्ते' इत्यासेव्यन्ते गम्यमानत्वाद्यतिभिः 'कायकिलेसं तमाहिय'न्ति कायस्य क्लेशो—बाधनं कायक्लेशः सः 'आख्यातः' कथितस्तथैवेति शेषः, इह च संसार्यात्मनः कायानुगतत्वेन तत्क्लेशे यद्यप्यवश्यं क्लेशसम्भवस्तथाऽपि भावितात्मनामसौ सन्नप्यसत्सम एवेति तदनभिधानमिति सूत्रार्थः ॥ एवं कायक्लेशमुक्त्वा संलीनतां वक्तुमाह—

एगंतमणावाए, इत्थीपसुविवज्जिए । सयणासणसेवणया, विवित्तं सयणासणं ॥ २८ ॥

१ वीरासनोत्कटुकासनादि लोचादिकश्च विज्ञेयः । कायक्लेशः संसारवासनिर्वेदहेतुरिति ॥ १ ॥

'एगत'ति सुब्व्यत्ययाद् 'एकान्ते' जनेनानाकुले 'अनापाते' स्त्र्याद्यापातरहिते 'स्त्रीपशुविवर्जिते' तत्रैव स्थितस्त्र्यादिरहिते शून्यागारादाविति भाव' 'सयणासणसेवणय'त्ति सूत्रत्वात् शयनासनसेवन विविक्तशयनासन बाह्य तप उच्यत इति शेष , उपलक्षण चैतदेषणीयफलकादिग्रहणस्य, तथा चानेन विविक्तचर्या नाम सलीनतोक्ता भवति, यतस्तल्लक्षणमिदम्–"आरामुज्जाणाइसु थीपसुपडगविवज्जिए ठाण । फलगाईण य गहण तह भणिय एसणिज्जाण ॥ १ ॥" शेषसलीनतोपलक्षण चासौ, प्राधान्याच्चास्या एव साक्षादभिधान, प्राधान्य चेन्द्रियादिसलीनतोपकारित्वादस्या , इय चेरथ चतुर्विधा, यत उक्तम्–"इदियकसायजोगे पडुच्च सलीणया मुणेयव्वा । तह जा विवित्तचरिया पण्णत्ता वीयरागेहि ॥ १ ॥" तत्रेन्द्रियसलीनता श्रोत्रादिभिरिन्द्रियै शब्दादिषु सुन्दरेतरेषु रागद्वेषाकरण, कषायसलीनता तदुदयनिरोध उदीर्णविफलीकरण च, योगसलीनता च मनोयोगादीनामकुशलाना निरोध कुशलानामुदीरणमिति सूत्रार्थ ॥ उक्तमेवार्थमुपसहरन्नुत्तरग्रन्थसम्बन्धाभिधानायाह—

एसो बाहिरगतवो, समासेण वियाहिओ । अब्भिंतर तव इत्तो, वुच्छामि अणुपुव्वसो ॥ २९ ॥

'एतत्' अनन्तरोक्त बाह्यक तप समासेन व्याख्यातम्, आह–किं पुनरितो बाह्यात्तपस फलमवाप्यते ?, उच्यते,

१ आरामोद्यानादिषु स्त्रीपशुपण्डकविवर्जिते स्थाने । फलकादीना च ग्रहण तथा भणितमेषणीयानाम् ॥ १ ॥ २ इन्द्रियकषाययोगान् प्रतीत्य सलीनता ज्ञातव्या । तथा या विविक्तचर्या प्रज्ञप्ता वीतरागै ॥ २ ॥

निःसङ्गता शरीरलाघवेन्द्रियविजयसंयमरक्षणादिगुणयोगात् शुभध्यानावस्थितस्य कर्मनिर्जरणमिति, अभ्यन्तरतपः 'इतः' बाह्यतपोऽभिधानादनन्तरं 'वक्ष्यामि' अभिधास्ये 'अणुपुव्वसो'त्ति आनुपूर्व्येति सूत्रार्थः ॥ प्रतिज्ञातमाह—

पायच्छित्तं विणओ, वेयावच्चं तहेव सज्झाओ। झाणं च विउस्सग्गो, एसो अब्भिंतरो तवो ॥ ३० ॥

अक्षरार्थः सुगम एव, भावार्थं तु सूत्रत एवाह सूत्रकृत्—

आलोअणारिहाईयं, पायच्छित्तं तु दसविहं। जे भिक्खू वहई सम्मं, पायच्छित्तं तमाहियं ॥ ३१ ॥ अब्भुट्ठाणं अंज(णंज)लिकरणं, तहेवासण दायणं। गुरुभत्तिभावसुस्सूसा, विणओ एस वियाहिओ ॥ ३२ ॥ आयरियमाईयंमि, वेयावच्चे य दसविहे। आसेवणं जहाथामं, वेयावच्चं तमाहियं ॥ ३३ ॥ वायणा पुच्छणा चेव, तहेव परियट्टणा। अणुप्पेहा धम्मकहा, सज्झाओ पंचहा भवे ॥ ३४ ॥ अट्टरुद्दाणि वज्जित्ता, झाइज्जा सुसमाहिए। धम्मसुक्काइं झाणाइं, झाणं तं तु बुहा वए (वयन्ति) ॥ ३५ ॥ सयणासण ठाणे वा, जे उ भिक्खू ण वावरे। कायस्स विउस्सग्गो, छट्ठो सो परिकित्तिओ ॥ ३६ ॥

आलोचनं विकटनं प्रकाशनमाख्यानं प्रादुष्करणमित्यनर्थान्तरं, तदर्हत्यालोचनार्हं—यत् पापमालोचनात एव शुध्यति, उक्तं हि—"आलोयणमरिहंति आ मज्जा लोयणा गुरुसगासे। जं पाव विगडिएणं सुज्झइ पच्छित्तपढमेयं ॥१॥"

१ आलोचनार्हमिति आऽऽमर्यादायामालोचना गुरुसकाशे। यत् पापं विकटनेन शुध्यति प्रायश्चित्तं प्रथममिदम् ॥ १ ॥

फटकुट्यादिना सङ्कटद्वारे, अटव्या कुडङ्गादिषु वा, अन्यथा दीनादियाचने दानादानयो पुण्यव धप्रद्वेषादिदर्शनात्, सवृतो वा सकलाश्रवविरमणात्, 'समकम्' अन्यै सह, न त्वेकाक्येव रसलम्पटतया समूहासहिष्णुतया वा, अत्राह च-"साहवो तो चियत्तेण, निमतिज्ज जहक्कम। जइ तत्थ कोइ इच्छेज्जा, तेहि सद्धि तु भुजए ॥ १ ॥' त्ति, गच्छस्थितसामाचारी चेय गच्छस्यैव जिनकल्पिकादीनामपि मूलत्वरयापनायोक्ता, उक्त हि—'गच्छे चिय निम्मा ओ' इत्यादि, यद्वा 'समय'त्ति सममेव समक—सरसविरसादिष्वभिष्वङ्गादिविशेपरहित, सम्यग् यत सयत यतिरित्यर्थ, 'भुञ्जीत' अश्नीयात् 'जय'त्ति यतमान 'अप्परिसाडिय'त्ति परिसाटविरहितमिति सूत्रार्थ ॥ ३५ ॥ यदुक्त 'यतमान'इति, तत्र वाग्यतनामाह—

सुकडत्ति सुपक्कत्ति, सुछिन्न सुहडे मडे। सुनिट्ठिए सुलट्ठित्ति, सावज्ज वज्जए मुणी ॥ ३६ ॥ (सूत्रम्)

व्याख्या—'सुकृत' सुष्ठु निर्वर्तितमन्नादि 'सुपक्क' घृतपूर्णादि, 'इति' उभयत्र प्रदर्शने, 'सुच्छिन्न' शाकपत्रादि 'सुहृत' शाकपत्रादेस्तिक्तत्वादि घृतादि वा सूपविलेपिकादीना, तथा 'मडे'त्ति प्रक्रमात् सुष्ठु मृत घृताद्येय सक्तुसूपादौ, तथा सुष्ठु निष्ठितमित्यतिशयेन निष्ठा—रसप्रकर्षपर्यन्तात्मिका गत, 'सुलट्ठि'त्ति सर्वैरपि रसादिभि प्रकारै शोभनमिति, 'इति' एवप्रकारार्थ, एवप्रकारमन्यदपि सावद्य प्रक्रमाद्वचो, वर्जयेन्मुनि। यद्वा—सुष्ठु कृत यदनेनाराते

१ साधून् तत श्रीत्या निमन्त्रयेत् यथाक्रमम्। यदि तत्र कोऽपीच्छेत् तेन सार्धं तु भुञ्जीत ॥ १ ॥ २ गच्छ एव निर्मात

तस्मिन् 'दशविधे' दशप्रकारे, दशविधत्वं चाचार्यादिविषयभेदाद्, उक्तं हि—"आयरिय १ उवज्झाय २ थेर ३–तवस्सी ४ गिलाण ५ सेहाणं ६। साहम्मिय ७ कुल ८ गण ९ संघ १० संगयं तमिह कायवं ॥ १ ॥" 'आसेवनम्' एतद्विषयमनुष्ठानं 'यथास्थानं' स्वसामर्थ्यानतिक्रमेण वैयावृत्त्यं तदाख्यातमिति ३ ॥ स्वाध्यायमाह—'वायणे'–त्यादि प्राग्व्याख्यातप्रायमेव ४ ॥ सम्प्रति ध्यानमाह—ऋतं–दुःखम्, उक्तं हि–"ऋतशब्दो दुःखपर्यायवाच्याश्रीयते," ऋते भवमार्त्तं, तथा रोदयत्यपरानिति रुद्रः–प्राणिवधादिपरिणत आत्मैव तस्येदं कर्म रौद्रम्, आर्त्तं च रौद्रं च आर्त्तरौद्रे, प्राकृतत्वाच्च बहुवचननिर्देशः, 'वर्जयित्वा' हित्वा ध्यायेत्सुसमाहितः प्राग्वत्, किमित्याह—धर्मः—क्षमादिदशलक्षणस्तस्मादनपेतं धर्म्यं शुक्लं—शुचि—निर्मलं सकलमिथ्यात्वादिमलविलयनात् यद्वा शुगिति—दुःखमष्टप्रकारं वा कर्म ततः शुचं क्लमयति—निरस्यतीति शुक्लमनयोर्द्वन्द्वस्ततः धर्म्यशुक्लध्याने स्थिराध्यवसानरूपे; उक्तं हि—"जं थिरमज्झवसाणं तं झाणं जं चलं तयं चित्तं"ति, 'ध्यानं' ध्यानाख्यं तपस्तत् तुशब्दस्यैवकारार्थत्वात्तदेव बुधाः 'वयंति' वदन्ति ५॥ अधुना व्युत्सर्गमाह–शय्यत इति शयनं–संस्तारकादौ तिर्यक् शरीरनिवेशनं तत्रासनम्–उपवेशनं तस्मिन्, उभयत्र सूत्रत्वात्सुपोर्लुक् 'स्थाने' ऊर्ध्वस्थाने 'वा' विकल्पे प्रत्येकं च योज्यते, स्वशक्त्यपेक्षं स्थित

१ आचार्योपाध्यायस्थविरतपस्विग्लानशैक्षाणाम्। साधर्मिककुलगणसङ्घे संगतं तदिह कर्त्तव्यम् ॥ १ ॥ २ यत् स्थिरमध्यवसानं तत् ध्यानं यत् चलत् तत् चित्तम्।

आदिशब्दात्प्रतिक्रमणार्हादिपरिग्रह , इह पुनरुपचारादेवंविधपापविशुद्ध्युपायभूतान्यालोचनादीन्येवालोचनार्हादिशब्देनोक्तानि, उपचारनिमित्त चात्र विषयविषयिभाव , एवंविधानि हि पापान्यालोचनादीना विषय आलोचनादीनि च विषयीणीति भावनीय, तथा चान्यत्र 'आलोयणपडिक्कमणे' त्यादिनाऽर्हंश द विनैव तद्भेदाभिधान, तदेवंविधमालोचनार्हमादिर्यस्य तदालोचनार्हादिक, 'शेषाद्विभाषे'ति (पा ५ ४ १५४) कप्प्रत्यय , 'प्रायश्चित्तम्' उक्तनिरुक्त 'तु' अवधारणे भिन्नक्रमश्च, तत 'दशविधमेव' दशप्रकारमेव, दशविधत्व चेत्थम्—"आलोयण पडिक्कमणे मीस विवेगे तहा विउस्सग्गे। तव छेय मूल अणवट्ठया य पारंचिए चेव ॥१॥" 'जइ'त्ति आर्षत्वाद् यद्भिक्षु 'वहति' आसेवते 'सम्यग्' अवैपरीत्येन प्रायश्चित्त तदाख्यातम् १॥ विनयमाह—अभ्युत्थानमञ्जलिकरणमुभयमपि प्रतीतं 'तथे'ति समुच्चये 'एवे'ति पूरणे 'आसणदायण'ति सूत्रत्वादासनदान पीठादिदानमित्यर्थ , गुरूणा—गौरवार्हाणा भक्तिर्गुरुभक्ति , भाव'—अन्त करण तेन शुश्रूषा—तदादेश प्रति श्रोतुमिच्छा पर्युपासना वा भावशुश्रूषा, विनय एष व्याख्यात २॥ वैयावृत्त्यमाह—'आयरियमाइ'त्ति मकारोऽलाक्षणिकस्तत 'आचार्यादिके' आचार्य(यादि)विषये व्यापृतभावो वैयावृत्त्यम्—उचिताहारादिसम्पादनम् , उक्तञ्च—"वेयावच्च वावडभावो तह धम्मसाहणणिमित्त। अन्नाइयाण विहिणा संपाडणमेस भावत्थो॥१॥"

१ आलोचना प्रतिक्रमण मिश्र विवेकस्तथा व्युत्सर्ग । तपश्छेदो मूलमनवस्थाप्यता च पाराञ्चिकमेव ॥ १ ॥ २ वैयावृत्त्य व्यापृतभावस्तथा धर्मसाधननिमित्तम् । अन्नादिकाना विधिना सपादनमेष भावार्थ ॥ २ ॥



## अथ चरणाख्यमेकत्रिंशत्तममध्ययनम् ।

व्याख्यातं त्रिंशत्तममध्ययनम्, अधुनैकत्रिंशत्तममारभ्यते, अस्य चायमभिसम्बन्धः—अनन्तराध्ययने तप उक्तम्; इह तु तच्चरणवत एव सम्यग् भवतीति चरणमुच्यते इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य पूर्ववदुपक्रमादिद्वार-चतुष्टयप्ररूपणा तावद्यावन्नामनिष्पन्ननिक्षेपे चरणविधिरिति नाम, अतश्चरणविधिशब्दनिक्षेपायाह निर्युक्तिकृत्—

निक्खेवो चरणंमि(मी)चउविहो दुविहो य होइ दव्वंमि। आगमनोआगमओ नोआगमओ य सो तिविहो॥
जाणगसरीरभविए तव्वतिरित्ते य गइभिक्खमाईसुं। आचरणे आचरणं भावाचरणं तु णायव्वं ॥५१५॥
णिक्खेवो उ विहीए चउविहो दुविहो य होइ दव्वंमि। आगमनोआगमओ नोआगमओ य सो तिविहो ॥
जाणगसरीरभविए तव्वतिरित्ते य इंदियत्थेसुं। भावविही पुण दुविहा संजमजोगो तवो चेव ॥ ५१७॥

गाथाचतुष्टयं स्पष्टमेव, नवरं 'तव्वइरित्ते य'त्ति तद्व्यतिरिक्तं च गतिभिक्षादिषु गतिः—गमनं भिक्षा—भक्षणं, पठ्यते च 'चर गतिभक्षणयोः' इति, आदिशब्दादासेवापरिग्रहः, उक्तं हि—"चरतिरासेवायामपि वर्त्तते" इति, तत एतेषु सत्सु

इति गम्यते, यस्तु भिक्षु 'न चावरे'त्ति 'न व्याप्रियते' न चलनादिक्रिया कुरुते, यत्तदोर्नित्याभिसम्बन्धादर्थवशाद् विभक्तिपरिणामतश्च तस्य भिक्षो 'कायस्य' शरीरस्य 'व्युत्सर्गं' चेष्टा प्रति परित्यागो य 'छट्ठो सो परिकित्तितो'त्ति सूत्रत्वाल्लिङ्गव्यत्यये षष्ठ 'तत्' प्रक्रमादभ्यन्तर तप 'परिकीर्त्तित' तीर्थकरादिभिरुक्त, शेषव्युत्सर्गोपलक्षण चैतद्, अनेकविधत्वात्तस्य, उक्त च–"दव्वे भावे य तहा दुविधुस्सग्गो चउव्विहो दव्वे। गणदेहोवहिभत्ते भावे कोहाइचातोत्ति ॥ १ ॥" इति सूत्रपञ्चार्थ ॥ सम्प्रत्यध्ययनार्थमुपसहरन्नस्यैव फलमाह—

एय तव तु दुविह, ज सम्म आयरे मुणी। से खिप्प सव्वससारा, विप्पमुच्चइ पडिए ॥ ३७ ॥ त्तिबेमि ॥

॥ तवमग्गिज्ज ॥ ३८ ॥

'एतत्' अनन्तरोक्तस्वरूप 'तव तु दुविह'ति तप द्विविधमपि उक्तभेदतो द्विभेदमपि य. सम्यक् 'आचरेत्' आसेवते मुनि स क्षिप्र 'सर्वससारात्' चतुर्गतिरूपात् 'विप्रमुच्यते' पृथग् भवति पण्डित, पठन्ति च–'सो खवेत्तु रय अरओ, नीरय तु गइ गए' इह च 'आयरे'त्ति तिङ्व्यत्ययादाचारीत्, अतीतनिर्देशश्च भूतभविष्यतोरप्युपलक्षण, कालत्रयेऽपि तुल्यमाहात्म्यत्वादस्यैतत्क्षेत्रापेक्षा (क्षया) वेति सूत्रार्थ ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत्। इत्यवसितोऽनुगमो, नयाश्च प्राग्वत् ॥ इत्युत्तराध्ययनश्रुतस्कन्धटीकाया श्रीशान्त्याचार्यविरचिताया तपोमार्गगति नामक त्रिंशत्तममध्ययन समाप्तमिति ॥ ३० ॥

१ द्रव्ये भावे तथा द्विविध उत्सर्गः चतुर्विधो द्रव्ये। गणदेहोपधिभक्ते भावे क्रोधादित्याग इति ॥ १ ॥

सुखावहमेव शुभावहमेव वा, यथा चैतदेवं तथा फलोपदर्शनद्वारेणाह—यं 'चरित्वा' आसेव्य वहवो जीवाः 'तीर्णाः' अतिक्रान्ताः 'संसारसागरं' भवसमुद्रं मुक्तिमवाप्ता इत्यभिप्राय इति सूत्रार्थः ॥

एगओ विरइं कुज्जा, एगओ अपवत्तणं। अस्संजमे नियत्तिं च, संजमे य पवत्तणं ॥ २ ॥ रागदोसे य दो पावे, पावकम्मपवत्तणे। जे भिक्खू रुंभई निच्चं, से न अच्छइ मंडले ॥३॥ दंडाणं गारवाणं च, सल्लाणं च तियं तियं। जे भिक्खू चयई निच्चं, से न अच्छइ मंडले ॥ ४ ॥ दिव्वे य जे उवस्सग्गे, तहा तेरिच्छमाणुसे। जे भिक्खू सहई निच्चं, से न अच्छइ मंडले ॥ ५ ॥ विगहाकसायसन्नाणं, झाणाणं च दुयं तहा। जे भिक्खू वज्जई निच्चं, से न अच्छइ मंडले ॥ ६ ॥ वएसु इंदियत्थेसु, समिईसु किरियासु य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ ७॥ लेसासु छसु काएसु, छक्के आहारकारणे। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ ८ ॥ पिंडुग्गहपडिमासुं, भयट्ठाणेसु सत्तसु। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ ९ ॥ मएसु बंभगुत्तीसु, भिक्खुधम्मंमि दसविहे। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ १० ॥ उवासगाणं पडिमासु, भिक्खूणं पडिमासु य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ ११ ॥ किरियासु भूयगामेसु, परमाहम्मिएसु य। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥ २२ ॥ गाहासोलसएहिं, तहा अस्संजमंमि अ। जे भिक्खू जयई निच्चं, से न अच्छइ मंडले ॥१३॥ बंभंमि नायज्झयणेसु, ठाणेसु यऽसमा-

प्रक्रमाद्द्रव्यमेव सुव्व्यत्ययेन गत्यादयो वा भावचरणकार्यकिरणत्वेन तद्व्यतिरिक्तद्रव्यचरणं, तथा 'आचरणे' प्रस्तावाज्ज्ञानाद्याचारे 'आचरणम्' अनुष्ठान सिद्धान्ताभिहित 'भावे' विचार्ये चरणं 'तु' विशेषणे ज्ञातव्यमिति ॥ तथा 'इंदियत्थेसु'न्ति इन्द्रियाणि—स्पर्शनादीनि तेषामर्था —स्पर्शादयस्तेषु प्रक्रमाद् य 'विधि' अनुष्ठानमासेवनमिति-यावत्, अस्यापि द्रव्यत्व भावविधिफलासाधकत्वेन द्रव्यप्राधान्यविवक्षया वा, भावविधि पुन 'द्विविधः' द्विप्रकार', द्वैविध्यमाह—'सयमयोग' सयमव्यापार 'तपश्चैव' अनशनाद्यनुष्ठानरूप, चरणासेवन ह्यत्र भावविधि, स चैवविध एवेति गाथाचतुष्टयार्थ ॥ सम्प्रति येनेह प्रकृत तदुपदर्शयन्नुपदेशमाह—

पगय तु भावचरणे भावविहीए अ होइ नायव । चइऊण अचरणविहि चरणविहीए उ जइयव ॥५१८॥

निगदसिद्धा, नवर 'भावचरणेन' प्रस्तावाच्चारित्राचारानुष्ठानेन 'अचरणविधिम्' अनाचारानुष्ठानं त्यक्त्वा 'चरणविधौ' उक्तरूपे 'यतितव्य' यत्नो विधेय इति गाथार्थ ॥ उक्तो नामनिष्पन्ननिक्षेप', सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

चरणविहिं पवक्खामि, जीवस्स उ सुहावह । ज चरित्ता बहू जीवा, तिन्ना संसारसागर ॥ १ ॥

चरणस्य विधि आगमोक्तन्याय चरणविधिस्त प्रवक्ष्यामि जीवस्य 'तु' अवधारणे भिन्नक्रमस्तत 'सुहावह'त्ति

न तिष्ठति मण्डले, पठन्ति च—'से ण गच्छइ मंडले'त्ति 'न' नैव 'गच्छति' याति भ्राम्यतीति योऽर्थः, उभयत्र च मण्डलशब्दस्य वृद्धव्याख्या—मण्डलग्रहणाच्चतुरन्तः संसारः परिगृह्यते, मुक्तिपदप्राप्तिश्चात्र हेतुः, एवमुत्तरत्र सूत्रेष्वपि नित्यमित्यादि व्याख्येयम् । दण्ड्यते—चारित्रैश्वर्यापहारतोऽसारीक्रियते एभिरात्मेति दण्डा—दुष्प्रणिहितमानसादिरूपा मनोदण्डादयः, उक्तं हि—"'जह लोए दंडिज्जइ दव्वं हीरइ य वज्झए यावि । इय दंडंतऽप्पाणं मणमाईं दुप्पणिहिएहिं ॥ १ ॥" तेषां 'त्रिकं' मनोदण्डवाग्दण्डकायदण्डरूपं, तथा गुरुः—लाभाभिमानाध्मातचित्त आत्मैव तद्भावास्तस्य वैतान्यध्यवसानानि गौरवाणि तेषां 'त्रिकं' ऋद्धिगौरवरसगौरवसातगौरवात्मकं, तथा शल्यते—अनेकार्थत्वाद्बाध्यते जन्तुरेभिरिति शल्यानि तेषां च 'त्रिकं' मायाशल्यनिदानशल्यमिथ्याशल्यात्मकम्, उभयत्र 'चः' समुच्चये, त्रिकं त्रिकमिति च प्रत्येकं त्रैविध्याभिधानतो व्याख्यातमेव, यो भिक्षुः 'त्यजति' वर्जयति । दिव्यांश्च हास्यप्रद्वेषविमर्शपृथग्विमात्राभिर्देवविहितान् उप—सामीप्येन सृज्यन्ते—देवादिभिरुत्पाद्यन्त इत्युपसर्गास्तान्, तथा 'तेरिच्छमाणुसे'त्ति तिरश्चामेते भयप्रद्वेषाहारहेत्वपत्यलयनसंरक्षणहेतोस्तैः क्रियमाणत्वात्तैरश्चाः तथा मानुषाणामेते हासप्रद्वेषविमर्शकुशीलप्रतिसेवनात्मकनिमित्ततस्तैर्विधीयमानत्वान्मानुषकाश्च तैरश्चमानुषकास्तान् उपलक्षणत्वात्पूर्वत्र चशब्दस्यानुक्तसमुच्चयार्थत्वाद्वाऽऽत्मसंवेदनीयांश्च घट्टनप्रपतनस्तम्भनश्लेषणोद्भवान् यो भिक्षुः 'सहते'

१ यथा लोके दण्ड्यते द्रव्यं ह्रियते च वध्यते चापि । इति दण्डयन्त्यात्मानं मनआदीनि दुष्प्रयुक्तैः ॥ १ ॥

हिए। जे भिक्खू जयई निच्च, से न अच्छइ मडले ॥१४॥ इक्कवीसाए सबलेसु, बावीसाए परीसहे। जे भिक्खू जयई निच्च, से न अच्छइ मडले ॥ १५ ॥ तेवीसईसुयगडे, रूवाहिएसु सुरेसु य। जे भिक्खू जयई निच्च, से न अच्छइ मडले ॥ १६ ॥ पणवीसा भावणाहिं च, उद्देसेसु दसाइण। जे भिक्खू जयई निच्च, से न अच्छइ मडले ॥१७॥ अणगारगुणेहि च, पगप्पमि तहेव य। जे भिक्खू जयई निच्च, से न अच्छइ मडले १८ पावसुयपसगेसु [य], मोहट्ठाणेसु चेव य। जे भिक्खू जयई निच्च, से न अच्छइ मडले ॥ १९ ॥ सिद्धाइगुण-जोगेसु, तित्तीसासायणासु य। जे भिक्खू जयई निच्च, से न अच्छइ मडले ॥ २० ॥

तत्र च 'एकत' एकस्मात् स्थानाद् विरतिं विरमणमुपरममितियावत् 'कुर्यात्' विदध्यात् 'एकतश्च' एकस्मिंश्च, आद्यादित्वात्ससम्यन्तात्तसि, 'च' समुच्चये भिन्नक्रम, प्रवर्त्तन च कुर्यादिति सम्बन्ध। एतदेव विशेषत आह—'असयमात्' हिंसादिरूपात् पञ्चम्यर्थे सप्तमी 'निवृत्तिं च' परिहाररूपा 'सयमे' उक्तरूपे चस्य भिन्नक्रमत्वात्प्रवर्त्तन च कुर्यादित्यनुवर्त्तते, चशब्दादुभयत्र परस्परापेक्षया समुच्चये। तथा 'रागद्वेषौ' उक्तरूपौ 'च' पूरणे 'द्वौ' द्विसख्यौ, एतदभिधान च प्राकृते द्वित्वबहुत्वयो सदिग्धत्वाद् उक्तार्थानामप्यपूर्वो द्वावानयेत्यादिवल्लोके प्रयोगदर्शनाच्च, 'पापौ' कोपादिपापप्रकृतिरूपत्वात् पापकर्माणि–मिथ्यात्वादीनि प्रवर्त्तयतो–जनयत इति पापकर्मप्रवर्त्तकौ य 'भिक्षु' तपस्वी 'रुणद्धि' उदयस्य कथञ्चिदुदितयोर्वा प्रसरस्य निराकरणतस्तिरस्कुरुते 'नित्य' सदा स. 'नास्ते'

"वसहिकहणिसिज्जिंदिय कुड्डिंतरपुव्वकीलियपणीए । अतिमायाहारविभूसणा य णव वंभगुत्तीओ ॥ १ ॥" भिक्षुधर्मे 'दशविधे' क्षान्त्यादिभेदतो दशप्रकारे प्रागुक्त एव यो भिक्षुर्यतते यथावत्परिहारासेवनपरिपालनादिभिः । उपासते-सेवन्ते यतीनित्युपासकाः-श्रावकास्तेषां 'प्रतिमासु' अभिग्रहविशेषरूपास्वेकादशसु दर्शनादिषु, उक्तं हि- 'दंसणवयसामाइय पोसहपडिमाअवंभसचित्ते । आरंभपेसउद्दिट्ठवज्जए समणभूए य ११॥१॥" 'भिक्षूणां' यतीनां 'प्रतिमासु च' मासिक्यादिषु द्वादशसु, यत आगमः-"मासाई सत्तंता पढमाबितितितिय सत्तराइदिणा । अहराइएगराई भिक्खुपडिमाण बारसगं ॥१॥" यो भिक्षुर्यतते यथावत्परिज्ञानोपदेशपालनादिभिः। क्रियन्ते मिथ्यात्वादिक्रोडीकृतैर्जन्तुभिरिति क्रियाः—कर्मबन्धनिबन्धनभूताश्चेष्टास्तास्वर्थानर्थादिभेदतस्त्रयोदशसु, तथा चागमः— "अट्ठाणट्ठाहिंसाऽकम्हा दिट्ठी य मोसऽदिण्णे य । अज्झत्थमाणमेत्ते मायालोभेरियावहिया ॥१॥" अभूवन् भवन्ति भविष्यन्ति चेति भूतानि-प्राणिनस्तेषां ग्रामाः-सङ्घाता भूतग्रामास्तेष्वेकेन्द्रियसूक्ष्मेतरादिभेदतश्चतुर्दशसु, उक्तं हि-

१ वसतिः कथानिषद्येन्द्रियाणि कुड्यान्तरं पूर्वक्रीडितं प्रणीतम् । अतिमात्राहारो विभूषणा च नव ब्रह्मगुप्तयः ॥ १ ॥ २ दर्शनं व्रतानि सामायिकं पोषधं प्रतिमा अब्रह्मचर्यं सचित्तम् । आरम्भः प्रेष्य उद्दिष्टवर्जकः श्रमणभूतश्च ॥२॥ ३ मासादयः सप्तान्ताः प्रथमा द्वितीया तृतीया सप्तरात्रिदिनाः । अहोरात्रिकी एकरात्रिकी भिक्षुप्रतिमानां द्वादशकम् ॥ ३ ॥ ४ अर्थानर्थहिंसे अकस्माद्दृष्टिश्च मृषाऽदत्तं च । अध्यात्मं मानो मैत्री माया लोभ ईर्यापथिकी ॥ ५ ॥

सम्यगध्यास्ते। विरुद्धा विरूपा वा कथा विकथा, सा च स्त्रीभक्तजनपदनृपतिभेदतश्चतुर्धा, कषाया —क्रोधमानमायालोभा सञ्ज्ञा—आहारभयमैथुनपरिग्रहाख्या, एषा कृतद्वन्द्वाना प्रत्येक चतुष्कमिति शेष, 'झाणाण च'त्ति प्राकृतत्वाद् ध्यानयोश्च द्विकमार्त्तरौद्ररूप तथा यो भिक्षु 'वर्जयति' परिहरति, चतुर्विधत्वाच्च ध्यानस्यात्र प्रस्तावेऽभिधानम्। 'व्रतेषु' हिंसाऽनृतस्तेयाब्रह्मपरिग्रहविरतिलक्षणेषु 'इन्द्रियार्थेषु' शब्दरूपरसगन्धस्पर्शेषु 'समितिषु' समित्यध्ययनाभिहितासु च क्रियासु—कायिक्याधिकरणिकीप्राद्वेषिकीपारितापनिकीप्राणातिपातरूपासु, पठन्ति च 'समीतीसु य तहेव य'त्ति; अत्र च चशब्दात्क्रियासु चेति यो भिक्षु 'यतते' यत्न कुरुते यथावत्परिपालनातो व्रतसमितिषु माध्यस्थ्यविधानतश्चेन्द्रियार्थेषु परिहारतश्च क्रियासु। 'लेश्यासु' वक्ष्यमाणरूपासु 'षट्सु कायेषु' पृथिव्यादिषु वक्ष्यमाणेष्वेव 'षट्के' षट्परिमाणे 'आहारकारणे' वेदनाद्युक्तरूपे यो भिक्षु 'यतते' यथायोग निरोधोत्पादनरक्षानुरोधविधानेन यत्न कुरुते। 'पिण्डावग्रहप्रतिमासु' आहारग्रहणविषयाभिग्रहरूपासु ससृष्टादिष्वनन्तराध्ययनोक्तासु सप्तस्विति सबध्यते, तथा 'भयस्थानेषु' भयस्य—भयमोहनीयसमुत्थात्मपरिणामस्योत्पत्तिनिमित्ततयाऽऽश्रयेषु इहलोकादिषु प्रागुक्तरूपेषु 'सप्तसु' सप्तसङ्ख्येषु यो भिक्षु 'यतते' एकत्र तु पालनातोऽन्यत्र तद्वशेन भयाकरणत। मदा—जातिमदादय प्रागभिहिता अष्टौ तेषु, प्रतीतत्वाच्चेहान्यत्र च सूत्रे सङ्ख्यानभिधान, ब्रह्म—ब्रह्मचर्य तस्य गोपन गुप्तिर्येकाभिस्ता ब्रह्मगुप्तयो गमकत्वाद्बहुव्रीहिस्तासु वसत्यादिषु नवसु, उक्त च—

प्रतिकृतं, सुष्ठु पक्वं मांसाशनादि, सुच्छिन्नोऽयं न्यग्रोधपादपादिः, सुहृतं कदर्यादर्थजातं, सुहतो वा चौरादिः, सुमृतोऽयं प्रत्यनीकधिग्वर्णादिः, सुनिष्ठितोऽयं प्रासादकूपादिः, 'सुलट्ठि'त्ति शोभनोऽयं करितुरगादिरिति सामान्येनैव सावद्यं वचो वर्जयेन्मुनिः। निरवद्यं तु सुकृतमनेन धर्मध्यानादि, सुपक्वमस्य वचनविज्ञानादि, सुच्छिन्नं स्नेहनिगडादि, सुहृतमुपकरणमशिवोपशान्तये, सुहतं वा कर्मानीकादि, सुमृतमस्य पण्डितमरणमर्तुः, तथा सुनिष्ठितोऽसौ साध्वाचारविषये, 'सुलट्ठि'त्ति शोभनमस्य तपोऽनुष्ठानमित्यादिरूपं, कारणतो वा—"पयत्तपक्केत्ति व पक्कमालवे, पयत्तछिन्नत्ति व छिन्नमालवे। पयत्तलट्ठेत्ति व कम्महेउयं, पहारगाढेत्ति व गाढमालवे ॥१॥" इत्याप्तोपदेशात् प्रयत्नकृतपक्वादिरूपं वदेदपीति, अस्मिंश्च पक्षे प्रतिरूपयोगयोजनात्मको वाचिकविनय उक्त इति सूत्रार्थः ॥ ३६ ॥ विनय एवादरख्यापनाय सुविनीतेतरोपदेशदानतो यद्गुरोर्भवति तदुपदेशयितुमाह—

रमए पंडिए सासं, हयं भद्दं व वाहए। वालं सम्मइ सासंतो, गलिअस्समिव वाहए ॥ ३७ ॥ (सूत्रम्)

व्याख्या—'रमते' अभिरतिमान् भवति, 'पण्डितान्' विनीतविनेयान्, 'शासत्' इत्याज्ञापयन् कथञ्चित् प्रमादस्खलिते शिक्षयित्वा, गुरुरिति शेषः, कमिव कः ? इत्याह—'हयमिव' अश्वमिव, कीदृशम् ?—भाति भन्दते वा

१ प्रयत्नपक्व इति वा पक्वमालपेत्, प्रयत्नच्छिन्न इति वा छिन्नमालपेत्। प्रयत्नलष्ट इति वा कर्महेतुकं, प्रहारगाढ इति वा गाढमालपेत् ॥ १ ॥

"एगिंदिय सुहुमियरा सन्नियरा पणिंदिया सबितिचउ । पज्जत्तापज्जत्तगभेएण चोद्दसग्गामा ॥ १ ॥" धर्मेण चरन्ति धार्मिका ये न तथा तेऽधार्मिका परमाश्च ते सकलाधार्मिकप्रधानतयाऽधार्मिकाश्च परमाधार्मिका – अत्यन्तसङ्क्लिष्टचेतसोऽम्बादयस्तेषु, ते च पञ्चदश, यत उक्तम्–"अंबे १ अबरिसी २ चेव, सामे ३ सबलेत्ति ४ आवरे । रुद्दो ५ वरुद्द ६ काले य ७, महाकालेत्ति आवरे ८ ॥ १ ॥ असिपत्ते ९ धणु १० कुंभे ११, वालू १२ वेयरणी इय १३। खरस्सरे १४ महाघोसे १५, एए पण्णरसाहिया ॥ २ ॥" तेषु यो भिक्षुर्यतते यथाक्रम परिहाररक्षापरिनानादिभि । गीयते–शब्द्यते स्वपरसमयस्वरूपमस्यामिति गाथा–सूत्रकृताङ्गस्य षोडशमध्ययनम्, उक्त हि–"गाहासोलसम होइ अज्झयण" ततश्च गाथाध्ययन षोडश येषु तानि गाथाषोडशकानि 'शेषाद्विभाषे'ति (पा ५-४-१५४) कप्, सुब्व्यत्ययात्तेषु समयादिषु सूत्रकृताध्ययनेषु, उक्तञ्च–"समओ १ वेतालीय २ उवसग्गपरिण्ण ३ थीपरिण्णा य ४ । णिरयविभत्ती ५ वीरत्थओ य ६ कुसीलाण परिभासा ७ ॥१॥ वीरिय ८ धम्म ९ समाही १० मग्ग ११ समोसरण १२ अहतह १३ गथो १४ । यमदीय १५ तह गाहा १६ सोलसम होइ अज्झयणं ॥२॥" तथा सयमन स-

---

१ एकेन्द्रिया सूक्ष्मा इतरे च सज्ञिन इतरे पञ्चेन्द्रिया सद्वित्रिचतुरिन्द्रिया । पर्याप्तापर्याप्तकभेदेन चतुर्दश ग्रामा ॥ १ ॥ २ अम्बोऽम्बर्षिश्चैव श्याम शबल इत्यपर। रुद्र उपरुद्र कालश्च महाकाल इति चापर ॥ २ ॥ असिपत्रो धनु कुम्भः वालुक वैतरणिरिति । खरस्वरो महाघोष एते पञ्चदशाख्याताः ॥ ३ ॥

यमो न संयमोऽसंयमः स च सप्तदशभेदः पृथिव्यादिविषयः, तथात्वं चास्य तत्प्रतिपक्षस्य संयमस्य सप्तदशभेदत्वात्, यदुक्तम्—"पुढविदगअगणिमारुयवणप्फतीवितिचऊपणिंदिअज्जीवे । पेहोपेहपमज्जणपरिठ्ठवणमणोवईकाए ॥१॥" तस्मिंश्च यो भिक्षुर्यतते एकत्र तदुक्तानुष्ठानतोऽन्यत्र तु परिहारतः । 'ब्रह्मणि' ब्रह्मचर्येऽष्टादशभेदभिन्ने, उक्तं हि—"ओरालियं च दिव्वं मणवयकाएण करणजोएणं । अणुमोयणकारावणकरणाणऽठ्ठारसाबंभं ॥२॥" ज्ञातानि—उदाहरणानि तत्प्रतिपादकान्यध्ययनानि ज्ञाताध्ययनानि तानि चोत्क्षिप्तज्ञातादीन्येकान्नविंशतिस्तेषु, यदुक्तम्—"उक्खित्तणाए १ संघाडे २, अंडे ३ कुम्मे य ४ सेलए ५। तुंबे य ६ रोहिणी ७ मल्ली ८, मायंदी ९ चंदिमा इय १० ॥१॥ दावदए ११ उदगणाए ११, मंडुक्को १३ तेयली इय १४। णंदीफले १५ अवरकंका १६, आइण्णे १७ सुंस १८ पुंडरिए १९ ॥ १ ॥" 'स्थानेषु' आश्रयेषु कारणेष्वितियावत् कस्येत्याह—समाधिः—समाधानं ज्ञानादिषु चित्तैकाग्र्यं न समाधिरसमाधिस्तस्य, तानि च द्रुतं द्रुतं गमनादीनि विंशतिः, तथा च समवायाङ्गम्—"वीसं असमाहिठ्ठाणा पण्णत्ता, तंजहा—दवदवचारी यावि भवति १ अपमज्जचारी आवि भवति २ दुप्पमज्जियचारि यावि भवति ३



१ औदारिकं च दिव्यं मनोवचःकायेन करणयोगेन । अनुमोदनकारणकरणान्यष्टादशधाऽब्रह्म ॥ १ ॥ २ विंशतिरसमाधिस्थानानि प्रज्ञप्तानि, तद्यथा—द्रुतं द्रुतं चारी चापि भवति १ अप्रमृज्यचारी चापि भवति २ दुष्प्रमृज्यचारी चापि भवति ३

¹अतिरित्तसेज्जासणिए ४ रातिणियपरिभासी ५ थेरोवघातिए ६ भूतोवघातिए [illegible] संजलणे ८ कोहणे ९ पिट्ठि-मंसिए १० अभिक्खणं ओहारइत्ता भवति ११ णवाणं अधिगरणाणं अणुप्पन्नाणं उप्पाएत्ता भवति १२ पोराणाणं अधिगरणाणं खामियविओसवियाणं पुणोदीरित्ता भवति १३ ससरक्खपाणिपाए १४ अकालसज्झायकारए यावि भवति १५ सद्दकरे १६ कलहकरे १७ झंझकरे १८ सूरप्पमाणभोई १९ एसणाऽसमिते यावि भवति २० ॥" गो भिक्षुर्यत्ते स्वापरिज्ञानपरिहारादिभि । एकविंशती शबलयति-कर्बुरीकुर्वन्ती शबलकर्बुरीकरणतयाऽऽत्मि मिति शबलाः-क्रियाविशेषास्तेषु, तथा चाह-"अवराहम्मि पयणुगे जेण उ मूलं न वच्चए साहू । सबलेंति तं चरित्तं तम्हा सबलत्ति तं भणियं ॥ १ ॥" तानि च हस्तकर्मादीन्येकविंशतिः, तथा चागमः-"तं जह उ हत्थकम्मं कुणते १ मेहुणं च सेवते २ । राइं च भुंजमाणे ३ आहाकम्मं च भुंजए ४ ॥१॥ तत्तो य रायपिंडं ५ कीयं ६ पामिच्च ७

---

१ अतिरिक्तशय्यासनिकः रात्निकपरिभाषी स्थविरोपघाती भूतोपघाती संज्वलनः क्रोधनः पृष्ठमांसिकः अभीक्ष्णमवधारयिता भवति नवानामधिकरणानामनुत्पन्नानामुत्पादयिता भवति पुराणानामधिकरणानां क्षामितव्युपशमितानां पुनरुदीरयिता भवति सरजस्कपाणिपादः अकालस्वाध्यायकारकश्चापि भवति शब्दकरः कलहकरः झञ्झाकरः सूर्यप्रमाणभोजी एषणाऽसमितश्चापि भवति । २ अपराधे प्रतनुके येन च मूलं न प्राप्नोति साधुः । शबलयन्ति तच्चारित्रं तस्मात् शबला इति भणिताः ॥ १ ॥ ३ तद्यथा हस्तकर्म कुर्वन् मैथुनं च सेवमानः । रात्रौ भुञ्जान आधाकर्म भुञ्जानः ॥ १ ॥ ४ ततश्च राजपिण्डं क्रीतं प्रामित्यं

अभिहडं ८ऽच्छेज्जं ९ । भुंजंते सबले ऊ ९ पचक्खियऽभिक्खभुंजंते १० ॥ २ ॥ छम्मासऽब्भंतरओ गणा गणं संकमं करेंते य ११ । मासब्भंतर तिन्नि य दगलेवा ऊ करेमाणे ॥ ३ ॥ मासब्भंतरओ या माइट्ठाणाइं तिण्णि कुणमाणे १२ । पाणातिवायआउट्टिं कुवन्त १३ मुसं वयंते य १४ ॥ ४ ॥ गिण्हंते य अदिन्नं १५ आउट्टियं तह अणंतरहियाए । पुढवीए ठाणसेज्जाणिसीहियं चावि चेएति १६ ॥ ५ ॥ एवं ससिणद्धाए ससरक्खाए चित्तमन्तसिललेलू । कोलावासपइट्ठा कोल घुणा तेसि आवासे १७ ॥ ६ ॥ संडसपाणसबीए जाव उ सन्ताणए भवे तहियं । ठाणादिचेयमाणे सबले आउट्टियाए उ १८ ॥ ७ ॥ आउट्टिमूलकन्दे पुप्फे य फले य बीय हरिए य । भुंजंते सबले ऊ १९ तहेव संवच्छरस्संतो ॥ ८ ॥ दस दगलेवे कुवंत माइट्ठाणा दस य वरिसंतो २० आउट्टियसीओ-

---

अभ्याहृतं आच्छेद्यम् । भुञ्जानः शबल एव प्रत्याख्यायाभीक्ष्णं भुञ्जानः ॥ २ ॥ षण्मासाभ्यन्तरे गणाद् गणं संक्रमं कुर्वंश्च । मासाभ्यन्तरे त्रींश्च दकलेपान् कुर्वंस्तु ॥ ३ ॥ मासाभ्यन्तरतश्च मातृस्थानानि त्रीणि कुर्वन् । प्राणातिपातमाकुट्टया कुर्वन् मृषा वदंश्च ॥ ४ ॥ गृह्णन्नदत्ते चाकुट्टया तथाऽनन्तरायां पृथिव्यां स्थानशय्यानैषेधिकीर्वापि चेतयति ॥ ५ ॥ एवं सस्निग्धायां सरजस्कायां चित्तवच्छिलालेलुमत्यां । कोलावासप्रतिष्ठायां कोला घुणास्तेषामावासे ॥ ६ ॥ साण्डसप्राणसबीज यावत् ससंतानकं भवेत् तत्र । स्थानादि कुर्वन् शबल आकुट्टयैव ॥ ७ ॥ आकुट्टया मूलानि कन्दान् पुष्पाणि फलानि च बीजानि हरितानि च । भुञ्जानः शबलस्तु तथैव संवत्सरस्यान्तः ॥ ८ ॥ दश उदकलेपान् कुर्वन् मातृस्थानानि दश च वर्षस्यान्तः आकुट्टया

देगवग्घारियहत्थमत्ते य ॥९॥ दव्वीए भायणेण य दिज्जन्त भत्तपाण घेत्तूण । भुजइ सबलो एसो, इगविसो होइ णायव्वो ॥१०॥ 'बावीसपरीसह'त्ति द्वाविंशतौ 'परीषहेषु' परीषहाध्ययनेनाभिहितस्वरूपेषु यो भिक्षुर्यतते परिहारादि(धि)-सहनादिभि । त्रिभिरधिका विंशतिस्त्रयोविंशति, 'त्रयस्त्रयश्चे'ति (पा० ६–३–४८ श्लेख) त्रयसादेश, तत्सङ्ख्याध्ययनयोगात्त्रयोविंशतिसूत्रकृत तस्मिन्, त्रयोविंशतिसूत्रकृताध्ययनानि च पुण्डरीकादीनि सप्त षोडश च समयादीनि, तथा चाह–"पुडरीय १ किरियठाण २ आहारपरिण्ण ३ पचखाण ४ च । अणगार ५ अद्द ६ णालद ७ सोलसाइ च तेवीस ८ ॥ १ ।" तथा रूपम्–एकस्तेनाधिका अक्रमात्सूत्रकृताध्ययनेभ्यो रूपाधिकाश्चतुर्विंशतिरित्यर्थस्तेषु, केषु ? इत्याह–सुरेषु, पठन्ति च–देवेषु, तत्र च दीव्यन्ति–क्रीडन्तीति देवा–भवनपत्यादयस्तेषु, यद्वा दीव्यन्ते–स्तूयन्ते जगत्त्रयेणापीति देवा –अर्हन्तस्तेषु ऋषभादितीर्थकरेषु, उक्त च–"भवणवणजोइवेमाणिया य दस अट्ठ पच एगविहा । इति चउवीस देवा केई पुण बेंति अरहता ॥ १ ॥" यो भिक्षुर्यतते यथावत्प्ररूपणादिना । 'पणवीस'त्ति 'पञ्चविंशतौ' पञ्चविंशतिसङ्ख्यासु 'भावणाहिं'ति भाव्यन्त इति भावना, ताश्चेह महाव्रतविषया ईर्यासमितियत्नादय परिगृह्यन्ते, सुब्व्यत्ययात्तासु, उक्त हि–"पणवीस भावणाओ पण्णत्ताओ, तं०–इरियासमिति १ मण-

१ शीतोदकक्लिन्ने हस्ते मात्रे च ॥ ९ ॥ दर्व्या भाजनेन च दीयमान भक्तपाने गृहीत्वा । भुनक्ति शबल एष एकविंशतितमो भवति ज्ञातव्य ॥ १० ॥

गुत्ती २ वयगुत्ती ३ आलोइऊण पाणभोयणं ४ आयाणभंडणिक्खेवणासमिई ५, अणुवीइभासणया १ कोहविवेगे २ लोहविवेगे ३ भयविवेगे ४ हासविवेगे ५, उग्गहमणुण्णवणया १ उग्गहसीमं जाणणया २ सयमेव उग्गहं अणुण्णविय परिभुंजणया ४ साहारणभत्तपाणं अणुण्णविय परिभुंजणया ५, इत्थिपसुपंडयसंसत्तसयणासणवज्जणया १ इत्थिकहविवज्जणया २ इत्थीण इंदियाणि आलोयणवज्जणया ३ पुव्वरयपुव्वकीलियाणं विसयाणं असरणया ४ पणीयाहारविवज्जणया ५, सोइंदियरागोवरई, एवं पंचवि इंदिया ॥" 'उद्देशेष्वि'त्युपलक्षणत्वादुद्देशनकालेषु दशादीनां–दशाश्रुतस्कन्धकल्पव्यवहाराणां षड्विंशतिसङ्ख्येष्विति शेषः, उक्तं हि–"दस उद्देसणकाला दसाण कप्पस्स होंति छच्चेव । दस चेव य ववहारस्स हुंति सव्वेऽवि छव्वीसं ॥ १ ॥" यो भिक्षुर्यतते सर्वदा परिभावना-प्ररूपणाकालग्रहणादिभिः । अनगारः प्राग्वत्तस्य गुणाः–व्रतषट्केन्द्रियनिग्रहादयः सप्तविंशतिः सुव्यत्ययात्तेषु च, उक्तं हि–"वयछक्क ६ मिंदियाणं च निग्गहो ११ भाव १२ करणसच्चं च १३ । खमया १४ विरागयावि य १५ मणमाईणं णिरोहो य १८ ॥ १ ॥ कायाण छक्क २४ जोगम्मि जुत्तया २५ वेयणाहियासणया २६ । तह मारणंतियहियासणया २७ एएऽणगारगुणा ॥ २ ॥" प्रकृष्टः कल्पो–यतिव्यवहारो यस्मिन्नसौ प्रकल्पः स चेहाचाराङ्गमेव शस्त्रपरिज्ञाद्यष्टाविंशत्यध्ययनात्मकं तस्मिन्, उक्तं च–"सत्थपरिण्णा १ लोगविजओ २ सीओसणिज्ज ३ सम्मत्तं ४ । आवंति ५ धुव ६ विमोहा ७ उवहाणसुयं ८ महपरिण्णा ९ ॥ १ ॥ पिंडेसण १० सेज्जि ११ रिय १२ । भासा १३ वत्थे-

सणा य १४ पापसा १५। उग्गहपडिमा १६ सत्तिकसत्तया १७ भावण २४ विमुत्ती २५॥१॥" "उग्घाय २६ मणुग्घायं २७ आरोवण २८ तिविहमो निसीह तु। इह अट्ठावीसविहो आयारपकप्पनामो उ ॥१॥" मासिक्याद्यारोपणात्मके वा समवायाङ्गाभिहितेऽष्टाविंशतिविधे प्रकल्पे 'तथैव' तेनैव यथावदासेवनाप्ररूपणादिना प्रकारेण 'तु' समुच्चये भिक्षुर्यतते ॥ पापोपादानानि श्रुतानि पापश्रुतानि तेषु प्रसञ्जनानि प्रसङ्गा –तथाविधासक्तिरूपा पापश्रुतप्रसङ्गा, ते चाष्टाङ्गनिमित्तसूत्रादिविषयभेदादेकोनत्रिंशत्तेषु, उक्तं हि–"अट्ठनिमित्तगाइं दिव्वुप्पायतलिक्ख भोम च। अग सरलक्खण वंजण च तिविह पुणोक्केक॥१॥सुत्त वित्ती तह वित्तिय च पावसुय अउणतीसविहं। गंधव्वनट्टवत्थु आउ धणुवेयसजुत्तं॥२॥" मोहो-मोहनीय तिष्ठति–कोऽर्थः ?–निमित्ततया वर्त्तते एतेष्विति मोहस्थानानि–वारिमध्यावमज्जनत्रसप्राणमारणादीनि त्रिंशत्तेषु, उक्तं हि–"वारिमज्झेऽवगाहित्ता, तसे पाणे य हिंसति १। छाएउ मुहं हत्थेण, अतोणाइ गलेरव २ ॥१॥ सीसावेढेण वेढित्ता, सकिलेसेण मारए। सीसम्मि जे य आहतु, दुहमारेण हिंसए ४ ॥२॥ बहुजणस्स णेयार, दीव ताण च

१ अष्टौ निमित्ताङ्गानि दिव्यमौत्पात आन्तरिक्ष भौम च। आङ्ग स्वरलक्षणे व्यञ्जन च त्रिविध पुनरेकैकम् ॥ १ ॥ सूत्र वृत्तिस्तथा वार्त्तिक च पापश्रुतमेकोनत्रिंशद्विध । गान्धर्वनाट्यवास्त्वायुर्धनुर्वेदसयुक्तम् ॥ २ ॥ २ वारिमध्येऽवगाह्य त्रसान् प्राणान् विहिंसति। छादयित्वा मुख हस्तेनान्तर्नाद भीवारव (गलेरव) ॥१॥ शीर्षावेष्टेन वेष्टयित्वा सक्लेशेन मारयेत्। शीर्षे आहत्य च दु खमारेण हिनस्ति ॥२॥ बहुजनस्य नेतार द्वीप त्राण च

पाणिणं ५ । साहारणे गिलाणंमि पहूकिच्चं ण कुवति ६ ॥ ३ ॥ साहुं अकम्मधम्मो उ, जो भंसेज्ज उवट्ठियं ७ । णेयाउयस्स मग्गस्स, अवगारंमि वट्टति ॥ ४ ॥ जिणाणऽणंतनाणीणं, अवण्णं जो पभासए । आयरियउवज्झाए, खिंसए मंदबुद्धिए ९ ॥ ५ ॥ तेसिमेव य णाणीणं, सम्मं णो परितप्पई १० । पुणो पुणो अहिगरणं, उप्पाए ११ तित्थभेयए १२ ॥ ६ ॥ जाणं आहम्मिए जोए, पउंजति पुणो पुणो १३ । कामे वमित्ता पत्थेइ, इहऽण्ण-भविए इ वा १४ ॥७॥ अभिक्खं बहुस्सुएऽहंति, जे भासंतऽबहुस्सुए १५ । तहा य अतवस्सीवि, जे तवस्सित्तिहं वए १६ ॥ ८ ॥ जायतेएण बहुजणं, अन्तोधूमेण हिंसए १७ । अकिच्चमप्पणा काउं, कयमेएण भासते १८ ॥ ९ ॥ णियडुवहिपणिहीए पलियंचे सायजोगजुत्ते य १९ । वेइ सचं मुसं वयसि २०, अज्झीणं झंझए सया २१ । ॥१०॥

---

१ प्राणिनाम् । साधारणे ग्लाने प्रभुकार्यं न करोति॥३॥साधुमधर्मकर्मा तु यो भ्रंशयति उपस्थितं।नैयायिकस्य मार्गस्यापकारे वर्त्तते ॥४॥ जिनानामनन्तज्ञानिनामवज्ञां यस्तु प्रभाषते । आचार्योपाध्यायान् खिंसति मन्दबुद्धिकः ॥ ५ ॥ तेषामेव च ज्ञानिनां सम्यक् नो प्रतिचारं करोति । पुनः पुनरधिकरणमुत्पादयति तीर्थभेदकश्च ॥ ६ ॥ जानन् आधर्मिकान् योगान् प्रयुणक्ति पुनः पुनः । कामान् वान्त्वा प्रार्थयते इहान्यभविकान् वा ॥ ७ ॥ अभीक्ष्णं बहुश्रुतोऽहमिति यो भाषतेऽबहुश्रुतः । तथा चातपस्वीति यस्तपस्व्यहमिति वदति ॥ ८ ॥ जाततेजसा बहुजनमन्तर्धूमेन हिनस्ति । अकृत्यमात्मना कृत्वा कृतमेतेनेति भाषते ॥ ९ ॥ निकृत्युपधिप्रणिधिकः परिकुञ्चकः सातियोगयुक्तश्च । ब्रूते सर्वं मृषा वदसि अक्लेशं क्लेशयति सदा ॥ १० ॥

अंद्धाणमि पवेसित्ता, जो धण हरइ पाणिण २२ । वीसभेत्ता उवाएण, दारे तस्सेव लुब्भति २३ ॥११॥ अभिक्खमकुमारे उ, कुमारेऽहन्ति भासए २४ । एवमबभयारिं बभयारित्ति भासए २५ । ॥ १२ ॥ जेणेवेसरीय णीए, वित्ते तस्सेव लुब्भए २६ । तप्पहावुट्ठिए वावि, अन्तराय करेति से २७ । ॥ १३ ॥ सेणावतिं पसत्थार, भत्तार वावि हिंसए । रट्ठस्स वावि णिगमस्स, णायग सेट्ठिमेव वा २८ । ॥१४॥ अपस्समाणो पस्सामि, अह देवत्ति वा वए २९ । अवण्णेण च देवाण, महामोहं पकुव्वति ३० । ॥१५॥'' यो भिक्षुर्यतते तत्परिहारद्वारत । सिद्धा –सिद्धिपदप्राप्तास्तेषामादौ–प्रथमकाल एवातिशायिनो वा गुणा सिद्धादिगुणा सिद्धातिगुणा वा–सस्थानादिनिषेधरूपा एकत्रिंशत्, उक्त हि–"पडिसेहणसठाणे वण्ण गधरसफासवेए य । पणपणदुपणट्ठतिहा इगतीसमकायऽसगऽरुहा ॥ १ ॥ अहवा कम्मेणव दरिसणमि चत्तारि आउए पच आइमे अते । सेसे दो दो भेया खीणभिलावेण इगतीस ॥ २ ॥'' तथा 'जोग'-त्ति पदैकदेशेऽपि पदप्रयोगदर्शनाद् योगसङ्ग्रहा यैर्योगा –शुभमनोवाक्कायव्यापारा सम्यग् गृह्यन्ते–स्वीक्रियन्ते ते आलोचनानिरपलापादयो द्वात्रिंशत्, उक्त हि–"आलोयणा १ निरवलावे २, आवईसु दढधम्मया ३ । अणस्सिओ-

१ अध्वनि प्रवेश्य यो धन हरति प्राणिनाम्।विश्रम्भ्योपायेन दारेषु तस्य लुभ्यति ॥११॥ अभीक्ष्णमकुमारोऽपि कुमारोऽहमिति भाषते । एवमब्रह्मचार्यपि ब्रह्मचारीति भाषते २५ ॥१२॥ येनैवैश्वर्यं प्रापितो वित्ते तस्यैव लुभ्यति। तत्प्रभावोत्थितश्चापि अ तराय करोति तस्य॥१३॥ सेनापतिं प्रशास्तार भर्त्तार वा विहिनस्ति। राष्ट्रस्य वापि निगमस्य, नायक श्रेष्ठिनमेव वा ॥ १४ ॥ अपश्यन् पश्याम्यह देवानिति वा वदेत्। अवर्णेन च देवाना महामोह प्रकरोति॥ १५ ॥

वहाणे य ४, सिक्खा ५ णिप्पडिकम्मया ६ ॥ १ ॥ अण्णाणया ७ अलोभे य ८, तितिक्खा ९ अज्जवे १० सुई ११ । सम्मदिट्ठी १२ समाही य १३, आयारे १४ विणओवए १५ ॥ २ ॥ धिईमई य १६ संवेगो १७, पणिही १८ सुविही १९ संवरे २० । अत्तदोसोवसंहारे २१, सव्वकामविरत्तया २२ ॥ ३ ॥ पच्चक्खाणे २३ विउस्सग्गे २४, अप्पमाए २५ लवालवे २६ । झाणं २७ संवरजोगे २८ य, उदए मारणंतिए २९ ॥ ४ ॥ संगाणं च परिण्णाया ३०, पायच्छित्तकरणे इय ३१ । आराहणा य मरणंते ३२, बत्तीसं जोगसंगहा ॥ ५ ॥" ततो द्वन्द्वे सिद्धादिगुणयोगाः सिद्धातिगुणयोगा वा तेषु, 'तित्तीसासायणासु य'त्ति त्रयस्त्रिंशत्सङ्ख्यास्वाशातनासु चोक्तशब्दार्थास्वर्हदादिविषयासु प्रतिक्रमणसूत्रप्रतीतासु रत्नाधिकस्य पुरतः शिक्षकगमनादिकासु वा समवायाङ्गाभिहितासु यो भिक्षुर्यतते यथायोगं सम्यक्श्रद्धानासेवनावर्जनादिनेत्येकोनविंशतिसूत्रार्थः ॥ अध्ययनार्थं निगमयितुमाह—

इइ एएसु जे भिक्खू, ठाणेसु जयई सया । खिप्पं से सव्वसंसारा, विप्पमुच्चइ पंडिए ॥ २१ ॥ त्तिबेमि ॥

॥ चरणविहिज्झं ॥ ३१ ॥

'इती' त्यनेन प्रकारेण 'एतेषु' अनन्तरोक्तरूपेषु 'स्थानेषु' असंयमादिषु यो भिक्षुः 'यतते' उक्तन्यायेन यत्नवान् भवति सदा क्षिप्रं स सर्वसंसाराद्विप्रमुच्यते पण्डित इति सूत्रार्थः । 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । अवसित-श्चानुयोगो, नयाश्च प्राग्वत् ॥ इत्युत्तराध्ययनश्रुतस्कन्धटीकायां शिष्यहितायामेकत्रिंशं चरणविध्यध्ययनं समाप्तमिति ॥

भद्रस्त–कल्याणावह 'वाहक' अश्वन्दम, 'वालम्' अज्ञ 'श्राम्यति' खिद्यते शासत्, स हि सकृदुक्त एव न कृत्येषु प्रवर्तते, तत इद कुरु इद च मा कार्षीरित्यादि पुन पुनस्तमाज्ञापयन् शिक्षयित्वा, कमिव क ? इत्याह–'गलिम्' उक्तरूपमश्वमिव वाहक इति सूत्रार्थ ॥ ३७ ॥ गुरो श्रमहेतुत्वमुद्भावयन् वालस्याभिसन्धिमाह—

खड्डुयाहि चवेडाहि, अक्कोसेहि वहेहि य। कल्लाणमणुसासत, पावदिट्ठित्ति मन्नइ ॥ ३८ ॥ (सूत्रम्)

व्याख्या—'खड्डुकाभि' टक्कराभि 'चपेटाभि' करतलाघातै 'आक्रोशै' असत्यभाषणै 'वधैश्च' दण्डकादिघातै, चशब्दादन्यैश्चैवप्रकारैर्दु खहेतुभिरनुशासनप्रकारैस्तमाचार्यं 'कल्याणम्' इहपरलोकहितम् 'अनुसासन्त' शिक्षयन्त, पापा दृष्टि –बुद्धिरस्येति पापदृष्टि, अयमाचार्य इति मन्यते, यथा–पापोऽय मा हन्ति निर्घृणत्वात्, चारकपालकवत्, पठन्ति च–'खड्डुया मे' इत्यादि, अत्र व्यवच्छेदफलत्वाद् वाक्यस्य खड्डुकादय एव मम नापर किञ्चित् समीहितमस्तीत्यभिसन्धिना कल्याणमनुशासन(त)माचार्यं पापदृष्टि मन्यते, यद्वा–वाग्भिरप्यनुशास्यमानोऽसौ खड्डुकादिरूपा वाचो मन्यत इति सूत्रार्थ ॥ ३८ ॥ गुरोरतिहितत्व प्रचिकाशयिषुर्विनीताभिसन्धिमाह—

पुत्तो मे भाय नाइत्ति, साहू कल्लाण मन्नइ। पावदिट्ठि उ अप्पाण, सास दास व मन्नइ ॥३९॥(सूत्रम्)

व्याख्या—पुत्रो मे भ्राता ज्ञातिरिति, अत्रेवार्थस्य गम्यमानत्वात् पुत्र इवेत्यादिबुद्ध्याऽऽचार्यो मामनुशास्तीति

विकथाकषायाः' उक्तरूपाः 'विसएसु'त्ति प्राग्वद्विषयाश्च 'भावतः' भावमाश्रित्य प्रमादः । तथा स्थाननिक्षेपे प्रस्तावात्स्थानशब्दो नामादिभिः प्रत्येकं योज्यते, तत्र च द्रव्यस्थानं—नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तं यत्सचित्तादिद्रव्याणामाश्रयः, क्षेत्रस्थानं—भरतादिक्षेत्रमूर्ध्वलोकादि वा यत्र वा क्षेत्रे स्थानं विचार्यते, अद्धा—कालः सैव तिष्ठत्यस्मिन्निति स्थानमद्धास्थानं तच्च पृथिव्यादीनां भवस्थित्यादि समयावलिकादि वा, ऊर्ध्वस्थानं—कायोत्सर्गादि उपरतिः—विरतिस्तत्स्थानं यत्रासौ गृह्यते, वसतिः—उपाश्रयस्तत्स्थानं ग्रामारामादि संयमः—सामायिकादिस्तस्य स्थानं—प्रकर्षापकर्षवदध्यवसायरूपं, यत्र संयमस्यावस्थानं, तच्चासंख्येयभेदभिन्नं, तथाहि—सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकानां प्रत्येकमसंख्येयलोकाकाशप्रदेशपरिमाणानि संयमस्थानानि, सूक्ष्मसम्परायसंयमस्त्वान्तर्मौहूर्त्तिक इत्यन्तर्मुहूर्त्तसमयपरिमाणानि तत्स्थानानि, यथाख्यातसंयमस्तु प्रकर्षापकर्षरहित एकरूप एवेत्येकमेव तत्स्थानम्, एवं च सामायिकादीनामसंख्येयभेदत्वात्समुदायात्मकस्य संयमस्थानस्याप्यसंख्येयभेदता, केवलमिह बृहत्तरमसंख्येयं गृह्यते, असङ्ख्यातानामसङ्ख्यातभेदत्वात्, 'प्रग्रहस्थानं' तु प्रकर्षेण गृह्यतेऽस्य वचनमिति प्रग्रहः—उपादेयवाक्योऽधिपतित्वेन स्थापितः, स च लौकिको लोकोत्तरतश्च तस्य स्थानं, तच्च लौकिकं पञ्चधा—राजयुवराजमहत्तरामात्यकुमारभेदात्, लोकोत्तरमपि पञ्चधैव—आचार्योपाध्यायप्रवर्त्तिस्थविरगणावच्छेदकभेदात्, 'योधस्थानम्' आलीढादि 'अचलस्थानं' निश्चलस्थितिरूपं, तत्र सादिसपर्यवसितादि परमाण्वादीनां, गणनास्थानम्—एककादि सन्धानस्थानं

## ॥ अथ प्रमादस्थानाख्य द्वात्रिंशमध्ययनम् ।

व्याख्यात चरणविधिनामकमेकत्रिंशमध्ययनम्, इदानीं द्वात्रिंशमारभ्यते, अस्य चायमभिसम्बन्ध —अनन्तराध्ययने नैकधा चरणमभिहितं, तच्च प्रमादस्थानपरिहारत एवासेवितुं शक्यं, तत्परिहारश्च तत्परिज्ञानपूर्वक इति तदर्थमिदमारभ्यते, इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य चत्वार्यनुयोगद्वाराणि यावन्नामनिष्पन्ननिक्षेपस्तावत्पूर्ववदेवेति मनस्याधाय नामनिष्पन्ननिक्षेपाभिधानायाह निर्युक्तिकृत्—

निक्खेवो अपमाए चउव्वि० ॥ ५१९ ॥

जाणग० तव्वइरित्ते अ मज्जमाईसु । निद्दाविकहकसाया विसएसु भावओ पमाओ ॥ ५२० ॥

नाम ठवणादविए खित्तद्धा उड्ढ उवरई वसही । सजमपग्गहजोहे अयलगणणसधणा भावे ॥५२१॥

णिक्खेवेत्यादिगाथास्तिस्र सुगमा एव, नवर 'मज्जमाईसु'त्ति मकारोऽलाक्षणिको मदयतीति मद्यं—काष्ठपिष्टनिष्पन्नमादिशब्दादासवादिपरिग्रह एतानि, सुब्व्यत्ययाच्च प्रथमार्थे सप्तमी, भावप्रमादहेतुत्वाद्द्रव्यप्रमाद, 'निद्रा-

नादि 'आदिकरस्य' ऋषभनाम्नो भगवत आचरतो यः किलेति परोक्षाप्तवादसूचकः 'प्रमादकालः' यत्र प्रमादोऽभूत् यत्तदोरभिसम्बन्धात्सोऽहोरात्रं 'तुः' अवधारणे ततोऽहोरात्रमेव, किमयमेकावस्थाभाविनः प्रमादस्य काल उतान्यथेत्याशङ्क्याह—सङ्कलितः, किमुक्तं भवति ?—अप्रमादगुणस्थानस्यान्तर्मौहूर्त्तिकत्वेनानेकशोऽपि प्रमादप्राप्तौ तदवस्थितिविषयभूतस्यान्तर्मुहूर्त्तस्याङ्ख्येयभेदत्वात्तेषामतिसूक्ष्मतया सर्वकालसङ्कलनायामप्यहोरात्रमेवाभूत् ॥ तथा द्वादश वर्षाण्यधिकानि तपश्चरतो वर्द्धमानस्य यः किल प्रमादकालः प्राग्वत्सोऽन्तर्मुहूर्त्तमेव सङ्कलितः, इहाप्यन्तर्मुहूर्त्तानामसङ्ख्येयभेदत्वात्प्रमादस्थितिविषयान्तर्मुहूर्त्तानां सूक्ष्मत्वं, सङ्कलनान्तर्मुहूर्त्तस्य च बृहत्तरत्वमिति भावनीयम्, अन्ये त्वेतदनुपपत्तिभीत्या निद्राप्रमाद एवायं विवक्षित इति व्याचक्षत इति गाथाद्वयार्थः ॥ इत्थमुत्तमनिदर्शनाभ्यामप्रमादानुष्ठाने दार्ढ्यमापाद्य विपर्यये दोषदर्शनद्वारेण पुनस्तदेवापादयितुमिदमाह—

जेसिं तु पमाएणं गच्छइ कालो निरत्थओ धम्मे । ते संसारमणंतं हिंडंति पमायदोसेणं ॥ ५२५ ॥

'येषां' प्राणिनां 'तुः' पूरणे प्रमादेनोपलक्षितानां 'गच्छति' व्रजति कालः 'निरर्थकः' निष्प्रयोजनः, क ?—'धर्मे' धर्मविषये धर्मप्रयोजनरहित इत्यर्थः, प्रमादतो हि नश्यन्त्येव धर्मप्रयोजनानि, ते किमित्याह—संसारम् 'अनन्तम्' अपर्यवसितं 'हिण्डन्ते' भ्राम्यन्ति 'प्रमाददोषेण' हेतुनेति गाथार्थः ॥ यतश्चैवं ततः किं कर्त्तव्यमित्याह—

द्रव्यत कञ्चुकादिगत भावस्थानम्—औदयिकादिको भावस्तिष्ठन्त्यत्र जन्तव इतिकृत्वेति गाथात्रयार्थं ॥ सम्प्रति येनात्र प्रकृत तदुपदर्शयन्नुपदेशसर्वस्वमाह—

भावप्पमाय पगय सखाजुत्ते अ भावठाणमि । चइऊण च (ण इइ) पमाय जइयव्व अप्पमायमि ॥५२२॥

भावप्रमादेन उक्तरूपेण प्रकृतम्–अधिकार , तथा 'सख'त्ति सङ्ख्यास्थान तद्युक्तेन, चस्य भिन्नक्रमत्वाद्भावस्थानेन च, कोऽर्थ ?–सङ्ख्यास्थानेन च, सर्वत्र सुब्व्यत्ययेन सप्तमी, अत्र हि गुरुवृद्धसेवाद्यभिधानत प्रकामभोजनादिनिषेध-तश्च भावप्रमादा निद्रादयोऽर्थात्परिहर्त्तव्यत्वेनोच्य ते, ते चैकादिसङ्ख्यायोगिन औदयिकभावस्वरूपाश्चेति भाव., 'त्यक्त्वा' विहाय 'इती'त्येवप्रकार प्रमाद, किमित्याह–'यतितव्य' यत्नो विधेय , क ?–'अप्रमादे' प्रमादप्रतियो-गिनि धर्मे प्रत्युद्यम इति गाथार्थ ॥ अस्यैवार्थस्य दृढीकरणार्थमुत्तमनिदर्शनमाह—

वाससहस्स उग्ग तवमाइगरस्स आयरतस्स । जो किर पमायकालो अहोरत्त तु सकलिअ ॥५२३॥

बारसवासे अहिए तव चरतस्स वद्धमाणस्स । जो किर पमायकालो अतमुहुत्त तु सकलिअ ॥५२४॥

'वर्षसहस्र'मिति कालात्यन्तसयोगे द्वितीया, ततश्च वर्षसहस्रप्रमाण काल यावत् 'उग्रम्' उत्कट 'तप.' अनश-

र्थस्येह सम्बन्धात्प्रमोक्ष एव, तं 'भाषमाणस्य' प्रतिपादयतः, यदिवा प्रमोक्षः—अपगमस्तं भाषमाणस्येति, कोऽर्थः ?—यथाऽसौ भवति तथा ब्रुवाणस्य 'मे' मम प्रतिपूर्ण—विषयान्तरागमनेनाखण्डितं चित्तं चिन्ता वा येषां ते प्रतिपूर्णचित्ताः प्रतिपूर्णचिन्ता वा 'शृणुत' आकर्णयत, एकाग्रस्य—एकालम्बनस्यार्थाचेतसो भाव एकाग्र्यं—ध्यानं तच्च प्रक्रमाद्धर्म्यादि तस्मै हितमेकाग्र्यहितं, पाठान्तरत—एकान्तहितं वा हितः—तत्त्वतो मोक्ष एव तदर्थमिति सूत्रार्थः ॥ यथाप्रतिज्ञातमाह—

णाणस्स सव्वस्स पगासणाए, अन्नाणमोहस्स विवज्जणाए ।
रागस्स दोसस्स य संखएणं, एगंतसुक्खं समुवेइ मोक्खं ॥ २ ॥

'ज्ञानस्य' आभिनिवोधिकादेः 'सर्वस्य' निरवशेषस्य पाठान्तरतः 'सत्यस्य वा' अवितथस्य 'प्रकाशनया' इति प्रभासनया निर्मलीकरणेनेत्यर्थः, अनेन ज्ञानात्मको मोक्षहेतुरुक्तः, तथा अज्ञानं—मत्यज्ञानादि मोहो—दर्शनमोहनीयमनयोः समाहारेऽज्ञानमोहं तस्य विवर्जना—परिहारो मिथ्याश्रुतश्रवणकुदृष्टिसङ्गपरित्यागादिना तया, अनेन स एव सम्यग्दर्शनात्मकोऽभिहितः, तथा 'रागस्य द्वेषस्य च' उक्तरूपस्य 'संक्षयेण' विनाशेन, एतेन तस्यैव चारित्रात्मकस्याभिधानं, रागद्वेषयोरेव कषायरूपत्वेन तदुपघातकत्वाभिधानात्, ततश्चायमर्थः—सम्यग्दर्शनज्ञानचारित्रैः 'एका-

तम्हा खलुप्पमाय चइऊण पडिएण पुरिसेण । दसणनाणचरित्ते कायव्वो अप्पमाओ उ ॥ ५२६ ॥

तस्मात् 'खलु' निश्चयेन प्रमाद त्यक्त्वा 'पण्डितेन' बुद्धिमता पुरुषेण उपलक्षणत्वात्स्त्यादिना च, दर्शन च ज्ञान च चारित्र चेति समाहारस्तस्मिन् मुक्तिमार्गतया प्रागभिहिते 'कर्त्तव्य' विधेय 'अप्रमाद' उधम 'तु' अवधारणार्थ इत्यप्रमाद एव न तु कदाचित्प्रमाद, तस्यैव दोषदुष्टत्वादिति गाथार्थ । इत्यवसितो नामनिष्पन्ननिक्षेप, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

अच्चतकालस्स समूलयस्स, सव्वस्स दुक्खस्स उ जो पमोक्खो ।
त भासओ मे पडिपुन्नचित्ता !, सुणेह एगग्गहिय हियत्थ ॥ १ ॥

अन्तमतिक्रान्तोऽत्य तो, वस्तुनश्च द्वावन्तौ–आरम्भक्षण. समाप्तिक्षणश्च, तथा चान्यैरप्युच्यते–"उभयान्तापरिच्छिन्ना वस्तुसत्ता नित्यते" ति, तत्रेहारम्भक्षणा( ०णलक्षणोऽ)न्त परिगृह्यते, तथा चात्यन्त –अनादि कालो यस्य सोऽयमत्यन्तकालस्तस्य, सह मूलेन–कषायाविरतिरूपेण वर्त्तत इति समूलक (क )प्राग्वत्तस्य,उक्त हि–"मूल ससारस्स उ हुति कसाया अविरती य " 'सर्वस्य' निरवशेषस्य, दु खयतीति दु ख–ससारस्तस्य, असात चेह दु ख गृह्यते, अत्र च पक्षे मूल रागद्वेषौ, य प्रकर्षेण मोक्षयति–मोचयतीति प्रमोक्ष–आत्मनो दु खापगमहेतु , पूर्वत्र तुशब्दस्यावधारणा-

१ मूल ससारस्य तु भवन्ति कषाया अविरतिश्च

'वृथा श्रुतमचिन्तित'मितिकृत्वाऽनुप्रेक्षैव प्रधानेत्यभिप्रायेणाह—सूत्रस्यार्थः—अभिधेयः सूत्रार्थस्तस्य 'संचिंतणय'त्ति सूत्रत्वात्संचिन्तना सूत्रार्थसंचिन्तना, अस्यामपि न चित्तस्वास्थ्यं विना ज्ञानादिलाभ इत्याह—'धृतिश्च' चित्तस्वास्थ्यमनुद्विग्नत्वमित्यर्थ इति सूत्रार्थः ॥ यतश्चैवंविधो ज्ञानादिमार्गस्तत एतान्यभिलपता प्राक् किं विधेयमित्याह—

आहारमिच्छे मियमेसणिज्जं, सहायमिच्छे निउणत्थबुद्धिं ।
निकेयमिच्छिज्ज विवेगजोगं, समाहिकामे समणे तवस्सी ॥ ४ ॥

'आहारम्' अशनादिकम् 'इच्छेत्' अभिलषेन्मितमेषणीयम्, अपेर्गम्यमानत्वादिच्छेदप्येवंविधमेव, दानभोजने तु दूरोत्सारिते एव अनेवंविधाहार (स) एव ह्यनन्तरोक्तं गुरुवृद्धसेवाज्ञानादिकारणमाराधयितुं क्षमः, तथा 'सहायं' सहचरमिच्छेद्गच्छान्तर्वर्त्ती सन्निति गम्यते, निपुणा—कुशला अर्थेषु—जीवादिषु बुद्धिः—मतिरस्येति निपुणार्थबुद्धिस्तं, पठ्यते च—'णिउणेहबुद्धिं' तत्र निपुणा—सुनिरूपिता ईहा—चेष्टा बुद्धिश्च यस्य स तथा, अनीदृशो हि सहायः स्वाच्छन्द्योपदेशादिना ज्ञानादिकारणगुरुवृद्धसेवादिभ्रंशमेव कुर्यादिति, तथा 'निकेतम्' आश्रयमिच्छेद् विवेकः—पृथग्भावः स्त्र्यादिसंसर्गाभाव इतियावत्तस्मै योग्यम्—उचितं तदापाताद्यसम्भवेन विवेकयोग्यम्, विविक्ताश्रये हि स्त्र्यादिसंसर्गाच्चित्तविप्लवोत्पत्तौ कुतो गुरुवृद्धसेवादिज्ञानादिकारणं संभवेत्?, समाधिं कामयते—अभिलषति समा-

न्तसौख्य' दु खलेशाकलङ्कितसुख समुपैति 'मोक्षम्' अपवर्गम्, अय च दु खप्रमोक्षाविनाभावीत्यत स एवोपलक्षित इति सूत्रार्थं ॥ ननु खलु ज्ञानादिभिर्दु खप्रमोक्ष, अमीषा तु क प्राप्तिहेतु ?, उच्यते—

तस्सेस मग्गो गुरुविद्धसेवा, विवज्जणा बालजणस्स दूरा।
सज्झायएगतनिसेवणा य, सुत्तत्थसंचिंतणया धिई य ॥ ३ ॥

तस्येति योऽयमनन्तर मोक्षोपाय उक्त 'एष' अनन्तरवक्ष्यमाण 'मार्ग' पन्था प्राप्तिहेतु, यदुत गुरवो–यथावच्छास्त्राभिधायका वृद्धाश्च–श्रुतपर्यायादिवृद्धास्तेषा सेवा—पर्युपासना गुरुवृद्धसेवा, इय च गुरुकुलवासोपलक्षण, तत्र च सुप्रापान्येव ज्ञानादीनि, यदुक्तम्—"णाणस्स होइ भागी थिरयरओ दसणे चरित्ते य। धन्ना आवकहाए गुरुकुलवास न मुचति ॥ १ ॥" त्ति, सत्यपि च गुरुकुलवासे कुससर्गतो न स्यादेव तत्प्राप्तिरित्याह—'विवर्जना' विशेषेण परिहार 'बालजनस्य' पार्श्वस्थादे 'दूरात्' दूरेण, तत्सङ्गस्याल्पीयसोऽपि महादोषनिबन्धत्वेनाभिहितत्वात्, तत्परिहारेऽपि च न स्वाध्यायतत्परता विना ज्ञानाद्यवाप्तिरित्याह—स्वाध्याये—उक्तरूपे एकान्तेन—इतरव्यासङ्गपरिहारात्मकेन निवेशना—स्थापना स्वाध्यायैकान्तनिवेशना सा च मनोवाक्कायानामिति गम्यते, पठन्ति च—'सज्झायएगतणिसेवणाए' त्ति, स्वाध्यायस्यैकान्तनिषेवणा—निश्चयेनानुष्ठान स्वाध्यायैकान्तनिषेवणा, सा च तत्रापि

१ ज्ञानस्य भवति भागी स्थिरतरो दर्शने चारित्रे च। धन्या यावत्कथ गुरुकुलवास न मुञ्चन्ति ॥ १ ॥

न्येन दुःखप्रमोक्षहेतुत्वख्यापनार्थं यथा तेषां सम्भवो यथा दुःखहेतुत्वं यथा च दुःखस्य प्रसङ्गतस्तेषां चाभावस्तथा वि(ऽभि)धातुमाह—

जहा य अंडप्पभवा बलागा, अंडं बलागप्पभवं जहा य। एमेव मोहाययणं खु तण्हं, मोहं च तण्हाययणं वयंति ॥ ६ ॥ रागो य दोसोविय कम्मवीयं, कम्मं च मोहप्पभवं वयंति । कम्मं च जाईमरणस्स मूलं, दुक्खं च जाईमरणं वयंति ॥ ७ ॥ दुक्खं हयं जस्स न होइ मोहो, मोहो हओ जस्स न होइ तण्हा । तण्हा हया जस्स न होइ लोभो, लोभो हओ जस्स न किंचणाइं ॥ ८ ॥

'यथा चे'ति येनैव प्रकारेणाण्ड—प्रतीतं ततः प्रभव—उत्पत्तिर्यस्याः साऽण्डप्रभवा 'बलाका' पक्षिविशेषः, अण्डं बलाकातः प्रभवतीति बलाकाप्रभवं यथा च, किमुक्तं भवति ?—यथाऽनयोः परस्परमुत्पत्तिस्थानता 'एवमेव' अनेनैव प्रकारेण मोहयति—मूढतां नयत्यात्मानमिति मोहः—अज्ञानं तच्चेह मिथ्यात्वदोपदुष्टं ज्ञानमेव गृह्यते, उक्तं हि— "जह दुवयणमवयण"मित्यादि, आयतनम्—उत्पत्तिस्थानं यस्याः सा मोहायतना तां 'खुः' अवधारणे ततो मोहायतनामेव 'तण्ह'न्ति तृष्णां वदन्तीति सम्बन्धः, यथोक्तमोहाभावे ह्यवश्यम्भावी तृष्णाक्षय इति, मोहं च तृष्णाऽऽयतनं यस्यासौ तृष्णायतनस्तं वदन्ति, तृष्णा हि सति मूर्च्छा, सा चात्यन्तदुस्त्यजेति रागप्रधाना ततस्तया राग उपलक्ष्यते सति च तत्र द्वेषोऽपि संभवतीति सोऽप्यनयैवाक्षिप्यते ततस्तृष्णाग्रहणेन रागद्वेषावुक्तौ, एतयोश्चा-

धिकाम , अत्र च समाधिर्द्रव्यभावभेदाद्विभेद , तत्र द्रव्यसमाधि क्षीरशर्करादिद्रव्याणा परस्परमविरोधेनावस्थान, भावसमाधिस्तु ज्ञानादीना परस्परमबाधयाऽवस्थान तदनन्यत्वाच्च ज्ञानादीनामयमेवेह गृह्यते, तथा च ज्ञानाद्यवाप्तुकाम इत्युक्त भवति, श्रमणस्तपस्वीति प्राग्वदिति सूत्रार्थं ॥ कालादिदोपत एवंविधसहायाप्राप्तौ यत्कृत्य तदाह—

न वा लभिज्जा निउण सहाय, गुणाहिय वा गुणओ सम वा ।
एगोवि पावाइ विवज्जयंतो, विहरेज्ज कामेसु असज्जमाणो ॥ ५ ॥

'न' निषेधे वाशब्दश्चेदर्थे ततश्च न चेत 'लभेत्' प्राप्नुयात् 'निपुणम्' इति निपुणबुद्धिं 'सहाय' गुणै –ज्ञानादिभिरधिकम्–अर्गल गुणाधिक वा 'गुणत ' इति ज्ञानादिगुणानाश्रित्य 'सम वा' तुल्यमुभयत्रात्मन इति गम्यते, 'वे'ति विकल्पे, तत किमित्याह–'एकोऽपि' असहायोऽपि 'पापानि' पापहेतुभूतान्यनुष्ठानानि 'विवर्जयन्' विशेषेण परिहरन्, पठ्यते च–'अणायरतो'त्ति अनाचरन् 'विहरेत्' सयमाध्वनि यायात् 'कामेषु' विषयेषु 'असजन्' प्रतिबन्धमकुर्वन्, तथाविधगीतार्थयतिविषय चैतद्, अन्यथैकाकिविहारस्यागमे निषिद्धत्वात्, एतदविधाने च 'मध्यग्रहणे आद्यन्तयोरपि ग्रहण भवती'ति न्यायादाहारवसतिविषयोऽप्यपवाद उक्त एव भवतीति मन्तव्यम् ॥ इत्थ सप्रसङ्ग ज्ञानादीना दु खप्रमोक्षोपायत्वमुक्तम्, इदानीं तेषामपि मोहादिक्षयनिबन्धनत्वात्तत्क्षयस्यैव प्राधा-

'साधुः' सुशिष्यः 'कल्याणं' कल्याणहेतुमाचार्यमनुशासनं वा मन्यते, स हि विवेचयति शिष्यः—सौहार्दादसौ मां शास्ति, दुर्विनीतत्वे हि मम किमस्य परिहीयते ?, ममैव त्वर्थभ्रंश इति । बालोऽप्येवं किं न मन्यत इत्याह— 'पापदृष्टिस्तु' कुशिष्यः पुनरात्मानं 'सासं'ति प्राकृतत्वाद्धितानुशासनेनापि शास्यमानं दासमिव मन्यते, यथा असौ दासवन्मामाज्ञापयति, ततोऽस्य शास्तरि पापदृष्टिताऽभिसन्धिरेव सम्भवतीति सूत्रार्थः ॥ ३९ ॥ विनयसर्वस्वमुपदेष्टुमाह—

ण कोवए आयरियं, अप्पाणंपि ण कोवए । बुद्धोवघाई न सिया, न सिया तोत्तगवेसए ॥४०॥ (सूत्रम्)

व्याख्या—'न कोपयेत्' न कोपोपेतं कुर्यात्, आचार्यम्, उपलक्षणत्वादपरमपि विनयार्हम्, 'आत्मानमपि' गुरुभिरतिपरुपभापणादिनाऽनुशिष्यमाणं न कोपयेत्, कथञ्चित् सकोपतायामपि 'बुद्धोपघाती' आचार्योपघातकृत् 'न स्यात्' न भवेत्, तथा न स्यात् तुद्यते—व्यथ्यतेऽनेनेति तोत्रं—द्रव्यतः प्राजनको भावतस्तु तद्दोपोद्भावकतया व्यथोपजनकं वचनमेव, तद् गवेपयति किमहसमीपां जात्यादिदूपकं वच्मि ? इत्यन्वेपयतीति तोत्रगवेपकः, प्रक्रमाद्गुरूणां, न स्यादिति चादरख्यापनार्थत्वान्न पुनरुक्तं, यदुक्तं—बुद्धोपघाती न स्यात्तत्रोदाहरणं—कश्चिदाचार्यादिगणिगुणसम्पत्समन्वितो युगप्रधानः प्रक्षीणप्रायकर्माऽऽचार्योऽनियतविहारितया विहर्तुमिच्छन्नपि परिक्षीणजङ्घाबलः क्वचिदेकस्थान एवावतस्थे, तत्रत्यश्रावकजनेन चैतेपु भगवत्सु सत्सु तीर्थं सनाथमिति विचिन्तयता तद्वयोऽवस्थासमुचितस्नि-

न्तानुबन्धिकपायरूपयो' सत्तायामवश्यम्भावी मिथ्यात्वोदय:, अत एवोपशान्तकपायवीतरागस्यापि मिथ्यात्वगमन, तत्र च सिद्ध एवाज्ञानरूपो मोह , एतेन च परस्पर हेतुहेतुमद्भावाभिधानेन यथा रागादीना सम्भवस्तथोक्त, सम्प्रति यथैतेपा दु खहेतुत्व तथा वक्तुमाह–'रागश्च' मायालोभात्मक 'द्वेपोऽपि च' क्रोधमानात्मक कर्म–ज्ञानावरणादि तस्य बीज–कारण कर्मबीज, कर्म चस्य भिन्नक्रमत्वान्मोहात्प्रभवतीति मोहप्रभव च–मोहकारण वदन्ति। 'च ' सर्वत्र समुच्चये 'कर्म च' इति कर्म पुनर्जातयश्च मरणानि च जातिमरण तस्य 'मूल' कारण 'दु ख' ससारमसातपक्षे तु दु खयतीति दु ख, कोऽर्थ ?–दु खहेतु, चस्य पुनरर्थस्य भिन्नक्रमत्वात् जातिमरण पुनर्वदन्ति, तीर्थकरादय इति गम्यते, जातिमरणस्यैवातिशयदु खोत्पादकत्वात्, उक्त हि–"मरमाणस्स ज दुक्ख, जायमाणस्स जंतुणो । तेण दुक्खेण सतत्तो, न सरति जातिमप्पणो ॥ १ ॥" यतश्चैवमत किं स्थितमित्याह–'दु खम्' उक्तरूप हतमिव हत, केनेत्याह–यस्य 'न भवति' न विद्यते, कोऽसौ ?–मोह , अस्यैव तन्मूलकारणत्वात्, ततो हि कर्म कर्मणश्च दु खमित्यनन्तरमेवोक्त, हतमिव हतमिति च व्याख्यात तत्क्षयेऽपि नारकादिगतौ स्वतत्त्वभावनापरस्यापि कियतोऽपि दु खस्य सम्भवात्, यदि दु:खहनन मोहाभावाद् असावपि कुत इत्याह–मोहो हतो यस्य न भवति तृष्णा, कोऽर्थ: ?–तृष्णाया अभावान्मोहाभाव , तदायतनत्वेन तस्या अभिधानात्, तृष्णाया अपि कुतो हननमित्याह—

१ म्रियमाणस्य यद्दु ख जायमानस्य जन्तो । तेन दु खेन सतप्तो न स्मरति जातिमात्मन ॥ १ ॥ २ व्यापक्षद्वयेऽपि

तृष्णा हता यस्य न भवति लोभः, किमुक्तं भवति ?—लोभाभावात्तृष्णाऽभावः, तृष्णाग्रहणेनोक्तनीत्या रागद्वेषयोरुक्तत्वात्तयोश्च लोभक्षये सर्वथैवाभावाद्, अत एव प्राधान्याल्लोभस्य रागान्तर्गतत्वेऽपि पृथगुपादानं, दृश्यते हि प्रधानस्य सामान्योक्तावपि विशेषोक्त्यभिधानं, यथा ब्राह्मणा आयाता वशिष्ठोऽप्यायात इति, स तर्हि केन हत इत्याह—लोभो हतो यस्य न किञ्चनानि—द्रव्याणि सन्तीति गम्यते,सत्सु हि तेषु संभवत्यभिकाङ्क्षा तद्रूप एव च लोभः, यत्तु तत्सद्भावेऽपि लोभहननं भरतादीनां तत्कादाचित्कमित्यविवक्षितमेव, पठ्यते च—यस्य न किञ्चन, नास्ति—न किञ्चिद्विद्यते द्रव्यादिकमिति गम्यत इति सूत्रार्थः ॥ सन्त्वेवं दुःखस्य मोहादयो हेतवो, हननोपायस्तेषां किमयमेवोतान्योऽप्यस्ति ? इत्याशङ्क्य सविस्तरं तदुन्मूलनापायं विवदिषुः प्रस्तावमारचयति—

रागं च दोसं च तहेव मोहं, उद्धत्तुकामेण समूलजालं।
जे जे उवाया पडिवज्जियव्वा, ते कित्तइस्सामि अहाणुपुव्विं ॥ ९ ॥

स्पष्टं, नवरं यदिह रागस्य प्रथममुपादानं पूर्वं तु मोहस्य तत् मोहस्य रागद्वेषयोश्च परस्परायत्तत्वेन पूर्वापरभावस्यानियमात्, तथा 'उद्धर्तुकामेन' इत्युन्मूलयितुमिच्छता सह मूलानामिव मूलानां—तीव्रकषायोदयादीनां मोहप्रकृतीनां जालेन—समूहेन वर्त्तत इति समूलजालस्तम्, एतच्च रागादीनां प्रत्येकं विशेषणम्, 'उपायाः' तदुद्धरणहेतवः 'प्रतिपत्तव्याः' अङ्गीकर्त्तव्याः कर्त्तुमिति गम्यते, पठ्यते च—'अपाया परिवज्जियव्वा' इति 'अपायाः' तदुद्धरणप्रवृत्तानां विघ्नविधकारिणोऽर्थाः 'परिवर्जयितव्याः' परिहर्त्तव्या इति सूत्रावयवार्थः ॥ यथाप्रतिज्ञातमेवाह—

रसा पगाम न हु सेवियव्वा, पाय रसा दित्तिकरा नराण। दित्त च कामा समभिद्दवति, दुम जहा साउफल व पक्खी ॥ १० ॥ जहा दवग्गी पउरिंधणे वणे, समारुओ नोवसम उवेइ । एविंदियग्गीवि पगामभोइणो, न बभयारिस्स हियाय कस्सई ॥ ११ ॥ विवित्तसिज्जासणजतियाण, ओमासणाण दमिइदियाण। न रागसत्तू धरिसेइ चित्त, पराइओ वाहिरिवोसहेहिं ॥ १२ ॥ जहा विरालावसहस्स मूले, न मूसगाण वसही पसत्था। एमेव इत्थीनिलयस्स मज्झे, न बभयारिस्स खमो निवासो ॥ १३ ॥ न रूवलावण्णविलासहास, न जपिय इगिय पेहिय वा। इत्थीण चित्तसि निवेसइत्ता, दट्ठु ववस्से समणे तवस्सी ॥ १४ ॥ अदसण चेव अपत्थण च, अचितण चेव अकित्तण च। इत्थीजणस्सारियझाणजुग्ग, हिय सया बभवए रयाण ॥ १५ ॥ काम तु देवीहिं विभूसियाइ, न चाइया खोभइउ तिगुत्ता। तहावि एगंतहियति नच्चा, विवित्तवासो मुणिण पसत्थो ॥१६॥ मुक्खाभिकखिस्सवि माणवस्स, ससारभीरुस्स ठियस्स धम्मे। नेयारिस दुत्तरमत्थि लोए, जहत्थिओ बालमणोहराओ ॥१७॥ एए य सगा समइक्कमित्ता, सुहुत्तरा चेव हवति सेसा। जहा महासागरमुत्तरित्ता, नई भवे अवि गगासमाणा ॥१८॥ कामाणुगिद्धिप्पभव खु दुक्ख, सव्वस्स लोगस्स सदेवगस्स। ज काइय माणसिय च किंचि, तस्सतय गच्छइ वीयरागो ॥ १९ ॥ जहा य किंपागफला मणोरमा, रसेण वण्णेण य भुज्जमाणा। ते खुद्दए जीविय पच्चमाणा, एओवमा कामगुणा विवागे ॥ २० ॥

रसेत्यादि सूत्रैकादशकम्। 'रसाः' क्षीरादिविकृतयः 'प्रकामम्' अत्यर्थं 'न निषेवितव्याः' नोपभोक्तव्याः, प्रकामग्रहणं तु वातादिक्षोभनिवारणाय रसा अपि निषेवितव्या एव, निष्कारणनिषेवणस्य तु निषेध इति ख्यापनार्थम्, उक्तं च– "अच्चाहारो न सहे अतिनिद्धेण विसया उदिज्जंति। जायामायाहारो तंपि पगामं ण भुंजामि ॥ १ ॥" किमित्येवमुपदिश्यते इत्याह–'प्रायः' बाहुल्येन रसा निषेव्यमाणा इति गम्यते, दृप्तिः–धातूद्रेकस्तत्करणशीला दृप्तिकरा दृप्तकरा वा पाठान्तरतः इह च भावे क्तप्रत्यय इति दृप्तं दर्प उच्यते, दृश्यन्त एव हि कुर्वन्तो दृप्तत्वममी प्राणिनामिति, यदिवा दीप्तं दीपनं मोहानलज्वलनमित्यर्थस्तत्करणशीला दीप्तकराः, केषां ?–नराणामुपलक्षणत्वात्स्त्र्यादीनां च, उदीरयन्ति हि ते उपभुक्तास्तेषां मोहानलमिति, उक्तं हि–"विगई परिणइधम्मो मोहो जमुदिज्जए उदिण्णे य। सुट्ठुवि चित्तजयपरो कहं अकज्जे ण वट्टिहिई ? ॥ १ ॥" एवं च को दोष इत्याह–दृप्तं यदिवा दीप्तं नरमिति प्रक्रमः 'चः' पुनरर्थे जातिविवक्षया च बहुवचनप्रक्रमेऽप्येकवचनं, 'कामाः' विषयाः 'समभिद्रवन्ति' अभिभवन्ति, तथाविधस्य स्त्र्याद्यभिलषणीयत्वात्सुखाभिभवनीयत्वाच्चेति भावः, कमिव क इवेत्याह–'द्रुमं' वृक्षं 'यथे' त्यौपम्ये, 'स्वादुफलं' मधुरफलान्वितं 'च' इति भिन्नक्रमः, ततश्च 'पक्खि'त्ति पक्षिण इव, इह च द्रुमोपमः पुरुषादिः स्वादु-

१ अत्याहारं न भुञ्जामि अतिस्निग्धेन विषया उदीर्यन्ते। यात्रामात्राहारस्तमपि प्रकामं न भुञ्जामि ॥ १ ॥ २ विकृतिः परिणतिधर्मा मोहो यदुदीर्यते उदीर्णे च। सुष्ठ्वपि चित्तजयपरः कथमकार्ये न वर्त्स्यति ? ॥ २ ॥

फलतातुल्यं च द्रसत्व दीसत्व वा पक्षिसङ्घाश्च कामा इति ॥ अनेन रसप्रकामभोजने दोष उक्त , सम्प्रति सामान्येनैव प्रकामभोजने दोषमाह—यथा 'दवाग्नि ' दावानल प्रचुरेन्धने 'वने' अरण्ये, एतदुपादान च वसति ( ०तिमति ) कश्चिद्विध्यापकोऽपि स्यादिति, 'समारुत ' सवायु 'नोपसम'न्ति न 'उपशम' विध्यापनम् 'उपैति' प्राप्नोति, 'एवम्' इति दवाग्निवन्नोपशमभाग् भवति 'इदियग्गि'त्ति इन्द्रियशब्देनेन्द्रियजनितो राग एवोक्त , तस्यैवानर्थहे- तुत्वेनेह चिन्त्यमानत्वात् , सोऽग्निरिव धर्मवनदाहकत्वाद् इन्द्रियाग्नि , सोऽपि 'प्रकामभोजिन ' अतिमात्राहारस्य, प्रकामभोजनस्यैव पवनप्रायत्वेनातीव तदुदीरकत्वाद्, अतश्चाय न ब्रह्मचारिण॰ 'हिताय' हितनिमित्त, ब्रह्मचर्य- विघातकत्वेन कस्यचिद् अतिसुस्थितस्यापि, तदनेन प्रकामभोजनस्य काका परिहार्यत्वमुक्तम् ॥ इत्थ रागमुद्धर्तु- कामेन यत्परिहर्त्तव्य तदभिधाय यदतियत्नेन कर्त्तव्य तदाह—विविक्ता—स्त्र्यादिविकला शय्या—वसतिस्तस्यामास- नम्—अवस्थान तेन यन्त्रिता—नियन्त्रिता विविक्तशय्यासनयन्त्रितास्तेषाम् 'अवमाशनानाम्' न्यूनभोजनाना, पठन्ति च—'ओमासणाए'त्ति अवम—न्यूनमशनम्—आहारो येषा तेऽमी अवमाशनास्तद्भावोऽवमाशनता—अवमौदर्यरूपा तया दमितानि—वशीकृतानि इन्द्रियाणि यैस्ते तथा तेषां दमितेन्द्रियाणा, पठ्यते च—'ओमासणाईदमिइदियाण'त्ति, अवममशन यत्र तपसि तदवमाशन तदादिभिस्तपोभेदैर्दमितानीन्द्रियाणि यैस्ते तथा तेषा, 'न' नैव राग शत्रुरि- वाभिभवहेतुतया रागशत्रु 'धर्षयति' पराभवति, किं तत् ?—चित्त, किन्तु स एवेत्थ पराधृष्यत इति भाव , क

इव ?–'पराजितः' पराभूतः 'व्याधिरिव' कुष्ठादिः 'औषधैः' गडूच्यादिभिर्देहमिति गम्यते, अनेनापि विविक्तशय्यासनादीनां काका विधेयत्वमुक्तम्, इदानीं तु विविक्तशयनासने यत्नाधानाय विपर्यये दोषमाह–यथा बिडाला–मार्जारास्तेषामावसथः–आश्रयो बिडालावसथस्तस्य 'मूले' समीपे न मूषकाणां वसतिः 'प्रशस्ता' शोभना, अवश्यं तत्र तदपायसम्भवात्, एवमेव स्त्रीणां–युवतीनां पण्डकाद्युपलक्षणमेतत् निलयो–निवासः स्त्रीनिलयस्तस्य 'मध्ये' अन्तर्न ब्रह्मचारिणः 'क्षमः' युक्तः, कोऽसौ?–निवासः–वसतिः, तत्र ब्रह्मचर्यबाधासम्भवादिति भावः। विविक्तशय्यावस्थितावपि कदाचित्स्त्रीसंपाते यत्कर्त्तव्यं तदाह–'न' नैव रूपं–सुसंस्थानता लावण्यं–नयनमनसामाह्लादको गुणो विलासा–विशिष्टनेपथ्यरचनादयो हासः–कपोलविकासादिरेषां समाहारे रूपलावण्यविलासहासं न जल्पितं–मन्मनोल्लापादि 'इंगिय'त्ति बिन्दुलोपाद् 'इङ्गितम्' अङ्गभङ्गादि 'वीक्षितं' कटाक्षवीक्षितादि 'वा' समुच्चये स्त्रीणां सम्बन्धि 'चित्तंसि'त्ति 'चित्ते' मनसि 'निवेश्य' अहो! सुन्दरमिदं चेति विकल्पतः स्थापयित्वा 'द्रष्टुं' इन्द्रियविषयतां नेतुं 'व्यवस्येत्' अध्यवसेत् श्रमणस्तपस्वीति प्राग्वत्, चित्ते निवेश्येत्यनेन च रागाद्यभिसन्धिं विनैतद्दर्शनमपि न दोषायेति ख्याप्यते, उक्तं हि–'न सक्कं रूवमद्दट्ठुं'इत्यादि, निवेश्येति च समानकालत्वेऽपि क्त्वाप्रत्ययः अक्षिणी निमील्य हसतीत्यादिवत्। किमित्येवमुपदिश्यते इत्याह–'अदर्शनम्' इन्द्रियाविषयीकरणं 'चः' समुच्चये 'एवः' अवधारणेऽदर्शनमेव च 'अप्रार्थनं च' अनभिलपणम् 'अचिन्तनं चैव' रूपाद्यपरिभावनम् 'अकीर्त्तनं च' असंशब्दनं, तच्च नामतो गुणतो

वा स्त्रीजनस्यार्यध्यान–धर्म्यादि तस्य योग्य–तद्धेतुत्वेनोचितमार्यध्यान योग्यं 'हित' पथ्यं 'सदा' सर्वकाल ब्रह्मव्रते पाठान्तरतो ब्रह्मचर्ये 'रतानाम्' आसक्ताना, तत स्थितमेतत्–स्त्रीणा रूपादि मनसि निवेश्य द्रष्टु व्यवस्येत् ॥ ननु 'विकारहेतौ सति विक्रियन्ते, येषा न चेतासि त एव धीरा ' तत्किमिति रागमुद्धर्तुकामेन विविक्तशयनासनता विधेयेत्युच्यते? इत्याशङ्क्याह–'काम तु'त्ति अनुमतमेवैतद् यदुत 'देवीहिवि'त्ति 'देवीभिरपि' अप्सरोभिरप्यास्ता मानुषीभिरित्यपिशब्दार्थ 'भूपिताभि ' अलङ्कृताभि 'न' नैव 'चाइय'त्ति शकिता 'क्षोभयितु' चालयितु सयमादिति गम्यते 'तिसृभि ' मनोगुप्त्यादिगुप्तिभिर्गुप्ता अर्थान्मुनय. 'तथाऽपि' यद्यप्येवविधाश्चालयितु न शक्यन्ते तदप्येकान्तहितमेतदिति ज्ञात्वा, किमुक्त भवति?–संभवन्ति हि केचिदभ्यस्तयोगिनोऽपि ये तत्सङ्गत क्षुभ्यन्ति, येऽपि न क्षुभ्यन्ति तेऽपि स्त्रीससक्तवसतिवासे "साहु तवो वणवासो" इत्याद्यवर्णादिदोषभाजो भवेयुरिति परिभाव्य 'विवित्तवासो' विविक्तशय्यासनात्मको मुनीना प्रशस्त इत्यन्तर्भावितण्यर्थतया 'प्रशसित ' गणधरादिभि श्लाघित इत्यर्थ , अत स एवाश्रयणीय इति भाव ॥ एतत्समर्थनार्थमेव स्त्रीणा दुरतिक्रमत्वमाह–'मोक्षाभिकाङ्क्षिणोऽपि' मुक्त्यभिलापिणोऽपि मानवस्स ससारात्–चतुर्गतिरूपाद्भयनशीलो भीरु. ससारभीरु , अपेरिहापि सम्बन्धात्तस्यापि–तथास्थितस्यापि 'धर्मे' श्रुतधर्मादौ 'न' नैव 'एतादृशम्' ईदृश दुस्तर–दुरतिक्रमम् 'अस्ति' विद्यते 'लोके' जगति यथा 'स्त्रिय ' युवतय 'बालमनोहरा ' निर्विवेकचित्ताक्षेपिण्यो दुस्तरा , दुस्तरत्वे च बालमनोहरत्व हेतु , अतश्चातिदुस्तरत्वादासा परि-

हार्यत्वेन विविक्तशय्यासनमेव श्रेय इति भावः ॥ नन्वेवं स्त्रीसङ्गातिक्रमार्थमयमुपाय उपदिष्टस्तथा शेषसङ्गातिक्रमणार्थमपि किं न कश्चनोपाय उपदिश्यते ? इत्याह,—यदिवा स्त्रीसङ्गातिक्रमे गुणमाह—एतांश्च 'सङ्गान्' सम्बन्धान् प्रक्रमात्स्त्रीविषयान् 'समतिक्रम्य' उल्लङ्घ्य 'सुखोत्तराश्चैव' अकृच्छ्रोल्लङ्घ्याश्चैव भवन्ति 'शेषाः' द्रव्यादिसङ्गाः, सर्वसङ्गानां रागरूपत्वे समानेऽपि स्त्रीसङ्गानामेवैतेषु प्रधानत्वादिति भावः, दृष्टान्तमाह—यथा 'महासागरं' स्वयम्भूरमणमुत्तीर्य 'नदी' सरित् 'भवेत्' स्यात्सुखोत्तरैवेति प्रक्रमो वीर्यातिशययोगत इति भावः, 'अवि गंगासमाने'ति गङ्गा किल महानदी तत्समानाऽपि—तत्सदृशाऽपि, आस्तामितरा क्षुद्रनदीत्यपिशब्दार्थः ॥ यदुक्तं "विवित्तसेज्जासणजत्तियाण"—मित्यत्र विविक्तावसथमर्थतो व्याख्याय "ओमासणाणं दमिइंदियाण" मित्यत्रावमाशनत्वमनन्तरमेव प्रकामभोजननिषेधेन समर्थितं, दमितेन्द्रियत्वं तूत्तरत्र वक्ष्यत इत्युभयमुपेक्ष्य "न रागसत्तू धरिसेइ चित्त"मित्यत्र किमिति रागपराजयं प्रत्येवमुपदिश्यते ? इत्याशङ्क्य रागस्य दुःखहेतुत्वं दर्शयितुमाह—कामाः—विषयास्तेष्वनुगृद्धिः—सतताभिकाङ्क्षा अनुभावानुबन्ध इत्यादिष्वनोः सातत्येऽपि दर्शनात् तस्याः प्रभवो यस्य तत्कामानुगृद्धिप्रभवं 'खु'त्ति खुशब्दस्यावधारणार्थत्वात्कामानुगृद्धिप्रभवमेव, किं तत् ?—'दुःखम्' असातं सर्वस्य लोकस्य—प्राणिगणस्य, कदाचिद्देवानां विशिष्टानुभाववत्त्वयैवं न स्यादत आह—'सदेवकस्य' देवैः समन्वितस्य, कतरत्तद् दुःखमित्याह—यत् 'कायिकं' रोगादि 'मानसिकं च' इष्टवियोगादिजन्यं 'किञ्चित्' स्वल्पमपि, कदाचिदेतदभावेऽप्येतत्स्याद् अत आह—तस्य द्विविधस्यापि दुःख-

स्सान्तमेव अन्तक-पर्यन्त गच्छति 'वीतराग' विगतकामानुगृद्धिरित्यर्थ ॥ ननु कामा सुखरूपतयैवानुभूयन्ते तत्कथं कामानुगृद्धिप्रभव दु खम् ?, उच्यते, 'यथा च' इति यथैव किम्पाको-वृक्षविशेषस्तत्फलानि, अपेर्गम्यमानत्वात् 'मनोरमाण्यपि' हृदयङ्गमान्यपि 'रसेन' आस्वादेन 'वर्णेन च' रुचिररक्तादिना चशब्दाद् गन्धादिना च 'भुज्यमानानि' उपभुज्यमानानि 'ते' इति 'तानि' लोकप्रतीतानि क्षोदयितुम्-अध्यवसानादिभिरुपक्रमकारणैर्विनाशयितु शक्यत इति क्षुद्र तदेवानुकम्प्यतया क्षुद्रक सोपक्रममित्यर्थस्तस्मिन् जीविते-आयुषि पच्यमानानि-विपाकावस्थाप्राप्तानि मरणान्तदु खदायीनीति शेष , प्राग्वच्च लिङ्गव्यत्यय , पठ्यते च-'ते जीविय खुदति पच्चमाणे'त्ति तानि-किम्पाकफलानि जीवितम्-आयु 'क्षुदति' आर्षत्वात् 'क्षोदयन्ति' विनाशयन्ति विपच्यमानानि, 'एतदुपमा' किम्पाकफलतुल्या कामगुणा 'विपाके' फलप्रदानकाले, किमुक्त भवति ?-यथा किम्पाकफलान्युपभुज्यमानानि मनोरमाणि विपाकावस्थाया तु सोपक्रमायुषां मरणहेतुतयाऽतिदारुणानि, एव कामगुणा अपि उपभुज्यमाना मनोरमा विपाकावस्थाया तु नरकादिदुर्गतिदु खदायितयाऽत्यन्तदारुणा एव, तत सुखरूपतया प्रतिभासन सुखहेतुत्वेऽनैकान्तिकमेव, किम्पाकफलाना मनोरमत्वेन सुखप्रतिभासेऽप्यन्यथाभावादिति सूत्रैकादशकार्थ ॥ इत्थ बहुतरगुणस्थानानुयायित्वेन रागस्य प्राधान्यात्केवलस्यैवोद्धरणोपायमभिधाय सम्प्रति तस्यैव द्वेषसहितस्य तमभिधित्सुर्दमितेन्द्रियत्व च सिंहावलोकितन्यायाश्रयणेन व्याचिख्यासुरिदमाह—

जे इंदियाणं विसया मणुण्णा, न तेसु भावं निसिरे कयाई ।
न यामणुन्नेसु मणंपि कुज्जा, समाहिकामे समणे तवस्सी ॥ २१ ॥

ये 'इन्द्रियाणां' चक्षुरादीनां 'विषयाः' रूपादयः 'मनोज्ञाः' मनोरमाः न 'तेषु' विषयेषु 'भावम्' अभिसन्धिम्, अपेर्गम्यमानत्वाद्भावमपि प्रस्तावादिन्द्रियाणि प्रवर्त्तयितुं, किं पुनस्तत्प्रवर्त्तनमित्यपिशब्दार्थः, 'निसृजेत्' कुर्यात् 'कदाचित्' कस्मिंश्चित्काले, 'न च' नैव 'अमनोज्ञेषु' अमनोरमेषु 'मनोऽपि' चित्तमपि, अत्रापीन्द्रियाणि प्रवर्त्तयितुम् अपिशब्दार्थश्च प्राग्वत् 'कुर्यात्' विदध्यात्, अनेन वाक्यद्वयेनापीन्द्रियदम उक्तः, समाधिः—चित्तैकाग्र्यं स च रागद्वेषाभाव एवेति स एवानेनोपलक्ष्यते, ततस्तत्कामो—रागद्वेषोद्धरणाभिलाषी श्रमणस्तपस्वीति च प्राग्वत्, नन्वेवमुभयोद्धरणहेतुत्वेनेन्द्रियदमस्य किमिति रागोद्धरणहेतुष्वभिधानम्?, उच्यते, हेतुप्रक्रमात्, न चोभयोद्धरणहेतुतयैकोद्धरणहेतुता विरुध्यते, यद्वा तत्रापि रागस्य द्वेषोपलक्षणत्वादुभयोद्धरणोपायतैव विवक्षिता, किन्तु तत्र विविक्तशय्या—सामान्येनैकान्तशय्या गृह्यते, तदवस्थानस्य च प्रतीतैव तदुद्धरणोपायता, एवं प्रकामभोजिन एव दर्पतो द्वेषसम्भवादवमाशनत्वस्याप्यसौ भावनीयेत्यलं प्रसङ्गेनेति सूत्रार्थः ॥ इत्थं रागद्वेषोद्धरणैषिणो विषयेभ्यो निवर्त्तनमिन्द्रियाणामुपदिष्टम्, अधुना त्वेतेषु तत्प्रवर्तने रागद्वेषानुद्धरणे च यो दोषस्तं प्रत्येकमिन्द्रियाणि तत्प्रसङ्गतो मनश्चाश्रित्य दर्शयितुमाह—

रधमधुराहारादिभि प्रतिदिवससुपचर्यते स्म, तच्छिष्याश्च गुरुकर्मतया कदाचिदचिन्तयन्, यथा–कियच्चिरमयमज-ङ्गमोऽस्माभिरनुपालनीय, ततस्तमनशनमादापयितुमिच्छवोऽतिभक्तश्रावकजनानुदिनदीयमानमुचितमशनादि तस्मै न समर्पयामासु, अन्तप्रान्तादि च समुपनीय सविषादमिव तत्पुरत उक्तवन्त–किमिह कुर्म ?, यदीदृशामपि भवतामुचितमशनादि नामी विवेकविकलतया सदपि सम्पादयितुमीशते, श्राद्धानभिदधति च, यथा–अत्यन्तनि स्पृह-तया शरीरयापनामपि प्रत्यनपेक्षिण प्रणीत भक्तपानमाचार्या नेच्छन्ति, किन्तु सलेखनामेव विधातुमध्यवस्यन्तीति। ततस्ते तद्वचनमाकर्ण्य मन्युभरनिभृतचेतसस्तमुपसृत्य सगद्गद जगदु–भगवन् ! भुवनभवभावस्वभावावभासिप्वर्हत्सु चिरतरातीतेष्वपि प्रतपत्सु भवत्सु भुवनमवभासवदिवाभाति, तत्किमयमत्र भवद्भिरकाल एव सलेखनाविधिरारब्ध ?, न च वयममीपा निर्वेदहेतव इति मन्तव्य, यत –शिर स्थिता अपि भवन्तो न भारमस्माकममीपा वा शिष्याणा कदाचिदादधति, ततस्तैरिङ्गितज्ञैरवगत–यथाऽस्मच्छिष्यमतिविजृम्भितमेतत्, किममीपामप्रीतिहेतुना प्राणधारणेन ?, न खलु धर्मार्थिना कस्यचिदप्रीतिरुत्पादयितुमुचितेति चेतसि विचिन्त्य मुकुलितमेव तत्पुरत उक्त–कियच्चिरमज-ङ्गमैरस्माभिरुपरोधनीयास्तपस्विनो भवन्तश्च, तद्वरमुत्तमाचरितमुत्तमार्थमेव च प्रतिपद्यामहे इति तानसौ सस्थाप्य भक्तमेव प्रत्याचचक्षे। इत्येव बुद्धोपघाती न स्यादिति सूत्रार्थ ॥ ४० ॥ एव तावदाचार्य न कोपयेदित्युक्त, कथञ्चित् कुपिते वा यत् कृत्य तदाह—

विवागे ॥ ३३ ॥ रूवे विरत्तो मणुओ विसोगो, एएण दुक्खोहपरंपरेण । न लिप्पई भवमज्झेऽवि संतो, जलेण वा पुक्खरिणीपलासं ॥ ३४ ॥ सोयस्स सद्दं गहणं वयंति, तं रागहेउं तु मणुन्नमाहु । तं दोसहेउं अमणुन्नमाहु, समो अ जो तेसु स वीयरागो ॥ ३५ ॥ सद्दस्स सोयं गहणं वयंति, तं रागहेउं तु मणुन्नमाहु । तं दोसहेउं अमणुन्नमाहु, समो अ जो तेसु स वीयरागो ॥ ३६ ॥ सद्देसु जो गेहिमुवेइ तिव्वं, अकालियं पावइ सो विणासं । रागाउरे हरिणमिउव्व मुद्धे, सद्दे अतित्ते समुवेइ मच्चुं ॥ ३७ ॥ जे यावि दोसं समुवेइ तिव्वं, तंसि क्खणे से उ उवेइ दुक्खं । दुद्दंतदोसेण सएण जंतू, न किंचि सद्दं अवरज्झई से ॥ ३८ ॥ एगंतरत्ते रुइरंसि सद्दे० ॥ ३९ ॥ सद्दाणुगासाणु० ॥ ४० ॥ सद्दाणुवाएण परिग्गहेण० ॥ ४१ ॥ सद्दे अतित्ते० ४२ तण्हाभिभूयस्स० ॥ ४३ ॥ मोसस्स पच्छा य ॥ ४४ ॥ सद्दाणु० ॥ ४५ ॥ एमेव सद्दंमि० ॥४६॥ सद्दे विरत्तो० ॥ ४७ ॥ घाणस्स गंधं गहणं वयंति० ॥ ४८ ॥ गंधस्स घाणं ॥ ४९ ॥ गंधेसु जो गेहिं० रागाउरे ओसहिगंधगिद्धे, सप्पे विलाओ विव निक्खमंते ॥ ५० ॥ जे यावि दोसं० ॥ ५१ ॥ एगंतरत्तो रुइरंमि गंधे० ॥ ५२ । गंधाणु० ॥ ५३ ॥ गन्धाणुवा० ॥ ५४ ॥ गंधे अतित्ते० ॥ ५५ ॥ तण्हा० ॥ ५६ ॥ मोसस्स० ॥ ५७ ॥ गंधाणु० ॥ ५८ ॥ एमेव गंधंमि० ॥ ५९ ॥ गंधे विरत्तो० ॥ ६० ॥ जिब्भाए रसं गहणं० ॥ ६१ ॥ रसस्स जीहं गहणं वयंति० ॥ ६२ ॥ रसेसु जो गेहिं० रागाउरे बडिसविभिन्नकाए, मच्छे जहा आमिसभोगगिद्धे ॥ ६३ ॥ गाथा १३ ॥७३॥ कायस्स फासं गहणं वयंति० १॥ फासस्स कायं गहणं० २॥ फासेसु जो गेहिमु० । रागाउरे सीयज-

चक्खुस्स रूव गहण वयति, त रागहेउ तु मणुन्नमाहु । त दोसहेउ अमणुन्नमाहु, समो अ जो तेसु स वीयरागो ॥ २२ ॥ रूवस्स चक्खु गहण वयति, चक्खुस्स रूव गहणं वयंति । रागस्स हेउ समणुन्नमाहु, दोसस्स हेउ अमणुन्नमाहु ॥ २३ ॥ रूवेसु जो गिद्धिमुवेइ तिव्व, अकालियं पावइ सो विणास । रागाउरे से जह वा पयगे, आलोअलोले समुवेइ मच्चु ॥२४॥ जे यावि दोस समुवेइ तिव्व, तसि क्खणे से उ उवेइ दुक्ख । दुद्दतदोसेण सएण जतू, न किचि रूव अवरज्झई से ॥ २५ ॥ एगतरत्तो रुइरसि रूवे, अतालिसे से कुणई पओस । दुक्खस्स सपीलमुवेइ बाले, न लिप्पई तेण मुणी विरागे ॥ २६ ॥ रूवाणुगासाणुगए य जीवे, चराचरेहिं सयणेगरूवे । चित्तेहिं ते परियावेइ बाले, पीलेइ अत्तट्ठगुरू किलिट्ठे ॥ २७ ॥ रूवाणुवाएण परिग्गहेण, उप्पायणे रक्खणसनिओगे । वए विओगे य कह सुह से, सभोगकाले य अतित्तलाभे ? ॥२८॥ रूवे अतित्ते अ परिग्गहमि, सत्तोवसत्तो न उवेइ तुट्ठिं । अतुट्ठिदोसेण दुही परस्स, लोभाविले आययई अदत्त ॥ २९ ॥ तण्हाभिभूयस्स अदत्तहारिणो, रूवे अतित्तस्स परिग्गहे य । मायामुस वड्ढइ लोभदोसा, तत्थावि दुक्खा न विमुच्चई से ॥ ३० ॥ मोसस्स पच्छा य पुरत्थओ य, पओगकाले य दुही दुरते । एव अदत्ताणि समाययतो, रूवे अतित्तो दुहिओ अणिस्सो ॥ ३१ ॥ रूवाणुरत्तस्स नरस्स एव, कत्तो सुह होज्ज कयाइ किंचि ? । तत्थोवभोगेऽवि किलेसदुक्ख, निव्वत्तई जस्स कएण दुक्खं ॥ ३२ ॥ एमेव रूवमि गओ पओस, उवेइ दुक्खोहपरपराओ । पदुट्ठचित्तो अ चिणाइ कम्मं, ज से पुणो होइ दुह

प्राग्वद्युटि ग्रहणं—ग्राह्यं तद्वदन्ति, अनेन रूपचक्षुपोर्ग्राह्यग्राहकभाव उक्तः, तथा च न ग्राहकं विना ग्राह्यत्वं नापि ग्राह्यं विना ग्राहकत्वमित्यनयोः परस्परमुपकार्योपकारकभाव उक्तो भवति, एतेन त्वनयो रागद्वेषजनने सहकारिभावः ख्याप्यते, तथा च यथा रूपं रागद्वेपकारणं तथा चक्षुरपि, अत एवाह—रागस्य हेतुं—कारणं प्रक्रमाचक्षुः सह मनोज्ञेन ग्राह्येण रूपेण वर्त्तते इति समनोज्ञं, मनोज्ञरूपविपयमित्युक्तं भवति, 'आहुः' ब्रुवते, यत्र तु 'हेउं तमणुण्ण'मिति पाठस्तत्र 'तं'ति तच्चक्षुर्मनोज्ञं मनोज्ञरूपविपयत्वेन ततो दोषो—द्वेषः, उक्तं हि—"ईर्ष्या रोषो द्वेषः" इत्यादि, तस्य हेतुममनोज्ञम्—अमनोज्ञरूपं, पाठान्तरतश्च हेतुं तदमनोज्ञमाहुः, उभयप्रक्रमेऽपि चक्षुष एव विशेष्यत्वेनोपदर्शनं, रूपस्य पूर्वसूत्रेणैव, एवं च रूपचक्षुपोः सहितयोरेव रागद्वेपजनकत्वाद्युक्तमुक्तं तावुद्धर्त्तुकामो रूपे चक्षुर्न प्रवर्त्तयेत्, यदा तु पाश्चात्यपादत्रयं पूर्ववत्पठ्यते तदा पूर्वसूत्रे चक्षुषो रूपं ग्रहणं—ग्राह्यमिति व्याख्येयं, ततश्चेहापि ग्राह्यग्राहकभाव उक्तः, तत्र चोक्त एवाभिप्रायः, तथा यदि चक्षू रागद्वेपकारणं न कश्चिद्वीतरागः स्यादत आह—समश्चेत्यादि, शेषं सुगमम् । आह—अस्त्वयं रागद्वेपोद्धरणोपायः, एतदनुद्धरणे च को दोषः ? येन तदुद्धरणार्थमित्थमुपदिश्यत इत्याह—रूपेषु यो 'गृद्धिं' गार्ध्यं रागमित्यर्थः, उक्तं हि वाचकैः—"इच्छा मूर्च्छा कामः स्नेहो गार्ध्यं ममत्वमभिनन्दः। अभिलाप इत्यनेकानि रागपर्यायवचनानि ॥१॥" उपैति' गच्छति 'तीव्राम्' उत्कटां गृद्धेर्विशेषणं, स किमित्याह—अकाले भवम् आकालिकं—यथास्थित्यायुरुपरमादर्वागेव प्राप्नोति स 'विनाशं' घातं, पाठान्तरतः

लावसन्ने, गाहग्गहीए महिसे व रन्ने, ३ ॥ एव फासाभिलापे गाथा १३ ॥ ८६ ॥ मणस्स भावं गहणं० १ ॥ भावस्स मण ग० २ ॥ भावेसु जो गेहिं० । रागाउरे कामगुणेसु गिद्धे, करेणुमग्गावहिए व नागे ३ ॥ एव भावाभिलापे गाथा १३ ॥ ९९ ॥

'चक्खुस्से'त्यादि सूत्राण्यष्टसप्तति । तत्रापि चक्षुराश्रितस्य त्रयोदश । 'चक्षुष ' चक्षुरिन्द्रियस्य रूप्यत इति रूपं— वर्णः संस्थान वा, गृह्यतेऽनेनेति ग्रहण, कोऽर्थ ?—आक्षेपक, विशिष्टेन हि रूपेण चक्षुराक्षिप्यते तद् 'वदन्ति' अभिदधति तीर्थकृदादय इति गम्यते, तत किमित्याह—'तद्' इति रूप राग —अभिष्वङ्गस्तद्धेतु —तदुत्पादक 'तु ' पूरणे मनोज्ञमाहु , तथा 'तद्' इति रूपमेव दोपस्तद्धेतुममनोज्ञमाहु , ततस्तयोश्चक्षु प्रवर्त्तने रागद्वेपसम्भवात्त-दुद्धरणाशक्तिलक्षणो दोप इति भाव , आह—एवं न कश्चित् सति रूपे वीतराग स्यादत आह—'समस्तु' अर-क्तद्विष्टतया तुल्य. पुनर्य 'तयो 'मनोज्ञेतररूपयो 'वीतराग' इति तथाविधरागाभावतो वीतरागस्तदविनाभावि-त्वाद् द्वेपस्य तथैव वीतद्वेपश्च, इदमाकूतम्—यस्यैव रागद्वेपौ स्तस्तस्यैव तदुदीरकत्वेनानयोस्तज्जनकत्वमुच्यते न तु य सम एव, तथा च न तावचक्षुस्तयो प्रवर्त्तयेत्, कथञ्चित्प्रवर्त्तने वा समतामेवालम्बेतेत्युक्त भवति, ननु यद्येव रूपमेव रागद्वेपजनक ततस्तदुद्धरणार्थिनस्तद्गतैव चिन्ताऽस्तु, रूपे चक्षुर्न प्रवर्त्तयेदित्येवं तु न युक्तैव चक्षुपश्चिन्ता इत्याशङ्कयाह—रूपस्य चक्षु गृह्णातीति ग्रहण, बहुलवचनात्कर्त्तरि ल्युट्, तद्वदन्ति, तथा चक्षुपो रूप गृह्यत इति

मागधदेशीभाषया 'अतादृशे' अन्यादृशे, तथा च तल्लक्षणं—'रशयोर्लसौ मागधिकाया'मिति, 'से' इति स करोति 'प्रदोषं' द्वेषं सुन्दरीनन्द इव सुरसुन्दरीरागतः सुन्दर्यां, तथा च दुःखस्य 'संपीडनं' सञ्जातं, यद्वा समिति—भृशं पीडा—दुःखकृतावाधा संपीडा तामुपैति 'बालः' अज्ञः उक्तमेवार्थं व्यतिरेकमुखेनाह—न लिप्यत इव लिप्यते, श्लिष्यत इत्यर्थः, 'तेन' द्वेषकृतदुःखेन मुनिः 'विरागः' रागविरहितः, तस्यैव तन्मूलत्वादिति भावः ॥ सम्प्रति रागस्यैव पापकर्मोपचयलक्षणमहाऽनर्थहेतुतां ख्यापयितुं हिंसाद्याश्रवनिमित्ततां पुनरिह च तद्द्वारेण दुःखजनकत्वं च सूत्रपङ्क्तेनाह—रूपं प्रस्तावान्मनोज्ञमनुगच्छति रूपानुगा सा चासावाशा च रूपानुगाशा, रूपविषयोऽभिलाष इति योऽर्थः, तदनुगतश्च जीवः, पठन्ति च—'रूवाणुवायाणुगए य जीवे'त्ति तत्र रूपाणां—मनोज्ञानामुपायैः—उपार्जनहेतुभिरनुगतो—युक्त उपायानुगतः स च प्राणी जीवान् 'चराचरान्' त्रसस्थावरान् 'हिनस्ति' विनाशयति 'अनेकरूपान्' जात्यादिभेदतोऽनेकविधान्, कांश्चित्तु 'चित्रैः' अनेकप्रकारैः स्वकायपरकायशस्त्रादिभिरुपायैरिति गम्यते सुब्व्यत्ययाद् यथासम्भवं चित्तेषु वा तानिति—चराचरजीवान् परीति—सर्वतस्तापयति—दुःखयति परितापयति बाल इव बालः—विवेकविकलतयाऽपरांश्च पीडयति एकदेशदुःखोत्पादनेनात्मार्थं गुरुः—स्वप्रयोजननिष्ठः 'क्लिष्टः' रागबाधितः ॥ अन्यच्च—रूपानुपातो—रूपविषयोऽनुपातः अनुगमनमनुराग इतियावत् तस्मिंश्च सति 'परिग्रहेण' मूर्छात्मकेन हेतुना 'उत्पादने' उपार्जने रक्षणं च—अपायविनिवारणं संन्नियोगश्च—स्वपरप्रयोजनेषु

'क्लेश वा' मरणान्तबाधात्मकं, रागेणातुरो—विह्वलो रागातुर सन् 'से' इति स लोकप्रतीतः 'यथा वा' इति वाश-ब्दस्यैवकारार्थत्वाद् 'यथैव' येनैव प्रकारेण' पतङ्ग 'शलभ आलोक —अतिस्निग्धदीपशिखादिदर्शन तस्मिन् लोलो—लम्पट आलोकलोल समुपैति 'मृत्यु' प्राणत्याग, तस्यापि गृद्ध्याऽऽलोकलोलत्व राग एवेति भाव । 'यश्च' इति यस्तु, अपीति च तस्मिन्नित्यनेन योक्ष्यते 'दोप' द्वेप 'समुवेति'त्ति वचनव्यत्ययात् 'समुपैति' समुपगच्छति रूपेष्विति प्रक्रम 'नित्य' सदा न तु कदाचित्, स किमित्याह—तस्मिन्नपि 'क्षणे' प्रस्तावे यस्मिन् द्वेप उत्पन्न 'स' इति स 'तु' पूरणे उपैति 'दु ख' शारीरादि, द्विष्टो हि किमिदमनिष्ट मया दृष्टमिति मनसा व्याकुलीभवति परितप्यते च देहेन, न तु यथा रागमुपगच्छस्तत्काले मनोज्ञविपयावलोकनजनित सुखमभिमन्यते उत्तरकालमेव तु दु खमिति, पठन्ति च 'समुवेति सव'त्ति स्पष्ट, यदि रूपदर्शनाद् द्वेपमुपगच्छन् दु खमुपैति ततस्तथाविधरूपदोपेणैवास्य दु खावासिरिति प्राप्तमित्याशङ्क्याह—दुष्ट दमन दुर्दान्त तच्च प्रक्रमाच्चक्षुपस्तदेव दोपो दुर्दान्तदोपस्तेन 'सकेन' आत्मीयेन 'जन्तु' प्राणी, न 'किञ्चित्' स्वल्पमपि रूप प्रक्रमादमनोज्ञम् 'अपराध्यति' दुष्यति 'से' तस्य, यदि हि रूपमेवापराध्येन्न कस्यचिद्द्वेपाभाव स्यात्, तथा च मुक्त्यभावादयो दोपा इति भाव । इत्थ रागद्वेपयोर्द्वयोरप्यनर्थहेतुत्वमुक्तमिदानीं तु द्वेपस्यापि रागहेतुकत्वात्स एव महाऽनर्थमूलमिति दर्शयस्तस्य विशेपत परिहर्त्तव्यताख्यापयितुमाह—'एकान्तरक्तो' यो न कथञ्चिद्विराग याति 'रुचिरे' मनोरमे रूपे, किमित्याह—'अतालिसि'त्ति

पसक्तः 'नोपैति' नोपगच्छति 'तुष्टिं' परितोषं सन्तोषमितियावत्, तथा चातुष्टिरेव दोषोऽतुष्टिदोषस्तेन दुःखी— यदि ममेदमिदं च रूपवद्वस्तु स्यादित्याकाङ्क्षातोऽतिशयदुःखवान्, स किं कुरुत इत्याह–'परस्स' अन्यस्य सम्बन्धि रूपवद्वस्त्विति गम्यते 'लोभाविलः' लोभकलुषः,यद्वा परेषां स्वं परस्वं प्रक्रमाद् यद्रूपवद्वस्तु तस्मिन् लोभो—गार्ध्यं तेनाविलः परस्वलोभाविलः 'आदत्ते' गृह्णाति 'अदत्तम्' अनिसृष्टं परकीयमेव रूपवद्वस्त्विति गम्यते,अनेन रागस्यातिदुष्टतां ख्यापयितुं परिग्रहाद्दोषदर्शनेऽपि विशेषतस्तत्रासक्तिर्दोषान्तरारम्भणं चाभिहितं ॥ तत्किमस्यैतावानेव दोष उतान्योऽपि ? इत्याशङ्क्योक्तदोषानुवादेन दोषान्तरमप्याह–'तृष्णाभिभूतस्य' लोभाभिभूतस्य तत एवादत्तं हरति–गृह्णातीत्येवंशीलोऽदत्तहारी तस्य,तथा रूपे–रूपविषयो यः परिग्रहस्तस्मिन्निति योगः, चस्य भिन्नक्रमत्वादतृप्तस्य च तत्रासन्तुष्टस्य मायाप्रधानं मोसंति–मृषाऽलीकभाषणं मायामृषा 'वर्द्धते' वृद्धिं याति, कुतः पुनरिदमित्थमित्याह–'लोभदोषात्' लोभापराधात्, लुब्धो हि परस्वमादत्ते आदाय च तद्गोपनपरो मायामृषा वक्ति, तदनेन लोभ एव सर्वाश्रवाणामपि मुख्यो हेतुरित्युक्तं, तथा रागप्रक्रमेऽपि सर्वत्र लोभाभिधानं रागेऽपि लोभांशस्यैवातिदुष्टतावेदनार्थं, तत्रापि को दोषः ? इत्याह–'तत्रापि' मृषाभाषणेऽपि 'दुःखात्' असातात् 'न विमुच्यते' न विमुक्तिमाप्नोति सः, किन्तु ?, दुःखभाजनमेव भवतीति भावार्थः॥ दुःखाविमुक्तिमेव भावयति—'मोसस्स'त्ति मृषा, कोऽर्थः ?–अनृतभाषणस्य पश्चाच्च पुरस्ताच्च 'प्रयोगकाले च' तद्भाषणप्रस्तावे च दुःखी सन् तत्र पश्चादिदमिदं च न मया

सम्यग्व्यापारण रक्षणसन्नियोग तस्मिन् 'वये'त्ति 'व्यये' विनाशे 'वियोगे' विरहे सतोऽप्यनेककारणजनिते, सर्वत्र रूपस्येतिप्रक्रम , क सुख ?, न क्वचित्, किन्तु सर्वत्र दु खमेवेति भाव, 'से' इति तस्य जन्तो, इयमत्र भावना—रूपमूर्छितो हि रूपवत्करितुरङ्गमकलत्रादीनामुत्पादनरक्षणार्थं तेषु तेषु क्लेशहेतुषूपायेषु जन्तु प्रवर्त्तते, तथा नियोज्यापि तथाविधप्रयोजनोत्पत्तौ रूपवत्कलत्रादि तदपायशङ्कया पुनः पुन परितप्यत एवेति सिद्ध-मेवास्योत्पादनरक्षणसन्नियोगेषु दु खम् , एव व्ययवियोगयोरपि भावनीयम् , अन्ये तु पठन्ति—'रूवाणुरागेण परि-ग्गहेण'त्ति, तत्र रूपानुरागेण हेतुना य परिग्रहस्तेन, शेष प्राग्वत्, स्यादेतत्—मा भूदुत्पादनादिषु रूपस्य सुख, सम्भोगकाले तु भविष्यतीत्याशङ्क्याह—'सम्भोगकाले च' उपभोगप्रस्तावे च 'अतित्तलाभे'त्ति तर्पण तृप्त तृप्तिरि-तियावत्तस्य लाम -प्राप्तिस्तृप्तलाभो न तथाऽतृप्तलाभ , किमुक्त भवति ?—बहुधाऽपि रूपदर्शने रागिणां न तृप्ति-रस्ति, यतोऽन्यैरप्युक्तम्—"न जातु काम कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव, भूय एवाभिवर्द्धते ॥१॥" तथा "यथाऽभ्यास विवर्द्धन्ते विषया कौशलानि चेन्द्रियाणा"मिति, तस्मिन् सति क सुखमिति सम्बन्ध , उत्तरोत्तरेच्छया हि परितप्यत एव जन्तुरिति, पठन्ति च—'अतित्तिलाभे'त्ति तृप्तिप्राप्त्यभावे । आह—एव परिग्रहाद् दु खमनुभवतस्तच्छीलतया ततो निवृत्तिर्दोषान्तरानारम्भण वा किमस्य सभवतीत्याशङ्क्याह—रूपेऽतृप्तश्च परिग्रहे च—तद्विषयमूर्छात्मके सक्त —सामान्येनैवासक्तिमान् उपसक्तश्च—गाढमासक्तस्तत 'सक्तश्च पूर्वमुपसक्तश्च पश्चात् सक्तो-

इति वाक्यालङ्कारे 'दुःखं' कृच्छ्रमात्मन इति गम्यते, उपभोगार्थं हि जन्तुः क्लिश्यति–तत्र सुखं स्यादिति, यदा च तदाऽपि दुःखं तदा कुतोऽन्यदा सुखसम्भवः ? इति भावः। इत्थं रागस्यानर्थहेतुतामभिधाय द्वेषस्यापि तामतिदेष्टुमाह–'एवमेव' यथाऽनुरक्तस्तथैव रूपे गतः प्रदोषं–द्वेषम् 'उपैति' प्राप्नोति इहैवेति शेषः 'दुःखौघपरम्पराः' उत्तरोत्तरदुःखसमूहरूपाः, तथा प्रदुष्टं–प्रकर्षेण द्विष्टं चित्तं यस्य तथाविधः, चस्य भिन्नक्रमत्वात् 'चिनोति वा' बध्नाति कर्म, तत् शुभमपि संभवत्यत आह–यत् 'से' तस्य पुनर्भवति 'दुःखं' दुःखहेतुः 'विपाके' अनुभवकाले इह परत्र चेति भावः, पुनर्ग्रहणमैहिकदुःखापेक्षम्, अशुभकर्मोपचयश्च हिंसाद्याश्रवाविनाभावीति तद्धेतुत्वमनेनाक्षिप्यते। इत्थं रागद्वेषयोरुद्धरणार्हतां ख्यापयितुं तदनुद्धरणे दोषमभिधाय तदुद्धरणे गुणमाह–रूपे विरक्त उपलक्षणत्वादद्विष्टश्च 'मनुजः' मनुष्यः 'विशोकः' शोकरहितः संस्तन्निबन्धनयो रागद्वेषयोरभावात् 'एतेन' अनन्तरमुपदर्शितेन 'दुक्खोहपरंपरेणं'ति दुःखानाम्—असातानामोघाः—सङ्घातास्तेषां परम्परा–सन्ततिर्दुःखौघपरम्परा तया 'न लिप्यते' न स्पृश्यते भवमध्येऽपि 'सन्' भवन्, संसारवर्त्त्यपीत्यर्थः, दृष्टान्तमाह–जलेनेव वाशब्दस्योपमार्थत्वात् 'पुष्करिणीपलासं' पद्मिनीपत्रं जलमध्येऽपि सदिति शेषः। १३ ॥ ३४ ॥ इत्थं चक्षुराश्रित्य त्रयोदश सूत्राणि व्याख्यातानि, एतदनुसारेणैव शेषेन्द्रियाणां मनसश्च स्वविषयप्रवृत्तौ रागद्वेषानुद्धरणदोषाभिधायकानि त्रयोदश सूत्राणि व्याख्येयानि, नवरं 'श्रोत्रस्से'ति श्रोत्रेन्द्रियस्य शब्द्यत इति शब्दो—ध्वनिस्तं 'मनोज्ञं' काकलीगीतादि 'अमनोज्ञं' खरकर्क-

सुसस्थापितमुक्तमिति पश्चात्तापत पुरस्ताच कथमय मया वञ्चनीय इति चिन्ताव्याकुलत्वेन प्रयोगकाले च नासौ ममालीकभाषिता लक्षयिष्यतीति क्षोभत तथा दुष्टोऽन्त –पर्यवसान तज्जन्मन्यनेकविडम्बनातो विनाशेन अन्यजन्मनि च नरकादिप्राप्त्या यस्यासौ दुरन्तो भवति जन्तुरिति गम्यते, तदेव मृषाद्वारेणादत्तादानस्य दु खहेतुत्वमुक्त, यदा च 'मोसस्स'त्ति 'मोषस्य' स्तेयस्येति व्याख्या तदा साक्षादेव तस्य दु खहेतुत्वाभिधानम्, उपसहारमाह— 'एवम्' अमुनोक्तप्रकारेणादत्तानि 'समाददान' गृह्णन् रूपेऽतृप्त सन् दु खितो भवति, कीदृश सन्? इत्याह— 'अनिश्र' दोषवत्तया सर्वजनोपेक्षणीय इति कस्यचित्सम्बन्धिनाऽवष्टम्भेन रहित, मैथुनरूपाश्रयोपलक्षण चैतदिति, प्रसिद्धत्वाच रागिणा तस्य साक्षादनभिधान, यद्वा रूपसम्भोगोऽपि मिथुनकर्मफलत्वाद्देवानामिव मैथुनमेव, तथा च रागिवचनम्–"आलोए च्चिय सा तेण पिययमा णेहनिब्भरमणेण। आभासियव्व अवगूहियव्व रमियव्व पीयव्व ॥१॥" त्ति, स च प्रक्रान्त, एवमुत्तरत्रापि स्त्रीगतशब्दादिसम्भोगाना मैथुनत्व सम्भावनीयम्। उक्तमेवार्थ निगमयितुमाह–रूपानुरक्तस्य नरस्य 'एवम्' अनन्तरसूत्रकदम्बकोक्तप्रकारेण कुत सुख भवेत्? कदाचित्किञ्चित्, सर्वदा दु खमेवेति भाव, किमिखेव?, यत 'तत्र' रूपानुरागे 'उपभोगेऽपि' उपभोगावस्थायामपि 'क्लेशदु खम्' अतृप्तलाभतालक्षणबाधाजनितमसातम्, उपभोगमेव विशिनष्टि–'निर्वर्त्तयति' उत्पादयति यस्य–इत्युपभोगस्य कृते यदर्थं 'ण'

१ आलोक एव सा तेन प्रियतमा स्नेहनिर्भरमनसा आभाषितेव अवगूहितेव रमितेव पीतेव ॥ १ ॥

आयरियं कुवियं नच्चा, पत्तिएणं पसायए। विज्झविज्जा पंजलिउडे, वएज्जा न पुणोत्ति य॥४१॥(सूत्रम्)

व्याख्या—'आचार्यम्' उक्तस्वरूपम्, उपलक्षणत्वादुपाध्यायादिकमपि 'कुपितम्' इति सकोपमनुशासनोदासीनताभिः,—'पुरिसजाएवि तहा विणीयविणयम्मि णत्थि अभिओगो। सेसंमि उ अभिओगो जणवयजाए जहा आसे ॥ १ ॥' इत्यागमात्, कृतवहिष्कोपं वा दृष्टप्रदानादिना 'ज्ञात्वा' अवगम्य 'पत्तिएणं'ति आर्षत्वात् प्रतीतिः प्रयोजनमस्येति प्रातीतिकं—शपथादि, अपिशब्दस्य चेह लुप्तनिर्दिष्टत्वात् तेनापि प्रसादयेत्, इदमुक्तं भवति—गुरुकोपहेतुकमबोध्याशातनामुक्त्यभावादिकं विगणयन् यया तया गत्या तत्प्रसादनमेवोत्पादयेत्, सर्वमपि वा प्रतीत्युत्पादकं वचः प्रातीतिकं तेन प्रसादयेत्, यद्वा 'पत्तिएणं'ति प्रीत्या साम्नैव, न भेददण्डाद्युपदर्शनेन, एतदेवाह—'विध्यापयेत्' कथञ्चिदुदीरितकोपानलानप्युपशमयेत्, प्रकर्षेण—अन्तःप्रीत्यात्मकेन कृतो—विहितोऽञ्जलिः—उभयकरमीलनात्मकोऽनेनेति प्रकृताञ्जलिः, प्राकृतत्वाच्च कृतशब्दस्य परनिपातः, प्रकृष्टं वा—भावान्विततयाऽञ्जलिपुटमस्येति प्राञ्जलिपुटः, इत्थं कायिकं मानसं च विध्यापनोपायमभिधाय वाचिकं वक्तुमाह—'वदेत्' ब्रूयात् न पुनरिति, चशब्दो भिन्नक्रमः, वदेदित्यस्यानन्तरं द्रष्टव्यः, ततोऽयमर्थः—कथञ्चित् कृतकोपानपि गुरून् विध्यापयन् वदेत्

१ पुरुषजातेऽपि तथा विनीतविनये नास्त्यभियोगः। शेषे त्वभियोगो जनपदजाते यथाऽश्वे ॥ १ ॥

शादि, तथा 'हरिणमिव च मुद्धे'त्ति, मृग सर्वोऽपि पशुरुच्यते, यदुक्तम्—"मृगशीर्षे हस्तिजातौ, मृग. पशुकुरङ्गयो " इति, हरिणस्तु कुरङ्ग एवेति तेन विशेष्यते, हरिणश्चासौ मृगश्च हरिणमृग 'मुग्ध' अनभिज्ञ सन् 'शब्दे' गौरिगीतात्मकेऽतृप्त —तदाकृष्टचित्ततया तत्रातृप्तिमान् । 'घ्राणस्य' इति घ्राणेन्द्रियस्य गन्ध्यते—घ्रायत इति गन्धस्त 'मनोज्ञ' सुरभिम् 'अमनोज्ञम्' असुरभिं, तथौपधयो—नागदमन्यादिकास्तासा गन्धस्तत्र गृद्धो—गृद्धिमानौपधिगन्धगृद्ध सन् 'सप्पविलाओ विव'त्ति इवशब्दस्य भिन्नक्रमत्वात्सर्प इव बिलान्निष्क्रमन्, स ह्यत्यन्ततृप्ति(तत्प्रि)यतया तद्गन्ध सोढुमशक्नुवन् बिलान्निष्क्रामति ३ । 'जिह्वाया' 'जिह्वेन्द्रियस्य रस्यते—आस्वाद्यत इति रसस्त 'मनोज्ञ' मधुरादि 'अमनोज्ञ' कटुकादि तथा बडिश—प्रान्तन्यस्तामिषो लोहकीलकस्तेन विभिन्नकायो—विदारितशरीरो बडिशविभिन्नकाय 'मत्स्य' मीनो यथाऽऽमिषस्य—मासादेर्भोग —अभ्यवहारस्तत्र गृद्ध आमिषभोगगृद्ध ४ । काय इह स्पर्शनेन्द्रिय, सर्वशरीरगतत्वख्यापनार्थं चास्यैवमुक्त, तस्य स्पृश्यत इति स्पर्शस्त 'मनोज्ञ' मृदुप्रभृति 'अमनोज्ञ' कर्कशादि शीत—शीतस्पर्शवज्जल—पानीय तत्रावसन्न —अवमग्न शीतजलावसन्नो ग्राहै.—जलचरविशेषैर्गृहीत —क्रोडीकृतो ग्राहगृहीतो महिष इवारण्ये, वसति हि कदाचित्केनचिदुन्मोच्येतापीत्यरण्यग्रहणम् ५ । 'मनस' चेतसो भाव —अभिप्राय स चेह स्मृतिगोचरस्त 'ग्रहण' ग्राह्य वदन्तीन्द्रियाविषयत्वात्तस्य, 'मनोज्ञ' मनोज्ञरूपादिविषयम् 'अमनोज्ञ' तद्विपरीतविषयम्, एवमुत्तरग्रन्थोऽपि भावविषयरूपाद्यपेक्षया व्याख्येयः, यद्वा स्वप्नकामदशादिषु

भावोपस्थापितो रूपादिरपि भाव उक्तः, स मनसो ग्राह्यः, स्वप्नकामदशादिषु हि मनस एव केवलस्य व्यापार इति, 'कामगुणेषु' मनोज्ञरूपादिषु 'गृद्धः' आसक्तः 'करेणुमग्गावहिए व णागे' इति इवार्थस्य चस्य भिन्नक्रमत्वात् करेण्वा-करिण्या मार्गेण—निजपथेनापहृतः—आकृष्टः करेणुमार्गापहृतः 'नाग इव' हस्तीव, स हि मदान्धोऽप्यदूरवर्त्तिनीकरेणुमुपदर्श्य तद्रूपादिमोहितस्तन्मार्गानुगामितया च गृह्यते सङ्ग्रामादिषु च प्रवेश्यते तथा च विनाशमाप्नोतीति दृष्टान्तत्वेनोक्तः, आह—एवं चक्षुरादीन्द्रियवशादेव गजस्य प्रवृत्तिरिति कथमस्यात्र दृष्टान्तत्वेनाभिधानम्?, उच्यते, एवमेतत्, मनःप्राधान्यविवक्षया त्वेतन्नेयं, यदिवा तथाविधकामदशायां चक्षुरादीन्द्रियव्यापाराभावे मनसः प्रवृत्तिरिति न दोषः, इह चानानुपूर्व्यपि निर्देशाङ्गमितीन्द्रियाणामित्थमुपन्यास इत्यष्टसप्ततिसूत्रावयवार्थः ॥ उक्तमेवार्थं सङ्क्षेपत उपसंहारव्याजेनाह—

एविंदियत्था य मणस्स अत्था, दुक्खस्स हेउं मणुयस्स रागिणो ।
ते चेव थेवंपि कयाइ दुक्खं, न वीयरागस्स करिंति किंचि ॥ १०० ॥

'एवम्' उक्तन्यायेन 'इन्द्रियार्थाः' चक्षुरादिविषया रूपादयः चशब्दो भिन्नक्रमस्ततो मनसोऽर्थाश्च—उक्तरूपा उपलक्षणत्वादिन्द्रियमनांसि च दुःखस्य 'हेउं'त्ति हेतवो मनुजस्य रागिणः, उपलक्षणत्वाद् द्वेषिणश्च, विपर्यये गुणमाह—'ते चेव' इन्द्रियमनोऽर्थाः 'स्तोकमपि' स्वल्पमपि कदाचिद् दुःखं 'न' नैव वीतरागस्य उपलक्षणत्वाद्वीतद्वेषस्य

कुर्वन्ति 'किञ्चिदि'ति शारीर मानस चेति सूत्रार्थ ॥ ननु कश्चन कामभोगेषु सत्सु (न) वीतराग सभवति, तत्कथमस्य तु स्वभाव ?, उच्यते—

न कामभोगा समयं उविंति, न यावि भोगा विगइं उविंति ।
जे तप्पओसी य परिग्गही य, सो तेसु मोहा विगइं उवेइ ॥ १०१ ॥

'न' नैव 'कामभोगा' उक्तरूपा 'समता' रागद्वेषाभावरूपाम् 'उपयान्ति' उपगच्छन्ति हेतुत्वेनेति गम्यते, तद्धेतुत्वे हि तेषा न कश्चिद्रागद्वेषवान् भवेत्, न चापि 'भोगा' भुज्यमानतया सामान्येन शब्दादय 'विकृति' क्रोधादिरूपाम्, इहापि हेतुत्वेनोपयन्तीत्यन्यथा न कश्चन रागद्वेषरहित स्यात्, कोऽनयोस्तर्हि हेतु ? इत्याह—य 'तत्प्रदोषी च' तेषु—विषयेषु प्रद्वेषवान् 'परिग्रही च' परिग्रहबुद्धिमान्, तेष्वेव रागीत्युक्त भवति, स 'तेषु' विषयेषु 'मोहात्' रागद्वेषात्मकात् मोहनीयात् विकृतिमुपैति, रागद्वेषरहितस्तु समतामित्यर्थादुक्तम्, उक्त हि पूर्व—'सतोरेव रागद्वेषयोरुदीरकत्वेन शब्दादयो हेतव' इति, आह—"समो य जो तेसु स वीयरागो" इत्यनेन गतार्थमेतत्, सत्य, तस्यैव त्वय प्रपञ्च, उक्त हि 'त एव विषय सुसगृहीता भवन्ति येषा लक्षण प्रपञ्चश्चोच्यते' इति सूत्रार्थ ॥ किंस्वरूपा पुनरसौ विकृतिर्या रागद्वेषवशादुपैतीत्याह—

कोहं च माणं च तहेव मायं, लोभं दुगुंछं अरइं रइं च। हासं भयं सोगपुमित्थिवेयं, नपुंसवेयं विविहे य भावे॥१०२॥
आवज्जई एवमणेगरूवे, एवंविहे कामगुणेसु सत्तो। अन्ने य एयप्पभवे विसेसे, कारुण्णदीणे हिरिमे वइस्सो॥१०३॥

क्रोधं च मानं च तथैव मायां लोभं—चतुष्टयमप्युक्तरूपं 'जुगुप्सां' चिकित्साम् 'अरतिं' अस्वास्थ्यं 'रतिं च' विषयासक्तिरूपां 'हासं च' वक्त्रविकाशलक्षणं 'भयं' साध्वसं शोकपुंस्त्रीवेदमिति समाहारनिर्देशः ततः शोकं—प्रियविप्रयोगजं मनोदुःखात्मकं पुंवेदं—स्त्रीविषयाभिलाषं स्त्रीवेदं—पुरुषाभिष्वङ्गं 'नपुंसकवेयं'ति नपुंसकवेदम्—उभयाभिलाषं 'विविधांश्च' नानाविधान् 'भावान्' हर्षविषादादीनभिप्रायान् 'आपद्यते' प्राप्नोति, 'एवम्' असुना रागद्वेषवत्तालक्षणेन प्रकारेण 'अनेकरूपान्' बहुभेदाननन्तानुबन्ध्यादिभेदेन तारतम्यभेदेन च 'एवंविधान्' उक्तप्रकारान् विकारानिति गम्यते 'कामगुणेषु' शब्दादिषु 'सक्तः' अभिष्वङ्गवान् उपलक्षणत्वाद् द्विष्टश्च, अन्यांश्च 'एतत्प्रभवान्' क्रोधादिजनितान् 'विशेषान्' परितापदुर्गतिपातादीन्, कीदृशः सन्? इत्याह—कारुण्यास्पदीभूतो दीनः कारुण्यदीनो मध्यपदलोपी समासोऽत्यन्तदीन इत्यर्थः, 'हिरिमे'त्ति 'ह्रीमान्' लज्जावान्, कोपाद्यापन्नो हि प्रीतिविनाशादिकमिहैवानुभवन् परत्र च तद्विपाकमतिकटुकं विभावयन् प्रायोऽतिदैन्यं लज्जां च भजते, तथा 'वइस्स'त्ति आर्षत्वात् 'द्वेष्यः' तत्तद्दोषदुष्टत्वात्सर्वस्याप्रीतिभाजनमिति सूत्रद्वयार्थः ॥ यतश्चैवं रागद्वेषावेव दुःखमूलमतः प्रकारान्तरेणापि तयोरुद्धरणोपायाभिधानार्थं तद्विपर्यये दोषदर्शनार्थं चेदमाह—

कप्प न इच्छिज्ज सहायलिच्छू, पच्छाणुतावेण तवप्पभाव ।
एव विकारे अमियप्पयारे, आवज्जई इंदियचोरवस्से ॥ १०४ ॥

कल्पते–स्वाध्यायादिक्रियासु समर्थो भवतीति कल्पो–योग्यस्तम्, अपेर्गम्यमानत्वात्कल्पमपि, किं पुनरकल्प ?, शिष्यादीति गम्यते, 'नेच्छेत्' नाभिलषेत् 'सहायलिच्छु'त्ति बिन्दोरलाक्षणिकत्वात् 'सहाये (य) लिप्सु' ममासौ शरीरसबाधनादि साहाय्य करिष्यतीत्यभिलापुक सन्, तथा पश्चादिति–प्रस्तावाद्व्रतस्य तपसो वाऽङ्गीकारादुत्तरकालमनुताप –किमेतावन्मया कष्टमङ्गीकृतमिति चित्तबाधात्मको यस्य स तथाविध चशब्दादन्यादृशश्च सम्भूतयतिवद् भवान्तरे भोगस्पृहयालु, तप प्रभाव प्रक्रमान्नेच्छेद्, यथा–न शक्यमङ्गीकृत त्यक्तु पर यद्यस्य व्रतस्य तपसो वा फलमस्ति तत एतस्मादिहैवामर्पौषध्यादिलब्धिरस्तु, तदन्यादृशापेक्षया तु भवान्तरे शक्रचक्रिविभूत्यादि भूयादिति, किमेव निषिध्यते ? इत्याह–'एवम्' अमुना प्रकारेण 'विकारान्' दोषान् 'अमितप्रकारान्' अपरिमितभेदान् 'आपद्यते' प्राप्नोति इन्द्रियाणि चौरा इव धर्मसर्वस्वापहरणाद् इन्द्रियचोरास्तद्वश्य –तदायत्त, उक्तविशेषणविशिष्टस्य हि कल्प्यतप प्रभाववाञ्छारूपेण स्पर्शनादीन्द्रियवश्यताऽवश्यसभाविनी ततश्चोत्तरोत्तरविशेषानभिलषत सयम प्रति चित्तविप्लुत्यवधावनादिदोषा अपि सभवन्त्येवेति, एवं च ब्रुवतोऽयमाशय –तदनुग्रहबुद्ध्या कल्प पुष्टालम्बने च तप प्रभाव च वाञ्छतोऽपि न दोष, अथवा कल्पमुकरूप नेच्छेत्सहायलिप्सु यदि कथञ्चनामी मम धर्म-

सहाया भवन्तीत्येवमभिलापुकमप्यास्तामन्यमिति भावः, जिनकल्पिकापेक्षं चैतत्, एतेन च रागस्य हेतुद्वयपरिहरणमुद्धरणोपाय उक्तः, उपलक्षणं चैतदीदृशामन्येषामपि रागहेतूनां च परिहारस्य, ततः सिद्धं द्वयोरप्युद्धरणोपायानां तद्विपर्यये च दोषाणामभिसन्धानमिति सूत्रार्थः ॥ अनन्तरं रागद्वेषोद्धरणोपायविपर्यये यो दोष उक्तस्तमेव दोषान्तरहेतुताऽभिधानद्वारेण समर्थयितुमाह—

तओसि जायंति पओअणाइं, निमज्जिउं मोहमहन्नवंमि ।
सुहेसिणो दुक्खविणोय [मुक्ख]णट्ठा, तप्पच्चयं उज्जमए अरागी ॥ १०५ ॥

'ततः' इति विकारापत्तेरनन्तरं 'से' तस्य 'जायन्ते' उत्पद्यन्ते 'प्रयोजनानि' विषयसेवनप्राणिहिंसादीनि 'निमज्जितु'मित्यन्तर्भावितण्यर्थत्वान्निमज्जयितुमिव निमज्जयितुं प्रक्रमात्तमेव जन्तुं मोहो महार्णव इवातिदुस्तरतया मोहमहार्णवस्तस्मिन्, किमुक्तं भवति ?—यैर्मोहमहार्णवनिमग्न इव जन्तुः क्रियते स ह्युत्पन्नविकारतया मूढ एवासीत् विषयासेवनादिभिश्च प्रयोजनैः सुतरां मुह्यतीति, कीदृशस्य पुनरस्य किमर्थं चैवंविधप्रयोजनानि जायन्ते? इत्याह—'सुखैषिणः' सुखाभिलषणशीलस्य 'दुःखविनोदार्थं' दुःखपरिहारार्थं पाठान्तरतो दुःखविमोचनाय वा, सुखैषितायां हि दुःखपरिहाराय विषयसेवनादिप्रयोजनसम्भव इति भावः, कदाचिदेवंविधप्रयोजनोत्पत्तावपि तत्रायमुदासीन एव स्याद् ?, अत्रोच्यते—'तत्प्रत्ययम्' उक्तरूपप्रयोजननिमित्तं पाठान्तरतस्तत्प्रत्ययादुद्यच्छति चशब्दस्यैवकारार्थ-

त्वादुद्यच्छत्येव, कोऽर्थ ?–तत्प्रवृत्तावुत्सहत एव, 'रागी' रागवानुपलक्षणत्वाद् द्वेषी च सन्, रागद्वेषयोरेव सकलानर्थस्य परम्पराकारणत्वादिति सूत्रार्थ ॥ किमिति रागद्वेषवत सकलाऽप्यनर्थपरम्परोच्यते ? इत्याशङ्क्याह—

विरज्जमाणस्स य इंदियत्था, सद्दाइया तावइयप्पगारा ।
न तस्स सव्वेवि मणुन्नय वा, निव्वत्तयती अमणुन्नय वा ॥ १०६ ॥

विरज्यमानस्येति उपलक्षणत्वादद्विषतश्च 'च' पुनरर्थे ततो विरज्यमानस्याद्विषतश्च पुन 'इन्द्रियार्था' शब्दादिका पाठान्तरतो वर्णादिका वा तावन्त इति यावन्तो लोके प्रतीता प्रकारा खरमधुरादिभेदा येषा ते तावत्प्रकारा, बहुप्रभेदा इत्यर्थ, न 'तस्य' इति मनुजस्य 'सर्वेऽपि' समस्ता अपि मनोनता वा 'निर्वर्त्तयन्ति' जनयन्त्यमनोज्ञता वा [निर्वर्त्तयन्ति,] किन्तु ?, रागद्वेषवत एव, स्वरूपेण हि रूपादयो न मनोज्ञताममनोज्ञता वा कर्त्तुमात्मन क्षमा किन्तु रक्तेतरप्रतिपत्त्रध्यवसायवशाद्, उच्यते चान्यैरपि–"परिव्राट्कामुकशुनामेकस्या प्रमदातनौ । कुणप कामिनी भक्ष्यमिति तिस्रो विकल्पना ॥ १ ॥" ततो वीतरागस्य तन्निर्वर्त्तनहेत्वभावात्कथममी मनोज्ञताममनोज्ञता वा निर्वर्त्तयेयु ?,तदभावे च कथ विषयसेवनाक्रोशदानादिप्रयोजनोत्पत्ति ? इति, पूर्वं सति मनोज्ञत्वेऽमनोज्ञत्वे च समस्य रूपादीनामकिञ्चित्करत्वमुक्तम्, इह तु मनोज्ञत्वामनोज्ञत्वे अपि तादृशस्य न भवत एवेत्युच्यत इति पूर्वस्माद्विशेष इति सूत्रार्थ ॥ तदेवं "जे जे उपाया पडिवज्जियव्व"त्ति प्रतिज्ञातरागद्वेषयोर्मोहस्य च परस्प-

रायतनत्वेऽपि रागद्वेषयोरतिदुष्टत्वात्साक्षात् मोहस्य च तदायतनत्वात्तद्द्वारेणोद्धरणोपायान् प्रतिपत्तव्यान्निरूप्य यदा
तु "जे जे अवाया परिवज्जियव्व"त्ति(पाठः) तदा रसनिषेवणादीनपायानुक्तन्यायतोऽभिधायोपसंहरन्नाह—

एवं ससंकप्पविकप्पणासुं, संजायई समयमुवट्ठियस्स ।
अत्थे च संकप्पयओ तओ से, पहीयए कामगुणेसु तण्हा ॥ १०७ ॥

'एवम्' उक्तप्रकारेण स्वस्य—आत्मनः सङ्कल्पाः—प्रक्रमाद्रागद्वेषमोहरूपाध्यवसायास्तेषां विकल्पनाः—सकलदोषमू-
लत्वादिपरिभावनाः स्वसङ्कल्पविकल्पनास्तासूपस्थितस्य—उद्यतस्येति सम्बन्धः, किमित्याह—'संजायते' समुत्पद्यते
'समयं'ति आर्षत्वात् 'समता' माध्यस्थ्यमर्थान्-इन्द्रियार्थान् रूपादींश्चस्य भिन्नक्रमत्वात्सङ्कल्पयतश्च—यथा नैवैतेऽपाय-
हेतवः किन्तु? रागादय एवेत्युक्तनीत्या चिन्तयतो यदिवा समता—परस्परमध्यवसायतुल्यता सा चानिवृत्तिबा-
दरसम्परायगुणस्थान एव, एतत्प्रतिपत्तॄणां हि बहूनामप्येकरूप एवाध्यवसाय इत्यनयैतदुपलक्ष्यते, तथा 'अर्थान्'
जीवादीन् 'संकल्पयतश्च' शुभध्यानविषयतयाऽध्यवस्यतः 'ततः' इति समतायाः 'से' तस्य जन्तोः [साधोः] 'प्रही-
यते' प्रकर्षेण हानिं याति,काऽसौ?—'कामगुणेषु' रूपादिषु'तृष्णा' अभिलाषो लोभ इतियावत्, समतायां हि द्विवि-
धायामपि प्राप्तायामुत्तरोत्तरगुणस्थानावाप्त्या क्षीयत एव लोभ इति। अथवा 'एवम्' उक्तप्रकारेण 'समकम्' एकका-
लम् 'उपस्थितस्य' उद्यतस्य रागाद्युद्धरणोपायेष्विति प्रक्रमः, यदिवा 'समयम्' एतदभिधायकं सिद्धान्तं प्रतीति शेषः

'उपस्थितस्य' तदुक्तार्थानुष्ठानोद्यतस्येत्यर्थ ,किमित्याह—स्वसङ्कल्पानाम्—आत्मसम्बन्धिनां रागाद्यध्यवसायाना विकल्पना—विशेषेण छेदन स्वसङ्कल्पविकल्पना,दृश्यते हि छेदार्थ्यपि कल्पशब्द ,यथोक्तम्—"सामर्थ्ये वर्णनायां च, छेदने करणे तथा । औपम्ये चाधिवासे च, कल्पशब्द विदुर्बुधा ॥ १ ॥" 'आसु'त्ति 'आशु' शीघ्र 'सजायते' भवति, पठन्ति च—'ससकप्पविकप्पणासो'त्ति, तथा 'अत्थे असकप्पयतो'त्ति, तत्र च स्वस्य—आत्मन सङ्कल्प —अध्यवसाय-स्तस्य विकल्पा—रागादयो भेदास्तेषा नाश —अभाव स्वसङ्कल्पविकल्पनाशः, तथा को गुण ? इत्याह—'अर्थान्' रूपादीन् 'असङ्कल्पयत ' रागादिविषयतयाऽनध्यवस्यत 'तत ' इति स्वसङ्कल्पविकल्पनात स्वसङ्कल्पविकल्पनाशाद्वा 'से' तस्य प्रहीयते कामगुणेषु तृष्णेति सूत्रार्थ ॥ तत स कीदृश सन् किं विधत्ते ? इत्याह—

सो वीयरागो कयसव्वकिच्चो, खवेइ नाणावरण खणेण ।
तहेव ज दरिसणमावरेइ, ज चतराय पकरेइ कम्म ॥ १०८ ॥

'स ' इति हीनतृष्ण 'वीतराग ' विगतरागद्वेषो भवति, तृष्णा हि लोभस्तत्क्षये च क्षीणकषायगुणस्थानावाप्तिरिति, तथा कृतसर्वकृत्य इव कृतसर्वकृत्य प्राप्तप्रायत्वादनेन मुक्ते 'क्षपयति' क्षय नयति 'ज्ञानावरण' वक्ष्यमाणस्वरूप 'क्षणेन' समयेन तथैव यद् 'दर्शन' चक्षुर्दर्शनादि 'आवृणोति' स्थगयति दर्शनावरणमित्यर्थ , यच्च 'अन्तराय' दानादिलब्धिविघ्न प्रकरोति 'कर्म' अन्तरायनामकमित्युक्त भवति, स हि क्षपितमोहनीयस्तीर्णमहासागर

इव श्रमोपेतो विश्रम्यान्तर्मुहूर्त्तं तद्द्विचरमसमये निद्राप्रचले देवगत्यादिनामप्रकृतीश्च क्षपयति, चरमसमये च ज्ञाना-वरणादित्रयमिति सूत्रार्थः ॥ तत्क्षयाच्च कं गुणमवाप्नोति ? इत्याह—

सव्वं तओ जाणइ पासई य, अमोहणो होइ निरंतराए।
अणासवे झाणसमाहिजुत्तो, आउक्खए मुक्खमुवेइ सुद्धे ॥ १०९ ॥

'सर्वं' निरवशेषं 'ततः' ज्ञानावरणादिक्षयात् 'जानाति' विशेषरूपतयाऽवगच्छति पश्यति च सामान्यरूपतया 'चः' समुच्चयार्थः, तत एतेन भेदविषयत्वात्समुच्चयस्य पृथगुपयोगत्वमनयोः सूच्यते, ततश्च यदुक्तं युगपदुपयोगवा-दिना—"[1]मणपज्जवणाणंतो णाणस्स य दंसणस्स य विसेसो । केवलणाणं पुण दंसणन्ति नाणंति य समाणं ॥१॥"ति, तन्निराकृतं भवति, तथा च प्रज्ञप्त्यामभिहितम्—"जं[2] समयं जाणंति णो तं समयं पासंति,' तथा के[3]वली णं भंते ! इमं रयणप्पभं पुढविं आगारेहिं हेऊहिं पमाणेहिं संठाणेहिं परिवारेहिं जं समयं जाणइ नो तं समयं पासति ?, हंता गोयमा ! केवली ण" मित्यादि, न चात्र केवलिशब्देन छद्मस्थ एव श्रुतकेवल्यादिर्विवक्षित इति वाच्यं, यत इहाद्यसूत्रे



१ मनःपर्यायज्ञानान्तः ज्ञानस्य च दर्शनस्य च विशेषः । केवलज्ञानं पुनर्दर्शनमिति ज्ञानमिति च समानम् ॥ १ ॥ २ यस्मिन् समये जानन्ति न तस्मिन् समये पश्यन्ति ३ केवली भदन्त ! इमां रत्नप्रभां पृथ्वीमाकारैः प्रमाणैर्हेतुभिः संस्थानैः परिवारैः यस्मिन् समये जानाति न तस्मिन् समये पश्यति ? हन्त गौतम ! केवली

यथा–भगवन् ! प्रमादाचरितमिद मम क्षमितव्य, न पुनरित्थमाचरिष्यामीति सूत्रार्थ ॥ ४१ ॥ साम्प्रत यथा निरपायादतयाऽऽचार्यकोप एव न स्यात् तथाऽऽह–

धम्मज्जिय च ववहार, बुद्धेहाऽऽयरिय सया । तमायरतो ववहार, गरह नाभिगच्छइ ॥ ४२ ॥ (सूत्रम्)

व्याख्या—धर्मेण–क्षान्त्यादिरूपेणार्जितम्–उपार्जित धर्मार्जित, न हि क्षान्त्यादिधर्मविरहित इम प्राप्नोतीति, 'च' पूरणे, विविध विधिवद्वाऽवहरणमनेकार्थत्वादाचरण व्यवहारस्त–यतिकर्तव्यतारूप, 'बुद्धै' अवगततत्त्वै आचरित, 'सदा' सर्वकाल, 'त'मिति सदावस्थिततया प्रतीतमेव 'आचरन्' व्यवहरन्, यद्वा–यत्तदोर्नित्याभिसम्बन्धात् सुब्व्यत्ययाच्च धर्मार्जितो बुद्धैराचरितश्च यो व्यवहारस्तमाचरन्–कुर्वन्, विशेषेणापहरति पापकर्मेति व्यवहारस्त, व्यवहारविशेषणमेतत्, एव च किमित्याह–'गर्हाम्' अविनीतोऽयमित्येवविधा निन्दा 'नाभिगच्छति' न प्राप्नोति, यतिरिति गम्यते। यद्वा–आचार्यविनयमनेनाह, तत्र धर्मादनपेतो धर्म्यो–न धर्मातिक्रान्त, 'जिय च ववहार'ति प्राकृतत्वाद्यस्य भिन्नक्रमत्वाज्जीतव्यवहारश्च, अनेन चागमादिव्यवहारव्यवच्छेदमाह, अत एव 'बुद्धै' आचार्यैराचरित सदा–सर्वकालं त्रिकालविषयत्वात् जीतव्यवहारस्य, य एवविधो व्यवहारस्त व्यवहार–प्रमादात् स्खलितादौ प्रायश्चित्तदानरूपमाचरन् 'गर्हा' दण्डरुचिरय निर्घृणो वेत्येवरूपा जुगुप्सा नाभिगच्छति, आचार्य इति शेष, न चाय निजक उपकारी

सर्वत्र सुब्व्यत्ययेन षष्ठी 'मुक्तः' पृथग्भूतः, यत् कीदृगित्याह—'यद्' दुःखं 'बाधते' पीडयति 'सततम्' अनवरतं 'जन्तुं' प्राणिनम् 'एनं' प्रत्यक्षमनुभवोपदर्शनमेतत्, दीर्घाणि यानि स्थितितः प्रक्रमात्कर्माणि तान्यामया इव—रोगा इव विविधबाधाविधायितया दीर्घामयास्तेभ्यो विप्रमुक्तो दीर्घामयविप्रमुक्तः अत एव 'प्रशस्तः' प्रशंसार्हः, ततः किमित्याह—'तो' इति 'ततः' दीर्घामयविप्रमोक्षाद् 'भवति' जायतेऽत्यन्तम्—अतिक्रान्तपर्यन्तं सुखं—शर्म तदस्यास्तीत्यत्यन्तसुखी तत एव च 'कृतार्थः' कृतसकलकृत्य इति सूत्रार्थः ॥ सकलाध्ययनार्थं निगमयितुमाह—

अणाइकालप्पभवस्स एसो, सव्वस्स दुक्खस्स पमुक्खमग्गो ।
वियाहिओ जं समुविच्च सत्ता, कमेण अच्चंतसुही भवंति ॥ १११ ॥ त्तिबेमि ॥

॥ पमायट्ठाणं ॥ ३२ ॥

'अनादिकालप्रभवस्य' अनादिकालोत्पन्नस्य 'एषः' अनन्तरोक्तः सर्वस्य दुःखस्य 'प्रमोक्षमार्गः' प्रमोक्षोपायः, पाठान्तरतश्च संसारचक्रस्य विमोक्षमार्गो, व्याख्यातः, यः कीदृशः ? इत्याह—'यं' दुःखप्रमोक्षमार्गं 'समुपेत्य' सम्यक् प्रतिपद्य 'सत्त्वाः' प्राणिनः 'क्रमेण' उत्तरोत्तरगुणप्रतिपत्तिरूपेणात्यन्तसुखिनो भवन्तीति सूत्रार्थः ॥ इति परिसमाप्तौ, ब्रवीमीति पूर्ववत् । अवसितोऽनुगमो, नयाश्च प्राग्वत् ॥ इत्युत्तराध्ययनटीकायां श्रीशान्त्याचार्यविरचितायां शिष्यहितायां प्रमादस्थानं नाम द्वात्रिंशमध्ययनं समाप्तमिति ॥ ३२ ॥

स्नातक एव प्रस्तुत , स च घातिकर्मक्षयादेव भवतीति न तस्य छद्मस्थता सभवेत्, द्वितीयसूत्रे तु परमाणुदर्शनमेव प्रक्रान्त, तस्य च केवल विना परमावधेस्ततो वा किञ्चिन् यूनस्यैव सम्भवस्तत्र च तौ व्यवच्छेदिताविति केवलमेवावशिष्यते, उक्त च पूज्यै –"ते दोऽवि विसेसेउ अन्नो छउमत्थकेवली को सो ?। जो पासइ परमाणु गहणमिहं जस्स होज्जाहि ॥१॥" न चैवमप्यस्मिन् विशेपयति सूत्रे परयक्तव्यतैवेथमित्युपगन्तुमुचितम्, उक्त हि–"ऐव विसेसियमिवि परमयमेगतरावओगोत्ति । ण पुण उभओवओगो परयत्तयत्ति का बुद्धी ? ॥ १ ॥" इत्यादि कृत प्रसङ्गेन प्रकृतमुच्यते—तथा चामोहन –मोहरहितो भवति, तथा निष्क्रान्तोऽन्तरायो (यात्) निरन्तरायोऽनाश्रव. प्राग्वत्, ध्यानं–शुक्लध्यान तेन समाधि –परमस्वास्थ्य तेन युक्त –सहितो ध्यानसमाधियुक्त आयुप उपलक्षणत्वान्नामगोत्रवेद्याना च क्षय आयु - क्षयस्तस्मिन् सति मोक्षम् 'उपैति' प्राप्नोति 'शुद्ध ' विगतकर्ममल इति सूत्रार्थ ॥ मोक्षगतश्च यादृशो भवति तदाह–

सो तस्स सव्वस्स दुहस्स मुक्खो, ज बाहई सयय जतुमेय ।
दीहामयव्विप्पमुक्को पसत्थो, तो होइ अच्चतसुही कयत्थो ॥ ११० ॥

'स ' इति मोक्षप्राप्तो जन्तु. 'तस्मात्' इति जातिजरामरणरूपत्वेन प्रतिपादितात् 'सर्वस्मात्' निरवशेषाद् दु.खात्

---

१ तौ द्वावपि अपोह्य अ यश्छद्मस्थकेवली कः स ? । यः पश्यति परमाणु ग्रहणमिह यस्य भवेत् ॥ १ ॥ २ एव विशेपितेऽपि परम तमेकान्तरोपयोग इति । न पुनरुभयोपयोग परयत्तव्यतेति का बुद्धिः ? ॥ २ ॥

नोकम्मे दव्वाइं गहणपाउग्गमुक्कगाइं च । भावे उदओ भणिओ मूलपयडि उत्तराणं च ॥ ५३२ ॥

कम्मंमीत्यादि गाथाः षट् सुगमाः, नवरं 'कर्मणि' ज्ञानावरणादिके उदयो—विपाकस्तदभावोऽनुदयो भणितः, किमुक्तं भवति ?—अनुदयावस्थं कर्मैव कर्मकार्याकरणात् तद्व्यतिरिक्तं द्रव्यकर्म, नोकर्मद्रव्यकर्म ज्ञातव्यं लेप्यकर्मादिकम्, आदिशब्दात्काष्ठकर्मादिपरिग्रहः, नोकर्मता चास्य ज्ञानावरणादिकर्माभावरूपत्वात्, द्रव्यकर्मता च द्रव्यस—प्रतिमादेः क्रियमाणत्वात्, 'भावे' विचार्ये प्रक्रमात्कर्म 'उदयः' विपाकः 'भणितः' उक्तः, अयं च कस्य सम्बन्धी ज्ञायताम् ? इत्याह—'कम्मट्ठविहस्स'त्ति प्राग्वदष्टविधकर्मणो ज्ञातव्यो, ज्ञानावरणाद्यष्टविधकर्मोदयावस्थं भावकर्म, तस्यैव कर्मकार्यकरणादिति भावः । प्रकृतिनिक्षेपे कर्मणि—मूलप्रकृत्यादिरूपेऽनुदयस्तद्व्यतिरिक्ता द्रव्यप्रकृतिः, नोकर्माणि द्रव्याणि ग्रहणप्रायोग्यानि यान्यद्यापि तावन्न गृह्यन्ते ग्रहणयोग्यता चास्ति येपाम्, आर्षत्वात्सुपो लुक्, तथा मुक्तान्येव मुक्तकानि—यानि कर्मतया परिणमय्य प्रोज्झितानि यथाक्रमं पुरस्कृतपश्चात्कृतपर्यायत्वाद्, 'भाव' इति भावे विचार्ये 'उदयः' विपाकः 'भणितः' उक्तः प्रकृतिरिति प्रक्रमः, कासामित्याह—'मूलपगडि उत्तराणं च' त्ति मूलप्रकृतीनामुत्तरप्रकृतीनां चेहैव वक्ष्यमाणानामिति गाथाषट्कार्थः ॥ इत्यवसितो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

अट्ठ कम्माइं वुच्छामि, आणुपुव्विं जहक्कमं । जेहिं बद्धे अयं जीवे, संसारे परिवत्तए ॥ १ ॥

## अथ कर्मप्रकृतिरितिनाम त्रयस्त्रिंशत्तममध्ययनम्

व्याख्यात प्रमादस्थानाख्य द्वात्रिंशमध्ययनमिदानीं त्रयस्त्रिंशमारभ्यते, अस्य चायमभिसम्बन्ध —इहानन्तराध्ययने प्रमादस्थानान्युक्तानि, तैश्च 'मिथ्यात्वाविरतिप्रमादकषाययोगा बन्धहेतव' (तत्त्वा० अ० ८ सू० १) इतिवचनात्कर्म बध्यते, तस्य च का प्रकृतय ? कियती वा स्थिति ? इत्यादिसन्देहापनोदायेदमारभ्यते, अस्य च चतुरनुयोगद्वारचर्चा प्राग्वद्यावन्नामनिष्पन्ननिक्षेपे कर्मप्रकृतिरिति नाम, अत कर्मण प्रकृतेश्च निक्षेपाभिधानायाह निर्युक्तिकृत्—

कम्ममि अ निक्खेवो चउव्विहो० ॥ ५२७ ॥
जाणगभवियसरीरे तव्वइरित्त च त भवे दुविह । कम्मे नोकम्मे या कम्मंमि अ अणुदओ भणिओ ५२८
नोकम्मदव्वकम्म नायव्व लेप्पकम्ममाईअ । भावे उदओ भणिओ कम्मट्ठविहस्स नायव्वो ॥ ५२९ ॥
निक्खेवो पयडीए चउव्वि० ॥ ५३० ॥
जाणगभवियसरीरा तव्वइरित्ता य सा पुणो दुविहा। कम्मे नोकम्मे या कम्ममि अ अणुदओ भणिओ ५३१

'चः' समुच्चये, गीयते—शब्द्यते उच्चावचैः शब्दैः कुलालादिव मृद्द्रव्यमत आत्मेति गोत्रं तच्च अन्तरा-दातृप्रतिग्राहकयो-
रन्तर्भाण्डागारिकवद्विघ्नहेतुतयाऽयते—गच्छतीत्यन्तरायं तथैव च सर्वत्रासदपि कर्मेति संवध्यते, उपसंहारमाह—
'एवम्' अमुना प्रकारेणैतानि कर्माण्यष्टैव 'तुः' पूरणे 'समासतः' सङ्क्षेपेण, विस्तरतस्तु यावन्तो जन्तुभेदास्तान्यपि
तावन्तीत्यनन्तान्येवेति भावः ॥ अत्र च ज्ञानदर्शनस्वतत्त्वोऽयमात्मेत्यन्तरङ्गत्वात्तयोरादितस्तदावरणोपादानं, समा-
नेऽपि च तयोरन्तरङ्गत्वे ज्ञानोपयोग एव सर्वलब्धीनामवाप्तिः, यदुक्तम्—"सव्वाओ लद्धीओ सागारोवओगउत्तस्स" त्ति,
अतो ज्ञानस्य प्राधान्यमिति तदावरणस्य प्रथमस्तदनु दर्शनावरणस्य ततः केवलिनोऽप्येकविधबन्धकस्य सातबन्धो-
ऽस्तीति व्यापित्वाद्वेदनीयस्य ततोऽपि प्रायः संसारिणामिष्टानिष्टविषयसम्बन्धात्सुखदुःखे इष्टानिष्टता च रागद्वे-
षाभ्यां तद्रूपं च प्रायो मोहनीयमिति तस्य ततश्चैतत्प्रकर्षापकर्षभावित्वादायुर्निबन्धनानां बह्वारम्भपरिग्रहत्वा-
ल्पारम्भपरिग्रहत्वादीनां तदुद्भवं चायुष्कमिति तस्य तदुदयश्च प्रायो गत्यादिनामोदयाविनाभावीति ततो नाम्नः
ततोऽपि च नरकादिनामोदयसहभाव्येव गोत्रकर्मोदय इति गोत्रस्य ततश्चोच्चनीचभेदभिन्नात्प्रायो दानादिलब्धिभा-
वाभावौ तयोश्चान्तरायक्षयोदयावन्तरङ्गहेतू इति तदनन्तरमन्तरायस्येति सूत्रद्वयार्थः ॥ इत्थं कर्मणो मूलप्रकृतीर-
भिधायोत्तरप्रकृतीराह—

नाणावरणं पंचविहं, सुअं आभिणिबोहियं । ओहिं नाणं तईयं, मणनाणं च केवलं ॥ ४ ॥ निद्दा तहेव

॥६४१॥

'अष्ट' इत्यष्टसङ्ख्यानि क्रियन्ते मिथ्यात्वादिहेतुभिर्जीवेनेति कर्माणि 'वक्ष्यामि' प्रतिपादयिष्ये 'आणुपुव्वि'न्ति प्राग्वत्सुब्व्यत्ययादानुपूर्व्या, इय च पश्चानुपूर्व्यादिरपि सभवत्यत आह–'यथाक्रम' क्रमानतिक्रमेण पूर्वानुपूर्व्येतियावत्, पठन्ति च 'सुणेह मे' इति प्राग्वत्, यानि कीदृशीत्याह–'यै' कर्मभि 'वद्ध' श्लिष्ट 'अय मिति प्रतिप्राणिस्वसवेद्यो जीव ससारे परिवर्त्तते ऽज्ञतादिविविधपर्यायानुभवनतोऽन्यथा च अन्यथा च भवति परिभ्रमति वा पाठान्तरत इति सूत्रार्थः ॥ यथाप्रतिज्ञातमाह—

नाणस्सावरणिज्ज, दसणावरण तहा । वेयणिज्ज तहा मोह, आउकम्म तहेव य ॥ २ ॥

नामकम्म च गोय च, अतराय तहेव य । एवमेयाइ कम्माइ, अट्ठेव य समासओ ॥ ३ ॥

ज्ञायतेऽनेनेति ज्ञानम्–अवबोधस्तस्य आव्रियते–सदप्याच्छाद्यतेऽनेन पटेनेव विवस्वत्प्रकाश इत्यावरणीय 'कृत्यल्युटो वहुल'(पा०३ ३-११३)मिति वचनात्करणेऽनीय, दृश्यतेऽनेनेति दर्शन–सामान्यावबोधस्तदाव्रियते वस्तुनि प्रतीहारेणेव नृपतिदर्शनमनेनेति दर्शनावरण, तथा वेद्यते–सुखदु खतयाऽनुभूयते लिह्यमानमधुलिप्तासिधारावदिति वेदनीय, तथा मोहयति जानानमपि मद्यपानवद्विचित्ततजननेनेति मोहस्तम्, आयाति–आगच्छति स्वकृतकर्मावासनरकादिकुगतेर्निष्क्रमितुमनसोऽप्यात्मनो निगडवत्प्रतिवन्धकतामित्यायु तदेव कर्म आयु कर्म तथैव च । नमयति–गत्यादिविविधभावानुभवन प्रत्यात्मान प्रवणयति चित्रकर इव करितुरगादिभाव प्रति रेखाकृतिमिति नामकर्म,

'तथैवे'ति तेनैव निद्रावत्किञ्चिच्छुभरूपतात्मकेन प्रकारेण प्रचलत्यस्यामासीनोऽपीति प्रचला, उक्तं हि—"पयला होति ठियस्स उ"त्ति, 'निद्रानिद्रा च' अतिशयनिद्रा दुःखप्रतिवोधात्मिकाऽतिशयख्यापनार्थत्वाद् द्विरुच्चारणस्य, यदुक्तम्—"दुहपडिवोहो य णिद्दणिद्द"त्ति, एवं 'प्रचलाप्रचला' प्रचलाऽतिशायिनी, सा हि चङ्क्रम्यमाणस्यापि भवति, यथोक्तम्—"पयलापयला उ चंकमओ"त्ति, चशब्दावुभयत्र तुल्यताख्यापकौ, द्वे अपि ह्यशुभतया तुल्ये एवैते, तत उपरीति शेपस्ततश्च प्रकृष्टतराशुभानुभावतया ताभ्य उपरिवर्त्तिनी स्त्याना संहतोपचितेत्यर्थः ऋद्धिर्गृद्धिर्वा यस्यां सा स्त्यानर्द्धिः स्त्यानगृद्धिर्वा, प्राग्वच्चः समुच्चयार्थं इह योज्यते, एतदुदये च वासुदेववलार्द्धवलः प्रवलरागद्वेषोदयवांश्च जन्तुर्जायते, अत एव परिचिन्तितार्थसाधन्यसावुच्यते, यदुक्तम्—"थीणद्धी पुण दिणचिंतियस्स अत्थस्स साहणी पायं"ति, 'तुः' पूरणे पञ्चमी भवति ज्ञातव्या । 'चक्खुमचक्खूओहिस्स'त्ति मकारोऽलाक्षणिकः, ततश्चक्षुश्चाचक्षुश्चावधिश्च चक्षुरचक्षुरवधीति समाहारस्तस्य दर्शन इति च प्रत्येकं दर्शनशब्दो योज्यते ततश्चक्षुर्दर्शने—चक्षुपा रूपसामान्यग्रहणे अचक्षुंपि—चक्षुःसदृशानि शेपेन्द्रियमनांसि तद्दर्शने—तेपां स्वस्वविपयसामान्यपरिच्छेदे अवधिदर्शने—अवधिना रूपिद्रव्याणां सामान्यग्रहणे, तथा 'केवले य'त्ति प्रक्रमात्केवलदर्शने—सर्वद्रव्यपर्याणां सामान्याववोधे, आवरणमेतच्चक्षुर्दर्शनादिविपयभेदाच्चतुर्विधमत आह—'एवम्' इत्यनेन निद्रापञ्चविधत्वच-

१ प्रचला भवति स्थितस्यैव २ दुःखप्रतिवोधो निद्रानिद्रेति ३ प्रचलाप्रचला तु चंक्रम्यमाणस्य ४ स्त्यानर्द्धिः पुनर्दिनचिन्तितार्थस्य साधनी प्रायः

पयला निद्दानिद्दा य पयलपयला य। तत्तो य थीणगिद्धी पचमा होइ नायव्वा ॥ ५ ॥ चक्खुमचक्खूओहिस्स दसणे केवले य आवरणे। एव तु नवविगप्प नायव्व दसणावरण ॥ ६ ॥ वेयणियपि हु(य) दुविह सायमसाय च आहिय। सायस्स उ बहू भेया, एमेवासायस्सवि ॥ ७ ॥ मोहणियपि य दुविह, दसणे चरणे तहा। दसणे तिविह वुत्त, चरणे दुविह भवे ॥ ८ ॥ सम्मत्त चेव मिच्छत्त, सम्मामिच्छत्तमेव य। एयाओ तिन्नि पयडीओ, मोहणिज्जस्स दसणे ॥ ९ ॥ चरित्तमोहण कम्म, दुविह तु वियाहिय। कसायमोहणिज्ज च, नोकसाय तहेव य ॥ १० ॥ सोलसविहभेएण, कम्म तु कसायज। सत्तविह नवविह वा, कम्म नोकसायज ॥ ११ ॥ नेरइयतिरिक्खाऊ, मणुस्साउ तहेव य। देवाऊय चउत्थ तु, आउकम्म चउव्विह ॥ १२ ॥ नामकम्म दुविह, सुहमसुह च आहिय। सुहस्स उ बहू भेया, एमेव य असुहस्सवि ॥ १३ ॥ गोय कम्म दुविह, उच्च नीय च आहिय। उच्च अट्ठविह होइ, एव नीयपि आहिय ॥ १४ ॥ दाणे लाभे य भोगे य, उवभोगे वीरिए तहा। पचविहमन्तराय, समासेण वियाहिय ॥ १५ ॥

णाणावरणेत्यादि सूत्राणि द्वादश, ज्ञानावरण 'पञ्चविध' पञ्चप्रकार, तत् कथं पञ्चविधमित्याशङ्कायामाचार्यभेदादेवेहावरणस्य भेद इत्यभिप्रायेणाचार्यस्य ज्ञानस्यैव भेदानाह—श्रुतमाभिनिबोधिकमवधिज्ञान तृतीय मनोज्ञान च केवलम्, एतत्स्वरूप मोक्षमार्गाध्ययन एवोक्तम्। निद्राण निद्रा, सा चेह सुखप्रतिबोधोच्यते, यदुक्तम्—"सुहपडिबोहो णिद्द"त्ति,

१ सुखप्रतिबोधो निद्रा

तुशब्दस्य भिन्नक्रमत्वात्तत्पुनर्द्विविधं व्याख्यातं श्रुतधरैरिति शेषः, पठन्ति च 'चरित्तमोहणिज्जं दुविहं वोच्छामि अणुपुवसो'त्ति स्पष्टमेव, कथं तद् द्विविधमित्याह—कषायाः—क्रोधादयस्तद्रूपेण वेद्यते—अनुभूयते यत्तत्कषायवेदनीयं 'चः' समुच्चये 'नोकषायम्' इति प्रस्तावान्नोकषायवेदनीयं नोकषायाः—कषायसहवर्त्तिनो हास्यादयस्तद्रूपेण यद्वेद्यते 'तथे'ति समुच्चये । अनयोरपि भेदानाह—षोडशविधः—षोडशप्रकारो यो भेदो—नानात्वं तेन, लक्षणे तृतीया, यद्वा षोडशविधं भेदेन—भिद्यमानतया चिन्त्यमानं, प्राकृतत्वादनुस्वारलोपः, कर्म क्रियमाणत्वात् 'तुः' पुनरर्थे भिन्नक्रमश्च, कषायेभ्यो जायत इति कषायजं "जं वेयति तं बंधति"[1] इतिवचनात् कषायवेदनीयमित्यर्थः, षोडशविधत्वं चास्य क्रोधमानमायालोभानां चतुर्णामपि प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनभेदतश्चतुर्विधत्वात् 'सत्तविह'त्ति प्राग्वद्बिन्दुलोपात्सप्तविधं वा कर्म नोकषायेभ्यो जायत इति 'नोकषायजं' नोकषायवेदनीयमित्यर्थः, तत्र सप्तविधं हास्यरत्यरतिभयशोकजुगुप्साः षट् वेदश्च सामान्यविवक्षयैक एवेति, यदा तु वेदः स्त्रीपुंनपुंसकभेदेन त्रिधेति विवक्ष्यते तदा षड्भिस्त्रयो मीलिता नव भवन्तीति नवविधमिति । 'णेरइयतिरिक्खाउ'त्ति आयुःशब्दः प्रत्येकं योज्यते, ततश्च निष्क्रान्ता अयात्—इष्टफलदैवात्तत्रोत्पन्नानां सद्वेदनाऽभावेनेति निरयास्तेषु भवा नैरयिकास्तेषामायुः [ ग्रन्थाग्रम् १६००० ] नैरयिकायुर्येन तेषु ध्रियन्ते, तथा तिरोऽञ्चन्तीति—गच्छन्तीति

१ यद्वेदयति तद्बध्नाति

क्षुर्दर्शनावरणादिचतुर्विधत्वात्मकेन प्रकारेण 'तु' पूरणे नव विकल्पा–भेदा यस्य तत्तथाविध ज्ञातव्य दर्शनावरणम् । 'वेदनीय' वेदनीयकर्म 'अपि च' इति पूरणे 'द्विविध' द्विभेद सावते–आल्हादकत्वेनास्वाद्यत इति नैरुक्तविधिना 'सात' सुख शारीर मानस च इहोपचारात्तन्निबन्धन कर्मैवमुक्तम्, 'असात च' तद्विपरीतम् 'आख्यात' कथित तीर्थकृद्भिरिति गम्यते, 'सायस्स उ'त्ति 'तु' अपिशब्दार्थं तत सातस्यापि बहवो भेदा, न केवल ज्ञानदर्शनावरणयोरित्यपिशब्दार्थ, ते च तद्धेतुभूतभूतानुकम्पादिबहुभेदत्वाद्, एवमेवेति बहव एव भेदा असातस्यापि दुःखशोकतापादितद्धेतुबहुविधत्वादेवेति गर्भार्थ । मोहनीयमपि द्विविध, न केवल वेदनीय, विषयतश्चैतद्विधेति द्वैविध्यमाह–'दर्शने' तत्त्वरुचिरूपे 'चरणे' चारित्रे तथा, किमुक्त भवति ?–दर्शनमोहनीय चारित्रमोहनीय च, तत्र 'दर्शने' दर्शनविषय प्रक्रमान्मोहनीय त्रिविधमुक्त भवति, 'चरणे' चरणविषय मोहनीय द्विविध भवेत् । यथा दर्शनमोहनीयत्रैविध्य तथाऽऽह–सम्यग्भाव सम्यक्त्व–शुद्धदलिकरूप यदुदयेऽपि तत्त्वरुचि स्यात् 'चैवे'ति पूरणे मिथ्याभाव मिथ्यात्वम्–अशुद्धदलिकरूप यतस्तत्त्वेऽतत्त्वमतत्त्वेऽपि तत्त्वमिति बुद्धिरुत्पद्यते, सम्यग्मिथ्यात्वमेव च–शुद्धाशुद्धदलिकरूप यत उभयस्वभावता जन्तोर्भवति, इह च सम्यक्त्वादयो जीवधर्मास्तद्धेतुत्वाच्च दलिकेष्वेतद्व्यपदेश, एतास्तिस्र प्रकृतयो मोहनीयस्य 'दर्शने' दर्शनविषयस्य ६ । चरित्रे मुह्यतेऽनेनेति मोहन चरित्रमोहन कर्म यत श्रद्धानोऽपि यदि कथञ्चनाहमेन प्रतिपद्य इति जानन्नपि तत्फलादि न तत्प्रतिपद्यते, उत्तरत्र

वा मम विनेय इति न दण्डनीय इति ज्ञापनार्थं च धर्म्यजीतविशेषणं, पठन्ति च–'तमायरंतो मेहावि'त्ति सुगममेवेति सूत्रार्थः ॥ ४२ ॥ किं बहुना ?—

मणोगयं वक्कगयं, जाणित्ताऽऽयरियस्स उ । तं परिगिज्झ वायाए, कम्मुणा उववायए ॥ ४३ ॥(सूत्रम्)

व्याख्या—मनसि–चेतसि गतं–स्थितं मनोगतं तथा वाक्ये–वचनरचनात्मनि गतं वाक्यगतं, कृत्यमिति शेषः, वाक्यग्रहणं तु पदस्यापरिसमाप्तार्थाभिधायित्वेन क्वचिदप्रयोजकत्वात्, 'ज्ञात्वा' अवबुध्य 'आचार्यस्य' विनयार्हस्य गुरोः, तुशब्दः कायगतकृत्यपरिग्रहार्थः, 'तत्' मनोगतादि 'परिगृह्य' अङ्गीकृत्य 'वाचा' वचसा इदमित्थं करोमीत्यात्मकेन 'कर्मणा' क्रियया तन्निर्वर्तनात्मिकया तदुपपादयेत्–विदधीत, पठन्ति च—'मणोरुइं वक्करुइं, जाणित्ताऽऽयरियस्स उ'अत्र च मनसि रुचिः–अभिलापस्तामाचार्यस्य ज्ञात्वा–इदममीषां भगवतामभिमतमित्यवगम्य, वाक्ये रुचिः–पर्यवसितकार्यवाञ्छा तां च, शेषं प्राग्वत्, अनेन सूक्ष्मो विनय उक्त इति सूत्रार्थः ॥ ४३ ॥ स चैवं विनीतविनयतया यादृक् स्यात्तदाह–

वित्ते अचोइए निच्चं, खिप्पं हवइ सुचोयए । जहोवइट्ठं सुकडं, किच्चाइं कुव्वई सया ॥४४॥ (सूत्रम्)

व्याख्या—'वित्ते' इति विनीतविनयतयैव सकलगुणाश्रयतया प्रतीतः प्रसिद्ध इतियावत्, 'अचोइए'त्ति यथा हि

तिर्यंञ्च , व्युत्पत्तिनिमित्त चैतत् प्रवृत्तिनिमित्त तु तिर्यग्गतिनाम, एते चैकेन्द्रियादय , तत एपामायुस्तिर्यगायुर्येनैतेषु स्थितिर्भवति, तथा मनोरपत्यानि मनुष्या 'मनोर्जातावण्यतौ षुक्चे'ति(पा ४-१-१६१)यत्प्रत्यय षुगागमस्तेपामायुर्मनुष्यायु 'तथैव' तद्भावावस्थितिहेतुतयैव देवा–उक्तनिरुक्तास्तेपामायुर्देवायुर्येन तेष्ववस्थीयते चतुर्थं 'तुः' पूरणे, एव चायु कर्म चतुर्विधम् ९। नामकर्म द्विविध, कथमित्याह–शोभते सर्वावस्थास्वनेनात्मेति शुभम् अशुभ च तद्विपरीतमाख्यात 'सुहस्स'त्ति शुभस्यापि वहवो भेदा एवमेवाशुभस्यापि, तदपि वहुभेदमिति भावार्थ । तत्रोत्तरोत्तरभेदत शुभनाम्नोऽनन्तभेदत्वेऽपि विमध्यमविवक्षात सप्तत्रिंशद्भेदा , तद्यथा–मनुष्यगति १ देवगति २ पञ्चेन्द्रियजाति ३ औदारिक ४ वैक्रिय ५ आहारक ६ तैजस ७ कार्मण ८ शरीराणि पञ्च समचतुरस्रसंस्थान ९ वज्रर्षभनाराचसंहननम् १० औदारिक ११ वैक्रिय १२ आहारक १३ अङ्गोपाङ्गानि त्रीणि प्रशस्तवर्ण १४ गन्ध १५ रस १६ स्पर्शाश्चत्वार १७ मनुष्यानुपूर्वी १८ देवानुपूर्वी १९ चेत्यानुपूर्वीद्वयमगुरुलघु २० पराघातम् २१ उच्छ्वास २२ आतप २३ उद्द्योत २४ प्रशस्तविहायोगति २५ तथा त्रस २६ बादर २७ पज्जत्त २८ प्रत्येक २९ स्थिर ३० शुभ ३१ सुभग ३२ सुस्वरम् ३३ आदेय ३४ यश कीर्त्तिश्चेति ३५ निर्माण ३६ तीर्थंकरनाम चेति ३७, एताश्च सर्वा अपि शुभानुभावात् शुभ, तथाऽशुभनाम्नोऽपि विमध्यमविवक्षया चतुर्स्त्रिंशद्भेदा , तद्यथा–नरकगति १ तिर्यंगति २ एकेन्द्रियजाति ३ द्वीन्द्रियजाति ४ त्रीन्द्रियजाति ५ चतुरिन्द्रियजाति ६ ऋषभनाराच ७ नाराच

८ अर्धनाराचं ९ कीलिका १० सेवार्त्तं ११ न्यग्रोधमण्डलं १२ साति १३ वामनं १४ कुब्जं १५ हुण्डम् १६ अप्रशस्तवर्ण १७ गन्ध १८ रस १९ स्पर्शचतुष्टयं २० नरकानुपूर्वी २१ तिर्यगानुपूर्वी २२ उपघातम् २३ अप्रशस्त-विहायोगति २४ स्थावरं २५ सूक्ष्मम् २६ साधारणम् २७ अपर्याप्तम् २८ अस्थिरम् २९ अशुभं ३० दुर्भगं ३१ दुःस्वरम् ३२ अनादेयं ३३ अयशःकीर्त्तिश्चेति ३४, एतानि चाशुभनारकत्वादिनिवन्धनत्वेनाशुभानि, अत्र च वन्धनसङ्घाते शरीरेभ्यो वर्णाद्यवान्तरभेदाश्च वर्णादिभ्यः पृथग् न विवक्ष्यन्त इति नोक्तसङ्ख्यातिक्रमः । गोत्रं कर्म द्विविधमुच्चमिक्ष्वाकुजाताद्युच्चैर्व्यपदेशनिवन्धनं, नीचं च तद्विपरीतमाख्यातं, तत्रोच्चमित्युच्चैर्गोत्रमष्टविधं भवति, 'एवम्' इत्यष्टविधतयैव 'नीचमपि' नीचैर्गोत्रमप्याख्यातम्, अष्टविधत्वं चानयोर्बन्धहेत्वष्टविधत्वात्, अष्टौ हि जात्यमदादय उच्चैर्गोत्रस्य वन्धहेतवः, तावन्त एव च जातिमदादयो नीचैर्गोत्रस्य, तथा च प्रज्ञापना—"उच्चागोयकम्मसरीरपुच्छा, गोयमा ! जाइअमएणं कुलअमएणं वलअमएणं तवअमएणं ईसरियअमएणं सुयअमएणं लाभअमएणं उच्चागोयकम्मसरीरपयोगवं होति, णीयागोयकम्मसरीरपुच्छा, गोयमा ! जाइमएणं कुलमएणं" इत्याद्यालापकविपर्ययेणाष्टौ यावत् "णीयागोयकम्मसरीरपओगवं हवति"त्ति । दीयत इति दानं तस्मिन्, तथा लभ्यत इति लाभस्तास्मिंश्च, भुज्यते—सकृदुपयुज्यत इति भोगः—सकृद्भोग्यः पुष्पाहारादिविषयस्तत्र च, तथा उपेति—

अभ्यधिक पुन पुनरुपभुज्यमानतया भुज्यत इत्युपभोग –पुन पुनरुपभोग्यभवनाङ्गनादिविषय , उक्तं हि–"सैति भुज्जइत्ति भोगो सो पुण आहारपुष्फमाईओ । उवभोगो उ पुणो पुण उवभुज्जइ व भवणवणियाई ॥ १ ॥" तस्मिन्, विशेषेण ईर्य्यते–चेष्ट्यतेऽनेनेति वीर्यं तस्मिन्, 'तथा' समुच्चये सर्वत्रान्तरायमिति प्रक्रम , ततश्च विषयभेदात्पञ्चविधमन्तराय समासेन व्याख्यात, तत्र दानान्तराय यत्सति विशिष्टे ग्रहीतरि देये च वस्तुनि तत्फलमवगच्छतोऽपि दाने प्रवृत्तिमुपहन्ति, यत्पुनर्विशिष्टेऽपि दातरि याचन्निपुणेऽपि याचितरि उपलब्धिउपघातकृत् तल्लाभान्तरायं, भोगान्तराय तु सति विभवादौ सम्पद्यमाने च आहारमाल्यादौ यद्वशान्न भुङ्क्ते, उपभोगान्तराय तु यस्योदयात्सदपि वस्त्रालङ्कारादि नोपभुङ्क्ते, वीर्यान्तराय यद्वशाद्बलवान्नीरुग्वय स्थ अथ च तृणकुब्जीकरणेऽप्यसमर्थ इति सूत्रद्वादशकार्थ १२॥ इत्थ प्रकृतयोऽभिहिता , सम्प्रत्येतन्निगमनायोत्तरग्रन्थसम्बन्धनाय चाह—

एयाओ मूलपयडीओ, उत्तराओ अ आहिया । पएसग्ग खित्तकाले य, भाव चादुत्तरं सुण ॥ १६ ॥

'एता' अनन्तरोक्ता ज्ञानावरणादिरूपा मूलप्रकृतय , तथा 'उत्तरा' इत्युत्तरप्रकृतयश्च श्रुतावरणाद्या , चशब्द श्रुतादीनामप्यक्षरानक्षरादिभेदतो बहुविधत्वादनुक्तबहुभेदसूचक 'आख्याता' कथिता प्रदेशा –परमाणवस्तेषामग्र–परिमाण प्रदेशाग्र 'खेत्तकाले य' त्ति क्षेत्रकालौ च तत्र क्षियन्ति–निवसन्ति तस्मिन्निति क्षेत्रम्–आकाश कालश्च–

१ सकृद् भुज्यते इति भोग स पुनराहारपुष्पादिः । उपभोगस्तु अनेकशः पुन पुनरुपभुज्यते वा भवनवनितादि ॥ १ ॥

वद्धस्य कर्मणो जीवप्रदेशाविचटनात्मकः स्थितिकालः 'भावं च' अनुभागलक्षणं कर्मणः पर्यायं चतुःस्थानिकत्रिस्थानिकादिरसमितियावद् 'अतः उत्तर'मिति अतः—प्रकृत्यभिधानादूर्ध्वं श्रृणु कथ्यमानमिति शेष इति सूत्रार्थः ॥ तत्र तावत्प्रदेशाग्रमाह—

सव्वेसिं चेव कम्माणं, पएसग्गमणंतगं । गंठियसत्ताईयं, अंतो सिद्धाण आहियं ॥ १७ ॥

'सर्वेषां' समस्तानां 'चः' पूरणे 'एवः' अपिशब्दार्थे सर्वेषामपि न तु केषाञ्चिदेव 'कर्मणां' ज्ञानावरणादीनां 'प्रदेशाग्रं' परमाणुपरिमाणम् अनन्तमेवानन्तकमनन्तपरमाणुनिष्पन्नत्वात्तद्वर्गणानां, तच्चानन्तकं ग्रन्थिरिव ग्रन्थिः—घनो रागद्वेषपरिणामस्तं गच्छन्ति ग्रन्थिगास्ते च ते सत्त्वाश्च ग्रन्थिगसत्त्वाः—ये ग्रन्थिप्रदेशं गत्वाऽपि तद्भेदाविधानेन न कदाचिदुपरिष्टाद्गन्तारः ते चाभव्या एवात्र गृह्यन्ते तानतीतं—तेभ्योऽनन्तगुणत्वेनातिक्रान्तं ग्रन्थिगसत्त्वातीतं, तथा 'अन्तः' मध्ये 'सिद्धानां' सिद्धिपदप्राप्तानाम् 'आख्यातं' कथितं गणधरादिभिरिति गम्यते, सिद्धेभ्यो हि कर्मपरमाणवोऽनन्तभाग एव, तदपेक्षया सिद्धानामनन्तगुणत्वाद्, अतः सङ्ख्यामपेक्ष्य सिद्धान्तर्वर्त्ति तदनन्तकमुच्यते, एकसमये ग्राह्यकर्मपरमाण्वपेक्षं चैतत्, उक्तं हि—"ते य कम्मपोग्गला भवसिद्धिएहिं अनंतगुणा सिद्धाणमणंतभागमित्ता एगेगंमि समए गहणमिंति"त्ति, पठन्ति च—'गंठि(य)सत्ताऽणाइ'त्ति अत्र व्याख्यानिक-

१ ते च कर्मपुद्गला भवसिद्धिकेभ्योऽनन्तगुणाः सिद्धानामनन्तभागमात्रा एकैकस्मिन् समये ग्रहणमायान्ति

व्याख्या-ग्रन्थिप्रसक्ताना-घनरागद्वेषपरिणामग्रन्थिं कर्कशघनरूढग्रन्थिसम तथाविधपरिणामाभावतोऽभि दानाना सत्त्वाना यो बन्धः सोऽनाद्यनन्त -आद्यन्तविकलो ज्ञेय , सिद्धाना पुन -भविष्यत्सिद्धीना बन्धोऽनादिरपि 'अन्त' इति सान्तस्तथाविधपरिणामतो व्याख्यातो भगवद्भिरिति सूत्रार्थ ॥ सम्प्रति क्षेत्रमाह—

सव्वजीवाण कम्म तु, सगहे छद्दिसागय । सव्वेसुवि पएसेसु, सव्व सव्वेण बद्धग ॥ १८ ॥

सर्वे-एकेन्द्रियाद्यशेषभेदास्ते च ते जीवाश्च तेषा 'कर्म' ज्ञानावरणादि 'तु' पूरणे सङ्ग्रह -सङ्ग्रहणक्रिया तत्र योग्य भवतीतिशेष , यदिवा सर्वजीवा 'ण'ति वाक्यभूषाया कम्म 'सगहे'त्ति सगृह्णन्ति, कीदृश सदित्याह-'छद्दिसागय'त्ति षण्णा दिशाना समाहार षड्दिश तत्र गत-स्थित षड्दिशागतम्, अत्र चतस्रो दिश पूर्वादय ऊर्ध्वाधोदिग्द्वय चेति षड् भवन्ति, इद चात्मावष्टब्धाकाशप्रदेशापेक्षयोच्यते, यत्र ह्याकाशे जीवोऽवगाढस्तत्रैव ये कर्मपुद्गलास्ते रागादिस्नेहगुणयोगादात्मनि लगन्ति न क्षेत्रान्तरावगाढा , भिन्नदेशस्य तद्भावपरिणामाभावात्, यथा ह्यग्नि स्वदेशस्थितान् प्रायोग्यपुद्गलानात्मभावेन परिणमयति एव जीवोऽपीति, अल्पत्वाच्चेह विदिशामविवक्षितत्वेन षड्दिशागतमित्यभिधान, यतो विदिग्व्यवस्थितमपि कर्मात्मना गृह्यते, उक्त हि गन्धहस्तिना-"सर्वासु दिक्ष्वात्माद्यधिकासु व्यवस्थितान् पुद्गलानादत्ते" इति, तथा 'क्षेत्रप्रस्तावे यद्विदिग्निरूपण तच्चासामाकाशादभेदज्ञापनार्थं, तद्भेदेन तासामप्रतीतेः, तथा च यत्कैश्चिद्दिशा द्रव्यान्तरत्वमुक्त तदपास्त भवति, तथा षड्दिग्गतमपि द्वीन्द्रियादीने-

वाधिकृत्य नियमेन व्याख्येयमेकेन्द्रियाणामन्यथाऽपि सम्भवात्, तथा चागमः—"जीवे णं भंते! तेयाकम्मापोग्गलाणं गहणं करेमाणे किं तिदिसिं करेति चउद्दिसिं करेइ पंचदिसिं करेइ छद्दिसिं करेइ?, गोयमा! सिय तिदिसिं सिय चउद्दिसिं सिय पंचदिसिं सिय छद्दिसिं करेति, एगिंदिया णं भंते! तेयाकम्मपोग्गलाणं गहणं करेमाणे किं तिदिसिं जाव छद्दिसिं करेति?, गोयमा! सिय तिदिसिं सिय चउद्दिसिं सिय पंचदिसिं सिय छद्दिसिं करेइ, वेंदियतेंदियचउरिंदियपंचिंदिया नियमा छद्दिसिं"ति, तच्च षड्दिग्गतं सर्वेष्वपि न तु कतिपयेषु प्रदेशेष्वपि, अर्थादाकाशस्योक्तन्यायादात्मावष्टब्धेषु कर्म सर्वजीवानां सङ्ग्रहे योग्यं भवति, ते वा तत्संगृह्णन्ति, तत्स्थकर्मपुद्गलान् प्रत्यात्मनो ग्रहणहेत्वविशेषात्, तथा 'सर्वं' समस्तं ज्ञानावरणादि न त्वन्यतरदेव, आत्मा हि सर्वप्रकृतिप्रायोग्यान् पुद्गलान् सामान्येनादाय तानेवाध्यवसायविशेषात् पृथक् पृथग् ज्ञानावरणादिरूपत्वेन परिणमयति, तच्चैवंविधं कर्म संगृहीतं सत् किं कैश्चिदेवात्मप्रदेशैर्बद्धं भवति यद्वा सर्वेणात्मना? इत्याह—'सर्वेण' समस्तेन प्रक्रमादात्मना न तु कियद्भिरेव तत्प्रदेशैः बद्धं—क्षीरोदकवदात्मप्रदेशैः श्लिष्टं तदेव बद्धकम्, अन्योऽन्यसम्बद्धतया हि शृङ्खलावयवानामिव परस्परोपकारादात्मनः प्रदेशानां सहैव योगोपयोगौ भवतो, न त्वेकैकशः, तन्निमित्तकश्च कर्मबन्ध इति सोऽपि सर्वेणैवात्मना, ग्रहणपूर्वकत्वाच्च बन्धस्य तदप्येवमेव, यद्वा तद् गृहीतं सत् केन सह कियत्कथं वा बद्धं भवति? इत्याह—'सव्वेसुवि पएसेसु' सुब्व्यत्ययात्सर्वैरपि प्रदेशैः प्रक्रमादात्मनः 'सर्वं' सर्वप्रकृतिरूपं 'सर्वेण' गम्यमानत्वात्प्रकृतिस्थित्यादिना प्रकारेण बद्धकमिति सूत्रार्थः॥ सम्प्रति कालमाह—

उदहीसरिनामाण, तीसई कोडिकोडीओ । उक्कोसिया होइ ठिई, अतमुहुत्त जहन्निया ॥ १९ ॥ आवरणि ज्जाण दुण्हपि, वेयणिज्जे तहेव य । अतराए य कम्ममि, ठिई एसा वियाहिया ॥ २० ॥ उयहीसरिसनामाण, सत्तरिं कोडिकोडिओ । मोहणिज्जस्स उक्कोसा, अतमुहुत्त जहन्निया ॥ २१ ॥ तित्तीससागरोवमा, उक्कोसेण वियाहिया । ठिई उ आउकम्मस्स, अतमुहुत्त जहन्निया ॥ २२ ॥ उदहीसरिसनामाण, वीसइ कोडिकोडिओ । नामगोआण उक्कोसा, अतमुहुत्त जहन्निया ॥ २३ ॥

उदधि –समुद्रस्तेन सदृक्–सदृश नाम–अभिधानमेषामुदधिसदृग्नामानि–सागरोपमाणि तेषा त्रिंशत्कोटीकोट्य 'उक्कोसिय'त्ति उत्कृष्टा भवति 'स्थिति' अवस्थान, तथा मुहूर्त्तस्यान्तर अन्तर्मुहूर्त्त, मुहूर्त्तमपि न्यूनमित्यर्थ, जघन्यैव जघन्यका प्रक्रमात्स्थिति । केषामित्याह–'आवरणीययो' अन्यत्रैतद्व्यपदेशाश्रवणाज्ज्ञानदर्शनविषययो, ततो ज्ञानावरणीयदर्शनावरणीयोर्द्वयोरपि, वेदनीये तथैव च अन्तराये च कर्मणि स्थितिरेव व्याख्याता, इह च षष्ठीप्रक्रमेऽपि वेदनीय इत्यादौ सप्तम्यभिधानमनयोरर्थस्य तत्त्वतोऽभिन्नत्वात्, उक्त हि–"राजा भर्त्ता मनुष्यस्य, तेन रा[illegible] स उच्यते । वृक्षस्तिष्ठति शाखासु, ता वा तत्रेति तस्य ता ॥१॥" तथा इति वेदनीयस्यापि जघन्यस्थितिरन्तर्मुहूर्त्तमानैव सूत्रकारेणोक्ता, अन्ये तु 'जघन्या(अपरा) द्वादशमुहूर्त्ता वेदनीयस्ये'ति (तत्त्वा अ ८सू १९) द्वादशमुहूर्त्तमानामेवैतामिच्छन्ति, तदभिप्राय न विद्म । उदधिसदृशनाम्ना सप्ततिकोटीकोट्यो मोहनीयस्योत्कृष्टा अन्तर्मुहूर्त्त जघन्यका । त्रयस्त्रिंशत्सागरो-

पमाणि आर्षत्वाच्च सुपो लुक्, उत्कृष्टेन व्याख्याता स्थितिः 'तुः' पूरणे आयुःकर्मणोऽन्तर्मुहूर्त्तं जघन्यका। उदधिसदृशनाम्नां विंशतिकोटीकोट्यो नामगोत्रयोरुत्कृष्टा अष्ट मुहूर्त्ता जघन्यका इति सूत्रपञ्चकार्थः। इत्थमुत्कृष्टा जघन्या च स्थितिर्मूलप्रकृतिविषया सूत्रकारेणाभिहिता, विनेयानुग्रहार्थं तूत्तरप्रकृतिविषया प्रदर्श्यते—तत्रोत्कृष्टा स्त्रीवेदसातवेदनीयमनुजगत्यानुपूर्वीणां चतसृणामुत्तरप्रकृतीनां पञ्चदश सागरोपमकोटीकोट्यः, कषायषोडशकस्य चत्वारिंशन्नपुंसकारतिशोकभयजुगुप्सानां पञ्चानां विंशतिः, पुंवेदहास्यरतिदेवगत्यानुपूर्वीद्वयाद्यसंहननसंस्थानप्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्त्युच्चैर्गोत्राणां पञ्चदशानां दश न्यग्रोधसंस्थानद्वितीयसंहननयोर्द्वादश सातिसंस्थाननाराचसंहननयोश्चतुर्दश कुब्जार्द्धनाराचयोः षोडश वामनसंस्थानकीलिकासंहननद्वित्रिचतुरिन्द्रियजातिसूक्ष्मापर्याप्तकसाधारणानामष्टानामष्टादश तिर्यग्मनुष्यायुषोः पल्योपमत्रयं, अवशिष्टानां तु मूलप्रकृतिवदुत्कृष्टा स्थितिः, जघन्या तु निद्रापञ्चकासातावेदनीयानां षण्णां सागरोपमसप्तभागास्त्रयः पल्योपमासङ्ख्येयभागन्यूनाः सातस्य तु द्वादश मुहूर्त्ताः मिथ्यात्वस्य पल्योपमासङ्ख्येयभागोनं सागरोपमं आद्यकषायद्वादशकस्य चत्वारः सागरोपमसप्तभागास्तावतैव न्यूनाः, क्रोधस्य संज्वलनस्य मासद्वयं मानस्य मासो मासार्द्धं मायायाः पुंवेदस्याष्टौ वर्षाणि शेषनोकषायमनुष्यतिर्यग्गतिजातिपञ्चकौदारिकशरीरतदङ्गोपाङ्गतैजसकार्मणसंस्थानषट्कसंहननषट्कवर्णचतुष्कतिर्यग्मनुष्यानुपूर्व्यगुरुलघूपघातपराघातोच्छ्वासातपोद्योतप्रशस्ताप्रशस्तविहायोगतियशःकीर्त्तिवर्जत्रसादिविंशतिनिर्माणनीचैर्गोत्राणां षट्षष्ट्युत्तरप्रकृतीनां सा-

गरोपमसप्तभागौ द्वौ पल्योपमासङ्ख्येयभागन्यूनौ वैक्रियषट्कस्य सागरोपमसहस्रभागौ द्वौ पल्योपमासङ्ख्येयभागन्यूनौ आहारकतदङ्गोपाङ्गतीर्थंकरनाम्नामन्त सागरोपमकोटीकोटी, ननूत्कृष्टाऽपि एतावत्येवासां तिसृणां स्थितिरभिहिता, सत्य, तथाऽपि तत सङ्ख्येयगुणहीनत्वेनास्या जघन्यत्वमिति सम्प्रदाय , कृत प्रसङ्गेन प्रकृत प्रस्तुम इति, तत्र यदुक्त प्रदेशाग्र क्षेत्रकालौ च भाव चो(चात उ)त्तर शृणुतेति तत्र प्रदेशाग्र क्षेत्रकालौ चाभिहितौ, सम्प्रति भावमभिधातुमाह—

सिद्धाणणतभागो, अणुभागा हवति उ। सव्वेसुवि पएसग्ग, सव्वजीवेसु (स) इच्छिय ॥ २४ ॥

'सिद्धानाम्' मुक्तानामनन्तभागवर्तित्वादनन्तभाग 'अनुभागा' रसविशेषा भवन्ति 'तुः' पूरणे' अय चानन्तभागोऽनन्तसङ्ख्य एवेति, अनेनैषामान त्यमेवेत्थ विशिष्टमुक्त, सम्प्रति प्रदेशपरिमाणमाह—सर्वेष्वपि प्रक्रमादनुभागेषु प्रदिश्य त इति प्रदेशा—बुद्ध्या विभज्यमानास्तदविभागैकदेशास्तेषामग्र प्रदेशाग्र 'सवजीवेसुविच्छि(इच्छि)य'ति 'सर्वजीवेभ्य भव्याभव्येभ्योऽतिक्रान्त ततोऽपि तेषामन तगुणत्वेनाधिकत्वादिति सूत्रार्थ ॥ एवं प्रकृतिप्रदर्शनेन प्रकृतिबन्धप्रदेशाभिधानेन च प्रदेशबन्ध कालोक्त्या च स्थितिबन्ध अनेन चानुभागमभिधाय यदर्थमेते प्ररूपितास्तदुपदर्शयन्नुपसहारव्याजेनोपदेष्टुमाह—

तम्हा एएसि कम्माण, अणुभागे वियाणिया। एएसिं सवरे चेव, खवणे य जए बुहे ॥ २५ ॥ त्तिवेमि ॥

॥ कम्मपयडी ॥ ३३ ॥

'तम्ह'त्ति यस्मादेवंविधाः प्रकृतिबन्धादयस्तस्मात् 'एतेषाम्' अनन्तरमुक्तानां 'कर्मणां' ज्ञानावरणादीनामनुभागानुपलक्षणत्वात्प्रकृतिबन्धादींश्च 'विज्ञाय' विशेषेण–कटुकविपाकत्वलक्षणेन भवहेतुत्वलक्षणेन वाऽवबुध्य, अनुभागानामेव च साक्षादुपादानमेषामेवाशुभानां प्रायो भवनिर्वेदहेतुत्वात्, 'एषाम्' इति कर्मणां 'संवरे' अनुपात्तानामुपादाननिरोधे 'चः' समुच्चये 'एवे' त्यवधारणे भिन्नक्रमस्ततः 'क्षपणे च' उपात्तानां निर्जरणे 'जए'त्ति 'यतेतैव' यत्नं कुर्यादेव, कोऽसौ ?–'बुधः' तत्त्वावगमवानिति सूत्रार्थः ॥ अमुमेवार्थमनुवादद्वारेण व्यक्तीकर्त्तुमाह निर्युक्तिकृत्—

पगइठिई अणुभागं पएसकम्मं च सुट्ठु नाऊणं। एएसिं संवेर खलु खवणे उ सयावि जइअव्वं ॥५३३॥

स्पष्टैव । 'इति' परिसमाप्तौ ब्रवीमीति पूर्ववत् । इत्यवसितोऽनुगमः, सम्प्रति नयाः, तेऽपि प्राग्वत् ॥ इत्युत्तराध्ययनश्रुतस्कन्धटीकायां श्रीशान्त्याचार्यविरचितायां त्रयस्त्रिंशमध्ययनं समाप्तमिति ॥ ३३ ॥

इति श्रीशान्त्याचार्यकृतायां शिष्यहितायामुत्तरा॰टी॰कर्मप्रकृत्यभिधं त्रयस्त्रिंशमध्ययनं ॥

वलवद्विनीतधुर्यं प्रतोदोत्क्षेपमपि न सहते, कुतस्तन्निपतनम् ?, एवमयमप्यचोदित एव प्रतिप्रस्ताव गुरुकृत्येषु प्रवर्तेत इति कुत प्रेरितत्वमस्य ?, 'निस' सदा, न कदाचिदेव, स्वय प्रवर्तमानोऽपि प्रेरितोऽनुशयवानपि स्यादिति कदाशङ्कापनोदायाह–'क्षिप्रम्' इति शीघ्र भवति 'सुचोयए' त्ति शोभने प्रेरयितरि, गुराविति गम्यते, सोपस्कारत्वाच्च क्षिप्रमेव प्रेरके सति कृत्येषु वर्त्तते, नानुशयतो विलम्बितमेव, पठ्यते च–'वित्ते अचोइए खिप्प, पसन्ने थामव करे' इति, अत्र च 'प्रसन्न' प्रसत्तिमान्, नाहमानापित इत्यप्रसन्नो भवति, किन्तु ममायमनुग्रह इति मन्यते, क्षिप्रमेव च तत्कुरुते, 'थामव'त्ति स्थाम–वल तद्वान्, किमुक्त भवति ?–सति वले करोति, असति च सद्भावमेवाऽऽख्याति, यथाऽहमनेन कारणेन न शक्नोमीति । क्षिप्रमपि कुर्वन् कदाचिद्विपरीतमर्धविहित वा विदध्यात् तद्व्यवच्छेदायाह—'यथोपदिष्टम्' उपदिष्टानतिक्रमेण, 'सुकृत' सुष्ठु परिपूर्णं कृत यथा भवत्येव कृत्यानि 'करोति' निर्वर्तयति, सदा सता वा शोभनेन प्रकारेणेति सूत्रार्थ ॥ ४४ ॥ सम्प्रत्युपसहर्तुमाह–

णच्चा णमइ मेहावी, लोए कित्ती य जायइ। किच्चाण सरण होई, भूयाण जगई जहा ॥४५॥ (सूत्रम्)

व्याख्या—'ज्ञात्वा' अनन्तरमखिलमध्ययनार्थमवगम्य 'नमति' तत्कृत्यकरण प्रति प्रह्वीभवति 'मेधावी' एतदध्ययनार्थावधारणशक्तिमान् मर्यादावर्ती वा, तद्गुण वक्तुमाह–लोके कीर्ति –सुलब्धमस्य जन्म निस्तीर्णरूपो भवोदधिरनेनेत्यादिका श्लाघा चशब्द –'एकदिग्व्यापिनी कीर्ति , सर्वदिग्व्यापक यश ' इति प्रसिद्धेर्यशश्चेति समुचि-

दुविहा उ भावलेसा विसुद्धलेसा तहेव अविसुद्धा । दुविहा विसुद्धलेसा उवसमखइआ कसायाणं ॥
अविसुद्धभावलेसा सा दुविहा नियमसो उ नायवा । पिज्जंमि अ दोसंमि अ अहिगारो कम्मलेसाए५४१
नोकम्मदव्वलेसा पओगसा वीससा उ नायव्वा । भावे उदओ भणिओ छण्हं लेसाण जीवेसु ॥५४२॥
अज्झयणे निक्खेवो चउक्कओ दुविह होइ नायव्वो ।० ॥ ५४३ ॥
जाणगभवियसरीरं तवइरित्तं च पोत्थगाईसुं । अज्झप्पस्साणयणं नायव्वं भावमज्झयणं ॥ ५४४ ॥

लेसाणमित्यादि गाथा एकादश, तत्र 'लेसाणं'ति सूत्रत्वाल्लेश्यायां, कोऽर्थः ?—लेश्याशब्दस्य निक्षेपश्चतुर्विधो नामादि, 'दुविहो' इत्यादि प्राग्वद् यावत् 'सा पुणो दुविह'त्ति, 'सा' व्यतिरिक्तलेश्या पुनर्द्विविधा, द्वैविध्यमेवाह—कर्मणि नोकर्मणि च, तत्र कर्मण्यल्पवक्तव्यैवेति तामुपेक्ष्य नोकर्मविषयामाह—'नोकर्मणि' कर्माभावरूपे भवति द्विविधा 'तुः' अवधारणार्थे इति द्विधैव । कथमित्याह—'जीवानाम्' उपयोगलक्षणानाम् 'अजीवानां च' तद्विपरीतानाम्, उभयत्र लेश्येति प्रक्रमः, अत्र च नोकर्मत्वमुभयोरपि कर्माभावरूपत्वात्सम्बन्धिभेदाच्च द्विभेदत्वं, तत्रापि द्विविधा जीवानां भवति ज्ञातव्या, 'भवमभवसिद्धियाणं' ति मयालाक्षणिकत्वात् सिद्धिशब्दस्य च प्रत्येकमभिस-

## अथ लेश्याख्य चतुस्त्रिंशमध्ययनम् ।

व्याख्यात कर्मप्रकृतिनामक त्रयस्त्रिंशमध्ययन, सम्प्रति चतुस्त्रिंशमारभ्यते, अस्य चायमभिसम्बन्ध —अनन्तराध्ययने कर्मप्रकृतय उक्ता , तत्स्थितिश्च लेश्यावशत इत्यतस्तदभिधानार्थमिदमारभ्यते, अस्य चैवमभिसम्बन्धागतस्योपक्रमादिद्वारप्ररूपणा प्राग्वत्सुकरैव यावन्नामनिष्पन्ननिक्षेप , तत्र चास्य लेश्याऽध्ययनमिति नामातो लेश्याध्ययनशब्दयोर्निक्षेपमाह निर्युक्तिकृत्—

लेसाण निक्खेवो चउक्कओ दुविह होइ नायव्वो ।० ॥ ५३४ ॥
जाणगभवियसरीरा तव्वइरित्ता य सा पुणो दुविहा । कम्मा नोकम्मे या नोकम्मे हुति दुविहा उ ॥५३५॥
जीवाणमजीवाण य दुविहा जीवाण होइ नायव्वा । भवमभवसिद्धिआण दुविहाणवि होइ सत्तविहा ॥
अजीवकम्मनो दव्वलेसा सा दसविहा उ नायव्वा । चदाण य सूराण य गहगणनक्खत्तताराण ॥५३७॥
आभरणच्छायणादसगाण मणिकागिणीण जा लेसा । अजीवदव्वलेसा नायव्वा दसविहा एसा ॥५३८॥
जा दव्वकम्मलेसा सा नियमा छव्विहा उ नायव्वा । किण्हा नीला काऊ तेऊ पम्हा य सुक्का य ५३९

लेश्यामाह—या कर्मद्रव्यलेश्याऽश्रेतनतुशब्दसम्बन्धात्सा पुनः 'नियमात्' अवश्यम्भावात् षड्विधा 'ज्ञातव्या' अवबोद्धव्या, कथमित्याह—कृष्णा नीला 'काउ'त्ति कापोता 'तेउ'त्ति तैजसी पद्मा च शुक्ला चेति, इह च कर्मद्रव्यलेश्येति सामान्याभिधानेऽपि शरीरनामकर्मद्रव्याण्येव कर्मद्रव्यलेश्या, यदुक्तं प्रज्ञापनावृत्तिकृता—"योगपरिणामो लेश्या, कथं पुनर्योगपरिणामो लेश्या ?, यस्मात्सयोगिकेवली शुक्ललेश्यापरिणामेन विहृत्यान्तर्मुहूर्त्ते शेषे योगनिरोधं करोति, ततोऽयोगित्वमलेश्यत्वं च प्राप्नोति, अतोऽवगम्यते—योगपरिणामो लेश्येति, स पुनर्योगः शरीरनामकर्मपरिणतिविशेषः, यस्मादुक्तं—"कर्म हि कार्मणस्य कार्यमन्येषां च शरीराणा"मिति, तस्मादौदारिकादिशरीरयुक्तस्यात्मनो वीर्यपरिणतिविशेषः काययोगः, तथौदारिकवैक्रियाहारकशरीरव्यापाराहृतवाग्द्रव्यसमूहसाचिव्याज्जीवव्यापारो यः स वाग्योगः, तथैवौदारिकादिशरीरव्यापाराहृतमनोद्रव्यसमूहसाचिव्याज्जीवव्यापारो यः स मनोयोग इति, ततो यथैव कायादिकरणयुक्तस्यात्मनो वीर्यपरिणतिर्योग उच्यते तथैव लेश्याऽपी"ति गुरवस्तु व्याचक्षते—कर्मनिस्यन्दो लेश्या, यतः कर्मस्थितिहेतवो लेश्याः, यथोक्तम्—"ताः कृष्णनीलकापोततैजसीपद्मशुक्लनामानः । श्लेष इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्यः ॥ १ ॥" इति, योगपरिणामत्वे तु लेश्यानां "योगा पयडिपएसं ठिइअणुभागं कसायओ कुणति"त्ति वचनात्प्रकृतिप्रदेशबन्धहेतुत्वमेव स्यात् न तु कर्मस्थितिहेतुत्वं, कर्मनिस्यन्दरूपत्वे तु यावत्कषायोदयस्तावत्तन्निस्यन्दस्यापि सद्भावात्कर्मस्थितिहेतुत्वमपि युज्यत एव, अत एवोपशान्तक्षीणमोहयोः

म्वन्धाद् भविष्यतीति भवा—भाविनीत्यर्थ तादृशी सिद्धिर्येषा ते भवसिद्धिका—भव्यास्तेषाम् 'अभवसिद्धिकाना' तद्विपरीताना द्विविधानामप्युक्तभेदेन प्रक्रमाज्जीवाना भवति 'सत्तविधा' सप्तप्रकारा इहापि लेश्येति प्रक्रम, अत्र च जयसिंहसूरि कृष्णादय षट् सप्तमी सयोगजा इय च शरीरच्छायात्मका परिगृह्यते, अन्ये त्वौदारिकौदारिकमिश्रमित्यादिभेदत सप्तविधत्वेन जीवशरीरस्य तच्छायामेव कृष्णादिवर्णरूपा नोकर्मणि सप्तविधा जीवद्रव्यलेश्या मन्यन्ते, तथा 'अजीवकम्मणो दव्वलेस'त्ति अजीवाना 'कम्मणो'त्ति आर्षत्वान्नोकर्मणि द्रव्यलेश्या अजीवनोकर्मद्रव्यलेश्या, तुशब्दस्येह सम्बन्धात्सा पुनर्दशविधा ज्ञातव्या, चन्द्राणा सूर्याणा च ग्रहा—मङ्गलादयस्तद्गणश्च नक्षत्राणि च—कृत्तिकादीनि ताराश्च प्रकीर्णज्योतींषि ग्रहगणनक्षत्रतारास्तेषाम्, आभरणानि च—एकावलिप्रभृतीनि आच्छादनानि च—सुवर्णचरितादीनि आदर्शा एवादर्शका—दर्पणास्ते चाभरणाच्छादनादर्शकास्तेषा, तथा मणिश्च—मरकतादि काकिणि —चक्रवर्तिरत्न मणिकाकिण्यौ तयोर्या लेशयति—श्लेषयतीवात्मनि जननयनानीति लेश्या—अतीव चक्षुराक्षेपिका स्निग्धदीप्तरूपा छाया अजीवद्रव्यलेश्या प्रक्रमान्नोकर्मणि ज्ञातव्या दशविधैषा, अत्र च चन्द्रादिशब्दैस्तद्विमानानि 'तात्स्थ्यात्तद्व्यपदेश' इति न्यायेनोच्यन्ते, तेषा च पृथ्वीकायरूपत्वेऽपि स्वकायपरकायशस्त्रोपनिपातसम्भवात् तत्प्रदेशाना केषाञ्चिदचेतनत्वेनाजीवद्रव्यलेश्यात्व द्रष्टव्यम्, उपलक्षण चात्र दशविधत्वमेवविधद्रव्याणा रजतरूप्यताम्रादीना बहुतरत्वेन तच्छायाया अपि बहुतरभेदसम्भवात्, इत्थ नोकर्मद्रव्यलेश्यामभिधाय कर्मद्रव्य-

तदेवमस्या नामादिभेदतोऽनेकविधत्वे इह कयाऽधिकृतमित्याह—अधिकारः कर्मलेश्यया, कोऽर्थः ?—कर्मद्रव्यलेश्यया, प्रायस्तस्या एवात्र वर्णादिरूपेण विचारणात्। इत्थं नामादिभेदेन लेश्योक्ता, तत्र च वैचित्र्यात्सूत्रकृतेर्नोकर्मद्रव्यलेश्यायां भावलेश्यायां च यत्प्राग् नोक्तं सम्प्रति तदाह—'नोकर्मद्रव्यलेश्या' शरीराभरणादिच्छाया 'पओगस्स'त्ति प्रयोगः—जीवव्यापारः स च शरीरादिषु तैलाभ्यञ्जनमनःशिलाघर्षणादिस्तेन 'वीससा य'त्ति विस्रसा—जीवव्यापारनिरपेक्षाऽभ्रेन्द्रधनुरादीनां तथावृत्तिस्तया च ज्ञातव्या, 'भाव' इति भावलेश्या 'उदयः' विपाकः, इह तूपचारादुदयजनितपरिणामो भणितः षण्णां लेश्यानां जीवेषु। 'अज्झयणे' त्यादिगाथाद्वयमध्ययननिक्षेपाभिधायि विनयश्रुत एव व्याख्यातप्रायमिति गाथैकादशकार्थः ॥ सम्प्रत्युपसंहारव्याजेनोपदेशमाह—

एयासिं लेसाणं नाऊण सुहासुहं तु परिणामं। चइऊण अप्पसत्थं पसत्थलेसासु जइअव्वं ॥ ५४५ ॥

'एतासाम्' अनन्तरमुक्तस्वरूपाणां लेश्यानां 'ज्ञात्वा' एतदध्ययनानुसारतोऽवबुध्य शुभाशुभं 'तुः' पुनरर्थे ततः शुभाशुभं पुनः परिणामं, किमित्याह—'त्यक्त्वा' अपहाय 'अप्पसत्थं'ति 'अप्रशस्ता' अशुभपरिणामा कृष्णादिलेश्या इति योऽर्थः प्रशस्तलेश्यासु—शुभपरिणामरूपासु पीताद्यासु यतितव्यं, यथा ता भवन्ति तथा यत्नो विधेय इति गाथार्थः ॥ इत्यवसितो नामनिष्पन्नो निक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

कर्मनन्धसद्भावेऽपि न स्थितिसम्भवो, यदुक्तम्—"त पढमसमये वद्ध वीयसमये वेइय ततियसमए निज्जिण्णं"ति, आह–यदि कर्मनिस्सन्दो लेश्या तदा समुच्छिन्नक्रिय शुक्लध्यान ध्यायत कर्मचतुष्टयसद्भावे तन्निस्सन्दसम्भवेन कथ न लेश्यासद्भाव ?, उच्यते, नाय नियमो यदुत निस्सन्दवतो निस्यन्देन सदा भाव्य, कदाचिन्निस्यन्दवत्स्वपि वस्तुपु तथाविधावस्थाया तदभावदर्शनात्, यथोक्तम्—अयोगिनो योगपरिणामाभावे लेश्यापरिणामाभाव इति निश्चिनुम –योगपरिणाम एव लेश्येति, तदप्यसाधक, यतो रश्म्यादय सूर्याद्यभावे न भवन्ति, न च ते तद्रूपा एव, यत उक्तम्—"यच चन्द्रप्रभाद्यत्र, ज्ञात तज्ज्ञातमात्रकम् । प्रभा पुद्गलरूपा यत्तद्धर्मो नोपपद्यते ॥ १ ॥" अन्ये त्वाहु –कार्मणशरीरवत्पृथगेव कर्माष्टकात्कर्मवर्गणानिष्पन्नानि कर्मलेश्याद्रव्याणीति, तत्त्व पुन केवलिनो विदन्ति । इत्युक्ता द्रव्यलेश्या, भावलेश्यामाह–द्विविधा च भावलेश्या 'विशुद्धलेश्या' अकलुषद्रव्यसपर्कजात्मपरिणामरूपा तथैव 'अविशुद्धा' इत्यविशुद्धलेश्या, तत्र द्विविधा विशुद्धलेश्या 'उवसमखइय'त्ति सूत्रत्वादुपशमक्षयजा, केषा पुनरुपशमक्षयौ ? यतो जायत इयमित्याह—कषायाणाम्, अयमर्थ —कषायोपशमजा कषायक्षयजा च, एकान्तविशुद्धि चाऽऽश्रित्यैवमभिधानम्, अन्यथा हि क्षायोपशमिक्यपि शुक्ला तेज पद्मे च विशुद्धलेश्ये सभवत एवेति । अविशुद्धभावलेश्या सेति या प्रागुपक्षिप्ता 'द्विविधा' द्विभेदा 'णियमसा उ'त्ति, आर्षत्वात् 'नियमेन' अवश्यम्भावेन ज्ञातव्या 'पेज्जमि य'त्ति 'दोसमि-य'त्ति प्रेमणि च—रागे दोषे च द्वये, किमुक्त भवति ?—रागविषया द्वेषविषया च, इय चार्थात्कृष्णनीलकापोतरूपा,

जीमूतनिद्धसंकासा, गवलरिट्ठगसंनिभा । खंजंजणनयणनिभा, किण्हलेसा उ वण्णओ ॥ ४ ॥ नीलासोगसंकासा, चासपिच्छसमप्पभा । वेरुलियनिद्धसंकासा, नीललेसा उ वण्णओ ॥ ५ ॥ अयसीपुप्फसंकासा, कोइलच्छदसंनिभा । पारेवयगीवनिभा, काउलेसा उ वण्णओ ॥ ६ ॥ हिंगुलुयधाउसंकासा, तरुणाइचसंनिभा । सुयतुंडपईवनिभा, तेउलेसा उ वण्णओ ॥ ७ ॥ हरियालभेयसंकासा, हलिद्दाभेदसंनिभा । सणासणकुसुमनिभा, पम्हलेसा उ वण्णओ ॥ ८ ॥ संखंककुंदसंकासा, खीरधारसमप्पभा । रययहारसंकासा, सुक्कलेसा उ वण्णओ ॥ ९ ॥

'जीमूयनिद्धसंकास'त्ति प्राकृतत्वात् स्निग्धश्चासौ सजलत्वेन जीमूतश्च–मेघः स्निग्धजीमूतस्तद्वत्सम्यक् काशते–वर्णतः प्रकाशत इति स्निग्धजीमूतसङ्काशा तत्सदृशीतियावत्, तथा गवलं–महिषशृङ्गं रिष्ठो–द्रोणकाकः स एव रिष्ठकः यद्वा रिष्टको नाम फलविशेषस्तत्संनिभा–तच्छाया, 'खंजण'त्ति खञ्जनं–स्नेहाभ्यक्तशकटाक्षघर्षणोद्भूतमञ्जनं च–कज्जलं नयनं–लोचनम् इह चोपचारात्तेदकदेशस्तन्मध्यवर्त्ती कृष्णसारस्तन्निभा–तत्समा कृष्णलेश्या 'तुः' विशेषणे स च शेषलेश्याभ्यो वर्णकृतं विशेषं द्योतयति, यद्वा 'तुः' अवधारणे भिन्नक्रमश्च ततः 'वर्णत एव' वर्णमेवाश्रित्य न तु रसादीन्, एवमुत्तरत्रापि । नीलश्चासावशोकश्च–वृक्षविशेषो नीलाशोकस्तत्सङ्काशा, रक्ताशोकव्यवच्छेदार्थं च नीलविशेषणं, चासः–पक्षिविशेषस्तस्य पिच्छं–पतत्रं तत्समप्रभा–तत्तुल्यद्युतिः, स्निग्धो–दीप्तो वैडूर्यो–मणिविशेषस्तत्सङ्काशा–

लेसज्झयणं पवक्खामि, आणुपुव्वि जहक्कमं । छण्हपि कम्मलेसाणं, अणुभावे सुणेहि मे ॥ १ ॥

लेश्याभिधायकमध्ययनं लेश्याऽध्ययनं तत् 'प्रवक्ष्यामि' प्रकर्षेण—तासामेव नामवर्णादिनिरूपणात्मकेनाभिधास्ये, आनुपूर्व्या यथाक्रममिति च प्राग्वत्, तत्र च 'षण्णामपि' षट्सङ्ख्यानामपि वक्ष्यमाणभेदेन 'कर्मलेश्यानां' कर्मस्थितिविधातृतत्तद्विशिष्टपुद्गलरूपाणाम् 'अनुभावान्' रसविशेषान् शृणुत मम कथयत इति शेष इति सूत्रार्थः ॥ एतदनुभावाश्च नामादिप्ररूपणात् कथिता एव भवन्तीति तत्प्ररूपणाय विनेयाभिमुखीकरणकारि द्वारसूत्रमाह—

नामाइं वण्णरसगंधफासपरिणामलक्खणं ठाणं । ठिइं गइं च आउं, लेसाणं तु सुणेह मे ॥२॥ दारगाहा ॥

'नामानि' अभिधानानि वर्णश्च—कृष्णादी रसश्च—तिक्तादिर्गन्धश्च—सुरभ्यादि स्पर्शश्च—कर्कशादि परिणामश्च—जघन्यादि लक्षणं च—पञ्चाश्रयासेवनादि, एषां समाहारे वर्णगन्धरसस्पर्शपरिणामलक्षणं तत्, 'स्थानम्' उत्कर्षापकर्षरूपं 'स्थितिम्' अवस्थानकालं 'गतिं च' नरकादिकां यतो याऽवाप्यते 'आयुः' जीवितं च यावति च तत्रावशिष्यमाणे आगामिभवलेश्यापरिणामस्तदिह गृह्यते, लेश्यानां 'तु' पूरणे 'सुणेह मे'त्ति प्राग्वदिति सूत्रार्थः । अत्र च 'यथोद्देशं निर्देश' इति न्यायतो नामान्याह—

किण्हा नीला य काऊ य, तेऊ पम्हा तहेव य । सुक्का लेसा य छट्ठा उ, नामाइं तु जहक्कमं ॥ ३ ॥

किण्हासूत्रं स्पष्टमेव ॥ प्रत्येकमासां वर्णानाह—

जह तिकडुयस्स य रसो तिक्खो जह हत्थिपिप्पलीए वा । इत्तोवि अणंतगुणो रसो उ नीलाइ नायव्वो ॥११॥ जह तरुणअंबयरसो तुवरकवित्थस्स वावि जारिसओ । इत्तोवि अणंतगुणो रसो उ काऊइ णायव्वो ॥१२॥ जह परिणयंबगरसो पक्ककवित्थस्स वावि जारिसओ । इत्तोवि अणंतगुणो रसो उ तेऊइ नायव्वो १३ वरवारुणीइ व रसो विविहाण व आसवाण जारिसओ । महुमेरगस्स व रसो इत्तो पम्हाइ परएणं ॥ १४ ॥ खज्जूरमुद्दियरसो खीररसो खंडसक्काररसो वा । इत्तो उ अणंतगुणो रसो उ सुक्काइ नायव्वो ॥ १५ ॥

'यथे'ति सादृश्ये ततश्च यादृक् कटुकतुम्बकस्य रस—आस्वादः कटुकतुम्बकरसः 'निम्बरसः' प्रतीतः कटुका चासौ रोहिणी च—त्वग्विशेषः कटुकरोहिणी कटुकत्वाव्यभिचारित्वेऽपि तद्विशेषणमतिशयख्यापकं तद्रसो वा, औषधीविशेषो वा कटुकेह गृह्यते, 'यथे'ति सर्वत्रापेक्षते, इतोऽपि कटुकतुम्बकरसादेरनन्तेन—अनन्तराशिना गुणनं गुणो यस्यासावनन्तगुणो 'रसस्तु' आस्वादः 'कृष्णायाः' कृष्णलेश्यायाः 'ज्ञातव्यः' अवबोद्धव्योऽतिकटुक इति तात्पर्यम् । 'यथा' यादृशः 'त्रिकटुकस्य' प्रसिद्धस्य रसस्तीक्ष्णः—कटुर्यथा 'हस्तिपिप्पल्या वा' गजपिप्पल्या वाऽतोऽप्यनन्तगुणो रसस्तु नीलाया ज्ञातव्योऽतिशयतीक्ष्ण इति हृदयम् । यथा तरुणम्—अपरिपक्वं तच्च तदाम्रकं च—आम्रफलं तद्रसः, तुवरं—सकषायं पाठान्तरतः, आर्द्रत्वाद्, उभयत्र चार्थादपक्कं तच्च तत्कपित्थं च—कपित्थफलं तस्य 'वा' विकल्पे 'अपि' पूरणे यादृशको रस इति प्रक्रमः अतोऽप्यनन्तगुणो रसस्तु 'काऊए'त्ति कापोताया ज्ञातव्यो-

तत्सदृशी पदविपर्ययं प्राग्वत् नीललेश्या तु वर्णतो नीलेति तात्पर्यम्। अतसी-धान्यविशेषस्तत्पुष्पसङ्काशा, कोकिलच्छद -तैलकण्टक, तथा च वृद्धसम्प्रदाय -"वण्णाहिगारे जो एत्थ कोइलच्छदो सो तेल्कटतो भण्णइ"त्ति, क्वचित्तु पठ्यते च-'कोइलच्छवि'त्ति,तत्र कोकिल -अन्यपुष्टस्तस्य छविस्तत्सनिभा, पारापत -पक्षिविशेषस्तस्य ग्रीवा-कन्धरा तन्निभा कापोतलेश्या तु वर्णत, किञ्चित्कृष्णा किञ्चिच लोहितेति भाव, तथा च प्रज्ञापना-"काऊलेसा काललोहितेण वण्णेण साहिज्जइ"त्ति। हिङ्गुलुक -प्रतीतो धातु -पाषाणधात्वादिस्तत्सङ्काशा, तरुण इहाभिनवोदित आदित्य - सूर्यस्तत्सनिभा, शुक -प्रसिद्धस्तस्य तुण्ड-मुख शुकतुण्ड तच प्रदीपश्च तन्निभा वा, पठन्ति च-'सुयतुडालत्तदीवाभा' अन्ये तु 'सुयतुडग्गसकासा' इयमपि स्पष्ट, तेजोलेश्या तु वर्णतो रक्तेति भावार्थ। हरितालो-धातुविशेषस्तस्य भेदो -द्विधाभावस्तत्सङ्काशा, भिन्नस्य हि वर्णप्रकर्षो भवतीतिभेदग्रहण, हरिद्रेह पिण्डहरिद्रा तस्या भेदस्तत्सनिभा, सणो-धान्यविशेषोऽसनो-बीयकस्तयो कुसुम तन्निभा पद्मलेश्या तु वर्णत पीतेति गर्भार्थ। शङ्ख -प्रतीतोऽङ्को-मणिविशेष कुन्द —कुन्दकुसुम तत्सङ्काशा, क्षीर—दुग्ध तूलक—तूल पाठान्तरत पूरो वा—क्षीरप्रवाह, अन्ये तु 'धारि'त्ति पठन्ति, तद्ग्रहण तु भाजनस्थस्य हि तद्वशादन्यथात्वमपि सभवतीति तत्समप्रभा, रजत-रूप्य हारो-मुक्ताकलापस्तत्सङ्काशा शुक्ललेश्या तु वर्णत शुक्लेति हृदयमिति सूत्रपञ्चार्थ ॥ इत्युक्तो वर्ण सम्प्रति रसमाह—

जह कडुयतुंबरसो निंबरसो कडुयरोहिणिरसो वा। इत्तोवि अणंतगुणो रसो उ कण्हाइ नायव्वो ॥ १० ॥

नोति, उभयमपि प्रक्रमान्नन्तुरेव 'जायते' प्रादुर्भवति, स एव भवति 'कृत्यानाम्' उचितानुष्ठानाना कलुपान्तःकरणवृत्तिभिरविनीतविनयैरतिदूरमुत्सादितानां 'शरणम्' आश्रय इत्यर्थः, केषां केव ?–'भूतानां' प्राणिनां 'जगती' पृथ्वी यथेति सूत्रार्थः ॥ ४५ ॥ ननु विनयः पूज्यप्रसादनफलः, ततोऽपि च किमवाप्यत इत्याह–

पुज्जा जस्स पसीयंति, संबुद्धा पुव्वसंथुया । पसन्ना लंभइस्संति, विउलं अट्ठियं सुयं ॥४६॥ (सूत्रम्)

व्याख्या–पूजयितुमर्हाः पूज्या–आचार्यादयः 'यस्य' इति विवक्षितशिष्योपदर्शकं सर्वनाम 'प्रसीदन्ति' तुष्यन्ति 'सम्बुद्धाः' सम्यगवगतवस्तुतत्त्वाः, पूर्वं–वाचनादिकालादारतो न तु वाचनादिकाल एव, तत्कालविनयस्य कृतप्रतिक्रियारूपत्वेन तथाविधप्रसादाजनकत्वात्, संस्तुता–विनयविषयत्वेन परिचिताः सम्यक्स्तुता वा सद्भूतगुणोत्कीर्तनादिभिः पूर्वसंस्तुताः, शेषविनयोपलक्षणमेतत्, 'प्रसन्ना' इति सप्रसादाः, पठ्यते च–'सम्पन्नाः' ज्ञानादिगुणपरिपूर्णाः सम्यग्–अविपरीता प्रज्ञा येषां ते सत्प्रज्ञा वा, 'लम्भयिष्यन्ति' प्रापयिष्यन्ति, किमित्याह–'विपुलं' विस्तीर्णम्, अर्यत इत्यर्थो–मोक्षः स प्रयोजनमस्येत्यार्थिकं, तदस्य "प्रयोजन" ( पा० ५–१–१०९ ) मिति ठक्, अथवा–अर्थः स एव प्रयोजनरूपोऽस्यास्तीत्यार्थिकः, अत इनिठना (पा० ५–२–११५)विति ठन्, 'श्रुतम्' अङ्गोपाङ्गप्रकीर्णकादिभेदमागमं, न तु हरहरिहिरण्यगर्भादिवत् साक्षात् स्वर्गादिकम्, अनेन पूज्यप्रसादस्यानन्तरफलं श्रुतमुक्तं, व्यवहितफलं तु मुक्तिरिति सूत्रार्थः ॥ ४६ ॥ सम्प्रति श्रुतावाप्तौ तस्यैहिकफलमाह–

ऽतिशयकषाय इत्याशय । यथा परिणत–परिपक्व यदाम्रक तद्रस पक्वकपित्थस्य वाऽपि यादृशको रसोऽतोऽप्यनन्तगुणो रसस्तु 'तेऊए'त्ति तेजोलेश्याया ज्ञातव्य आम्ल किञ्चिन्मधुरश्चेत्यैदम्पर्यं । वरवारुणी—प्रधानसुरा तस्या वा रसो यादृशक इति योग 'विविधाना वा' नानाप्रकाराणाम् 'आसवाना' पुष्पप्रसवमद्याना वा यादृशको रस इति सम्बन्ध, 'महुमेरयस्स व रसो'त्ति मधु–मद्यविशेषो मैरेय—सरकस्तयो समाहारे मधुमैरेयं तस्य वा रसो यादृशकोऽतो वरवारुण्यादिरसात्पद्माया प्रक्रमाद्रस 'परकेण'ति अनन्तानन्तगुणत्वात्तदतिक्रमेण वर्तेत इति गम्यते, अय च किञ्चिदम्लकषायो माधुर्यवाश्चेति भावनीय, पाठान्तरतोऽप्यनन्तगुणो रसस्तु पद्माया ज्ञातव्य. । खर्जूर च–पिण्डखर्जूरादि मृद्वीका च—द्राक्षा एतद्रस तथा 'क्षीररस.' प्रतीत खण्ड च—इक्षुविकार शर्करा च—काशादिप्रभवा तद्रसो वा यादृश इति शेप, अतोऽप्यनन्तगुणो रसस्तु शुक्लाया ज्ञातव्योऽत्यन्तमधुर इति गर्भ इति सूत्रपञ्चार्थ ॥ उक्तो रस, सम्प्रति गन्धमाह—

जह गोमडस्स गधो सुणगमडस्स व जहा अहिमडस्स । इत्तो वि अणतगुणो लेसाण अप्पसत्थाण ॥ १६ ॥
जह सुरहिकुसुमगधो गधवासाण पिस्समाणाण । इत्तोवि अणतगुणो पसत्थलेसाण तिण्हपि ॥ १७ ॥

यथा गवा मृतक–मृतकशरीरं तस्य गन्ध श्वमृतकस्य वा तथा यथाऽहि–सर्पस्तन्मृतकस्य गन्ध इति सम्बन्ध, सूत्रत्वान्मृतकशब्दे कलोप 'अतोऽपि' एतत्प्रकारादपि गन्धादनन्तगुणोऽतिदुर्गन्धतया लेश्यानाम् 'अप्रशस्तानाम्'

अशुभानां, कोऽर्थः ?—कृष्णनीलकापोतानां, गन्ध इति प्रक्रमः, इह च लेश्यानामप्रशस्तत्वं गन्धस्याशुभत्वे हेतुरिति तद्विशेषादनुक्तोऽप्यस्य विशेषोऽवगम्यत इति नोक्तः । यथा सुरभिकुसुमानां—जातिकेतक्यादिसम्बन्धिनां सुगन्धपुष्पाणां गन्धः—परिमलः सुरभिकुसुमगन्धः, तथा गन्धाश्च—कोष्ठपुटपाकनिष्पन्ना वासाश्च—इतरे गन्धवासाः, इह चैतदङ्गान्येवोपचारादेवमुक्तानि, तेषां, पाठान्तरतश्च गन्धानां च, 'पिष्यमाणानां' संचूर्ण्यमानानां यथा गन्ध इति प्रक्रमः, तथा चातिप्रबलतरोऽसौ प्रादुर्भवतीत्येवमभिधानम्, 'अतोऽपि' एतत्प्रकारादपि गन्धाद् अनन्तगुणः अतिशयसुगन्धितया प्रशस्तलेश्यानां 'तिसृणामपि' तैजसीपद्मशुक्लानां गन्ध इति प्रक्रमः, इहापि प्रशस्तत्वविशेषाद्गन्धविशेषोऽनुमीयत इति नोक्त इति सूत्रद्वयार्थः ॥ सम्प्रति स्पर्शमाह—

जह करगयस्स फासो गोजिब्भाए व सागपत्ताणं । इत्तोवि अणंतगुणो लेसाणं अप्पसत्थाणं ॥ १८ ॥
जह बूरस्सवि फासो नवणीयस्स व सिरीसकुसुमाणं । इत्तोवि अणंतगुणो पसत्थलेसाण तिण्हंपि ॥१९॥

यथा 'करगयस्स'त्ति क्रकचस्य करपत्रस्य स्पर्शो गोजिह्वा गोजिह्वा तस्या वा यथा वा शाको—वृक्षविशेषस्तत्पत्राणां स्पर्श इति प्रक्रमः, 'अतोऽपि' एतत्प्रकारादपि स्पर्शादनन्तगुणः अत्यतिशायितया यथाक्रमं लेश्यानामप्रशस्तानामाद्यानां तिसृणां प्रक्रमात्स्पर्शोऽतिकर्कश इति हृदयम् । यथा 'बूरस्य वा' प्रतीतस्य स्पर्शः 'नवनीतस्य' म्रक्षणस्य, यथा वा शिरीषो—वृक्षविशेषस्तत्कुसुमानामुभयत्र यथा स्पर्श इति प्रक्रमः, 'अतोऽपि' एतत्प्रकारादपि

स्पर्शाद् 'अनन्तगुण' अतिसुकुमारतया यथाक्रमं प्रशस्तलेश्याना 'तिसृणामपि' उक्तरूपाणा स्पर्श इति प्रक्रम, इह च यदनेकदृष्टान्तोपादान तन्नानादेशजविनेयानुग्रहार्थं, क्वचिद्धि किञ्चित्प्रतीतमिति, यद्वा निगदितोदाहरणेषु वर्णादितारतम्यसम्भवाल्लेश्याना स्वस्थानेऽपि वर्णादिवैचित्र्यज्ञापनार्थमिति सूत्रद्वयार्थं ॥ परिणामद्वारमाह—

तिविहो व नवविहो वा सत्तावीसइविहिक्कसीओ वा। दुसओ तेयालो वा लेसाण होइ परिणामो २०

त्रिविधो नवविधो वा 'सत्तावीसइविहेक्कसीओ व'त्ति विधशब्दो वाशब्दश्चोभयत्र सबध्यते, ततश्च सप्तविंशतिविध एकाशीतिविधो वा 'दुसओ तेआलो व'त्ति अत्रापि विधशब्दस्य सम्बन्धात् त्रिचत्वारिंशद्विशतविधो वा लेश्याना भवति परिणाम—तत्तद्रूपगमनात्मक, इह च 'त्रिविध' जघन्यमध्यमोत्कृष्टभेदेन 'नवविध' यदैषामपि जघन्यादीना स्वस्थानतारतम्यचिन्ताया प्रत्येक जघन्यादित्रयेण गुणना एव पुनस्त्रिकगुणनया सप्तविंशतिविधत्वमेकाशीतिविधत्व त्रिचत्वारिंशद्विशतविधत्व च भावनीयम्। आह—एवं तारतम्यचिन्ताया क सङ्ख्यानियम ?, उच्यते, एवमेतत्, उपलक्षण चैतत्, तथा च प्रज्ञापना—"कण्हलेसा ण भते! कतिविधपरिणाम परिणमति ?, गोयमा! तिविह वा नवविह वा सत्तावीसइविह वा एकासीइविह वावि तेयालदुसयविहं वा बहु वा बहुविह वा परिणाम परिणमति, एव जाव सुक्कलेसा" इति सूत्रार्थ ॥ उक्त परिणाम, सम्प्रति लक्षणमाह, तत्र च—

पचासवप्पमत्तो तीहिं अगुत्तो छसु अविरओ य। तिव्वारभपरिणओ खुद्दो साहस्सिओ नरो॥२१॥ निद्ध-

धसपरिणामो, निस्संसो अजिइंदिओ । एयजोगसमाउत्तो, कण्हलेसं तु परिणमे ॥२२॥ इस्साअमरिसअतवो, अविज्ज माया अहीरिया । गेद्धी पओसे य सढे, रसलोलुए सायगवेसए य ॥ २३ ॥ आरंभा अविरओ, खुद्दो साहस्सिओ नरो । एयजोगसमाउत्तो, नीललेसं तु परिणमे ॥२४॥ वंके वंकसमायारे, नियडिल्ले अणुज्जुए । पलिउंचग ओवहिए, मिच्छदिट्ठी अणारिए ॥ २५ ॥ उप्फालगदुट्ठवाई य, तेणे अविय मच्छरी । एयजोगसमाउत्तो, काउलेसं तु परिणमे ॥२६॥ नीआवित्ती अचवले, अमाई अकुऊहले । विणीयविणए दंते, जोगवं उवहाणवं ॥ २७ ॥ पियधम्मे दढधम्मे, वज्जभीरू हिएसए । एयजोगसमाउत्तो, तेउलेसं तु परिणमे ॥ २८ ॥पयणुकोहमाणो य, मायालोभे य पयणुए । पसंतचित्ते दंतप्पा, जोगवं उवहाणवं ॥ २९ ॥ तहा य पयणुवाई य, उवसंते जिइंदिए । एयजोगसमाउत्तो, पम्हलेसं तु परिणमे ॥ ३० ॥ अट्टरुद्दाणि वज्जित्ता, धम्मसुक्काणि साहए । पसंतचित्ते दंतप्पा, समिए गुत्ते य गुत्तिसु ॥ ३१ ॥ सरागे वीयरागे वा, उवसंते जिइंदिए । एयजोगसमाउत्तो, सुक्कलेसं तु परिणमे ॥ ३२ ॥

पञ्चाश्रवा—हिंसादयस्तैः प्रमत्तः—प्रमादवान् पञ्चाश्रवप्रमत्तः पाठान्तरतः पञ्चाश्रवप्रवृत्तो वाऽतस्त्रिभिः प्रस्तावान्मनोवाक्कायैः 'अगुप्तः' अनियन्त्रितो मनोगुप्त्यादिरहित इत्यर्थः, तथा 'षट्सु' पृथ्वीकायादिषु 'अविरतः' अनिवृत्तस्तदुपमर्दकत्वादेरिति गम्यते, अयं चातीवारम्भोऽपि स्यादत आह—तीव्रा—उत्कटाः स्वरूपतोऽध्यवसायतो

याऽऽरम्भा —सावद्यव्यापारास्तत्परिणत —तत्प्रवृत्त्या तदात्मता गत ; तथा 'क्षुद्र' सर्वस्यैवाहितैषी कार्पण्ययुक्तो वा, सहसा—अपर्यालोच्य गुणदोषान् प्रवर्त्तत इति साहसिक , चौर्यादिकृदिति योऽर्थ , 'नर' पुरुष उपलक्षणत्वात्स्त्र्यादिर्वा 'णिद्धधस'त्ति अत्यन्तमैहिकामुष्मिकापायशङ्काविकलोऽत्यन्त जन्तुबाधानपेक्षो वा परिणामोऽध्यवसायो वा यस्य स तथा 'णिस्ससो'त्ति 'नृशस' निस्तृशो जीवान् विहिंसन् मनागपि न शङ्कते, नि शसो वा—परप्रशसारहित । 'अजितेन्द्रिय' अनिगृहीतेन्द्रिय , अन्ये तु पूर्वसूत्रोत्तरार्द्धस्थान इदमधीयते तथेहेति, उपसहारमाह—एते च तेऽनन्तरोक्ता योगाश्च—मनोवाक्कायव्यापारा एतद्योगा —पञ्चाश्रवप्रमत्तत्वादयस्तै समिति—भृशमाडि स्वभिव्याप्त्या युक्त —अन्वित एतद्योगसमायुक्त कृष्णलेश्या 'तु' अवधारणे कृष्णलेश्यामेव 'परिणमेत्' तद्द्रव्यसाचिव्येन तथाविधद्रव्यसम्पर्कात्स्फटिकवत्तदुपरञ्जनात्तद्रूपता भजेत्, उक्त हि—"कृष्णादिद्रव्यसाचिव्यात्परिणामो य आत्मन । स्फटिकस्येव तत्राय, लेश्याशब्द प्रयुज्यते ॥ १ ॥" एतेन पञ्चाश्रवप्रमत्तत्वादीना भावकृष्णलेश्याया सद्भावोपदर्शनादमीषा लक्षणत्वमुक्त, यो हि यत्सद्भाव एव भवति स तस्य लक्षण यथौष्ण्यमग्ने , एवमुत्तरत्रापि लक्षणत्वभावना कार्या । नीललेश्यालक्षणमाह—ईर्ष्या च परगुणासहनममर्षश्च—अत्यन्ताभिनिवेशोऽतपश्च—तपोविपर्ययोऽमीषा समाहारनिर्देश , 'अविज्ज'त्ति 'अविद्या' कुशास्त्ररूपा माया—वञ्चनात्मिका 'अह्रीकता च' असमाचारविषया निर्लज्जता 'गृद्धि' अभिकाङ्क्षा विषयेष्विति गम्यते 'प्रदोषश्च' प्रद्वेषो मतुब्लोपादभेदोपचाराद्वा सर्व । तद्वान्

जन्तुरुच्यतेऽत एव शठः अलीकभाषणात् प्रमत्तः प्रकर्षेण जात्यादिमदासेवनात्, पाठान्तरतः शठश्च मत्तः, तथा रसेषु लोलुपो—लम्पटो रसलोलुपः, सातं—सुखं तद्गवेषकश्च—कथं मम सुखं स्यादिति बुद्धिमान्, 'आरम्भात्' प्राण्युपमर्दात् 'अविरतः' अनिवृत्तः क्षुद्रः साहसिको नरः, एतद्योगसमायुक्तो नीललेश्यां परिणमेत्, 'तुः' प्राग्वत्पुनरर्थो वा ४। 'वक्रः' वचसा 'वक्रसमाचारः' क्रियया 'निकृतिमान्' मनसा 'अनृजुकः' कथचिदृजूकर्त्तुमशक्यतया 'पलिउंचग'त्ति प्रतिकुञ्चकः—स्वदोषप्रच्छादकतया उपधिः—छद्म तेन चरत्यौपधिकः, सर्वत्र व्याजतः प्रवृत्तेः, एकार्थिकानि वैतानि नानादेशजविनेयानुग्रहायोपात्तानि, मिथ्यादृष्टिरनार्यश्च प्राग्वत्, 'उप्फालग'त्ति उत्प्रासकं यथा पर उत्प्रास्यते दुष्टं च रागादिदोषवद्यथा भवत्येवं वदनशील उत्प्रासकदुष्टवादी 'चः' समुच्चये 'स्तेनः' चौरः 'च' प्राग्वत् 'अपि च'इति पूरणे 'मत्सरः' परसम्पदसहनं सति वा वित्ते त्यागाभावः, तथा चाहुः शाब्दिकाः—"परसम्पदामसहनं वित्तात्यागश्च मत्सरो ज्ञेयः" इति, तद्वान् मत्सरी, एतद्योगसमायुक्तः कापोतलेश्यां 'तुः' इति पुनः परिणमेत् ॥ 'णीयावित्ति'त्ति नीचैर्वृत्तिः—कायमनोवाग्भिरनुद्धतः 'अचपलः' चापलानुपेतः 'अमायी' शाठ्यानन्वितः 'अकुतूहलः' कुहकादिष्वकौतुकवानत एव 'विनीतविनयः' सभ्यस्तगुर्वाद्युचितप्रतिपत्तिः, तथा 'दान्तः' इन्द्रियदमेन योगः—स्वाध्यायादिव्यापारस्तद्वान्, 'उपधानवान्' विहितशास्त्रोपचारः, 'प्रियधर्मा' अभिरुचितधर्मानुष्ठानः 'दृढधर्मा' अङ्गीकृतव्रतादिनिर्वाहकः, किमित्येवम् ?, यतः 'वज्ज'त्ति वर्ज्यं प्राकृतत्वादकारलोपे

अवद्य चोभयं पापं तद्भीरुः 'हितैषकः' मुक्तिगवेषकः, पाठान्तरतो हिताशयो वा–परोपकारचेताः, पठ्यते च— 'अणासवे'त्ति तत्र च न विद्यन्ते आश्रवा–हिंसादयो यस्यासावनाश्रवः, एतद्योगसमायुक्तस्तेजोलेश्यां तु परिणमेत् ॥ प्रतनू–अतीवाल्पौ क्रोधमानौ यस्य स तथा, च पूरणे, माया लोभश्च उक्तरूपः प्रतनुको यस्येति शेषः, अत एव प्रशान्तः–प्रकर्षेणोपशमवच्चित्तमस्येति प्रशान्तचित्तः, दान्तः–अहितप्रवृत्तिनिवारणतो वशीकृत आत्मा येन स तथा, योगवानुपधानवानिति च प्राग्वत्, तथा 'प्रतनुवादी' स्वल्पभाषकश्चशब्दो भिन्नक्रमो योक्ष्यते, 'उपशान्तः' अनुद्भटतयोपशान्ताकृतिः 'जितेन्द्रियश्च' वशीकृताक्षः, एतद्योगसमायुक्तः पद्मलेश्यां तु परिणमेत् ॥ 'आर्त्तरौद्रे' उक्तरूपे ध्याने 'वर्जयित्वा' परित्यज्य 'धर्मशुक्ले' प्रागुक्ते एव शुभध्याने 'साधयेत्' सतताभ्यासतो निष्पादयेत्, य कीदृशः सन्? इत्याह–प्रशान्तचित्तो दान्तात्मेति च प्राग्वत्, पाठान्तरतश्च ध्यायति यो विनीतविनयो दान्त 'समितः' समितिमान् 'गुप्तश्च' निरुद्धसमस्तव्यापारः 'गुप्तिभिः' मनोगुप्त्यादिभिः, तृतीयार्थे सप्तमी, स च 'सरागः' अक्षीणानुपशान्तकषायतया वीतरागो वा ततोऽन्य उपशान्तः पाठान्तरतः 'शुद्धयोगो वा' निर्दोषव्यापारो जितेन्द्रियः प्राग्वत्, स एतद्योगसमायुक्तः शुक्ललेश्यां तु परिणमति, इह च शुभलेश्यासु केषाञ्चिद्विशेषणानां पुनरुपादानेऽपि लेश्यान्तरविषयत्वादपौनरुक्त्यं, पूर्वपूर्वापेक्षयोत्तरोत्तरेषां विशुद्धितः प्रकृष्टत्वं च भावनीयं, विशिष्टलेश्यावाऽपेक्ष्यैव लक्षणाभिधानमिति न देवादिभिर्व्यभिचार आशङ्कनीय इति द्वादशसूत्रार्थः ॥ सम्प्रति स्थानद्वारमाह—

अस्संखिज्जाणोसप्पिणीण उस्सप्पिणीण जे समया । संखाईया लोगा लेसाण हवंति ठाणाइं ॥ ३३ ॥

'असङ्ख्येयानां' सङ्ख्यातीतानाम् अवसर्पन्ति—प्रतिसमयं कालप्रमाणं जन्तूनां वा शरीरायुःप्रमाणादिकमपेक्ष्य ह्रासमनुभवन्त्यवश्यमित्यवसर्पिण्यो—दशसागरोपमकोटीकोटिपरिमाणास्तासां तथा तत्परिमाणानामेव उत्सर्पन्ति—उक्तन्यायतो वृद्धिमनुभवन्त्यवश्यमित्युत्सर्पिण्यस्तासां ये 'समयाः' परमनिरुद्धकाललक्षणाः, कियन्त इत्याह—सङ्ख्यातीताः पाठान्तरतोऽसङ्ख्येया वा लोका असङ्ख्येयलोकप्रमितत्वेन यथा दशप्रस्थप्रमितत्वेन व्रीहयो दशप्रस्थाः, ततोऽयमर्थः—असङ्ख्येयलोकाकाशप्रदेशपरिमाणानि लेश्यानां भवन्ति स्थानानि प्रकर्षापकर्षकृतानि, अशुभानां संक्लेशरूपाणि शुभानां च विशुद्धिरूपाणि तत्परिमाणानीति शेषः, यद्वा असङ्ख्येयोत्सर्पिण्यवसर्पिणीनां ये समया गम्यमानत्वात्तावन्ति लेश्यानां भवन्ति स्थानानीति कालतोऽसङ्ख्याता लोका इति च क्षेत्रतः स्थानमानमेवोक्तमिति सूत्रार्थः ॥ उक्तं स्थानमिदानीं स्थितिमाह—

मुहुत्तद्धं तु जहन्ना तित्तीसा सागरा मुहुत्तऽहिया । उक्कोसा होइ ठिई नायव्वा किण्हलेसाए ॥ ३४ ॥
मुहुत्तद्धं तु जहन्ना दसउदहिपलियमसंखभागमब्भहिया । उक्कोसा होइ ठिई नायव्वा नीललेसाए ॥ ३५ ॥
मुहुत्तद्धं तु जहन्ना तिण्णुदही पलियमसंखभागमब्भहिआ । उक्कोसा होइ ठिई नायव्वा काउलेसाए ॥ ३६ ॥
मुहुत्तद्धं तु जहन्ना दोण्हुदही पलियमसंखभागमब्भहिआ । उक्कोसा होइ ठिई नायव्वा तेउलेसाए ॥ ३७ ॥

मुहुत्तद्ध तु जहन्ना दसउदही होइ मुहुत्तमब्भहिआ । उक्कोसा होइ ठिई नायव्वा पम्हलेसाए ॥ ३८ ॥
मुहुत्तद्ध तु जहन्ना तित्तीस सागरा मुहुत्तहिया । उक्कोसा होइ ठिई नायव्वा सुक्कलेसाए ॥ ३९ ॥

मुहूर्त्तस्यार्द्धो मुहूर्त्तार्द्धं, तत्कालस्य तसयोगे द्वितीया, इह च समप्रविभागस्याविवक्षितत्वादन्तर्मुहूर्त्तमित्युक्त भवति, 'तु' अवधारणे ततो मुहूर्त्तार्द्धमेव जघन्या 'तेत्तीस'त्ति त्रयस्त्रिंशत् 'सागराइ'ति पदैकदेशेऽपि पदप्रयोगदर्शनात्सागरोपमाणि 'मुहुत्तऽहिय'त्ति इहोत्तरत्र च मुहूर्त्तशब्देन मुहूर्त्तैकदेश एवोक्त, समुदायेषु हि प्रवृत्ता शब्दा अवयवेष्वपि वर्त्तन्ते यथा ग्रामो दग्ध पटो दग्ध इति, ततश्चान्तर्मुहूर्त्ताधिकान्युत्कृष्टा भवति स्थितिर्ज्ञातव्या कृष्णलेश्याया., इह चान्तर्मुहूर्त्तस्यासङ्ख्येयभेदत्वादन्तर्मुहूर्त्तशब्देन पूर्वोत्तरभवसम्बन्ध्यन्तर्मुहूर्त्तद्वयमुक्त द्रष्टव्यमेवमुत्तरत्रापि। मुहूर्त्तार्द्धस्तु जघन्या 'दश'ति दशसङ्ख्यानि उदधय इत्युक्तन्यायेनोदध्युपमानि कोऽर्थ ?—सागरोपमाणि 'पलिय'त्ति तथैव पल्योपम तस्यासङ्ख्यभागस्तेनाधिकानि पल्योपमासङ्ख्येयभागाधिकान्युत्कृष्टा भवति स्थितिर्ज्ञातव्या नीललेश्याया, नन्वसा धूमप्रभोपरितनप्रस्तट एव सम्भव तत्र च 'अतोमुहुत्तमि गए''त्यादिवक्ष्यमाणन्यायत पूर्वोत्तरभवान्तर्मुहूर्त्तद्वयपल्योपमासङ्ख्येयभागाभ्यधिकदशसागरोपमपरिमाणैवासौ किं नोक्ता ?, उच्यते, उक्तैव, पल्योपमासङ्ख्येयभाग एव तस्याप्यन्तर्मुहूर्त्तद्वयस्यान्तर्भावात्, तदसङ्ख्येयभागाना चासङ्ख्येयभेदत्वादिहै तावत्परिमाणस्यैवास्य विवक्षितत्वान्न विरोध, एवमुत्तरत्रापि भावनीयम्। अक्षरसस्कारस्तूत्तरेषु कृत एव, नवर

त्रय उदधयः सागरोपमाणि द्वावुदधी–द्वे सागरोपमे, दशोदधयो–दश सागरोपमाणि, 'तेत्तीसं'ति त्रयस्त्रिंशत्सागरोपमाणि, पठन्ति च सर्वत्र 'मुहुत्तद्धा उ'त्ति, तत्र मुहूर्त्त(र्त्तार्ध)शब्देन प्राग्वदन्तर्मुहूर्त्तस्योक्तत्वादन्तर्मुहूर्त्तकालमिति सूत्रपञ्चार्थः ॥ सम्प्रति प्रकृतमुपसंहरन्नुत्तरग्रन्थसम्बन्धमाह—

एसा खलु लेसाणं ओहेण ठिई उ वण्णिया होइ । चउसुवि गईसु इत्तो लेसाण ठिई उ वुच्छामि ॥४०॥

स्पष्टमेव, नवरम् 'ओघेन' इति सामान्येन गतिभेदाविवक्षयेतियावत्, 'चतसृष्वपि गतिषु' नरकगत्यादिषु प्रत्येकमिति शेषः, 'अतः' इत्योघस्थितिवर्णनानन्तरमिति सूत्रार्थः ॥ प्रतिज्ञातमेवाह—

दसवाससहस्साइं काऊइ ठिई जहन्निया होइ। तिन्नोदही पलिय असंखेज्जभागं च उक्कोसा ॥४१॥ तिण्णुदहीपलिओवममसंखभागो जहन्ननीलठिई। दसउदहीपलिओवममसंखभागं च उक्कोसा ॥ ४२ ॥ दसउदहीपलिओवममसंखभागं जहन्निया होइ । तित्तीससागराइं उक्कोसा होइ किण्हाए ॥ ४३ ॥ एसा नेरईयाणं लेसाण ठिई उ वण्णिया होइ । तेण परं वुच्छामि तिरियमणुस्साण देवाणं ॥ ४४ ॥ अंतोमुहुत्तमद्धं लेसाण ठिई जहिं जहिं जा उ । तिरियाण नराणं वा वज्जित्ता केवलं लेसं ॥ ४५ ॥ मुहुत्तद्धं तु जहन्ना उक्कोसा होइ पुव्वकोडी उ । नवहिं वरिसेहिं ऊणा नायव्वा सुक्कलेसाए ॥४६॥ एसा तिरियनराणं लेसाण ठिई उ वण्णिया होइ । तेण परं वुच्छामि लेसाण ठिई उ देवाणं ॥४७॥ दसवाससहस्साइं किण्हाए ठिई जहन्निया होइ ।

स पुज्जसत्थे सुविनीयससए, मणोरुई चिट्ठइ कम्मसपया ।
तवोसमायारीसमाहिसवुडे, महज्जुई पच वयाइँ पालिया ॥ ४७ ॥ (सूत्रम्)

व्यारया—'स' इति शिष्य प्रसादितगुरोरधिगतश्रुत पूज्य—सकलजनश्लाघादिना पूजार्ह शास्त्रमस्येति पूज्यशास्त्र, विनीतस्य हि शास्त्र सर्वत्र विशेषेण पूज्यते, यदि वा प्राकृतत्वात्पूज्य शास्ता गुरुरस्येति पूज्यशास्तृक, विनीतो हि विनेय शास्तार पूज्यमपि विशेषत पूजा प्रापयति, अथवा पूज्यश्चासौ शस्तश्च सर्वत्र प्रशसास्पदत्वेन पूज्यशस्त, सुष्ठु—अतिशयेन विनीत,—अपनीत प्रसादितगुरुणैव शास्त्रपरमार्थसमर्पणेन सशयो—दोलायमानमानसात्मकोऽस्येति सुविनीतसशय, सुविनीता वा ससत्—परिपदस्येति सुविनीतससत्क, विनीतस्य हि स्वयमतिशयविनीतैव परिपद्भवति, 'मणोरुई'त्ति मनस—चेतस प्रस्तावाद् गुरुसम्बन्धिनी रुचि—प्रतिभासोऽस्मिन्निति मनोरुचि, 'तिष्ठति' आस्ते, विनयाधिगतशास्त्रो हि न कथञ्चिद्गुरूणामप्रीतिहेतुरिति, तथा 'कम्मसपय'त्ति कर्म—क्रिया दशविधचक्रवालसामाचारीप्रभृतिरितिकर्तव्यता तस्या सम्पत्—सम्पनता तया, लक्षणे तृतीया, तत कर्मसम्पदोपलक्षितस्तिष्ठतीति सम्बन्ध, हेतौ वा तृतीया, मनोरुचित्वापेक्षया च हेतुत्वम्, अथवा मनोरुचितेव मनोरुचिता तिष्ठति—आस्ते कर्मणा—ज्ञानावरणादीना सम्पद्—उदयादीरणादिरूपा विभूति कर्मसम्पद्, अस्येति गम्यते, तदुच्छेदशक्तियुक्ततयाऽस्य प्रतिभासमानतयेव तत्स्थितेरुपलक्ष्यमाणत्वात्, पठ्यते च—'मणारुइ'त्ति तत्र मनसो रुचि—अभिलापो यस्मि-

जघन्या वालुकाप्रभायामेतावत्स्थितिकानामेव, उत्कृष्टा च धूमप्रभायामुपरितनप्रस्तटनारकाणा, तत्रापि येषामेतावती स्थितिरिति मन्तव्या, इहोत्तरत्र च पाठान्तरं दृश्यते, तत्र च जघन्यस्थितिः समयाधिकत्वमुक्तं तच्च न बुध्यत इति न तद्व्याख्या, दशोदधयः पल्योपमासङ्ख्येयभागो जघन्यिका भवति प्रक्रमात्स्थितिः कृष्णाया इति सम्बन्धः, अस्याश्च धूमप्रभायामेतावत्स्थितिकेष्वेव नारकेषु सम्भवः, त्रयस्त्रिंशत्सागरोपमाणि उत्कृष्टा भवति कृष्णायाः, स्थितिरितीहापि प्रक्रमः, इयं च महातमःप्रभायां, तत्रैवैतावत्प्रमाणस्यायुषः सम्भवात्, इह च नारकाणामुत्तरत्र च देवानां द्रव्यलेश्यास्थितिरेवैवं चिन्त्यते, तद्भावलेश्यानां परिवर्त्तमानतयाऽन्यथाऽपि स्थितेः सम्भवात्, उक्तं हि—"देवाण नारयाण य दव्वलेसा भवंति एयाओ। भावपरावत्तीए सुरणेरइयाण छल्लेसा ॥१॥"[1] पूर्वोक्तं निगमयन्नुत्तरं च ग्रन्थं प्रस्तावयन्निदमाह—'एषा' अनन्तरोक्ता निरये भवा नैरयिकास्तेषां सम्बन्धिनीनां लेश्यानां 'स्थितिः' अवस्थितिः 'तुः' पूरणे 'वर्णिता' आख्याता भवति, 'तेण'त्ति सूत्रत्वात्ततः 'परम्' इतश्चाग्रतो वक्ष्यामि प्रक्रमाल्लेश्यानां स्थितिं तिर्यग्मनुष्याणां तथा देवानाम् ॥ यथाप्रतिज्ञातमेवाह—'अंतोमुहुत्तमद्धं'त्ति 'अन्तर्मुहूर्त्ताद्धाम्' अन्तर्मुहूर्त्तकालं लेश्यानां स्थितिर्जघन्योत्कृष्टा चेति शेषः, कतराऽसौ ? इत्याह—'यस्मिन्'इति पृथिवीकायादौ संमूर्छिममनुष्यादौ च याः कृष्णाद्याः 'तुः' पूरणे तिरश्चां मनुष्याणां मध्ये संभवन्ति तासाम्, एता हि कचित्काश्चित्संभवन्ति, यत आगमः—

१ देवानां नैरयिकाणां च द्रव्यलेश्या भवन्ति एताः। भावपरावृत्तौ सुरनैरयिकयोः षड् लेश्याः ॥ १ ॥

पलियमसखिज्जइमो उक्कोसो होइ किण्हाए ॥ ४८ ॥ जा किण्हाइ ठिई खलु उक्कोसा सा उ समयमब्भहिया । जहन्नेण नीलाए पलियमसंखं च उक्कोसा ॥ ४९ ॥ जा नीलाइ ठिई खलु उक्कोसा सा उ समयमब्भहिया । जहन्नेण काऊए पलियमसंखं च उक्कोसा ॥ ५० ॥ तेण परं वुच्छामी तेऊलेसा जहा सुरगणाणं । भवणवइ-वाणमंतरजोइसवेमाणियाण च ॥ ५१ ॥ पलिओवमं जहन्ना उक्कोसा सागरा उ दुण्हऽहिया । पलियमसंखिज्जेण होई भागेण तेऊए ॥ ५२ ॥ दसवाससहस्साइं तेऊइ ठिई जहन्निया होइ । दुन्नुदही पलिओवमअसंखभागं च उक्कोसा ॥ ५३ ॥ जा तेऊइ ठिई खलु उक्कोसा सा उ समयमब्भहिया । जहन्नेण पम्हाए दस मुहुत्तऽहियाइ उक्कोसा ॥ ५४ ॥ जा पम्हाइ ठिई खलु उक्कोसा सा उ समयमब्भहिया । जहन्नेण सुक्काए तित्तीसमुहुत्तमब्भहिया ॥ ५५ ॥

दशवर्षसहस्राणि कापोतायाः स्थितिर्जघन्यका भवति, त्रय उदधय 'पलियमसंखेज्जभागं च'त्ति सूत्रत्वात् पल्योपमासङ्ख्येयभागं चोत्कृष्टा, पठन्ति च–'उक्कोसा तिनुदही पलियमसंखेज्जभागऽहिय'त्ति स्पष्टम्, इयं च जघन्या रत्नप्रभायां, तस्यां हि जघन्यतोऽपि दशवर्षसहस्राण्यायुरिति, उत्कृष्टा च वालुकाप्रभायां, तत्राप्युपरितनप्रस्तटनारकाणामेव, तेषामेतावत्स्थितिकानामसाविति भावनीयम् । त्रय उदधयः पल्योपमासङ्ख्येयभागश्च मकारस्यालाक्षणिकत्वात् चस्य गम्यमानत्वाज्जघन्या नीलायाः स्थितिर्दशोदधयः पल्योपमासङ्ख्येयभागश्चोत्कृष्टा, इहापि

वाक्यालङ्कारे 'उत्कृष्टा' अनन्तरमुक्तरूपा 'सा उ'त्ति सैव 'समयमब्भहिय'त्ति समयाभ्यधिका जघन्येन नीलायाः, 'पलियमसंखिज्ज'त्ति प्राग्वत्पल्योपमासङ्ख्येयश्च भाग उत्कृष्टा स्थितिर्नवरमुक्तहेतोरेव बृहत्तरोऽयमसङ्ख्येयभागो गृह्यते। या नीलायाः स्थितिः खलूत्कृष्टा 'सा उ'त्ति सैव समयाभ्यधिका जघन्येन कापोतायाः पल्योपमासङ्ख्येयश्च भाग उत्कृष्टा स्थितिः, एतावदायुषामेव भवनपतिव्यन्तराणामिमे मन्तव्ये, इहाप्युक्तहेतोरेव पूर्वस्माद्बृहत्तरोऽसङ्ख्यातभागः परिगृह्यते। इत्थं निकायद्वयभाविनीमाद्यलेश्यात्रयस्थितिमुपदर्श्य समस्तनिकायभाविनीं तेजोलेश्यास्थितिमभिधातुं प्रतिज्ञासूत्रमाह–'तेण'त्ति ततः परं प्रवक्ष्यामि तेजोलेश्यां, 'यथे'ति येनावस्थानप्रकारेण सुरगणानां भवति तथेत्युपस्कारः, किमन्यतरनिकायानामेवामीषामुतान्यथेत्याह–भवनपतिवाणमंतरज्योतिर्वैमानिकानां चतुर्निकायानामिति योऽर्थः, 'चः' पूरणे, प्रतिज्ञातमेवाह–पल्योपमं जघन्या उत्कृष्टा 'सागर'त्ति सागरोपमे 'तुः' प्राग्वत् 'द्वे' द्विसङ्ख्ये अधिके–अर्गले, कियतेत्याह–पल्योपमासङ्ख्येयेनेति योगः, भवति तैजस्याः स्थितिरिति प्रक्रमः, इयं च सामान्योपक्रमेऽपि वैमानिकनिकायविषयतयैव नेया, तत्र च सौधर्मेशानदेवानां जघन्यत उत्कृष्टतश्चैतावदायुषः सम्भवात्, उपलक्षणं चैतच्छेषनिकायतेजोलेश्यास्थितेः, ततश्च भवनपतिव्यन्तराणां जघन्यतो दशवर्षसहस्राणि, उत्कृष्टतस्तु भवनपतीनां सागरोपममधिकं, व्यन्तराणां च पल्योपमं, ज्योतिष्काणां तु जघन्यतः पल्योपमाष्टभागः, उत्कृष्टतस्तु वर्षलक्षाधिकं पल्योपमम्, एतावन्मात्राया एवैषां जघन्यत उत्कृष्टतश्चायुःस्थितेः सम्भवात्। 'दसवास-

"पुढविकाइयाण भते ! कइलेसातो पन्नत्ताओ ?, गोयमा ! चत्तारि लेसाओ, तजहा—कण्हलेसा जाव तेउलेसा, आउवणप्फइकाइयाणवि एव चेव, तेउवाउवेइदियतेइदियचउरिंदियाण जहा नेरइयाण पचेंदियतिरिक्खजोणियाण पुच्छा, गोयमा ! छलेसाओ कण्हा जाव सुक्कलेसा, मणुस्साण पुच्छा, गोयमा ! छ एयाओ चेव, समुच्छिममणुस्साण पुच्छा, गोयमा ! जहा नेरइयाण ॥" नन्वेव शुक्लेश्याया अप्यन्तर्मुहूर्त्तमेव स्थिति प्राप्तेत्याशङ्क्याह—वर्जयित्वा केवला शुद्धा लेश्या शुक्लेश्यामितियावत् । अस्याश्च यावती स्थितिस्तामाह—'मुहुत्तद्ध तु'त्ति प्राग्वदन्तर्मुहूर्त्तमेव जघन्या उत्कृष्टा भवति पूर्वकोटी 'तु' विशेषणे, स च जघन्यस्थित्यपेक्षयाऽस्या उक्तमेव विशेष द्योतयति, नवभिर्वर्षैन्यूना ज्ञातव्या शुक्लेश्याया स्थितिरिति प्रक्रम, इह च यद्यपि कश्चित्पूर्वकोट्यायुरष्टवार्षिक एव व्रतपरिणाममवाप्नोति तथाऽपि नैतावद्वय स्थस्य वर्षपर्यायादर्वाक् शुक्लेश्याया सम्भव इति नवभिर्वर्षैन्यूना पूर्वकोटिरुच्यते । 'एसा'सूत्र स्पष्टमेव। प्रतिज्ञातानुरूपमाह—दशवर्षसहस्राणि कृष्णाया स्थितिर्जघन्यका भवति, भवनपतिव्यन्तरेषु चास्या सम्भव-स्तेषामेव जघन्यतोऽप्येतावत्स्थितिकत्वात्, उक्त च—"[1]दस भवणवणयराण वाससहस्सा ठिई जहन्नेण"त्ति, 'पलिय-मसखेज्जइमो'त्ति पल्योपमासङ्ख्येयतम प्रस्तावाद् भाग उत्कृष्टा भवति कृष्णाया स्थितिरिति प्रक्रम, एवविधचि-मध्यमायुषामेव भवनपतिव्यन्तराणामिय द्रष्टव्या । सम्प्रति नीलाया स्थितिमाह—या कृष्णाया स्थिति 'खलु'

१ दश वर्षसहस्राणि भवनपतीना वनचराणा स्थितिर्जघन्येन

तेउ पम्हा सुक्का तिन्निवि एयाउ धम्मलेसाउ । एयाहि तिहिवि जीवो सुग्गइं उववज्जई ॥ ५७ ॥

कृष्णा नीला कापोतास्तिस्रोऽप्येता अधर्मलेश्याः, पापोपादानहेतुत्वात्, पाठान्तरतोऽधमलेश्या वा, तिसृणामप्यविशुद्धत्वेनाप्रशस्तत्वात्, यद्येवं ततः किमित्याह—'एताभिः' अनन्तरोक्ताभिः 'तिसृभिरपि' कृष्णादिलेश्याभिः 'जीवः' जन्तुः 'दुर्गतिं' नरकतिर्यग्गतिरूपाम् 'उपपद्यते' प्राप्नोति, सुव्यत्ययाद्वा दुर्गतौ 'उपपद्यते' जायते, संक्लिष्टत्वेन तत्प्रायोग्यायुष एव तद्वतां बन्धसम्भवादिति भावः। तथा तैजसी पद्मा शुक्लास्तिस्रोऽप्येताः 'धर्मलेश्याः' प्रधानलेश्याः, विशुद्धत्वेनासां धर्महेतुत्वात्, तथा चागमः—"तओ लेसाओ अविसुद्धाओ तओ विसुद्धाओ ततो पसत्थाओ तओ अपसत्थाओ तओ संकिलिट्ठाओ तओ असंकिलिट्ठाओ तओ दुग्गतिगामियाओ तओ सुगतिगामियाओ ।" अत एव 'एताभिस्तिसृभिः' तैजस्यादिलेश्याभिर्जीवः 'सोगतिं'ति'सुगतिं' देवमनुष्यगतिलक्षणां मुक्तिं वोपपद्यते, यद्वा प्राग्वत्सुगतौ 'उत्पद्यते' जायते, तथाविधायुर्बन्धतः सकलकर्मापगमतश्चेति सूत्रद्वयभावार्थः। उक्तं गतिद्वारं, साम्प्रतमायुर्द्वारावसरः, तत्र च यस्या लेश्याया यदायुषो मानं तत्स्थितिद्वार एवार्थतोऽभिहितम्, इह त्विदमुच्यते—अवश्यं हि जन्तुर्यल्लेश्येषूत्पद्यते तल्लेश्य एव म्रियते, यत आगमः—"जल्लेसाइं दव्वाइं परियाइत्ता कालं करेइ तल्लेसो उववज्जइ"त्ति, तथेहैव वक्ष्यति "अंतोमुहुत्तंमि गए" इत्यादि तत्र जन्मान्तरभाविलेश्यायाः किं प्रथमसमये परभवायुष उदय आहोस्विच्चरमसमयेऽन्यथा वेति संशयापनोदानायाह—

सहस्साइ' इत्यादि स्पष्टमेव, नवरमनेन निकायभेदमनङ्गीकृत्यैव लेश्यास्थितिरुक्ता, इह च दशवर्षसहस्राणि जघन्या तेजस्या स्थितिरभिहिता, प्रक्रमानुरूप्येण तु योत्कृष्टा कापोताया स्थितिरसावेवास्या समयाधिका प्राप्नोति, अधीयते च केचनानन्तरसूत्रत्रयस्थाने–'जा काऊइ ठिई खलु उक्कोसे' त्यादि तदत्र तत्त्व न विद्म । पद्माया स्थितिमाह– या तेजस्या स्थिति खलूत्कृष्टा 'सा उ'त्ति सैव समयाभ्यधिका जघन्येन पद्माया स्थितिरिति प्रक्रम , 'दश तु' इति दशैव प्रस्तावात्सागरोपमाणि मुहूर्त्ताधिकान्युत्कृष्टा, इयं च जघन्या सनत्कुमारे उत्कृष्टा च ब्रह्मलोके, तयोरेवैतदायुष्कसम्भवात्, आह–यदीहान्तर्मुहूर्त्तमधिकमुच्यते तत पूर्वत्रापि किं न तदधिकमुच्यते ? देवभवलेश्याया एव तत्र विवक्षितत्वात्, प्रतिज्ञातं हि 'तेण पर वोच्छामि लेसाण ठिई तु देवाण'ति, एव सतीहान्तर्मुहूर्त्ताधिकत्व विरुध्यते, न अभिप्रायापरिज्ञानात्, अत्र हि प्रागुत्तरभवलेश्याऽपि "अतोमुहुत्तमि गए"त्ति वचनाद्देवभवसम्बन्धिन्येवेति प्रदर्श , नार्थमित्थमुक्तमिति न विरोध इति भावनीयम् । शुक्लेश्यास्थितिमाह–या पद्मायाः स्थिति खलूत्कृष्टा 'सा उ'त्ति सैव समयाभ्यधिका जघन्येन शुक्लाया स्थितिरिति प्रक्रम , त्रयस्त्रिंशत् 'मुहुत्तमब्भहिय'त्ति प्राग्वन्मुहूर्त्ताभ्यधिकानि सागरोपमाण्युत्कृष्टेति गम्यते, अस्याश्च लान्तकाभिधानषष्ठदेवलोकात्प्रभृति यावत्सर्वार्थसिद्धस्तावत्सम्भव , अत्रैवैतावदायुष सद्भाव इतिकृत्वेति पञ्चदशसूत्रार्थ ॥ उक्त स्थितिद्वार, साम्प्रत गतिद्वारमाह–

किण्हा नीला काऊ तिन्निवि लेसाउ अहम्मलेसाउ । एयाहि तिहिवि जीवो दुग्गइ उववज्जई ॥ ५६ ॥

कुमारा जाव वेमाणिय''त्ति, अनेनान्तर्मुहूर्त्तावशेष आयुषि परभवलेश्यापरिणाम इत्युक्तं भवतीति सूत्रत्रयार्थः ॥ इत्थं लेश्यानां नामाद्यभिधाय साम्प्रतमध्ययनार्थमुपसंजिहीर्षुरुपदेशमाह—

तम्हा एयासि लेसाणं, अणुभावं वियाणिया। अप्पसत्थाउ वज्जित्ता, पसत्थाओ अहिट्ठए मुणि ॥६१॥ त्तिबेमि ॥

॥ लेसज्झयणं ॥ ३४ ॥

'तम्ह'त्ति यस्मादेता अप्रशस्ता दुर्गतिहेतवः प्रशस्ताश्च सुगतिहेतवस्तस्मात् 'एतासाम्' अनन्तरमुक्तानां लेश्यानाम् 'अनुभागम्' उक्तरूपं 'विज्ञाय' विशेषेणावबुध्य अप्रशस्ताः कृष्णाद्यास्तिस्रो वर्जयित्वा 'प्रशस्ताः' तेजस्याद्यास्तिस्रः 'अधितिष्ठेत्' भावप्रतिपत्त्याऽऽश्रयेन्मुनिरिति शेष इति सूत्रार्थः। 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत्, नयाश्च प्राग्वत् ॥ इति श्रीशान्त्याचार्यकृतायां शिष्यहितायामुत्तराध्ययनटीकायां चतुस्त्रिंशं लेश्या ३४ ॥

इति श्रीमदुत्तराध्य० शिष्य० श्रीशान्तिसू० वृत्तौ चतुस्त्रिंशत्तमं लेश्याध्ययनं समाप्तम् ॥

लेसाहिं सव्वाहिं पढमे समयमि परिणयार्हिं तु । न हु कस्सइ उववत्ति परे भवे अत्थि जीवस्स ॥ ५८ ॥
लेसाहिं सव्वाहिं चरमे समयमि परिणयाहिं तु। नहु कस्सइ उववत्ति परे भवे अत्थि जीवस्स ॥ ५९ ॥
अतमुहुत्तमि गए अतमुहुत्तमि सेसए चेव। लेसाहि परिणयाहिं जीवा गच्छति परलोय ॥ ६० ॥

'लेश्याभि' उक्तरूपाभि' 'सर्वाभि' इति षड्भिरपि प्रथमे समये तत्प्रतिपत्तिकालापेक्षया 'परिणताभिः' प्रस्तावादात्मरूपतामापन्नाभि, लक्षणे तृतीया, 'तु' पूरणे 'न हु' नैव कस्यापि 'उववत्ति'त्ति 'उत्पत्ति' उत्पाद, पठ्यते च 'नवि कस्सवि उववाओ'त्ति सुगम, 'परे' अन्यस्मिन् 'भवे' जन्मनि 'भवति' विद्यते 'जीवस्स' जन्तो । तथा लेश्याभि सर्वाभि 'चरमे समये' इत्यन्तसमये परिणताभिस्तु 'नहु' नैव कस्याप्युत्पत्ति परे भवे भवति जीवस्य। कदा तर्हि ? इत्याह–अन्तर्मुहूर्ते 'गत एव' अतिक्रान्त एव, तथाऽन्तर्मुहूर्ते शेषके चैव–अवतिष्ठमान एव लेश्याभि परिणताभिरुपलक्षिता जीवा गच्छन्ति 'परलोक' भवान्तरम्, इत्थ चैतन्मृतिकाले भाविभवलेश्याया उत्पत्तिकाले वाऽतीतभवलेश्याया अन्तर्मुहूर्तमवश्यम्भावात्, न त्विह विपरीतमवधार्यते–अन्तर्मुहूर्त्ते एव गत इत्यन्तमुहूर्त्ते एव शेपक इति च, देवनारकाणा स्वस्वलेश्यायाः प्रागुत्तरभवान्तर्मुहूर्तद्वयसहितनिजायु काल यावदवस्थितत्वात्, उक्त हि प्रज्ञापनायाम्–"जल्लेसाइ दव्वाइ आयतित्ता काल करेति तल्लेसेसु उववज्जइ'त्ति,तथा 'कण्हलेसे णेरतिए कण्हलेसेसु णेरइएसु उववज्जति कण्हलेसेसु उवट्टइ, जल्लेसे उववज्जइ तल्लेसे उवट्टति, एव नीललेसेवि काउलेसेवि, एव असुर-

ग्दृष्टिः' सम्यग्दर्शनवान्निश्चयतो यत्सम्यक्त्वं तन्मौनमिति चरित्री अगारवासेनागारपाशेन वा प्राकृतत्वात्तृतीयार्थे पञ्चमी विशेषेण—तत्प्रतिबन्धपरित्यागरूपेण निर्मुक्तः—त्यक्तो विनिर्मुक्तोऽनगार इति प्रक्रमः, तथा मार्गगत्योर्द्वयोरपि, पूर्वत्र—मोक्षमार्गगतिनामन्यध्ययने उद्दिष्टः—कथितः पूर्वोद्दिष्टः, इत्थमेषां चतुर्विधत्वेन केनेह प्रकृतमित्याह—अधिकारः 'भावमग्गि'त्ति सुब्व्यत्ययाद् 'भावमार्गेण' सम्यग्दर्शनज्ञानचारित्रलक्षणेन सिद्धिगत्या चार्थाद्भावगत्या उपलक्षणत्वाद्भावानगारेण च ज्ञातव्य इति गाथात्रयावयवार्थः । गतो नामनिष्पन्नो निक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

सुणेह मे एगमणा, मग्गं सव्वन्नु (बुद्धेहिं) देसियं । जमायरंतो भिक्खू, दुक्खाणंतकरो भवे ॥ १ ॥

'शृणुत' आकर्णयत 'मे' मम कथयत इति शेषः, एकाग्रमनसः, कोऽर्थः ?—अनन्यगतचित्ताः सन्तः शिष्या इति शेषः, किं तत् ? इत्याह—'मार्गम्' उक्तरूपं प्रक्रमान्मुक्तैर्बुधैः—अवगतयथास्थितवस्तुतत्त्वैरुत्पन्नकेवलैरर्हद्भिः श्रुतकेवलिभिर्गणधरादिभिर्वेत्युक्तं भवति, देशितं—प्रतिपादितमर्थतः सूत्रतश्च, तमेव विशेषयितुमाह—'यम्' इति मार्गम् 'आचरन्' आसेवमानः 'भिक्षुः' अनगारः 'दुःखानां' शारीरमानसानामन्तः—पर्यन्तस्तत्करणशीलोऽन्तकरः 'भवेत्' स्यात्, सकलकर्मनिर्मूलनत इति भावः, तदनेनासेव्यासेवकसम्बन्धेनानगारसम्बन्धित्वं मार्गस्य तत्फलं च मुक्तिगतिरिति दर्शितं, ततश्चानगारमार्गं तद्गतिं च शृणुतेत्य(र्थत) उक्तं भवतीति सूत्रार्थः ॥ यथाप्रतिज्ञातमेवाह—

## अथ अनगारमार्गगतिरितिनाम पञ्चत्रिंशत्तममध्ययनम् ।

व्याख्यात लेश्याध्ययननामकं चतुस्त्रिंशमध्ययनम्, अधुना पञ्चत्रिंशमारभ्यते, अस्य चायमभिसम्बन्ध — अनन्तराध्ययने लेश्या अभिहिता, तदभिधाने चायमाशय —अशुभानुभावलेश्यास्त्यागत शुभानुभावा एव लेश्या अधिष्ठातव्या, एतच्च भिक्षुगुणव्यवस्थितेन सम्यग्विधातु शक्य, तद्व्यवस्थान च तत्परिज्ञानत इति तदर्थमिदमारभ्यते, एतत्सम्बन्धागतस्य चास्यानुयोगद्वारचतुष्टय प्राग्वद्वर्णनीय यावन्नामनिष्पन्ननिक्षेपे अनगारमार्गगतिरिति नाम, अतोऽनगारमार्गगतीना त्रयाणामपि पदाना निक्षेपायाह निर्युक्तिकृत्

अणगारे निक्खेवो चउविहो दुविह होइ नायव्वो । ॥ ५४६ ॥

जाणगभवियसरीरे तव्वइरित्ते अ निण्हगाईसु । भावे सम्मद्दिट्ठी अगारवासा विणिम्मुक्को ॥ ५४७ ॥

मग्गगईण दुण्हवि पुव्वुद्दिट्ठो चउक्कनिक्खेवो । अहिगारो भावमग्गे सिद्धिगईए उ नायव्वो ॥ ५४८ ॥

गाथात्रय स्पष्टमेव, नवर तद्व्यतिरिक्तश्च निह्नवादिषु, आदिशब्दादन्येष्वपि चरित्रपरिणामं विना गृहाभाववत्सु, निर्द्धारणे सप्तमी, ततश्च यस्तेषु मध्येऽनगारत्वेन लोके रूढ इत्युपस्कार, स तद्व्यतिरिक्तो द्रव्यानगारो, भावे 'सम्य-

स्तन्मनोरुचि–स्वप्रतिभासानुरूपं यथा भवत्येवं तिष्ठति, कया ?–'कर्मसम्पदा' यत्यनुष्ठानमाहात्म्यसमुत्पन्नपुलाकादिलब्धिसम्पत्त्या, पठन्ति च–'मणोरुइं चिट्ठइ कम्मसंपयं' तत्र च मनोरुचितफलसम्पादकत्वेन मनोरुचितां कर्मसम्पदं–शुभप्रकृतिरूपाम्, अनुभवन्निति शेषः, नागार्जुनीयास्तु पठन्ति–'मणिच्छियं संपयमुत्तमं गय'त्ति इह च सम्पदं–यथाख्यातचारित्रसम्पदं, अन्यत् सुगममेव, तपसः–अनशनाद्यात्मकस्य सामाचारीति–समाचरणं, यद्वा–तपश्च सामाचारी च–न्यक्षतो वक्ष्यमाणस्वरूपा समाधिश्च–चेतसः स्वास्थ्यं तैः संवृतः–निरुद्धाश्रवः तपःसामाचारीसमाधिसंवृतः, यद्वा–तपःसामाचारीसमाधिभिः संवृतं–संवरणं यस्य स तथाविधः, महती द्युतिः–तपोदीप्तिस्तेजोलेश्या वाऽस्येति महाद्युतिः, भवतीति गम्यते, किं कृत्वेत्याह–'पञ्च व्रतानि' प्राणातिपातविरमणादीनि, 'पालयित्वा' निरतिचारं संस्पृश्येति सूत्रार्थः ॥ ४७ ॥ पुनरस्यैवैहिकमामुष्मिकं च फलं विशेषेणाह–

स देवगंधवमणुस्सपूइए, चइत्तु देहं मलपंकपुव्वयं ।
सिद्धे वा हवइ सासए, देवे वाऽप्परए महिड्ढिए ॥ ४८ ॥ त्तिबेमि ॥

व्याख्या–'स' तादृग् विनीतविनयः, देवैः–वैमानिकज्योतिष्कैः गन्धर्वैश्च–गन्धर्वनिकायोपलक्षितैर्व्यन्तरभुवनपतिभिः मनुष्यैश्च–महाराजाधिराजप्रभृतिभिः पूजितः–अर्चितो देवगन्धर्वमनुष्यपूजितः, 'त्यक्त्वा' अपहाय 'देहं' शरीरं

गिहवास परिचज्जा, पव्वज्जामस्सिए मुणी । इमे सगे वियाणिज्जा, जेहिं सज्जंति माणवा ॥२॥ तहेव हिंस अलिय, चोज्ज अव्वभसेवण । इच्छाकाम च लोभ च, सजओ परिवज्जए ॥३॥ मणोहर चित्तघर, मल्लधूवणवासिय । सकवाड पडरुल्लोय, मणसावि न पत्थए ॥ ४ ॥ इंदियाणि उ भिक्खुस्स, तारिसमि उवस्सए । दुक्कराइ [तु धारेउ] निवारेउ, कामरागविवड्ढणे ॥५॥ सुसाणे सुन्नगारे या, रुक्खमूले व इक्कओ । पइरिक्के परकडे वा, वास तत्थऽभिरोयए ॥ ६ ॥ फासुयमि अणाबाहे, इत्थीहिं अणभिद्दुए । तत्थ सकप्पए वास, भिक्खू परमसजए ॥ ७ ॥ न सय गिहाइ कुव्विज्जा, नेव अन्नेहिं कारए । गिहकम्मसमारभे, भूयाणं दिस्सए वहो ॥ ८ ॥ तसाण थावराण च, सुहुमाण बायराण य । तम्हा गिहसमारभ, सजओ परिवज्जए ॥ ९ ॥ तहेव भत्तपाणेसु, पयणे पयावणेसु य । पाणभूयदयट्ठाए, न पए ण पयावए ॥ १० ॥ जलधन्ननिस्सिया जीवा, पुढवीकट्ठनिस्सिया । हम्मति भत्तपाणेसु, तम्हा भिक्खू न पयावए ॥ ११ ॥ विसप्पे सव्वओ धारे, बहुपाणविणासणे । नत्थि जोइसमे सत्थे, तम्हा जोई न दीवए ॥ १२ ॥ हिरण्ण च जायरूव च, मणसावि न पत्थए । समलिट्ठुकचणे भिक्खू, विरए कयविक्कए ॥ १३ ॥ किणतो कइओ होइ, विक्किणतो अ वाणिओ । कयविक्कयमि वट्टतो, भिक्खू हवइ तारिसो ॥१४॥ भिक्खियव्व न केयव्वं, भिक्खुणा भिक्खवित्तिणा । कयविक्कओ महादोसो, भिक्खावित्ती सुहावहा ॥१५॥ समुयाण उञ्छमेसिज्जा, जहासुत्तमणिदिय । लाभालाभमि सतुट्ठे, पिंडवाय चरे मुणी ॥ १६ ॥ अलोलो न रसे गिद्धो, जिब्भादतो अमुच्छिओ । न रसट्ठाए भुंजिज्जा,

जवणट्ठाए महामुणी ॥ १७ ॥ अच्चणं रयणं चेव, वंदणं पूअणं तहा । इड्ढीसक्कारसम्माणं, मणसावि न पत्थए ॥ १८ ॥ सुक्कं झाणं झियाइज्जा, अणियाणे अकिंचणे । वोसट्ठकाए विहरिज्जा, जाव कालस्स पज्जओ ॥ १९ ॥ निज्जूहिऊण आहारं, कालधम्मे उवट्ठिए । चइऊण माणुसं बुंदिं, पहू दुक्खा विमुच्चई ॥ २० ॥ निम्ममो निरहंकारो, वीयराओ अणासवो । संपत्तो केवलं नाणं, सासयं परिनिव्वुडे ॥ २१ ॥ त्तिबेमि ॥

॥ अणगारमग्गं ॥ ३५ ॥

'गृहवासं' गृहावस्थानं यदिवा गृहमेव वा पारवश्यहेतुतया पाशो गृहपाशस्तं 'परित्यज्य' परिहृत्य 'प्रव्रज्यां' सर्वसङ्गपरित्यागलक्षणां भागवतीं दीक्षाम् 'आश्रितः' प्रतिपन्नो मुनिः 'इमान्' प्रतिप्राणि प्रतीततया प्रत्यक्षान् 'सङ्गान्' पुत्रकलत्रादींस्तत्प्रतिबन्धान् वा 'विजानीयात्' भवहेतवोऽमीति विशेषेणावबुध्येत, निश्चयतो निष्फलस्यासत्त्वाज्ज्ञानस्य च विरतिफलत्वात्प्रत्याचक्षीतेत्युक्तं भवति, सङ्गशब्दव्युत्पत्तिमाह—'जेहिं'ति सुब्व्यत्ययाद् येषु 'सज्यन्ते' प्रतिबध्यन्ते, अथवा यैः सङ्गैः 'सज्यन्ते' संबध्यन्ते ज्ञानावरणादिकर्मणेति गम्यते, के ते ?-'मानवाः' मनुष्या उपलक्षणत्वादन्येऽपि जन्तवः । 'तथा' इति समुच्चये 'एवे'ति पूरणे 'हिंसां' प्राणव्यपरोपणम् 'अलीकम्' अनृतभाषणं 'चौर्यम्' अदत्तादानम् 'अब्रह्मसेवनं' मैथुनाचरणमिच्छारूपः काम इच्छाकामस्तं वा—अप्राप्तवस्तुकाङ्क्षारूपं 'लोहं च' लब्धवस्तुविषयगृद्ध्यात्मकम्, अनेनोभयेनापि परिग्रह उक्तस्ततः परिग्रहं च 'संयतः' यतिः 'परिवर्जयेत्' परिहरेत्।

अनेन मूलगुणा उक्ता, एतद्व्यवस्थितस्यापि च शरीरिणोऽवश्यमाश्रयाहाराभ्यां प्रयोजनं, तयोश्च तदतीचारहेतुत्वमपि कदाचित्स्यादिति मन्वानस्तत्परिहाराय सूत्रषट्केन तावदाश्रयचिन्तां प्रति यतते—'मनोहरं' चित्ताक्षेपकं, किं तत्?— चित्रप्रधानं गृहं चित्रगृहं, तदपि कीदृश?—माल्यैः—ग्रथितपुष्पैर्धूपनैश्च—कालागुरुतुरुष्कादिसम्बन्धिभिर्वासितं— सुरभीकृतं माल्यधूपनवासितं, सह कपाटेन प्रतीतेन वर्त्तत इति सकपाटं तदपि 'पाण्डुरोल्लोचं' श्वेतवस्त्रविभूषितं मनसाऽप्यास्तां वचसा 'न प्रार्थयेत्' नाभिलषेत्, किं पुनस्तत्र तिष्ठेदिति भावः। किं पुनरेवमुपदिश्यते? इत्याह— 'इन्द्रियाणि' चक्षुरादीनि 'तुः' इति यस्मात् 'भिक्षोः' अनगारस्य 'तादृशे' तथाभूते 'उपाश्रये' आश्रये दुःखेन क्रियन्ते-करोतेः सर्वधात्वर्थत्वाच्छक्यन्ते दुष्कराणि—दुःशकानीत्यर्थः 'तुः' एवकारार्थो दुष्कराण्येव 'धारयितुम्' उन्मार्गप्रवृत्तिनिषेधतो मार्ग एव व्यवस्थापयितुं, पठ्यते—दुष्कराणि 'णिवारेउं'ति, तत्रापि 'निवारयितुम्' इति नियन्त्रितुं स्वस्वविषयप्रवृत्तेरिति गम्यते, कीदृशि?—काम्यमानत्वात्कामा—मनोज्ञा इन्द्रियविषयास्तेषु रागः—अभिष्वङ्गस्तस्य विवर्द्धने विशेषेण वृद्धिहेतौ कामरागविवर्द्धने, तथा च तथाविधचित्तव्याक्षेपसम्भवात्कस्यचिन्मूलगुणस्य कथञ्चिदतीचारसम्भवो दोष इत्येवमुपदिश्यत इति भावः। एवं तर्हि क्व कीदृशि स्थातव्यमित्याह—'श्मशाने' प्रेतभूमौ 'शून्यागारे' उद्वसितगृहे 'वा' विकल्पे 'वृक्षमूले वा' पादपसमीपे 'एकदा' इत्येकस्मिंस्तथाविधकाले, पठ्यते च—'एकओ'त्ति 'एककः' रागद्वेषविप्रमुक्तोऽसहायो वा तथाविधयोग्यतया 'पराक्ये' परसम्बन्धिनि तथाविधप्रतिबन्धेनास्वीकृते पाठान्तरतः 'पति-

रिक्के' देशीभाषया 'एकान्ते' स्त्र्याद्यसङ्कुले 'परकृते' परैः—अन्यैर्निष्पादिते स्वार्थमिति गम्यते 'वा' समुच्चये 'वासम्' अवस्थानं 'तत्र' श्मशानादौ 'अभिरोचयेत्' प्रतिभासयेदर्थादात्मने भिक्षुरित्युत्तरेण योगः। 'प्रासुके' अचित्तीभूतभूभागरूपे, तथाऽविद्यमाना बाधाऽऽत्मनः परेषां वाऽऽगन्तुकसत्त्वानां गृहस्थानां च यस्मिंस्तत्तथा 'स्त्रीभिः' अङ्गनाभिरुपलक्षणत्वात्पण्डकादिभिश्च 'अनभिद्रुते' अनुपद्रुते तदुपद्रवविरहित इत्यर्थः, एतानि हि मुक्तिपथप्रतिपन्थित्वेन तत्प्रवृत्तानामुपद्रवहेतुभूतानीत्येवमभिधानं'तत्रे'ति प्रागुक्तविशेषणे श्मशानादौ सम्यकल्पयेत्—कुर्यात्सङ्कल्पयेत्,कं?—वासं, भिक्षणशीलो भिक्षुः, स च शाक्यादिरपि स्यादत आह—परमः—प्रधानः स चेह मोक्षस्तदर्थं सम्यग् यतते परमसंयतः, जिनमार्गप्रपन्न इत्युक्तं भवति, तस्यैव मुक्तिमार्गं प्रति वस्तुतः सम्यग्यत्नसम्भवात्, प्राग्वासं तत्राभिरोचयेदित्युक्ते रुचिमात्रेणैव कश्चित्तुष्येदिति तत्र सङ्कल्पयेद्वासमित्यभिधानम्। ननु किमिह परकृत इति विशेषणमुक्तमित्याशङ्क्याह—न 'स्वयम्' आत्मना 'गृहाणि' उपाश्रयरूपाणि 'कुर्वीत' विदधीत नैव 'अन्यैः' गृहस्थादिभिः 'कारयेत्' विधापयेदुपलक्षणत्वान्नापि कुर्वन्तमनुमन्येत, किमिति?, यतो गृहनिष्पत्त्यर्थं कर्म गृहकर्म—इष्टकामृदानयनादि तदेव समारम्भः—प्राणिनां परितापकरत्वाद्, उक्तं हि—"परितावकरो भवे समारंभो"त्ति, यद्वा तस्य समारम्भः—प्रवर्त्तनं गृहकर्मसमारम्भस्तस्मिन् 'भूतानाम्' एकेन्द्रियादिप्राणिनां 'दृश्यते' प्रत्यक्षत एवोपलभ्यते, कोऽसौ?—'वधः' विनाशः। भूतानां वध इत्युक्तं तत्र मा भूत्केषाञ्चिदेवासावित्याशङ्क्याह—'त्रसानां' द्वीन्द्रियादीनां 'स्थावराणां'

पृथिव्याद्येकेन्द्रियाणा 'च,' समुच्चये तेषामपि 'सूक्ष्माणाम्' अतिश्लक्ष्णाना शरीरापेक्षया न जीवप्रदेशापेक्षया, तस्यामूर्त्ततयैवप्रायव्यवहारायोगात्, 'बादराणा च' एवमेव स्थूलाना, यद्वा सूक्ष्मनामकर्मोदयात्सूक्ष्माणां तेषामपि प्रमादतो भावहिंसासम्भवाद्बादरनामकर्मोदयाच्च बादराणाम्, उपसंहर्त्तुमाह—'तम्ह'त्ति यस्मादेव भूतवधस्तस्माद्गृहसमारम्भ 'संयतः' सम्यग्र्हिंसादिभ्य उपरतोऽनगार इत्यर्थ 'परिवर्जयेत्' परिहरेत्, इत्थमाश्रयचिन्ता विधायाहारचिन्तामाह—'तथैव' तेनैव प्रकारेण भक्तानि च—शाल्योदनादीनि पीय त इति पानानि—पय प्रभृतीनि तानि च भक्तपानानि तेषु, पचनानि च—स्वय विक्लेदापादनकथनानि पाचनानि च—तान्येवान्यै पचनपाचनानि तेषु च भूतवधो दृश्यत इति प्रक्रम , तत किमित्याह—प्राणा—द्वीन्द्रियादयो भूतानि—पृथिव्यादीनि तेषा दया—रक्षण प्राणभूतदया तदर्थं—तद्धेतो., किमुक्त भवति ?—पचनपाचनप्रवृत्तानां य सभवी जीवोपघातः स मा भूदिति न पचेत्ततो भक्तादीति प्रक्रमो नापि पाचयेत्तदेवान्यै । अमुमेवार्थं स्पष्टतरमाह—जल च—पानीय धान्य च—शाल्यादि तन्निश्रिता — तत्रान्यत्र चोत्पद्य ये तन्निश्रया स्थिता पूतरकभुजगेलिकापिपीलिकाप्रभृतय उपलक्षणत्वात्तद्रूपाश्च 'जीवाः' प्राणिन , एव पृथ्वीकाष्ठनिश्रिता एकेन्द्रियादयो हन्यन्ते भक्तपानेषु प्रक्रमात्पच्यमानादिषु, यत एवं तस्माद्भिक्षुर्न पाचयेत्, अपेर्गम्यमानत्वात्पाचयेदपि न किं पुन स्वय पचेत्, अनुमतिनिषेधोपलक्षण चैतत् । अपरं च विसर्पतीति

विसर्पं—स्वल्पमपि वहु भवति, यत उक्तम्—"अण थोवं वण थोवं अग्गी थोव"मित्यादि, सर्वतः—सर्वासु दिक्षु धारेव धारा—जीवविनाशिका शक्तिरस्येति सर्वतोधारं सर्वदिगवस्थितजन्तूपघातकत्वात्, उक्तं च—"पाईणं पडीणं वावी-"त्यादि, अत एव 'वहुप्राणविनाशनम्' अनेकजीवजीवितव्यपरोपकं 'नास्ति' न विद्यते 'ज्योतिःसमम्' अग्नितुल्यं शस्यन्ते—हिंस्यन्तेऽनेन प्राणिन इति शस्त्रं—प्रहरणमन्यदिति गम्यते तस्याविसर्पत्वादसर्वतोधारत्वादल्पजन्तूपघातकत्वाच्चेति भावः, सर्वत्र लिङ्गव्यत्ययः प्राग्वत्, यस्मादेवं तस्मात् 'ज्योतिः' वैश्वानरं 'न दीपयेत्' न ज्वालयेत्, अनेन च पचनस्याग्निज्वलनाविनाभावित्वात्तत्परिहार एव समर्थितः, इत्थं च विशेषप्रक्रमे च सामान्याभिधानं प्रसङ्गतः शीतापनोदादिप्रयोजनेऽपि तदारम्भनिषेधार्थम्, आधाकर्मादिका वा विशुद्धकोटिरनेनैवार्थतः परिहार्योक्ता, तदपरिहारे ह्यवश्यम्भावी पचनानुमत्यादिप्रसङ्ग इति । नन्वेवं जीववधनिमित्तत्वमेव पचनादेर्निषेधनिवन्धनं, तच्च नास्ति क्रयविक्रययोरिति युक्तमेवाभ्यां निर्वहण(मेव)मपि कस्यचिदाशङ्का स्यादतस्तदपनोदाय हिरण्यादिपरिग्रहपूर्वकत्वात्तयोस्तन्निषेधपूर्वकं सूत्रत्रयेण तत्परिहारमाह—'हिरण्यं' कनकं 'जातरूपं' रूप्यं चकारोऽनुक्ताशेषधनधान्यादिसमुच्चये 'मनसाऽपि' चित्तेनाप्यास्तां वाचा 'न प्रार्थयेत्' ममामुकं स्यादिति, अपेर्गम्यमानत्वात्प्रार्थयेदपि न, किं पुनः परिगृह्णीयात्?, कीदृशः सन्?—समे—प्रतिवन्धाभावतस्तुल्ये लेष्टुकाञ्चने—मृत्पिण्डखण्डकनके अस्येति समलेष्टुकाञ्चनः,

१ ऋणं स्तोकं व्रणं स्तोकं अग्निः स्तोकः कषायः स्तोकश्च ।

एवविधश्च सन् भिक्षु 'विरत.' निवृत्तः स्यादिति शेप , कुतः ?—क्रयो—मूल्येनान्यसम्बन्धिनस्तथाविधवस्तुन स्वीकारो विक्रयश्च—तस्यैवात्मीयस्य तथाविधवस्तुजातेनान्यस्य दान, क्रयश्च विक्रयश्च क्रयविक्रयमिति समाहारस्तस्मात्, पञ्चम्यर्थे सप्तमी, विपयसप्तमी वा, तत्र च–क्रयविक्रयविपये, 'विरत.' इति विरतिमानित्यर्थ । किमित्येवम् ? अत आह–क्रीणान –परकीय वस्तु मूल्येनाददान क्रयोऽस्यास्तीति क्रयिको भवति–तथाविधेतरलोकसदृश एव भवति, विक्रीणानश्च–स्वकीय वस्तु तथैव परस्य ददद्वणिग् भवति, वाणिज्यप्रवृत्तत्वादिति भाव , अत एव च 'क्रयविक्रये' उक्तरूपे 'वर्त्तमान ' प्रवर्त्तमानो भिक्षुर्भवति न तादृशो, गम्यमानत्वाद्यादृश. सूत्राभिहितो भावभिक्षुरिति भाव । तत किमित्याह—'भिक्षितव्य' याचितव्य तथाविधं वस्त्वियति गम्यते, 'न' नैव 'क्रेतव्य' मूल्येन ग्रहीतव्य, केन ?—भिक्षुणा, कीदृशा ?–भिक्षयैव वृत्ति –वर्त्तन निर्वहण यस्यासौ भिक्षावृत्तिस्तेन, उक्त हि–"संघ से जाइय होइ नत्थि किंचि अजाइय "ति, क्रयविक्रयवद्भिक्षाऽपि सदोपैव भविष्यतीति मन्दधीर्मन्यते, तत आह–क्रयश्च विक्रयश्च क्रयविक्रय व्यवच्छेद्फलत्वादस्य तदेव महादोपमुक्तन्यायत , लिङ्गव्यत्ययश्च प्राग्वत्, भिक्षया वृत्तिर्भिक्षावृत्ति शुभ–इहलोकपरलोकयो कल्याण सुख वा तदावहति–समन्तात्प्रापयतीति शुभावहा सुखावहा वा, अनेन क्रीतदोपपरिहार उक्त., स चाशेपविशुद्धकोटिगतदोपपरिहारोपलक्षणम् ।

१ सर्वं तस्स याचित भवति नास्ति किञ्चिदयाचितम् ।

भिक्षितव्यमित्युक्तं, तच्च दानश्राद्धादिवेश्मनि क्वचिदेकत्रैव स्यादत आह–'समुदानं' भैक्षं न त्वेकभिक्षामेव तच्चोञ्छमिव उञ्छम्–अन्यान्यवेश्मतः स्वल्पं स्वल्पमामीलनात्, मधुकरवृत्त्या हि भ्रमत ईदृगेव भवतीत्येवमुक्तम्, 'एषयेत्' गवेषयेत्, एतच्चोत्सूत्रमपि स्यादित्याह—सूत्रम्—आगमस्तदनतिक्रमेण यथासूत्रम्–आगमाभिहितोद्गमैषणाद्यबाधात इत्युक्तं भवति, तत एव 'अनिन्दितं' शिष्टनिन्द्येन स्वपरप्रशंसादिहेतुनाऽनुत्पादितं जात्यादिजुगुप्सितजनसम्बन्धि वा न भवति, तथा लाभश्चालाभश्च लाभालाभं तस्मिन् संतुष्टः–ओदनादेः प्राप्तावप्राप्तौ च सन्तोषवान् न तु वाञ्छाविधुरितचित्त इति भावः, इह च लाभेऽपि वाञ्छोत्तरोत्तरवस्तुविषयत्वेन भावनीया, पिण्ड्यत इति पिण्डो–भिक्षा तस्य पातः–पतनं प्रक्रमात्पात्रेऽस्मिन्निति पिण्डपातं–भिक्षाऽटनं तत् 'चरेत्' आसेवेत 'मुनिः' इति तपस्वी, पाठान्तरतश्च पिण्डस्य पातः पिण्डपातस्तं गवेषयेत्, उभयत्र च वाक्यान्तरविषयत्वादपौनरुक्त्यम् । इत्थं च पिण्डमवाप्य यथा भुञ्जीत तथाऽऽह–'अलोलः' न सरसान्ने प्राप्ते लाम्पट्यवान्, न 'रसे' स्निग्धमधुरादौ 'गृद्धः' प्राप्तावभिकाङ्क्षावान्, कथं चैवंविधः ?, यतः 'जिब्भादंते'त्ति प्राकृतत्वाद्दान्ता–वशीकृता जिह्वा–रसना येनासौ दान्तजिह्वोऽत एव 'अमूर्छितः' संनिधेरकरणेन तत्काले वाऽभिष्वङ्गाभावेन, उक्तं हि–"[1]नो वामाओ हणुयातो दाहिणं, दाहिणाओ वा वामं चालेइ" एवंविधश्च सन् 'न' नैव 'रसट्ठाए'त्ति रसार्थं सरसमिदमहमास्वादयामीति धातुवि-

१ न वामात् हनुनो दक्षिणं न दक्षिणाद्वा वामं चालयति

शेषो वा रस॰ स चाशेषधातूपलक्षण ततस्तदुपचय॰ स्यादित्येतदर्थं 'न भुंजीत' नाभ्यवहरेत्, किमर्थं तर्हीत्याह–यापना–निर्वाह स चार्थात्संयमस्य तदर्थं 'महामुनि' प्रधानतपस्वी, अनेन पिण्डविशुद्धिरुक्ता । तदेवमादौ मूलगुणान् विधेयतयाऽभिधाय तत्परिपालनार्थमाश्रयाहारचिन्ताद्वारेणोत्तरगुणाश्च सम्प्रति तदवस्थित एवाऽमन्युत्पन्नबहुमान कश्चिदर्चनादि प्रार्थयेदिति तन्निषेधार्थमाह–'अर्चना' पुष्पादिभि पूजा 'रचना' निषद्यादिविषया स्वस्तिकादिन्यासात्मिका वा 'चः' समुच्चये 'एव' अवधारणे नेत्यनेन सम्बन्ध्यते 'वन्दन' नमस्तुभ्यमित्यादि वाचाऽभिधान 'पूजन' विशिष्टवस्त्रादिभि प्रतिलाभन 'तथे'ति समुच्चये, ऋद्धिश्च—श्रावकोपकरणादिसम्पदामर्षौषध्यादिरूपा वा सत्कारश्च–अर्घप्रदानादि सन्मानश्च–अभ्युत्थानादि ऋद्धिसत्कारसन्मान तन्मनसाऽप्यास्ता वाचा नैव 'प्रार्थयेत्' ममेदं स्यादित्यभिलषेत् । किं पुन कुर्यादित्याह–'शुक्लध्यानम्' उक्तरूप यथा भवत्येव 'ध्यायेत्' चिन्तयेत् 'अनिदान' अविद्यमाननिदानोऽकिञ्चन प्राग्वत्, व्युत्सृष्ट इव व्युत्सृष्ट काय –शरीर येन स तथा विहरेदप्रतिबद्धविहारितयेति गम्यते 'यावदि'ति मर्यादाया 'कालस्य' इति मृत्यो 'पज्जयत्ति' 'पर्यायः' परिपाटी प्रस्ताव इतियावत्, याव मरणसमय क्रमप्राप्तो भवतीति । एवंविधानगारगुणस्थश्च यावदायुर्विहृत्य मृत्युसमये यत्कृत्वा यत्फलमवाप्नोति तदाह–'णिज्जूहिऊण'त्ति परित्यज्य 'आहारम्' अशनादि, तत्परित्यागश्च सलेखनाक्रमेणैव,

झगिति तत्करणे बहुतरदोषसम्भवात्, तथा चागमः—"देहंम्मि असंलिहिए सहसा धाऊहि खिज्जमाणाहिं । जायइ अट्टज्झाणं सरीरिणो चरमकालंमि ॥ १ ॥ कदा?—'कालधर्मे' आयुःक्षयलक्षणे मृत्युस्वभावे 'उपस्थिते' प्रत्यासन्नीभूते, तथा 'त्यक्त्वा' अपहाय 'माणुसं'ति मानुषीं—मनुष्यसम्बन्धिनीं 'बुन्दिं' शरीरं 'प्रभुः' वीर्यान्तरायक्षयतो विशिष्टसामर्थ्यवान् 'दुक्खे'त्ति 'दुःखैः' शारीरमानसैः 'विमुच्यते' विशेषेण त्यज्यते, तन्निबन्धनकर्मापगमत इति भावः । कीदृशः सन्? इत्याह—'निर्ममः' अपगतममीकारः 'निरहङ्कारः' अहममुकजातीय इत्याद्यहङ्काररहितः, ईदृक्षः कुतः?, यतो वीतरागः प्राग्वद् विगतरागद्वेषः, तथा 'अनाश्रवः' कर्माश्रवरहितो मिथ्यात्वादितद्धेत्वभावात् संप्राप्तः 'केवलज्ञानम्' उक्तरूपं 'शाश्वतं' कदाचिदव्यवच्छेदात् 'परिनिर्वृतः' अस्वास्थ्यहेतुकर्माभावतः सर्वथा स्वस्थीभूत इति विंशतिसूत्रभावार्थः । 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । गतोऽनुगमो, नयाश्च प्राग्वत् ॥ इत्युत्तराध्ययनश्रुतस्कन्धटीकायां श्रीशान्त्याचार्यविरचितायां शिष्यहितायामनगारमार्गगतिनामकं पञ्चत्रिंशत्तममध्ययनं समाप्तम् ॥ ३५ ॥

इत्युत्तराध्ययनश्रुतस्कन्धे श्रीशान्त्याचार्यविहिता शिष्यहितानाम्नी अनगारमार्गगतिनामक पञ्चत्रिंशत्तमाध्ययनवृत्तिः



१ देहेऽसंलिखिते सहसा धातुषु क्षीयमाणेषु । जायते आर्त्तध्यानं शरीरिणश्चरमसमये ॥ १ ॥

'मलपकपुव्वय'ति जीवशुद्धयपहारितया मलवन्मल स चासौ 'पावे वज्जे वेरे पके पणए य'त्ति वचनात् पङ्कश्च कर्ममलपङ्क स पूर्व–कार्यात् प्रथमभावितया कारणमस्येति मलपङ्कपूर्वक, यद्वा–'माओउंय पिऊसुक्क'त्ति वचनात् रक्तशुक्रे एव मलपङ्कौ तत्पूर्वक, 'सिद्धो वा' निष्ठितार्थो वा 'भवति' जायते 'शाश्वत ' सर्वकालावस्थायी, न तु परपरिकल्पिततीर्थनिकारादिकारणत पुनरिहागमवानशाश्वत , सावशेपकर्मवास्तु देवो वा भवति, 'अप्परए'त्ति अल्पमिति–अविद्यमानं रतमिति–क्रीडित मोहनीयकर्मोदयजनितमस्येति अल्परतो–लवसत्तमादि , अल्परजा वा प्रतनुबध्यमानकर्मा, महती–महाप्रमाणा प्रशस्या वा ऋद्धि –चक्रवर्तिनमपि योधयेत् इत्यादिका विकरणशक्ति तृणाग्रादपि हिरण्यकोटिरित्यादिरूपा वा समृद्धिरस्येति महर्द्धिक , देवविशेपण वा, 'इति ' परिसमाप्तावेवमर्थे वा, एतावद्धिनयश्रुतमनेन वा प्रकारेण 'ब्रवीमि' इति गणभृदादिगुरूपदेशत , न तु स्वोत्प्रेक्षया इति ॥ ४८ ॥ उक्तोऽनुगम , सम्प्रति चतुर्थमनुयोगद्वार नया इति, नयति–अनेकांशात्मकं वस्त्वेकांशावलम्बनेन प्रतीतिपथमारोपयति नीयते वा तेन तस्मिंस्ततो वा नयन वा नय –प्रमाणप्रवृत्त्युत्तरकालभावी परामर्श इत्यर्थ , उक्त च—"[3]स नयइ तेण तहिं वा ततोऽहवा वत्थुणो व ज णयण । वहुहा पज्जायाण सभवओ सो णओ णाम ॥ १ ॥" ननु सन्त्यमी नया , एपा तु

१ पाप वज्र वैर पङ्कः पनकश्च २ मातुरार्त्तवं पितु शुक्रम् ३ स नयति तेन तत्र वा ततोऽथवा वस्तुनो वा यन्नयनम् । बहुधा पर्यायाणा सभवत स नयो नाम ॥ १ ॥

अणंणुपुवीए ऊ एगाएगुत्तराय सेढीए । छत्तीसगच्छगाए गुणिया अन्नोन्नदुरुवूणा ॥ ६॥ णामे छविहणामे तत्थवि भावे खओवसमियम्मि । जम्हा वट्टइ भावे सवसुयं खओवसमियंमि ॥ ७ ॥ ओयरति पमाणे पुण भावपमाणंमि तंपि तिविहं तु । गुणणयसंखपमाणं ओयरति गुणपमाणंमि ॥ ८ ॥ तत्थवि णाणे तहियंपि आगम लोउत्तरे अणंगे य । कालियसुए य तत्तो अहवावी आगमतियंमि ॥ ९ ॥ अत्तअणंतरपारंपरे य उभयंमि तं समोयरई । ण णएसु समोयरई समोयरइ उ संखपरिमाणे ॥ १० ॥ तत्थवि य कालियसुए अक्खरपायाइएसु ओयरइ । वत्तवय ओसण्णं ससमयवत्तव ओयरति ॥ ११ ॥ अत्थहिगारो इत्थं जीवाजीवेहिं होइ णायबो । एमेव समोयरई जं जत्थ समोयरइ दारे ॥ १२ ॥ निक्खेवावसरो पुण अह अणुपत्तो य तत्थ निक्खेवे । णिक्खेवो णासोत्ति य

१ अनानुपुर्व्यां त्वेकाद्येकोत्तरायां श्रेण्याम् । पट्त्रिंशद्गच्छगतायां गुणिता अन्योन्यं द्विरूपोनाः ॥ ६ ॥ नाम्नि षड्विधे नाम्नि तत्रापि भावे क्षायोपशमिके। यस्मात् वर्त्तते भावे सर्वं श्रुतं क्षायोपशमिके ॥ ७॥ अवतरति प्रमाणे पुनर्भावप्रमाणे तदपि त्रिविधं तु । गुणनयसङ्ख्याप्रमाणानि अवतरति गुणप्रमाणे॥ ८॥ तत्रापि ज्ञाने तत्रापि आगमे अवतरति लोकोत्तरे अनङ्गे च । कालिकश्रुते च तत्राथवापि आगमत्रिके ॥ ९ ॥ आत्मानन्तरपरम्परेषु चोभयस्मिन्नपि तत्समवतरति । न नयेषु समवतरति समवतरति तु संख्यापरिमाणे ॥ १० ॥ तत्रापि च कालिकश्रुते अक्षरपादादिकेष्ववतरति । वक्तव्यतायां प्रायशः स्वसमयवक्तव्यतायामवतरति ॥ ११ ॥ अर्थाधिकारोऽत्र जीवाजीवाभ्यां भवति ज्ञातव्यः । एवमेव समवतरति यद्यत्र समवतरति द्वारे ॥ १२ ॥ निक्षेपावसरः पुनरथानुप्राप्तश्च तत्र निक्षेपे । निक्षेपो न्यास इति च

# अथ जीवाजीवविभक्तिरितिनाम षट्त्रिंशत्तममध्ययनम्

व्याख्यातमनगारमार्गगतिनामकं पञ्चत्रिंशमध्ययनम्, अधुना षट्त्रिंशमारभ्यते, अस्य चायमभिसम्बन्धः — अनन्तराध्ययने हिंसापरिवर्जनादयो भिक्षुगुणा उक्ता, ते च जीवाजीवस्वरूपपरिज्ञानत एवासेवितुं शक्यन्त इति तज्ज्ञापनार्थमिदमारभ्यते, अस्य चोपक्रमादीनि चत्वार्यनुयोगद्वाराणि, तत्र च भाष्यगाथा —"तस्स अणुओगदारा चत्तारि उवक्कमे य निक्खेवे । अणुगम नए य तहा उवक्कमो छव्विहो तत्थ ॥ १ ॥ नाम ठवणादविए खेत्ते काले तहेव भावे य । एसो सत्थोवक्कमो वन्नेयव्वो जहक्कमसो ॥ २ ॥ अहवऽणुपुव्विणामप्पमाणवत्तव्वया य बोद्धव्वा । अत्थहिगारे तत्तो छट्ठे य तहा समोयारो ॥ ३ ॥ सव्वे जहक्कमेणं वन्नेऊण इमो समोयारो । अणुपुव्वीए उ तहिं उक्कित्तणपुव्वी ओतरइ ॥ ४ ॥ सा इह पुव्वाणुपुव्वी पच्छाणुपुव्वी तहा अणाणुपुव्वी । पुव्वाणुपुव्वी छत्तीसइय इमं पच्छ पुण पढमे ॥५॥

१ तस्य अनुयोगद्वाराणि चत्वारि उपक्रमश्च निक्षेप । अनुगमो नयश्च तथा उपक्रम षड्विधस्तत्र ॥ १॥ नाम स्थापना द्रव्य क्षेत्र कालः तथैव भावश्च । एष शास्त्रीयोपक्रमो वर्णयितव्यो यथाक्रमम् ॥ २ ॥ अथवा आनुपूर्वी नाम प्रमाण वक्तव्यता [redacted] बोद्धव्या । अर्थाधिकारश्च ततः षष्ठश्च तथा समवतार ॥ ३ ॥ सर्वान् यथाक्रम वर्णयित्वा अय समवतार (कार्य) । तत्र आनुपूर्व्यां उत्कीर्तनानुपूर्व्यामवतरति ॥ ४ ॥ सेह पूर्वानुपूर्वी पश्चानुपूर्वी तथा अनानुपूर्वी । पूर्वानुपूर्व्या षट्त्रिंशत्तम इद पश्चानुपूर्व्या पुन प्रथमम् ॥ ५ ॥

सिद्धाणमसिद्धाण य अज्जीवाणं तु होइ दुविहा उ। रूवीणमरूवीण य विभासियव्वा जहा सुत्ते ॥५५५॥
भावंमि विभत्ती खलु नायव्वा छव्विहंमि भावंमि । अहिगारो इत्थं पुण दव्वविभत्तीइ अज्झयणे ॥५५६॥

निक्खेवेत्यादि गाथा अष्ट व्याख्यातप्राया एव, नवरं तद्व्यतिरिक्तश्च 'जीवद्रव्यं' द्रव्यजीव उच्यत इति प्रक्रमः 'तुः' विशेषद्योतकः, स चायं विशेषः—यथा न कदाचित्तत्पर्यायवियुक्तं द्रव्यं तथाऽपि च यदा तद्वियुक्ततया विवक्ष्यते तदा तद्द्रव्यप्राधान्यतो द्रव्यजीवः, भावे तु दशविधः 'खलुः' अवधारणे दशविध एव परिणामः कर्मक्षयोपशमोदयापेक्षपरिणतिरूपो जीवद्रव्यस्य सम्बन्धी जीवादनन्यत्वेन जीवतया विवक्षितो जीव इति प्रक्रमः, तत्र च क्षायोपशमिकाः षट् पञ्चेन्द्रियाणि षष्ठं मनः औदयिकाः क्रोधादयश्चत्वारो मीलिता दश भवन्ति । एवमजीवनिक्षेपेऽपि यदा पुद्गलद्रव्यमजीवरूपं सकलगुणपर्यायविकलतया कल्प्यते तदा तद्व्यतिरिक्तो द्रव्याजीवः, भावे चाजीवद्रव्यस्य—पुद्गलस्य दशविधः परिणामोऽजीव इति प्रक्रमः, स च शब्दादयः पञ्च शुभाशुभतया भेदेन विवक्षिताः, तथा च सम्प्रदायः—'शब्दस्पर्शरसरूपगन्धाः शुभाश्चाशुभाश्चे'ति । तथा विभक्तिनिक्षेपे सति विभक्तिर्भवेत् 'द्विविधा' द्विप्रकारा, द्वैविध्यं चास्याः सम्बन्धिभेदादेवेति तमाह—जीवानामजीवानां च, कोऽर्थः ?—जीवविभक्तिः—जीवानां विभागेनावस्थापनम्, एवमजीवविभक्तिश्च, उत्तरत्राप्येवमेव सम्बन्धिभेदाद्भेदो व्याख्येयः, 'तहिं'ति वचनव्यत्ययात् 'तयोः'

ठवणत्ति य होंति एगट्ठा ॥ १३ ॥ सो तिह ओहे णामे सोत्तालावे य होइ बोद्धव्वो । तत्थोहो अविसेसो अज्झयणस्सवि य सो चउहा ॥ १४ ॥ वण्णेउ जहा विहिणा तयणंतरमित्थ णामणिप्फण्णो । तत्थ य नामं अस्स उ जीवाजीवाण य विभत्ती ॥ १५ ॥" अत्र च जीवाजीवविभक्तिरिति पदत्रय वर्त्तत इत्येतन्निक्षेपायाह निर्युक्तिकृत्—

निक्खेवो जीवम्मि अ चउविहो दुविह होइ नायव्वो । ॥ ५४९ ॥

जाणगभवियसरीरे तव्वइरित्ते अ जीवदव्व तु । भावम्मि दसविहो खलु परिणामो जीवदव्वस्स ॥५५०॥

निक्खेवो अ(ऽ)जीवम्मि चउविहो दुविह होइ नायव्वो । ॥ ५५१ ॥

जाणगभवियसरीरे तव्वइरित्ते अजीवदव्व तु । भावम्मि दसविहो खलु परिणामो अ(ऽ)जीवदव्वस्स ५५२

निक्खेवो विभत्तीए चउविहो दुविह होइ दव्वम्मि । ॥ ५५३ ॥

जाणगभवियसरीरा तव्वइरित्ता य से भवे दुविहा । जीवाणमजीवाण य जीवविभत्ती तहि दुविहा ५५४

---

१ स्थापनेति च भवन्त्येकार्थाः ॥ १३ ॥ स त्रिधा ओघ नाम सूत्रालापकश्च भवति बोद्धव्य । तत्रौघोऽविशेष अध्ययनस्यापि च स चतुर्धा ॥ १४ ॥ वर्णयित्वा यथाविधि तदन तरमत्र नामनिष्पन्नः । तत्र च नामास्य तु जीवाजीवाना च विभक्ति ॥ १५ ॥

प्रशस्तं यथा भवत्येवं 'यतते' यत्नवान् भवति, क ?—संयमे—उक्तरूपसंयमविषय इति सूत्रार्थः ॥ आह—जीवाजीवविभक्तिज्ञानमिव लोकालोकविभक्तिज्ञानमपि संयमयतनायां विषयतयोपयुज्यत एवेत्याह—

जीवा चेव अजीवा य, एस लोए वियाहिए। अजीवदेसमागासे अलोए से वियाहिए ॥ २ ॥

'जीवाश्चैवाजीवाश्च' वक्ष्यमाणाः, कोऽर्थः ?—जीवाजीवरूपः 'एष'इति प्रतिप्राणि प्रत्यक्षः प्रतीतो लोको विशेषेणाख्यातः—कथितो व्याख्यातस्तीर्थकृदादिभिरिति गम्यते, जीवाजीवानामेव यथायोगमाधाराधेयतया व्यवस्थितानां लोकत्वाद्, 'अजीव'त्ति, अनेनाजीवसमुदाय उपलक्ष्यते, स च धर्माधर्माकाशपुद्गलात्मकस्तस्य देश इत्यंशोऽजीवदेश आकाशमलोकः स व्याख्यातो,–'धर्मादीनां वृत्तिर्द्रव्याणां भवति यत्र तत्क्षेत्रम्। तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम् ॥ १ ॥" इति भावार्थः ॥ इह च जीवाजीवानां विभक्तिः प्ररूपणाद्वारेणैवेति तां विधित्सुर्यथाऽसौ भवति तथाऽऽह—

दव्वओ खित्तओ चेव, कालओ भावओ तहा। परूवणा तेसि भवे, जीवाणमजीवाण य ॥ ३ ॥

'द्रव्यतः' द्रव्यमाश्रित्य इदमियद्भेदं द्रव्यमिति, 'क्षेत्रतश्चैव' इदमियति क्षेत्र इति, 'कालतः' इदमेवंविधकालस्थितीति, 'भावतः' इमेऽस्य पर्याया इति 'तथे'ति समुच्चये 'प्ररूपणा' यथास्वं भेदाद्यभिधानद्वारेण स्वरूपोपदर्शनं

जीवाजीवविभक्त्योर्मध्ये द्विविधा सिद्धानामसिद्धाना च, 'अज्जीवाण तु'त्ति 'तु' अपिशब्दार्थस्ततोऽजीवानामपि भवति 'दुविहा उ'त्ति, 'तु' अवधारणे ततो द्विविधैव रूपिणामरूपिणा च 'विभाषितव्या' विशेषेण व्यक्त वक्तव्या यथा 'सूत्रे' प्रक्रान्ताध्ययनरूपे, इह तु प्रक्रमायाताऽपि पौनरुक्त्यप्राप्तेरसौ न प्रतिपाद्यत इति भाव, 'भावे' भावनिक्षेपे विभक्तिः 'खलु' निश्चित ज्ञातव्या 'षड्विधे भावे' षट्प्रकारौदयिकादिभावविषया, आह–एवमनेकविधाया विभक्ताविह कयाऽधिकार ?, उच्यते, 'अधिकार' अधिकृतम् 'अत्रे'ति प्रस्तुते पुन शब्दो वाक्यान्तरोपन्यासे 'द्रव्यविभक्त्या' जीवाजीवद्रव्यविभागावस्थापनरूपया, तस्या एवात्र प्रदर्श्यमानत्वादिति भाव इति निर्युक्तिगाथाऽष्टकावयवार्थ । इत्यवसितो नामनिष्पननिक्षेप, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

जीवाजीवविभत्ति मे, सुणेहेगमणा इओ । ज जाणिऊण भिक्खू, सम्म जयइ सजमे ॥ १ ॥

जीवाश्च–उपयोगलक्षणा अजीवाश्च–तद्विपरीता जीवाजीवास्तेषा विभजन विभक्ति–तत्तद्भेदादिदर्शनतोऽपि विभागेनावस्थापन जीवाजीवविभक्तिस्ता 'मे' मम कथयत इति गम्यते 'शृणुत' आकर्णयत शिष्या इति शेष, पठन्ति च 'सुणेह मि'त्ति, कथम्भूता सन्त ?—एक—दर्शनान्तरोक्तजीवाजीवविभक्त्यावगतत्वेन मन–चित्त येषा ते एकमनस, इहैव श्रद्धानवन्त इत्युक्त भवति, 'इत' इत्यस्मादनन्तराध्ययनादेतद्विषयात् श्रवणाद्वाऽनन्तर या जीवाजीवविभक्तिं ज्ञात्वा 'भिक्षु' अनगार पाठान्तरत श्रमणो वा सम्यगिति–प्रशसार्थो निपात, ततश्च सम्यक्—

देशः—त्रिभागचतुर्भागादिस्तद्देशः, तथा तस्येति—धर्मास्तिकायस्यैव प्रकर्षेणान्त्यत्वात्प्रदेशान्तराभावतः क्वचिदप्यनुगतरूपाभावलक्षणेन दिश्यते—प्राग्वदुपदिश्यत इति प्रदेशो—निरंशो भागस्तत्प्रदेशः 'आख्यातः' कथितः, न धारयति—गतिपरिणतावपि जीवपुद्गलांस्तत्स्वभावतया नावस्थापयति स्थित्युपष्टम्भकत्वात्तस्येत्यधर्मः पदेऽपि पदैकदेशदर्शनादधर्मास्तिकायः 'तस्य' इत्यधर्मास्तिकायस्य 'देशश्च' उक्तरूपः 'तत्प्रदेशश्च' तथाविध एवाख्यातः, तथा आङिति मर्यादया—स्वस्वभावापरित्यागरूपया काशन्ते—स्वरूपेणैव प्रतिभासन्ते तस्मिन् पदार्था इत्याकाशं, यदा त्वभिविधावाङ् तदा आङिति—सर्वभावाभिव्याप्त्या काशत इत्याकाशं तदेवास्तिकाय आकाशास्तिकायस्तस्य देशस्तत्प्रदेशश्च प्राग्वत् 'आख्यातः' कथितः, तथाऽद्धा—कालस्तद्रूपः समयोऽद्धासमयो निर्विभागत्वाचास्य न देशप्रदेशसम्भवः, आवलिकादयस्तु पूर्वसमयनिरोधेनैवोत्तरसमयसद्भाव इति तत्त्वतः समुदयसमित्याद्यसम्भवेन व्यवहारार्थमेव कल्पिता इतीह नोक्ताः, उपसंहारमाह—अरूपिणः 'दशविधा' इति दशप्रकारा भवेयुः पूर्वत्रिकत्रये एकस्यास्य प्रक्षेपात्, एषां च यथाक्रमं गतिस्थित्यवगाहोपष्टम्भकत्वं वर्त्तना च लक्षणमवगन्तव्यं, तथा चाऽऽससेनः—"जीवानां पुद्गलानां च, गतिस्थित्युपकारिणौ । धर्माधर्मौ स्थितौ व्योम, त्ववगाहनलक्षणम् ॥ १ ॥ कालस्तु वर्त्तनालिङ्गः" इत्यादीति सूत्रत्रयार्थः ॥ सम्प्रत्येतानेव क्षेत्रत आह—

धम्माधम्मे य दोऽवेए, लोगमित्ता वियाहिया । लोगालोगे य आगासे, समए समयखित्तिए ॥ ७ ॥

'तेषाम्' इति विभजनीयत्वेन प्रक्रान्ताना 'भवेत्' स्याज्जीवानामजीवाना चेति सूत्रार्थ ॥ तत्र स्वल्पवक्तव्यत्वाद्-व्यतोऽजीवप्ररूपणामाह—

रूविणो चेवऽरूवी य, अजीवा दुविहा भवे । अरूवी दसहा वुत्ता, रूविणोऽवि चउव्विहा ॥ ४ ॥ धम्मत्थिकाए तद्देसे, तप्पएसे य आहिए । अधम्मे तस्स देसे य, तप्पएसे य आहिए ॥ ५ ॥ आगासे तस्स देसे य, तप्पएसे य आहिए । अद्धासमए चेव, अरूवी दसहा भवे ॥ ६ ॥

रूपस्पर्शाद्याश्रया मूर्त्तिस्तदेषामेषु वाऽस्तीति रूपिण 'च' समुच्चये 'एवे'ति पूरणे 'रूवी य'त्ति अकारप्रश्लेषात्प्राग्वद्वचनव्यत्ययाद्वाऽरूपिणश्च, नैषामुक्तरूप रूपमस्तीतिकृत्वा, अजीवा 'द्विविधा उक्तभेदतो द्विविधा 'भवे'त्ति भवेयु, तत्रापि 'अरूवि'त्ति अरूपिण 'दशधा' दशप्रकारा 'उक्ता' प्रतिपादितास्तीर्थकृदादिभिरिति शेष, पश्चान्निर्दिष्टत्वेऽपि चोक्तन्यायतोऽनन्तरत्वाद्वाऽमीषा प्रथमत उपादान, रूपिण 'अपि' पुनरर्थस्ततश्च रूपिण पुन 'चतुर्विधा' चतुष्प्रकारा उभयत्राजीवा इति प्रक्रम । तत्रारूपिणो दशविधानाह—धारयति गतिपरिणतजीवपुद्गलास्तत्स्वभाव इति धर्म अस्तयश्चेह प्रदेशास्तेषा चीयत इति काय —सङ्घातोऽस्तिकायस्ततो धर्मश्चासावस्तिकायश्च धर्मास्तिकाय —सकलदेशप्रदेशानुगतसमानपरिणतिमद्विशिष्ट द्रव्य, तस्य—धर्मास्तिकायस्य दिश्यते—प्रदेशापेक्षया समानपरिणतरूपत्वेऽपि देशापेक्षाया असमानपरिणतिमाश्रित्य विशिष्टरूपतया विवक्ष्यते—उपदिश्यत इति

धर्मश्चाधर्मश्चाकाशं च धर्माधर्माकाशानि त्रीण्यप्येतानि न विद्यते आदिरेषामित्यनादिकानि, इत्यतः कालात्प्रभृत्यमूनि प्रवृत्तानीत्यसम्भवात्, न पर्यवसितान्यपर्यवसितान्यनन्तानीतियावत्, न हि कुतश्चित्कालात्परत एतानि न भविष्यन्तीति सम्भवः, चैवौ प्राग्वत्, तथा च 'सर्वाद्धा' सर्वकालं, कालात्यन्तसंयोगे द्वितीया, 'तुः' अवधारणेऽतः सर्वदा स्वस्वरूपापरित्यागतो नित्यानीतियावद् 'व्याख्यातानि' कथितानि, सर्वत्र लिङ्गव्यत्ययः प्राग्वत्, समयोऽपि 'सन्ततिम्' अपरापरोत्पत्तिरूपप्रवाहात्मिकां 'प्राप्य' आश्रित्य 'एवमेव' अनाद्यपर्यवसितत्वलक्षणेनैव प्रकारेण 'व्याख्यातः' प्ररूपितः, पठन्ति च–'एमेव संतइं पप्प समएवि'त्ति स्पष्टम्, 'आदेशं' विशेषं प्रतिनियतव्यक्त्यात्मकं 'प्राप्य' अङ्गीकृत्य सादिकः सपर्यवसितः, 'अपिः' समुच्चये 'चः' पुनरर्थे भिन्नक्रमश्च देशं पुनः प्राप्येति योज्यः, विशेषापेक्षया ह्यभूत्वाऽयं भवति भूत्वा च न भवतीति सादिनिधन उच्यत इति सूत्रद्वयार्थः। इत्थमजीवानामरूपिणां द्रव्यक्षेत्रकालैः प्ररूपणा कृता, सम्प्रति भावप्ररूपणावसरः, तत्र चामूर्त्तत्वेन नामीषां ['ग्रन्थाग्रम्'१७०००] पर्याया रूपिपर्याया इव वर्णादयः प्ररूप्यमाणा अपि संवित्तिमानेतुं शक्याः अनुमानतस्त्वितरथाऽपि द्रव्यस्य पर्यायविकलस्यासम्भवाद्गम्यन्त एवेति तत्प्ररूपणामनादृत्य द्रव्यतो रूपिणः प्ररूपयितुमाह—

खंधा य खंधदेसा य, तप्पएसा तहेव य। परमाणुणो अ बोद्धव्वा, रूविणो अ चउव्विहा ॥ १० ॥

स्कन्दन्ति–शुष्यन्ति धीयन्ते च–पोष्यन्ते च पुद्गलानां विचटनेन चटनेन चेति स्कन्धाः 'चः' समुच्चये स्कन्धानां

'धर्माधर्मौ' धर्मास्तिकायाधर्मास्तिकायौ 'च' पूरणे द्वावप्येतौ 'लोकमात्रौ' लोकपरिमाणौ व्याख्यातौ, ननु धर्माधर्मावित्युक्ते द्वाविति गतार्थमेव द्वित्वसङ्ख्याया द्विवचनेनैवाभिधानात्, सत्य, किन्तु गतार्थानामपि दृश्यते एव लोके प्रयोग, तथा चाह जिनेन्द्रबुद्धि —"यदि गतार्थानामप्रयोग एव स्यात् पचति देवदत्त इत्यत्र पचतीत्येतद्‌गततिङैकत्वस्योक्तत्वाद् देवदत्त इति सुप एकवचनस्याप्राप्तिरेव स्यादिति, लोकमात्रत्व चानयोरेतदवष्टब्धाकाशस्यैव लोकत्वात्, अलोकव्यापित्वे त्वनयो जीवपुद्गलयोरपि तत्र प्रचारप्रसङ्गेन तस्यापि लोकत्वापत्ते, उक्त च—"धर्माधर्मविभुत्वात्सर्वत्र जीवपुद्गलविचारात्। नो लोक कश्चित्स्यात् च सम्मतमेतदार्याणाम्॥ १॥" तथा चैतौ लोक एव नालोक इत्यर्थादुक्त भवति, तथा 'लोगालोगे य आगासे'त्ति लोकेऽलोके चाऽऽकाश, सर्वगतत्वात्तस्य, 'समय' इत्यद्धासमय समयोपलक्षित क्षेत्र समयक्षेत्रम्—अर्द्धतृतीयद्वीपसमुद्रास्तद्विषयभूतमस्यास्तीति समयक्षेत्रिक, तत्परतस्तस्यासम्भवात्, समयमूलत्वादावलिकादिकल्पनाया तेऽप्येतावत्क्षेत्रवर्त्तिन एव, तथा चोक्तम्—"समयावलिकापक्षमासर्त्वयनसञ्ज्ञित्ता। नृलोक एव कालस्य, वृत्तिर्नान्यत्र कुत्रचित्॥ १॥" इति सूत्रार्थ ॥ एतानेव कालत आह—

धम्माधम्मागासा, तिन्निवि एए अणाइया। अपज्जवसिया चेव, स व्वद्ध तु वियाहिया॥ ८॥
समएवि सतइ पप्प, एवमेव वियाहिए। आएस पप्प साईए, सपज्जवसिएवि य॥ ९॥

क इहोपयोगः ?, उच्यते, उपक्रमेणोपक्रान्तस्य निक्षेपेण च यथासम्भवं निक्षिप्तस्य अनुगमेनानुगतस्य चास्यैवाध्ययनस्य विचारणा, उक्तं च—"संबंधोवक्कमतो समीवमाणीय णत्थणिक्खेवं । सत्थं तओऽणुगम्मइ णएहिं णाणाविहाणेहिं ॥ १ ॥" अस्तु नयैर्विचारणा, साऽपि प्रतिसूत्रं समस्ताध्ययनस्य वा ?, न तावत् प्रतिसूत्रं, प्रतिसूत्रं नयावतारनिषेधस्यात्रैवाभिधानात्, अथ समस्ताध्ययनस्य, तदपि न, सूत्रव्यतिरिक्तस्य तस्यासम्भवाद्, उच्यते, यदुक्तं—प्रतिसूत्रं नयावतारनिषेध इति, तदित्थमेव, यत्तु सूत्रव्यतिरिक्तस्याध्ययनस्यैवासम्भव इति, तदसत्, कथञ्चित् समुदायस्य समुदायिभ्योऽन्यत्वात्, शिविकावाहकपुरुषसमूहवत्, इतरथा प्रत्येकावस्थाविलक्षणकार्यानुदयप्रसङ्गाद्, अस्त्वेवं तथाऽपि किमस्य समस्तनयैर्विचार उत कियद्भिरेव ?, न तावत् समस्तैरिति पक्षः क्षमः, तेषामसङ्ख्यत्वेन तैर्विचारस्य कर्तुमशक्यत्वात्, तथाहि—यावन्तो वचनमार्गास्तावन्त एव नयाः, यथोक्तम्—"जावइया वयणपहा तावइया चेव होंति नयवाया । जावइया नयवाया तावइया चेव परसमया ॥ १ ॥" न च निजनिजाभिप्रायविरचितानां वचनमार्गाणां सङ्ख्याऽस्ति, प्रतिप्राणि भिन्नत्वादभिप्रायाणां, नापि कियद्भिरिति वक्तुं शक्यम्, अनवस्थाप्रसङ्गात्, सङ्ख्यातीतेषु हि तेषु यावदेभिर्विचारणा क्रियते तावदेभिरपि किं नेत्यनवस्थाप्रेरणायां न नैयत्याव-

१ संबन्धोपक्रमतः समीपमानीय न्यस्तनिक्षेपम् । शास्त्रं ततोऽनुगम्यते नयैर्नानाविधानैः ॥ १ ॥ २ यावन्तो वचनपथास्तावन्त एव भवन्ति नयवादाः । यावन्तो नयवादास्तावन्त एव परसमयाः ॥ १ ॥

देशा—भागा स्कन्धदेशा च प्राग्वत्, तेषा—स्कन्धाना प्रदेशा—निरंशा भागास्तत्प्रदेशा 'तथैव चे'ति समुच्चये परमाथ तेऽणवश्च परमाणव —निर्विभागद्रव्यरूपा 'च' समुच्चये 'बोद्धव्या' अवगन्तव्या रूपिण 'च' पुनरर्थ ततो रूपिण पुन 'चतुर्विधा' चतुष्प्रकारा ॥ इह च देशप्रदेशाना स्कन्धेष्वेवान्तर्भावात् स्कन्धा परमाणवश्चेति समासतो द्वावेव रूपिद्रव्यभेदौ, तयोश्च किं लक्षणमित्याह—'एकत्वेन' समानपरिणतिरूपेण 'पृथक्त्वेन' परमाण्वन्तरैरसङ्घातरूपेण लक्ष्यन्त इति शेष, के एवम् ? इत्याह—स्कन्ध वस्य भिन्नक्रमत्वात्परमाणवश्च, स्कन्धा हि सहतानेकपरमाणुरूपा, परमाणवश्च परमाण्वन्तरैरसहतिभाज ॥ अथवा उक्तन्यायतो द्वैविध्ये कथममी स्कन्धा परमाणवश्च जायन्ते ? इत्याह—'एगत्तेण' सूत्रार्द्धम्, एकत्वेन द्वयोश्च त्रयाणा यावदनन्तानामनन्तानन्ताना च पृथग्भूतपरमाणूनामन्योऽन्यसङ्घातो द्विप्रदेशिकत्वाद्यात्मकसमानपरिणतिरूपैकभावेन, तथा 'पृथक्त्वेन' बृहत्स्कन्धेभ्यो विचटनात्मकेन भेदेन, तथा श्वेतो धावतीतिवदावृत्तिन्यायत एकत्वेन पृथक्त्वेन च, तत्रैकत्वेन कैश्चिदणुभि सहन्यमानतयैकपरिणतिरूपेण पृथक्त्वेन च तत्समय एव केषाञ्चिदणूना विचटनाद्भेदात्मकेन 'स्कन्धा' द्विप्रदेशादय उत्पद्यन्त इति शेष, चशब्दस्य प्राग्वत्सम्बन्धात्परमाणवश्च, एकत्वेनेति तृतीया, तत एकत्वेन—असहायत्वेन लक्षित यत्पृथक्त्व—स्कन्धेभ्यो विचटनात्मक तेनोत्पद्यन्ते, एकत्वविशेषण च यत्ससहायाना द्व्यणुकादीना वास्तवं यद्यैकत्वपरिणतावपि देशादीना बुद्धिपरिकल्पित स्कन्धेभ्य पृथक्त्व न तत. परमाणव उत्पद्यन्त इत्याचष्टे, तथा चाह वाचक —"सघाताद्

भेदात् सङ्घातभेदादिति, एभ्यस्त्रिभ्यः कारणेभ्यः स्कन्धा उत्पद्यन्ते, तथा भेदादेव परमाणु''रिति (तत्त्वा० अ० ५ सू० २६–२७ भाष्यम्) ॥ एतानेव क्षेत्रत आह—

एगत्तेण पुहुत्तेणं, खंधा य परमाणु य।
लोएगदेसे लोए अ, भइअव्वा ते उ खित्तओ। एत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ ११ ॥

लोकस्य—चतुर्दशरज्ज्वात्मकस्यैकदेशः—एकद्व्यादिसङ्ख्यातासङ्ख्यातप्रदेशात्मकः प्रतिनियतो भागो लोकैकदेशस्तस्मिन् लोके च 'भक्तव्याः' भजनया दर्शनीयाः 'ते' इति स्कन्धाः परमाणवश्च 'तुः' पूरणे 'क्षेत्रमाश्रित्य, अत्र चाविशेषोक्तावपि परमाणूनामेकप्रदेश एवावस्थानात्स्कन्धविषयैव भजना द्रष्टव्या, ते हि विचित्रत्वात्परिणतेर्बहुतरप्रदेशोपचिता अपि केचिदेकप्रदेशे तिष्ठन्ति, यदुक्तम्—"एगेणवि से पुण्णे दोहिवि पुण्णे सयंपि माइज्जे[1]" त्यादि, अन्ये तु सङ्ख्येयेषु च प्रदेशेषु यावत्सकललोकेऽपि तथाविधाचित्तमहास्कन्धवद्भवेयुरिति भजनीया उच्यन्ते, 'अतः' इति क्षेत्रप्ररूपणातोऽनन्तरमिति गम्यते 'कालविभागं तु' कालभेदं पुनः 'तेषां' स्कन्धादीनां वक्ष्ये 'चतुर्विधं' साद्यनादिसपर्यवसितापर्यवसितभेदेनानन्तरमेव वक्ष्यमाणेनेति सूत्रार्थः। इदं च सूत्रं षट्पादं गाथेत्युच्यते, तथा च तल्लक्षणं—"विषमाक्षरपादं वा पादैरसमं दशधर्मवत्। तत्रेऽस्मिन् यदसिद्धं गाथेति तत्पण्डितैर्ज्ञेयम् ॥ १ ॥" इति, अत्र च दश-

[1] एकेनापि स पूर्णो द्वाभ्यामपि पूर्णः शतमपि मायात्

धर्मंवदित्यनेन, "दश धर्मं न जानन्ति, धृतराष्ट्! निबोधत ॥ मत्त प्रमत्त उन्मत्त, श्रान्तः क्रुद्धो बुभुक्षितः ॥ त्वरमाणश्च भीरुश्च, लुब्ध कामी च ते दश ॥ १ ॥" इति गृह्यत इति, ग्रन्थान्तरेषु त्वन्तपादद्वय न दृश्यत एव ॥ यथाप्रतिज्ञातमाह—

सतइ पप्प तेऽणाई, अप्पज्जवसिआवि अ । ठिइं पडुच्च साईआ, सप्पज्जवसिआवि अ ॥ १२ ॥ असख्य कालमुक्कोस, इक्क समय जहन्नय । अजीवाण य रूवीण, ठिई एसा विआहिआ ॥ १३ ॥ अणतकालमुक्कोस, इक्क समय जहण्णय । अजीवाण य रूवीण, अतरेय विआहिअ ॥ १४ ॥

'सन्ततिम्' उक्तरूपा 'प्राप्य' आश्रित्य 'ते' इति स्कन्धा परमाणवश्च 'अणाइ'त्ति अनादयोऽपर्यवसिता अपि च, न हि ते कदाचित्प्रवाहतो न भूता न वा न भविष्यन्तीति, 'स्थितिं' प्रतिनियतक्षेत्रावस्थानरूपा 'प्रतीत्य' अङ्गीकृत्य सादिका सपर्यवसिता अपि च, तदपेक्षया हि प्रथमतस्तथाऽस्थित्वैवावतिष्ठन्ते अवस्थाय च न पुनर्न तिष्ठन्तीत्यभिप्राय । सादिसपर्यवसितत्वेऽपि कियत्कालमेषामवस्थिति ? इत्याह—'असङ्ख्यकालम्' आगमप्रतीतमुत्कृष्टा, समयमेक जघन्यका, अजीवाना रूपिणा पुद्गलानामिति योऽर्थ , स्थितिरेषा व्याख्याता, जघन्यत एकसमया उत्कृष्टतस्त्वसङ्ख्येयकालम्, असङ्ख्येयकालात्परतोऽवश्यमेव विघटनात् । इत्थ कालद्वारमाश्रित्य स्थितिरुक्ता, सम्प्रत्येतदन्तर्गतमेवान्तरमाह—'अनन्तकाल' समयप्रसिद्धमुत्कृष्टमेक समय जघन्यकमजीवाना रूपिणाम् 'अतरेय'न्ति अन्तरं

विवक्षितक्षेत्रावस्थितेः प्रच्युतानां पुनस्तत्प्राप्तेर्व्यवधानमेतद्—उक्तरूपं व्याख्यातं, तेषा हि विवक्षितक्षेत्रावस्थिति-
प्रच्युतानां कदाचित्समयावलिकादिसङ्ख्यातकालतोऽसंख्यातकालाद्वा पल्योपमादेर्यावदनन्तकालादपि सम्भवतीति
सूत्रत्रयार्थः ॥ एतानेव भावतो विधातुमाह—

वन्नओ गंधओ चेव, रसओ फासओ तहा। संठाणओ य विन्नेओ, परिणामो तेसि पंचहा ॥१५॥ वन्नओ
परिणया जे उ, पंचहा ते पकित्तिया। किण्हा नीला य लोहिया, हालिद्दा सुक्किला तहा ॥ १६ ॥ गंधओ
परिणया जे य, दुविहा ते वियाहिया। सुब्भिगंधपरिणामा, दुब्भिगंधा तहेव य ॥ १७ ॥ रसओ परिणया
जे उ, पंचहा ते पकित्तिया। तित्त कडुयकसाया, अंबिला महुरा तहा ॥ १८ ॥ फासओ परिणया जे उ,
अट्ठहा ते पकित्तिया। कक्खडा मउया चेव, गुरुया लहुया तहा ॥ १९ ॥ सीया उण्हा य निद्धा य, तहा
लुक्खा य आहिया। इति फासपरिणया एए, पुग्गला समुदाहिया ॥ २० ॥ संठाणपरिणया जे उ, पंचहा
ते पकित्तिया। परिमंडला य वट्टा य, तंसा चउरंसमायया ॥ २१ ॥ वण्णओ जे भवे किण्हे, भइए से उ
गंधओ; रसओ फासओ चेव, भइए संठाणओवि य ॥ २२ ॥ वण्णओ जे भवे नीले, भइए से उ गंधओ। रसओ
रसओ फासओ चेव, भइए संठाणओवि य ॥ २३ ॥ वण्णओ लोहिए जे उ, भइए से उ गंधओ। रसओ फासओ
फासओ चेव, भइए संठाणओवि य ॥ २४ ॥ वण्णओ पीअए जे उ, भइए से उ गंधओ। रसओ फासओ

चेव, भइए संठाणओवि अ ॥ २५ ॥ वण्णओ सुक्किले जे उ, भइए से उ गंधओ । रसओ फासओ चेव, भइए संठाणओवि अ ॥ २६ ॥ गंधओ जे भवे सुब्भी, भइए से उ वण्णओ । रसओ फासओ चेव, भइए संठाणओवि अ ॥ २७ ॥ गंधओ जे भवे दुब्भी, भइए से उ वण्णओ । रसओ फासओ चेव, भइए संठाणओवि अ ॥ २८ ॥ रसओ तित्तओ जे उ, भइए से उ वण्णओ । गंधओ फासओ चेव, भइए संठाणओवि य ॥ २९ ॥ रसओ कडुए जे उ, भइए से उ वण्णओ । गंधओ फासओ चेव, भइए संठाणओवि अ ॥ ३० ॥ रसओ कसाए जे उ, भइए से उ वण्णओ । गंधओ फासओ चेव, भइए संठाणओवि अ ॥ ३१ ॥ रसओ अंबिले जे उ, भइए से उ वण्णओ । गंधओ फासओ चेव, भइए संठाणओवि अ ॥ ३२ ॥ रसओ महुरए जे उ, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए संठाणओवि य ॥ ३३ ॥ फासओ कक्खडे जे उ, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३४ ॥ फासओ मउए जे उ, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३५ ॥ फासओ गुरुए जे उ, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए संठाणओवि य ॥३६॥ फासओ लहुए जे उ, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३७ ॥ फासओ सीअए जे उ, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३८ ॥ फासओ उण्हए जे उ, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ३९ ॥ फासओ निद्धए जे उ, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए संठाण

ओवि अ ॥ ४० ॥ फासओ लुक्खए जे उ, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए संठाणओवि अ ॥ ४१ ॥ परिमंडलसंठाणे, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए फासओ वि य ॥ ४२ ॥ संठाणओ भवे वट्टे, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए फासओवि अ ॥ ४३ ॥ संठाणओ भवे तंसे, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए फासओवि अ ॥ ४४ ॥ संठाणओ य चउरंसे, भइए से उ वण्णओ । गंधओ रसओ चेव, भइए फासओवि अ ॥ ४५ ॥ जे आययसंठाणे, भइए से उ वन्नओ । गंधओ रसओ चेव, भइए फासओवि य ॥ ४६ ॥

वर्णतो गन्धतश्चैव रसतः स्पर्शतस्तथा संस्थानतश्च, अयमर्थः—वर्णादीन्पञ्चाश्रित्य 'विज्ञेयः' ज्ञातव्यः 'परिणामः' स्वरूपावस्थितानामेव वर्णाद्यन्यथाऽन्यथाभवनरूपः 'तेषाम्' इति परमाणूनां स्कन्धानां च 'पञ्चधा' पञ्चप्रकाराः, भेदहेतोर्वर्णाद्युपधेः पञ्चविधत्वादिति भावः । प्रत्येकमेषामेवोत्तरभेदानाह—'वर्णतः परिणताः' वर्णपरिणामभाज इत्यर्थः 'ये' अण्वादयः 'तुः' पूरणे पञ्चधा ते 'प्रकीर्त्तिताः' प्रकर्षेण सन्देहापनेतृत्वलक्षणेन संशब्दिताः, तानेवाह—कृष्णाः कज्जलादिवत् नीलाः नील्यादिवत् लोहिता हिङ्गुलुकादिवत् हारिद्राः हरिद्रादिवत् शुक्लाः शङ्खादिवत् 'तथे'ति समुच्चये । 'गन्धतो' इत्यादीनि स्पष्टान्येव नवरं 'सुब्भि' (गन्ध)त्ति सुरभिगन्धो यस्मिन् स तथाविधः परिणामो येषां तेऽमी सुरभिगन्धपरिणामाः श्रीखण्डादिवत्, 'दुब्भि'त्ति दुरभिगन्धो येषां ते दुरभिगन्धा लशुनादिवत्, तिक्ताश्च कोसात-

क्यादिवत् कटुकाश्च सुण्ठ्यादिवत् कपायाश्च अपककपित्थादिवत्तिक्तकटुकपाया आम्ला आम्लवेतसादिवत् मधुरा शर्करादिवत् कर्कशा पापाणादिवत् मृदव हसरूतादिवत् गुरव हीरकादिवत् लघव अर्कतूलादिवत् शीता मृणालादिवत् उष्णा वह्न्यादिवत् स्निग्धा घृतादिवत् रूक्षा भूलादिवत्, उपसहारमाह–'इती'त्यमुना प्रकारेण स्पर्शपरिणता 'एते' स्कन्धादय पूरणगलनधर्माण पुद्गला 'समुदाहृता' सम्यक्प्रतिपादितास्तीर्थकृदादिभिः। सतिष्ठन्त एभिः स्कन्धादय इति सस्थानानि तद्रूपेण परिणता परिमण्डलादय प्राग्वद्यावर्णितस्वरूपा एव ७। सम्प्रत्येपामेव परस्परसवेधमाह—वर्णत 'य' स्कन्धादिर्भवेत्कृष्ण 'भइए'त्ति भाज्य 'से उ'त्ति स पुनः 'गन्धत' गन्धमाश्रित्य सुरभिगन्धी दुर्गन्धो वा स्यात् न तु नियतगन्ध एवेति भाव, एव रसत स्पर्शतश्चैव भाज्य सस्थानतोऽपि च, अन्यतररसादियोग्य एवासौ भवेदिति हृदयम्, अत्र च गन्धौ द्वौ रसा पञ्च स्पर्शा अष्टौ सस्थानानि पञ्च, एते च मीलिता विंशतिरित्येक एव कृष्णवर्ण एतावतो भङ्गान् लभते २०, एव नीलोऽपि २०, लोहितोऽपि २०, पीतक इति–हारिद्र सोऽपि २०, 'सुकिल'त्ति शुक्लोऽप्येतावत एव भङ्गान् लभत इति २०, एव पञ्चभिरपि वर्णैर्लब्ध शतम् १००। गन्धतो य स्कन्धादिर्भवेत् 'सुब्भि'त्ति सुरभिर्भाज्य स तु वर्णतोऽन्यतरकृष्णादिवर्णवान् स्यादितिभाव, एव रसत स्पर्शतश्चैव भाज्य सस्थानतोऽपि च, इह च रसादयोऽष्टादश ते च पञ्चभिर्वर्णैर्मीलितैस्त्रयोविंशतिर्भवन्ति २३, एव च दुर्गन्धविपया अप्येतावन्त एव २३, ततश्च गन्धद्वयेन

लब्धा भङ्गानां षट्चत्वारिंशत् ४६ । १४ । रसतस्तिक्तको यस्तु स्कन्धादिर्भाज्यः स तु वर्णतो गन्धतः स्पर्शतश्चैव भाज्यः संस्थानतोऽपि च, इह चोक्तन्यायतो विंशतिर्भङ्गास्तिक्तेनावाप्यन्ते २०, एवं कटुकेन २० कषायेण २० आम्लेन २० मधुरेण २० चैतावन्त एवावाप्यन्ते, एवं च रसपञ्चकसंयोगे लब्धं शतम् १००। स्पर्शतः कर्कशो यस्तु स्कन्धादिर्भाज्यः स तु वर्णतो गन्धतो रसतश्चैव भाज्यः संस्थानतोऽपि च, इह चोक्तन्यायतो वर्णादयः सप्तदशेति तद्योगतस्तावत एव भङ्गानवाप्नोति १७। एवं मृदुः १७ गुरुः १७ लघुः १७ स्निग्धः १७ रूक्षः १७ शीत १७ उष्णश्च १७ एतावत एव भङ्गानवाप्नोति, एतन्मीलने च जातं षट्त्रिंशं शतम् १३६। १७ । परिमण्डलसंस्थाने यो वर्त्तेत इति शेषः, भाज्यः स तु सामान्यप्रक्रमेऽपि स्कन्धः, परमाणूनां संस्थानासम्भवात्, वर्णतो गन्धतो रसतश्चैव भाज्यः स्पर्शतोऽपि च, अत्र च वर्णादय उक्तनीत्या विंशतिस्ततस्तद्योगात्परिमण्डलेन विंशतिरेव भङ्गा लभ्यन्ते २०, एवं वृत्तेन २० त्र्यस्रेण २० चतुरस्रेण २० आयतेन च २० प्रत्येकमेतावन्त एव भङ्गाः प्राप्यन्त इति संस्थानपञ्चकभङ्गसंयोगे लब्धं शतम् १००, एवं वर्णरसगन्धस्पर्शसंस्थानानां सकलभङ्गसङ्कलनातो जातानि द्व्यशीत्यधिकानि चत्वारि शतानि, अङ्कतोऽपि ४८२, सर्वत्र च जातावेकवचनं । ३२ । परिस्थूरन्यायतश्चैतदुच्यते, अन्यथा प्रत्येकमप्येषां तारतम्यतोऽनन्तत्वादनन्ता एव भङ्गा संभवन्ति, इत्थं चैतत्परिणामवैचित्र्यं केवलागमप्रमाणावसेयमेवेति न स्वमतिकल्पितहेतुभिश्चित्तमाकुलीकर्त्तव्यमिति द्वात्रिंशत्सूत्रावयवार्थः ॥ सम्प्रत्युपसंहारद्वारेणोत्तरग्रन्थसम्बन्धमाह—

एसा अजीवविभत्ती, समासेण वियाहिया । इत्तो जीवविभत्तिं, वुच्छामि अणुपुव्वसो ॥ ४७ ॥

'एषा' अनन्तरोक्ताऽजीवविभक्तिर्व्याख्याताऽनन्तरं जीवविभक्तिं वक्ष्यामि 'अणुपुव्वसो'त्ति आनुपूर्व्येति सूत्रार्थः ॥ यथाप्रतिज्ञातमाह—

संसारत्था य सिद्धा य, दुविहा जीवा वियाहिया । सिद्धा णेगविहा वुत्ता, तं मे कित्तयओ सुण ॥४८॥

संसरन्त्युपलक्षणत्वादवतिष्ठन्ते च जन्तवोऽस्मिन्निति संसारो—गतिचतुष्टयात्मकस्तत्र तिष्ठन्तीति संसारस्थाः — नरकादिगतिवर्त्तिनस्ते च सिद्धाश्च प्राग्युक्तव्युत्पत्तयः, 'द्विविधा' उपदर्शितभेदतो द्विभेदा जीवा व्याख्याताः, तत्र सिद्धा 'अनेकविधा' अनेकप्रकारा उक्तास्तमिति सूत्रत्वात्तान्, पठन्ति च—'दुविहा जीवा भवन्ति तत्थाणेगविहा सिद्धा ते'त्ति, 'मे' मम कीर्त्तयतः 'सुण'त्ति शृणुत, अल्पवक्तव्यत्वाच्च पश्चान्निर्देशेऽपि प्रथमतः सिद्धभेदाभिधानप्रतिनानमदुष्टमिति सूत्रार्थः ॥ अनेकविधत्वमेवैषामुपाधिभेदत आह—

इत्थीपुरिससिद्धा य, तहेव य नपुंसगा । सलिंगे अन्नलिंगे य, गिहिलिंगे तहेव य ॥ ४९ ॥
उक्कोसोगाहणाए य, जहन्नमज्झिमाइ य । उड्ढं अहे य तिरियं च, समुद्दंमि जलंमि य ॥ ५० ॥

'इत्थीपुरिससिद्ध'त्ति सिद्धशब्दः प्रत्येकमभिसम्बध्यते ततः स्त्रियश्च ते पूर्वपर्यायापेक्षया सिद्धाश्च स्त्रीसिद्धा एवं

पुरुषसिद्धाश्च, तथैव च 'नपुंसग'त्ति, इहोत्तरत्र च प्रक्रमेण सिद्धशब्दयोगान्नपुंसकसिद्धाः स्वलिङ्गसिद्धाः स्वलिङ्गं च मुक्तिपथप्रस्थितानां भावतोऽनगारत्वादनगारलिङ्गमेव रजोहरणमुखवस्त्रिकादिरूपम्, अन्यद्—एतदपेक्षया भिन्नं तच्च तल्लिङ्गं चान्यलिङ्गं तस्मिंश्च शाक्यादिसम्बन्धिनि सिद्धाः, 'गृहिलिङ्गे' गृहस्थवेषे सिद्धा मरुदेवीस्वामिनीवत्, 'तथैवे' त्युक्तसमुच्चये चकारस्तु तीर्थातीर्थसिद्धाद्यनुक्तभेदसंसूचकः, इह च ये स्त्रीनिर्वाणं प्रति विप्रतिपद्यन्ते त एवं वाच्याः—इह खलु यस्य यत्रासम्भवो न तस्य तत्र कारणावैकल्यं, यथा सिद्धशिलायां शाल्यङ्कुरस्य, अस्ति च तथाविधस्त्रीषु मुक्तेः कारणावैकल्यं, न चायमसिद्धो हेतुर्यतोऽस्यासिद्धत्वं किं स्त्रीणां पुरुषेभ्योऽपकृष्यमाणत्वेनाहोस्विन्निर्वाणस्थानाद्यप्रसिद्धत्वेन निर्वाणसाधकप्रमाणाभावेन वा ?, तत्र यदि तावत् पुरुषेभ्योऽपकृष्यमाणत्वेन तदा तत् किं सम्यग्दर्शनादिरत्नत्रयाभावेन विशिष्टसामर्थ्यासत्त्वेन पुरुषानभिवन्द्यत्वेन स्मारणाद्यकर्तृत्वेनामहर्द्धिकत्वेन मायादिप्रकर्षवत्त्वेन वेति विकल्पाः, तत्र न तावत्सम्यग्दर्शनादिरत्नत्रयस्याभावेन यतस्तस्यासौ किमविशिष्टस्य प्रकर्षपर्यन्तप्राप्तस्य वा ?, यद्यविशिष्टस्य तदा किमियं चारित्रस्यासम्भवेनोत ज्ञानदर्शनयोस्त्रयाणां वा ?, यदि चारित्रस्यासम्भवेन तदा सोऽपि किं सचेलत्वेन स्त्रीत्वस्य चारित्रविरोधित्वेन मन्दत्वेन मन्दसत्त्वतया वा ?, यदि सचेलत्वेन तदा चेलस्यापि चारित्राभावहेतुत्वं परिभोगमात्रेण परिग्रहरूपत्वेन वा ?, यदि परिभोगमात्रेण तदा तत्परिभोगोऽपि तासां तत्परित्यागाशक्तत्वेन गुरूपदिष्टत्वेन वा ?, न तावत्तत्परित्यागाशक्तत्वेन यतः—"प्राणेभ्यो नापरं प्रियम्"

स्थापक हेतुमुत्पश्याम , अथापि स्याद्—असङ्ख्येयत्वेऽप्येषा सकलनयसङ्ग्राहिभिर्नयैर्विचार , ननु तेषामप्यनेकविधत्वात् पुनरनवस्थैव, तथाहि–पूर्वविद्भि सकलनयसङ्ग्राहीणि सप्त नयशतानि विहितानि, यत् प्रतिबद्ध सप्तशतार नयचक्राध्ययनमासीत्, तत्सङ्ग्राहिण पुनर्द्वादश विध्यादयो, यत्प्रतिपादकमिदानीमपि नयचक्रमास्ते, तत्सङ्ग्राहिणोऽपि सप्त नैगमादयो, यावत् तत्सङ्ग्रहेऽपि द्वयमेवेति सङ्ग्राहिनयानामपि तेषामनेकविधत्वात् पूर्ववदनवस्थैव, अथ सक्षिप्तरुचित्वादैदयुगीनजनानामनेकविधत्वेऽपि सङ्ग्राहिनयाना द्वयेनैव विचारो न शेषैरिति नानवस्था, ननु द्वयमपि द्रव्यपर्यायार्थशब्दव्यवहारनिश्चयज्ञानक्रियादिभेदेनानेकधैवेति तथापि स एवानवस्थालक्षणो दोष इति, अत्र प्रतिविधीयते—इहाध्ययने विनयो विचार्यते, स च मुक्तिफल , ततो यदेवास्य मुक्तिप्राप्तिनिबन्धन रूप तदेव विचारणीय, तच्च ज्ञानक्रियात्मकमेवेति ज्ञानक्रियानयाभ्यामेव विचारो न पुनरन्यैरिति । तत्र ज्ञाननय आह—ज्ञानमेव मुक्त्यवाप्तिनिबन्धन, तथा च तल्लक्षणाभिधायिनी निर्युक्तिगाथा—"णायमि गिण्हियव्वे अगिण्हियव्वमि चेव अत्थमि । जइयव्वमेव इइ जो उवएसो सो णओ नाम ॥ १ ॥" अस्याधार्थ —'ज्ञाते' बुद्धे 'गिण्हियव्वे'त्ति गृह्यते–उपादीयते कार्यार्थिभिरिति ग्रहीतव्य , कार्यसाधक इत्युक्त भवति, उक्त हि–"गेज्झो सो कज्जसाहतो होइ' तस्मिन्, अग्रहीतव्य –तद्विपरीत , स च हेय उपेक्षणीयश्च, उभयोरपि कार्यासाधकत्वात्, तस्मिश्च, 'च' समुच्चये, 'एव' इति

१ मात्रः स ( च ) कार्यसाधको भवति ।

पुरुषसिद्धाश्च, तथैव च 'नपुंसग'त्ति, इहोत्तरत्र च प्रक्रमेण सिद्धशब्दयोगान्नपुंसकसिद्धाः स्वलिङ्गसिद्धाः स्वलिङ्गं च मुक्तिपथप्रस्थितानां भावतोऽनगारत्वादनगारलिङ्गमेव रजोहरणमुखवस्त्रिकादिरूपम्, अन्यद्—एतदपेक्षया भिन्नं तच्च तल्लिङ्गं चान्यलिङ्गं तस्मिंश्च शाक्यादिसम्बन्धिनि सिद्धाः, 'गृहिलिङ्गे' गृहस्थवेषे सिद्धा मरुदेवीस्वामिनीवत्, 'तथैवे' त्युक्तसमुच्चये चकारस्तु तीर्थातीर्थसिद्धाद्यनुक्तभेदसंसूचकः, इह च ये स्त्रीनिर्वाणं प्रति विप्रतिपद्यन्ते त एवं वाच्याः—इह खलु यस्य यत्रासम्भवो न तस्य तत्र कारणावैकल्यं, यथा सिद्धशिलायां शाल्यङ्कुरस्य, अस्ति च तथाविधस्त्रीषु मुक्तेः कारणावैकल्यं, न चायमसिद्धो हेतुर्यतोऽस्यासिद्धत्वं किं स्त्रीणां पुरुषेभ्योऽपकृष्यमाणत्वेनाहोस्विन्निर्वाणस्थानाद्यप्रसिद्धत्वेन निर्वाणसाधकप्रमाणाभावेन वा ?, तत्र यदि तावत् पुरुषेभ्योऽपकृष्यमाणत्वेन तदा तत् किं सम्यग्दर्शनादिरत्नत्रयाभावेन विशिष्टसामर्थ्यासत्त्वेन पुरुषानभिवन्द्यत्वेन स्मारणाद्यकर्तृत्वेनामहर्द्धिकत्वेन मायादिप्रकर्षवत्त्वेन वेति विकल्पाः, तत्र न तावत्सम्यग्दर्शनादिरत्नत्रयस्याभावेन यतस्तस्यासौ किमविशिष्टस्य प्रकर्षपर्यन्तप्राप्तस्य वा ?, यद्यविशिष्टस्य तदा किमियं चारित्रस्यासम्भवेनोत ज्ञानदर्शनयोस्त्रयाणां वा ?, यदि चारित्रस्यासम्भवेन तदा सोऽपि किं सचेलत्वेन स्त्रीत्वस्य चारित्रविरोधित्वेन मन्दत्वेन मन्दसत्त्वतया वा ?, यदि सचेलत्वेन तदा चेलस्यापि चारित्राभावहेतुत्वं परिभोगमात्रेण परिग्रहरूपत्वेन वा ?, यदि परिभोगमात्रेण तदा तत्परिभोगोऽपि तासां तत्परित्यागाशक्तत्वेन गुरूपदिष्टत्वेन वा ?, न तावत्तत्परित्यागाशक्तत्वेन यतः—"प्राणेभ्यो नापरं प्रियम्"

अथ च तानपि त्यजन्त्य एता दृश्यन्ते, अथ गुरूपदिष्टत्वेन तथा सति गुरूणामपि चारित्रोपकारित्वेन तासा तदुपदेश अन्यथा वा ?, यदि चारित्रोपकारित्वेन किं न पुरुषाणामपि ?, अथाबला एवैता बलादपि पुरुषै परिभुज्यन्त इति तद्विना तासा चारित्रबाधासम्भवो न पुरुषाणामिति न तेषा तदुपदेश, उक्त च–"वस्त्र विना न चरण तासामित्यर्हतोच्यत । विनाऽपि पुसामिति न्यवार्यते"ति, एव सति न चेलाच्चारित्राभावस्तदुपकारित्वात्तस्य, तथाहि—यद्यस्योपकारि न तत्तस्याभावहेतु, यथा घटस्य मृत्पिण्डादि, उपकारि चोक्तनीत्या चारित्रस्य चेलम्, अथान्यथेति पक्ष, अयमपि न क्षमो, यतोऽसौ चेलस्य चारित्र प्रत्यौदासीन्येन बाधकतया वा ?, न चेदमस्मिन्नुभयमप्यस्ति, पुरुषाभिभवरक्षकत्वेन तस्य तासु तदुपकारितया अनन्तरमेवोक्तत्वात्, नापि चेलस्य परिग्रहरूपत्वेन चारित्राभावहेतुत्व, यतो मूर्छैव परिग्रह इतीहैव परीषहाध्ययने निर्णीत, यदि च चेलस्य परिग्रहरूपता तदा तथाविधरोगोपसर्गादिषु पुरुषाणामपि चेलसम्भवे चारित्राभावेन मुक्त्यभाव स्यात्, उक्त च—"अर्शोभगन्दरादिषु गृहीतचीरो यतिर्न मुच्येत । उपसर्गे वा चीरे" इत्यादि, किञ्च–चेलस्य परिग्रहरूपत्वे—"आमे तालपलबे भिन्ने अभिन्ने वा णो कप्पइ णिग्गथीण परिग्गहित्तए वा" इत्यादि निर्ग्रन्थ्या व्यपदेशश्चागमे न श्रूयेत, अतो न सचेलत्वेन चारित्रासम्भव, नापि स्त्रीत्वस्य चारित्रविरोधित्वेन यतो यदि स्त्रीत्वस्य चारित्रविरोध स्यात्तदाऽविशेषेणैव तासा प्रव्राजन निषेध्येत, न तु विशेषेण, यथोच्यते—"गब्भिणी बालवच्छा य, पव्वावेउ न कप्पइ"त्ति, नापि

मन्दसत्त्वतया, यतः सत्त्वमिह व्रततपोधारणविषयमेषितव्यम्, अन्यस्यानुपयोगित्वात्, तच्च तास्वप्यनल्पं सुदुर्धरशीलवतीषु संभवति, उक्तं च—"ब्राह्मीसुन्दर्यार्याराजीमतीचन्दनागणधराद्याः । अपि देवमनुजमहिता विख्याताः शीलसत्त्वाभ्याम् ॥ १ ॥" अतो न चारित्रासम्भवेन विशिष्टरत्नत्रयस्याभावः, इत्थं च चारित्रसम्भवे सिद्ध एव ज्ञानदर्शनसम्भवः, तत्पूर्वकत्वात्तस्य, उक्तं हि—"पूर्वद्वयलाभः पुनरुत्तरलाभे भवति सिद्धः" इति, तदभावपक्षोऽपि नाश्रयणीयः, त्रयाभावपक्षस्त्वेवं त्रितयसिद्धावनवसर एव, दृश्यन्ते च सम्प्रत्यपि त्रितयमभ्यसन्त्यस्ताः, उक्तं च—"जानीते जिनवचनं श्रद्धत्ते चरति चार्यिकाऽशबलम्" इति, अथ प्रकर्षपर्यन्तप्राप्तस्याभावः, एवं तर्हि तस्याप्यभावः किं कारणाभावेन विरोधिसम्भवेन वा ?, न तावत्कारणाभावेन, अविशिष्टरत्नत्रयाभ्यासस्यैव तन्निबन्धनत्वेनागमेऽभिधानात्, तस्य च स्त्रीष्वनन्तरमेव समर्थितत्वात्, नापि विरोधिसम्भवेन, तस्यास्मादृशामत्यन्तपरोक्षत्वेन केनचिद्विरोधानिर्णयादिति न रत्नत्रयाभावेन स्त्रीणां पुरुषेभ्योऽपकृष्यमाणत्वम्, अथ विशिष्टसामर्थ्यासत्त्वेन, इदमपि कथमिति वाच्यं ?, किं तावद् असप्तमनरकपृथ्वीगमनत्वेनाहोस्विद्वादादिलब्धिरहितत्वेनाल्पश्रुतत्वेनानुपस्थाप्यतापाराञ्चितकशून्यत्वेन वा ?, तत्र न तावदसप्तमनरकपृथ्वीगमनत्वेन, यतोऽत्र किं सप्तमनरकपृथ्वीगमनाभावो यत्रैव जन्मनि तासां मुक्तिगामित्वं तत्रैवोच्येत सामान्येन वा ?, तत्र यद्याद्यो विकल्पस्तदा पुरुषाणामपि यत्र जन्मनि मुक्तिगामिता न तत्रैव सप्तमपृथ्वीगमनमिति तेषामपि मुक्त्यभावप्रसङ्गः, अथ सामान्येन, अत्र चायमाशयो—यथा—

अथ च तानपि तजन्य एता दृश्यन्ते, अथ गुरूपदिष्टत्वेन तथा सति गुरूणामपि चारित्रोपकारित्वेन तासा तदु-
पदेश अन्यथा वा ?, यदि चारित्रोपकारित्वेन किं न पुरुषाणामपि ?, अथाचला एवैता बलादपि पुरुषै परिभु-
ज्यन्त इति तद्विना तासा चारित्रबाधासम्भवो न पुरुषाणामिति न तेषा तदुपदेश, उक्त च—"वस्त्र विना न
चरण तासामित्यर्हतोन्यत । विनाऽपि पुसामिति न्यवार्यते"ति, एव सति न चेलाच्चारित्राभावस्तदुपकारित्वात्तस्य,
तथाहि—यद्यस्योपकारि न तत्तस्याभावहेतु, यथा घटस्य मृत्पिण्डादि, उपकारि चोक्तनीत्या चारित्रस्य चेलम्,
अथान्यथेति पक्ष, अयमपि न क्षमो, यतोऽसौ चेलस्य चारित्र प्रत्यौदासीन्येन बाधकतया वा ?, न चेदमस्मिन्नु-
भयमप्यस्ति, पुरुषाभिभवरक्षकत्वेन तस्य तासु तदुपकारितया अनन्तरमेवोक्तत्वात्, नापि चेलस्य परिग्रहरूपत्वेन
चारित्राभावहेतुत्व, यतो मूर्छैव परिग्रह इतीहैव परीषहाध्ययने निर्णीत, यदि च चेलस्य परिग्रहरूपता तदा तथा
विधरोगोपसर्गादिषु पुरुषाणामपि चेलसम्भवे चारित्राभावेन मुक्त्यभाव स्यात्, उक्त च—"अर्शोभगन्दरादिषु
गृहीतचीरो यतिर्न मुच्येत । उपसर्गे वा चीरे" इत्यादि, किञ्च—चेलस्य परिग्रहरूपत्वे—"आमे तालपलवे भिन्ने
अभिन्ने वा णो कप्पइ णिग्गथीण परिग्गहित्तए वा" इत्यादि निर्ग्रन्थ्या व्यपदेशश्चागमे न श्रूयेत, अतो न सचे
लत्वेन चारित्रासम्भव, नापि स्त्रीत्वस्य चारित्रविरोधित्वेन यतो यदि स्त्रीत्वस्य चारित्रविरोध स्यात्तदाऽविशेषेणैव
तासा प्रव्राजन निषिध्येत, न तु विशेषेण, यथोच्यते—"गब्भिणी बालवच्छा य, पव्वावेउ न कप्पइ"त्ति, नापि

यतो न तन्निषेधाद्विशिष्टसामर्थ्याभावः प्रतीयते, योग्यतापेक्षो हि चित्रः शास्त्रे विशुद्ध्युपदेशः, यदुक्तम्—"संवरनिर्जररूपो बहुप्रकारस्तपोविधिः शास्त्रे। रोगचिकित्साविधिरिव कस्यापि कथञ्चिदुपकारी ॥ १ ॥" यच्च पुरुषानभिवन्द्यत्वं हेतुरुक्तः तदपि सामान्येन गुणाधिकपुरुषापेक्षं वा?, यदि सामान्येन तदाऽसिद्धतादोषः, तीर्थकरजनन्यादयो हि शक्रादिभिरपि प्रणताः किमङ्ग शेषपुरुषैः?; गुणाधिकपुरुषापेक्षं चेद्गणधरा अपि तीर्थकृद्भिर्नाभिवन्द्यत इति तेषामप्यपकृष्यमाणत्वम्, अथ तीर्थशब्दस्याद्यगणधराभिधायित्वात्तीर्थप्रणामपूर्वकत्वाच्चार्हद्देशनाया असिद्धमेव तदनभिवन्द्यत्वं गणधराणाम्, एवं तर्हि चातुर्वर्णसङ्घस्यापि तदभिधेयत्वात्तदन्तर्भावाच्च स्त्रीणामर्हद्भिरपि वन्द्यत्वे कथं पुरुषानभिवन्द्यत्वेन तासां तेभ्योऽपकृष्यमाणत्वम्?, अथ स्मारणाद्यकर्तृत्वेन, एवं सति समानेऽपि रत्नत्रये शिष्याचार्ययोराचार्यस्यैव मुक्तिः स्यान्न शिष्यस्य, स्मारणाद्यकर्तृत्वेन तस्य ततोऽपकृष्यमाणत्वात्, न चैतदागमिकं, चण्डरुद्राद्याचार्यशिष्याणामागमे निःश्रेयसश्रवणात्, अथामहर्द्धिकत्वेन स्त्रीणां पुरुषेभ्योऽपकृष्यमाणत्वं, तथा सति प्रष्टव्योऽसि—किमाध्यात्मिकीमृद्धिमाश्रित्य बाह्यां वा?, तत्र न तावदाध्यात्मिकीमुक्तन्यायतो रत्नत्रयस्य तासां समर्थितत्वात्, नापि बाह्याम्, एवं हि महत्या तीर्थकरादिलक्ष्म्या गणधरादयश्चक्रधरादिलक्ष्म्याश्चेतरक्ष(रेऽक्ष)त्रियादयो न भाजनमिति तेषामप्यमहर्द्धिकत्वेनापकृष्यमाणत्वान्मुक्तिकारणवैकल्यप्रसङ्गः, यदपि मायादिप्रकर्षवत्त्वेनेत्युच्यते, तदप्यसत्, तस्योभयोरपि तुल्यत्वेन दर्शनादागमे च श्रवणात्, श्रूयते हि चरमशरीरिणामपि

"छट्ठिं च इत्थियाओ मच्छा मणुया य सत्तमीं पुढवीं" इत्यागमवचनात्पुरुषाणामेव सप्तमनरकपृथ्वीगमनयोग्यकर्मोपार्जनसामर्थ्यं न स्त्रीणामित्यधोगतौ पुरुषतुल्यसामर्थ्याभावादूर्ध्वगतावपि तासां तदभावोऽनुमीयते ततस्तासां पुरुषेभ्योऽपकृष्यमाणतेति, तदप्ययुक्त, यतो येषामधोगतौ तुल्यसामर्थ्याभावस्तेषामूर्ध्वगतावप्यनेन भाव्यमिति न नियमोऽस्ति, तथाहि—"संमुच्छिमभुयगखगचउप्पयसप्पित्थिजलचरेहिंतो । सनरेहिंतो सत्तसु कमोववज्जति नरएसु ॥ १ ॥" इति वचनाद्भुजगचतुष्पदसर्पखगजलचरनराणामधोगतावतुल्य सामर्थ्यमूर्द्धगतौ तु "संन्नितिरिक्खेहिंतो सहस्सारतिएसु देवेसु । उप्पज्जति परेसुवि सव्वेसुवि माणुसेहिंतो ॥ १ ॥" इति वचनादेषामासहस्रारा तोपपाता तुल्यमेव सामर्थ्यम्, उक्त च—"विषमगतयोऽप्यधस्तादुपरिष्टात्तुल्यमासहस्रारम् । गच्छन्ति च तिर्यञ्चस्तदधोगत्यूनताऽहेतु ॥ ३ ॥" अतो नासप्तमनरकपृथ्वीगमनत्वेन विशिष्टसामर्थ्यासत्त्वम्, अथ वादादिलब्धिरहितत्वेन, तदप्यचारु, यतो यदि वादादिलब्धिमत्त्वेन विशिष्टसामर्थ्यं व्याप्तमुपलब्ध भवेत्ततस्तन्निवृत्तौ तस्य निवृत्ति स्यात्, न चैवम्, अनयोर्व्याप्यव्यापकभावस्य क्वचिदनिश्चयात्, अल्पश्रुतत्व तु मुक्त्यवाप्त्याऽनुमितविशिष्टसामर्थ्यैर्माषतुषादिभिरनैकान्तिकमित्यनुद्घोष्यमेव, यदप्यनुपस्थाप्यतापाराञ्चितकशून्यत्वेनेत्युच्यते, तदप्ययुक्त,

१ षष्ठीं च स्त्रियो मत्स्या मनुजाश्च सप्तमीं पृथ्वीम् । २ समूर्च्छिमभुजपरिसर्पखचरचतुष्पदसर्पस्त्रीजलचरेभ्य । समनुष्येभ्य सप्तसु क्रमादुपपद्यन्ते नरकेषु ॥ २ ॥ ३ संज्ञितिर्यग्भ्य सहस्रारान्तिकेषु देवेषु । उत्पद्यन्ते परेष्वपि सर्वेष्वपि मनुष्येभ्यः ॥ २ ॥

यत्प्रकर्षस्यासम्भवो यतो यत्प्रकृष्यमाणहानिकं तत्कचित्सम्भविहानिप्रकर्षनिष्ठमपि दृष्टं, यथा हेमनि कालिकाकिट्टादि, प्रकृष्यमाणहानयश्च रागादयः, तथैव तेषां प्राणिषु प्रतीतत्वात्, नन्वेतत्स्त्रीष्वपि समानमिति, नाप्यागमस्य, तस्य प्रस्तुतस्यापि साक्षात्स्त्रीनिर्वाणाभिधायित्वेनार्थतस्तत्कारणावैकल्यसाधकत्वात्, न च स्त्रीशब्दस्यान्यार्थत्वं परिकल्पनीयं, तद्धि लोकरूढितः आगमपरिभाषातो वा भवेत् ?, न तावल्लोकरूढितः, लोके हि यस्मिन्नर्थे यः शब्दोऽन्वयव्यतिरेकाभ्यां वाचकत्वेन दृश्यते स तस्यार्थो, यथा गवादिशब्दानां सास्नादिमदादयो, न च स्त्रीशब्दस्य स्तनादिमदाकारमर्थमन्तरेणान्यस्यान्वयव्यतिरेकाभ्यां वाच्यत्वेन प्रतीतिरस्ति, उक्तं च—"स्तनजघनादिव्यङ्ग्ये स्त्रीशब्दोऽर्थे न तं विहायैषः । दृष्टः कचिदन्यत्र त्वग्निर्माणवकवद्गौणः ॥ १ ॥" इति, नाप्यागमपरिभाषातो यतो नागमे कचित्स्त्रीशब्दस्य परिभाषितोऽर्थो यथा व्याकरणे 'वृद्धिरादैजि' (पा॰ १–१–१)ति वृद्धिशब्दस्यादैचौ, दृश्यते चागमेऽपि लोकरूढ एवार्थे स्त्रीशब्दः "इत्थीओ जंति छट्ठिं" इत्यादौ, न च तत्राप्यर्थान्तरपरिकल्पना, बाधकं विना तदनुपपत्तेः, उक्तं च—"परिभाषितो न शास्त्रे मनुजीशब्दोऽथ लौकिकोऽधिगतः । अस्ति च न तत्र बाधा स्त्रीनिर्वाणं ततो न कुतः ? ॥ १ ॥" अथ दृष्ट एवागमे पुरुषाभिलाषात्मनि वेदाख्ये भावे स्त्रीशब्दः, इदमपि कुतो निश्चितं ?, किं तावत्स्त्रीशब्द इतिशब्दश्रवणमात्रात्स्त्रीत्वस्य पल्यशतपृथक्त्वावस्थानाभिधानतो वा ?, न तावत्स्त्रीवेद इति श्रवणमात्रत इति युक्तं, यदीह स्त्री चासौ वेदश्च स्त्रीवेद इति समानाधिकरणसमासो भवेत्तदा स्त्रीशब्दस्यार्थान्तरे

नारदादीनां मायादिप्रकर्षवत्त्वम्, अतो न तासां पुरुषेभ्योऽपकृष्यमाणत्वेन कारणावैकल्यस्य हेतोरसिद्धता, यदपि निर्वाणस्थानाद्यप्रसिद्धत्वेनेत्युक्तं, तदप्यसाधकं, यतो न निर्वाणस्थानादिप्रसिद्धिः कारणावैकल्यस्य कारणं व्यापकं वा येन तन्निवृत्तौ तस्य निवृत्तिः, अथाऽस्थ यदि स्त्रीणां मुक्तिकारणावैकल्यमभविष्यत् मुक्तिरप्युदपत्स्यत, तथा च तत्स्थानादिप्रसिद्धिरपीति, नैव, तत्स्थानादिप्रसिद्धिं प्रति मुक्तेरव्यभिचारित्वाभावात्, अन्यथा हि पुरुषाणामपि येषां मुक्तिस्थानाद्यप्रसिद्धिस्तेषां तदभावप्रसङ्गः, अथैतत्साधकप्रमाणाभावेन प्रकृतहेतोरसिद्धता, तत्रापि तत्साधकप्रमाणस्य किं प्रत्यक्षस्यानुमानस्यागमस्य वा ?, तत्र यदि प्रत्यक्षस्य तदा किं स्वसम्बन्धिनः सर्वसम्बन्धिनो वा ?, स्वसम्बन्धिनोऽपि किं बाह्यं यथयोदितप्रत्युपेक्षणादिरूपं कारणावैकल्यं तद्विषयस्य यदिवाऽन्तरं यथाचारित्रादिपरिणामात्मकं तद्गोचरस्य ?, न तावदाद्यस्य, स्त्रीष्वपि यथोदितप्रत्युपेक्षणादेरक्षूणविधानस्येक्षणात्, अथ द्वितीयस्य तदा तदभावस्यार्वाग्दृशां पुरुषेष्वपि समानत्वात्तेषामपि कारणावैकल्यस्यासिद्धिप्रसङ्गः, सर्वसम्बन्धिनस्तु प्रत्यक्षस्यासर्वविदा सत्त्वेनासत्त्वेन (वा) क्वचिन्निश्चेतुमशक्यत्वात्, तदभावेन प्रकृतहेतोरसिद्धतेत्यनुद्घोष्यमेव, अथानुमानस्य, तदप्यसत्, तदभावस्य पुरुषेष्वपि समानत्वात्, न ह्यर्वाग्दृशां स्त्रीषु पुरुषेषु वा तत्त्वतस्तदव्यभिचारि लिङ्गमस्ति येनानुमानं स्यात्, अथास्त्येव पुरुषेष्वनुमानं, तथाहि–यदुत्कर्षापकर्षाभ्यां यस्यापकर्षोत्कर्षौ तस्यात्यन्तापकर्षे तदत्यन्तोत्कर्षो दृष्टः, यथाऽभ्रपटलापगमे सवितृप्रकाशः, रागाद्युत्कर्षापकर्षाभ्यामपकर्षोत्कर्षवच्च चारित्रादि, न च रागाद्यपच-

वाच्यं, यतस्तयोः सम्बन्धाभावः किं भिन्नकर्मोदयरूपत्वेन पुरुषवत्स्त्रिया अपि स्त्रियां प्रवृत्तिदर्शनेन वा ?, न ताव-द्भिन्नकर्मोदयरूपत्वेन, भिन्नकर्मोदयरूपाणामपि पञ्चेन्द्रियजात्यादीनां देवगत्यादीनां च सदा सम्बन्धदर्शनात्, नापि पुरुषवत्स्त्रिया अपि स्त्रियां प्रवृत्तिदर्शनेन, इयं हि पुरुषाप्राप्तौ स्ववेदोदयादपि संभवत्येव, उक्तञ्च—"सा स्वक-वेदात्तिर्यग्वदलाभे मत्तकामिन्याः" इति, अथ स्त्रीत्वस्य पल्यशतपृथक्त्वावस्थानाभिधानादेवमुच्यते, इदमपि न सुन्दरं, तत्र स्त्रीत्वानुबन्धस्य विवक्षितत्वात्, संभवति हि स्त्र्याकारविच्छिदेऽपि तत्कारणकर्मोदयाविच्छेदः, तदविच्छेदाच्च पुंस्त्वाद्यव्यवधानेन पुनः स्त्रीशरीरग्रहणमिति, किञ्च—"मणुयगईए चउदस गुणठाणाणि होंति" तथा 'पंचिंदिएसु गुणठाणाणि हुंति चउदस' तथा 'चउदस तसेसु गुणठाणाणि हुंति' तथा 'भवसिद्धिगा व सव्वठ्ठाणेसु होंति " इत्यादि स्त्रीशब्दरहितमपि प्रवचनं स्त्रीनिर्वाणे प्रमाणमस्ति, स्त्रीणामपि पुंवन्मनुष्यगत्यादिधर्मयोगात्, अथ सामान्यविषयत्वान्नेदं स्त्रीविशेषे प्रमाणम्, एवं सति पुरुषाणामपि विशेषरूपताऽस्ति न वा ?, न तावन्नास्ति, मनुष्यगतिविशेषरूपत्वात्तेषाम्, अथास्ति विशेषरूपता, तथा सति तेष्वपि कथमेतत्प्रमाणं ?, यथा च तेषु प्रमाणं तथा किं न स्त्रीष्वपीति ?, अथ पुरुषेष्वेव तदर्थवदिति स्त्रीषु तस्याप्रवृत्तिः, एवं सति किं न विपर्ययकल्पनापि ?, न चैवमपर्याप्तकमनुष्यादीनां देवनारकतिरश्चां च निर्वाणप्रसङ्गः, तेषामेतद्वाक्याविषयत्वात्, एतदविषयत्वं चाप-वादविषयत्वात्, उक्तं हि—"अपवादविषयं परिहृत्य उत्सर्गः प्रवर्त्तते" इति, अपवादश्च—"मिच्छादिट्ठी अपज्ज-

वृत्तिर्भवेत्, तत्सद्भावश्च बाधकाभावेन वा कल्प्येत समासान्तराभावेन वा ?, न तावद् बाधकाभावेन, तत्र हि स्त्रीशब्दस्य पुरुषाभिलाषात्मको भाव एवार्थो भवेत्, तथा च स्त्रीनिर्वाणसूत्रे–किं स एव साक्षादर्थस्तदुपलक्षितं वा शरीरं ?, यदि स एव तदा किं तदैव तद्भावो विवक्ष्यते भूतपूर्वगत्या वा ?, तत्र यदि तदैव तदा निर्वाणावस्थायामपि वेदसम्भवो, न चैतदागमिकम्, अथ भूतपूर्वगत्या तदा देवादीनामपि निर्वाणप्राप्ति, तथा च "[१]सुरणारएसु चत्तारि होंति" इत्याद्यागमविरोध, तेष्वपि भूतपूर्वगत्या चतुर्दशगुणस्थानसम्भवात्, अथ तदुपलक्षित [वा] पुरुषशरीरं तदाऽसौ तदुपलक्षण तत्र नियतवृत्तिरनियतवृत्तिर्वा ?, यदि नियतवृत्तिस्तदाऽऽगमविरोध, परिवर्त्तमानतयैव पुरुषशरीरे वेदोदयस्य तत्राभिधानात्, न चानुभयोऽप्येवमस्ति, अथानियतवृत्ति कथमसौ तदुपलक्षणम् ?, अथैवरूपमपि गृहादिषु काकाद्युपलक्षणमीक्ष्यत इत्यत्रापि तथोच्यते, एव सति स्त्रीशरीरेऽपि कदाचित्पुरुषवेदस्योदयसम्भवात् स्त्रीणामपि निर्वाणापत्ति, यथा हि पुरुषाणा भावत स्त्रीत्वमेव स्त्रीणामपि भावत. पुरुषत्वसम्भवोऽस्ति, भाव एव च मुख्य मुक्तिकारण, तथा च यद्यपकृष्टेनापि स्त्रीत्वेन पुरुषाणा निर्वाणमेवमुत्कृष्टेन भावपुरुषत्वेन स्त्रीणामपि किं न निर्वाणम् ? इति, न च समासान्तरासम्भवेन स्त्रीवेद इत्यत्र समानाधिकरणसमासकल्पन, स्त्रिया वेद स्त्रीवेद इति षष्ठीसमासस्यापि सम्भवात्, न चास्य स्त्रीशरीरपुरुषाभिलाषात्मकवेदयो सम्बन्धाभावेनायुक्तत्वमिति

१ सुरनारकेषु चत्वारि भवन्ति ( गुणस्थानानि )

पूरणे, कस्मिन् पुनर्ग्राह्येऽग्राह्ये वेत्याह–'अत्थंमि'त्ति अर्थ्यत इत्यर्थः तस्मिन्–द्रव्ये गुणे वा, यत आह—"अंत्थो दवं गुणो वावि" 'यतितव्य'मिति यत्नः कार्यः, किमुक्तं भवति ?–ग्राह्यः ग्रहीतव्यः इतरश्च परिहर्तव्यः, 'एवः' अवधारणे, स च व्यवहितसम्बन्धः, ततोऽयमर्थः–ज्ञात एव ग्रहीतव्येऽग्रहीतव्ये वाऽर्थे यतितव्यम्, अन्यथा प्रवर्तमानस्य फलविसंवाददर्शनात्, तथा चान्यैरप्युच्यते–"सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धि"रिति, अज्ञानस्यैव च बहुदोषत्वदर्शनात्, यतो बालैरप्युद्घुष्यते—"अज्ञानं खलु कष्टं क्रोधादिभ्योऽपि सर्वपापेभ्यः। अर्थं हितमहितं वा न वेत्ति येनाऽऽवृतो लोकः ॥ १ ॥" आगमोऽप्येवमेवावस्थितः, यतस्तत्र कर्मनिर्जरणाधीना मुक्तिरुक्ता, कर्मनिर्जरणे च ज्ञानमेवाऽऽत्यन्तिको हेतुः, तद्विरहितानां तामलिप्रभृतीनां कष्टानुष्ठायिनामपि अल्पफलत्वाभिधानात्, उक्तं हि–"[2]जं अन्नाणी कम्मं खवेइ बहुयाहिं वासकोडीहिं। तं नाणी तिहिँ गुत्तो खवेइ ऊसासमेत्तेणं ॥ १ ॥" यदपि दर्शनसत्तायां चारित्ररहितस्यापि' [3]सिज्झंति चरणरहिया दंसणरहिया न सिज्झंति' इत्यागमेन मुक्तिप्रतिपादनं, तदपि ज्ञानप्राधान्यख्यापनपरं, दर्शनरहितस्य हि द्वादशाङ्गमप्यज्ञानमेवेति न तत्र कष्टक्रियासम्भवेऽपि मुक्तिः, दर्शनोत्पत्तौ तु क्रियां विनाऽपि मरुदेव्यादीनामिव सम्यग्ज्ञानमात्रादेव मुक्त्यवाप्तिरित्यर्थप्रतिपादकत्वादस्य, अत एव बहुश्रुतपूजाध्ययने

१ अर्थो द्रव्यं गुणो वाऽपि। २ यदज्ञानी कर्म क्षपयति बहुकाभिर्वर्षकोटिभिः। तज्ज्ञानी त्रिभिर्गुप्तः क्षपयत्युच्छ्वासमात्रेण ॥ १ ॥
३ सिध्यन्ति चरणरहिता दर्शनरहिता न सिध्यन्ति।

त्तगे' तथा 'सुरनारएसु होंति चत्तारि तिरिएसु जाण पचेव" इत्यादिरागमः, आह च—"मनुजगतौ सन्ति गुणाश्चतुर्दशेत्याद्यपि प्रमाण स्यात्। पुवत्स्त्रीणा सिद्धौ नापर्याप्तादिचद्बाधा ॥ १ ॥" इति कृतं विस्तरेण। सम्प्रति सिद्धानेवावगाहनात क्षेत्रतश्चाह—उत्कृष्टा—सर्वमहती चासौ अवगाहन्तेऽस्या जन्तव इत्यवगाहना च—शरीरमुत्कृष्टावगाहना पञ्चधनुःशतप्रमाणा तस्या सिद्धा 'च' समुच्चये 'जहन्न मज्झिमाइ य'त्ति अवगाहनायामिति प्रक्रमात्प्रत्येक योज्यते तत 'जघन्यावगाहनाया' द्विहस्तमानशरीररूपायां सिद्धा 'मध्यमावगाहनाया च' उक्तरूपोरुत्कृष्टजघन्यावगाहनान्तरालवर्त्तिन्या सिद्धा 'ऊर्द्ध'मित्यूर्द्धलोके मेरुचूलिकादौ सिद्धा, सभवति हि तत्रापि केषाञ्चित्सिद्धप्रतिमावन्दनाद्यर्थमुपगताना चारणश्रमणादीना मुक्त्यवाप्ति, 'अधश्च' अधोलोकेऽर्थादधोलौकिकग्रामरूपेऽपि सिद्धा, 'तिरिय च'त्ति 'तिर्यग्लोके च' अर्द्धतृतीयद्वीपसमुद्ररूपे तत्रापि केचित् 'समुद्रे' जलधौ सिद्धा 'जले च' नद्यादिसम्बन्धिनि सिद्धा, भूभूधराद्यशेषास्पदोपलक्षणमेतत्, अर्द्धतृतीयद्वीपसमुद्रेषु हि न क्वचिन्मुक्त्यवाप्तिनिषेध इति सूत्रार्थ ॥ इत्थ स्त्रीसिद्धादीनभिदधता स्त्रीत्वादिषु सिद्धिसम्भव उक्त, सम्प्रति तत्रापि क्व कियन्त॰ सिद्ध्यन्ति ? इत्याशङ्क्याह—

दस य नपुसएसु, वीस इत्थियासु य । पुरिसेसु य अट्ठसयं, समएणेगेण सिज्झई ॥ ५२ ॥ चत्तारि य गिहिलिंगे, अन्नलिंगे दसेव य। सलिंगेण य अट्ठसय, समएणेगेण सिज्झई ॥ ५३ ॥ उक्कोसोगाहणाए उ,

सिज्झंते जुगवं दुवे । चत्तारि जहन्नाए, जवमज्झठुत्तरं सयं ॥ ५४ ॥ चउरुड्ढलोए य दुवे समुद्दे, तओ जले
वीसमहे तहेव । सयं च अठुत्तर तिरियलोए, समएणेगेण उ सिज्झई धुवं ॥ ५५ ॥

'दश' दशसङ्ख्याश्चशब्द उत्तरापेक्षया समुच्चये 'नपुंसकेषु' वर्द्धितचिप्पितादिषु विंशतिः 'इत्थीयासु य'त्ति स्त्रीषु च
पुरुषेषु चाष्टभिरधिकं शतमष्टशतं 'समयेन' अविभागकालरूपेण 'एकेन' एकसङ्ख्येन, प्रकृत्यादित्वात्तृतीया, 'सि-
द्धति' निष्ठितार्थं भवति, चत्वारो गृहिलिङ्गेऽन्यलिङ्गे दशैव च, स्वलिङ्गेन चाष्टशतं समयेनैकेन सिध्यति । 'उत्कृ-
ष्टावगाहनायां तु' उक्तरूपायां सिध्यतः 'युगपत्' एककालं 'द्वौ' द्विसङ्ख्यौ 'चत्वारः' चतुःसङ्ख्याः 'जहन्नाए'त्ति
जघन्यावगाहनायां 'जवमज्झ'त्ति यवमध्यमिव यवमध्या—मध्यमावगाहना तस्याम् 'अष्टोत्तरं शतम्' अष्टोत्तरश-
तसङ्ख्याः, यवमध्यत्वं चैषां मध्यमावगाहनायामुत्कृष्टजघन्यावगाहनयोर्मध्यवर्त्तित्वात्, तदपेक्षया च बहुतरसङ्ख्या-
त्वेन स्थूलतयैव भासमानत्वादिति भावनीयमिति । चत्वार ऊर्द्धलोके च द्वौ समुद्रे त्रयो जले विंशतिः 'अधः'
इत्यधोलोके 'तथैव' तेनैव प्रकारेण शतं च 'अष्टोत्तरम्' अष्टाधिकं तिर्यग्लोके समयेनैकेन तु सिद्ध्यति, तुशब्दश्च-
शब्दश्च क्वचित्पूरणे क्वचिच्च पुनरर्थे व्याख्येयः । एतत्सूत्रस्थाने चान्ये सूत्रद्वयमित्थं पठन्ति—"चउरो उड्ढलोगंमि,
दुवे समुद्दे सिज्झंती, सेसजलेसु ततो
वीसपहुत्तं अहे भवे । सयं अट्ठोत्तरं तिरिए, एगसमएण सिज्झई ॥ १ ॥
जणा । एसा उ सिज्झणा भणिया, पुव्वभावं पडुच्च उ ॥२॥" एतच्च व्याख्यातप्रायमेवेति सूत्रचतुष्टयार्थः ॥ इत्थं

पूर्वभावप्रज्ञापनीयनयापेक्षयाऽनेकधा सिद्धानभिधाय सम्प्रति प्रत्युत्पन्नभावप्रज्ञापनीयनयापेक्षया तेषामेव प्रतिघातादिप्रतिपादनायाह—

कहिँ पडिहया सिद्धा ?, कहिँ सिद्धा पइट्ठिया ?। कहिँ बुंदिं चइत्ता णं, कत्थ गतूण सिज्झई ? ॥ ५५ ॥

अलोए पडिहया सिद्धा, लोयग्गे य पइट्ठिया । इह बुंदिं चइत्ता णं, तत्थ गतूण सिज्झई ॥ ५६ ॥

'क्वे'ति कस्मिन् 'प्रतिहता' स्खलिता, कोऽर्थः ?—निरुद्धगतयः, सिद्धाः, तथा 'क्व' कस्मिन् सिद्धाः 'प्रतिष्ठिताः' साद्यपर्यवसितं कालं स्थिताः, अन्यच्च—क्व 'बुन्दिं' शरीरं त्यक्त्वा कुत्र गत्वा 'सिज्झइ'त्ति वचनव्यत्ययात् 'सिद्ध्यन्ति' निष्ठितार्था भवन्ति । एतत्प्रतिवचनमाह—'अलोके' केवलाकाशलक्षणे 'प्रतिहताः' स्खलितास्तत्र धर्मास्तिकायस्याभावेन तेषां गतेरसम्भवात्, उक्तं च—"ततोऽप्यूर्द्ध्वं गतिस्तेषां, कस्मान्नास्तीति चेन्मतिः । धर्मास्तिकायस्याभावात्, स हि हेतुर्गतेः परः ॥ १ ॥" तथा 'लोकाग्रे च' लोकस्योपरि विभागे 'प्रतिष्ठिताः' सदाऽवस्थिताः, आह—ऊर्द्ध्वंगमनाभावेऽप्यधस्तिर्यग्वा गमनसम्भवेन कथं तेषां तत्र प्रतिस्थानम् ?, उच्यते, क्षीणकर्मत्वात्तेषां, कर्माधीनत्वाच्चाधस्तिर्यग्गमनयोः, तदुक्तम्—"अधस्तिर्यगथोर्द्ध्वं च, जीवानां कर्मजा गतिः । ऊर्द्ध्वमेव तु तद्धर्म्याद्, भवति क्षीणकर्मणाम् ॥ १ ॥" 'इहे' त्यनन्तरप्ररूपिते तिर्यग्लोकादौ 'बुन्दिं' शरीरं त्यक्त्वा 'तत्र' इति लोकाग्रे गत्वा 'सिज्झइ'त्ति सिध्यति, गत्वेति च मुखं व्यादाय स्वपितीत्यादिवत्क्त्वाप्रत्ययः, पूर्वापरकालविभागस्येहासम्भवात्, यत्रैव हि

समये भवक्षयस्तस्मिन्नेव मोक्षस्तत्र गतिश्चेति, आह च भगवान् वाचकः—"द्रव्यस्य कर्मणो यद्वदुत्पत्त्यारम्भवीतयः। समं तथैव सिद्धस्य, गतिमोक्षभवक्षयाः ॥ १ ॥" इति सूत्रद्वयार्थः ॥ लोकाग्रे गत्वा सिध्यन्तीत्युक्तं, लोकाग्रं चेषत्प्राग्भाराया उपरीति यावति प्रदेशेऽसौ यत्संस्थाना यत्प्रमाणा यद्वर्णा च तदभिधानायाह—

बारसहिं जोयणेहिं, सव्वट्ठस्सुवरिं भवे। ईसीपब्भारनामा उ, पुढवी छत्तसंठिया ॥ ५७ ॥ पणयाल सयसहस्सा, जोअणाणं तु आयया। तावइयं चेव विच्छिन्ना, तिगुणो साहिय (तस्सेव) परिरओ ॥ ५८ ॥ अट्ठजोयणबाहल्ला, सा मज्झंमि वियाहिया। परिहायंती चरिमंते, मच्छीपत्ताउ तणुययरी ॥ ५९ ॥

[ अज्जुणसुवन्नगमई, सा पुढवी निम्मला सहावेणं। उत्ताणयछत्तयसंठिया य भणिया जिणवरेहिं ]
संखंककुंदसंकासा, पंडुरा निम्मला सुभा ॥

द्वादशभिर्योजनैः प्रकृत्यादित्वात्तृतीया 'सर्वार्थस्य' सर्वार्थनाम्नो विमानस्य 'उपरि' ऊर्ध्वं 'भवेत्' स्यात् ईषत्प्राग्भारेति नाम यस्याः सा ईषत्प्राग्भारनामा, 'अनो बहुव्रीहे' (पा० ४-१-१२) रिति निषेधान्नान्तत्वेऽपि डाप् न भवति, ईषदादिनामोपलक्षणं चैतत्, अनेकनामधेयाभिधेयत्वात्तस्याः, उक्तं हि—"ईसीति वा ईसीपब्भारा इ वा तणुइ वा तणुतणुतीति वा सिद्धीति वा सिद्धालएति वा मुत्ती ति वा मुत्तालएति वा लोयग्गेइ वा लोयग्गथूभियाइ वा लोयप-

रिवुज्झणाति वा सघपाणभूयजीवसत्तसुहावहाति वे"त्यादि, 'पृथ्वी' भूमिश्छत्रम्–आतपत्र तत्संस्थितमिव संस्थित– सस्थानमस्या इति छत्रसस्थिता, इह च विशेपानभिधानेऽप्युत्तानमेवेद गृह्यते, आह यतो भगवान् भद्रबाहु –"उत्ताणयछत्तयसठियाउ भणियाउ जिणवरेहिंति" । पञ्चचत्वारिंशच्छतसहस्रान् योजनाना 'तुः' पूरणे 'आयता' दीर्घा 'तावइय चेव'त्ति तावतश्चैव प्रक्रमाच्छतसहस्रान् 'विस्तीर्णा' विस्तरतोऽपि, पञ्चचत्वारिंशच्छतसहस्रप्रमाणेति भाव त्रिगुण 'तस्सेव'त्ति आयवत् 'तस्माद्' उक्तरूपादायामात् 'परिरय' परिधिः, इह च त्रिगुण इत्यभिधानेऽपि विशेपाधिक्य द्रष्टव्य "सव वट्ट तिगुण सविसेस'मिति वचनात्, अन्यथा हि पञ्चत्रिंशल्लक्षाधिकयोजनकोटिरेवैतत्परिमाण स्यात्, तथा च सूत्रा तरविरोधो, यतस्तत्रोक्तम्–"एगा जोयणकोडी वायालीस भवे सयसहस्स । तीसं चेव सहस्सा दो चेव सया अउणपन्ना ॥ १ ॥" इति, पठन्ति च–'तिउणसाहियपडिरयं'ति । अष्टौ–अष्टसङ्ख्यानि योजनानि बाहल्य–स्थौल्यमस्या इत्यष्टयोजनबाहल्या 'से' ईषत्प्राग्भारा, किं सर्वत्राप्येवम्? इत्याह–'मज्झे' मध्यप्रदेशे व्याख्याता, किमित्येवम्? अत आह–परि–समन्ताद्धीयमाना परिहीयमाना 'चरमते'त्ति 'चरमान्तेपु' सकलदिग्भागवर्त्तिपु पर्यन्तप्रदेशेपु मक्षिकाया पत्र—पक्षो मक्षिकापत्रम्, अपिशब्दस्य गम्यमानत्वात्तस्मादपि तनुतरी अतिपरिकृशेतियावत्, हानिश्चात्र विशेपानभिधानेऽपि प्रतियोजनमङ्गुलपृथक्त्व द्रष्टव्या, तथा चान्यत्राचि–

१ एका योजनाना कोटी द्वाचत्वारिंशत् भवेयुः शतसहस्राणि । त्रिंशदेव सहस्राणि द्वे एव शते एकोनपञ्चाशत् ॥ १ ॥

"गंतूण जोयणं तु परिहायइ अंगुलपुहुत्तं"ति । अत्र च केचित्पठन्ति—"अज्जुणसुवन्नगमई सा पुढवी निम्मला सहावेणं । उत्ताणगछत्तगसंठिया य भणिया जिणवरेहिं ॥ १ ॥" तत्र चार्जुनं—शुक्लं तच्च तत्सुवर्णकं चार्जुनसुवर्णकं तेन निर्वृत्ताऽर्जुनसुवर्णकमयी 'सा' इतीषत्प्राग्भारा 'निर्मला' स्वच्छा, किमुपाधिवशतः ? इत्याह—'स्वभावेन' स्वरूपेण उत्तानकम्—ऊर्द्धमुखं यच्छत्रमेव छत्रकं तत्संस्थिता च 'भणिता' उक्ता जिनवरैः, प्राक् सामान्यतश्छत्रसंस्थितेत्युक्तमिह तूत्तानत्वं तद्विशेष उच्यत इति न पौनरुक्त्यम् । शङ्खाङ्ककुन्दानि—प्रतीतानि तत्सङ्काशा—वर्णतस्तादृशी अत एव 'पंडुरे'ति 'पाण्डुरा' श्वेता 'निर्मला' निष्कलङ्का 'शुभा' अत्यन्तकल्याणावहा 'सुखा वा' सुखहेतुत्वेनेति सार्द्धसूत्रत्रयार्थः ॥ यदीदृशी सा पृथ्वी ततः किमित्याह—

सीआए जोअणे तत्तो, लोयंतो उ वियाहिओ ॥ ६० ॥

'सीतायाः' सीताभिधानायाः पृथिव्या उपरीति शेषः, योजने 'ततः' इति तस्या उक्तरूपायाः 'लोकान्तः' लोकपर्यन्तः 'तुः' पूरणे व्याख्यात इति सूत्रार्द्धार्थः ॥ ननु यदि योजने लोकान्तस्तत्किं तत्र सर्वत्र सिद्धास्तिष्ठन्त्युतान्यथा ? इत्याह—

१ गत्वा योजनं तु परिहीयतेऽङ्गुलपृथक्त्वं

जोअणस्स उ जो तत्थ, कोसो उवरिमो भवे। तस्स कोसस्स छब्भाए, सिद्धाणोगाहणा भवे ॥ ६१ ॥

योजनस्य 'तु' वाक्यालङ्कारोपन्यासे य 'तत्रे' त्येव व्यवस्थिते सुब्व्यत्ययेन वा 'तत्थ'त्ति 'तस्य' इषत्प्राग्भारोपरिवर्त्तिन पठन्ति च–'तस्स'त्ति, 'क्रोश' गव्यूतम् 'उवरिम'त्ति उपरिवर्त्ती भवेत् 'तस्ये'ति प्रक्रान्तस्य क्रोशस्य 'षड्भागे' सत्रिभागत्रयस्त्रिंशदधिकधनु शतत्रितयरूपे सिद्धानाम् 'अवगाहना' अवस्थितिर्भवेदिति सूत्रार्थ ॥ अवगाहना च ततश्चलनसम्भवेऽपि परमाण्वादीनामिवैकादिप्रदेशेषु भवेदत आह–तत्थ सूत्रम्। केचिदनन्तरसूत्रोत्तरार्द्धमधीयते–'कोसस्सवि य जो तत्थ, छब्भागो उवरिमो भवे'त्ति स्पष्ट। तत्र च किम्? इत्याह—

तत्थ सिद्धा महाभागा, लोगग्गमि पइट्ठिया। भवप्पवचउम्मुक्का, सिर्द्धि वरगइ गया ॥ ६२ ॥

'तत्रे' त्यनन्तरमुपदर्शितरूपे 'सिद्धा' उक्तरूपा 'महाभागा' अतिशयाचिन्त्यशक्तयो लोकाग्रे 'प्रतिष्ठिता' सदावस्थिता, एतच्च कुत? इत्याह–भवा–नरकादयस्तेषा प्रपञ्चो–विस्तरस्तेनोन्मुक्ता –त्यक्ता सन्त 'सिर्द्धि' सिद्धिनाम्नीं वरा चेतरगत्यपेक्षया गतिश्च गम्यमानतया वरगतिस्ता गता –प्राप्ता, अयमाशय –भवप्रपञ्च एव–चलने हेतुः स च सिद्धाना नास्तीति कुतस्तेषा तत्सम्भव? इति सूत्रार्थं ॥ तत्र गतीनां कस्य कियत्यवगाहना? इत्याह—

उस्सेहो जस्स जो होइ, भवमि चरममि उ। तिभागहीणा तत्तो य, सिद्धाणोगाहणा भवे ॥ ६३ ॥

'उत्सेध' उच्छ्रय प्रक्रमाच्छरीरस्य 'जस्स'त्ति 'येषा सिद्धाना 'य.' इति यत्परिमाणो भवति 'भवे' जन्मनि 'चरमे'

पर्यन्तवर्त्तिनि 'तु' विशेषणे इदमपि प्राग्भावप्रज्ञापनीयनयापेक्षयेति विशेषयति, 'त्रिभागहीना'त्रिभागोना 'ततश्चे'ति ततः पुनश्चरमभवोत्सेधात्सिद्धानां यत्तदोर्नित्याभिसम्बन्धात्तेषामवगाहन्तेऽस्यामिति अवगाहना-स्वप्रदेशसन्निचितिः, निश्चयाभिप्रायेण सर्वस्य स्वनिष्ठत्वात्, इयं च शरीरविवरापूरणत एतावतीत्यवगन्तव्यम्, उक्तं हि-"देहंतिभागो झुसिरं तत्पूरणतो तिभागहीण"त्ति, इति सूत्रार्थः ॥ एतानेव कालतः प्ररूपयितुमाह—

एगत्तेण साइया, अपज्जवसियावि य । पुहुत्तेण अणाइया, अपज्जवसियावि य ॥ ६४ ॥

'एकत्वेन' असहायत्वेन निवक्षिताः सादिका अपर्यवसिता अपि च, यत्र हि काले ते सिध्यन्ति स तेषामादिरस्ति न तु कदाचिन्मुक्तेर्भ्रंसन्तीति न पर्यवसानसम्भवः 'पृथक्त्वेन' महत्त्वेन बहुत्वेन सामस्त्यापेक्षयेतियावत्, किमित्याह-अनादिका अपर्यवसिता अपि च, न हि कदाचित्ते नाभूवन् न भविष्यन्ति चेति सूत्रार्थः ॥ सम्प्रत्येषामेवोपाधिनिरपेक्षं स्वरूपमाह—

अरूविणो जीवघणा, नाणदंसणसन्निया । अउलं सुहसंपत्ता, उवमा जस्स नत्थि उ ॥ ३५ ॥

रूपिणः-उक्तन्यायेन रूपरसगन्धस्पर्शवन्तः तद्विपरीता अरूपिणस्तेषां रूपाद्यभावात्, उक्तं ह्यागमे-"से ण किण्हे ण नीले"इत्यादि, जीवाश्च ते सततोपयुक्ततया घनाश्च-शुषिरपूरणतो निरन्तरनिचितप्रदेशतया जीवघना गमक-

१ देहत्रिभागः शुषिरं तत्पूरणात् त्रिभागहीनेति

त्वाद्विशेषणस्य परनिपात ज्ञानदर्शने उक्तरूपे ते एव सञ्ज्ञा—सम्यग्बोधरूपा सञ्जातैपामिति तारकादेराकृतिगणत्वादितरि नानदर्शनसञ्ज्ञिता —ज्ञानदर्शनोपयोगवन्तो न विद्यते तुलेव तुला—इयत्ता परिच्छेदहेतुरस्येति अतुलम्, अपरिमितत्वात्, उक्त हि—"सिद्धस्स सुहो रासी सव्वद्धापिंडितो जइ हवेज्जा । सोऽणंतवग्गभइतो सव्वागासे न माइज्जा ॥ १ ॥" इति, सुख—शर्म समित्येकीभावेन दु खलेशाकलङ्कितत्वलक्षणेन प्राप्ता, सुखमेव पुनर्विशिनष्टि—उपमा यस्य 'नास्ति तु' न विद्यत एव, यदुक्तम्—"लोके तत्सदृशो ह्यर्थ, कृत्स्नेऽप्यन्यो न विद्यते । उपमीयेत तद्येन, तस्मान्निरुपम स्मृतम् ॥ १ ॥" न च विषयाभावतस्तत्र सुखशब्दाभिधेयाभाव एवेत्याशङ्कनीय, चतुरर्थत्वात्तस्य, उक्त हि—लोके चतुर्ष्विहार्थेषु, सुखशब्दः प्रयुज्यते । विषये वेदनाऽभावे, विपाके मोक्ष एव च ॥ १ ॥ सुखो वह्निः सुखो वायुर्विषयेष्विह कथ्यते । दु खाभावे च पुरुष, सुखितोऽस्मीति मन्यते ॥२॥ पुण्यकर्मविपाकाच, सुखमिष्टेन्द्रियार्थजम् । कर्मक्लेशविमोक्षाच, मोक्षे सुखमनुत्तमम् ॥ ३ ॥" ततश्च मोक्षस्यैव तत्र सुखशब्दाभिधेयत्वादसम्भव एवाशङ्काया, इह च जीवघना इत्यनेन सौगताभिमतमभावरूपत्व मुक्ते उत्तरविशेषणद्वयेन च 'सुखदु खबुद्धीच्छाद्वेषप्रयत्नधर्माधर्मसस्कारा नवात्मगुणास्तेपामत्यन्तोच्छित्तिर्निः श्रेयस'मिति वचनादचेतनत्वासुखित्वे च सिद्धस्य नैयायिकाद्यभिमते निराकुरुते, अभावरूपत्वे हि मुक्तेरर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनोऽन्त्यक्षणस्य क्षणान्तराजनना-

१ सिद्धस्य सुखराशिः सर्वाद्धापिण्डितो यदि भवेत् । सोऽनन्तवर्गभक्त सर्वाकाशे न मायात् ॥ १ ॥

दवस्तुत्वं, तदवस्तुत्वे चावस्तुनो जन्यत्वायोगात्तत्पूर्वस्यापि क्षणस्य एवं पूर्वपूर्वक्षणानामपि सौगतस्याभावरूपतैव प्राप्तेति पूर्वसन्तानमिच्छतो मुक्तेरपि भावरूपता बलादायाति, तथा सर्वथाऽऽत्मगुणोच्छित्तिरूपतायां निःश्रेयसस्यात्मनोऽप्यभावप्रसक्तिः, सर्वथा गुणाभावे हि गुणिनोऽप्यभाव एव, अशेषरूपाद्यभाव इव घटादेरिति सूक्ष्मधिया भावनीयमिति सूत्रार्थः ॥ उक्तग्रन्थेनावगतमपि विप्रतिपत्तिनिराकरणार्थं पुनः क्षेत्रं स्वरूपं च तेषामाह—

लोएगदेसे ते सव्वे, नाणदंसणसन्निया । संसारपारनिच्छिन्ना, सिद्धिं वरगइं गया ॥ ६७ ॥

लोकैकदेशे पाठान्तरतो लोकाग्रदेशे वोक्तरूपे 'ते' इति सिद्धाः, अनेन 'मुक्ताः सर्वत्र तिष्ठन्ति, व्योमवत्तापवर्जिताः' इत्यपास्तं भवति, सर्वगतत्वे ह्यात्मनामेतद्भवेत्, तथात्वे च सर्वत्र सर्वदा वेदनादिप्रसङ्गः, तथा 'सर्वे' निरवशेषा ज्ञानदर्शनसञ्ज्ञिताः संसारस्य पारः—पर्यन्तस्तं निस्तीर्णाः—पुनरागमनाभावलक्षणेनाधिक्येनातिक्रान्ताः सिद्धिं वरगतिं गताः इति प्राग्वत्, इह चाद्येन विशेषणेन मा भूत्केषाञ्चिज्ज्ञानसञ्ज्ञा परेषां दर्शनसञ्ज्ञैव केवला, किन्तूभे अपि सर्वेषामिति, द्वितीयेन—"ज्ञानिनो धर्मतीर्थस्य, कर्त्तारः परमं पदम् । गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥ १ ॥" इति मते तेषामनिष्ठितार्थदोषप्रसङ्गेन पुनरावृत्तिरिति, तृतीयेन तु क्षीणकर्मत्वेन स्ववशत्वादिविशेषणवत्त्वेऽप्येषा स्ववशस्यानभिसन्धिः कृतकृतत्यस्य च यथास्वभावेनास्योपयोग इष्टः, 'तथागतिः स्यात्स्वभावेने'ति वचनादुत्पत्तिसमये सक्रियत्वमप्यस्तीति ख्याप्यते, इदं च सूत्रं यत्र दृश्यते तत्रेत्थं नेयं, प्रत्यन्तरेषु च न

यद्दुतस्यैव तथा तथा पूज्यताभिधान, तथा च प्रयोग –यद् येन विना न भवति तत् तन्निवन्धनमेव, यथा बीजाद्यविनाभावी तन्निन्धन एवाङ्कुर ,ज्ञानाविनाभाविनी च मुक्त्यवाप्ति , 'इती'त्येव य 'उपदेश ' सर्वस्य ज्ञाननिवन्धनत्वाभिधानरूप , स किमित्याह–'नय' इति प्रस्तावात् ज्ञाननय , नामेति वाक्यालङ्कारे, उक्त हि–'ईति जो'त्ति एवमिह जो उवएसो जाणणाणतो सो त्ति । अय च ज्ञानदर्शनचारित्रतपउपचारात्मनि पञ्चविधे विनये ज्ञानदर्शनविनयावेवेच्छति, चारित्रतपउपचारविनयास्तु तत्कार्यत्वात् तदायत्तत्वाच्च गुणभूतानेवेति गाथार्थ ॥ क्रियानयस्त्वाह—"सव्वेसिंपि नयाण बहुविहवत्तव्वय निसामेत्ता । त सव्वणयविसुद्ध ज चरणगुणट्ठिओ साहू ॥ १ ॥" 'सर्वेषामपी'ति नैगमादिनयोत्तरोत्तरभेदानामविशुद्धाना विशुद्धाना च, किं पुनर्मूलनयाना विशुद्धानामेवेत्यपिशब्दार्थ , 'नयानाम्' उक्तरूपाणा बहवो विधा –प्रकारा यस्या सा बहुविधा ता, 'वक्तव्यता' सामान्यमेव विशेषा एव उभयनिरपेक्ष चो(वो)भय, यदिवा द्रव्य पर्याया प्रकृति पुरुषो विज्ञान शून्यमित्यादिस्वस्वाभिप्रायानुरूपार्थप्रतिपादनपरा निशम्य–आकर्ण्य, किमित्याह–'तदि'ति वक्ष्यमाण सर्व निरवशेषास्ते च ते नयाश्च सर्वनयास्तेषा, विशुद्ध–निर्दोषतया सम्मत, यत् किमित्याह–चर्यत इति चरण–चारित्र, गुण साधनमुपकारकमित्यनर्थान्तर, ततश्चरण चासौ गुणश्च निर्वाणास्य तोपकारितया चरणगुणस्तस्मिन् स्थित –तदासेवितया निविष्ट , 'साधु'रिति साधयति पौरुषेयीभि क्रियाभिरपवर्गमित्यन्वर्थनामतयोच्य-

१ इति य इति–एवमिह य उपदेशो ज्ञानाय स ।

माह—'तेषाम्' इति पृथिव्यादीनां 'भेदान्' विकल्पान् 'शृणुत' आकर्णयत 'मे' मम कथयत इति शेष इति सूत्रार्थः ॥ 'यथोद्देशं निर्देश' इतिन्यायतः पृथिवीभेदानाह—

दुविहा पुढविजीवा उ, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेव दुहा पुणो ॥ ७० ॥ बायरा जे उ पज्जत्ता, दुविहा ते वियाहिया । सण्हा खरा य बोद्धव्वा, सण्हा सत्तविहा तहिं ॥ ७१ ॥ किण्हा नीला य रुहिरा य, हालिद्दा सुक्किला तहा । पंडुपणगमट्टिया, खरा छत्तीसईविहा ॥ ७२ ॥ पुढवी य सक्करा वालुया य उवले सिला य लोणूसे । अयतउयतंबसीसगरुप्पसुवन्ने य वइरे य ॥ ७३ ॥ हरियाले हिंगुलुए मणोसिलासासगंजणपवाले । अब्भपडलऽब्भवालुय बायरकाए मणिविहाणा ॥ ७४ ॥ गोमिज्जए य रुयगे अंके फलिहे य लोहियक्खे य । मरगयमसारगल्ले भुयमोयग इंदनीले य ॥ ७५ ॥ चंदणगेरुयहंसगब्भ पुलए सोगंधिए य बोद्धव्वे । चंदप्पभवेरुलिए जलकंते सूरकंते य ॥ ७६ ॥

'द्विविधाः' द्विभेदाः पृथिवीजीवाः 'तुः' प्राग्वत् 'सूक्ष्माः' सूक्ष्मनामकर्मोदयाद् 'बादराः' बादरनामकर्मोदयात्, तथा 'पज्जत्तमपज्जत्त'त्ति तत्र 'पर्याप्ताः' आहारशरीरेन्द्रियोच्छ्वासवाङ्मनोऽभिनिर्वृत्तिहेतुस्तथाविधदलिकं पर्याप्तिः, यत उक्तम्—"आहारसरीरिंदियउस्सासवओमणोऽभिणिव्वत्ती । होइ जओ दलियाओ करणं पइ सा उ प-

१ आहारशरीरेन्द्रियोच्छ्वासवचोमनोऽभिनिर्वृत्तिः । भवति यतो दलिकात् करणं प्रति सैव पर्याप्तिः ॥ १ ॥

इयत एवेति सूत्रार्थः ॥ इत्थ यदुक्त "ससारत्था य सिद्धा य, दुविहा जीवा वियाहिय"त्ति तत्र सिद्धा उक्ता, साम्प्रत ससारिण आह—

ससारत्था उ जे जीवा, दुविहा ते वियाहिया । तसा य थावरा चेव, थावरा तिविहा तहिं ॥ ६८ ॥

ससारस्था इति प्राग्वत्तुशब्द सिद्धेभ्य सङ्ख्याकृतविशेषद्योतको ये जीवा द्विविधास्ते व्याख्याता, द्वैविध्यमेवाह–त्रसाश्च स्थावराश्चैव, स्थावरा 'त्रिविधा' त्रिप्रकारा 'तस्मिन्' इति द्वैविध्ये सति, अल्पवक्तव्यत्वाच्च पश्चान्निर्देशेऽपि प्रथमत स्थावराभिधानमिति सूत्रार्थ ॥ तत्त्रैविध्यमेवाह—

पुढवी आउजीवा य, तहेव य वणस्सई । इच्चेए थावरा तिविहा, तेसिं भेए सुणेह मे ॥ ६९ ॥

'पुढवीआउजीवा य'त्ति जीवशब्द प्रत्येकमभिसवध्यते तत पृथिव्येव जीवा पृथिवीजीवा आपो–जल ता एव जीवा अब्जीवाश्च, तथैव च 'वणस्सइ'त्ति प्रक्रमाद्वनस्पतिजीवा, ननु पृथिव्यादीनि जीवशरीराणि न त्वेतान्येव जीवा, काठिन्यादिलक्षणानि ह्यमूनि जीवा पुनरुपयोगलक्षणास्तत्कथ पृथिव्यादीन्येव जीवा इत्युक्तम्?, उच्यते, जीवशरीरयोरन्योऽन्यानुगतत्वेन विभागाभावादेवमुक्त, न चैतदनार्ष, यत उक्तम्–"अन्नोऽन्नाणुगयाण इम च त च[1]त्ति विभयणमजुत्त" इत्यादि 'इति' इत्युक्तप्रकारेण 'एते' पृथिव्यादय स्थावरास्त्रिविधा । उत्तरग्रन्थसम्बन्धनार्थ-

१ अन्योऽन्यानुगतयोरिद च तच्चेति विभजनमयुक्त

च–समुद्रलवणादि ऊपश्च–क्षारमृत्तिका लवणोषौ अयस्ताम्रत्रपुकसीसकरूप्यसुवर्णानि च प्रतीतानि, नवरमेषा सम्बन्धिनो धातव एवैवमुक्ताः, सदा तेषु तत्सत्तादर्शनार्थं चैवमभिधानं, तेषु ह्यमूनि प्रागपि सन्त्येव, केवलं मलविगमादाविर्भवन्ति, 'वज्रश्च' हीरकः। हरितालो हिङ्गुलको मनःशिलेति च प्रतीता एव, 'सासगंजणपवाले'त्ति, सासकश्च–धातुविशेषोऽञ्जनं–समीरकं प्रवालकं च–विद्रुमः सासकाञ्जनप्रवालानि, 'अब्भपडलऽब्भवालुय'त्ति अभ्रपटलं–प्रसिद्धम् अभ्रवालुका–अभ्रपटलमिश्रा वालुका 'वादरकाये' इति वादरपृथ्वीकायेऽमी भेदा इति शेषः 'मणिविहाणे'त्ति चस्य गम्यमानत्वात् 'मणिविधानानि च' मणिभेदाः। कानि पुनस्तानि? इत्याह—गोमेज्जकश्च रुचकोऽङ्कः स्फटिकश्च लोहिताक्षश्च 'मरगय'त्ति मरकतो मसारगल्लः 'भुयमोयग'त्ति भुजमोचक इन्द्रनीलश्च ६। चंदणगेरुयहंसगब्भ'त्ति चन्दनो गेरुगो हंसगर्भः पुलकः सौगन्धिकश्च बोद्धव्यः 'चंदप्पह'त्ति चन्द्रप्रभो वैडूर्यो जलकान्तः सूरकान्तश्च। इह च पृथिव्यादयश्चतुर्दश हरितालादयोऽष्टौ गोमेज्जकादयश्च क्वचित्कस्यचित्कथञ्चिदन्तर्भावाच्चतुर्दशेत्यमी मीलिताः षट्त्रिंशद् भवन्तीति सूत्रसप्तकार्थः॥ सम्प्रति प्रकृतोपसंहारपूर्वकं सूक्ष्मपृथिवीकायप्ररूपणामाह—

एए खरपुढवीए, भेया छत्तीसमाहिया। एगविहमनाणत्ता, सुहुमा तत्थ वियाहिया॥ ७७॥

एते खरपृथिव्यास्तदविभागाच्च तत्स्थजीवानां भेदाः षट्त्रिंशदाख्याताः, 'एगविहमणाणत्त'त्ति आर्षत्वादेकविधाः,

ज्जत्ती॥ १॥" साऽस्त्येषामित्यर्शआदेराकृतिगणत्वादचि पर्याप्तास्तद्विपरीताश्चापर्याप्ता , 'एव' इत्यनेन पर्याप्तापर्याप्तभेदेन 'एते' सूक्ष्मा बादराश्च, पठन्ति च–'एगमेगे'त्ति एकैके द्विविधाः पुन प्रत्येकमिति भाव । पुनरेषामेवोत्तरभेदानेवाह–'बायरा जे'त्ति बादरा ये पुनः पर्याप्ता द्विविधास्ते व्याख्याता , कथम् ? इत्याह–'श्लक्ष्णा' इह चूर्णितलोष्टकल्पा मृदु पृथिवी तदात्मका जीवा अप्युपचारत श्लक्ष्णा एवमुत्तरत्रापि, 'खराः' कठिना 'च' समुच्चये 'बोद्धव्या' अवगन्तव्या , श्लक्ष्णा सप्तविधा 'तस्मिन्' इत्युक्तरूपभेदद्वये । यथा चामी सप्तविधास्तथाऽऽह–कृष्णा नीलाश्च 'रुधिराश्च' इति लोहिता रक्ता इतियावत् 'हारिद्रा' पीता शुक्ला 'तथे'ति समुच्चये 'पण्डु'त्ति पाण्डव –आपाण्डु – आ–ईषच्छुभ्रत्वभाज इतियावत्, इत्थं वर्णभेदेन षड्विधत्वम्, इह च पाण्डुरग्रहणं कृष्णादिवर्णानामपि स्वस्थानभेदेन भेदाद्भेदान्तरसम्भवसूचक, पनक –अत्यन्तसूक्ष्मरजोरूप स एव मृत्तिका पनकमृत्तिका, पनकस्य च नभसि विवर्त्तमानस्य लोके पृथिवीत्वेनारूढत्वात्पूर्वभेदसङ्ग्रहेऽपि भेदेनोपादान, तत एव च मृत्तिकेति पृथ्वीपर्यायाभिधानमपि, अन्ये त्वाहु –पनकमृत्तिका मरुषु पर्पटिकेति रूढा, यस्याश्चरणाभिघाते झगित्युज्जृम्भण, खरपृथिवीभेददर्शनोपक्रममाह–'खरा' प्रक्रमाद्बादरपृथिवीजीवा 'षट्त्रिंशद्विधा' षट्त्रिंशद्भेदा. । तानेवाह–'पृथिवी'ति भामा सत्यभामावच्छुद्धपृथिवी शर्करादिरूपा या न भवति, चशब्द उत्तरभेदापेक्षया समुच्चये, 'शर्करा' लघूपलसकलरूपा, 'वालुका च' प्रतीता, 'उपल.' गण्डशैलादिः, 'शिला च' दृषत् 'लोणूसे अयतंबतउयसीसयरूप्पसुवण्णे य'त्ति लवण

चैतत्तथाऽऽह—द्वाविंशतिसहस्राणि वर्षाणाम् 'उक्कोसिय'त्ति उत्कृष्टा भवेत्, काऽसौ ? इत्याह—आयुः—जीवितं तस्य स्थितिः—अवस्थानमायुःस्थितिः 'पृथिवीना'मिति पृथिवीजीवानामन्तर्मुहूर्त्तं जघन्यिका, असङ्ख्यकालमुत्कृष्टा अन्तर्मुहूर्त्तं जघन्यिका, काऽसौ?—काय इति—पृथिवीकायस्तस्मिन् स्थितिः—ततोऽनुद्वर्त्तनेनावस्थानं कायस्थितिः 'पृथिवीनां' पृथ्वीजीवानां 'तम्' इति पृथ्वीरूपं 'कायं' निकायं 'तुः' अवधारणे भिन्नक्रमश्च ततः 'अमुंचतो'त्ति 'अमुञ्चतामेव' अत्यजताम्, इत्थं द्विविधाया अपि स्थितेर्नैयत्यदर्शनेन सादिसपर्यवसितत्वमेषां, सामर्थ्यकालस्य प्रक्रान्तत्वादन्तरकालमाह—अनंतकालमुत्कृष्टमन्तर्मुहूर्त्तं जघन्यकं 'विजढंमि'त्ति त्यक्ते 'सके' स्वकीये 'काये' निकाये पृथ्वीजीवानामन्तरं, किमुक्तं भवति ?—यत्पृथिवीकायादुद्वर्त्तनं या च पुनस्तत्रैवोत्पत्तिरनयोर्व्यवधानमिति सूत्रचतुष्टयार्थः ॥ एतानेव भावत आह—

एएसिं वन्नओ चेव, गंधओ रसफासओ। संठाणादेसओ वावि, विहाणाइं सहस्ससो ॥ ८३ ॥

नवरं वर्णादीनां भावरूपत्वात्तेषां च सङ्ख्याभेदेनाभिधीयमानत्वादस्य भावाभिधायिता, उपलक्षणं चेह सहस्र इति, वर्णादितारतम्यस्य बहुतरभेदत्वेनासङ्ख्यभेदताया अपि सम्भवादिति सूत्रार्थः ॥ इत्थं पृथ्वीजीवानभिधायाब्जीवानाह—

दुविहा आउजीवा उ, सुहुमा बायरा तहा। पज्जत्तमपज्जत्ता, एवमेव दुहा पुणो ॥ ८४ ॥ बायरा जे उ पज्जत्ता, पंचहा ते पकित्तिया। सुद्धोदए य उस्से, हरयणु महिया हिमे ॥ ८५ ॥ एगविहमनाणत्ता, सुहुमा

किमित्येवविधा ?–यतोऽविद्यमान नानात्व–नानाभावो भेदो येपा तेऽमी अनानात्वा सूक्ष्मा 'तत्रे'ति तेषु सूक्ष्मबादरपृथिवीजीवेषु मध्ये व्याख्याता इति सूत्रार्थं ॥ एतानेव क्षेत्रत आह—

सुहुमा य सव्वलोगम्मि, लोगदेसे य बायरा ।

सूक्ष्मा 'सर्वलोके' चतुर्दशरज्ज्वात्मके तत्र सर्वदा तेपा भावात्, लोकस्य देशो–विभागो लोकदेशस्तस्मिन् 'च' पुनरर्थे बादरास्तेपा क्वचित्कदाचिदसत्त्वेन सकलव्याप्त्यसम्भवात् ॥ अधुनैतत्कालतोऽभिधित्सु प्रस्तावनामाह—

एत्तो कालविभाग तु, तेसिं वुच्छ चउव्विह ॥ ७८ ॥

प्राग्वदिति सूत्रार्थ ॥ यथाप्रतिज्ञातमाह—

सतइ पप्पऽणाईया, अपज्जवसिया वि य । ठिइ पडुच्च साईया, सपज्जवसियावि य ॥ ७९ ॥ बावीससहस्साइ, वासाणुक्कोसिया भवे । आउठिई पुढवीण, अतोमुहुत्त जहन्निया ॥ ८० ॥ असखकालमुक्कोसा, अंतोमुहुत्त जहन्नय । कायठिई पुढवीण, त काय तु अमुचओ ॥ ८१ ॥ अणतकालमुक्कोस, अतोमुहुत्त जहन्नय । विजढम्मि सए काए, पुढविजीवाण अतर ॥ ८२ ॥

'स तर्तिं' प्रवाह प्राप्यानादिका अपर्यवसिता अपि च, तेपा प्रवाहत कदाचिदप्यभावासम्भवात् 'स्थितिं' भवस्थितिरूपा 'प्रतीत्य' आश्रित्य सादिका सपर्यवसिता अपि च, द्विविधाया अपि तस्या नियतकालत्वात् । यथा

त्तिया । आलुए मूलए चेव, सिंगवेरे तहेव य ॥ ९६ ॥ हिरिली सिरिली सिस्सिरीली, जावई केयकंदली । पलंडुलसणकंदे य, कंदली य कुहव्वये ॥९७॥ लोहिणीहूयथीहू य, तुहगा य तहेव य । कण्हे य वज्जकंदे य, कंदे सूरणए तहा ॥९८॥ अस्सकन्नी य बोद्धव्वा, सीहकन्नी तहेव य । मुसुंढी य हलिद्दा य, णेगहा एवमायओ ॥ ९९ ॥ एगविहमणाणत्ता० ॥ १०० ॥ संतइं पप्पऽणाईआ० ॥ १०१ ॥ दस चेव सहस्साइं, वासाणुक्कोसिया भवे । वणस्सईण आउं तु, अंतोमुहुत्तं जहन्नयं ॥ १०२ ॥ अणंतकालमुक्कोसा, अंतोमुहुत्तं जहन्नयं । कायठिई पणगाणं, तं कायं तु अमुंचओ ॥ १०३ ॥ अणंतकालमुक्कोसा, अंतोमुहुत्तं जहन्नयं । विजढंमि सए काए, पणगजीवाण अंतरं ॥ १०४ ॥ एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ वावि, विहाणाइं सहस्ससो ॥ १०५ ॥

सूत्राणि चतुर्दश, प्रायो व्याख्यातान्येव, नवरं साधारणम्–अनन्तजीवानामपि समानमेकं शरीरं येषां तेऽमी साधारणशरीराः, उपलक्षणं चैतदाहारानपानग्रहणयोरपि तेषां साधारणत्वात्, उक्तं हि–"साहारणमाहारो साहारणमाणपाणगहणं च । साहारणजीवाणं साहरणलक्खणं एयं ॥ १ ॥" 'पत्तेगा य'त्ति 'प्रत्येकशरीराश्च' एकमेकं प्रति प्रत्येकम्–एकैकशो विभिन्नं शरीरमेषामिति प्रत्येकशरीराः, तेषा हि यदेकस्य शरीरं न तदन्यस्येति, यदुक्तम्—

तत्थ वियाहिया । सुहुमा सव्वलोगम्मि, लोगदेसे य बायरा ॥ ८६ ॥ संतइं पप्पणाईया, अपज्जवसियावि य । ठिइं पडुच्च साईया, सपज्जवसियावि य ॥ ८७ ॥ सत्तेव सहस्साइं, वासाणुक्कोसिया भवे । आउठिई आऊण, अंतोमुहुत्तं जहन्नयं ॥ ८८ ॥ असंखकालमुक्कोसा, अंतोमुहुत्तं जहन्नयं । कायठिई आऊण, तं कायं तु अमुंचओ ॥ ८९ ॥ अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढंमि सए काए, आउजीवाण अंतरं ॥ ९० ॥ एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ वावि, विहाणाइं सहस्सओ ॥ ९१ ॥

सूत्राष्टकं व्याख्यातप्रायमेव नवरं 'सुद्धोदक' मेघमुक्तं समुद्रादिसम्बन्धि च जलम् 'ओसे'त्ति अवश्यायं शरदादिषु प्राभातिकसूक्ष्मवर्षः 'हरतनु' प्रातः सस्निग्धपृथिव्युद्भवस्तृणाग्रजलबिन्दुः 'महिका' गर्भमासेषु गर्भसूक्ष्मवर्षा 'हिमं' प्रतीतमेव, सप्तैव सहस्राणि वर्षाणामुत्कृष्टिका भवेत्, काऽसौ ?–आयुःस्थितिः 'अपाम्' इत्यब्जीवानामिति सूत्राष्टकार्थः ॥ उक्ता अब्जीवाः, सम्प्रति वनस्पतिजीवानाह—

दुविहा वणस्सईजीवा, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेव दुहा पुणो ॥ ९२ ॥ बायरा जे उ पज्जत्ता, दुविहा ते वियाहिया । साहारणसरीरा य, पत्तेगा य तहेव य ॥ ९३ ॥ पत्तेयसरीरा उ, णेगहा ते पकित्तिया । रुक्खा गुच्छा य गुम्मा य, लया वल्ली तणा तहा ॥ ९४ ॥ वलय पव्वया कुहणा, जलरुहा ओसही तिणा । हरियकाया उ बोद्धव्वा, पत्तेया इति आहिया ॥ ९५ ॥ साहारणसरीरा उ, णेगहा ते पकि-

इत्येवंप्रकारा येषामिदं साधारणशरीरलक्षणमस्ति, तद्यथा—"[1]चक्कागं भज्जमाणस्स, गंठी चुण्णघणो भवे। पुढवीसरिसेण भेएण, अणंतजीवं वियाणाहि ॥ १ ॥ गूढच्छिरागं पत्तं सच्छीरं जं च होइ निच्छीरं। जंपि य पणट्ठसंधिं, अणंतजीवं वियाणाहि ॥ २ ॥" इत्यादि। पनका—उल्लिजीवाः, इह च तदुपलक्षिताः सामान्येन वनस्पतयो गृह्यन्ते, तथा चान्ये पठन्ति—'वणप्फईण आउं तु'त्ति, प्रत्येकशरीरापेक्षया चोत्कृष्टं दशवर्षसहस्रमानमायुरुक्तं, साधारणाना जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तायुष्कमानं, उक्तं च—"[2]निओयस्स णं भंते! केवइयं कालं ठिइपन्नत्ता ?, गोयमा! जहन्नेणं अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं" कायस्थितिः पनकानाम्, इहापि सामान्येन वनस्पतिजीवानाम्, अत एवासौ सामान्येन वनस्पतिजीवान्निगोदान् वाऽपेक्ष्योत्कृष्टतोऽनन्तकालमुच्यते, विशेषापेक्षायां हि प्रत्येकवनस्पतीनां तथा निगोदानां वादराणां सूक्ष्माणां चासङ्ख्येयकालोऽवस्थितिः, यदुक्तम्—"[3]पत्तेयसरीरबादरवणप्फईकाइयाणं भंते! केवइयं कालं कायठिई पन्नत्ता ?, जहन्नेणं अंतोमुहुत्तं उक्कोसेण सत्तरि सागरोवमकोडाकोडीओ

१ समभागं भज्यमानस्य ग्रन्थिश्चूर्णघनो भवेत्। पृथ्वीसदृशेन भेदेनानन्तकायं विजानीहि ॥ १ ॥ गूढशिराकं पत्रं सक्षीरं यच्च भवति निक्षीरम्। यदपि प्रणष्टसन्धिकं० ॥२॥ २ निगोदस्य भदन्त! कियत्कालं स्थितिः प्रज्ञप्ता ?, गौतम! जघन्येनान्तर्मुहूर्त्तमुत्कृष्टतोऽपि अन्तर्मुहूर्त्तम् ३ प्रत्येकशरीरबादरवनस्पतिकायिकानां भदन्त! कियन्तं कालं स्थितिः प्रज्ञप्ता ? जघन्येनान्तर्मुहूर्त्तमुत्कर्षेण सप्ततिः सागरोपमकोटीकोट्यः।

ते, अस्यायमाशयः—बहुविधायामपि वक्तव्यतायां क्रियात एव फलप्राप्तिः, तथाहि—तृष्यर्थी जलादिकमवलोकयन्नपि न यावत् पानादिक्रियायां प्रवृत्तस्तावत्तृप्तिलक्षणफलमवाप्नोति, अत एव सम्यग्ज्ञानमपि तदुपयोगितयैव विचार्यते, तथा च तद्विचारप्रवृत्तेरुक्तम्—"न ह्याभ्यामर्थं परिच्छिद्य प्रवर्तमानोऽर्थक्रियायां विसंवाद्यत" इति, आगमोऽप्येवमेवावस्थितः, यतस्तत्रापि क्रियाविकलं विफलमेव ज्ञानम्, उक्तं हि—"जहा खरो चंदणभारवाही, भारस्स भागी न हु चंदणस्स । एवं खु नाणी चरणेण हीणो, नाणस्स भागी न हु सुग्गईए ॥१॥" यदि च ज्ञानमेव मुक्तिसाधनं ज्ञानाविनाभाव्यनुत्तरदर्शनसम्पत्समन्वितानां दशार्हसिंहादीनामपि स्यात्, अथ चाधोगतिगामिन एवैते श्रूयन्ते, यत आह—"दसारसीहस्स य सेणियस्स, पेढालपुत्तस्स य सच्चइस्स । अणुत्तरा दंसणसंपया तया, विणा चरित्तेणऽहरं गइं गया ॥ १ ॥" किञ्च—यदि ज्ञानमेव मुक्तिकारणमिष्यते, तदा यदुच्यते—'विहरति मुहूर्तकालं, देशोनां पूर्वकोटिं च' इत्येतदपि विरुध्येत, ज्ञानेषु निखिलवस्तुविस्तरपरिच्छेदकरूपतां बिभ्रत् केवलज्ञानमेवोत्तममिति तत्समनन्तरमेव मुक्त्यवाप्तौ कथं विहरणसम्भवः ?, अतः सत्यपि ज्ञाने शैलेश्यवस्थाऽवाप्तौ सर्वसंवररूपक्रियाऽनन्तरमेव मुक्त्यवाप्तिरिति क्रियाया एव मुक्तिकारणत्वं, प्रयोगश्चात्र—यद् यत्समनन्तरभावि तत् तत्कारणं, यथा पृथिव्यादिसामग्र्य-

१ यथा खरश्चन्दनभारवाही भारस्य भागी नैव चन्दनस्य । एवमेव ज्ञानी चरणेन हीनो ज्ञानस्य भागी नैव सद्गतेः ॥ १ ॥ २ दशार्हसिंहस्य च श्रेणिकस्य पेढालपुत्रस्य च सत्यकिनः । अनुत्तरा दर्शनसंपद् तदा विना चारित्रेणाधमां गतिं गताः ॥ १ ॥

णिओए ण भंते! णिओदेत्ति कालओ केचिर होइ ?, जहण्णेणं अंतोमुहुत्तं उक्कोसेणं अणंतकालं अणंताओ ओसप्पिणीओ खेत्तओ अड्ढाइज्जा पोग्गलपरियट्टा वा । बायरनिओयपुच्छा, जहण्णेण अंतोमुहुत्तं उक्कोसेण सत्तरिसागरोवमकोडाकोडीओ । सुहुमनिगोयपुच्छा, जहण्णेण अंतोमुहुत्तं उक्कोसेण असंखेज्ज काल"ति । तथाऽसङ्ख्यकालमुत्कृष्ट वनस्पतिजीवानामन्तर, तत उद्धृत्य हि पृथिव्यादिषूत्पत्तव्य, तेषु चासङ्ख्येयकालैव कायस्थितिरिहापि तथाऽभिधानादिति चतुर्दशसूत्रार्थ ॥ प्रकृतमुपसहरन्नुत्तरग्रन्थ च सम्बन्धयितुमिदमाह—

इच्चेए थावरा तिविहा, समासेण वियाहिया। इत्तो उ तसे तिविहे, वुच्छामि अणुपुव्वसो ॥१०६॥

'इति' इत्येवप्रकारा• 'एते' पृथिव्यादय स्थानशीला स्थावरा 'त्रिविधा' त्रिप्रकारा, त्रयाणामप्यमीषा स्वसमयस्थितिस्वभावत्वात्, 'समासेन' सङ्क्षेपेण व्याख्याता, विस्तरतो ह्यमीषा बहुतरा भेदा । 'अतः' स्थावरविभक्तेरनन्तर 'तु' पुनरर्थे त्रसान्त्रिविधान् वक्ष्यामि 'अणुपुव्वसो'त्ति आनुपूर्व्येति सूत्रार्थ ॥

तेऊ वाऊ य बोद्धव्वा, ओराला य तसा तहा। इच्चेए तसा तिविहा, तेसिं भेए सुणेह मे ॥ १०७ ॥

---

१ निगोदो भदन्त ! निगोद इति कालत कियच्चिर भवति ?, जघन्येनान्तर्मुहूर्तमुत्कर्षेणानन्त काल अनन्ता अवसर्पिण्य क्षेत्रतोऽर्धतृतीया पुद्गलपरावर्त्ता वा । बादरनिगोदे पृच्छा जघन्येनान्तर्मुहूर्तमुत्कर्षेण सप्ततिः सागरोपमकोटीकोट्य । सूक्ष्मनिगोदे पृच्छा, जघन्येनान्तर्मुहूर्तमुत्कर्षेणाऽसङ्ख्येय काल

'तेउ'त्ति तेजोयोगात्तेजांसि—अ[त्रा]ग्नयस्तद्वर्त्तिनो जीवा अपि तथोक्ताः, एवं 'वाऊ'त्ति यान्तीति वायवो—वातास्ते च वोद्धव्याः, 'ओराल'त्ति 'उदाराः' एकेन्द्रियापेक्षया प्रायः स्थूला द्वीन्द्रियादय इतियावत् 'चः' समुच्चये त्रसाः 'तथे'ति तेनागमोक्तेन प्रकारेण, उपसंहारमाह—'इती'त्यनन्तरोक्तास्त्रस्यन्ति—चलन्ति देशाद्देशान्तरं संक्रामन्तीति त्रसाः 'त्रिविधाः' त्रिप्रकाराः, तेजोवाय्वोश्च स्थावरनामकर्मोदयेऽप्युक्तरूपं त्रसनमस्तीति त्रसत्वं, द्विधा हि तत्—गतितो लब्धितश्च, यत उक्तम्—"दुविहा खलु तसजीवा—लद्धितसा चेव गतितसा चेव"त्ति, ततश्च तेजोवाय्वोर्गतित उदाराणां च लब्धितोऽपि त्रसत्वमिति, उत्तरग्रन्थसम्बन्धनायाह—'तेसा'मिति तेजःप्रभृतीनां भेदान् शृणुत 'मे' मम कथयत इति सूत्रार्थः ॥ तत्र तावत्तेजोजीवानाह—

दुविहा तेउजीवा उ, सुहुमा बायरा तहा। पज्जत्तमपज्जत्ता, एवमेव दुहा पुणो ॥ १०८॥ बायरा जे उ पज्जत्ता, णेगहा ते वियाहिया। इंगाले मुम्मुरे अगणी, अच्चिं जाला तहेव य ॥ १०९ ॥ उक्का विज्जू य बोद्धव्वा, णेगहा एवमायओ। एगविहमनाणत्ता, सुहुमा ते वियाहिया ॥ ११० ॥ सुहुमा सव्वलोगंमि, लोगदेसे य बायरा। इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ १११ ॥ संतइं पप्पऽणाईया, अपज्जवसियावि य। ठिइं पडुच्च साईया, सपज्जवसियावि य ॥ ११२ ॥ तिन्नेव अहोरत्ता, उक्कोसेण वियाहिया। आउ-

१ द्विविधाः खलु त्रसजीवाः—लब्धित्रसाश्चैव गतित्रसाश्चैव

ठिई तेऊण, अतोमुहुत्त जहन्नय ॥ ११३ ॥ असखकालमुक्कोसा, अतोमुहुत्त जहन्नय । कायठिई तेऊण, त कायं तु अमुचओ ॥ ११४ ॥ अणतकालमुक्कोस, अतोमुहुत्त जहन्नय । विजढमि सए काए, तेउजीवाण अतर ॥ ११५ ॥ एएसिं वण्णओ चेव, गधओ रसफासओ । सठाणादेसओ वावि, विहाणाइ सहस्ससो॥११६॥

दुविहेत्यादिसूत्राणि नव प्राय प्राग्वत्, नवरम् 'अङ्गार' विगतधूमज्वालो दह्यमानेन्धनात्मक 'मुर्मुर' भस्ममिश्राग्निकणरूप 'अग्नि' इहोक्तभेदातिरिक्तो वह्नि 'अर्चि' मूलप्रतिबद्धा ज्वलनशिखा, दीपशिखेत्यन्ये, 'ज्वाला' छिन्नमूला ज्वलनशिखैवेति सूत्रनवकार्थ ॥ उक्तास्तेजोजीवा, वायुजीवानाह—

दुविहा वाउजीवा य, सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता, एवमेव दुहा पुणो ॥ ११७ ॥ बायरा जे उ पज्जत्ता, पचहा ते पकित्तिया । उक्कलियामडलियाघणगुजासुद्धवाया य ॥ ११८ ॥ सवट्टगवाए य, णेगहा एवमाअओ । एगविहमणाणत्ता, सुहुमा तत्थ वियाहिया ॥ ११९ ॥ सुहुमा सव्वलोगमि, लोगदेसे य बायरा । इत्तो कालविभाग तु, तेसिं वुच्छ चउव्विह ॥ १२० ॥ संतइ पप्पऽणाईया, अपज्जवसियावि य। ठिइ पडुच साईया, सपज्जवसियावि य ॥ १२१ ॥ तिन्नेव सहस्साइ, वासाणुक्कोसिया भवे। आउठिई वाऊण, अतोमुहुत्त जहन्नयं ॥ १२२ ॥ असखकालमुक्कोसा, अतोमुहुत्त जहन्नय । कायठिई वाऊणं, त काय तु अमु-

चओ ॥ १२२ ॥ अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । विजढंमि सए काए, वाउजीवाण अंतरं ॥ १२३ ॥
एएसिं वन्नओ चेव, गंधओ रसफासओ । संठाणादेसओ वावि, विहाणाइं सहस्ससो ॥ १२४ ॥

दुविहेत्यादि सूत्रनवकं प्राग्वत् । 'पञ्चधे' त्युपलक्षणम्, अत्रैवास्यानेकधेत्यभिधानात्, 'उक्कलियामंडलिया-घणगुंजासुद्धवाया य' वातशब्दस्य प्रत्येकमभिसम्बन्धादुत्कलिकावाता ये स्थित्वा स्थित्वा पुनर्वान्ति मण्डलिका-वाता-वातोलीरूपाः घनवाता-रत्नप्रभाद्यधोवर्त्तिनो घनोदधीनां विमानानां चाऽऽधारा हिमपटलकल्पा वायवो गुञ्जावाता-ये गुञ्जन्तो वान्ति शुद्धवाता-उत्कलिकाद्युक्तविशेषविकला मन्दानिलादयः, 'संवट्टगवाए य'त्ति संवर्त्तकवाताश्च-ये बहिःस्थितमपि तृणादि विवक्षितक्षेत्रान्तः क्षिपन्तीति सूत्रनवकार्थः ॥ इत्थं तेजोवायुरूपांस्त्र-सानभिधायोदारत्रसाभिधित्सयाऽऽह—

ओराला तसा जे उ, चउहा ते पकित्तिया । बेइंदिय तेइंदिय, चउरो पंचिंदिया चेव ॥ १२५ ॥

उदारास्त्रसाः 'ये तु' इति ये पुनः 'चतुर्धा' चतुष्प्रकारास्ते प्रकीर्त्तिताः, यथा चैषां चतुर्द्धात्वं तथाऽऽह–'बेइं-दिय'त्ति द्वे इन्द्रिये-स्पर्शनरसनाख्ये येषां तेऽमी द्वीन्द्रियाः, एतच्च निर्वृत्त्युपकरणाख्यं द्रव्येन्द्रियमभिप्रेत्योच्यते, भावेन्द्रियापेक्षयैकेन्द्रियाणामपीन्द्रियपञ्चकस्यापि सम्भवात्, तथा च प्रज्ञापना–"[1]दव्विंदियं पडुच्च एगिंदिया जीवा

---

१ द्रव्येन्द्रियं प्रतीत्य एकेन्द्रिया जीवा एकेन्द्रिया भावेन्द्रियं प्रतीत्य एकेन्द्रिया अपि जीवा द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियाः

एगेंदिया भावेंदियं पडुच एगेन्दियावि जीवा बेंदिया तेइंदिया चउरिंदिया पचिंदिय"त्ति, एवं शेषेष्वपि, तथैव 'तेइंदिय'त्ति त्रीन्द्रिया —येषां द्वे ते एव तृतीयं घ्राणं, 'चउरी'त्ति प्रक्रमाच्चतुरिन्द्रिया —येषां त्रीण्युक्तरूपाणि चतुर्थं चक्षु, पञ्चेन्द्रियाश्चैव—येषामेतान्येव चत्वारि पञ्चमं श्रोत्रमिति सूत्रार्थः ॥ तत्र तावद् द्वीन्द्रियवक्तव्यतां प्रतिपिपादयिषुरिदमाह—

बेइंदिया उ जे जीवा, दुविहा ते पकित्तिया । पज्जत्तमपज्जत्ता, तेसिं भेए सुणेह मे ॥ १२६ ॥ किमिणो सोमंगला चेव, अलसा माइवाहया । वासीमुहा य सिप्पीया, संखा संखणगा तहा ॥ १२७ ॥ पल्लोयाणुल्लया चेव, तहेव य वराडगा । जलूगा जालगा चेव, चंदणा य तहेव य ॥ १२८ ॥ इति बेइंदिया एए, णेगहा एवमायओ । लोग्गदेसे ते सव्वे, न सव्वत्थ वियाहिया ॥ १२९ ॥ संतइं पप्पऽणाईया, अपज्जवसियावि य । ठिइं पडुच्च साईया, सपज्जवसियावि य ॥ १३० ॥ वासाइं बारसेव उ, उक्कोसेण वियाहिया । बेइंदियआउठिई, अंतोमुहुत्तं जहन्नयं ॥ १३१ संखिज्जकालमुक्कोसा, अंतोमुहुत्तं जहन्नयं । बेइंदियकायठिई, तं कायं तु अमुंचओ ॥ १३२ ॥ अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं । बेइंदियजीवाणं, अंतरेयं वियाहियं ॥ १३३ ॥ एएसिं वण्णओ चेव, गंधओ रसफासओ । संठाणादेसओ वावि, विहाणाइं सहस्ससो ॥ १३४ ॥

बेइंदिया इत्यादि सूत्रनवकम्, इदमपि प्रायस्तथैव, नवरं द्वीन्द्रियाभिलापः कर्त्तव्यः, तथा 'कृमयः' अशुच्यादि-

सम्भधाः 'अलसाः' प्रतीताः 'मातृवाहकाः' ये काष्ठशकलानि समोभयाग्रतया संबध्नन्ति, वास्याकारमुखा घासीमुखाः, 'सिप्पिय'त्ति प्राकृतत्वात् शुक्तयः 'शङ्खाः' प्रतीताः 'शङ्खनकाः' तदाकृतय एवात्यन्तलघवो जीवाः 'वराटकाः' कपर्दकाः 'जलौकसः' दुष्टरक्ताकर्षिण्यः चन्दनका–अक्षाः, शेषास्तु यथासम्प्रदायं वाच्याः, वर्षाणि द्वादशैव त्विति सूत्रनवकार्थः ॥ त्रीन्द्रियवक्तव्यतामाह—

तेइंदिया य जे जीवा, दुविहा ते पकित्तिया। पज्जत्तमपज्जत्ता, तेसिं भेए सुणेह मे ॥ १३५ ॥ कुंथुपिवीलिउद्धंसा, उक्कलुदेहिया तहा। तणहारा कट्ठहारा य, मालूगा पत्तहारगा ॥ १३६ ॥ कप्पासिऽट्ठिमिंजा य, तिंदुगा तउसमिंजगा। सदावरी य गुम्मी य, बोद्धव्वा इंदगाइ य ॥ १३७ ॥ इंदगोवसमाइया, णेगहा एवमायओ। लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया ॥ १३८ ॥ संतइं पप्पऽणाईया, अपज्जवसियावि य। ठिइं पडुच्च साईया, सपज्जवसियावि य ॥ १३९ ॥ एगूणवन्नऽहोरत्ता, उक्कोसेण वियाहिया। तेइंदिय आउठिई, अंतोमुहुत्तं जहन्नयं ॥ १४० ॥ संखिज्जकालमुक्कोसा, अंतोमुहुत्तं जहन्नयं। तेइंदियकायठिई, तं कायं तु अमुंचओ ॥ १४१॥ अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नयं। तेइंदियजीवाणं, अंतरेयं वियाहियं ॥१४२॥ एएसिं वन्नओ चेव, गंधओ रसफासओ। संठाणादेसओ वावि, विहाणाइं सहस्ससो ॥ १४३ ॥

तेंदिएत्यादि सूत्रनवकम्, एतदपि पूर्ववत्, नवरं त्रीन्द्रियोचारणं विशेषः। तथा कुन्थवः–अनुद्धरिप्रभृ-

तय पिपीलिका -कीटिका गुमी-शतपदी, एवमन्येऽपि यथासम्प्रदाय वाच्या , एकोनपञ्चाशदहोरात्राण्यायु'- स्थितिरिति सूत्रनवकार्थं ॥ चतुरिन्द्रियवक्तव्यतामाह—

चउरिंदिया उ जे जीवा, दुविहा ते पकित्तिया। पज्जत्तमपज्जत्ता, तेसिं भेए सुणेह मे ॥ १४४ ॥ अंधिया पुत्तिया चेव, मच्छिया मसगा तहा। भमरे कीडपयगे य, ढिंकणे कुकणे तहा ॥ १४५ ॥ कुक्कडे सिंगिरीडी य, नदावत्ते य विच्छिए। डोले भिंगिरिडिओ, विरिली अच्छिवेहए ॥ १४६ ॥ अच्छिरे माहले अच्छि- [रोडए], विचित्ते चित्तपत्तए। ओहिंजलिया जलकारी, य नीया तयगाइ या ॥ १४७ ॥ इइ चउरिंदिया एए, णेगहा एवमायओ। लोगस्स एगदेसम्मि, ते सव्वे परिकित्तिया ॥१४८॥ संतइं पप्पडणाईया, अपज्जवसियावि य। ठिइं पडुच्च साईया, सपज्जवसियावि य ॥ १४९ ॥ छच्चेव य मासाऊ, उक्कोसेण वियाहिया। चउरिंदिय आउठिई, अंतोमुहुत्तं जहन्नय ॥ १५० ॥ संखिज्जकालमुक्कोसं, अंतोमुहुत्तं जहन्नय । चउरिंदियकायठिई, तं कायं तु अमुंचओ ॥१५१॥ अणंतकालमुक्कोसं, अंतोमुहुत्तं जहन्नय। विजढंमि सए काए, अंतरेयं वियाहियं ॥ १५२ ॥ एएसिं वन्नओ चेव, गंधओ रसफासओ। संठाणादेसओ वावि, विहाणाइं सहस्ससो ॥ १५३ ॥

चउरिंदिएत्यादि सूत्रदशकम्, इदमपि तथैव, चतुरिन्द्रियाभिलाप एव विशेष । एतद्भेदाश्च केचिदप्रतीता एवान्ये तु तत्तद्देशप्रसिद्धितो विशिष्टसम्प्रदायाच्चाभिधेया , तथा षडेव मासानुत्कृष्टैषा स्थितिरिति सूत्रदशकार्थः ॥ पञ्चेन्द्रियवक्तव्यतामाह—

पंचिंदिया उ जे जीवा, चउव्विहा ते वियाहिया । नेरइय तिरिक्खा य, मणुया देवा य आहिया ॥ १५४ ॥
पञ्चेन्द्रियास्तु ये जीवाश्चतुर्विधास्ते व्याख्याताः, तद्यथा—'णेरइय तिरिक्खा य'त्ति नैरयिकास्तिर्यञ्चश्च मनुजा देवाश्च 'आख्याताः' कथितास्तीर्थंकरादिभिरिति सूत्रार्थः ॥ तत्र तावन्नैरयिकानाह—

नेरइया सत्तविहा, पुढवीसू सत्तसू भवे । रयणाभसक्कराभा, वालुयाभा य आहिया ॥ १५५ ॥ पंकाभा धूमाभा, तमा तमतमा तहा । इइ नेरइया एए, सत्तहा परिकित्तिया ॥ १५६ ॥ लोगस्स एगदेसंमि, ते सव्वे उ वियाहिया । इत्तो कालविभागं तु, तेसिं वुच्छं चउव्विहं ॥ १५७ ॥ संतइं पप्पऽणाईया, अपज्जवसियावि य । ठिइं पडुच्च साईया, सपज्जवसियावि य ॥ १५८ ॥ सागरोवममेगं तु, उक्कोसेण वियाहिया । पढमाइ जहन्नेणं, दसवाससहस्सिया ॥ १५९ ॥ तिन्नेव सागराऊ, उक्कोसेण वियाहिया । दुचाए जहन्नेणं, एगं तू सागरोवमं ॥ १६० ॥ सत्तेव सागराऊ, उक्कोसेण वियाहिया । तईयाए जहन्नेणं, तिन्नेव उ सागरोवमा ॥ १६१ ॥ दससागरोवमाऊ, उक्कोसेण वियाहिया । चउत्थीइ जहन्नेणं, सत्तेव उ सागरोवमा ॥ १६२ ॥ सत्तरससागराऊ, उक्कोसेण वियाहिया । पंचमाए जहन्नेणं, दस चेव उ सागरा ॥ १६३ ॥ बावीससागराऊ, उक्कोसेण वियाहिया । छट्ठीइ जहन्नेणं, सत्तरस सागरोवमा ॥१६४॥ तित्तीससागराऊ, उक्कोसेण वियाहिया । सत्तमाए जहन्नेणं, बावीसं सागरोवमा ॥ १६५ ॥ जा चेव उ आउठिई, नेरइयाणं वियाहिया । सा तेसिं

कायठिई, जहन्नुक्कोसिया भवे ॥ १६६ ॥ अणतकालमुक्कोस, अतोमुहुत्तं जहन्नय । विजढमि सए काए, नेरइयाण तु अतर ॥ १६७ ॥ एएसिं वण्णओ चेव, गधओ रसफासओ । सठाणादेसओ वावि, विहाणाइं सहस्ससो ॥ १६८ ॥

नेरइयत्यादि चतुर्दश सूत्राणि। नैरयिका 'सप्तविधा' सप्तप्रकारा, किमिति?, यत पृथ्वीषु सप्तसु 'भवे'त्ति भवेयु, ततस्तद्भेदात्तेषा सप्तविधत्वमिति भाव, का पुनस्ता सप्त? इत्याह–'रयणाभ'त्ति रत्नाना–वैडूर्यादीनामाभानमाभा–स्वरूपत प्रतिभासनमस्यामिति रत्नाभा, इत्थ चैतत्, तत्र रत्नकाण्डस्य भवनपतिभवनाना च विविधरत्नवता सम्भवात्, एव सर्वत्र, नवर शर्करा–श्लक्ष्णपाषाणशकलरूपा तदाभा, 'धूमाभे'ति यद्यपि तत्र धूमासम्भवस्तथाऽपि तदाकारपरिणताना पुद्गलाना सम्भवात्, तमोरूपत्वाच्च तम, प्रकृष्टतरतमस्त्वाच्च तमस्तम, 'इति' इत्यमुना पृथिवीसप्तविधत्वलक्षणेन प्रकारेण नैरयिका एते सप्तधा प्रकीर्त्तिता । 'लोगस्से'त्यादिसूत्रद्वय क्षेत्रकालाभिधायि प्राग्वत् । सादिसपर्यवसितत्वं द्विविधस्थित्यभिधानद्वारतो भावयितुमाह–सागरोपममेक तूत्कृष्टेन व्याख्याता 'प्रथमाया' प्रक्रमान्नरकपृथिव्या जघन्येन दश वर्षसहस्राणि यस्या सा दशवर्षसहस्रिका, प्रस्तावादायु स्थितिर्नैरयिकाणामितीहोत्तरसूत्रेषु च द्रष्टव्यम् । त्रीण्येव 'सागरे'ति सागरोपमाणि 'तु' पूरणे उत्कृष्टेन व्याख्याता द्वितीयाया, 'जहण्णेण'ति उत्तरत्र तुशब्दस्य पुन शब्दार्थस्य भिन्नक्रमत्वेनेह सम्बन्धाज्जघन्येन पुनरेक सागरोपमम् ।

ससैव सागरोपमाणि तूत्कृष्टेन व्याख्याता तृतीयायां, जघन्येन पुनस्त्रीण्येव सागरोपमाणि, दश सागरोपमाणि तूत्कृष्टेन व्याख्याता चतुर्थ्यां, जघन्येन ससैव तु सागरोपमाणि । ससदश सागरोपमाणि तूत्कृष्टेन व्याख्याता पञ्चम्यां, जघन्येन दश चैव तु सागरोपमाणि द्वाविंशतिः सागरोपमाणि तूत्कृष्टेन व्याख्याता षष्ठ्यां, जघन्येन ससदश सागरोपमाणि । त्रयस्त्रिंशत्सागरोपमाणि तूत्कृष्टेन व्याख्याता सप्तम्यां नरकपृथिव्यां, जघन्येन द्वाविंशतिः सागरोपमाणि ॥ आयुःस्थितिरुक्ता, कायस्थितिमाह—'या चे'ति चशब्दो वक्तव्यतान्तरोपन्यासे 'एवे'ति भिन्नक्रमः 'चः' पुनरर्थः, ततो यैव च पुराऽऽयुःस्थितिर्नैरयिकाणां व्याख्याता 'सि'त्ति एवकारस्य गम्यमानत्वात्सैव तेषां कायस्थितिर्जघन्योत्कृष्टा भवेत्, इत्थं चैतत्, तत उद्वृत्तानां पुनस्तत्रैवानुपपत्तेः, ते हि तत उद्वृत्य गर्भजपर्याप्तकसङ्ख्येयवर्षायुष्ष्वेवोपजायन्ते, यत उक्तम्—"णरगाओ उघट्टा गब्भे पज्जत्तसंखजीवीसु । णियमेण होइ वासो" इत्यादि । अन्तरविधानाभिधायि सूत्रद्वयं प्राग्वत्, नवरमन्तर्मुहूर्तं जघन्यमन्तरं, यदाऽन्यतरनरकादुद्वृत्य कश्चिज्जीवो गर्भजपर्याप्तकमत्स्यादिषूत्पद्यते, तत्र चातिसंक्लिष्टाध्यवसायोऽन्तर्मुहूर्तमानायुः प्रतिपाल्य मृत्वाऽन्यतमनरक एवोपजायते तदा लभ्यत इति भावनीयमिति चतुर्दशसूत्रार्थः ॥ इत्थं नैरयिकानभिधाय तिरश्च आह—

पंचिंदियतिरिक्खा उ, दुविहा ते वियाहिया । संमुच्छिमतिरिक्खा उ, गब्भवक्कंतिया तहा ॥ १६९ ॥

१ नरकादुद्वृत्तानां गर्भजेषु पर्याप्तसंख्यजीविषु नियमात् भवति वासः ।

नन्तरभावी पृथिव्यादिकारणोऽङ्कुर , क्रियाऽनन्तरभाविनी च मुक्तिरिति, अय च पञ्चविधेऽपि विनये चारित्रतप-उपचारविनयानेवेच्छति, ज्ञानदर्शनविनयौ तु तत्कारणत्वाद् गुणभूतावेवेति । आह–एव सति किं ज्ञान तत्त्वमस्तु, आहोस्वित् क्रिया ?, उच्यते, परस्परसव्यपेक्षमुभयमिद मुक्तिकारण, निरपेक्ष तु न कारणमिति तत्त्वम्, एतदर्थाभिधायिका चेयमेव गाथा 'सव्वेसिंपि नयाण' इत्यादि, इह च गुणशब्देन ज्ञानमुच्यते, 'बहुविधवक्तव्यताम्' उक्तरूपा नामादीना क क साधुमिच्छतीत्येवरूपा वा, निशम्य–श्रुत्वा 'तत् सर्वनयविशुद्ध' तत् सर्वनयसम्मत यच्चरणगुणस्थित साधुरिति, अयमभिप्राय –यत्तावद् ज्ञानवादिनोक्तम्–यद् येन विना न भवति तत्तन्निबन्धनमेव, यथा बीजाद्यविनाभावी तन्निबन्धन एवाङ्कुर , ज्ञानाविनाभाविनी च मुक्तिरिति, अत्राविनाभावित्वमनैकान्तिको हेतु , तथाहि–यथाऽनेन ज्ञाननिबन्धनत्व मुक्ते साध्यते, तथा क्रियानिबन्धनत्वमपि, यथा हि ज्ञान विना नास्ति मुक्तिरिति ज्ञानाविनाभाविनी एव क्रियामपि विना नासौ भवतीति तदविनाभावित्वमपि समानमेवेति कथ नोभयनिबन्धनत्वसिद्धि ?, तथा चाह—"णाण सविसयनियय ण णाणमित्तेण कज्जनिप्फत्ती । मग्गण्णू दिट्ठतो होइ सचिट्ठो अचिट्ठो य ॥१॥ जाणतोऽवि य तरिउ काइयजोग न जुजई जो उ । सो वुज्झइ सोएण एव नाणी

१ ज्ञान स्वविषयनियत न ज्ञानमात्रेण कार्यनिष्पत्ति । मार्गज्ञो दृष्टान्तो भवति सचेष्टोऽचेष्टश्च ॥ १ ॥ जानन्नपि तरीतु कायिकयोग न युनक्ति यस्तु । स उह्यते श्रोतसा एव ज्ञानी चरणहीन ॥ १ ॥

तेसिमं भवे । कालं अणंतमुक्कोसं, अंतोमुहुत्तं जहन्नयं ॥ १८५ ॥ विजढंमि सए काए, थलयराणं तु अंतरं। चम्मे उ लोमपक्खी या, तइया समुग्गपक्खिया ॥ १८६ ॥ वियय पक्खी य बोद्धव्वा, पक्खिणो य चउव्विहा । लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया ॥ १८७ ॥ संतइं पप्पऽणाईया, अपज्जवसियावि य । ठिइं पडुच्च साईया, सपज्जवसियावि य ॥ १८८ ॥ पलिओवमस्स भागो, असंखिज्जइमो भवे । आउठिई खहयराणं, अंतोमुहुत्तं जहन्नयं ॥ १८९ ॥ असंखभागो पलियस्स, उक्कोसेण उ साहिओ । पुव्वकोडीपुहुत्तेणं, अंतोमुहुत्तं जहन्नयं ॥१९०॥ कायठिई खहयराणं, अंतरं ते(रेयं)वियाहियं। कालं अणंतमुक्कोसं, अंतोमुहुत्तं जहन्नयं ॥ १९१ ॥ एएसिं वन्नओ चेव, गंधओ रसफासओ । संठाणादेसओ वावि, विहाणाइं सहस्ससो १९२

पञ्चेन्द्रियेत्यादि सूत्राणि पञ्चविं(चतुर्विं)शतिर्व्याख्यातप्रायाण्येव, नवरमाद्यसूत्रद्वयमुद्देशतो भेदाननन्तरग्रन्थसम्बन्धं चाभिदधाति, अत्र संमूर्च्छनं संमूर्च्छा—अतिशयमूढता तया निर्वृत्ताः संमूर्च्छिमाः, यदिवा समित्युत्पत्तिस्थानपुद्गलैः सहैकीभावेन मूर्च्छन्ति—तत्पुद्गलोपचयात्समुच्छ्रिता भवन्तीत्यौणादिक इमप्रत्यये संमूर्च्छिमास्ते च ते तिर्यञ्चः संमूर्च्छिमतिर्यञ्चो ये मनःपर्याप्त्यभावतः सदा संमूर्च्छिता इवावतिष्ठन्ते, तथा गर्भे व्युत्क्रान्तिर्येषां तेऽमी गर्भव्युत्क्रान्तिकाः । जले चरन्ति—गच्छन्ति चरेर्भक्षणमित्यर्थ इति भक्षयन्ति चेति जलचराः, एवं स्थलं—निर्जलो भूभागस्तस्मिंश्चरन्तीति स्थलचराः, तथा 'खहयर'त्ति सूत्रत्वात्खम्—आकाशं तस्मिंश्चरन्तीति खचराः । 'यथोद्देशं निर्देश'

दुविहावि ते भवे तिविहा, जलयरा थलयरा तहा। खहयरा य बोद्धव्वा, तेसिं भेए सुणेह मे ॥१७०॥ मच्छा य कच्छभा य, गाहा य मगरा तहा। सुसमारा य बोद्धव्वा, पचहा जलयराहिया ॥ १७१ ॥ लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया। इत्तो कालविभाग तु, तेसिं वुच्छ चउव्विह ॥ १७२ ॥ सतइ पप्पऽणाईया, अपज्जवसियावि य । ठिइ पडुच्च साईया, सपज्जवसियावि य ॥ १७३ ॥ इक्का य पुव्वकोडीओ, उक्कोसेण वियाहिया। आउठिई जलयराण, अतोमुहुत्त जहन्नय ॥ १७४ ॥ पुव्वकोडीपुहुत्त तु, उक्कोसेण वियाहिया। कायठिई जलयराण, अतोमुहुत्त जहन्नय ॥ १७५ ॥ अणतकालमुक्कोस, अतोमुहुत्त जहन्नय । विजढमि सए काए, जलयराण तु अतर ॥ १७६ ॥ एएसिं वण्णओ चेव, गधओ रसफासओ । सठाणादेसओ वावि, विहाणाइ सहस्ससो ॥ १७७ ॥ चउप्पया य परिसप्पा, दुविहा थलयरा भवे । चउप्पया चउविहा उ, ते मे कित्तयओ सुण ॥ १७८ ॥ एगखुरा दुखुरा चेव, गडीपयसनप्फया। हयमाइ गोणमाई, गयमाई सीहमाइणो ॥ १७९ ॥ भुओरगपरिसप्पा, परिसप्पा दुविहा भवे । गोहाई अहिमाईया, इक्किक्का णेगहा भवे ॥१८०॥ लोएगदेसे ते सव्वे, न सव्वत्थ वियाहिया। इत्तो कालविभाग तु, तेसिं वुच्छ चउव्विह ॥ १८१ ॥ सतई पप्पऽणाईया, अपज्जवसियावि य। ठिइ पडुच्च साईया, सपज्जवसियावि य ॥ १८२ ॥ पलिओवमा उ तिन्नि उ, उक्कोसेण वियाहिया। आउठिई थलयराण, अंतोमुहुत्त जहन्नय ॥ १८३ ॥ पलिओवमा उ तिन्नि उ, उक्कोसेण वियाहिया। पुव्वकोडीपुहुत्त तु, अतोमुहुत्त जहन्नय ॥ १८४ ॥ कायठिई थलयराण, अतर

सम्भव इति भावना । खचरानाह—'चम्मे उ'त्ति प्रक्रमात् 'चर्मपक्षिणः' चर्मचटकाप्रभृतयः, चर्मरूपा एव हि तेषां पक्षा इति, तथा रोमप्रधानाः पक्षा रोमपक्षास्तद्वन्तः रोमपक्षिणः—राजहंसादयः 'समुद्गपक्षिणः' समुद्गकाकारपक्षवन्तः, ते च मानुषोत्तराद्बहिर्द्वीपवर्त्तिनः, 'विततपक्षिणः' ये सर्वदा विस्तारिताभ्यामेव पक्षाभ्यामासते । इह च यत्क्षेत्रस्थित्यन्तरादि प्रत्येकं प्राक्तनेन सदृशमपि पुनः पुनरुच्यते न पुनरतिदिश्यते तत्प्रपञ्चितज्ञविनेयानुग्रहार्थमेवंविधा अपि प्रज्ञापनीया एवेति ख्यापनार्थं चेत्यदुष्टमेवेति भावनीयमिति पञ्चविं(चतुर्विं)शतिसूत्रार्थः ॥ इत्थं तिरश्चोऽभिधाय मनुजानभिधातुमाह—

मणुया दुविहभेया उ, ते मे कित्तयओ सुण । संमुच्छिमाइ मणुया, गब्भवक्कंतिया तहा ॥ १९३ ॥ गब्भवक्कंतिया जे उ, तिविहा ते वियाहिया । अकम्मकम्मभूमा य, अंतरद्दीवगा तहा ॥ १९४ ॥ पनरस तीसइविहा, भेआ अट्ठवीसई । संखा उ कमसो तेसिं, इइ एसा वियाहिया ॥१९५॥ संमुच्छिमाण एसेव, भेओ होइ आहिओ । लोगस्स एगदेसंमि, ते सव्वेवि वियाहिया ॥ १९६ ॥ संतइं पप्पऽणाईया, अपज्जवसियावि य । ठिइं पडुच्च साईया, सपज्जवसियावि य ॥ १९७ ॥ पलिओवमाइं तिन्नि य, उक्कोसेण वियाहिया । आउठिई मणुयाणं, अंतोमुहुत्तं जहन्नयं ॥ १९८ ॥ पलिओवमाइं तिन्नि उ, उक्कोसेण वियाहिया । पुव्वकोडिपुहुत्तेणं, अंतोमुहुत्तं जहन्नयं ॥ १९९ ॥ कायठिई मणुयाणं, अंतरं तेसिमं भवे । अणंतकालमुक्कोसं,

इति जलचरभेदानाह—'मत्स्या' मीना 'कच्छपा' कूर्मा गृह्णन्तीति ग्राहा—जलचरविशेषा मकरा सुसुमारा अपि तद्विशेषा एव । 'लोएगदेसे'त्यादिसूत्राणि षट् क्षेत्रकालभावाभिधायीनि, तथेह पृथक्त्वं द्विप्रभृत्यानवान्तम्। स्थलचरभेदानाह—परि—समन्तात्सर्पन्ति—गच्छन्तीति परिसर्पा, एकखुरादयश्च हयादिप्रभृतिभिर्यथाक्रम योज्यन्ते, तत एक खुर—चरणे येषामधोवर्त्यस्थिविशेषो येषा ते एकखुरा—हयादय एव 'द्विखुरा' गवादयो गण्डी—पद्मकर्णिका तद्वद्वृत्ततया पदानि येषा ते गण्डीपादा—गजादय 'सणप्फ'त्ति सूत्रत्वात्सह नखै—नखराहमकैर्वर्त्तन्त इति सनखानि तथाविधानि पदानि येषा ते सनखपदा—सिंहादय । 'भुओरगपरिसप्पा य'त्ति परिसर्पशब्द प्रत्येकमभिसम्बध्यते, ततो भुजा इव भुजा—शरीरावयवविशेषास्तै परिसर्पन्तीति भुजपरिसर्पा, उरो—वक्षस्तेन परिसर्पन्तीत्युर परिसर्पा, तस्यैव तत्र प्राधान्यात्, गोधादय अहि—सर्पस्तदादय इति यथाक्रम योग, एते च 'एकैक' इति प्रत्येकम् 'अनेकधा' अनेकभेदा, गोधेरकनकुलादिभेदतो गोणसहाचप्रलापादिभेदत । पल्योपमानि तु त्रीण्युत्कृष्टेन तु साधिकानि पूर्वकोटीपृथक्त्वेन—उक्तरूपेण, पल्योपमायुषो हि ते न पुनस्तत्रैवोत्पद्यन्ते, ये तु पूर्वकोट्यायुषो मृत्वा तत्रैवोपजायन्ते तेऽपि सप्ताष्ट वा भवग्रहणानि यावत्, पञ्चेन्द्रियनरतिरश्चामधिकनिरन्तरभवान्तरासम्भवात्, उक्त हि—"सत्तट्ठ भवा उ तिरिमणुग'त्ति, अत एतावत एवाधिकृत्य

१ सप्ताष्टभवान् तिर्यग्मनुष्या

इति नाम, द्वितीयस्य हयकर्णो १ गजकर्णो २ गोकर्णः ३ शष्कुलीकर्णः ४, तृतीयस्य आदर्शमुखो १ मेषमुखो २ हयमुखो ३ गजमुखः ४, चतुर्थस्याश्वमुखो १ हस्तिमुखः २ सिंहमुखो ३ व्याघ्रमुखः ४, पञ्चमस्याश्वकर्णः १ सिंहकर्णः २ गजकर्णः ३ कर्णप्रावरणः ४, षष्ठस्योल्कामुखो १ विद्युन्मुखो २ जिह्वामुखो ३ मेघमुखः ४, सप्तमस्य घनदन्तो १ गूढदन्तः २ श्रेष्ठदन्तः ३ शुद्धदन्त ४ इति, एतन्नामान एव चैतेषु युगलधार्मिकाः प्रतिवसन्ति, तच्छरीरमानाद्यभिधायि चेदं गाथायुगलम्—"अंतरदीवेसु णरा धणुसय अट्ठूसिया सया मुइया । पालंति मिहुणभावं पल्लस्स असंखभागाऊ ॥ १ ॥ चउसट्ठी पिट्ठकरंडयाण मणुयाण तेसिमाहारो । भत्तस्स चउत्थस्स अउणसीइदिणाण पालणया ॥ २ ॥" एतेऽपि शिखरिणोऽपि पूर्वापरप्रान्तविदिक्प्रसृतकोटिपूक्तन्यायतोऽष्टाविंशतिः सन्ति, पूर्वस्माच्चैषां भेदेनाविवक्षितत्वान्न सूत्रेऽष्टाविंशतिसङ्ख्यविरोध इति भावनीयम् । संमूर्छिमानाम् 'एष एव' इत्यकर्मभूमादिगर्भजानां य उक्तः 'भेदः' नानात्वं भवत्याख्यातः, ते हि तेषामेव वान्तपित्तादिषु संभवन्ति, तथा चागमः—"गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा सिंघाणेसु वा वंतेसु वा पित्तेसु वा पूएसु वा

१ अन्तरद्वीपेषु नरा धनुःशताष्टोच्छ्रिताः सदा मुदिताः । पालयन्ति मिथुनभावं पल्यस्यासंख्यभागायुषः ॥ १ ॥ चतुःषष्टिः पृष्ठकरण्डकानां मनुजानां तेषामाहारः । भक्तेन चतुर्थेन एकोनाशीतिदिनानि पालनम् ॥ २ ॥ २ गर्भव्युत्क्रान्तिकमनुष्याणामेव उच्चारेषु वा प्रश्रवणेषु वा श्लेष्मसु वा सिङ्घाणेषु वा वान्तेषु वा पित्तेषु वा पूयेषु वा

अतोमुहुत्त जहन्नय ॥ २०० ॥ एएसिं वन्नओ चेव, गंधओ रसफासओ। सठाणादेसओ वावि, विहाणाइ सहस्ससो ॥ २०१ ॥

मणुएत्यादि सूत्रनवक प्राग्वत्, नवरम् 'अकम्मकम्मभूमा य'त्ति भूमेलस्य प्रत्येकमभिसम्बन्धात्सूत्रत्वाच्चाकर्मभूमौ भवा अकर्मभूमा एव कार्मभूमाश्च, अन्तरम्—इह समुद्रमध्य तस्मिन् द्वीपा अन्तरद्वीपास्तेषु जाता अन्तरद्वीपजा । 'पनरसतीसइविह'त्ति विधशब्दस्य प्रत्येकमभिसम्बन्धात्पञ्चदशविधा' कार्मभूमा , कर्मभूमीना पञ्चदशसङ्ख्यत्वात्, तद्भेदे चामीषामिह भेदस्याभिधित्सितत्वात्, पञ्चदशसङ्ख्यात्व च भरतैरावतविदेहाना त्रयाणा प्रत्येक पञ्चसख्यत्वात्, त्रिशद्विधा अकर्मभूमा , अत्राप्यकर्मभूमीनामेतावत्सङ्ख्यत्व हेतु , ता हि हैमवतहरिवर्षरम्यकहैरण्यवतदेवकुरूत्तरकुरुरूपा षट् प्रत्येक पञ्चसङ्ख्यत्वेन त्रिंशद्भवन्ति, इह च क्रमत इत्युक्तावपि पश्चान्निर्दिष्टानामपि कार्मभूमाना मुक्तिसाधकत्वेन प्राधान्यत प्रथम भेदाभिधान, पठन्ति च—'तीसपन्नरसविहे'ति, तत्र च यथोद्देश सम्बन्धो, भेदाश्चाष्टाविंशतिरन्तरद्वीपजानामिति विभक्तिपरिणामेन सम्बन्धनीयम्, इत्थ चैतत्तत्सङ्ख्यत्वादन्तरद्वीपाना, ते हि हिमवत पूर्वापरप्रान्तविदिक्प्रसृतकोटिषु त्रीणि त्रीणि योजनशतान्यवगाह्य तावन्त्येव योजनशतान्यायामविस्तराभ्या प्रथमेऽन्तरद्वीपा , ततोऽप्येकैकयोजनशतवृद्धावगाहनया योजनशतचतुष्टयाद्यायामविस्तरा द्वितीयादय षट्, तेषा च पूर्वोत्तरादिक्रमात्प्रादक्षिण्यत प्रथमस्य चतुष्कस्य एकोरुक १ आभाषिको २ लाङ्गूलिको ३ वैषाणिक ४

चेगं' जोयणसहस्सं वज्जेत्ता मज्झे अट्ठहत्तरजोयणसयसहस्से, एत्थ णं भवणवासीणं देवाणं सत्त भवणकोडीओ बावत्तरिं च भवणावाससयसहस्सा हवंतीति मक्खायं'' 'वाणमंतर'त्ति आर्षत्वाद् विविधान्यन्तराणि—उत्कर्षापकर्षात्मकविशेषरूपाणि निवासभूतानि वा गिरिकन्दरविवरादीनि येषां तेऽमी व्यन्तराः, उक्तं हि "ते ह्यधस्तिर्यगूर्ध्वं च त्रीनपि लोकान् स्पृशन्तः स्वातन्त्र्यात्पराभियोगाच्च प्रायेण प्रतिपतन्त्यनियतगतिप्रचारान्मनुष्यानपि कचिद्भृत्यवदुपचरन्ति, तथा विविधेषु च शैलकन्दरान्तरवनविवरादिषु प्रतिवसन्त्यतो व्यन्तरा इत्युच्यन्ते,'' 'जोइस'त्ति, द्योतयन्तीति ज्योतींषि—विमानानि तन्निवासित्वाद्देवा अपि ज्योतींषि, ग्रामः समागत इत्यादौ तन्निवासिजनग्रामवत्, विशेषेण मानयन्ति—उपभुञ्जन्ति सुकृतिन एतानीति विमानानि तेषु भवा वैमानिकाः, 'तहे'त्ति समुच्चये इति सूत्रार्थः ॥ एषामेवोत्तरभेदानाह—

दसहा उ भवणवासी, अट्ठहा वणचारिणो । पंचविहा जोइसिया, दुविहा वेमाणिया तहा ॥ २०३ ॥

'दशधा त्वि'ति दशधैव 'भवणवासि'त्ति भवनेषु वस्तुं शीलमेषामिति भवनवासिनः 'अष्टधा' अष्टप्रकारा वनेषु—विचित्रोपवनादिषूपलक्षणत्वादन्येषु च विविधास्पदेषु क्रीडैकरसतया चरितुं शीलमेषामिति वनचारिणः—व्यन्तराः

१ चैकं योजनसहस्रं वर्जयित्वा मध्येऽष्टसप्ततियोजनशतसहस्रे, अत्र भवनवासिना देवानां सप्त भवनकोटयो द्वासप्ततिश्च भवनावासशतसहस्राणि ( च ) भवन्ति इत्याख्यातं

सोणिएसु वा सुक्केसु वा सुक्कपुग्गलपरिसाडेसु वा विगयकडेवरेसु वा थीपुरिससजोएसु वा गामनिद्धमणेसु वा णगरणिद्धमणेसु वा सव्वेसु चेव असुइट्ठाणेसु इत्थ ण समुच्छिममणुस्सा समुच्छंति अगुलस्स असखेज्जइभागमेत्ताए ओगाहणाए" इत्यादि, पल्योपमानि त्रीण्यायुस्थितिरिति युगलधार्मिकापेक्षया । कायस्थितिश्च पल्योपमानि त्रीणि पूर्वकोटिपृथक्त्वेनाधिकानीति गम्यते, एतच्च तिर्यक्कायस्थित्यभिहिताभिप्रायेण विज्ञेयम्, अन्तरस्य चानन्तकालत्व साधारणवनस्पतिकायस्थित्यपेक्षयेतिसूत्रनवकार्थ ॥ इत्थ मनुष्यानभिधाय देवानाह—

देवा चउव्विहा वुत्ता, ते मे कित्तयओ सुण । भोमिज्जवाणमतर जोइस वेमाणिया तहा ॥ २०२ ॥

'देवा' उक्तनिरुक्ता 'चतुर्विधा' चतुष्प्रकारा उक्तास्तीर्थकरादिभिरिति गम्यते, 'ते' इति तान् देवान् 'मे' मम 'कीर्तयत' प्रतिपादयत 'शृणु' आकर्णय, शिष्य प्रतीदमाह, तत्कीर्त्तन च न भेदाभिधान विनेति तद्भेदानाह—'भोमिज्ज'त्ति भूमौ—पृथिव्या भवा भौमेयका:—भवनवासिनो, रत्नप्रभापृथिव्यन्तर्भूतत्वात्तद्भवनानाम्, उक्त हि—"इमीसे रयणप्पभाए पुढवीए असीउत्तरजोयणसयसहस्सबाहल्लाए उवरिं एग जोयणसहस्स ओगाहित्ता हेट्ठा

१ शोणितेषु वा शुक्रेषु वा शुक्रपुद्गलपरिशाटेषु वा विगतकलेवरेषु वा स्त्रीपुरुषसयोगेषु वा ग्रामनिर्धमनेषु वा नगरनिर्धमनेषु वा सर्वेष्वेवाशुचिस्थानेषु अत्र समूर्च्छिममनुष्याः समूर्च्छन्ति अङ्गुलस्यासख्यातवभागमात्रयाऽवगाहनया २ अस्या रत्नप्रभाया पृथ्व्या अशीत्युत्तरयोजनशतसहस्रबाहल्याया उपर्येक योजनसहस्र अवगाह्याधस्ता

अमुरेत्यादिसूत्राण्येकादश प्रायः प्रतीतान्येव, नवरम् 'असुराः' इत्यसुरकुमाराः, एवं नागादिष्वपि कुमारशब्दः सम्बन्धनीयः, सर्वेऽपि ह्यमी कुमाराकारधारिण एव, यथोक्तं—"कुमारवदेव कान्तदर्शनाः सुकुमाराः मृदुमधुरललितगतयः शृङ्गाराभिजातरूपविक्रियाः कुमारवच्चोद्धतरूपवेषभाषाभरणप्रहरणावरणयानवाहनाः कुमारवच्चोल्बणरागाः क्रीडनपराश्चेत्यतः कुमारा इत्युच्यन्ते"। 'तारागणाः' इति प्रकीर्णकतारकसमूहाः, दिशासु विशेषेण—मेरुप्रादक्षिण्यनित्यचारितालक्षणेन चरन्ति—परिभ्रमन्तीत्येवंशीला दिशाविचारिणः, तद्विमानानि ह्येकादशभिरेकविंशैर्योजनशतैर्मेरोश्चतसृष्वपि दिक्ष्वबाधया सततमेव प्रदक्षिणं चरन्तीति तेऽप्येवमुक्ताः, ज्योतींषि-उक्तन्यायतो विमानान्यालया—आश्रया येषां ते ज्योतिरालयाः। कल्प्यन्ते—इन्द्रसामानिकत्रायस्त्रिंशादिदशप्रकारत्वेन देवा एतेष्विति कल्पा—देवलोकास्तानुपगच्छन्ति—उत्पत्तिविषयतया प्राप्नुवन्तीति कल्पोपगाः, कल्पान्—उक्तरूपानतीताः—तदुपरिवर्त्तिस्थानोत्पन्नतया निष्क्रान्ताः कल्पातीताः। 'सोहम्मीसाणग'त्ति सुधर्मा नाम शक्रस्य सभा(सा)ऽस्मिन्नस्तीति सौधर्मः कल्पः स एषामवस्थितिविषयोऽस्तीति सौधर्मिणः, तथेशानो नाम द्वितीयदेवलोकस्तन्निवासिनो देवा अपि ईशानास्त एवेशानकाः एवमुत्तरत्रापि व्युत्पत्तिः कार्या। ग्रीवेव ग्रीवा लोकपुरुषस्य त्रयोदशरज्जूपरिवर्त्ती प्रदेशस्तस्मिन्निविष्टतयाऽतिभ्राजिष्णुतया च तदाभरणभूता ग्रैवेया—देवावासास्तन्निवासिनो देवा अपि ग्रैवेयाः, न विद्यन्ते उत्तराः—प्रधानाः स्थितिप्रभावसुखद्युतिलेश्यादिभिरेभ्योऽन्ये देवा इत्यनुत्तराः, 'हेट्ठिम'त्ति

'पञ्चधा' पञ्चप्रकारा 'जोइसिय'त्ति ज्योतिष्षु–विमानेषु भवा ज्योतिष्का ज्योतींष्येव वा ज्योतिष्काः, द्विविधा वैमानिकास्तथेति सूत्रार्थ ॥ एतानेव च नामग्राहमाह—

असुरा नागसुवण्णा, विज्जू अग्गी अ आहिया । दीवोदही दिसा वाया, थणिया भवणवासिणो ॥ २०४ ॥ पिसाय भूया जक्खा य रक्खसा किन्नरा य किंपुरिसा । महोरगा य गन्धव्वा अट्ठविहा वाणमंतरा ॥ २०५ ॥ चंदा सूरा य नक्खत्ता, गहा तारागणा तहा । दिसाविचारिणो चेव, पंचहा जोइसालया ॥ २०६ ॥ वेमाणिया उ जे देवा, दुविहा ते पकित्तिया । कप्पोवगा य बोद्धव्वा, कप्पाईया तहेव य ॥ २०७ ॥ कप्पोवगा बारसहा, सोहम्मीसाणगा तहा । सणकुमारमाहिंदा, बंभलोगा य लंतगा ॥ २०८ ॥ महासुक्का सहस्सारा, आणया पाणया तहा । आरणा अच्चुया चेव, इइ कप्पोवगा सुरा ॥२०९॥ कप्पाईया उ जे देवा, दुविहा ते वियाहिया । गेविज्जाणुत्तरा चेव, गेविज्जा नवविहा तहिं ॥ २१० ॥ हिट्ठिमा हिट्ठिमा चेव, हिट्ठिमा मज्झिमा तहा । हिट्ठिमा उवरिमा चेव, मज्झिमा हिट्ठिमा तहा ॥ २११ ॥ मज्झिमा मज्झिमा चेव, मज्झिमा उवरिमा तहा । उवरिमा हिट्ठिमा चेव, उवरिमा मज्झिमा तहा ॥ २१२ ॥ उवरिमा उवरिमा चेव, इइ गेविज्जगा सुरा । विजया वेजयंता य, जयंता अपराजिया ॥ २१३ ॥ सव्वट्ठसिद्धगा चेव, पंचहाणुत्तरा सुरा । इइ वेमाणिया एए, णेगहा एवमायओ ॥ २१४ ॥

चरणहीणो ॥ २ ॥" न च मरुदेव्यादीनामपि सर्वसंवररूपा क्रिया नास्ति, एवं क्रियावादिनाऽपि–'यद् यत्समनन्तरभावि तत् तत्कारणं, यथा पृथिव्यादिसामग्र्यनन्तरजन्मा तत्कारणोऽङ्कुरः, तथा च क्रियानन्तरभाविनी मुक्तिरिति यो हेतुरुपन्यस्तः सोऽप्यनेकान्तिकः, यतः स एवं वाच्यः–यदा शैलेश्यवस्थायां सर्वसंवररूपा क्रिया यदनन्तरं मुक्त्यवाप्तिस्तदा ज्ञानमस्ति वा न वेति ?, नास्ति चेच्छैलेश्यवस्थाऽपि कथम्, न हीयं केवलज्ञानं विनाऽवाप्यते, अथास्त्येव तदा सकलभावस्वभावावभासि केवलज्ञानम्, एवं च सति कथमुभयाविनाभावित्वेऽपि नोभयफलत्वं मुक्तेः, उक्तं च—"सहचारित्तेऽवि कहं कारणमेगं न उण एगं" आह–एवं ज्ञानक्रिययोः प्रत्येकं मुक्तेरवापिका शक्तिरसती कथं समुदायेऽपि भवति ?, न हि यद् येषु प्रत्येकं नास्ति तत्तेषां समुदायेऽपि भवति, यथा प्रत्येकमसत् समुदितास्वपि सिकतासु तैलं, प्रत्येकमसती च ज्ञानक्रिययोः मुक्तेरवापिका शक्तिः, तदुक्तम्–'पत्तेयमभावाओ निव्वाणं समुदियासुवि ण जुत्तं । णाणकिरियासु वुत्तुं सिकयासमुदाय तिल्लं व ॥ १ ॥', उच्यते, स्यादेवं यदि सर्वथा प्रत्येकं तयोर्मुक्त्यनुपकारितोच्येत, यदा तु तयोः प्रत्येकं देशोपकारिता समुदाये तु सम्पूर्णहेतुतोच्यते तदा न कश्चिद्दोषः, आह च—"वीसुं ण सवहु चिय सिकयातिल्लं व साहणाभावो । देसोवकारिया जा सा समवायंमि संपुण्णा ॥१॥"

१ सहचारित्वेऽपि कथं कारणमेकं न पुनरेकम् । २ प्रत्येकमभावात् निर्वाणं समुदितयोरपि न युक्तम् । ज्ञानक्रिययोर्वक्तुं सिकतासमुदाये तैलमिव ॥ १ ॥ ३ विष्वग् न सर्वथैव सिकतातैलवत्साधनाभावः । देशोपकारिता या सा समवाये संपूर्णा ॥ १ ॥

अधस्तना उपरितनपङ्क्त्यापेक्षया प्रथमास्त्रयस्तेष्वपि 'हेट्ठिम'त्ति' अधस्तना अधस्तनाधस्तना –प्रथमत्रिकाधोवर्त्तिन , 'हेट्ठिमा मज्झिमा तह'त्ति 'अधस्तनमध्यमा ' प्रथमत्रिकमध्यवर्त्तिन , 'हिट्ठिमा उवरिमा चेव'त्ति 'अधस्तनोपरितना ' प्रथमत्रिकोपरिवर्त्तिन , मध्ये भवा मध्यमा–मध्यमत्रिकवर्त्तिनस्तेष्वप्यधस्तना मध्यमाधस्तना , एव मध्यममध्यमा मध्यमोपरितना , उपरितना—उपरिवर्त्तित्रिकवर्त्तिनस्तेष्वधस्तना उपरितनाधस्तना , एवमुपरितनमध्यमा उपरितनोपरितना , 'इति' भेदसमासौ, तत एतावद्भेदा एव ग्रैवेयका सुरा , अभ्युदयविघ्नहेतून् विजय त इति विजयास्तथैव वैजय ता , 'उणादयो बहुल'मिति ( पा–३–३–१ ) बहुलवचनात् भनुप्रत्यये उपसर्गैकारस्यै-कार , एव जयन्ता परे —अन्यैरभ्युदयविघ्नहेतुभिरजिता–अनभिभूता अपराजिता , सर्वेऽर्थाः सिद्धा इव सिद्धा येषा ते सर्वार्थसिद्धा , ते हि विजितप्रायकर्माण , उपस्थितभद्रा एव तत्रोत्पत्तिभाज , इतीत्यादि निगमनम्, अत्र च वैमानिका इति वैमानिकभेदा , सामान्यविशेषयो कथञ्चिदनन्यत्वाद्, एवमादय इत्यादिशब्दस्य प्रकारवचनत्वादे-वप्रकारा इत्येकादशसूत्रार्थ ॥

लोगस्स एगदेसम्मि, ते सव्वे परिकित्तिया । इत्तो कालविभाग तु, तेसिं वुच्छ चउव्विह ॥ २१५ ॥ सतइ पप्पऽणाईया, अपज्जवसियावि य । ठिइ पडुच्च साईया, सपज्जवसियावि य ॥ २१६ ॥ साहीय सागर इक्क, उक्कोसेण ठिई भवे । भोमिज्जाण जहन्नेण, दसवाससहस्सिया ॥ २१७ ॥ पलिओवममेग

तु, उक्कोसेण वियाहियं । वंतराणं जहन्नेणं, दसवाससहस्सिया ॥ २१८ ॥ पलिओवममेगं तु, वासलक्खेण साहियं । पलिओवमठभागो, जोइसेसु जहन्निया ॥ २१९ ॥ दो चेव सागराइं, उक्कोसेणं वियाहिया । सोहम्मंमि जहन्नेणं, एगं च पलिओवमं ॥२२०॥ सागरा साहिया दुन्नि, उक्कोसेण वियाहिया । ईसाणंमि जहन्नेणं, साहियं पलिओवमं ॥ २११ ॥ सागराणि य सत्तेव, उक्कोसेण ठिई भवे । सणंकुमारे जहन्नेणं, दुन्नि ऊ सागरोवमा ॥ २२२ ॥ सागरा साहिया सत्त, उक्कोसेण वियाहिया । माहिंदंमि जहन्नेणं, साहिया दुन्नि सागरा ॥ २२३ ॥ दस चेव सागराइं, उक्कोसेण वियाहिया । बंभलोए जहन्नेणं, सत्त उ सागरोवमा ॥ २२४ ॥ चउद्दस उ सागराइं, उक्कोसेण वियाहिया । लंतगंमि जहन्नेणं, दस उ सागरोवमा ॥ २२५ ॥ सत्तरस सागराइं, उक्कोसेण वियाहिया । महासुक्के जहन्नेणं, चउद्दस सागरोवमा ॥ २२६ ॥ अट्ठारससागराइं, उक्कोसेण वियाहिया । सहस्सारे जहन्नेणं, सत्तरससागरोवमा ॥ २२७ ॥ सागरा अउणवीसं तु, उक्कोसेण ठिई भवे । आणयंमि जहन्नेणं, अट्ठारस सागरोवमा ॥२२८॥ वीसं तु सागराइं तु, उक्कोसेण ठिई भवे । पाणयंमि जहन्नेणं, सागरा अउणवीसई ॥ २२९ ॥ सागरा इक्कवीसं तु, उक्कोसेण ठिई भवे । आरणंमि जहन्नेणं, वीसई सागरोवमा ॥ २३० ॥ बावीससागराइं, उक्कोसेण ठिई भवे । अच्चुयंमि जहन्नेणं, सागरा इक्कवीसई ॥ २३१ ॥ तेवीससागराइं, उक्कोसेण ठिई भवे । पढमंमि जहन्नेणं, बावीसं सागरोवमा ॥ २३२ ॥ चउवीससागराइं, उक्कोसेण ठिई भवे । बिइयंमि जहन्नेणं, तेवीसं सागरोवमा ॥ २३३ ॥ पणवीससागरा ऊ,

उक्कोसेण ठिई भवे। तइयम्मि जहन्नेण, चउवीस सागरोवमा ॥ २३४ ॥ छव्वीससागराइ, उक्कोसेण ठिई भवे। चउत्थयम्मि जहन्नेण, सागरा पणवीसई ॥ २३५ ॥ सागरा सत्तवीस तु, उक्कोसेण ठिई भवे। पञ्चमम्मि जहन्नेण, सागरा उ छवीसई ॥ २३६ ॥ सागरा अट्ठवीस तु, उक्कोसेण ठिई भवे । छट्ठम्मि जहन्नेण, सागरा सत्तवीसई ॥ २३७ ॥ सागरा अउणतीस तु, उक्कोसेण ठिई भवे। सत्तम जहन्नेण, सागरा अट्ठवीसई ॥ २३८ ॥ तीस तु सागराइ, उक्कोसेण ठिई भवे । अट्ठमम्मि जहन्नेण, सागरा अउणतीसई ॥ २३९ ॥ सागरा इक्कतीस तु, उक्कोसेण ठिई भवे। नवमम्मि जहन्नेण, तीसइ सागरोवमा ॥ २४० ॥ तित्तीससागरा ऊ, उक्कोसेण ठिई भवे। चउसुपि विजयाईसु, जहन्ना इक्कतीसई ॥ २४१ ॥ अजहन्नमणुक्कोस, तित्तीस सागरोवमा। महाविमाणसव्वट्ठे, ठिई एसा वियाहिया ॥ २४२ ॥ जा चेव उ आउठिई, देवाण तु वियाहिया । सा तेसिं कायठिई, जहन्नमुक्कोसिया भवे ॥ २४३ ॥

क्षेत्रकालाभिधायि सूत्रद्वय प्राग्वत्, सादिसपर्यवसितत्वभावनार्थं साहीयमित्यादि ससर्विंशति सूत्राणि प्रायो निगदसिद्धान्येव, नवर 'साहीय'त्ति प्राकृतत्वात्साधिक 'सागर'मिति सागरोपममेकमुत्कृष्टेन स्थितिर्भवेद् 'भौमेयकाना' भवनवासिनाम्, इय च सामान्योक्ताप्युत्तरनिकायाधिपस्य बलेरेवावगन्तव्या, दक्षिणनिकाये त्विन्द्र-

स्यापि सागरोपममेव, उक्तं हि—"चमरवलि सारमहियं" 'सेसाणं'ति, जघन्येन दशवर्षसहस्राणि प्रमाणमस्या दशवर्षसहस्रिका, इयमपि सामान्योक्तावपि किल्बिषिकाणामेव स्थितिः, स्थितिप्रभावादीनां देवेषु सहैव ह्रासादिति, उत्तरत्रापि भावनीयम् । तथा पल्योपमं वर्षलक्षाधिकमिति ज्योतिषामुत्कृष्टस्थित्यभिधानं चन्द्रापेक्षं, सूर्यस्य तु वर्षसहस्राधिकं पल्योपममायुः, ग्रहाणां तदेव अ(न)तिरिक्तं, नक्षत्राणां तस्यैवार्द्धं, तारकाणां तच्चतुर्भागः तथा पल्योपमाष्टभागो ज्योतिष्षु जघन्यस्थितिरित्यपि तारकापेक्षमेव, शेषाणां पल्योपमचतुर्भागस्यैव जघन्यस्थितित्वात्, यत उक्तं 'चतुर्भागः शेषाणा'मिति (तत्त्वा–अ० ४ सू० ५३) । इह च सर्वत्रोक्तरूपयोरुत्कृष्टजघन्यस्थित्योरपान्तरालवर्त्तिनी मध्यमा स्थितिरिति द्रष्टव्यम् । तथा 'प्रथमे' इति प्रक्रमाद् ग्रैवेयकेऽधस्तनाधस्तने, एवं द्वितीयादिष्वपि ग्रैवेयक इति सम्बन्धनीयम् । अविद्यमानं जघन्यमिति—जघन्यत्वमस्यामित्यजघन्या तथा अविद्यमानमुत्कृष्टमित्युत्कृष्टत्वमस्यामित्यनुत्कृष्टा अजघन्या चासावनुत्कृष्टा चाजघन्यानुत्कृष्टा, मकारोऽलाक्षणिकः, महच्च तदायुःस्थित्याद्यपेक्षया विमानं न महाविमानं तच्च तत्सर्वं—निरवशेषा अर्थ्यमानत्वादर्थाः—अनुत्तरसुखादयो यस्मिंस्त(त्तथा तच्च त )त्सर्वार्थं च महाविमानसर्वार्थं तस्मिन्, स्थितिरिति सर्वत्रायुःस्थितिरेव, कायस्थितित्वाभिधाने तत्रानन्तरमनुत्पत्तिरेवेत्यभिप्राय इति सप्तविंशतिसूत्रार्थः ॥

१ चमरवल्योः सागरोपममधिकं ( च ) शेषाणां

अणतकालमुक्कोस, अतोमुहुत्त जहन्नय । विजढमि सए काए, देवाण हुज्ज अतर ॥ २४४ ॥

एएसिं वन्नओ चेव, गधओ रसफासओ । सठाणादेसओ वावि, विहाणाइ सहस्ससो ॥ २४५ ॥

अन्तरविधानाभिधायि च सूत्रद्वय पूर्ववद्भावयेयम् ॥ इत्थ जीवानजीवाश्च सविस्तरमुपदर्श्य निगमयितुमाह–

ससारत्था य सिद्धा य, इइ जीवा वियाहिया । रूविणो चेवऽरूवी य, अजीवा दुविहावि य ॥२४६॥

ससारस्थाश्च सिद्धाश्च 'इति' इत्येवप्रकारा जीवा 'व्याख्याता' विशेषेण—सकलभेदाभिव्याप्त्या प्रकथिता, रूपिणश्चैव 'रूवी य'त्ति अकारप्रश्लेषादरूपिणश्चाजीवा द्विविधा अपि व्याख्याता इति योग इति सूत्रार्थ ॥ यदुक्त 'जीवाजीवविभक्तिं शृणुतैकमनस' इति तत्र जीवाजीवविभक्तिमभिधाय 'शृणुतैकमनस' इति वचनात् कचि-(कश्चि)त् श्रवणश्रद्धानमात्रेणैव कृतार्थता मन्येतातस्तदाशङ्कापनोदार्थमाह—

इइ जीवमजीवे य, सुच्चा सद्दहिऊण य । सव्वनयाण अणुमए, रमिज्जा सजमे मुणी ॥ २४७ ॥

'इति' इत्येनप्रकारान् 'जीवमजीवेय'त्ति जीवाजीवान् 'एतान्' अनन्तरोक्तान् 'श्रुत्वा' अवधार्य 'श्रद्धाय च' तथेति प्रतिपद्य सर्वे च ते नयाश्च सर्वनया–ज्ञानक्रियानयान्तर्गता नैगमादयस्तेषामनुमत –अभिप्रेतस्तस्मिन्, कोऽर्थ ?–ज्ञानसहितसम्यक्चारित्ररूपे 'रमेत' रति कुर्यात्, क्व ?–सम्यग्यमन—पृथिव्यादिजीवोपमर्दतस्तृणपञ्चकाद्यजीवोपादानादेश्चोपरमण सयमस्तस्मिन् 'मुनि' उक्तरूप इति सूत्रार्थ ॥ संयमरतिकरणानन्तर यद्विधेय तदाह—

तओ बहूणि वासाणि, सामन्नमणुपालिया । इमेण कमजोगेणं, अप्पाणं संलिहे मुणी ॥ २४८ ॥

'ततः' तदनन्तरं 'बहूनि' अनेकानि वर्षाणि 'श्रामण्यं' श्रमणभावम् 'अनुपाल्य' आसेव्य 'अनेन' अनन्तरमेव वक्ष्यमाणेन क्रमः—परिपाटी तेन योगः—तपोऽनुष्ठानरूपो व्यापारः क्रमयोगस्तेनात्मानं 'संलिखेत्' द्रव्यतो भावतश्च कृशीकुर्यान्मुनिः, इह च बहूनि वर्षाणि श्रामण्यमनुपाल्येत्यभिदधता न प्रव्रज्याप्रतिपत्त्यनन्तरमेवैतद्विधिरित्युपदर्शितम्, उक्तं हि—"परिपालितो य दीहो परियाओ वायणा तहा दिण्णा । णिप्फाइया य सीसा सेयं मे अप्पणो काउं ॥ १ ॥" इति सूत्रार्थः ॥ सम्प्रति यदुक्तम्—'अनेन क्रमयोगेन संलिखेदि'ति, तत्र कोऽसौ क्रमयोगः ? इति प्रश्नसम्भवे संलेखणाभेदाभिधानपूर्वकं तमाह—

बारसेव उ वासाइं, संलेहुक्कोसिया भवे । संवच्छरं मज्झिमिया, छम्मासा य जहन्निया ॥ २४९ ॥ पढमे वासचउक्कंमि विगई(वित्ति) निज्जूहणं करे । बिइए वासचउक्कंमि, विचित्तं तु तवं चरे ॥ २५० ॥ एगंतरमायामं, कट्टु संवच्छरे दुवे । तओ संवच्छरऽद्धं तु, नाइविगिट्ठं तवं चरे ॥ २५१ ॥ तओ संवच्छरद्धं तु, विगिट्ठं तु तवं चरे । परिमियं चेव आयामं, तंमि संवच्छरे करे ॥ २५२ ॥ कोडीसहियमायामं, कट्टु संवच्छरे मुणी । मासद्धमासिएणं तु, आहारेणं तवं चरे ॥ २५३ ॥

---

१ परिपालितश्च दीर्घः पर्यायो वाचना च तथा दत्ता । निष्पादिताश्च शिष्याः श्रेयो मे आत्मनः कर्तुम् ॥ १ ॥

वारसेत्यादि सूत्रपञ्चकम् । द्वादशैव न तु न्यूनान्यधिकानि वा 'तु' पूरणे 'वर्षाणि' संवत्सरान् संलेखन द्रव्यत शरीरस्य भावत कषायाणा कृशताऽऽपादन संलेखा, संलेखनेति योऽर्थ, 'उक्कोसिय'त्ति उत्कृष्टा सर्वगुर्वी भवेत्, 'संवच्छर'ति संवत्सर-वर्षं मध्यमैव मध्यमिका, षण्मासान् 'च' पुनरर्थे भिन्नक्रमस्ततो जघन्यैव जघन्यिका पुन, पठन्ति च-'उक्कोसिया' इत्यत्र 'उक्कोसतो'त्ति, अन्यत्र तु 'मज्झिमउत्ति जहण्णतो'त्ति । इत्थ संलेखनायास्त्रैविध्ये उत्कृष्टाया क्रमयोगमाह—'प्रथमे' आद्ये 'वर्षचतुष्के' संवत्सरचतुष्टये वर्त्तन वृत्तिर्निर्वहणमित्यर्थ प्रस्तावात्क्षीरादिविकृतिस्तस्या निर्यूहणम्—आचामाम्लस्य निर्विकृतिकस्य वा तपस करणेन परित्यागो वृत्तिनिर्यूहणमनु (ण तत्) कुर्यात्, पठ्यते च—'विगईनिज्जूहण करे'त्ति स्पष्टम्, इद च विचित्रतपस पारणके, यदाह निशीथचूर्णिकृत्—'अन्ने चत्तारि वरिसे विचित्त तव काउ आयविलेण पारेइ निव्विएण वा पारेइ"त्ति, केवलमनेन निर्युक्तिकृता च द्वितीये वर्षचतुष्टये एतदुक्तम्, अत्र च सूत्रे प्रथमे दृश्यत इत्युभयथापि करणे दोषाभावमनुमिमीमहे, तयोरस्य च प्रमाणभूतत्वात्, द्वितीये वर्षचतुष्के 'विचित्र तु' इति विचित्रमेव चतुर्थषष्ठाष्टमादिरूप तपश्चरेत्, अत्र च पारणके सम्प्रदाय —"उग्गमविसुद्ध सव्व कप्पणिज्ज पारेति"त्ति । एकेन—चतुर्थलक्षणेन तपसाऽन्तर—व्यवधान यस्मिंस्तदेकान्तरम् 'आयामम्' आचाम्ल 'कट्टु'त्ति कृत्वा संवत्सरौ द्वौ, 'तत' तदनन्तर 'संवत्सरार्द्ध' मासषट्क 'तु' पूरणे 'न'

१ अन्यानि चत्वारि वर्षाणि विचित्र तप कृत्वाऽऽचाम्लेन निर्विकृतिकेन वा पारयति २ उद्गमविशुद्ध सर्व कल्पनीय पारयति

नैव 'अतिविकृष्टम्' अष्टमद्वादशादि तपः 'चरेत्' आसेवेत् । ततः 'संवत्सरार्द्धं' पुनः षण्मासलक्षणं 'विकृष्टम्' उक्तरूपं 'तुः' एवकारार्थो विकृष्टमेव तपश्चरेत्, अत्रैव विशेषमाह—'परिमियं चेव'त्ति, 'चः' पूरणे ततः परिमितमेव, द्वादशे हि वर्षे कोटीसहितमायामम्, इह तु चतुर्थादिपारणक एवेत्येवमुक्तम्, आयामं—आचाम्लं तस्मिन्ननन्तरं द्विधा विभज्योपदर्शिते संवत्सरे कुर्यात्, पठन्ति च—"परिमियं चेव आयामं, गुणुक्कस्सं मुणीचरे । तत्तो संवच्छरद्धऽण्णं, विगिट्ठं तु तवं चरे ॥ १ ॥" इत्थमेकादशसु वर्षेष्वतिक्रान्तेषु द्वादशे वर्षे किमसौ विदध्यात्? इत्याह—कोट्यौ—अग्रे प्रत्याख्यानाद्यन्तकोणरूपे सहिते—मिलिते यस्मिंस्तत्कोटीसहितं, किमुक्तं भवति?—विवक्षितदिने प्रातराचाम्लं प्रत्याख्याय तच्चाहोरात्रं प्रतिपाल्यं, पुनर्द्वितीयेऽह्नि आचाम्लमेव प्रत्याचष्टे, ततो द्वितीयस्यारम्भकोटिराद्यस्य तु पर्यन्तकोटिरुभे अपि मिलिते भवत इति तत्कोटीसहितमुच्यते, अन्ये त्वाहुः—आचाम्लमेकस्मिन् दिने कृत्वा द्वितीयदिने च तपोऽन्तरमनुष्ठाय पुनस्तृतीयदिन आचाम्लमेव कुर्वतः कोटीसहितमुच्यते, उभयार्थसंवादिनी चेयं गाथा—"[1]पट्ठवणओ य दिवसो पच्चक्खाणस्स णिट्ठवणओ य । जहियं समिंति दुन्नि उ तं भण्णइ कोडिसहियं तु ॥ १ ॥" इत्थमुक्तरूपं कोटीसहितमाचामाम्लं कृत्वा 'संवत्सरे' वर्षे प्रक्रमाद् द्वादशे 'मुनिः' साधुः 'मास'त्ति सूत्रत्वान्मासं भूतो मासिकस्तेनैवमार्द्धमासिकेन 'आहारेण'न्ति, उपलक्षणत्वादाहारत्यागेन, पाठान्तर-

१ प्रस्थापको दिवसः प्रत्याख्यानस्य निष्ठापकश्च । यत्र समितः द्वौ तु तद्भण्यते कोटीसहितमेव ॥ १ ॥

तश्च क्षपणेन 'तप' इति प्रस्तावाद्भक्तपरिज्ञानादिकमनशन 'चरेत्' अनुतिष्ठेत्, निशीथचूर्णिसम्प्रदायश्चात्र–"अन्नेवि दोवि वरिसे चउत्थ काउ आयबिलेण पारेइ, एक्कारसमे य वरिसे पढम छम्मास अविगिट्ठ तव काउ कजिएण पारेइ, बितिए छम्मासे विगिट्ठ तव काउ आयबिलेण पारेइ, दुवालसम वरिस निरतर हीयमाण उसिणोदएण आयबिल करेत्ति, त कोडीसहिय भणति जेणायबिलस्स कोडी कोडीए मिल्इ, जहा य दीवस्स वत्ती तेल्ल च सम णिट्ठाइ तहा बारसमे वरिसे आहार परिहावेइ जहा आहारसलेखना आउय च सम णिट्ठयति, इत्थ बारसगस्स वासस्स पच्छिमा जे चत्तारि मासा तेसु तेलगड्डूसे णिसट्ठे धरित्तु खेलमल्लगे णिट्ठुहइ मा अतिरुक्खत्तणओ मुहजतविमयाओ भविस्सइ, तस्स य विसवादे णो सम णमोकार साहेति" इति सूत्रपञ्चकार्थ ॥ इत्थ प्रतिपन्नानशनस्याप्यशुभभावनाना मिथ्यादर्शनानुरागादीना च परिहार्यता तद्विपर्ययाणामासेव्यता च ज्ञापयितु यथाक्रममनर्थहेतुतामर्थहेतुता च दर्शयन्नाह—

१ अन्ये अपि द्वे वर्षे चतुर्थं कृत्वाऽऽचामाम्लेन पारयति, एकादशे च वर्षे प्रथम षण्मासान् अविकृष्ट तप कृत्वा काञ्जिकेन पारयति, २ द्वितीयेषु षट्सु मासेषु विकृष्ट तप कृत्वाऽऽचामाम्लेन पारयति, द्वादशे तु वर्षे निरन्तर हीयमानमुष्णोदकेनाचामाम्ल करोति, तत्कोटीसहित भण्यते येनाचामाम्लस्य कोटी कोट्या मिलति, यथा च दीपस्य वर्त्ती तैल च सम निस्तिष्ठत तथा द्वादशे वर्षे आहार परिहापयति यथाऽऽहारसलेखना आयुश्च सम निस्तिष्ठत, अत्र द्वादशस्य वर्षस्य पश्चिमा ये चत्वारो मासास्तेषु तैलगण्डूषान् निसृष्ट (अतिशयेन) धृत्वा श्लेष्ममल्लके निक्षिपति, माऽतिरूक्षत्वात् मुखयन्त्रविसवादो भूदिति, तस्य च विसवादे न सम्यक् नमस्कार साधयेत् (पठेत्)

कंदप्पमाभिओगं किब्बिसियं मोहमासुरत्तं च। एयाओ दुग्गईओ मरणंमि विराहया हुंति ॥ २५४ ॥ सम्म-मिच्छादंसणरत्ता, सनियाणा हु हिंसगा। इय जे मरंति जीवा, तेसिं पुण दुल्लहा बोही ॥ २५५ ॥ सम्म-दंसणरत्ता अनियाणा सुक्कलेसमोगाढा। इय जे मरंति जीवा सुलभा तेसिं भवे बोही ॥ २५६ ॥ मिच्छा-दंसणरत्ता सनियाणा कण्हलेसमोगाढा। इय जे मरंति जीवा तेसिं पुण दुल्लहा बोही ॥ २५७ ॥

'कंदप्प'त्ति कन्दर्पभावना प्राग्वत्, पदेऽपि पदैकदेशस्य दर्शनात्, एवमभियोग्यभावना किल्बिषभावना मोह-भावना 'आसुरत्तं च'त्ति आसुरत्वभावना च, एताः कन्दर्पादिभावना दुर्गतिहेतुतया दुर्गतयो 'नड्वलोदकं पादरोग' इति न्यायात्, दुर्गतिश्चेहार्थाद्देवदुर्गतिः, तद्वशतो हि संव्यवहारतश्चारित्रसत्तायामप्येतद्विधनिकायोत्पत्तिरेव, चर-णविकलतायां तु नानागतिभाजनतैव, उक्तं हि—"जो संजओवि एयासु अप्पसत्थासु भावणं कुणइ। सो तव्विहेसु गच्छति सुरेसु भइओ चरणहीणो ॥ १ ॥" कदा? इत्याह—'मरणे' मरणसमये, कीदृश्यः सत्यः? इत्याह—विराधिकाः सम्यग्दर्शनादीनामिति गम्यते 'भवन्ति' जायन्ते, इह च मरण इत्यभिधानं पूर्वमेतत्सत्तायामप्युत्तरकालं शुभभावे सुगतेरपि सम्भवात्। मिथ्यादर्शनम्—अतत्त्वे तत्त्वाभिनिवेशरूपं तस्मिन् रक्ताः—आसक्ता मिथ्यादर्शनरक्ताः, सम्यक्त्वादिविराधनायां ह्येतदासक्तिरेव भवति, सह निदानेन—साभिष्वङ्गप्रार्थनारूपेण वर्त्तन्त इति सनिदानाः 'हुः'

१ यः संयतोऽपि एताभिरप्रशस्ताभिः भावना करोति। स तद्विधेपु गच्छति सुरेपु भक्तश्चरणहीनः ॥ १ ॥

॥ श्रीजिनाय नम ।नम सर्वविदे । व्यारयात विनयश्रुतारय प्रथममध्ययनम्, इदानीं द्वितीय व्यारयायते, अस्य चायमभिसम्बन्ध –इहानन्तराध्ययने विनय सप्रपञ्च पञ्चप्रकार उक्त, स च किं स्वस्थावस्थैरेव समाचरितव्य उत परीपहमहासैन्यसमरसमाकुलितमनोभिरपि?, उभयावस्थैरपीति ब्रूम । ननु तर्हि केऽमी परीपहा ?, किंरूपा ?, किंचालम्बनमुररीकृत्यैतेषु सत्स्वपि न विनयविलङ्घनमित्याशङ्कापोहाय परिपहास्तत्स्वरूपादि चाभिधेयमित्यनेन सम्बन्धेनायातस्यास्य महार्थस्य महापुरस्येव चतुरनुयोगद्वारस्वरूपमुपवर्णनीय, तत्र च नामनिष्पन्ननिक्षेपस्य परीपह इति नाम, अतस्तन्निक्षेपदर्शनायाह भगवान्निर्युक्तिकार —

णासो परीसहाण चउविहो दुविहो य(उ)दवमि । आगमनोआगमतो नोआगमओ य सो तिविहो ॥६५॥

व्याख्या—नियत निश्चित वाऽऽसन–नामादिरचनात्मक क्षेपण न्यासो–निक्षेप इत्यर्थ, अय च केपामित्याह–परीति–सम तात् स्वहेतुभिरुदीरिता मार्गाच्यवननिर्जरार्थं साध्वादिभि सहन्त इति परीपहास्तेपा, चत्वारो विधा –प्रकारा अस्येति चतुर्विधो, नामस्थापनाद्रव्यभावभेदात्, तत्र नामस्थापने क्षुण्णे इत्यनादृत्य द्रव्यपरीपहमाह–'द्विविधो' द्विभेद, तु पूरणे, भवति 'द्रव्य' इति द्रव्यविपय, प्रक्रमात्परिपह, स च 'आगमणोआगमतो' त्ति आगमतो नोआगमतश्च, तत्र आगमतो ज्ञाता तत्र चानुपयुक्त इत्यागमस्वरूपमतिपरिचितमिति परिहृत्य नोआगमत

१ अधिकार उपवर्णने वा इत्यध्याहार्यम् ।

जिणवयणे अणुरत्ता जिणवयणं जे करेंति भावेणं। अमला असंकिलिट्ठा ते हुंति परित्तसंसारा ॥२५८॥
बालमरणाणि बहुसो अकाममरणाणि चेव बहुयाणि। मरिहंति ते वराया जिणवयणं जे न याणंति २५९

जिना इहार्थात्तीर्थकृतस्तेषामुच्यत इति वचनम्—आगमो जिनवचनं तस्मिन् 'अनुरक्ताः' सततं प्रतिबद्धाः, तथा 'जिनवचनम्' इति वाच्यवाचकयोरभेदोपचाराज्जिनवचनाभिहितमनुष्ठानं ये 'कुर्वन्ति' अनुतिष्ठन्ति 'भावेन' आन्तरपरिणामेन न तु बहिर्वृत्त्यैव तत एवाविद्यमानो मल इति भावमलस्तदनुष्ठानमालिन्यहेतुर्मिथ्यात्वादिरेषामित्यमलाः, तथा 'असंक्लिष्टाः' रागादिसङ्क्लेशरहितास्ते 'भवन्ति' जायन्ते परितः—समस्तदेवादिभवाल्पतापादनेन समन्तात्खण्डितः परिमित इतियावत् स चासौ संसारश्च स विद्यते येषां तेऽमी परीतसंसारिणः—कतिपयभवाभ्यन्तरमुक्तिभाज इति योऽर्थः, सूत्रे च प्राकृतत्वाद्वचनव्यत्ययः। 'बालमरणैः' विषभक्षणोद्बन्धननिबन्धनैः 'बहुशः' अनेकधा 'अकाममरणानि' यान्यत्यन्तविषयगृध्नुत्वेनानिच्छतां भवन्ति तैश्च, उभयत्र सुब्व्यत्ययः प्राग्वत्, 'एव चे'ति पूरणे 'बहूनि' अनेकानि मरिष्यन्ते ते 'वराकाः' बहुदुःखभाजनतयाऽनुकम्पनीयाः 'जिनवचनम्' उक्तरूपं ये 'न जानन्ति' नावबुध्यन्ते ज्ञानफलत्वादनुष्ठानस्य न चानुतिष्ठन्तीति सूत्रद्वयार्थः॥ यतश्चैवमतो जिनवचनं भावतः कर्त्तव्यं, तद्भावकरणं चालोचनया, सा च न तच्छ्रवणार्हान् विना, ते च न हेतुव्यतिरेकेणेति यैर्हेतुभिरमी भवन्ति तानाह—

पूरणे 'हिंसका' प्राण्युपमर्दकारिण 'इति' इत्येवरूपा ये 'म्रियन्ते' प्राणास्त्यजन्ति जीवास्तेषा पुनर्दुर्लभा 'बोधि' प्रेत्य जिनधर्मावाप्ति । सम्यग्दर्शनम्–उक्तस्वरूप तस्मिन् रक्ता सम्यग्दर्शनरक्ता अनिदाना 'शुक्लेश्याम्' उक्तलक्षणाम् 'अवगाढा' प्रविष्टा इति, ये म्रियन्ते जीवा सुलभा तेषा भवेद्बोधि । मिच्छासूत्र प्राग्वत्, ननु पुनरुक्तत्वादनर्थकमिद सूत्र, कृष्णलेश्यावगाहनमपि हिंसकत्वेन पञ्चाश्रवप्रमत्तत्वादितल्लक्षणाभिधानादर्थत उक्तमेवेति, अत्रोच्यते, नैव, विशेषज्ञापनार्थत्वादस्य, उक्त हि–"पुव्वभणिय तु पुच्छा ज भण्णति तत्थ कारण वेति। पडिसेहो य अणुन्ना करण (हेउ) विसेसोवलभा वा ॥१॥" विशेषश्च सर्वत्र तथाविधसङ्क्लिष्टपरिणामरूपता द्रष्टव्या, अन्यथा हि सामान्येनैतद्विशेषणविशिष्टानामपि तद्भवे भवान्तरे वा बोधिदर्शनाद्यभिचार्येवेद भवेदिति। इह चाद्येन सूत्रेण कन्दर्पभावनादीना दुर्गतिरूपानर्थस्य निबन्धनत्वमुक्तमर्थाच्च तद्विपरीतभावनाना सुगतिस्वरूपार्थस्य द्वितीयेन मिथ्यादर्शनरक्तत्वादीना दुर्लभबोधिलक्षणानर्थस्य तृतीयेन सम्यग्दर्शनरक्तत्वादीना सुलभबोध्यात्मकार्थस्य चतुर्थेन उक्तनीत्या मिथ्यादर्शनरक्तत्वादीनामेव विशेषज्ञापनमिति सूत्रचतुष्टयार्थ ॥ अन्यच्च–जिनवचनाराधनामूलमेव सकल सलेखनादि श्रेयोऽतस्तत्रैवाऽऽदरख्यापनायान्वयव्यतिरेकाभ्या तन्माहात्म्यमाह–

१ पूर्वभणितमपि यत्पश्चाद्भण्यते तत्र कारण ब्रुवति । प्रतिषेधश्चानुज्ञा कारणविशेषोपलम्भो वा ॥ १ ॥

निमित्तंमि होइ पडिसेवी । एएहिं कारणेहिं आसुरियं भावणं कुणइ ॥ २६४ ॥ सत्थग्गहणं विसभक्खणं च जलणं च जलपवेसो य । अनयारभंडसेवी जम्मणमरणाणि बंधंति ॥ २६५ ॥

'कंदप्पकोकुईया' इति, कन्दर्पः—अट्टट्टहासहसनम् अनिभृतालापाश्च गुर्वादिनाऽपि सह निष्ठुरवक्रोक्त्यादिरूपाः कामकथोपदेशप्रशंसाश्च कन्दर्पो, यत उक्तम्—"कहकहकहस्स हसणं कंदप्पो अणिहुया य संलावा । कंदप्पकहाकहणं कंदप्पुवएससंसा य ॥ १ ॥" कौकुच्यं द्विधा—कायकौकुच्यं वाक्कौकुच्यं च, तत्र कायकौकुच्यं यत्स्वयमहसन्नेव भ्रूनयनवदनादि तथा करोति यथाऽन्यो हसति, उक्तञ्च—"भुमनयणदसनच्छएहिं करचरणकण्णमाईहिं । तं तं करेइ जह जह हसइ परो अत्तणा अहसं ॥ २ ॥" यत्तु तज्जल्पति येनान्यो हसति तथा नानाविधजीवविरुतानि मुखातोद्यवादितां च विधत्ते तद्वाक्कौकुच्यम्, उक्तं हि—"वायाए कुकुइओ तं जंपइ जेण हस्सए अन्नो । णाणाविहजीवरुए कुव्वइ मुहतूरए चेव ॥ ३ ॥" ततः कन्दर्पश्च कौकुच्यं च कन्दर्पकौकुच्ये कुर्वन्निति शेषः 'तह'त्ति येन प्रकारेण परस्य विस्मय उपजायते तथा यच्छीलं च—फलनिरपेक्षा वृत्तिः स्वभावश्च—परविस्मयोत्पादनाभिसन्धिनैव

---

१ कहकहकहस्य हसनं कन्दर्पोऽनिभृताश्चोल्लापाः । कन्दर्पकथाकथनं कन्दर्पोपदेशप्रशंसा च ॥ १ ॥ २ भ्रूनयनदशनच्छदैः करचरणकर्णादिभिः । तत्तत्करोति यथा यथा हसति पर आत्मनाऽहसन् ॥ २ ॥ ३ वाचा कुकोचिकस्तज्जल्पति येन हसत्यन्यः । नानाविधजीवरुतान् करोति मुखतूर्याणि वा ॥ ३ ॥

वहु आगमविन्नाणा समाहिउप्पायगा य गुणगाही। एएण कारणेण अरिहा आलोयण सोउ ॥ २६० ॥

वहु –अङ्गोपाङ्गादिवहुभेदतया वह्वर्थतया वा स चासावागमश्च–श्रुत वह्वागमस्तस्मिन् विशिष्टज्ञानम्–अवगम एषामिति वह्वागमविज्ञाना 'समाहि'त्ति समाधे –उक्तरूपस्योत्पादका–जनका, किमुक्त भवति?–देशकाला-शयादिविन्नतया समाधिमेव मधुरगम्भीरभणितिप्रभृतिभिरालोचनादातॄणामुत्पादयन्ति, चशब्दो भिन्नक्रमस्तत 'गुणग्गाहि य'त्ति गुणग्राहिणश्च उपबृहणार्थ परेषा सम्यग्दर्शनादिगुणग्रहणशीला 'एएण कारणेण'ति 'एते' अनन्तरमेव विशेषणतयोपात्तैर्वह्वागमविज्ञानत्वादिभि 'कारणै' हेतुभि 'अर्हा' योग्या भवन्त्याचार्यादय इति गम्यते 'आलोचना' विकटनामर्थात्परैर्दीयमाना 'श्रोतुम्' आकर्णयितुम्, एते ह्यालोचनाश्रवणफल परेषा विशु-द्धिलक्षण सम्पादयितुमीशते, व्यत्ययश्च सर्वत्र प्राग्वदिति सूत्रार्थ ॥ इत्थमनशनस्थितेन यत्कृत्य तत्प्रसङ्गमुपदर्श्य सम्प्रति कन्दर्पादिभावनाना यत्परिहार्यत्वमुक्त तत्र यत्कुर्वता ता भवन्ति तत्परिहारेणैव तासा परिहारो न चा-ज्ञातस्यायमिति ज्ञापनार्थमाह—

कदप्पकोक्कुईया तह सीलसहावहासविगहाहि । विम्हावितो य पर कदप्प भावण करइ ॥ २६१ ॥
मताजोग काउ भूईकम्म च जे पउजति। सायरसइड्ढिहेउ अभिओग भावण कुणइ ॥२६२॥ नाणस्स केवलीण धम्मायरियस्स सघसाहूण। माई अवन्नवाई किब्बिसिय भावण कुणइ ॥ २६३ ॥ अणुवद्धरोसपसरो तह य

च—आचार्यस्तस्य च सङ्घः प्रतीतः साधवश्च सङ्घसाधवस्तेषामवर्णवादीति सम्बन्धः, तथाऽवर्णः—अश्लाघात्मकः, स चायं श्रुतज्ञानस्य—पुनः पुनस्त एव कायास्तान्येव व्रतानि तावेव च प्रमादाप्रमादाविहाभिधेयौ, मोक्षाधिकारिणां च किं ज्योतिर्योनिपरिज्ञानेनेत्यादि भाषते, उक्तञ्च—"काया वया य ते च्चिय ते चेव पमाय अप्पमाया य। मोक्खाहिगारियाणं जोइसजोणीहिं किं च पुणो ? ॥ १॥" केवलिनां च किमेषां ज्ञानदर्शनोपयोगौ क्रमेण भवत उत युगपत् ?, यदि तावत्क्रमेण तदा ज्ञानकाले न दर्शनं दर्शनकाले च न ज्ञानमिति परस्परावरणतैव प्राप्ता, अथ युगपत्तत एककालत्वाद् द्वयोरप्यैक्यापत्तिः, उक्तञ्च—"एगतरसमुप्पाए अन्नोऽन्नावरणया दुवेण्हंपि। केवलदंसणणाणाणमेगकाले य एगत्तं ॥२॥" धर्माचार्यस्य जात्यादिभिरधिक्षेपणादि, उक्तञ्च—"जैचाइहिं अवन्नं विहसइ वट्टइ णयावि उववाए। अहिओ छिद्दप्पेही पगासवादी अणणुकूलो ॥ ३ ॥" सङ्घस्य च—बहवः श्वशृगालादिसङ्घास्तत्कोऽयमिह सङ्घः ?, साधूनां च—नामी परस्परमपि सहन्ते, तत एव देशान्तरयायिनः, अन्यथा त्वेकत्रैव संहता तिष्ठे-

१ काया व्रतानि च तान्येव तावेव प्रमादाप्रमादौ च। मोक्षाधिकारिणां ज्योतिर्योनिभिः किं च पुनः ? ॥ १ ॥ २ एकतरसमुत्पादे अन्योऽन्यावारणता द्वयोरपि। केवलदर्शनज्ञानयोरेककाले चैकत्वम् ॥ २ ॥ ३ जात्यादिभिरवर्णं (करोति) उपहसति वर्त्तते न चाप्युपपाते। अहितश्छिद्रप्रेक्षी प्रकाशवादी अननुकूलः ॥ ३ ॥

तत्त मुखविकारादिक हसन च–अट्टट्टहासादि विकथाश्च–परविस्मापकविविधोल्लापरूपा शीलस्वभावहसनविकथास्ताभि 'विस्मापयन्' सविस्मय कुर्वन् 'परम्' अन्य 'कद्प्प'ति कन्दर्पयोगात्कन्दर्पास्ते च प्रस्तावाद्देवास्तेपामियमुक्तनीत्या तेपूत्पत्तिनिमित्ततया कान्दर्पी ता भाव्यते–आत्मसान्नीयतेऽनयाऽऽत्मेति भावना–तद्भावाभ्यासरूपा ता 'करोति' विधत्ते, एतदनुसारेणोत्तरत्रापि भावनीयम् । मन्त्रा —प्रागुक्तरूपास्तेपामायोगो—व्यापारण मन्त्रायोगस्त 'कृत्वा' विधाय, यद्विवा 'मतायोग'ति सूत्रत्वा मन्त्राश्च योगाश्च—तथाविधद्रव्यसम्बन्धा मन्त्रयोग तत् 'कृत्वा' व्यापार्य 'भूत्या' भस्मनोपलक्षणत्वान्मृदा सूत्रेण वा कर्म–रक्षार्थं वसत्यादे परिवेष्टन भूतिकर्म, यथोक्तम्–"भूईए मट्टियाए व सुत्तेण व होइ भूइकम्म तु । वसहीसरीरभडगरक्ख"त्ति, चशब्दात्कौतुकादि च 'जे पउजति' प्राकृतत्वाद्य. प्रयुङ्क्ते, किमर्थं?, सात–सुख रसा–माधुर्यादय ऋद्धि –उपकरणादिसम्पदेता हेतवो–निमित्तानि यस्मिस्तत्सातरसर्द्धिहेतु, कोऽभिप्राय ?–साताद्यर्थम्, 'अभियोग'ति आभियोगीं भावना करोति, इह च सातरसर्द्धिहेतोरित्यभिधान निःस्पृहस्यापवादत एतत्प्रयोगे प्रत्युत गुण इति स्थापनार्थम्, उक्त हि–"एयाणि गारवट्ठा कुणमाणो आभियोगिय बधे । बीय गारवरहिओ कुवइ आराहगो चेव ॥२॥" 'ज्ञानस्य' श्रुतज्ञानादे 'केवलिना' केवलज्ञानवता धर्मोपदेष्टा

१ भूत्या मृत्तिकया वा सूत्रेण वा भवति भूतिकर्म तु । वसतिशरीरभाण्डरक्षेति । २ एतानि गौरवार्थं कुर्वन्नाभियोगिक बध्नाति । बीज (द्वितीये पदे) गौरवरहित करोति आराधक एव ॥ २ ॥

तदासेवनात्, 'एताभ्याम्' अनन्तरोक्ताभ्याम् 'आसुरियं'ति आसुरीं भावनां करोति । शस्यतेऽनेनेति शस्त्रं—खड्गक्षुरिकादि तस्य ग्रहणं—स्वीकरणमुपलक्षणत्वादस्यात्मनि वधार्थं व्यापारणं शस्त्रग्रहणं, वेवेष्टि—व्याप्नोति झगित्यात्मानमिति विषं—तालपुटादि तस्य भक्षणम्—अभ्यवहरणं विषभक्षणं, चशब्द उक्तसमुच्चयार्थः पर्यन्ते योक्ष्यते, 'ज्वलनं' दीपनमात्मन इति गम्यते, जले प्रवेशो—निमज्जनं जलप्रवेशः, चशब्दोऽनुक्तभृगुपातादिपरिग्रहार्थः, आचारः—शास्त्रविहितो व्यवहारस्तेन भाण्डम्—उपकरणमाचारभाण्डं न तथाऽनाचारभाण्डं तस्य सेवा—हास्यमोहादिभिः परिभोगोऽनाचारभाण्डसेवा, गम्यमानत्वादेतानि कुर्वन्तो यतयः, किमित्याह—जन्ममरणान्युपचारात्तन्निमित्तकर्माणि 'बध्नन्ति' आत्मना श्लेषयन्ति, संक्लेशजनकत्वेन शस्त्रग्रहणादीनामनन्तभवहेतुत्वात्, अनेन चोन्मार्गप्रतिपत्त्या मार्गविप्रतिपत्तिराक्षिप्ता, तथा चार्थतो मोही भावनोक्ता, यतस्तल्लक्षणम्—"उम्मग्गदेसओ मग्गनासओ मग्गविप्पडिवत्ती । मोहेण य मोहित्ता संमोहं भावणं कुणइ ॥ १ ॥"त्ति, ननु पूर्वं तद्विधदेवगामित्वं भावनाफलमुक्तमिह त्वन्यदेवास्या इति न कथं विरोधः ?, उच्यते, अनन्तरफलमाश्रित्य तदुदितमिदं [ दमेव चूर्ण्यां दृश्यते, तत्रैव जीवेत्यादि ] तु परम्पराफलं सर्वभावनानामिति भावनार्थमित्थमुपन्यासः, तथा चोक्तम्—"एयाओ भावणाओ भावित्ता देवदुग्गइं

१ उन्मार्गदेशको मार्गनाशको मार्गविप्रतिपत्तिः । मोहेन च मोहयित्वा संमोहीं भावनां करोति ॥१॥ २ एता भावना भावयित्वा देवदुर्गतिं

गुरत्वरितगतयो–मन्दगतयस्ततो वक्रवृत्तिरियमेपामित्यादि, यथोक्तम्—"अविसहणाऽतुरियगती अणाणुवित्ती य अवि गुरूणपि । खणमित्तपीइरोसा गिहिवच्छलगा य सजयग ॥ १ ॥"त्ति, एवविधमवर्ण वदितुम्–अभिधातु शीलमस्येत्यवर्णवादी, माया—शाठ्यमस्य स्वस्वभावविनिगूहनादिनाऽस्तीति मायी, यथोक्तम्—"गूहेइ आयसहाव घायइ य गुणे परस्स सतेवि। चोरोव्व सव्वसकी गूढायारो वितहभासि ॥ २ ॥"त्ति किल्बिषिकीभावना करोति । इदानीं विचित्रत्वात्सूत्रकृतेर्मोहीप्रस्तावेऽपि यत्कुर्वताऽऽसुरी कृता भवति तदाह–अनुबद्ध —सन्तत , कोऽर्थ ?—अव्यवच्छिन्नो रोषस्य—क्रोधस्य प्रसरो—विस्तारोऽस्येति अनुबद्धरोषप्रसर , सदा विरोधशीलतया पश्चादननुतापितया क्षमणादावपि प्रसत्त्यप्राप्त्या चेत्यभिप्राय , तथा चोक्तम्–"णिच्च वोग्गहसीला काऊण य याणुतप्पए पच्छा । ण य खामिओ पसीयइ अवराहीण दुवेण्हपि ॥३॥" 'तथे'ति समुच्चये 'च ' पूरणे निमित्तमिह ज्ञेयपरिच्छित्तिकारण, तथातीतादित्रिविधकालभेदात्त्रिधा, उक्त हि–"तिविह होइ निमित्त तीयपडुप्पण्णऽणागय चेव । तेण विणा उ ण णेय णज्जइ तेण णिमित्त तु ॥ ४ ॥" तद्विषये 'भवति' जायते 'प्रतिसेवी' इत्यवश्यप्रतिसेवकोऽपुष्टालम्बनेऽपि

---

१ असहनात्वरितगतयोऽनानुवृत्तयश्चापि गुरूणामपि । क्षणमात्रप्रीतिरोषा गृहिवत्सलाश्च सयता ॥ १ ॥ २ गूहयत्यात्मस्वभाव घातयति च गुणान् परस्य सतोऽपि । चौर इव सर्वशङ्की गूढाचारो वितथभाषी ॥२॥ ३ नित्य व्युद्ग्रहशीला कृत्वा न चानुतपति पश्चात् । न च क्षमित प्रसीदति अपराधिना (उपरि) द्वयोरपि ॥ ३ ॥ ४ त्रिविध भवति निमित्त अतीतप्रत्युत्पन्नानागतमेव । तेन विना तु न ज्ञेय ज्ञायते तेन निमित्त तु ॥ ४ ॥

रसेति भवसिद्धिकः स चासौ संवृतश्चाश्रवनिरोधेन भवसिद्धिकसंवृतः, ज्ञातविशेषणमेतत्, अथवा 'पाउकरे'त्ति 'प्रादुरकार्षीत्' प्रकाशितवान्, शेषं पूर्ववत् नवरं 'परिनिर्वृतः' क्रोधादिदहनोपशमतः समन्तात्स्वस्थीभूतः, एतेन "सत्यानृतत्वसंदेहैः, सर्वमेव वचस्त्रिधा" इति प्रसिद्धेस्त्रैविध्यसम्भवेऽपि वचनरूपत्वेनोत्तराध्ययनानां वक्तृदोषहेतुकत्वादनृतत्वसन्देहयोर्वक्तृदोषाभावख्यापनेनैकान्तसत्यत्वलक्षणं माहात्म्यमाहेति सूत्रार्थः ॥ निर्युक्तिकारोऽप्येतन्माहात्म्यख्यापनायाह—

जे किर भवसिद्धीया परित्तसंसारिआ य भविआ य । ते किर पढंति धीरा, छत्तीसं उत्तरज्झयणे ॥
जे हुंति अभवसिद्धीया गंथिअसत्ता अणंतसंसारा । ते संकिलिट्ठकम्मा अभविय उत्तरज्झाए॥५५८॥

'ये' इत्यनिर्दिष्टनिर्देशे 'किल' इति सम्भावने 'भवसिद्धिकाः' भव्याः परीतः—प्राग्वत् परिमितः स चासौ संसारश्च तद्वन्तः परीत्तसंसारिकाः 'अत इनिठना'विति (पा० ५–२–११५) मत्वर्थीयष्ठन्, कोऽर्थः ?—तथाभव्यत्वाक्षिप्तप्रत्यासन्नीभूतमुक्तयः 'भव्याः' सम्यग्दर्शनादिगुणयोग्या भिन्नग्रन्थय इति योऽर्थः, उभयत्र 'चः' समुच्चये इति, व्यवच्छेदफलत्वाद्वा वाक्यस्य त एव, 'किल' इति परोक्षाप्तसूचकः, 'पठन्ति' अधीयते धीराः प्राग्वत्, कानि ? इत्याह—'छत्तीसं'ति षट्त्रिंशद् 'उत्तराध्ययनानि' विनयश्रुतादीनि, भवसिद्धिकादीनामेतत्पाठफलस्य सम्यग्ज्ञानादेः

जति । तत्तो य चुया संता परिति भवसागरमणंत ॥ १ ॥" इति सूत्रपञ्चकार्थ ॥ इह च देववक्तव्यताऽनन्तरसूत्रकदम्बस्थाने सूत्रद्वयमेव चूर्ण्यां दृश्यते, तत्रैक "जीवमजीवे"त्यादि प्राग्वद् व्याख्यातमेव, तथा—"पसत्थसज्झाणोवगए, काल किचा ण सजए । सिद्धे वा सासए भवति, देवे यावि महड्डिए ॥ १ ॥"त्ति । सम्प्रत्युपसहारद्वारेण शास्त्रमाहात्म्य ख्यापयितुमाह—

इति पाउकरे बुद्धे, नायए परिनिव्वुए । छत्तीस उत्तरज्झाए, भवसिद्धीयसमए ॥ २६६ ॥ त्तिबेमि ॥

॥ जीवाजीवविभत्ती ॥ ३६ ॥ उत्तरज्झयणसुयक्खधो समत्तो ॥

'इति' उपदर्शने 'इति' इत्यनन्तरमुपवर्णितान् 'पाउकरे'त्ति सूत्रत्वात् 'प्रादुष्कृत्य' काश्चिदर्थत काश्चन सूत्रतोऽपि प्रकाश्य, कोऽर्थ ?—प्रज्ञाप्य, किमित्याह—'परिनिर्वृत' निर्वाण गत इति सम्बन्धनीयम्, कीदृश सन् क इत्याह—'बुद्ध' केवलज्ञानादवगतसकलवस्तुतत्त्व 'ज्ञातको ज्ञातजो वा—ज्ञातकुलसमुद्भव, स चेह भगवान् वर्द्धमानस्वामी 'षट्त्रिंशद्' इति षट्त्रिंशत्सङ्ख्या उत्तरा—प्रधाना अधीयन्त इत्यध्याया—अध्ययनानि तत उत्तराश्च तेऽध्यायाश्चोत्तराध्यायास्तान्–विनयश्रुतादीन् 'भवसिद्धियसमए'त्ति भवसिद्धिका—भव्यास्तेषा समिति—भृश मता—अभिप्रेता भवसिद्धिकसमतास्तान्, पठन्ति च 'भवसिद्धीयसवुडे'त्ति भवे—तस्मिन्नेव मनुष्यजन्मनि सिद्धि-

१ यान्ति । ततश्च च्युता सन्त पर्यटन्ति भवसागरमनन्तम् ॥ २ ॥

आह—'नोआगमतस्तु' नोआगमं पुनराश्रित्य 'स' इति परीषहः 'त्रिविधः' त्रिप्रकार इति गाथार्थः ॥ ६५ ॥ त्रैविध्यमेवाह—

जाणगसरीर भविए तव्वइरित्ते य से भवे दुविहे। कम्मे नोकम्मे या कम्मंमि य अणुदओ भणिओ ॥६६॥

व्याख्या—'जाणगसरीर' त्ति ज्ञायको ज्ञो वा तस्य शरीरं ज्ञायकशरीरं ज्ञशरीरं वा जीवरहितं सिद्धशिलातलगतं निषीधिकागतं वा अहो ! अमुना शरीरसमुच्छ्रयेणोपात्तेन परीषह इति पदं शिक्षितम्, अयं घृतघटोऽभूदितिवत्संभाव्यमानं, तथा 'भविय'त्ति शरीरशब्दस्य काकाक्षिगोलकन्यायेनोभयत्र संबन्धात् भव्यशरीरं, तत्र भविष्यति—तेन तेनावस्थात्मना सत्तां प्राप्स्यति यः स भव्यो जीवस्तस्य शरीरं यदद्यापि परीषह इति पदं न शिक्षते एष्यति तु शिक्षिष्यते तदयं घृतघटो भविष्यतीतिवत्संभाव्यमानं नोआगमतो द्रव्यपरीषहः, 'तव्वतिरित्ते य' त्ति ताभ्यां—ज्ञशरीरभव्यशरीराभ्यां व्यतिरिक्तः—पृथग्भूतः तद्व्यतिरिक्तः, स च प्रकृतत्वाद् द्रव्यपरिषहो भवेत्, 'द्विविधः' द्विभेदः, कथमित्याह—क्रियते—मिथ्यात्वाविरतिकषाययोगानुगतेनात्मना निर्वर्त्यत इति कर्म तत्र—ज्ञानावरणादिरूपे, 'नोकर्मणि च' तद्विपरीतरूपे, चः समुच्चये, दीर्घत्वं च 'ह्रस्वदीर्घौ मिथ' इति प्राकृतलक्षणात्, तत्राद्यमाह—कर्मणि विचार्ये, चः पूरणे, द्रव्यपरीषहः 'अनुदयः' उदयाभावः, प्रक्रमात् परीषहवेदनीयकर्मणामेव, 'भणितः' उक्त इति गाथार्थः ॥ ६६ ॥ द्वितीयभेदमाह—

सद्भावेन निश्चयतस्तत्पाठसम्भव , अन्येषा व्यवहारत एवेत्येवमभिधानम् ॥ उक्तमेवार्थं विनेयानुग्रहाय व्यतिरेकत आह–ये भवन्ति 'अभवसिद्धय ' अभव्या प्राग्वद्वचनव्यत्यय , ग्रन्थि –उक्तरूपस्तद्योगाद्ग्रन्थयस्त एव ग्रन्थिकास्ते च ते सत्त्वाश्च ग्रन्थिकसत्त्वा , अभिन्नग्रन्थय इत्यर्थ , तथाऽनन्त –अपर्यवसित ससार एषामित्यनन्तससारा—ये न कदाचिन्मुक्तिसुखमवाप्स्यन्ति अभव्या "भवावि ते अणते"त्यादिवचनतो भव्या वा ते सक्लिष्टानि—अशुभानि कर्माणि–ज्ञानावरणीयादीनि एषामिति सक्लिष्टकर्माण इत्याह, 'अभविय'त्ति सूत्रत्वाद् 'अभव्या ' अयोग्या 'उत्तरज्झाय'त्ति वचनव्यत्ययादुत्तराध्यायेपूत्तराध्यायविषयेऽध्ययन इति गम्यते, यद्वा 'उत्तर'त्ति प्राग्वत्पदैकदेशेऽपि पदद्दर्शनादुत्तराध्ययनानि तेषामध्याय –पाठ उत्तराध्यायस्तस्मिन्, तदनेन विशिष्टयोग्यतायामेव तात्त्विकैतदध्ययनसद्भावलक्षण माहात्म्यमुक्तमिति गाथाद्वयार्थं ॥ यतश्चैवमतिमाहात्म्यवन्त एव उत्तराध्यायास्ततो यद्विधेयं तदाह–

तम्हा जिणपन्नत्ते अणतगमपज्जवेहि सजुत्ते । अज्झाए जहाजोग गुरूपसाया अहिज्झिज्जा ॥५५१॥

॥ इति श्री उत्तराध्ययननिर्युक्ति' श्री भद्रबाहुस्वामिभि. कृता समाप्ता ॥

तस्माज्जिनै –श्रुतजिनादिभि प्ररूपिता.–प्रज्ञप्तास्तान्, अनन्ताश्च ते गमाश्च–अर्थपरिच्छित्तिप्रकारा पर्यवाश्च–शब्दपर्यवार्थपर्यवरूपा अनन्तगमपर्यवास्तै , समिति–सम्यग् भृश वा युक्ता –सयुक्तास्तान् 'अध्यायान्' प्रक्रमादुत्तराध्यायान् 'जहाजोग'ति योग–उपधानादिरुचितव्यापारस्तदनतिक्रमेण यथायोग गुरूणा प्रसाद –चित्तप्रसनता

गुरुप्रसादस्तस्माद्धेतोः 'अधीयेत्' पठेत्, न त्वेतदध्ययनयोग्यतावाप्तौ प्रमादं कुर्यादिति भावः, गुरुप्रसादादिति चाभिधानमध्ययनार्थिनाऽवश्यं गुरवः प्रसादनीयाः तदधीनत्वात्तस्येति ख्यापनार्थमिति गाथार्थः । 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः, सम्प्रति नयाः, तेऽपि प्राग्वदेव ॥ इत्युत्तराध्ययनश्रुतस्कन्धटीकायां श्रीशान्त्याचार्यविरचितायां शिष्यहितायां जीवाजीवविभक्तिनामकं षट्त्रिंशमध्ययनं समाप्तमिति ॥ ३६ ॥

॥ इति श्रीउत्तराध्ययनसूत्रं श्रीशान्त्याचार्यीयशिष्यहिताख्यव्याख्योपेतं समाप्तम् ॥





अस्ति विस्तारवानुर्व्यां, गुरुशाखासमन्वित । आसेव्यो भव्यसार्थाना, श्रीकोटिकगणद्रुम' ॥ १ ॥
तदुत्थवैरशाखायामभूदायतिशालिनी । विशाला प्रतिशाखेव, श्रीचन्द्रकुलसन्तति॰ ॥ २ ॥
तस्यामानच्छदनिचयसदृक्षावकर्णान्वयोत्थ, श्रीथारापद्रगच्छप्रसचमरलसद्धर्मकिञ्जल्कपानात् ।
श्रीशान्त्याचार्यभृङ्गो यदिदमुदगिरद्याजमु श्रोत्रपेय, तद्भो भव्या ! त्रिदोपप्रशमकरमतो गृह्णता लिख्यता च ३

॥ श्रीरस्तु ॥

इति श्रीशान्त्याचार्यकृताया शिष्यहितायामुत्तराध्ययनसूत्रटीकाया जीवाजीवविभक्तिनामसमास षट्त्रिंशत्तममध्ययनम् । समाप्तानि चाशेषाण्युत्तराध्ययनानि ॥

इति श्रेष्ठि—देवचन्द्र लालभाई—जैनपुस्तकोद्धारे—ग्रन्थाङ्कः ४१.

## ॥ इति उत्तराध्ययनानि समाप्तानि ॥

इति श्रेष्ठि—देवचन्द्र लालभाई—जैनपुस्तकोद्धारे—ग्रन्थाङ्कः ४१.

अत स्थितमेतत्–ज्ञानक्रिये समुदिते एव मुक्तिकारणं न तु प्रत्येकमिति तत्त्व, तथा च पूज्या —"णाणाहीण सघ णाणणओ भणति कि च किरियाए १। किरियाए चरणनओ तदुभयगाहो य सम्मत्त ॥ १ ॥"

क्वचित् सौम्या शैल्या क्वचिदधिकृतप्राकृतभुवा, क्वचिच्चार्थापत्त्या क्वचिदपि समारोपविधिना ।
क्वचिच्चाध्याहारात् क्वचिदविकलप्रक्रमबलादिय व्याख्या ज्ञेया क्वचिदपि तथाऽऽम्नायवशत ॥ १ ॥

इति श्रीशान्तिसूरिविरचिताया शिष्यहितायामुत्तराध्ययनटीकायां विनयश्रुताख्य प्रथममध्ययन समाप्त ॥

प्रथममध्ययन समाप्तम् ॥



१ ज्ञानाधीन सर्वं ज्ञाननयो भणति कि च क्रियया ?। क्रियायाश्चरणनय तदुभयग्रहश्च सम्यक्त्वम् ॥ ४ ॥

पामुत्पादकं द्रव्यं ३, 'समवतार' इति क कर्मप्रकृतौ पुरुषविशेषे वाऽमीषां सम्भवः ? ४, 'अध्यास' इति कथममीषामध्यासना सहनात्मिका ? ५, 'नय' इति को नयः कं परीषहमिच्छति ?, ६ चः समुच्चये, 'वर्त्तना' इति कति क्षुदादयः एकदैकस्मिन् स्वामिनि वर्त्तन्ते ७, 'काल' इति कियन्तं कालं यावत् परीषहास्तित्वं ८, 'खेत्ते' त्ति कतरस्मिन्कियति वा क्षेत्रे ९, 'उद्देशो' गुरोः सामान्याभिधायि वचनं १०, 'पृच्छा' तज्जिज्ञासोः शिष्यस्य प्रश्नः ११, 'निर्देशः' गुरुणा पृष्टार्थविशेषभाषणं १२, 'सूत्रस्पर्शः' सूत्रसूचितार्थवचनं १३, 'चः' समुच्चये, इति गाथासमासार्थः ॥ ६८ ॥ तत्र कुत इति प्रश्नप्रतिवचनमाह—

कम्मप्पवायपुव्वे सत्तरसे पाहुडंमि जं सुत्तं । सणयं सोदाहरणं तं चेव इहंपि णायव्वं ॥ ६९ ॥

व्याख्या—कर्म्मणः प्रवादः–प्रकर्षेण प्रतिपादनमस्मिन्निति कर्मप्रवादं तच्च तत् पूर्वं च तस्मिन्, तत्र बहूनि प्राभृतानीति कतिथे प्राभृते इत्याह—सप्तदशे प्राभृते–प्रतिनियतार्थाधिकाराभिधायिनि, यत् 'सूत्रं' गणधरप्रणीतश्रुतरूपं 'सनयं' नैगमादिनयान्वितं, 'सोदाहरणं' सदृष्टान्तं, 'तं चेव' त्ति चः पूरणे एवोऽवधारणे, ततस्तदेव 'इहापि' परीषहाध्ययने 'ज्ञातव्यम्' अवगन्तव्यं, न त्वधिकं, किमुक्तं भवति ?–निरवशेषं तत एवेदमुद्धृतं न पुनरन्यत इति गाथार्थः ॥ ६५ ॥ कस्येति यदुक्तं तदुत्तरमाह—

णोकम्ममि य तिविहो सच्चित्ताचित्तमीसओ चेव । भावे कम्मस्सुदओ तस्स उ दाराणिमे हुति ॥६७॥

व्याख्या—नोकर्मणि पुनर्विचार्ये; चस्य पुनरर्थत्वाद्द्रव्यपरीषह 'त्रिविध 'त्रिभेद , 'सचित्ताचित्तमीसओ'त्ति लुप्तनिर्दिष्टत्वाद्विभक्ते सचित्तोऽचित्तो मिश्रक इति, समाहारो वा सचित्ताचित्तमिश्रकमिति, प्राकृतत्वाच्च पुंलिङ्गता, च सगतानेकभेदसमुच्चये, एवोऽवधारणे इयन्त एवामी भेदा , तत्र नोकर्मणि सचित्तद्रव्यपरीषहो गिरिनिर्झररजलादि अचित्तद्रव्यपरीषहश्चित्रकचूर्णादिर्मिश्रद्रव्यपरीषहो गुडार्द्रकादि, त्रयस्यापि कर्माभावरूपत्वात् क्षुत्परीषहजनकत्वाच्च, इत्थ पिपासादिजनक लवणजलाद्यप्यनेकधा नोकर्मद्रव्यपरीषह इति स्वधिया भावनीय, भावपरीषह आगमतो ज्ञाता तत्र चोपयुक्तो, नोआगमतस्तु नोशब्दस्यैकदेशवाचित्वे आगमैकदेशभूतमिदमेवाध्ययन, निषेधवाचित्वे तु तदभावरूप परीषहवेदनीयस्य कर्मण उदय , तथा चाह–'भावे कम्मस्स उदओ' त्ति कर्मण–इति परीषहवेदनीयकर्मणा बहुत्वेऽपि जात्यपेक्षयैकवचननिर्देश 'तस्य च' भावपरीषहस्य 'द्वाराणि' व्याख्यानमुखानि 'इमानि' अनन्तरवक्ष्यमाणानि भवन्तीति गाथार्थ ॥ ६७ ॥ तान्येवाह—

कत्तो कस्से व दव्वे समोआर अहिआस नेए य वत्तणा कालो । खित्तुद्देसे[११] पुच्छा निद्देसे[१२] सुत्तफासे य॥६८॥

व्याख्या—'कुत' इति कुतोऽङ्गादेरिदमुद्धृतं १, 'कस्य' इति कस्य सयतादेरमी परीषहा २, 'द्रव्यम्' इति किममी-

कथा कारणमिच्छन् यदैकेन पुरुषादिना चपेटादिना परीषह उदीर्यते तदा परीषहवेदनीयकर्मोदयनिमित्तत्वेऽपि तस्य तदविवक्षया जीवेनासौ परीषह उदीरित इति वक्ति १, यदा बहुभिस्तदा जीवैः २, यदा अचेतनेनैकेन दृषदादिना जीवप्रयोगरहितेन तदाऽजीवेन ३, यदा तैरेव बहुभिस्तदा अजीवैः ४, यदैकेन लुब्धकादिना बाणादिनैकेन तदा जीवेनाजीवेन च ५, यदा तेनैकेनैव बहुभिः बाणादिभिस्तदा जीवेनाजीवैश्च ६, यदा बहुभिः पुरुषादिभिरेकं शिलादिकमुत्क्षिप्य क्षिपद्भिस्तदा जीवैरजीवेन च ७, यदा तु तैरेव मुद्गरादीन् बहून् मुञ्चद्भिस्तदा जीवैश्चाजीवैश्चेति ८ 'सङ्ग्रहे' सङ्ग्रहनाम्नि नये विचार्यमाणे जीवो 'वा' अथवा नोजीवो हेतुरिति प्रक्रमः, किमुक्तं भवति ?—जीवद्रव्येणाजीवद्रव्येण वा परीषह उदीर्यते, स हि "[1]संगहियपिंडियत्थं संगहवयणं समासतो बेंती"ति वचनात् सामान्यग्राहित्वेनैकत्वमेवेच्छति न पुनर्द्वित्वबहुत्वे, अस्यापि च शतभेदत्वाद्यदा चिद्रूपतया सर्वं गृह्णाति तदा जीवद्रव्येण, यदा त्वचिद्रूपतया तदा अजीवद्रव्येण, 'व्यवहारे' व्यवहारनये 'नोजीव' इति अजीवो हेतुः, कोऽर्थः ?—अजीवद्रव्येण परीषह उदीर्यत इत्येकमेव भङ्गमयमिच्छति, तथाहि—"[2]वच्चइ विणिच्छियत्थं ववहारो सव्वदव्वेसुं" इति तल्लक्षणं, तत्र च 'विनिश्चित'मित्यनेकरूपत्वेऽपि वस्तुनः सांव्यवहारिकजनप्रतीतमेव रूपमुच्यते, तद्ग्राहकोऽयम्, उक्तं च—

१ संगृहीतपिण्डितार्थं संग्रहवचनं समासतो ब्रुवते ( आ० नि० ) २ व्रजति विनिश्चितार्थं व्यवहारः सर्वद्रव्येषु ।

तिण्हपि णेगमणओ परीसहो जाव उज्जुसुत्ताओ । तिण्ह सद्दणयाण परीसहो सजए होइ ॥ ७० ॥

व्याख्या—'त्रयाणामपि' अविरतविरताविरतविरताना न तु विरतस्यैव नैगमनय 'परीषह' क्षुदादिरिति, मन्यत इति शेष, त्रयाणामपि परीषहवेदनीयासातादिकर्मोदयजनितस्य क्षुधादेस्तत्सहनस्य च यथायोग सकामाकामनिर्जराहेतो सम्भवाद्, अनेकगमत्वेन चास्य सर्वप्रकारसङ्ग्राहित्वात्, 'जाव उज्जुसुत्ताउ'त्ति सोपस्कारत्वादस्यैव यावदृजुसूत्र, कोऽर्थ ?—सङ्ग्रहव्यवहारऋजुसूत्रा अपि त्रयाणामपि परीषह मन्यन्ते, एकैकनयस्य शतभेदत्वेनैतद्भेदानामपि केषाञ्चित् परीषह प्रति नैगमेन तुल्यमतत्वात्, 'त्रयाणा' त्रिसङ्ख्याना, केषाम् ?—शब्दप्रधाना नया शब्दनया, शाकपार्थिवादिवत् समास, तेषा—शब्दसमभिरूढैवम्भूताना, मतेनेति शेष, परीषह 'सयते' विरते भवति "मार्गाच्यवननिर्जरार्थं परिषोढव्या परीषहा" (तत्त्वा० अ० ९ सू० ८) इति लक्षणोपेतनिरुपचरितपरीषहशब्दवृत्तेस्तत्रैव सम्भवादिति गाथार्थ ॥ ७० ॥ द्रव्यद्वारमधिकृत्य नयमतमाह—

पढमम्मि अट्ठ भंगा सगहि जीवो व अहव नोजीवो । ववहारे नोजीवो जीवदव्व तु सेसाण ॥७१॥

व्याख्या—'प्रथमे' प्रक्रमान्नैगमनये अष्टौ भङ्गा, स हि "णेगेहिं माणेहिं मिणइत्ती णेगमस्स नेरुत्ती" इतिलक्षणादने-

---

१ नैकैर्मानैर्मिनोतीति नैगमस्य निरुक्ति (आ० नि०)

समोयारो खलु दुविहो पयडिपुरिसेसु चेव नायव्वो। एएसिं नाणत्तं वुच्छामि अहाणुपुव्वीए ॥ ७२ ॥

व्याख्या—'समवतारः खलु द्विविधः' इति खलुशब्दस्यैवकारार्थत्वात् द्विविध एव, द्वैविध्यं च विषयभेदत इति तमाह—प्रकृतयश्च पुरुषाश्च प्रकृतिपुरुषास्तेषु, कोऽर्थः ?—प्रकृतिषु ज्ञानावरणादिरूपासु पुरुषेषु, चशब्दात् स्त्रीपण्डकेषु च, तत्तद्गुणस्थानविशेषवर्तिषु 'एवे'ति पूरणे, 'ज्ञातव्यः' अववोद्धव्यः, 'एतेषां' प्रकृत्यादीनां 'नानात्वं' भेदं वक्ष्ये 'अथ' अनन्तरम् 'आनुपूर्व्या' क्रमेणेति गाथार्थः ॥ ७२ ॥ तत्र प्रकृतिनानात्वमाह—

णाणावरणे वेए मोहंमिय अंतराइए चेव । एएसुं बावीसं परीसहा हुंति णायव्वा ॥ ७३ ॥

व्याख्या—ज्ञानावरणे वेद्ये मोहे चान्तरायिके चैव एतेषु चतुर्षु कर्मसु वक्ष्यमाणस्वरूपेषु द्वाविंशतिः परीषहा भवन्ति ॥ ७३ ॥ अनेन प्रकृतिभेद उक्तः, सम्प्रति यस्य यत्रावतारस्तमाह—

पन्नान्नाणपरिसहा णाणावरणंमि हुंति दुन्नेए । इक्को य अंतराए अलाहपरीसहो होइ ॥ ७४ ॥

व्याख्या—प्रज्ञा चाज्ञानं च प्रज्ञाज्ञाने ते एवोत्सेकवैक्लव्याकरणतः परीषह्यमाणे परीषहौ, 'ज्ञानावरणे' कर्मणि भवतो 'द्वौ' एतौ, तदुदयक्षयोपशमाभ्यामनयोः सद्भावाद्, एकश्च ( ग्रन्थाग्रम् २००० ) 'अन्तराये' अन्तरायकर्मण्यलाभपरीषहो भवति, तदुदयनिबन्धनत्वादलाभस्येति गाथार्थः ॥ ७४ ॥ मोहनीयं द्विधेति यत्र तद्भेदे वेदनीये च यत्परिषहावतारस्तमाह—

"भमराइ पचवण्णाइ णिच्छिए जम्मि वा जणवयस्स । अत्थे विनिच्छओ जो विनिच्छियत्थुत्ति सो गेज्झो ॥१॥ वहुयरउत्ति व त चिय गमेइ सतेऽवि सेसए मुयइ । सववहारपरतया ववहारो लोगमिच्छतो ॥ २ ॥" त्ति, ततोऽयमाशय – 'कालो सभाव नियई पुवकय पुरिसकारणेगता । मिच्छत्त ते चेव उ समासओ होति सम्मत्त ॥ १ ॥' इत्यागमवचनत सर्वस्यानेककारणत्वेऽपि कर्म्मकृत लोकवैचित्र्यमिति प्राय प्रसिद्धेर्यत् कर्म कारयिष्यति तत्करिष्याम इत्युक्तेश्च कर्मैव कारणमित्याह, तच्चाचेतनत्वेनाजीव एवेति । 'जीवदव'तुशब्दस्यैवकारार्थत्वात् जीवद्रव्यमेव 'शेषाणाम्' ऋजुसूत्रशब्दसमभिरूढैवम्भूताना पर्यायनयाना मतेन, हेतुरिति गम्यते, अयमर्थ –जीवद्रव्येण परीषह उदीर्यत इत्येष एवैषा भङ्गोऽभिमत, ते हि पर्यायास्तिकत्वेन परीषह्यमाणमेव परीषहमिच्छन्ति, परीषहश्च चोपयोगात्मकम्, उपयोगस्य च जीवस्वाभाव्यात् जीवद्रव्यमेव सन्निहितमव्यभिचारि च कारण, तद्विपरीत तु अजीवद्रव्य दण्डादीत्यकारण, जीवद्रव्यमिति तु द्रव्यग्रहण पर्यायनयस्यापि गुणसहतिरूपस्य द्रव्यस्येष्टत्वात्, तदुक्तम्–"पर्यायनयोऽपि द्रव्यमिच्छति गुणसन्तानरूप"मिति गाथार्थ ॥ ७१ ॥ सम्प्रति समवतारद्वारमाह—

---

१ भ्रमरादीन् पञ्चवर्णान् निश्चिते (निच्छति) यस्मिन् वा जनपदस्य । अर्थे विनिश्चयो यो विनिश्चितार्थ इति स ग्राह्य ॥१॥ वहुतरक इति वा तमेव गमयति सतोऽपि शेषा मुञ्चति । सव्यवहारपरतया व्यवहारो लोकमिच्छन् ॥२॥ १ काल स्वभावो नियति पूर्वकृत पुरुषकारण मेका तात् । मिथ्यात्व त एव समासतो भवति सम्यक्त्वम् ॥ १ ॥

पंचेव आणुपुव्वी चरिया सिज्जा वहे व (य) रोगे य। तणफासजल्लमेव य इक्कारस वेयणीज्जंमि ॥७८॥

व्याख्या—'पञ्चैव' पञ्चसंख्या एव, ते च प्रकारान्तरेणापि स्युरित्याह—'आनुपूर्व्या' परिपाट्या, क्षुत्पिपासाशीतोष्णदंशमशकाख्या इति भावः, चर्य्या शय्या वधश्च रोगश्च तृणस्पर्शो जल्ल एव च इत्यमी एकादश वेदनीयकर्मण्युदयवति परीषहा भवन्तीति शेष इति गाथार्थः ॥ ७८ ॥ सम्प्रति पुरुषसमवतारमाह—

बावीसं बायरसंपराए चउदस य सुहुमरागंमि। छउमत्थवीयराए चउदस इक्कारस जिणंमि ॥७९॥

व्याख्या—'द्वाविंशतिः' द्वाविंशतिसङ्ख्याः प्रक्रमात्परीषहाः 'बादरसंपराये' बादरसम्परायनाम्नि गुणस्थाने, किमुक्तं भवति ?—बादरसम्परायं यावत्सर्वेऽपि परीषहाः सम्भवन्ति, 'चतुर्दश' चतुर्दशसङ्ख्याः, चः पूरणे, 'सूक्ष्मसंपराये' सूक्ष्मसम्परायनाम्नि गुणस्थाने, 'ससानां' चारित्रमोहनीयप्रतिबद्धानां दर्शनमोहनीयप्रतिबद्धस्य चैकस्य तत्रासम्भवादिति भावः, 'छद्मस्थवीतरागे' छद्मस्थवीतरागनाम्नि गुणस्थाने, 'चतुर्दश' उक्तरूपा एव, 'एकादश' एकादशसङ्ख्याः 'जिने' केवलिनि, वेदनीयप्रतिबद्धानां क्षुदादीनामेव तत्र भावादिति गाथार्थः ॥ ७९ ॥ अधुना अध्यासनामाह—

एसणमणेसणीज्जं तिण्हं अग्गहणऽभोयण नयाणं। अहिआसण बोद्धवा फासुय सहुज्जुसुत्ताणं ॥८०॥

अरई अचेल इत्थी निसीहिया जायणा य अक्कोसे । सक्कारपुरक्कारे चरित्तमोहंमि सत्तेए ॥ ७५ ॥
अरईइ दुगुछाए पुवेय भयस्स चेव माणस्स । कोहस्स य लोहस्स य उदएण परीसहा सत्त ॥ ७६ ॥
दसणमोहे दसणपरीसहो नियमसो भवे इक्को । सेसा परीसहा खलु इक्कारस वेयणीज्जंमि ॥ ७७ ॥

व्याख्या—'अरति' इति अरतिपरीपह, एवमुत्तरेष्वपि परीपहशब्द सम्बन्धनीय, 'अचेल' त्ति प्राकृतत्वाद्वि-
न्दुलोप, अचेल, 'स्त्री नैपेधिकी याचना चाक्रोश सत्कारपुरस्कार' सप्तैते वक्ष्यमाणरूपा परीपहा, 'चरित्रमोहे'
चरित्रमोहनाम्नि मोहनीयभेदे, भवन्तीति गम्यते, तदुदयभावित्वादेपा ॥ चारित्रमोहनीयस्यापि बहुभेदत्वाद्यस्य तद्भेद-
स्योदयेन यत्परीपहसद्भावस्तमाह—'अरते' अरतिनाम्नश्चारित्रमोहनीयभेदस्य, अचेलस्य जुगुप्साया, 'पुवेय' त्ति सुपो
लोपात् पुवेदस्य, भयस्य चैव मानस्य क्रोधस्य लोभस्य च उदयेन परीपहा सप्त, इह चारत्युदयेनारतिपरीपह जुगुप्सो-
दयेनाचेलपरीपह इत्यादि यथाक्रमं योजना कार्येति, तथा दर्शनमोहे 'दर्शनपरीपह' वक्ष्यमाणरूपो, 'णियमसो' त्ति
आर्षत्वेन नियमात् भवेद् 'एक' अद्वितीय, 'शेपा' एतदुद्धरिता, परीपहा पुन एकादश 'वेदनीये' वेदनीयनाम्नि
कर्मणि सभवन्तीति गाथात्रयार्थ ॥ ७५-७६-७७ ॥ के पुनस्ते एकादशेत्याह—

वाच्यमिति । 'वेदना' क्षुदादिजनिता असातवेदना, चशब्दात्तदुत्पादकं च परीषहः, 'द्वयोस्तु' पारिशेष्यात् सङ्ग्रहव्यवहारयोः पुनर्मतेनेति गम्यते, अयं चानयोरभिप्रायः—यदि तावद्गिरिनिर्झ्झरजलादि क्षुदादिवेदनाजनकत्वेन परीषहः, कथमिव क्षुदादिवेदना न परीषहो, निरुपचरितं परीषह्यत इति परीषहलक्षणं वेदनाया एव सम्भवति, उपचरितं तु गिरिनिर्झ्झरजलादौ, तात्त्विकवस्तुनिबन्धनश्चोपचार इति तदभावे तस्याप्यभाव एव स्यात्, 'वेदनां' क्षुदाद्यनुभवात्मिकां 'प्रतीत्य' आश्रित्य जीवे परीषह इति ऋजुसूत्रः मन्यत इतीहापि गम्यते, अयमस्याशयः—सति हि निरुपचरितलक्षणान्वितेऽपि परीषहे स एव परीषहोऽस्तु, किमुपचरितकल्पनया ?, ततो निरुपचरितलक्षणयोगाद्वेदनैव परीषहः, सा च जीवधर्मत्वाज्जीवे नाजीव इति वेदनां प्रतीत्य जीवे परीषह उच्यते, न तु पूर्वेषामिवाजीवेऽपीति, 'शब्दस्ये'ति शब्दाख्यनयस्य साम्प्रतसमभिरूढैवम्भूतभेदत्रिरूपस्य मतेनात्मा—जीवः, परीषह इति प्रक्रमः, पुनः—शब्दो विशेषं द्योतयति, विशेषश्च परीषहोपयुक्तत्वम्, अयं ह्युपयोगप्रधानः, उपयोगश्चात्मन एवेति परीषहोपयुक्त आत्मैव परीषह इति मन्यते इति गाथार्थः ॥ ८१ ॥ इदानीं वर्त्तनाद्वारमाह—

वीसं उक्कोसपए वट्टंति जहन्नओ हवइ एगो। सीउसिण चरियं निसीहिया य जुगवं न वट्टंति ॥ ८२ ॥

व्याख्या—विंशतिः उत्कृष्टपदे चिन्त्यमाने परीषहाः वर्त्तन्ते, युगपदेकत्र प्राणिनीति गम्यते, 'जघन्यतः' जघन्यपदमाश्रित्य भवेदेकः परीषहः, ननूत्कृष्टपदे द्वाविंशतिरपि किं नैकत्र वर्त्तन्त इत्याह—'सीउसिण'त्ति शीतोष्णे चर्या-

व्याख्या—एष्यत इत्येषणम्–एषणाशुद्ध, अनेषणीय–तद्विपरीत, सोपस्कारत्वाद्यदन्नादि तस्य, यद्वा 'सुपा सुपो भवती'ति न्यायादेषणीयस्य अनेषणीयस्य च, 'अग्गहणऽभोयण'त्ति अग्रहणम्–अनुपादान, कथञ्चिद् ग्रहणे वा अभोजनम्– अपरिभोगात्मक 'त्रयाणाम्' अर्थान्नैगमसङ्ग्रहव्यवहाराणा नयाना मतेनाध्यासना बोद्धव्येति सम्बन्ध , अमी हि स्थूलदर्शिन बुभुक्षादिसहनमन्नादिपरिहारात्मकमेवेच्छन्ति, 'फासुग सहुज्जुसुत्ताण'ति शब्दनयाना त्रयाणामृजुसूत्रस्य च मतेन प्रासुकमन्नादि उपलक्षणत्वात् कल्प्य च गृह्णतो भुञ्जानस्याप्यध्यासनेति प्रक्रम , ते हि भावप्रधानतया भावाध्यासनामेव मन्यन्ते, सा च नाभुञ्जानस्यैव, किन्तु शास्त्रानुसारिप्रवृत्त्या समतावस्थितस्य प्रासुकमेषणीय च धर्म्मधूर्वहनार्थं भुञ्जानस्यापीति गाथार्थ ॥ ८० ॥ सम्प्रति नयद्वारमाह—

ज पप्प नेगमनओ परीसहो वेयणा य दुण्ह तु । वेयण पडुच्च जीवे उज्जुसुओ ˘ सद्दस्स पुण आया ॥८१॥

व्याख्या—'यद्' वस्तु गिरिनिर्झरजलादि'प्राप्य'आसाद्य क्षुदादिपरीषहा उत्पद्यन्ते नैगमो–नैगमनयो यत्तदोर्नित्याभिसम्बन्धात् तत्परीषह इति वक्तीति शेष , स ह्येव मन्यते–यदि तत् क्षुदाद्युत्पादक वस्तु न भवेत्तदा क्षुदादय एव न स्यु , तदभावाच्च किं केन सह्यत इति परीषहाभाव एव स्यात्, ततस्तद्भावभावित्वात् परीषहस्य तत् प्रधानमिति तदेव परीषह , प्रस्थकोत्पादककाष्ठप्रस्थकवत्, आह–नैकगमत्वान्नैगमस्य कथमेकरूपतैव परीषहाणामिहोक्ता ?, उच्यते, शतशाखत्वादस्य न सर्वभेदाभिधान शक्यमिति कश्चिदेव कचिदुच्यते, एव शेषनयेष्वपि यथोक्ताशङ्काया

स चैतस्य पर्यायात्मकतया प्रतिसमयमन्यान्य एव भवतीति समयमेवैतन्मतेन परीषहो युक्त इति गाथार्थः ॥ ८३ ॥ 'वर्षाग्रतः त्रयाणां परीषह' इति यदुक्तं, तदेव दृष्टान्तेन दृढयितुमाह—

कंडू अभत्तच्छंदो अच्छीणं वेयणा तहा कुच्छी । कासं सासं च जरं अहिआसे सत्त वाससए ॥ ८४ ॥

व्याख्या—'कंडूं' कण्डूतिम्, 'अभत्तच्छन्दं' भक्तारुचिरूपम् 'अक्ष्णोः' लोचनयोः, 'वेदनां' दुःखानुभवं, सर्वत्र द्वितीयार्थे प्रथमा, 'तथे'ति समुच्चये, 'कुच्छि'त्ति सुव्यत्ययात् कुक्ष्योर्वेदनां–शूलादिरूपां 'काशं श्वासं च ज्वरं' त्रयमपि प्रतीतमेव 'अध्यास्त'इति अधिसहते, सप्त वर्षशतानि यावत् । अनेन तु सनत्कुमारचक्रवर्त्युदाहरणं सूचितं, स हि महात्मा सनत्कुमारचक्रवर्त्ती शक्रप्रशंसाऽसहनसमायातामरद्वयनिवेदितशरीरविकृतिरुत्पन्नवैराग्यवासनः पटप्रान्तावलग्नतृणवदखिलमपि राज्यमपहायाभ्युपगतदीक्षः प्रतिक्षणमभिनवाभिनवप्रवर्द्धमानसंवेगो मधुकरवृत्त्यैव यथोपलब्धान्नपानोपरचितप्राणवृत्तिरनन्तरोक्तसप्तोद्दण्डकण्ड्वादिवेदनाविधुरितशरीरोऽपि संयमान्न मनागपि सञ्चचाल, पुनस्तत्सत्त्वपरीक्षणायातभिषग्वेषामरोपदर्शितद्वादशांशुमालिसमाङ्गुल्यवयवश्च तत्पुरतः 'पुव्विं कडाणं कम्माणं वेइत्ता'[1] इत्यादि संवेगोत्पादकमागमवचः प्ररूपयन् स्वयमागत्य शक्रेणाभिवन्दित उपबृंहितश्चेति गाथार्थः ॥ ८४ ॥ सम्प्रति क्व परीषह इति क्षेत्रविषयप्रश्नप्रतिवचनमाह—

१ पूर्वं कृतानां कर्मणां वेदयित्वा ।

नैषेधिक्यौ च 'युगपद्' एककाल 'न वर्त्तेते' न भवत , परस्पर परिहारस्थितिलक्षणत्वादमीषा, तथाहि—न शीत-मुष्णे न चोष्ण शीते न चर्यया नैषेधिकी नैषेधिक्या वा चर्येत्यतो यौगपद्येनामीषामेकत्रासम्भवान्नोत्कृष्टतोऽपि द्वाविंशतिरिति,आह—नैषेधिकीवत्कथ शय्याऽपि न चर्यया विरुध्यते ?, उच्यते, निरोधबाधादितस्त्वङ्गनिकादेरपि तत्र सम्भवान्नैषेधिकी तु स्वाध्यायादीना भूमि , ते च प्राय स्थिरतायामेवानुज्ञाता इति तस्या एव चर्यया विरोध इति गाथार्थ ॥ ८२ ॥ कालद्वारमाह—

वासग्गसो अ तिण्ह मुहुत्तमत च होइ उज्जुसुए । सद्दस्स एगसमय परीसहो होइ नायव्वो ॥ ८३ ॥

व्याख्या—'वासग्गसो य'त्ति आर्षत्वाद्वर्षाग्रत , कोऽर्थ ?—वर्षलक्षण कालपरिमाणमाश्रित्य, परीषहो भवति इति गम्यते, च पूरणे, 'त्रयाणा' नैगमसङ्ग्रहव्यवहारनयाना मतेन, ते ह्यनन्तरोक्तन्यायतस्तदुत्पादक वस्त्वपि परीषहमिच्छन्ति, तच्चैतावत्कालस्थितिकमपि सम्भवत्येवेति, 'मुहुत्तमत च' इति प्राकृतत्वाद् तर्मुहूर्त्त पुनर्भवति, प्रक्रमात्परीषह , ऋजुसूत्रे ऋजुश्रुते वा—विचार्यमाणे, स हि प्रागुक्तनीतितो वेदना परीषह इति वक्ति, सा चोपयोगात्मिका, उपयोगश्च 'अंतुमुहुत्ताउ पर जोगुवओगा न सती'ति वचनात् आ तर्मुहूर्त्तिक एव, 'शब्दस्य' साम्प्रतादिनिभेदस्य मतेनैकसमय परीषहो भवति 'ज्ञातव्य ' अवबोद्धव्य , स ह्युक्तनीतितो वेदनोपयुक्तमात्मानमेव परीषह मनुते,

१ अन्तर्मुहूर्त्तात्परतो योगोपयोगा न सन्ति ।

वादोद्धृतत्वादस्य न दोषः, तथा च प्रागुक्तम्—'कम्मप्पवायपुव्वे' त्यादि, दृष्टिवादे हि नयैर्व्याख्येत्यत्रापि तथैवाभिधानमिति गाथार्थः ॥ ८५ ॥ इदानीमुद्देशादिद्वारत्रयमल्पवक्तव्यमित्येकगाथया गदितुमाह—

उद्देसो गुरुवयणं पुच्छा सीसस्स उ मुणेयव्वा । निद्देसो पुणिमे खलु बावीसं सुत्तफासे य ॥ ८६ ॥

व्याख्या—उद्दिश्यत इति उद्देशः, क इत्याह—'गुरुवचनं' गुरोः विवक्षितार्थसामान्याभिधायकं वचो, यथा प्रस्तुतमेव 'इह खलु बावीसं परीसह'त्ति 'पृच्छा शिष्यस्य तु' गुरूद्दिष्टार्थविशेषजिज्ञासोर्विनेयस्य, तुः पुनः प्रक्रमाद्वचनं 'मुणितव्या' ज्ञातव्या, यथा 'कयरे खलु ते बावीसं परीसहा ?' इति, निर्देशश्चेति निर्देशः—पुनः इमे खलु द्वाविंशतिः, परीषहा इति गम्यते, अनेन च शिष्यप्रश्नानन्तरं गुरोर्निर्वचनं निर्देश इत्यर्थादुक्तं भवति, अत्र चैवमुदाहरणद्वारेणाभिधानं पूर्वयोरप्युक्तोदाहरणद्वयसूचनार्थं वैचित्र्यख्यापनार्थं चेति किञ्चिन्न्यूनगाथार्थः ॥ ८६ ॥ इत्थं 'कुत' इत्यादिद्वादशद्वारवर्णनादवसितो नामनिष्पन्ननिक्षेपः, सम्प्रति 'सूत्रस्पर्शे' इति चरमद्वारस्य सूत्रालापकनिष्पन्ननिक्षेपस्य चावसरः, तच्चोभयं सूत्रे सति भवतीति सूत्रानुगमे सुत्रमुच्चारणीयं, तच्चेदम्—

'सुयं मे आउसंतेणं भगवया एवमक्खायं—इह खलु बावीसं परीसहा समणेण भगवया महावीरेणं कासवेणं पवेइया जे भिक्खू सुच्चा नच्चा जिच्चा अभिभूय भिक्खायरियाए परिवयंतो पुट्ठो नो विनिहन्नेज्जा ।

लोए संथारंमि य परीसहा जाव उज्जुसुत्ताओ । तिण्ह सद्दनयाण परीसहा होइ अत्ताणे ॥ ८५ ॥

व्याख्या—लोके संस्तारके च परीषहा 'जाव उज्जुसुत्ताउ'त्ति सूत्रत्वात् ऋजुसूत्रं यावद्, अस्य च पूर्वार्द्धस्य सूचकत्वादविशुद्धनैगमस्य मतेन लोके परीषहा, तत्सहिष्णुयतिनिवासभूतक्षेत्रस्यापि चतुर्दशरज्ज्वात्मकलोकान्तर्गतत्वात्, इत्थमपि च व्यवहारदर्शनाद्, एवमुत्तरोत्तरादिविशुद्धविशुद्धतरतद्भेदापेक्षया तिर्यग्लोकजम्बूद्वीपभरतदक्षिणार्द्धपाटलीपुत्रोपाश्रयादिषु भावनीय, यावदत्यन्तविशुद्धतमनैगमस्य यत्रोपाश्रयैकदेशे अमीषां सोढा यतिस्तत्रामी इति, एवं व्यवहारस्यापि, लोकव्यवहारपरत्वादस्य, लोके च नेह वसति प्रोषित इति व्यवहारदर्शनात्, संग्रहस्य संस्तारके परीषहा, स हि संगृह्णातीति संग्रह इति निरुक्तिवशात् संग्रहोपलक्षितमेवाधारं मन्यते, संस्तारक एव च यतिशरीरप्रदेशै संगृह्यते न पुनरुपाश्रयैकदेशादिरिति संस्तारक एवास्य परीषहा, ऋजुसूत्रस्य तु येष्वाकाशप्रदेशेष्वात्माऽवगाढस्तेष्वेव परीषहा, संस्तारकादिप्रदेशानां तदणुभिरेव व्याप्तत्वात्, तत्रावस्थानाभावात्, त्रयाणां शब्दनयानां परीषहो भवति आत्मनि, स्वात्मनि व्यवस्थितत्वात्सर्वस्य, तथाहि—सर्वं वस्तु स्वात्मनि व्यवतिष्ठते सत्त्वाद् यथा चैतन्यं जीवे, आह—किमेवं नयैर्व्याख्या ?, निषिद्धा ह्यसौ, यदुक्तम्—'णत्थि पुहुत्ते समोयारो'त्ति, उच्यते, दृष्टि-

---

१ नास्ति पृथक्त्वे समवतारः ।

राएण विज्जा मन्ता य सिज्झंति" अथवा—'आउसंतेणं'ति भगवद्विशेषणम्, आयुष्मता भगवता, चीरजीविनेत्यर्थो, मङ्गलवचनमेतत्, यद्वा—'आयुष्मते'ति परार्थप्रवृत्त्यादिना प्रशस्तमायुर्धारयता, न तु मुक्तिमवाप्यापि तीर्थनिकारादिदर्शनात्पुनरिहायातेन, यथोच्यते कैश्चित्—"ज्ञानिनो धर्मतीर्थस्य, कर्त्तारः परमं पदम्। गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥ १ ॥" एवं हि अनुन्मूलितनिःशेषरागादिदोषत्वात्तद्वचसोऽप्रामाण्यमेव स्यात्, निःशेषोन्मूलने हि रागादीनां कुतः पुनरिहागमनसम्भव इति। यदिवा—'आवसंतेणं'ति मयेत्यस्य विशेषणं, तत आङिति—गुरुदर्शितमर्यादया वसता, अनेन तत्त्वतो गुरुमर्यादावर्त्तित्वरूपत्वाद्गुरुकुलवासस्य तद्विधानमर्थत उक्तं, ज्ञानादिहेतुत्वात्तस्य, उक्तं च—"णाणस्स होइ भागी थिरयरतो दंसणे चरित्ते य। धन्ना आवकहाए गुरुकुलवासं न मुंचंति ॥ १ ॥" अथवा 'आमुसंतेण' आमृशता भगवत्पादारविन्दं भक्तितः करतलयुगादिना स्पृशता, अनेनैतदाह—अधिगतसमस्तशास्त्रेणापि गुरुविश्रामणादिविनयकृत्यं न मोक्तव्यम्, उक्तं हि—"जहाहिअग्गी जलणं नमंसे, णाणाहुईमंतपयाहिसित्तं। एवायरियं उवचिट्ठएज्जा, अणंतणाणोवगतोऽवि संतो ॥ १ ॥"त्ति, यद्वा—'आउसंतेणं'ति प्राकृतत्वेन तिङ्व्यत्ययादाजुपमाणेन—श्रवणविधिमर्यादया गुरून् सेवमानेन, अनेनाप्येतदाह—विधिनैवोचितदेशस्थेन गुरुसकाशात् श्रोतव्यं, न

१ ज्ञानस्य भवति भागी स्थिरतरो दर्शने चारित्रे च। धन्या यावत्कथिकं गुरुकुलवासं न मुञ्चन्ति ॥ १ ॥ २ यथाऽऽहिताग्निर्ज्वलनं नमस्यति नानाहुतिमन्त्रपदाभिषिक्तम्। एवमाचार्यमुपतिष्ठेतानन्तज्ञानोपगतोऽपि सन् ॥ १ ॥

व्याख्या—श्रुतम् आकर्णितमवधारितमितियावत् 'मे' मया 'आयुष्मन्नि'ति शिष्यामन्त्रण, क कमेवमाह ?, सुधर्मस्वामी जम्बूस्वामिन, कि तत् श्रुतमित्याह—'तेने'ति त्रिजगत्प्रतीतेन 'भगवता' अष्टमहाप्रातिहार्यरूपसमग्रैश्वर्यादियुक्तेन, 'एव'मित्यमुना वक्ष्यमाणन्यायेन 'आख्यातं' सकलजन्तुभाषाभिव्याप्त्या कथितम्, उक्त च—"देवा दैवीं नरा नारीं, शबराश्चापि शाबरीम् । तिर्यञ्चोऽपि हि तैरश्चीं, मेनिरे भगवद्गिरम् ॥ १ ॥" किमत आह—'इहे'ति लोके प्रवचने वा 'खलु' वाक्यालङ्कारे अवधारणे वा, तत इहैव—जिनप्रवचन एव द्वाविंशति परीषहा, सन्तीति गम्यते, अत्र च श्रुतमित्यनेनावधारणाभिधायिना स्वयमवधारितमेव अन्यस्मै प्रतिपादनीयमित्याह, अन्यथाऽभिधाने प्रत्युतापायसम्भवात्, उक्त च—"[१]कि एत्तो पावयर सम्म अणहिगयधम्मसब्भावो । अन्न कुदेसणाए कट्ठतरायमि पाडेइ ॥ १ ॥"त्ति, 'मये'त्यनेनार्थतोऽनन्तरागमत्वमाह, 'भगवते'त्यनेन च वक्तु केवलज्ञानादिगुणवत्त्वसूचकेन प्रकृतवचस प्रामाण्य ख्यापयितु वक्तु प्रामाण्यमाह, वक्तृप्रामाण्यमेव हि वचनप्रामाण्ये निमित्तं, यदुक्तम्—"पुरुषप्रामाण्यमेव शब्दे दर्पणसङ्क्रान्त मुखमिवापचारादभिधीयते" 'तेने'ति च गुणवत्त्वप्रसिध्ध्यभिधानेन प्रस्तुताध्ययनस्य प्रामाण्यनिश्चयमाह, सदिग्धे हि वक्तुर्गुणवत्त्वे वचसोऽपि प्रामाण्ये सदिह्येतेति, समुदायेन तु आत्मौद्धत्यपरिहारेण गुरुगुणप्रभावनापरैरेव विनेयेभ्यो देशना विधेया, एतद्भक्तिपरिणामे च विद्यादेरपि फलसिद्धि, यदुक्तम्—"[२]आयेरियभत्ति-

---

१ किमेतस्मात्पापकर ? सम्यगनधिगतधर्मसद्भाव । अन्य कुदेशनया कष्टतरायसि पातयति ॥ १ ॥ २ आचार्यभक्तिरागेण विद्या मन्त्राश्च सिध्यन्ति

व्यापिपुरुषाद्वैतनिराकरणं कृतं भवति, तत्र हि सर्वस्यैकत्वादयमाख्याताऽस्मै व्याख्येयमित्यादिविभागाभावत आख्यानस्यैवासम्भव इति, 'प्रविदिताः' प्रकर्षेण–स्वयंसाक्षात्कारित्वलक्षणेन ज्ञाताः, अनेन बुद्धिव्यवहितार्थपरिच्छेदवादः परिक्षिप्तो भवति, स्वयमसाक्षात्कारी हि प्रदीपहस्तान्धपुरुषवद्व्यतिरिक्तबुद्धियोगोऽपि कथं कञ्चनार्थं परिच्छेत्तुं क्षमः स्याद् ?, एवं चैतदुक्तं भवति—नान्यतः पुरुषविशेषादेतेऽवगताः, स्वयंसम्बुद्धत्वाद्भगवतः, नाप्यपौरुषेयागमात्, तस्यैवासम्भवाद्, अपौरुषेयत्वं ह्यागमस्य स्वरूपापेक्षमर्थप्रत्यायनापेक्षं वा ?, तत्र यदि स्वरूपापेक्षं तदा ताल्वादिकरणव्यापारं विनैवास्य सदोपलम्भप्रसङ्गः, न चावृतत्वात् नोपलम्भ इति वाच्यं, तस्य सर्वथा नित्यत्वे आवरणस्याकिञ्चित्करत्वात्, किञ्चित्करत्वे वा कथञ्चिदनित्यत्वप्रसङ्गाद्, अथार्थप्रत्यायनापेक्षम्, एवं कृतसङ्केता बालादयोऽपि ततोऽर्थं प्रतिपद्येरन्निति नापौरुषेयागमसम्भव इति । ते च कीदृशा इत्याह—'यानि'ति परीषहान् 'भिक्षुः' उक्तनिरुक्तः, 'श्रुत्वा' आकर्ण्य, गुर्वन्तिक इति गम्यते, 'ज्ञात्वा' यथावदवबुध्य, 'जित्वा' पुनः पुनरभ्यासेन परिचितान् कृत्वा 'अभिभूय' सर्वथा तत्सामर्थ्यमुपहत्य, भिक्षोश्चर्या–विहितक्रियासेवनं भिक्षुचर्या तया 'परिव्रजन्' समन्ताद्विहरन् 'स्पृष्टः' आश्लिष्टः, प्रक्रमात्परीषहैरेव, 'नो' नैव 'विनिहन्येत' विविधैः प्रकारैः संयमशरीरोपघातेन विनाशं प्राप्नुयात्, पठन्ति च 'भिक्खायरियाए परिव्वयंतो'त्ति भिक्षाचर्यायां–भिक्षाटने परिव्रजन्, उदीर्यन्ते हि

तु यथाकथञ्चिद्,गुरुविनयभीत्या गुरुपर्षदुत्थितेभ्यो वा सकाशात्, यथोच्यते–"परिसुद्वियाण पासे सुणेइ सो विणयपरिभसि"त्ति, यदुक्त 'भगवता आख्यात द्वाविंशति परीषहा' सन्तीति, तत्र किं भगवता अन्यत पुरुषविशेषाद पौरुषेयागमात् स्वतो वा अमी अवगता इत्याह–श्रमणेन भगवता महावीरेण काश्यपेन 'पवेइय'त्ति सूत्रत्वात् प्रविदिता, तत्र श्राम्यतीति श्रमण –तपस्वी तेन, न तु 'ज्ञानमप्रतिघ यस्य, वैराग्य च जगत्पते । ऐश्वर्यं चैव धर्मश्च, सहसिद्ध चतुष्टयम् ॥ १ ॥' इतिकणादादिपरिकल्पितसदाशिववदनादिससिद्धेन, तस्य देहादिविरहात् तथाविधप्रयत्नाभावेनाऽऽख्यानायोगाद्, उक्त च—"वयंण न कायजोगाभावे ण य सो अणादिसुद्धस्स। गहणम्मि य नो हेतू सत्थ अत्तागमो कह णु ॥१॥" 'भगवते'ति च समग्रज्ञानैश्वर्यादिसूचकेन सर्वज्ञतागुणयोगित्वमाह, तथा च यत् कैश्चिदुच्यते–'हेयोपादेयतत्त्वस्य, साध्योपायस्य वेदक । य प्रमाणमसाविष्टो, न तु सर्वस्य वेदक ॥१॥' इति, तद्युदस्त भवति, असर्वज्ञो हि न यथावत्सोपायहेयोपादेयतत्त्वविद्भवति, प्रतिप्राणि भिन्ना हि भावानामुपयोगशक्तय', तत्र कोऽपि कस्यापि कथमपि क्वाप्युपयोगीति कथ सोपायहेयोपादेयतत्त्ववेदन सर्वज्ञता विना सम्भवतीति, 'महावीरेणे'ति शक्रकृतनाम्ना चरमतीर्थकरेण, 'काश्यपेन' काश्यपगोत्रेण, अनेन च नियतदेशकालकुलाभिधायिना सकलदेशकालकला-

१ पर्षदुत्थिताना पार्श्वे शृणोति स विनयपरिभ्रंशी । २ वचन न काययोगाभावे न च सोऽनादिशुद्धस्य। ग्रहणे न च हेतु शास्त्रमात्मागम कथ नु ? ॥ १ ॥

व्याख्या—'तद्यथे'त्युदाहरणोपन्यासार्थः दिगिञ्छापरीषहः १, पिपासापरीषहः २, शीतपरीषहः ३, उष्णपरीषहः ४, दंशमशकपरीषहः ५, अचेलपरीषहः ६, अरतिपरीषहः ७, स्त्रीपरीषहः ८, चर्यापरीषहः ९, नैषेधिकीपरीषहः १०, शय्यापरीषहः ११, आक्रोशपरीषहः १२, वधपरीषहः १३, याचनापरीषहः १४, अलाभपरीषहः १५, रोगपरीषहः १६, तृणस्पर्शपरीषहः १७, जल्लपरीषहः १८, सत्कारपुरस्कारपरीषहः १९, प्रज्ञापरीषहः २०, अज्ञानपरीषहः २१, दर्शनपरीषहः २२। इह च 'दिगिंछ'त्ति देशीवचनेन बुभुक्षोच्यते, सैवात्यन्तव्याकुलत्वहेतुरप्यसंयमभीरुतया आहारपरिपाकादिवाञ्छाविनिवर्त्तनेन परीति—सर्वप्रकारं सह्यत इति परीषहः दिगिंछापरीषहः १, एवं पातुमिच्छा पिपासा सैव परीषहः पिपासापरीषहः २, 'श्यैङ् गतौ' इत्यस्य गत्यर्थत्वात्कर्त्तरि क्तः, ततो 'द्रवमूर्तिस्पर्शयोः श्यः' (पा० ६–१–२४) इति संप्रसारणे स्पर्शवाचित्वाच्च 'श्योऽस्पर्शे' (पा० ८–२–७) इति नत्वाभावे शीतं—शिशिरः स्पर्शस्तदेव परीषहः शीतपरीषहः ३, 'उष दाहे' इत्यस्यौणादिकनक्प्रत्ययान्तस्य उष्णं—निदाघादितापात्मकं तदेव परीषहः उष्णपरीषहः ४, दशन्तीति दंशाः पचादित्वादच्, मारयितुं शक्नुवन्ति मशकाः, दंशाश्च मशकाश्च दंशमशकाः, यूकाद्युपलक्षणं चैतत्, त एव परीषहो दंशमशकपरीषहः ५, अचेलं—चेलाभावो जिनकल्पिकादीनाम् अन्येषां तु भिन्नमल्पमूल्यं च चेलमप्यचेलमेव, अवस्त्राशीलादिवत्, तदेव परीषहोऽचेलपरीषहः ६, रमणं रतिः—संयमविषया धृतिः तद्विपरीता त्वरतिः, सैव परीषहः अरतिपरीषहः ७, स्त्यायतेः स्तृणोतेर्वा त्रटि टित्त्वाच्च ङीपि स्त्री सैव तद्रू-

भिक्षाटने प्राय परीपहा , उक्त हि—"भिक्खायरियाए वावीस परीसहा उदीरिज्जति"त्ति, शेप प्राग्वत् ॥ इत्युक्त उद्देश , पृच्छामाह—

कयरे ते खलु वावीस प० जे०

व्याख्या—'कयरे' किंनामान 'ते' अनन्तरसूत्रोद्दिष्टा 'खलु' वाक्यालङ्कारे, शेप प्राग्वदिति ॥ निर्देशमाह—

इमे खलु ते वावीस प० जे०

व्याख्या—'इमे' अनन्तर वक्ष्यमाणत्वात् हृदि विपरिवर्तमानतया प्रत्यक्षा इमे 'ते' इति ये त्वया पृष्टा ,शेपं पूर्ववत् ,॥

तजहा—दिगिंछापरीसहे १ पिवासापरीसहे २ सीयपरीसहे ३ उसिणपरीसहे ४ दसमसगपरीसहे ५ अचेलपरीसहे ६ अरइपरीसहे ७ इत्थीपरीसहे ८ चरियापरीसहे ९ निसीहियापरीसहे १० सिज्जापरीसहे ११ अक्कोसपरीसहे १२ वहपरीसहे १३ जायणापरीसहे १४ अलाभपरीसहे १५ रोगपरीसहे १६ तणफासपरीसहे १७ जल्लपरीसहे १८ सक्कारपुरक्कारपरीसहे १९ पण्णापरीसहे २० अन्नाणपरीसहे २१ सम्मत्तपरीसहे २२

---

१ भिक्षाचर्याया द्वाविंशतिः परीपहा उदीर्यन्ते ॥ १ ॥

ज्ञायते वस्तुतत्त्वमनेनेति ज्ञानं—सामान्येन मत्यादि तदभावोऽज्ञानं २०–२१, दर्शनं—सम्यग्दर्शनं तदेव क्रियादिवादिना विचित्रमतश्रवणेऽपि सम्यक् परिपह्यमाणं—निश्चलचित्ततया धार्यमाणं परीषहो दर्शनपरीषहः, यद्वा दर्शनशब्देन दर्शनव्यामोहहेतुरैहिकामुष्मिकफलानुपलम्भादिरिह गृह्यते, ततः स एव परीषहो दर्शनपरीषहः २२॥ इत्थं नामतः परीषहानभिधाय तानेव स्वरूपतोऽभिधित्सुः संबन्धार्थमाह—

परीसहाणं पविभत्ती, कासवेण पवेइया। तं भे उदाहरिस्सामि, आणुपुव्विं सुणेह मे ॥ १ ॥ (सूत्रम्)

व्याख्या—'परीषहाणाम्' अनन्तरोक्तनाम्नां 'प्रविभक्तिः' प्रकर्षेण—स्वरूपसम्मोहाभावलक्षणेन विभागः—पृथक्ता 'काश्यपेन' काश्यपगोत्रेण महावीरेणेतियावत्, 'प्रवेदिता' प्ररूपिता 'ता'मिति काश्यपप्ररूपितां परीषहप्रविभक्तिं 'भे' इति भवताम्' 'उदाहरिष्यामि' प्रतिपादयिष्यामि' 'आनुपूर्व्या' क्रमेण शृणुत 'मे' मम प्रक्रमादुदाहरतः, शिष्यादरख्यापनार्थं च काश्यपेन प्रवेदितेति वचनमिति सूत्रार्थः ॥ १ ॥ इह चाशेषपरीषहाणां क्षुत्परीषह एव दुःसह इत्यादितस्तमाह—

दिगिंछापरियावेण, तवस्सी भिक्खु थामवं। न छिंदे न छिंदावए, न पए न पयावए ॥२॥ (सूत्रम्)

व्याख्या—दिगिञ्छा—उक्तरूपा तया परितापः—सर्वाङ्गीणसन्तापो दिगिञ्छापरितापस्तेन, छिदादिक्रियापेक्षा हेतौ

तरागहेतुगतिविभ्रमेङ्गिताकारविलोकनेऽपि–त्वगसृग्रुधिरमांसमेदोमज्जास्थिशिराव्रणे सुदुर्गन्धम् । कुचनयनजघनवदनोरुमूर्छितो मन्यते रूपम् ॥ १ ॥ तथा–निष्ठीवित जुगुप्सत्यधरस्थ पिबति मोहित प्रसभम् । कुचजघनपरिस्राव नेच्छति तन्मोहितो भजते ॥ २ ॥ इत्यादिभावनातोऽभिधास्यमाननीतितश्च परिषह्यमाणत्वात्परीषह स्त्रीपरीषह ८, चरण चर्या–ग्रामानुग्राम विहरणात्मिका सैव परीषह चर्यापरीषह ९, निषेधन निषेध पापकर्म्मणा गमनादिक्रियायाश्च स प्रयोजनमस्या नैषेधिकी–स्मशानादिका स्वाध्यायादिभूमि निषद्येतियावत् सैव परीषहो नैषेधिकीपरीषह १०, तथा शेरतेऽस्यामिति शय्या–उपाश्रय सैव परीषह शय्यापरीषह ११, आक्रोशनमाक्रोश –असत्यभाषात्मक स एव परीषह आक्रोशपरीषह १२, हनन वध –ताडन स एव परीषहो वधपरिषह १३, याचन याच्ञा प्रार्थनेत्यर्थ, सैव परीषहो याच्ञापरीषहो १४, लभन लाभो न लाभोऽलाभ –अभिलषितविषयाप्राप्ति स एव परीषह अलाभपरीषह १५, रोग –कुष्ठादिरूप स परीषहो रोगपरीषह १६, तरन्तीति तृणानि, औणादिको नक् ह्रस्वत्व च, तेषा स्पर्श तृणस्पर्श स एव परीषहस्तृणस्पर्शपरीषह १७, जल्ल इति मल स एव परीषहो जल्लपरीषह १८, सत्कारो–वस्त्रादिभि पूजन पुरस्कार –अभ्युत्थानासनादिसम्पादन, यद्वा सकलैवाभ्युत्थानाभिवादनदानादिरूपा प्रतिपत्तिरिह सत्कारस्तेन पुरस्करण सत्कारपुरस्कार, ततस्तावेव स एव वा परीषह सत्कारपुरस्कारपरीषह १९, प्रज्ञापरीषह अज्ञानपरीषहश्च प्राग्भावितार्थौ, नवर प्रज्ञायतेऽनया वस्तुतत्त्वमिति प्रज्ञा–स्वयविमर्शपूर्वको वस्तुपरिच्छेद, तथा

इति मात्राज्ञो–नातिलौल्यतोऽतिमात्रोपयोगी, कस्येत्याह—अश्यत इत्यशनम्–ओदनादि पीयत इति पानं–सौवीरादि अनयोः समाहारेऽशनपानं तस्य, तथा 'अदीणमणसो' त्ति सूत्रत्वाददीनमनाः अदीनमानसो वा–अनाकुलचित्तः 'चरेत्' संयमाध्वनि यायात्, किमुक्तं भवति ?–अतिवाधितोऽपि क्षुधा नवकोटीशुद्धमप्याहारमवाप्य न लौल्यतोऽतिमात्रोपयोगी तदप्राप्तौ वा दैन्यवान् इत्येवं क्षुत्परिषह्यमाणा क्षुत्परीषहः सोढो भवतीति सूत्रार्थः ॥ सम्प्रति प्राग्द्वारगाथोपक्षिप्तं सूत्रस्पर्श इति त्रयोदशद्वारं व्याचिख्यासुः सूत्रस्पर्शिकनिर्युक्तिमाह—

'सुत्तफासे य'त्ति । तथा—

कुमारए नई लेणे, सिला पंथे महल्लए । तावस पडिमा सीसे, अगणि निव्वेअ मुग्गरे ॥ ८७॥
वणे रामे पुरे भिक्खे, संथारे मल्लधारणं । अंगविज्जा सुए भोमे, सीसस्सागमणे इय ॥ ८८ ॥

व्याख्या—तत्र सूत्रस्पर्शश्चेति द्वारोपक्षेपः, कुमार इत्यादिना च तद्वर्णनं स्पष्टमेव, नवरं कुमारकादिभिः प्रत्येकं द्वाविंशतेरपि परीषहाणामुदाहरणोपदर्शनं, तथाहि—'कुमारकः' क्षुल्लकः, 'लेणं'ति लयनं गुहा 'महल्लए'त्ति आर्यरक्षितपिता, सूत्रस्पर्शित्वं चास्य सूत्रसूचितोदाहरणप्रदर्शकत्वादिति किञ्चिदधिकगाथाद्वयार्थः ॥ ८७–८८ ॥ इदानीं निर्युक्तिकार एव 'न छिन्दे'इत्यादिसूत्रावयवसूचितं कुमारकेत्यादिद्वारोपक्षिप्तं च क्षुत्परीषहोदाहरणमाह—

तृतीया, पाठान्तर 'दिगिंछापरिगते' बुभुक्षाव्याप्ते 'देहे' शरीरे सति, तपोऽस्यास्तीति अतिशायने विनिस्तपस्वी-विकृष्टाष्टमादितपोऽनुष्ठानवान्, स च गृहस्थादिरपि स्यादत आह—'भिक्षु' यति, सोऽपि कीदृक्—स्थाम—बल तदस्य सयमविषयमस्तीति स्थामवान्, भूम्नि प्रशसायां वा मतुप्प्रत्यय, अय च किमित्याह—'न छिन्द्यात्' न द्विधा विदध्यात्, स्वयमिति गम्यते, न छेदयेद्वा अन्यै, फलादिकमिति शेष, तथा न पचेत् स्वय, न चान्यै पाचयेत्, उपलक्षणत्वाच्च नान्य छिन्दन्त वा पचन्त वाऽनुमन्येत, तत एव च न स्वय क्रीणीयात् नापि क्रापयेत् न च पर क्रीणन्तमनुमन्येत, छेदस्य हननोपलक्षणत्वात् क्षुत्प्रपीडितोऽपि न नवकोटीशुद्धिबाधा विधत्ते इति गाथार्थ ॥ २ ॥

कालीपव्वगसकासे, किसे धमणिसंतए । मत्तन्नोऽसणपाणस्स, अदीणमणसो चरे ॥ ३ ॥ (सूत्रम्)

व्याख्या—काली—काकजङ्घा तस्या पर्वाणि स्थूराणि मध्यानि च तनूनि भवन्ति तत कालीपर्वाणीव पर्वाणि-जानुकूर्परादीनि येषु तानि कालीपर्वाणि, उष्ट्रमुखीवन्मध्यपदलोपी समास, तथाविधैरङ्गै—शरीरावयवै सम्यक्का-शते—तप श्रिया दीप्यत इति कालीपर्वाङ्गसङ्काश, यद्वा प्राकृते पूर्वापरनिपातस्यातन्त्रत्वाद्ग्रामो दग्ध इत्यादिवत् अव-यवधर्मेणाप्यवयविनि व्यपदेशदर्शनाच्चाङ्गसन्धीनामपि कालीपर्वसदृशतया कालीभि सङ्काशानि—सदृशान्यङ्गानि यस्य स तथा, स हि विकृष्टतपोऽनुष्ठानतोऽपचितपिशितशोणित इत्यस्थिचर्मावशेष एवंविध एव भवति, अत एव च 'कृश' कृशशरीर, धमनय—शिरास्ताभि सन्ततो—व्याप्तो धमनिसतत, एवविधावस्थोऽपि मात्रा—परिमाणरूपा जानाति

एण भणियं–तुमं कीस आगओ ?, इहं मरिहिसि, सोऽवि थेरो वेयणत्तो तद्दिवसं चेव कालगतो, खुड्डगो न चेव जाणइ जहा कालगतो। सो देवलोएसु उववण्णो, पच्छा तेण ओही पउत्ता–किं मया दत्तं तत्तं वा ?, जाव तं सरीरयं पेच्छइ खुड्डगं च, सो तस्स खुड्डगस्स अणुकंपाए तहेव सरीरगं अणुपविसित्ता खुड्डएण सद्धिं उल्लावितो अच्छइ, तेण भणिओ–वच्चह पुत्त! भिक्खाए, सो भणइ–कहिं ?, तेण भण्णइ–एए धवणिग्गोहादी पायवा, एएसु तन्निवासी पागवंतो, जे तव भिक्खं देहिंति, तहत्ति भणिउं गतो, धम्मलाभेति रुक्खहेट्ठेसु, ततो सालंकारो हत्थो णिग्गच्छिउं भिक्खं देइ, एवं दिवसे दिवसे भिक्खं गिण्हंतो अच्छितो जाव ते साहुणो तंमि देसे दुब्भिक्खे जाए पुणोवि उज्जेणिगं देसं आगच्छंता तेणेव मग्गेण आगया बितिए संवच्छरे, जाव तं गया पएसं, खुड्डगं पेच्छंति वरिसस्स

---

सकाशं, वृद्धेन भणितम्–त्वं किमागतः, इह मरिष्यसि, सोऽपि स्थविरो वेदनार्त्तः तद्दिवस एव कालं गतः, क्षुल्लको नैव जानाति यथा कालगतः। स देवलोके उत्पन्नः, पश्चात्तेनावधिः प्रयुक्तः—किं मया दत्तं तप्त वा ?, यावत्तच्छरीरकं प्रेक्षते क्षुल्लकं च, स तस्य क्षुल्लकस्यानुकम्पया तथैव शरीरकमनुप्रविश्य क्षुल्लकेन सार्धं उल्लापयन् तिष्ठति, तेन भणितः–व्रज पुत्र! भिक्षायै, स भणति-क ?, तेन भण्यते-एते धवन्यग्रोधादयः पादपाः, एतेषु तन्निवासिनः पाकवन्तः, ये तुभ्यं भिक्षां दास्यन्ति, तथेति भणित्वा गतः, धर्मलाभयति वृक्षाणामधस्तात्, ततः सालङ्कारो हस्तो निर्गत्य भिक्षां ददाति, एवं दिवसे दिवसे भिक्षां गृह्णन् स्थितः यावत्ते साधवस्तस्मिन् देशे दुर्भिक्षे जाते पुनरपि उज्जयिनीदेशमागच्छन्तः तेनैव मार्गेणागताः, द्वितीयस्मिन् संवत्सरे, यावत्तं प्रदेशं गताः, क्षुल्लकं प्रेक्षन्ते, वर्षस्यान्ते।

उज्जेणी हत्थिमित्तो भोगपुरे हत्थिभूइखुड्डो अ। अडवीइ वेयणट्टो पाओवगओ य सादिव्व ॥ ८९ ॥

व्याख्या—उज्जयिनी हस्तिमित्रो भोगकटकपुर हस्तिभूतिक्षुल्लकश्चाटव्या वेदनार्त्त पादपोपगतश्च सादिव्य-देवसन्निधानमिति गाथाक्षरार्थं ॥ ८९ ॥ भावार्थो वृद्धसम्प्रदायादवसेय, स चायम्—तेण कालेण तेण समएण उज्जेणीए नगरीए हत्थिमित्तो नाम गाहावई, सो मतभज्जिओ, तस्स पुत्तो हत्थिभूइ नाम दारगो, सो त गहाय पव्वइओ। ते अन्नया कयाइ उज्जेणीओ भोगकड पत्थिया, अडविमज्झे सो खतो पाए खयकाए विद्धो, सो असमत्थो जातो, तेण साहुणो वुत्ता—वच्चह तुब्भेऽवि ताव नित्थरह कतार, अह महया कट्ठेण अभिभूतो, जइ मम तुब्भे वहह तो भज्जिहिह, अह भत्त पच्चक्खामि, निव्वधेण ट्ठितो एगपासे गिरिकंदराए भत्त पच्चक्खाउ। साधू पट्ठिया, सो खुड्डतो भणति—अहपि इच्छामि, सो तेहि वला नीतो, जाहे दूर गतो ताहे वीसभेऊण पवइए नियत्तो, आगतो खतस्स सगास, खत-

१ तस्मिन् काले तस्मिन् समये उज्जयिन्या नगर्या हस्तिमित्रो नाम गाथापति, ■ मृतभार्य, तस्य पुत्रो हस्तिभूतिर्नाम दारक, स त गृहीत्वा प्रव्रजित। तौ अन्यदोज्जयिनीतो भोगकट प्रस्थितौ, अटवीमध्ये स वृद्ध पादे कीलकेन विद्ध, सोऽसमर्थो जात, तेन साधव उक्ता—व्रजत यूयमपि तावत् निस्तरत कान्तारम्, अह महता कष्टेनाभिभूतो, यदि मा यूय वहत तदा विनङ्क्ष्यथ, अह भक्त प्रत्याख्यामि, निर्बन्धेन स्थित एकपार्श्वे गिरिकन्दराया भक्त प्रत्याख्याय। साधवः प्रस्थिता, स क्षुल्लको भणति-अहमपीच्छामि ( सार्धं स्थातु तेन ) स तैर्बलान्नीत, यदा दूर गतस्तदा विश्रभ्य प्रव्रजितान् निवृत्त, आगतो वृद्धस्य।

पलक्षणमेतत्, ततः स्वकीयादिशस्त्रानुपहतम्, अप्रासुकमित्यर्थः, तच्च तदुदकं च शीतोदकं, 'न सेवेत' न पानादिना भजेत, किन्तु 'वियडस्स'त्ति विकृतस्य—वह्न्यादिना विकारं प्रापितस्य प्रासुकस्येतियावत्, प्रक्रमादुदकस्य 'एसणं'ति चतुर्थ्यर्थे द्वितीया, ततश्चैषणाय—गवेषणार्थं 'चरेत्, तथाविधकुलेषु पर्यटेत्, अथवा एषणाम्—एषणासमितिं चरेत्, किमुक्तं भवति ?—एकवारमेषणाया अशुद्धावपि न पिपासातिरेक-चरतेरासेवायामपि दर्शनात् पुनः पुनः सेवेत, कदाचिज्जनाकुल एव निकेतनादौ लज्जातः स्वस्थ एव चैवं तोऽनेषणीयमपि गृह्णंस्तामुल्लङ्घयेदिति सूत्रार्थः ॥ ४ ॥ विदधीतेत्यत आह—

छिन्नावाएसु पंथेसुं, आउरे सुपिवासिए । परिसुक्कमुहे दीणे, तं तितिक्खे परीसहं॥५॥(सूत्रम्)

व्याख्या—छिन्नः—अपगतः आपातः—अन्यतोऽन्यत आगमनात्मकः अर्थाज्जनस्य येषु ते छिन्नापाताः, विविक्ता इत्यर्थः, तेषु, 'पथिषु' मार्गेषु, गच्छन्निति गम्यते, कीदृशः सन्नित्याह—'आतुरः' अत्यन्ताकुलतनुः, किमिति ?, यतः सुष्ठु—अतिशयेन पिपासितः—तृषितः सुपिपासितः, अत एव च परिशुष्कं—विगतनिष्ठीवनतयाऽनार्द्रतामुपगतं मुख-मस्येति परिशुष्कमुखः स चासौ अदीनश्च—दैन्याभावेन परिशुष्कमुखादीनः 'त'मिति तृट्परीषहं 'तितिक्षेत' सहेत पठ्यते च—'सव्वतो य परिव्वए'त्ति सर्वत इति सर्वान्—मनोयोगादीनाश्रित्य, चः पूरणे 'परिव्रजेत्' सर्वप्रकारसं-यमाध्वनि यायात्, उभयत्रायमर्थो—विविक्तदेशस्थोऽप्यत्यन्तं पिपासितोऽस्वास्थ्यमुपगतोऽपि च नोक्तविधि-

अते, पुच्छितो भणइ—खतोऽवि अच्छइ, गया जाव सुक्क सरीरय पेच्छति, तोहिं नाय—देवेण होऊणमणुकपा कइ-ल्लिया होहित्ति । खतेण अहियासितो परीसहो ण खुड्डएण, अहवा खुड्डएणवि अहियासितो, ण तस्स एव भावो भवइ—जहाऽह न लभिस्सामि भिक्ख, पच्छा सो खुड्डगो साहूहिं नीओ । यथा च ताभ्यामय परीपह सोढस्तथा साम्प्रतस्थमुनिभिरपि सोढव्य इत्यैदम्पर्यार्थं । उक्त क्षुत्परीपह , एव चाधिसहमानस्य न्यूनकुक्षितयैषणीयाहारार्थं वा पर्यटतः श्रमादिभिरवश्यभाविनी पिपासा, सा च सम्यक् सोढव्येति तत्परीपहमाह—

तओ पुट्ठो पिवासाए, दुगुछी लद्धसजमे। सीओदग ण सेवेज्जा, वियडस्सेसण चरे ॥४॥(सूत्रम्)

व्याख्या—'तत' इति क्षुत्परीपहात् तको वा उक्तविशेषणो भिक्षु 'स्पृष्ट' अभिद्रुत 'पिपासया' अभिहितस्वरूपया 'दोगुछी'ति जुगुप्सी, सामर्थ्यादनाचारस्येति गम्यते, अत एव लब्ध —अवाप्त सयम —पञ्चाश्रवादिविरमणात्मको येन स तथा, पाठान्तर वा 'लज्जसजमेत्ति' लज्जा—प्रतीता सयम —उक्तरूप एताभ्यां स्वभ्यस्ततया सात्मीभावसमुपगताभ्यामनन्य इति स एव लज्जासयम , पठ्यते च 'लज्जासजए'त्ति, तत्र लज्जया सम्यग्यतते—कृत्य प्रत्यादृतो भवतीति लज्जासयत , सर्वधातुना पचादिषु दर्शनात् , स एवविध किमित्याह—शीत—शीतल, स्वरूपस्थतोयो-

१ पृष्टो भणति—वृद्धोऽपि तिष्ठति, गता यावत् शुष्क शरीरक प्रेक्षन्ते, तैर्ज्ञात—देवीभूयानुकम्पा कृताऽभविष्यत् इति । वृद्धेनाध्यासित परीषहो न क्षुल्लकेन, अथवा क्षुल्लकेनापि अध्यासित , न तस्यैव भावोऽभूत्-यथाऽह न लप्स्ये भिक्षा, पश्चात्स क्षुल्लक साधुमिर्नीत ।

णागं ओसरामि, जांवेस खुड्डओ पाणियं पियइ, मा मे संकाए न पाहित्ति एगंते पडिच्छइ, जाव खुड्डतो पत्तो णइं ण पियति, केइ भणंति—अंजलीए उक्खित्ताए अह से चिंता जाया—पियामित्ति, पच्छा चिंतेइ—कहमहं एए हालाहले जीवे पिविस्सं ?, ण पीयं, आसाए छिन्नाए कालगतो, देवेसु उववण्णो, ओहि पउत्तो, जाव खुड्डगसरीरं पासति, ताहिं अणुपविट्ठो, खंतं ओलग्गति, खंतोऽवि एतित्ति पत्थितो, पच्छा तेण तेसिं देवेणं साहूणं गोउलाणि विउव्वियाणि, साहूवि तासु वइयासु तक्काईणि गिण्हन्ति, एवं वईयापरंपरेण जाव जणवयं संपत्ता, पच्छिल्लाए वईयाए तेण देवेण विंटिया पम्हुसाविया जाणणनिमित्तं, एगो साहू णियत्तो, पेच्छति विंटियं, णत्थि वइया, पच्छा तेहिं णायं—सादिव्वंति, पच्छा तेण देवेण साहुणो वंदिया, खंतो न वंदिओ, तओ सव्वं परिकहेइ, भणइ—एएण

१ यावदेप क्षुल्लकः पानीयं पिवति, मा मम शङ्कया न पास्यतीति एकान्ते प्रतीक्षते, यावत्क्षुल्लकः प्राप्तः नदीं, न पिवति, केचिद्भणन्ति-अञ्जलावुत्क्षिप्तायामथ तस्य चिन्ता जाता-पिवामीति, पश्चात् चिन्तयति-कथमहमेतान् हालाहलान् जीवान् पास्ये ?, न पीतम्, आशायां छिन्नायां कालगतः, देवेपूत्पन्नः, अवधिः प्रयुक्तः, यावत् क्षुल्लकशरीरं पश्यति, तत्रानुप्रविष्टः, वृद्धमवलगति, वृद्धोऽपि एतीति प्रस्थितः, पश्चात्तेन देवेन तेभ्यः साधुभ्यो गोकुलानि विकुर्वितानि, साधवोऽपि तासु व्रजिकासु तक्रादीनि गृह्णन्ति, एवं व्रजिकापरम्परकेण यावज्जनपदं संप्राप्ताः, पश्चिमायां व्रजिकायां तेन देवेन विण्टिका विस्मारिता ज्ञाननिमित्तम्, एकः साधुर्निवृत्तः, पश्यति विण्टिकां, नास्ति व्रजिका, पश्चात्तैर्ज्ञातं-सादिव्यमिति, पश्चात् तेन देवेन साधवो वन्दिताः, वृद्धो न वन्दितः, ततः सर्वं परिकथयति, भणति-एतेनाहं ।

गुल्लघयेत्, तत पिपासापरीषहोऽध्यासितो भवतीति सूत्रार्थ ॥ ५ ॥ इदानी नदीद्वारमनुसरन् 'सीओदग न सेवेज्जा' इत्यादिसूत्रावयवसूचित निर्युक्तिकृत् दृष्टान्तमाह—

उज्जेणी धणमित्तो पुत्तो से खुड्डुओ अ धणसम्मो । तण्हाइत्तोऽपीओ कालगओ एलगच्छपहे ॥ ९० ॥

व्याख्या—उज्जयिन्या धनमित्र 'से' इति तस्य पुत्र क्षुल्लकश्च धनपुत्रशर्म्मा 'तण्हाइत्तो'त्ति तृषितोऽपीत' कालगत एडकाक्षपथ इत्यक्षरार्थ ॥ ९० ॥ भावार्थस्तु सम्पदायादवसेय, स चायम्—

एत्थ उदाहरण किंचि पडिवक्खेण किंचि अणुलोमेण । उज्जेणी नाम नयरी, तत्थ धणमित्तो नाम वाणियतो, तस्स पुत्तो धणसम्मो नाम दारतो, सो धणमित्तो तेण पुत्तेण सह पव्वइओ । अनया ते साहू मज्झण्हवेलाए एलगच्छपहे पट्ठिया, सोऽवि खुड्डगो तण्हाइत्तो एति, सोऽवि से खन्तो सिणेहाणुरागेण पच्छओ एति, साहुणोऽवि पुरतो वच्चति, अन्तरापि नदी समावडिया, पच्छा तेण वुच्चइ—एहि पुत्त ! इम पाणिय पियाहि, सोऽवि खतो नइ उत्तिन्नो चिंतेति य—म-

१ अत्रोदाहरण किञ्चित्प्रतिपक्षेण किञ्चिदनुलोमेन । उज्जयिनी नाम नगरी, तत्र धनमित्रो नाम वणिक्, तस्य पुत्रो धनशर्मा नाम दारक, स धनमित्रस्तेन पुत्रेण सह प्रव्रजित । अन्यदा ते साधवो मध्याह्नवेलायामेलकाक्षपथे प्रस्थिता, सोऽपि क्षुल्लकस्तृषित एति, सोऽपि तस्य पिता स्नेहानुरागेण पश्चादायाति, साधवोऽपि पुरतो व्रजन्ति, अन्तराऽपि नदी समापतिता, पश्चात्तेनोच्यते—एहि पुत्रेद पानीय पिब, सोऽपि पुत्रो नदीमुत्तीर्णश्चिन्तयति च—मा नागपसरामि ।

मिति प्रक्रमः, अयमत्र भावार्थः—पापदृष्टिरेवोक्तरूपमर्यादातिक्रमकारी, ततः पापबुद्धिकृतत्वादस्य सद्बुद्धिभिः परिहारो विधेयः, पठ्यते च—'नाइवेलं मुणी गच्छे, सुच्चा णं जिणसासणं' तत्र वेला—स्वाध्यायादिसमयात्मिका तामतिक्रम्य शीतेनाभिहतोऽहमिति 'मुनिः' तपस्वी न 'गच्छेत्' स्थानान्तरमभिसर्प्पेत्, 'सोच्चे'ति श्रुत्वा णमिति वाक्यालङ्कारे 'जिनशासनं' जिनागमम्—अन्यो जीवोऽन्यश्च देहस्तीव्रतराश्च नरकादिषु शीतवेदनाः प्राणिभिरनुभूतपूर्वा इत्यादिकमिति सूत्रार्थः ॥ ६ ॥ अन्यच्च—

**ण मे णिवारणं अत्थि, छवित्ताणं न विज्जइ । अहं तु अग्गिं सेवामि, इइ भिक्खू न चिंतए ॥७॥(सूत्रम्)**

व्याख्या—न 'मे' मम नितरां वार्यते—निषिध्यतेऽनेन शीतवातादीति निवारणं—सौधादि 'अस्ति' विद्यते, तथा छविः—त्वक् त्रायते—शीतादिभ्यो रक्ष्यतेऽनेनेति छवित्राणं—वस्त्रकम्बलादि न विद्यते, वृद्धास्तु निवारणं—वस्त्रादि तथा छविः—त्वक् त्राणं न विद्यते—न भवति, असौ हि शीतोष्णादीनां ग्राहिकेति व्याचक्षते, अतः 'अह'मित्यात्मनिर्देशः तुः पुनरर्थः, तद्भावना च येषां निवारणं छवित्राणं वा समस्ति ते किमिति अग्निं सेवेयुः?, अहं तु तदभावादत्राणः तत्किमन्यत्करोमीत्यग्निं सेवे 'इती'त्येवं 'भिक्षुः' यतिः 'न चिन्तयेत्' न ध्यायेत्, चिन्तानिषेधे च सेवनं दूरापास्तमिति सूत्रार्थः ॥ ७ ॥ इदानीं लयनद्वारं, तत्र च 'नातिवेलं मुनिर्गच्छेदि'त्यादिसूत्रावयवसूचितं दृष्टान्तमाह—

अह परिचंत्तो–तुम ण पाणिय पियाहित्ति, जदि मे त पाणिय पिय होत तो ससार भमतो, पडिगतो। एव अहियासेयध। इत्यवसित पिपासापरीषह, क्षुत्पिपासासहनकर्शितशरीरस्य च नितरा शीतकाले शीतसम्भव इति तत्परीषहमाह—

चरत विरय लूह, सीय फुसइ एगया। नाइवेल विहन्निज्जा, पावदिट्ठी विहन्नइ ॥ ६ ॥ (सूत्रम्)

व्याख्या—'चरन्तम्' इति ग्रामानुग्राम मुक्तिपथे वा व्रजन्त, धर्ममासेवमान वा, 'विरतम्' अग्निसमारम्भादेर्निवृत्त विगतरत वा 'लूह'ति स्नानस्निग्धभोजनादिपरिहारेण रूक्ष, किमित्याह—शृणाति इति शीत, 'स्पृशति' अभिद्रवति, चरदादिविशेषणविशिष्टो हि सुतरा शीतेन बाध्यते, 'एकदे'ति शीतकालादौ प्रतिमाप्रतिपत्त्यादौ वा, तत किम्?–'न' नैव वेला–सीमा मर्यादा सेतुरित्यनर्थान्तर, ततश्चातीति शेषसमयेभ्य स्थविरकल्पिकापेक्षया जिनकल्पिकापेक्षया च स्थविरकल्पाद्यतिशायिनी वेला शक्त्यपेक्षतया च सर्वथानपेक्षतया च शीतसहनलक्षणा मर्यादा ता विहन्यात्, कोऽर्थ –अपध्यानस्थानान्तरसर्पणादिभिरतिक्रामेत्, किमेवमुपदिश्यत इत्याह—पासयति पातयति वा भवावर्ते इति पापा तादृशी दृष्टि –बुद्धिरस्येति पापदृष्टि 'विहन्नइ' इति सूत्रत्वाद्विहन्ति–अतिक्रामत्यतिवेला-

१ परित्यक्त –त्वमिद पानीय पिबेति, यदि मया तत्पानीय पीतमभविष्यत्तदा ससारमभ्रमिष्यम्, प्रतिगत, एवमध्यासितव्यम्।

२ नेद पदत्रय प्रत्यन्तरे

जो नगरसमीवे सो चउत्थे जामे कालगतो, तेसिं जो नगरब्भासे तस्स नगरुण्हाए न तहा सीअं तेण पच्छा कालगतो, ते सम्मं कालगया, एवं सम्मं अहियासियव्वं जहा तेहिं चउहिं अहियासियं ॥ इदानीं शीतविपक्षभूतमुष्णमिति यदिवा शीतकाले शीतं तदनन्तरं ग्रीष्मे उष्णमिति तत्परीषहमाह—

उसिणपरितावेण, परिदाहेण तज्जिओ। घिंसु वा परितावेणं, सायं ण परिदेवए ॥ ८ ॥ (सूत्रम्)

व्याख्या—उष्णम्–उष्णस्पर्शवत् भूशिलादि तेन परितापः तेन, तथा 'परिदाहेन' बहिः स्वेदमलाभ्यां वह्निना वा अन्तश्च तृष्णया जनितदाहस्वरूपेण 'तर्जितः' भर्त्सितोऽत्यन्तपीडित इतियावत्, तथा 'ग्रीष्मे' वाशब्दात् शरदि वा 'परितापेन' रविकिरणादिजनितेन तर्जित इति सम्बन्धः, किमित्याह—'सातं' सुखं, प्रतीति शेषः, न परिदेवेत्, किमुक्तं भवति ?—'नारीकुचोरुकरपल्लवोपगूढैः क्वचित्सुखं प्राप्ताः। क्वचिदङ्गारैर्ज्वलितैस्तीक्ष्णैः पक्काः स्म नरकेषु॥१॥' इत्यादि परिभावयन् हा ! कथं मम मन्दभाग्यस्य सुखं स्यादिति प्रलपेत्, यद्वा—'सात'मिति सातहेतुं प्रति, यथा हा! कथं कदा वा शीतकालः शीतांशुकरकलापादयो वा मम सुखोत्पादकाः सम्पत्स्यन्त इति न परिदेवेतेति सूत्रार्थः ॥ ८ ॥ उपदेशान्तरमाह—

१ यो नगरसमीपे स चतुर्थे यामे कालगतः, तेषां यो नगराभ्यासे तस्य नगरोष्मणा न तथा शीतं तेन पश्चात्कालगतः, ते सम्यक् कालगताः, एवं सम्यगध्यासितव्यं यथा तैश्चतुर्भिरध्यासितम्।

रायगिहम्मि वयसा सीसा चउरो उ भद्दबाहुस्स । वेभारगिरिगुहाए सीयपरिगया समाहिगया ॥९१॥

व्याख्या—राजगृहे नगरे वयस्याः शिष्याश्चत्वारस्तु भद्रबाहोर्वैभारगिरिगुहायां शीतपरिगताः समाधिगता इत्यक्षरार्थः ॥ ९१ ॥ भावार्थस्तु वृद्धविवरणादवसेयः, तच्चेदम्—

रायंगिहे णयरे चत्तारि वयसा वाणियगा सहवड्डियया, ते भद्दबाहुस्स अंतिए धम्मं सोच्चा पव्वइया, ते सुयं बहु अहिज्जित्ता अन्नया कयाइ एगल्लविहारपडिमं पडिवन्ना, ते समावत्तीए विहरंता पुणोवि रायगिहं नयरं संपत्ता, हेमंतो य वट्टति, ते य भिक्खं काउं तइयाए पोरिसीए पडिनियत्ता, तेसिं च वेभारगिरितेण गंतव्वं, तत्थ पढमस्स गिरिगुहादारे चरिमा पोरिसी ओगाढा, सो तत्थेव ठिओ, बियस्स उज्जाणे, ततियस्स उज्जाणसमीवे, चउत्थस्स नगरब्भासे चेव, तत्थ जो गिरिगुहब्भासे तस्स निरागं सीयं सो सम्मं सहतो खमतो अ पढमजामे चेव कालगतो, एवं

१ राजगृहे नगरे चत्वारो वयस्या वणिजः सहवृद्धाः, ते भद्रबाहोरन्तिके धर्मं श्रुत्वा प्रव्रजिताः, ते श्रुतं बह्वधीत्य अन्यदा कदाचित् एकाकिविहारप्रतिमां प्रतिपन्नाः, ते समापत्त्या ( भवितव्यतया ) विहरन्तः पुनरपि राजगृहं नगरं सम्प्राप्ताः, हेमन्तश्च वर्त्तते, ते च भिक्षां कृत्वा तृतीयायां पौरुष्यां प्रतिनिवृत्ताः, तेषां च वैभारगिरिमार्गेण गन्तव्यं, तत्र प्रथमस्य गिरिगुहाद्वारे चरमा पौरुष्यवगाढा, स तत्रैव स्थितः, द्वितीयस्योद्याने, तृतीयस्योद्यानसमीपे, चतुर्थस्य नगराभ्यासे चैव, तत्र यो गिरिगुहाभ्यासे तस्य निरन्तरायं शीतं स सम्यक् सहमानः क्षममाणश्च प्रथमयाम एव कालगतः, एवं

अरहन्नएंण सद्धिं पव्वइओ, सो तं खुड्डगं ण कयाइ भिक्खाए हिंडावेइ, पढमालियाईहिं किमिच्छएहिं पोसेति, सो सुकुमालो, साहूण अप्पत्तियं, ण तरंति किंचि भणिउं। अन्नया सो खंतो कालगतो, साहूहिं दो तिन्नि वा दिवसे दाउं भिक्खस्स ओयारिओ,सो सुकुमालसरीरो गिम्हे उवरिं हिट्ठा य डज्झति पासे य, तिण्हाभिभूतो छायाए वीसमंतो पउत्थवतियाए वणियमहिलाए दिट्ठो, ओरालसुकुमालसरीरोत्तिकाउं तीसे तहिं अज्झोववाओ जाओ, चेडीए सद्दावितो, किं मग्गसि ?, भिक्खं, दिण्णा से मोयगा, पुच्छितो—कीस तुमं धम्मं करेसि ?, भणइ—सुहनिमित्तं, सा भणइ—तो मए चेव समं भोगे भुंजाहि, सो य उण्हेण तज्जिओ उवसग्गिज्जंतो य पडिभग्गो भोगे भुंजति। सो साहूहिं सव्वहिं मग्गितो ण दिट्ठो अप्पसागारियं पविट्ठो, पच्छा से माया उम्मत्तिया जाया पुत्तसोगेण, णयरं परिभमंती

१ चार्हन्नकेन सार्धं प्रव्रजितः, स तं क्षुल्लकं न कदाचित् भिक्षायै हिण्डयति, प्रथमालिकादिभिः किमिच्छकैः पोषयति, स सुकुमालः, साधूनामप्रीतिकं, न तरन्ति किञ्चिद्भणितुम्। अन्यदा स वृद्धः कालगतः, साधुभिः द्वौ त्रीन् वा दिवसान् दत्त्वा भिक्षायामवतारितः, स सुकुमालशरीरो ग्रीष्मे उपरि अधस्ताच्च दह्यते पार्श्वयोश्च, तृष्णाभिभूतश्छायायां विश्राम्यन् प्रोषितपतिकया वणिग्महेलया दृष्टः, उदारसुकुमालशरीर इतिकृत्वा तस्यास्तत्राध्युपपातो जातः, चेटया शब्दितः, किं मार्गयसि ?, भिक्षां, दत्तास्तस्मै मोदकाः, पृष्टः—कथं त्वं धर्मं करोपि ?, भणति-सुखनिमित्तं, सा भणति-तदा मयैव समं भोगान् भुङ्क्ष्व,स चोष्णेन तर्जितः उपसर्ग्यमाणश्च प्रतिभग्नो भोगान् भुनक्ति। स साधुभिः सर्वत्र मार्गितः न दृष्टोऽल्पसागारिकं प्रविष्टः, पश्चात्तस्य मातोन्मत्ता जाता पुत्रशोकेन, नगरं परिभ्राम्यन्ती अर्हन्नकं विलपन्ती यं यत्र पश्यति

उण्हाहितत्तो मेहावी, सिणाण नाभिपत्थए। गाय न परिसिंचेज्जा, न विजिज्जा य अप्पयं॥९॥ (सूत्रम्)

व्याख्या—'उष्णाभितप्त' उष्णेनात्यन्तं पीडितो 'मेधावी' मर्यादानतिवर्त्ती 'स्नानं' शौचं देशसर्वभेदभिन्नं 'नाभिप्रार्थयेत्' नैवाभिलषेत्, पठन्ति च—'णोऽवि पत्थए'त्ति अपेर्भिन्नक्रमत्वात् प्रार्थयेदपि न, किं पुनः कुर्यादिति ?, तथा 'गात्रं' शरीरं 'न परिषिञ्चेत्' न सूक्ष्मोदकबिन्दुभिरार्द्रीकुर्यात्, 'न वीजयेच्च' तालवृन्तादिना 'अप्पयं'ति आत्मानम्, अथवाऽल्पमेवाल्पकं, किं पुनर्बहिति सूत्रार्थः ॥९॥ साम्प्रतं शिलाद्वारमनुसरन् 'उसिणपरितावेणे—'त्यादिसूत्रावयवसूचितमुदाहरणमाह—

तगराइ अरिहमित्तो दत्तो अरहन्नओ य भद्दा य। वणियमहिल चइत्ता तत्तंमि सिलायले विहरे॥९२॥

व्याख्या—तगरायामर्हन्मित्रो दत्तोऽर्हन्नकश्च भद्रा च वणिग्महेला त्यक्त्वा तप्ते शिलातले 'विहरे'त्ति व्यहार्षीदिति गाथाक्षरार्थः ॥ ९२ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—

[1]तगरा नयरी, तत्थ अरिहमित्तो नाम आयरिओ, तस्स समीवे दत्तो नाम वाणियओ भद्दाए भारियाए पुत्तेण य

१ तगरा नगरी, तत्रार्हन्मित्रनामा आचार्यः, तस्य समीपे दत्तो नाम वणिक् भद्रया भार्यया पुत्रेण

विसर्ज्जनीयस्ये'ति रेफात्, ततः सम एव-तदगणनया स्पृष्टास्पृष्टावस्थयोस्तुल्य एव, यद्वा समन्तादरयः-शत्रवो यस्मिंस्तत्समरं तस्मिन्निति संग्रामशिरोविशेषणं, वेति पूरणे, 'महामुनिः' प्रशस्तयतिः, किमित्याह—'णागो संगामसीसे वे'ति इवार्थस्य वाशब्दस्य भिन्नक्रमत्वान्नाग इव-हस्तीव संग्रामस्य शिर इव शिरः-प्रकर्षावस्था संग्रामशिरस्तस्मिन् 'शूरः' पराक्रमवान्, यद्वा शूरो-योधः, ततोऽन्तर्भावितोपमार्थत्वाद्वाशब्दस्य च गम्यमानत्वात् शूरवद्वाऽभिहन्यात्, कोऽर्थः?-अभिभवेत् 'परं' शत्रुम्, अयमभिप्रायः-यथा शूरः करी यद्वा यथा वा योधः शरैस्तुद्यमानोऽपि तदगणनया रणशिरसि शत्रून् जयति, एवमयमपि दंशादिभिरभिद्रूयमानोऽपि भावशत्रुं-क्रोधादिकं जयेदिति सूत्रार्थः ॥ १० ॥ यथा च भावशत्रुर्जेतव्यस्तथोपदेष्टुमाह—

ण संतसे ण वारिज्जा, मणंपि णो पउस्सए। उवेहे नो हणे पाणे, भुंजंते मंससोणिए॥११॥(सूत्रम्)

व्याख्या—'न संत्रसेत्' नोद्विजेत्, दंशादिभ्य इति गम्यते, यद्वाऽनेकार्थत्वाद्धातूनां न कम्पयेत्तैस्तुद्यमानोऽपि, अङ्गानीति शेषः, 'न निवारयेत्' न निषेधयेत्, प्रक्रमाद्दंशादीनेव तुदतो, मा भूदन्तराय इति, मनः-चित्तं तदपि, आस्तां वचनादि, 'न प्रदूषयेत्' न प्रदुष्टं कुर्यात्, किन्तु 'उवेहे'त्ति उपेक्षेत-औदासीन्येन पश्येद्, अत एव न हन्यात् 'प्राणान्' प्राणिनो 'भुञ्जानान्' आहारयतो मांसशोणितम्, अयमिहाशयः-अत्यन्तबाधकेष्वपि दंशका-

अरहन्नय विलवती जं जहिं पासइ 'त तहिं सव भणति–अत्थि ते कोइ अरहन्नओ दिट्ठो ?, एव विलवमाणी भमइ, जाव अन्नया तेण पुत्तेण ओलोयणगएण दिट्ठा, पचभिन्नाया, तहेव ओयरित्ता पाएसु पडिओ, त पिच्छिऊण तहेव सत्थचित्ता जाया, ताहे भणइ–पुत्त ! पव्वयाहि, मा दुग्गइ जाहिसि, सो भणइ–न तरामि काउ सजम, जदि पर अणसण करेमि, एव करेहि, मा य असजओ भवाहि, मा ससार भमिहिसि, पच्छा सो तहेव तत्ताए सिलाए पाओवगमण करेइ, मुहुत्तेण सुकुमालसरीरो उण्हेण विलाओ, पुव्विं तेण नाहियासिओ पच्छा तेणऽहियासितो । एव अहियासियव्व ॥ उष्ण च ग्रीष्मे तदनन्तर वर्षासमय, तत्र च दशमशकसम्भव इति तत्परीषहमाह–

पुट्ठो य दसमसएहिं, समरे व महामुणी। नागो सगामसीसे व, सूरे अभिभवे पर॥१०॥(सूत्रम्)

व्याख्या—'स्पृष्ट' अभिद्रुत 'च' पूरणे दशमशकै, उपलक्षणत्वात् यूकादिभिश्च 'समरे व'त्ति 'एदोदुरलोपा

१ त तत्र सर्व भणति-अस्ति स कोऽपि (येन) अर्हन्नको दृष्ट, एव विलपन्ती भ्राम्यति, यावदन्यदा तेन पुत्रेण अवलोकनगतेन दृष्टा, प्रत्य भिज्ञाता, तथैवोत्तीर्य पादयो पतित, त प्रेक्ष्य तथैव स्वस्थचित्ता जाता, तदा भण्यते पुत्र ! प्रव्रज, मा दुर्गतिं यासी, स भणति-न शक्नोमि कर्तुं सयम, यदि परमनशन करोमि, एव कुरु, मा चासयतो भू, मा ससार भ्रमी, पश्चात्स तथैव तप्ताया शिलाया पादपोपगमन करोति, मुहूर्तेन सुकुमालशरीर उष्णेन विलीन, पूर्वं तेन नाध्यासितः पश्चात्तेनाध्यासित । एवमध्यासितव्यम् ।

[1]रत्तिं मसएहिं खज्जइ, सो ते ण पमज्जइ, सम्मं सहइ, रत्तीए पीयसोणितो कालगतो । एवं अहियासेयव्वं ॥ इत्यवसितो दंशमशकपरीषहः ॥ अधुना अचेलः संस्तैस्तुद्यमानो वस्त्रकम्बलाद्यन्वेषणपरो न स्यादित्यचेलपरीषहमाह—

परिजुन्नेहि वत्थेहिं, होक्खामित्ति अचेलए। अदुवा सचेलए होक्खं, इइ भिक्खु न चिंतए॥१२॥(सूत्रम्)

व्याख्या—'परिजीर्णैः' समन्तात् हानिमुपगतैः 'वस्त्रैः' शाटकादिभिः 'होक्खामित्ति' इतिर्भिन्नक्रमः ततो भविष्यामि 'अचेलकः' चेलविकलः अल्पदिनभावित्वादेषामिति भिक्षुर्न विचिन्तयेत्, अथवा 'सचेलकः' चेलान्वितो भविष्यामि, परिजीर्णवस्त्रं हि मां दृष्ट्वा कश्चित् श्राद्धः सुन्दरतराणि वस्त्राणि दास्यतीति भिक्षुर्न चिन्तयेत्, इदमुक्तं भवति—जीर्णवस्त्रः सन्न मम प्राक्परिगृहीतमपरं वस्त्रमस्ति न च तथाविधो दातेति न दैन्यं गच्छेत्, न चान्यलाभसम्भावनया प्रमुदितमानसो भवेदिति सूत्रार्थः ॥ १२ ॥ इत्थं जीर्णादिवस्त्रतया अचेलं स्थविरकल्पिकमाश्रित्याचेलपरीषह उक्तः, सम्प्रति तमेव सामान्येनाह—

एगया अचेलए होइ, सचेले यावि एगया। एयं धम्महियं णच्चा, नाणी णो परिदेवए॥१३॥(सूत्रम्)

व्याख्या—'एकदा' एकस्मिन् काले जिनकल्पप्रतिपत्तौ स्थविरकल्पेऽपि दुर्लभवस्त्रादौ वा सर्वथा चेलाभावेन स-

१ रात्रौ मशकैः खाद्यते, स तान् न प्रमार्जयति, सम्यक् सहते, रात्रौ पीतशोणितः कालगतः। एवमध्यासितव्यम्।

दिगु–शृगालवृकरूपैश्च, नदद्भिर्घोरनिष्ठुरम् । आक्षेपत्रोटितस्नायु, भक्ष्यन्ते रुधिरोक्षिता ॥ १ ॥ खरूपै श्यामशबलैर्वालपुच्छैर्भयान्वितै । परस्पर विरुध्यद्भिर्विलुप्यन्ते दिशोदिशम् ॥ २ ॥ काकगृध्रादिरूपैश्च, लोहतुण्डैर्बलान्वितै । विनिकृष्टाक्षिजिह्वाग्रा, विचेष्टन्ते महीतले ॥३॥ प्राणोपक्रमणैर्घोरैर्दु खैरेवविधैरपि । आयुष्यक्षपिते नैव, म्रियन्ते दु खभागिन ॥ ४ ॥ इत्यादि, तथा असज्ञिन एते आहारार्थिनश्च भोज्यमेतेषा मच्छरीर बहुसाधारण च यदि भक्षयन्ति किमत्र प्रद्वेषेणेति च चिन्तयन् तदुपेक्षणपरो न तदुपघात विदध्यादिति सूत्रार्थ ॥ ११ ॥ इदानीं पथिद्वार, तत्र 'स्पृष्टो दशमशकै'रित्यादिसूत्रसूचितमुदाहरणमाह—

चपाए सुमणुभद्दो जुवराया धम्मघोससीसो य । पथमि मसगपरिपीयसोणिओ सोऽवि कालगओ ॥९३॥

व्याख्या—चम्पाया सुमनोभद्रो युवराजो धर्मघोषशिष्यश्च पथि मशकपरिपीतशोणित सोऽपि कालगत इति गाथाक्षरार्थ ॥ ९३ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेय , स चायम्—

चंपाए नयरीए जियसत्तुस्स रण्णो पुत्तो सुमणभद्दो जुवराया, धम्मघोसस्स अन्तिए धम्म सोऊण निव्विण्णकामभोगो पव्वइतो, ताहे चेव एगल्लविहारपडिम पडिवन्नो, पच्छा हेट्ठाभूमीए विहरन्तो सरयकाले अडवीए पडिमागतो

१ चम्पाया नगर्यां जितशत्रो राज्ञ पुत्र सुमनोभद्रो युवराज , धर्मघोषस्यान्तिके धर्म श्रुत्वा निर्विण्णकामभोगः प्रव्रजित , तदैव एकाकिविहारप्रतिमा प्रतिपन्न , पश्चादधोभूमौ विहरन् शरत्कालेऽटव्या प्रतिमागत

॥ २ ॥ सम्यग्ज्ञानी दयावांस्तु, ध्यानी यस्तप्यते तपः । नग्नश्चीवरधारी वा, स सिद्ध्यति महामुनिः ॥ ३ ॥ इति वाचकवचनानूदितं चानुचितमित्याहुः, तान् प्रति वक्तुमुपक्रम्यते—इह यो यदर्थी न स तन्निमित्तोपादानं प्रत्यनादृतो, यथा घटार्थी मृत्पिण्डोपादानं प्रति, चारित्रार्थिनश्च यतयस्तन्निमित्तं च चीवरमिति, न चास्यासिद्धत्वं, तद्धि तस्य तदनिमित्ततया स्यात्, सा च तत्रास्य बाधाविधायितयौदासीन्येन वा ?, न तावद्बाधाविधायितया, यतोऽसौ पञ्चमव्रतविघातकत्वेन संसक्तिविषयतया कषायकारणत्वेन वा ?, यदि पञ्चमव्रतविघातकत्वेन, तदपि कुतः?, युक्तित इति चेत्, नन्वियं स्वतन्त्रा सिद्धान्ताधीना वा ?, यदि स्वतन्त्रा ततः सलोमा मण्डूकश्चतुष्पात्त्वे सत्युत्प्लुत्य गमनात्, मृगवत्, अलोमा वा हरिणः, चतुष्पात्त्वे सत्युत्प्लुत्य गमनात्, मण्डूकवदित्यादिवन्न निर्मूलयुक्तेः साध्यसाधकत्वम्, उक्तं हि—"यत्नेनानुमितोऽप्यर्थः, कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १ ॥" सिद्धान्ताधीनयुक्तिस्तु तथाविधसिद्धान्ताभावादसम्भविनी, अथास्त्यसौ 'गामे वा नगरे वा अप्पं वा बहुं वा जाव नो परिगिण्हेज्जा' इत्यादिः, तदनुगृहीता युक्तिश्च—यद्यत्परिग्रहस्वरूपं तत्तदुपादीयमानं पञ्चमव्रतविघाति, यथा धनधान्यादि, परिग्रहस्वरूपं च चीवरमिति, नन्वसिद्धोऽयं हेतुः, तथाहि—परिग्रहस्वरूपत्वमस्य किं मूर्च्छाहेतुत्वेन धारणादिमात्रेण वा ?, यदि मूर्च्छाहेतुत्वेन, शरीरमपि मूर्च्छाया हेतुर्न वा ?, न तावदहेतुः, तस्यान्तरङ्गत्वेन दुर्लभतरतया

ति वा चेले विना वर्षादिनिमित्तमप्रावरणेन जीर्णादिवस्त्रतया वा 'अचेलक' इति अवस्त्रोऽपि भवति, पठ्यते च 'अचेलए सय होइ'त्ति तत्र स्वयम्—आत्मनैव न पराभियोगत, 'सचेल' सवस्त्रश्चाप्येकदा स्थविरकल्पिकत्वे तथाविधालम्बनेनावरणे सति, यद्येव तत किमित्याह—'एतदि'त्यवस्थौचित्येन सचेलत्वमचेलत्व च धर्म्मो—यतिधर्म्म तस्मै हितम्—उपकारक धर्म्महित 'ज्ञात्वा' अवबुद्ध्य, तत्राचेलकत्वस्य धर्म्महितत्वमल्पप्रत्युपेक्षादिभि, यथोक्तम्—"पंचहिं ठाणेहिं पुरिमपच्छिमाण अरहताण भगवताण अचेलए पसत्थे भवइ, त जहा—अप्पा पडिलेहा१, वेसासिए रूवे २, तवे अणुमए ३, लाघवे पसत्थे ४, विउले इंदियनिग्गहे ५"त्ति, सचेलत्वस्य तु धर्मोपकारित्वमग्न्याद्यारम्भनिवारकत्वेन सयमफलत्वात्, 'ज्ञानी' नग्ना एव प्रायस्तिर्यञ्चारका तद्भवभयादेव च मया सन्त्यपि वासास्यपास्त इत्येव बोधवानो परिदेवयेत्, किमुक्त भवति ?—अचेल सन् किमिदानी शीतादिपीडितस्य मम शरणमिति न दैन्यमालम्बेत इति सूत्रार्थ ॥ १३ ॥ इह च केचिन्मिथ्यात्वाकुलितचेतस इदमित्थ महार्थकर्म्मप्रवादपूर्वोद्धृतप्रस्तुताध्ययनाधीतमपि सचेलत्व तथा—सम्यक्त्वज्ञानशीलानि, तपश्चेतीह सिद्धये। तेषामुपग्रहार्थाय, स्मृत चीवरधारणम् ॥ १ ॥ जटी कूर्ची शिखी मुण्डी, चीवरी नग्न एव च। तप्यन्नपि तप कष्ट, मौढ्याद्धिंस्रो न सिद्ध्यति

१ पञ्चभि स्थानै पूर्वपश्चिमयोरर्हतोर्भगवतोरचेलकत्व प्रशस्त भवति, तद्यथा—अल्पा प्रत्युपेक्षा १ वैश्वासिक रूप २ तपोऽनुमत ३ लाघव प्रशस्त ४ विपुल इन्द्रियनिग्रह ५

उक्तं च—“ जंपि वत्थं व पायं वा, कंबलं पायपुंछणं । तंपि संजमलज्जट्ठा, धरंति परिहरंति य ॥११॥” । अथ संसक्तिविषयतया, यद्येवमाहारेऽपि सा किमस्ति नास्ति वा ?, न तावन्नास्ति, कृमिकण्डूपदाद्युत्पातस्य तत्र प्रतिप्राणि प्रतीतत्वात्, अथास्ति परं यतनया न दोषः, तदितरत्रापि तुल्यं । कषायकारणत्वेन चेत्, तत्किमात्मनः परेषां वा ?, यद्यात्मनस्तदा श्रुतमपि केषाञ्चिदहङ्कारहेतुत्वेन कषायकारणमिति तदपि नोपादेयं स्यात्, अथ विवेकिनां न तदहङ्कृतिहेतुः, “प्रथमं ज्ञानं ततो दये”ति नीतितो धर्मोपकारि चेति तदुपादानं, चीवरेऽपि समानमेतत्, अथ चीवरस्य धर्मानुपकारित्वादतुल्यता, ननु कुत एतदवसितं, किमचीवरास्तीर्थकृत इति श्रुतेरुत जिनकल्पाकर्णनात् ‘जिताचेलपरीषहो मुनि’ रिति वचनतो वा ?, न तावदाद्यो विकल्पः, सूत्रे हि तीर्थकृतामचीवरत्वं कदाचित्सर्वदा वा ?, कदाचिच्चेत्को वा किमाह ?, कदाचिदस्माकमप्यस्याभिमतत्वात्, अथ सर्वदा, तन्न, ‘सव्वेऽवि एगदूसेण निग्गया जिणवरा उ चउवीस’ मिति वचनात्, अथ तत्र ‘एगदोसेणं’ तिपाठः, सर्वेऽपि संसारदोषेण एकेन निर्गता इतिकृत्वा, नन्वेवमनवस्था, सर्वत्र सर्वैरपि स्वेच्छारचितपाठानां सुकरत्वात्, किं च—तीर्थकृतामचीवरत्वे तेषामेव तद्धर्मोपकारीति निश्चयोऽस्तु, नापरेषां, न हि यदेव तेषां धर्मोपकारि तदेवेतरेषामपि, अन्यथा यथा न

१ यदपि वस्त्रं वा पात्रं वा, कम्बलं पादप्रोञ्छनम् । तदपि संयमलज्जार्थं, धारयन्ति परिभुञ्जन्ति च ॥१॥ २ सर्वेऽप्येकदूष्येण निर्गता जिनवरास्तु चतुर्विंशतिः ।

च विशेपतस्तद्धेतुत्वाद्, उक्त च—"अह कुणसि थुलवत्थाइएसु मुच्छ धुव सरीरेऽवि। अक्कजदुल्लभतरे काहिसि मुच्छ विसेसेण ॥ १ ॥" अथास्तु तन्निमित्तमेतत्, तर्हि चीवरवत्तस्यापि किं दुस्त्यजत्वेन मुक्त्यङ्गतया वा न प्रथमत एव परिहार ?, दुस्त्यजत्वेन चेत् तदपि किमशेपपुरुपाणामुत केपाञ्चिदेव ?, न तावदशेपपुरुपाणा, दृश्यन्ते हि बहवो वह्निप्रवेशादिभि शरीर परित्यजन्त, अथ केपाञ्चित्, तदा वस्त्रमपि केपाञ्चित् दुस्त्यजमिति तदपि न परिहार्यं, मुक्त्यङ्गतापक्षाश्रयणे च किं चीवरेणापराद्धम् ?, तस्यापि तथाविधशक्तिविकलाना शीतकालादिपु स्वाध्यायाद्युपष्टम्भकत्वेन मुक्त्यङ्गत्वाद्, अभ्युपगम्य च मूर्च्छाहेतुत्वमुच्यते—न हि निगृहीतात्मना क्वचिन्मूर्च्छाऽस्ति, तदुक्तम्—"सव्वत्थुवहिणा वुद्धा, सरक्खणपरिग्गहे। अवि अप्पणोऽवि देहम्मि, णायरंति ममाइउ (य) ॥१॥" त्ति, नापि धारणादिमात्रेण, एव हि शीतकालादौ प्रतिमाप्रतिपत्त्यादिपु केनचिद्भक्त्यादिनोपरि क्षिप्तस्यापि चीवरस्य परिग्रहताप्रसङ्ग, अथ तत्र स्वयग्रहाभावाददोप, तर्हि स्वयग्रह परिग्रहत्वे हेतु, तथा च कुण्डिकाद्यपि नोपादेय, दृष्टविरोधि चेदम्, अथ तत्र मूर्च्छाया अभावादपरिग्रहत्वम्, एव सति सयमरक्षणायोपादीयमाने चीवरे तदभावात्तदस्तु,

---

१ अथ करोपि स्थूलवस्त्रादिपु मूर्च्छां ध्रुव शरीरेऽपि। अत्रेयदुर्लभतरे करिष्यसि मूर्च्छां विशेपेण ॥ १ ॥ २ मूर्च्छाहेतु शरीर
३ सर्वत्रोपधिना बुद्धा, सरक्षणपरिग्रहे। अपिचात्मनोऽपि देहे नाचरन्ति ममायितुम् (तम्) ॥ १ ॥

वृथैव "मणपरमोहिपुलाए आहारग खवग उवसमे कप्पे। संजमतिय केवलि सिज्झणा य जंबुम्मि वोच्छिन्ना ॥१॥" इत्याप्तवचनानाश्रयणं, यदि तु रथ्यापुरुषाणामपीति कल्प्यते, तिरश्चामपि तत्कल्पनाऽस्तु, अथ देशविरतिभाज एव त इति न तेषां तत्प्रतिपत्तिः, तर्हि सर्वविरतिस्तत्कारणं, तथा च तद्वता एकेन यत्कृतं तत्किमखिलैरपि तद्वद्भिराचरणीयमथ तथाविधशक्तियुक्तैरेव ?, यद्याद्यो विकल्पस्तदैकस्मिन् मासषण्मासादिकं तपश्चरत्यन्यैरपि तच्चरणीयं स्याद्, अथ द्वितीयः पक्षस्तर्हि जिनकल्पोऽपि तथाविधशक्तियुक्तैरेव प्रतिपत्तव्यः, अथ तथाविधशक्तिविकलानां तत्तपश्चरतां बहुतरदोषसम्भव इति न तच्चरणं, तदिहापि तुल्यं, तथाहि—सम्भवत्येवेदानीन्तनयतीनां तथाविधशक्तिसंहननविकलतया हिमकणानुपक्तशीतादिषु बहुतरदोषहेतुकमग्न्यारम्भादिकं तथा तथाविधाच्छादनाभावतः शीतादिखेदितानां शुभध्यानाभावेन सम्यक्त्वादिविचलनम्, उक्तं च वाचकैः—"शीतवातातपैर्दंशैर्मशकैश्चापि खेदितः। मा सम्यक्त्वादिषु ध्यानं, न सम्यक् संविधास्यति ॥ १ ॥" यच्च 'जिताचेलपरीषहो मुनि' रिति वचनतो न चीवरं धर्मोपकारीति, तत्र जिताचेलपरीषहत्वं चेलाभावेनैवाहोश्विदेषणाशुद्धतत्परिभोगेनापि ?, यदि चेलाभावेनैव, ततः क्षुत्परीषहजयनमप्याहाराभावेनैवेति व्रतग्रहणकाल एवानशनमायातम्, एतच्च भवतोऽपि नाभिमतं, ततः परिशुद्धोपभोगितया जिताचेलपरीषहत्वमिति द्वितीय एव पक्षः, स चासत्पथवर्त्त्येवेति न कुतोऽपि चीवरस्य धर्मानु-

१ मनः (पर्यायः) परमावधिः पुलाक आहारकः क्षपक उपशमकः (जिन) कल्पः। संयमत्रिकं केवलित्वं सिद्धिश्च जम्बौ व्युच्छिन्नाः॥१॥

ते परोपदेशात प्रवर्त्तन्ते यथा च छद्मस्थावस्थायां परोपदेश दीक्षा वा न प्रयच्छन्ति, तथाऽन्यैरपि विधेयमिति मूलच्छेद एव तीर्थस्य, उक्त च–"न परोवएसविसया ण य छउमत्था परोवएसपि । देति न य सिस्सवग्ग दिक्खति जिणा जहा सघे ॥ १ ॥ तह सेसेहि य सव्व कज्ज जइ तेहिँ सघसाहम्म । एव च कओ तित्थ ? ण चेदचेलत्ति को गाहो ?, ॥ २ ॥" अथ जिनकल्पाकर्णनात्, तत्र हि न किञ्चिदुपकरणमिति चीवरस्याप्यभाव, तथा च न तस्य धर्मोपकारिता, ननु जिनकल्पिकानामुपकरणाभाव प्रवादत आगमतो वा ?, न तावदाद्यपक्षो, न हि वसति किलात्र वटवृक्षे रक्ष इत्यादिनिर्मूलप्रवादाना प्रमाणता, नाप्यागमत, तेपामपि तत्र शक्त्यपेक्षयोपकरणप्रतिपादनात्, तदुक्तम्–"जिणकप्पियादओ पुण सोवहओ सघकालमेगतो । उवगरणमाणमेसि पुरिसावेक्खाएँ वहुभेयं ॥ १ ॥" अथवा अस्तु जिनकल्पिकानामुपकरणाभाव, तथापि धृतिशक्तिसहननश्रुतातिशययुक्तानामेव तत्प्रतिपत्ति अथ रथ्यापुरुषाणामपि ?, यद्याद्यो विकल्पस्तत्किमेवविधा सम्प्रत्यपि सन्ति न वा ?, सन्ति चेदुपलब्धिलक्षणप्राप्ता उपलभ्येरन्, अनुपलब्धिलक्षणप्राप्ताश्च कुत सत्त्वेन निश्चीयन्ते ?, अथ न सन्ति, तादृशामेव जिनकल्पप्रतिपत्ति, तर्हि

१ न परोपदेशविपया न च छद्मस्था परोपदेशमपि । ददति न च शिष्यवर्गं दीक्षयन्ति जिना यथा सर्वे ॥१॥ तथा शेपैरपि सर्वं कार्यं यदि तै सवसाधर्म्यम् । एव च कुतस्तीर्थं ? न चेदचेल इति क आग्रह ? ॥ १ ॥ २ जिनकल्पिकादय पुन सोपधय सर्वकालमेकान्त । उपकरणमानमेतेपा पुरुपापेक्षया वहुभेदम् ॥ १ ॥

याण सत्ताणं ॥ १ ॥ तह निसि चाउक्कालं सज्झायज्झाणसाहणमिसीणं । हिममहियावासोसारयाइरक्खाणिमित्तं तु ॥ २ ॥" इत्यतः स्थितमेतत्—चारित्रनिमित्तं चीवरमिति नासिद्धता हेतोः, विरुद्धत्वानैकान्तिकत्वे तूक्तानुसारतः परिहर्त्तव्ये । ततश्च 'निर्ग्रन्थानाममलज्ञानयुतैस्तीर्थकृद्भिरुक्तानि । सम्यग्व्रतानि यस्मान्नैर्ग्रन्थ्यमतः प्रशंसन्ति ॥ १ ॥ रागाद्यपचयहेतुं नैर्ग्रन्थ्यं स्वप्रवृत्तितस्तेषाम् । तद्वृद्धिरतोऽवश्यं वस्त्रादिपरिग्रहयुतानाम् ॥२॥' इत्यादि दुर्मतिपरिस्पन्दितमपकर्णनीयम् ॥ सम्प्रति 'महल्लेत्तिद्वारं, तत्र च 'एयं धम्महियं नच्चे' त्यादिसूत्रसूचितं दृष्टान्तमाह—

वीयभय देवदत्ता गंधारं सावयं पडियरित्ता । लहइ सयं गुलियाणं पज्जोएण णी(णाणि)ओज्जेणिं॥९४॥

दट्ठूण चेडिमरणं पभावई पव्वइत्तु कालगया । पुक्खरकरणं गहणं दसउरपज्जोयमुयणं च ॥ ९५ ॥

माया य रुद्दसोमा पिया य नामेण सोमदेवत्ति । भाया य फग्गुरक्खिय तोसलिपुत्ता य आयरिया ॥९६॥

सिंहगिरि भद्दगुत्ते वयरक्खमणा पढित्तु पुव्वगयं । पव्वाविओ य भाया रक्खियखमणेहि जनओ य॥९७॥

व्याख्या—वीतभये देवदत्ता गन्धारं श्रावकं प्रतिजागर्य लभते शतं गुलिकानां प्रद्योतेनानीतोज्जयिनीं, दृष्ट्वा चेटीमरणं प्रभावती प्रव्रज्य कालगता पुष्करकरणं ग्रहणं दशपुरप्रद्योतमोचनं च, माता च रुद्रसोमा पिता च नाम्ना

पकारित्वनिश्चय , अथ परेषा कपायकारणत्वेन चारित्रबाधकत्व चीवरस्य, तर्हि धर्मादयोऽपि कस्यचित् कपायकारण न वा ?, न तावन्न, तेऽपि कस्यचित्कपायहेतव इति चीवरवत्तेऽपि हातव्या , आह च—"अत्थि य किं किंचिजए जस्स व कस्स व कसायवीज त । वत्थु ण होज्ज? एव धम्मोऽवि तुमे ण घेतव्वो ॥१॥ जेण कसायणिमित्त जिणोऽवि गोसालसंगमाईण । धम्मो धम्मपरावि य पडिणीयाण जिणमय च ॥२॥" अथैषा मुक्त्यङ्गतया कपायहेतुत्वेऽपि न हेयता, तदिहापि समानम्, उक्त च वाचकसिद्धसेनेन—"मोक्षाय धर्मसिद्ध्यर्थं, शरीर धार्यते यथा। शरीरधारणार्थं च, भैक्षग्रहणमिष्यते ॥ १ ॥ तथैवोपग्रहार्थाय, पात्र चीवरमिष्यते । जिनैरुपग्रह साधोरिष्यते न परिग्रह ॥ २ ॥" इत्यादि । औदासीन्येनापि न चीवरस्य चारित्र प्रत्यनिमित्तता, तस्य तदुपकारित्वात्, यच्च यत्रोपकारि न तत्तस्मिन्नुदासीन, यथा तन्त्वादय पटे, चारित्रोपकारि च चीवर, तथाहि—सयमात्मक चारित्र, न च तस्य तत्परिहारेण शुद्धिरस्ति, आगमश्च—"किं सजमोवयार करेइ वत्थाइ जइ मई सुणसु । सीयत्ताण ताण जलणतणग-

१ अस्ति च किं किञ्चित् जगति यस्य वा कस्य वा कपायवीज तत् । वस्तु न भवेत् ? एव धर्मोऽपि त्वया न ग्रहीतव्यः ॥ १ ॥ येन कपायनिमित्त जिनोऽपि गोशालसगमकादीनाम् । धर्मो धर्मपरा अपि च प्रत्यनीकाना जिनमत च ॥२॥ २ किं सयमोपकार करोति वस्त्रादि यदि मति शृणु । शीतत्राण त्राण ज्वलनतृणगताना सत्त्वानाम् ॥१॥ तथा निशि चतुष्काल स्वाध्यायध्यानसाधनमृषीणाम् । हिममहिकावर्षावश्यायरजआदिरक्षानिमित्त तु ॥ २ ॥

बो, ताहे ते भणंति—अच्छह तुब्भे कडिपट्टएणं, सोऽवि थेरो भणइ—छत्तएणं विणा ण तरामि अच्छिउं, छत्तयंपि, करगेण विणा दुक्खं उच्चारपासवणं वोसिरिउं, बंभसुत्तगंपि अच्छउत्ति, अवसेसं सवं परिहरइ। अन्नया य चेइयाइं वंदिउं गया, आयरिया चेडगरूवाणि गाहंति, भणह—सबे वंदामो एगं छत्तइल्लं मोत्तुं, एवं भणितो, ताहे सो जाणति—इमे मम पुत्ता णत्तुया य वन्दिज्जंति, अहं कीस न वंदिज्जामि ?, ताहे भणति—किमहं अपबइओत्ति ?, ताणि भणंति—किं पबइयगाणोवाणहकरगबंभसुत्तछत्तगाणि भवंति ?, ताहे सो जाणति—एयाणिवि ममं पडिचोएंति, ता छड्डेमि, ताहे पुत्तं भणति—अलाहि पुत्तगा! छत्तेणं, ताहे ते भणंति—अलाहि, जाहे उण्हं होहिति ताहे कप्पो उवरिं करेहत्ति, एवं ताणि मोत्तुं करइल्लं, तत्थ से पुत्तो भणति—मत्तएणं चेव सन्नाभूमिं गम्मइ, एवं जन्नोवइयं च मुयइ,

---

१ तदा ते भणन्ति—तिष्ठत यूयं कटीपट्टकेन, सोऽपि स्थविरो भणति—छत्रेण विना न शक्नोमि स्थातु, छत्रमपि, करकेण विना दुःखमुच्चारप्रश्रवणं व्युत्स्रष्टुं, ब्रह्मसूत्रमपि तिष्ठत्विति, अवशेषं सर्वं परिहरति। अन्यदा च चैत्यानि वन्दितुं गताः, आचार्याश्चेट (डिम्भ) रूपाणि ग्राहयन्ति, भणत—सर्वान् वन्दामहे एकं छत्रिणं मुक्त्वा, एवं भणितस्तदा स जानाति—इमे मम पुत्रा नप्तारश्च वन्द्यन्ते, अहं कथं न वन्द्ये ?, तदा भणति—किमहमप्रव्रजित इति ?, तानि भणन्ति—किं प्रव्रजितानामुपानत्करकब्रह्मसूत्रच्छत्राणि भवन्ति ?, तदा स जानाति—एतान्यपि मां प्रतिचोदयन्ति, तत् त्यजामि, तदा पुत्रं भणति—अलं पुत्र ! छत्रेण, तदा ते भणन्ति—अलं, यदोष्णं भविष्यति तदा कल्पं उपरि कुर्या इति, एवं तानि मुक्त्वा करकवन्तं, तत्र तस्य पुत्रो भणति—मात्रकेणैव संज्ञाभूमिः गम्यते, एवं यज्ञोपवीतं च मुञ्चति,

गोमदेव इति भाता च फल्गुरक्षित तोमलिपुत्राश्चाचार्या सिंहगिरिभद्रगुप्ताभ्या च वज्रश्रमणात्पठिता पूर्वगत प्रव्राजितश्च भाता रक्षितक्षमणैर्जनकश्चेति गाथाचतुष्टयाक्षरार्थ ॥ ९४-९५-९६ ९७ ॥ भावार्थस्तु वृद्धसम्प्रदाया-दयमेव , स चायम्—जीवसामिपडिमावत्तव्वय दसपुरुप्पत्तिं च भाणिऊण ताव भाणियव्व जाव अज्जरक्खियसामिणो म-याले णव पुव्वाणि दसमस्स य पुव्वस्स किंचि अहिज्जिऊण अज्जरक्खिया दसपुरमेव गया, तत्थ सव्वो सयणवग्गो पव्वावितो—माया भाया भगिणी,जो सो तस्स खतो सोऽवि तेसिं अणुरागेण तेहिं चेव समं अच्छइ, णो पुण लिंग गेण्हइ लज्जाए, किह समणतो पव्वइस्स ?, इत्थ मम धूयातो सुण्हातो णत्तुगीतो, तासिं पुरतो ण तरामि णग्गो गच्छिउ, एव सो तत्थ अच्छइ, बहुसो आयरिया भणति, ताहे सो भणति–जइ मम जुयलएण कुंडियाए छत्तेणं उवहणाहिं जण्णोवइएण य समं पव्वावेह तो पव्वयामि,पव्वइतो सो पुण चरणकरणसज्झाय अणुवत्ततेहिं गिण्हाविय-

१ जीवत्स्वामिप्रतिमावक्तव्यता दशपुरोत्पत्तिं च भणित्वा तावद्भणितव्य यावदार्यरक्षिताः सकाशे नव पूर्वाणि दशमस्य च पूर्वस्य किंचिदधीत्यार्यरक्षिता दशपुरमेव गता , तत्र सर्व स्वजनवर्गः प्रव्राजित —माता भ्राता भगिनी, य स तेषा पिता सोऽपि तेषामनुरागेण तत्रैव सम्यक् तिष्ठति, न पुनर्लिङ्ग गृह्णाति लज्जया, कथ श्रमणक प्रव्रजिष्यामि ?, अत्र मम दुहितर स्नुषा नप्तार , तासा पुरतो न शक्नोमि नग्न गन्तुम् , एव स तत्र तिष्ठति,बहुश आचार्या भणन्ति, तदा स भणति–यदि मा युगलकेन कुण्डिकया छत्रेण उपानद्भ्या यज्ञोपवीतेन च सम प्रव्राजयत तदा प्रव्रजामि, प्रव्रजित स पुनश्चरणकरणस्वाध्यायमनुवर्तयद्भिर्ग्राहयितव्य ,

यदि तरसि अहियासिउं वहाहि, अह णाहियासेसि ताहे अम्हं न सुंदरं भवति, एवं सो थिरो कओ, जाहे सो उक्खित्तो साहू मग्गओ वचइ, पच्छओ संजईओ ठिआतो, ताहे खुड्डगा भणिआ—एत्ताहे कडिपट्टयं मुयह, ताहे सो मुत्तुमारद्धो, ताहे अन्नेहिं भणिओ—मा मोचिहि, तत्थ से अन्नेण कडिपट्टओ पुरओ काऊण दोरेण बद्धो, ताहे सो लज्जिओ तं वहइ, मग्गओ मम पिच्छंति सुण्हाओ अ, एवं तेणवि उवसग्गो उट्टिओत्तिकाऊण वूढं, पच्छा आगतो तहेव, ताहे आयरिया भणंति—किं अज्ज खंता! इमं?, ताहे सो भणइ—सो एस अज्ज पुत्त! उवसग्गो उवट्ठिओ, आणेह साडयं, ताहे भणइ—किं व साडएणंति?, जं दट्ठवं तं दिट्ठं, चोलपट्टओ चेव मे भवउ, एवं ता सो चोलपट्टंपि गिण्हाविओ। तेण पुवं अचेलपरीसहो नाहियासितो पच्छाऽहियासिओत्ति ॥ अचेलस्य चाप्रतिबद्धविहारिणः शीतादिभिरभिभूयमानत्वेनारतिरप्युत्पद्येतातस्तत्परीषहमाह—

१ यदि शक्नोष्यधिसोढुं वह, अथ नाधिसहसे तदाऽस्माकं न सुन्दरं भवति, एवं स स्थिरः कृतः, यदा स उत्क्षिप्तः साधुर्मार्गतः व्रजति, पश्चात् संयत्यः स्थिताः, तदा क्षुल्लकैः भणिताः—अधुना कटीपट्टकं मुञ्चत, तदा स मोक्तुमारब्धः, तदाऽन्यैर्भणितः—मा मुचः, तत्र तस्यान्येन कटीपट्टकः पुरतः कृत्वा दवरकेण बद्धः, तदा स लज्जितस्तं वहति, पृष्ठतो मम पश्यन्ति स्नुषाश्च, एवं तेनापि उपसर्ग उत्थित इतिकृत्वा व्यूढं, पश्चादागतस्तथैव, तदाऽऽचार्या भणन्ति—किमार्य पितरिदम्, तदा स भणति—स एषोऽार्य पुत्र! उपसर्ग उत्थितः, आनयत शाटकं, तदा भणति—किं वा शाटकेनेति, यद्द्रष्टव्यं तद्दृष्टं, चोलपट्टक एव मे भवतु, एवं तावत् स चोलपट्टकमपि ग्राहितः। तेन पूर्वमचेलपरीषहो नाध्यासितः, पश्चादध्यासितः।

ताहे आयरिया भणति–को वा अम्हे न जाणइ जहा बभणा, एव ताणि तेण मुक्काणि, पच्छा ताणि पुणो भणति–सवे वदामो मोत्तूण कडिपट्टइल्ल, ताहे सो रुट्ठो भणति–सह अज्जयपज्जएहिं मा वन्दह, अन्ने वदिहति मम, एय कडिपट्टय न छड्डेमि, तत्थ य साहू भत्तपच्चक्खायतो, ताहे तस्स निमित्त कडिपट्टवोसिरणट्ठयाए आयरिया भणति –एय महाफल हवइ जो साधु वहइ, तत्थ य पढमपव्वइया सन्निया–तुमे भणिज्जह–अम्हे एय वहामो, एव ते उवट्ठिया, तत्थ य आयरिया भणति–अम्ह सयणवग्गो मा णिज्जर पावउ ?, भो तुब्भे चेव सवे भणह अम्हे चेव वहामो, ताहे सो थेरो भणति–किं पुत्ता ! एत्थ बहुतरया णिज्जरा ?, आयरिया भणति–बाढ, कि एत्थ भणियव ?, ताहे सो भणति–तो खाइ अहपि वहामि, आयरिया भणति–एत्थ उवसग्गा उप्पज्जति, चेडरूवाणि लग्गेति,

१ तदा आचार्या भणन्ति–को वाऽस्मान् न जानाति यथा ब्राह्मणा, एव तानि तेन मुक्तानि, पश्चात्तानि पुनर्भणन्ति–सर्वान् वन्दामहे मुक्त्वा कटीपट्टकवन्त, तदा स रुष्टो भणति–सह आर्यकप्रायकै (पितृपितामहै) मा वन्दिध्वम्, अन्ये वन्दिष्यन्ते मह्यम्, एत कटीपट्टक न छर्दयामि, तत्र च साधु प्रत्याख्यातभक्त, तदा तन्निमित्त कटीपट्टकव्युत्सर्जनार्थाय आचार्या भणन्ति–एतत् महाफल भवति यस्साधु वहति, तत्र च प्रथमप्रव्रजिता सञ्ज्ञिता (सकेतिता)–यूय भणेत–वय वहाम एनम्, एव ते उपस्थिता, तत्र चाचार्या भणन्ति–अस्माक स्वजनवर्गो मा निर्जरा प्रापत् ततो यूय सर्वे भणथ–वयमेव वहाम, तदा स स्थविरो भणति–किं पुत्र ! अत्र बहुतरा निर्जरा ?, आचार्या भणन्ति–बाढ, किमत्र भणितव्य ?, तदा स भणति–तत् कथयाहमपि वहामि, आचार्या भणन्ति–अत्रोपसर्गा उत्पद्यन्ते, चेटरूपाणि लगन्ति

वा आरामो धर्मारामस्तत्र, स्थित इति गम्यते, निर्गत आरम्भाद्—असत्क्रियाप्रवर्त्तनलक्षणात् निरारम्भः 'उपशान्तः' क्रोधाद्युपशमात् 'मुनिः' सर्वविरतिप्रतिज्ञाता चरेत्, 'पलिओवमं झिज्जइ सागरोवमं, किमंग पुण मज्झ इमं मणोदुहं'ति विचिन्तयन्संयमाध्वनि यायात्, न पुनरुत्पन्नारतिरपि अवधावनानुप्रेक्षी भवेद् । इह च विरतादिविशेषणानि अरतितिरस्करणफलतया, यद्वा यत एव विरतोऽत एवात्मरक्षित इत्यादिहेतुफलतया नेयानीति सूत्रार्थः ॥ १५ ॥ इदानीं तापसद्वारमनुस्मरन् 'अरई अणुप्पवेसे' इत्यादिसूत्रसूचितमुदाहरणमाह—

अयलपुरे जुवराया सीसो राहस्स नगरीमुज्जेणिं । अजा राहक्खमणा पुरोहिए रायपुत्तो य ॥ ९८ ॥

कोसंबीए सिट्ठी आसी नामेण तावसो तहियं । मरिऊण सूयरोरग जाओ पुत्तस्स पुत्तोत्ति ॥ ९९ ॥

व्याख्या—अचलपुरे युवराजः शिष्यो राधस्य नगरीमुज्जयिनीम् आर्या राधक्षमणाः पुरोहितो राजपुत्रश्च कौशाम्ब्यां श्रेष्ठी आसीन्नाम्ना तापसः तत्र मृत्वा 'सूयरोरगो' त्ति सुपो लोपः शूकर उरगो जातः पुत्रस्य पुत्र इति गाथाद्वयाक्षरार्थः ॥ ९८—९९ ॥ एतदर्थस्तु सम्प्रदायादवसेयः, स चायम्—

१ पल्योपमं क्षीयते सागरोपमं किमङ्ग पुनर्ममेदं मनोदुःखमिति ।

गामाणुगाम रीयत, अणगारमकिंचण । अरई अणुप्पविसे, त तितिक्खे परीसह ॥१४॥ (सूत्रम्)

व्याख्या—ग्रसते बुद्ध्यादीन् गुणान् इति ग्राम स च जिगमिषित अनुग्रामश्च–तन्मार्गानुकूल अननुकूलगमने प्रयोजनाभावाद् ग्रामानुग्राम, यद्वा ग्रामश्च महान् अणुग्रामश्च स एव लघुर्ग्रामाणुग्रामम्, अथवा–ग्राममिति रूढिशब्दत्वादेकस्माद्ग्रामादन्यो ग्राम ततोऽपि चान्यो ग्रामानुग्राममुच्यते, नगरोपलक्षणमेतत्, ततो नगरादीश्च, किमित्याह—'रीयत'ति तिङ्व्यत्ययाद्रीयमाण–विहरन्तम् 'अनगारम्' उक्तस्वरूपम् 'अकिञ्चन' नास्य किञ्चन प्रतिबन्धास्पद धनकनकाद्यस्तीत्यकिञ्चनो–निष्परिग्रह, तथाभूतम् 'अरति' उक्तरूपा 'अनुप्रविशेत्' मनसि लब्धास्पदा भवेत्, 'त'मित्यरतिस्वरूप 'तितिक्षेत' सहेत परीषहमिति सूत्रार्थ ॥ १४ ॥ तत्सहनोपायमेवाह—

अरइ पिट्ठओ किच्चा,विरओ आयरक्खिए । धम्मारामे निरारभे,उवसते मुणी चरे ॥१५॥ (सूत्रम्)

व्याख्या—'अरति' सयमविषया मोहनीयकर्म्मप्रकृतिरूपा पृष्ठत कृत्वा कोऽर्थ ?–धर्मविघ्नहेतुरियमितिमत्वा तिरस्कृत्य, किमित्याह—'विरत' हिंसादिभ्य उपरत, आत्मा रक्षित दुर्गतिहेतोरपध्यानादेरनेनेत्यात्मरक्षित, आहिताग्न्यादिषु दर्शनात् क्तान्तस्य परनिपात, आयो वा–ज्ञानादिलाभो रक्षितोऽनेनेत्यायरक्षित, धर्म्मे–श्रुतधर्मादौ आङिति अभिव्याप्त्या रमते–रतिमान् भवतीति धर्माराम, यद्वा–धर्म एव सततमानन्दहेतुतया प्रतिपाल्यतया

भणंति ते–आयरिया ! तुब्भे गाइउं जाणह ?,तेण भणियं–आमं जाणामो, तुब्भे वाएह,ते आढत्ता, जाव ण जाणंति, तेण भण्णइ–एरिसगा चेव तुब्भे कोलियगा, ण किंचि जाणह, ते रुट्ठा उद्धाइया, तेण घेत्तुं तेसिं णिजुद्धं जाणंतएण सवे संधी खोइया, पढमं ताव पिट्टिया, ते हम्मंता राडिं करेंति, परियणो जाणइ–सो एस पवइओ हम्मंतो राडिं करेइ, सोऽवि गतो, पच्छा तेहिं दिट्ठा, णवि जीवंति, णवि मरंति, णवरं णिरिक्खंति एक्केक्कं दिट्ठीए, पच्छा रण्णो सिट्ठं पुरोहियस्स य–जहा कोऽवि पवइयगो,तेण दोऽवि जणा संखलेत्तूण मुक्का, पच्छा राया सवबलेणागतो पवइगाण मूले, सोऽवि साहू एकपासे अच्छइ परियट्टंतो, राया आयरियाणं पाए पडिओ, पसायमावज्जह, आयरिओ भणइ–अहं न याणामि, महाराय ! इत्थ एगो साहू पाहुणो, जइ परं तेण होज्जा, राया तस्स मूलमागतो, पच्चभि-

१ भणतस्तौ–आचार्या ! यूयं गातुं जानीथ, तेन भणितम्–ओम् जानीमः, युवां वादयतं, तावाद्दतौ, यावन्न जानीतः, तेन भण्येते–एतादृशावेव युवां कोलिकौ, न किञ्चिज्जानीथ, तौ रुष्टौ उद्धावितौ, तेन गृहीत्वा तयोः नियुद्धं जानता सर्वे सन्धयो विसंयोजिताः, प्रथमं तावत्पिट्टितौ, तौ हन्यमानौ राटीं कुरुतः, परिजनो जानाति—स एष प्रव्रजितो हन्यमानो राटीं करोति, सोऽपि गतः, पश्चात्तैर्दृष्टौ, नैव जीवतो नेव म्रियेते, परं निरीक्षेते एकैकं दृष्ट्या, पश्चाद् राज्ञे शिष्टं पुरोहिताय च–यथा कोऽपि प्रव्रजितः, तेन द्वावपि जनौ विश्टङ्खलय्य मुक्तौ, पश्चाद् राजा सर्वबलेनागतः प्रव्रजितानां मूले, सोऽपि साधुरेकपार्श्वे तिष्ठति परावर्त्तमानः, राजा आचार्याणां पादयोः पतितः, प्रसादमापद्यध्वं, आचार्यो भणति–अहं न जानामि, महाराज ! अनेकः साधुः प्राघूर्णकः, यदि परं तेन भवेत्, राजा तस्य मूलमागतः, प्रत्यभि-

अचलपुर नाम पतिट्ठाण, तत्थ जियसत्तू राया, तस्स पुत्तो जुवराया, सो राहायरियाण अतिए पव्वइओ। सोय अन्नया विहरतो गतो तगर नगरिं, तस्स य राहायरियस्स सज्झतेवासी अज्जराहखमणा णाम उज्जेणीए विहरति, तओ आगया साहुणो तगरं, गया राहसमीवं, ते पुच्छिया—निरुवसग्गति, भणति—रायपुत्तो पुरोहियपुत्तो य बाहिंति, तस्स जुवरायपव्वतियगस्स सो रायपुत्तो भत्तिज्जतो, मा ससारं भमिहितित्ति आपुच्छिऊण आयरिए गओ उज्जेणिं, भिक्खवेलाए उग्गाहेऊण पट्ठितो, आयरिएहिं भणिओ—अच्छाहि, सो भणइ—न अच्छामि, नवर दाएह तं पडणीयघर, चेल्लगो भणिओ—वच्च दाएहि, तेण दाइय, सो तत्थ गतो, वीसत्थो पविट्ठो, तत्थ ते दोऽवि अच्छंति, ते त पिच्छिऊण उट्ठिया, तेणवि महया सद्देण धम्मलाभिय, ते भणति—अहो! लट्ठ पव्वइयगो अम्हतेण गतो, वदामोत्ति,

१ अचलपुरं नाम प्रतिष्ठानं, तत्र जितशत्रू राजा, तस्य पुत्रो युवराज, स राधाचार्याणामन्तिके प्रव्रजित । स चान्यदा विहरन् गत तगरां नगरीं, तस्य च राधाचार्यस्य सद्योऽन्तेवासिन आर्यराधक्षमणा नामोज्जयिन्या विहरन्ति, तत आगता साधवस्तगरां, गता राधसमीपं, ते पृष्टा निरुपसर्गमिति, भणन्ति—राजपुत्र पुरोहितपुत्रश्च बाधेते, तस्य युवराजप्रव्रजितस्य स राजपुत्रो भ्रातृव्य, मा ससारं भ्रमीदिति आपृच्छ्याचार्यान् गत उज्जयिनीं, भिक्षावेलायामुद्ग्राह्य प्रस्थित, आचार्यैर्भणित —तिष्ठ, स भणति—न तिष्ठामि, परं दर्शयत तद् प्रत्यनीकगृहं, क्षुल्लको भणित —व्रज दर्शय, तेन दर्शितं, स तत्र गत, विश्वस्त प्रविष्ट, तत्र तौ द्वावपि तिष्ठत, तौ त प्रेक्ष्योत्थितौ, तेनापि महता शब्देन धर्मलाभित, तौ भणत —अहो लष्ट प्रव्रजितोऽस्माकं मार्गेणागत, वन्दावहे इति,

किहमहं अप्पणो सुण्हं अंमंति वाहरिहामि, पुत्तं वा तायंति, पच्छा मूयत्तणं करेइ, पच्छा महंतीभूओ साहूणं अल्लीणो, धम्मोऽणेण सुतो । इतो य सो धिज्जाइयदेवो महाविदेहे तित्थयरं पुच्छइ–किमहं सुलहवोहिओ दुल्लभवोहिओत्ति ?, ततो सामिणा भणितो–दुल्लभवोहिओऽसि, पुणोऽवि पुच्छइ–कत्थऽहं उववज्जिउकामो ?, भगवया भण्णइ–कोसंवीए मूयस्स भाया भविस्ससि, सो य मूओ पव्वइस्सइ, सो देवो भगवंतं वंदिऊण गओ मूयगस्सगासं, तस्स सो वहुयं दव्वजायं दाऊण भणइ–अहं तुज्झ पिउघरे उववज्जिस्सामि, तीसे य दोहलओ अंवएहिं भविस्सइ, अमुगे पव्वए अंवगो सयापुप्फफलो कओ मए, तुमं ताए पुरओ णामगं लिहिज्जासि, जहा–तुब्भं पुत्तो भविस्सइ, जइ तं मम देसि तो ते आणेमि अंवफलाणित्ति, तओ ममं जायं संतं तहा करिज्जासि जहा धम्मे संबु-

१ पश्चान्मूकत्वं करोति, पश्चात् महद्भूतः साधूनाश्रितः, धर्मोऽनेन श्रुतः, । इतश्च स धिग्जातीयदेवो महाविदेहे तीर्थकरं पृच्छति–किमहं सुलभबोधिको दुर्लभबोधिक इति ?, ततः स्वामिना भणितः—दुर्लभबोधिकोऽसि, पुनरपि पृच्छति–कुत्राहमुत्पत्तुकामो ?, भगवता भण्यते–कौशाम्ब्यां मूकस्य भ्राता भविष्यसि, स च मूकः प्रव्रजिष्यति, स देवो भगवन्तं वन्दित्वा गतो मूकसकाशं, तस्मै स बहु द्रव्यजातं दत्त्वा भणति—अहं तव पितृगृहे उत्पत्स्ये, तस्याश्च दोहदः आम्रैर्भविष्यति, अमुकस्मिन् पर्वते आम्रः सदापुष्पफलः कृतो मया, त्वं तस्याः पुरतो नामकं लिखेः, यथा–तव पुत्रो भविष्यति, यदि तं मह्यं ददासि तदा तुभ्यमानयामि आम्रफलानीति, ततो मां जातं सन्तं तथा कुर्याः यथा धर्मं संभोत्स्य

न्नाओ य, ततो तेण साहुणा भणितो–धिरत्थु ते रायत्तणस्स, जो तुम अप्पणो पुत्तभंडाणवि निग्गहं न करेसि, पच्छा राया भणइ–पसाय करेह, भणइ–जइ पर पव्वयति तो ण मोक्खो, अन्नहा नत्थि, राइणा पुरोहिएण य भण्णइ–एवं होउ, पव्वयतु, पुच्छिआ भणति–पव्वयामो, पुव्व लोओ कतो, पच्छा मुक्का, पव्वइया। सो य रायपुत्तो निस्संकिओ चेव धम्म करेइ, पुरोहियपुत्तस्स पुण जाइमओ, अम्हे मड्डाए पव्वाविया, एव ते दोऽवि काल काऊण देवलोगेसु उववन्ना। इओ य कोसंबीए नयरीए तावसो णाम सेट्ठी, सो मरिऊण नियघरे सूयरो जाओ, जातिस्सरो, ततो तस्स चेव दिवसगे पुत्तेहिं मारितो, पच्छा तहिं चेव घरे उरगो जाओ, तहिंपि जाइस्सरो जातो, तत्थऽवि अतो घरे मा खाहितित्ति मारितो, पच्छा पुणोऽवि पुत्तस्स पुत्तो जातो, तत्थवि जाइं सरमाणो चिंतेइ–

---

१–ज्ञातश्च, ततस्तेन साधुना भणित –धिगस्तु तव राजत्व, यस्त्वमात्मन पुत्रभाण्डानामपि निग्रह न करोपि, पश्चाद् राजा भणति–प्रसाद कुरु, भणति–यदि पर प्रव्रजत तदाऽनयोर्मोक्ष , अन्यथा नास्ति, राज्ञा पुरोहितेन च भण्यते—एव भवतु, प्रव्रजता, पृष्टौ भणत —प्रव्रजाव , पूर्वं लोच कृत , पश्चान्मुक्तौ, प्रव्रजितौ। स च राजपुत्रो निश्शङ्कित एव धर्म करोति, पुरोहितपुत्रस्य पुनर्जातिमद , आवा बलात्प्रव्राजितौ, एव तौ द्वावपि काल कृत्वा देवलोकेपूत्पन्नौ। इतश्च कौशाम्ब्या नगर्यां तापसो नाम श्रेष्ठी, स मृत्वा निजगृहे शूकरो जात , जातिस्मर , ततस्तस्यैव दिवसे पुत्रैर्मारित , पश्चात्तत्रैव गृहे उरगो जात , तत्रापि जातिस्मरो जात , तत्रापि अन्तर्गृहे मा खादीदिति मारित , पश्चात्पुनरपि पुत्रस्य पुत्रो जात , तत्रापि जातिं स्मरंश्चिन्तयति–कथमहमात्मन स्नुषामम्बामिति व्याहरामि, पुत्र चा तातमिति

वितो, गंतो तेण सद्धिं, तेण तस्स सत्थकोसगो अल्लवितो, सो ताए देवमायाए अतीव भारितो, जाव पव्वइया एगंमि पएसे पढंति, विज्जेण भण्णइ—जइ पव्वयसि तो मुयामि, सो तेण भारेण अतीव परिताविज्जंतो चिंतेइ—वरं मे पव्वइउं, भणइ—पव्वयामि, पव्वइओ, देवे गतेणाचिरस्स उप्पव्वइओ, तेण देवेण ओहिणा पिच्छिऊण सो चेव से पुणोऽवि वाही कओ, तेणेव उवाएण पुणोऽवि पव्वाविओ, एवं एक्कसिं दो तिन्नि वारा उप्पव्वइतो, तइया वाराए गच्छइ देवोऽवि तेणेव समं, तणभारं गहाय पलित्तयं गामं पविसति, तेण भण्णइ—किं तणभारएण पलित्तं गामं पविससि ?, तेण भण्णइ—कहं तुमं कोहमाणमायालोभसंपलित्तं गिहिवासं पविससि ?, तहावि न संबुज्झइ, पच्छा दोऽवि गच्छन्ति, नवरं देवो अडवीए उप्पहेणं संपट्ठितो, तेण भण्णइ—कहं एत्तो तं पंथं मोत्तूण पविससि ?,

१ गतस्तेन सार्धं, तेन तस्मिन् शम्बकोशकः आर्द्रितः, स तया देवमायया अतीव भारितः, यावत् प्रव्रजिता एकस्मिन् प्रदेशे पठन्ति, वैद्येन भण्यते—यदि प्रव्रजसि तदा मुञ्चामि, स तेन भारेण अतीव परिताप्यमानश्चिन्तयति—वरं मे प्रव्रजितुं, भणति—प्रव्रजामि, प्रव्रजितो, देवे गतेऽचिरेणोत्प्रव्रजितः, तेन देवेनावधिना दृष्ट्वा स एव तस्य पुनरपि व्याधिः कृतः, तेनैवोपायेन पुनरपि प्रव्राजितः, एवं सकृत् द्वौ त्रीन् वारान् उत्प्रव्रजितः, तृतीये वारे गच्छति देवोऽपि तेनैव समं, तृणभारं गृहीत्वा प्रदीप्तं ग्रामं प्रविशति, तेन भण्यते—किं तृणभारेण प्रदीप्तं ग्रामं प्रविशसि ?, तेन भण्यते—कथं त्वं क्रोधमानमायालोभसंप्रदीप्तं गृहिवासं प्रविशसि ?, तथापि न संबुध्यते, पश्चात् द्वावपि गच्छतः, नवरं देवोऽटव्यामुत्पथेन संप्रस्थितः, तेन भण्यते—कथमितस्त्वं पन्थानं मुक्त्वा प्रविशसि ?,

ज्झामित्ति, तेण पडिवण्णे गतो देवो। अन्नया कतिवयदिवसेसु चइऊण तीए गब्भे उववण्णो, अकाले अवदोहलो जाओ, स मूयगो णामग लिहति–जइ मम गब्भ देसि ता आणेमि अवगाणि, ताए भण्णइ–दिज्जत्ति, तेण आणिआणि अवफलाणि, अवणीओ दोहलो, कालेण दारगो जाओ, सो त खुड्डग चेव होत साहूण पाएसु पाडेइ, सो धाहातो करेति, ण य वदति, पच्छा सतपरितत्तो मूगो पवइतो, सामण्ण काऊण देवलोग गतो, तेण ओही पउत्ता, जाव णेण सो दिट्ठो, पच्छा णेण तस्स जलोयर कय, जेण ण सकेति उट्ठिउ, सववेज्जेहि पच्चक्खातो, सो देवो डोंवरूव काऊण घोसतो हिंडइ—अह वेज्जो सववाही उवसमेमि, सो भणइ–मज्झ पोट्ट सज्जवेहि, तेण भणिय–तुब्भ असज्झो वाही, यदि पर तुम मम चेव ओलग्गसि तो ते सिज्झावेमि, सो भणति–वच्चामि, तेण सज्झ-

१ इति, तेन प्रतिपन्ने गतो देव । अन्यदा कतिपयेषु दिवसेषु च्युत्वा तस्या गर्भे उत्पन्न , अकाले आम्रदोहदो जात , स मूको नामक लिखति–यदि मह्य गर्भं ददासि तदानयाम्याम्रा , तया भण्यते—दास्य इति, तेनानीतान्याम्रफलानि, अपनीतो दोहद , कालेन दारको जात , स त बालकमेव सन्त साधूना पादयो पातयति, स धावन करोति, न च वन्दते, पश्चात् श्रान्तपरिश्रान्तो मूक प्रव्रजित , श्रामण्य कृत्वा देवलोक गत , तेनावधि प्रयुक्त , यावदनेन स दृष्ट , पश्चादनेन तस्य जलोदर कृत, येन न शक्नोत्युत्थातु, सर्ववैद्यै प्रत्याख्यात , स देवो डोम्बरूप कृत्वा घोषयन् हिण्डते–अह वैद्य सर्वव्याधीन् उपशमयामि, स भणति—मम उदर नीरोगय, तेन भणित–तवासाध्यो व्याधि , यदि पर त्व मामेवावलगसि तदा तव साधयामि, स भणति— व्रजिष्यामि, तेन साधित ,

यं से रती जाया, पुव्वं अरती आसि, पच्छा रती जाया ॥ उत्पन्नसंयमारतेश्च स्त्रीभिरुपनिमन्त्र्यमाणस्य तदभिलाष प्रादुःष्यादतस्तत्परीषहमाह—

**संगो एस मणुस्साणं, जाओ लोगंसि इत्थिओ। जस्स एया परिण्णाया, सुकडं तस्स सामण्णं१६(सूत्रम्)**

व्याख्या—सजन्ति—आसक्तिमनुभवन्ति रागादिवशगा जन्तवोऽस्मिन्निति सङ्गः 'एषः' अनन्तरं वक्ष्यमाणो 'मनुष्याणां' पुरुषाणां, तमेवाह—'या' इत्यविशेषाभिधानं ततो याः काश्चन मानुष्यो देव्यस्तिरश्च्यो वा, 'लोगंसि'त्ति लोके तिर्यग्लोकादौ 'स्त्रियो' नार्यश्च, एताश्च हावभावादिभिः अत्यन्तमासक्तिहेतवो मनुष्याणामित्येवमुक्तम्, अन्यथा हि गीतादिष्वपि सजन्त्येव मनुष्याः, मनुष्योपादानं च तेषामेव मैथुनसंज्ञातिरेकः प्रज्ञापनादौ प्ररूपित इति, अतः किमित्याह—'यस्य' इति यतेः 'एताः' स्त्रियः परीति—सर्वप्रकारं ज्ञाताः परिज्ञाताः, तत्र ज्ञपरिज्ञयेह परत्र च महानर्थहेतुतया विदिताः, तथा चागमः—"विभूसा इत्थिसंसग्गी, पणीयं रसभोयणं। णरस्सऽत्तगवेसिस्स, विसं तालउडं जहा ॥१॥" प्रत्याख्यानपरिज्ञया च, तत एव च प्रत्याख्याताः, 'सुकडं' ति सुकृतं सुष्ठ्वनुष्ठितं, पाठान्तरतः —'सुकरं' वा सुखेनैवानुष्ठातुं शक्यं 'तस्स' त्ति सुव्यत्ययात्तेन 'सामण्णं'ति श्रामण्यं—व्रतं, किमुक्तं भवति ?—

१ तस्य रतिर्जाता, पूर्वमरतिरासीत्, पश्चाद्रतिर्जाता। २ विभूषा स्त्रीसंसर्गः प्रणीतरसभोजनम्। नरस्यात्मगवेषिणो विषं तालपुटं यथा ॥ १ ॥

देवेणं भण्णइ—कह तुम मोक्खपह मोत्तूण ससाराडविं पविससि ?, तहावि न संबुज्झइ, पुणो एगमि देवकुले वाणमतरो अचितो हिट्ठाहुत्तो पडइ, सो भणइ—अहो वाणमतरो ! अधण्णो अपुण्णो य जो उवरिहुत्तो कओ अच्चियओ य हेट्ठाहुत्तो पडइ, तेण देवेण भण्णइ—अहो ! तुमपि अधण्णो जो उप्पराहुत्तो ठविओ अच्चणिज्जे य ठाणे पुणो पुणो उप्पव्वयसि, तेण भण्णइ—कोऽसि तुम ?, तेण मूयगरूव दसिय, पुव्वभवो से कहितो, तो सो भणइ—को पच्चओ ?, जहाऽह देवो आसि, पच्छा सो देवो त गहाय गओ वेयड्ढपव्वय, सिद्धाययण कूड च, तत्थ तेण पुव्व चेव सगारो कतिल्लओ जहा—यदि अह न सबुज्झेज्ज तो एय ममच्चय कुडलजुयल णामयकिय सिद्धाययणपुक्खरिणीए दरिसिज्जासि, तेण से दसिय, सो त कुडल सनामकिय पिच्छिऊण जाइस्सरो जातो, सबुद्धो पव्वइतो जाओ, सजमे

१ देवेन भण्यते—कथ त्व मोक्षपथ मुक्त्वा ससाराटवीं प्रविशसि ?, तथापि न सबुध्यते, पुनरेकस्मिन् देवकुले व्यन्तरोऽर्चितोऽधस्तात्पतति, स भणति—अहो व्यन्तरोऽधन्योऽपुण्यश्च य उपरि कृतोऽर्चितश्च अध पतति, तेन देवेन भण्यते—अहो त्वमप्यधन्यो य उपरि स्थापितोऽर्चनीये च स्थाने पुन पुनरुत्प्रव्रजसि, तेन भण्यते—कोऽसि त्व ?, तेन मूकरूप दर्शित, पूर्वभवश्च तस्मै कथित , तत स भणति—क प्रत्यय ?, यथाऽह देव आस, पश्चात्स देवस्त गृहीत्वा गतो वैताढ्यपर्वत, सिद्धायतनकूट च, तत्र तेन पूर्वं चैव सकेत कृतो यथा—यद्यह न सबुध्येय तदैतत् मामकीन कुण्डलयुगल नामाङ्कित सिद्धायतनपुष्करिण्या दर्शये , तेन तस्मै दर्शित, स तत् कुण्डल स्वनामाङ्कित प्रेक्ष्य जातिस्मरो जात , सबुद्ध प्रव्रजितो जात , सयमे च

'सिद्धिः स्वरूपापत्ति'रिति वचनात् सिद्धिर्वा आत्मा, ततः कथं ममासौ स्यादित्यन्वेषकः आत्मगवेषको, यद्वा आत्मानमेव गवेषयते इत्यात्मगवेषकः, किमुक्तं भवति ?–चित्रालङ्कारशालिनीरपि स्त्रियोऽवलोक्य तद्दृष्टिन्यासस्य दुष्टतावगमात् झगिति ताभ्यो दृगुपसंहारत आत्माऽन्वेष्टैव भवति, उक्तं हि—"चित्तभित्तिं ण णिज्झाए, नारिं वा सुअलंकियं। भक्खरंपिव दट्ठूणं, दिट्ठिं पडिसमाहरे ॥ १ ॥" इति सूत्रार्थः ॥ १७ ॥ सम्प्रति प्रतिमाद्वारं विवृण्वन् 'यस्यैताः परिज्ञाता' इत्यादिसूत्रसूचितं चैदंयुगीनजनदार्ढ्योत्पादकं दृष्टान्तमाह—

उसभपुरं रायगिहं पाडलिपुत्तस्स होइ उप्पत्ती। नंदे सगडाले थूलभद्द सिरिए वररुई य ॥ १०० ॥
तिण्हं अणगाराणं अभिग्गहो आसि चउण्ह मासाणं। वसहीमित्तनिमित्तं को कहि वुत्थो ? निसामेह १०१
गणियाघरम्मि इक्को वुत्थो वीओ उ वग्घवसहीए। सप्पवसहीइ तइओ को दुक्करकारओ इत्थं ? १०२
वग्घो वा सप्पो वा सरीरपीडाकरा उ भइयव्वा। नाणं व दंसणं वा चरित्तं(यं) व न पच्चला भित्तुं ॥१०३॥
भयवंपि थूलभद्दो तिक्खे चंकम्मिओ न उण छिन्नो। अग्गिसिहाए वुत्थो चाउम्मासे न उण दड्ढो १०४
अन्नोऽवि य अणगारो भणमाणोऽहंपि थूलभद्दसमो। कंबलओ चंदणयाइ मइलिओ एगराईए ॥१०५॥

१ भित्तिचित्रं न निध्यायेत्, नारीं वा स्वलङ्कृताम्। भास्करमिव दृष्ट्वा दृष्टिं प्रतिसमाहरेत् ॥ १ ॥

अवद्यहेतुत्यागो हि अत, रागद्वेषावेव च तत्त्वतस्तद्धेतू, उक्तनीतितश्च न स्त्रीभ्य पर तन्मूलमिति तत्प्रत्याख्यानत एव सुकृतत्व श्रामण्यस्य, यथोक्तनीतित स्त्रिय एव दुस्त्यजा, ततस्तत्त्यागे त्यक्तमेवापरमिति तत्प्रत्याख्यानत सुकृतत्व श्रामण्यस्योच्यते, वक्ष्यति हि—"एए उ सगे समइक्कमित्ता, सुहुत्तरा चेव हवंति सेसा । जहा महासागरमुत्तरित्ता, णई भवे अवि गगासमाणा ॥ १ ॥" इति सूत्रार्थ ॥ १६ ॥ अत किं विधेयमित्याह—

एवमाणाय मेहावी, पकभूयाउ इत्थीओ । नो ताहि विणिहण्णिज्जा, चरे अत्तगवेसए ॥१७॥ (सूत्रम्)

व्याख्या—'एवम्' इत्यनन्तरोक्तेन प्रकारेणात्यन्तासक्तिहेतुत्वलक्षणेन 'आज्ञाय' स्वरूपाभिव्याप्त्या अवगम्य 'मेधावी' अवधारणशक्तिमान् पङ्क—कर्दम तद्भूता—मुक्तिपथप्रवृत्ताना विबन्धकत्वेन मालिन्यहेतुत्वेन च तदुपमा, तुरवधारणार्थे, तत पङ्कभूता एव स्त्रिय, पठ्यते च—'एवमादाय मेहावी जहा एया लहुस्सग'त्ति 'एवम्', अनन्तर एव वक्ष्यमाणधर्मम् 'आदाय' बुद्ध्या गृहीत्वा मेधावी, तमेवाह—'यथे'त्युपदर्शने, 'एता' स्त्रिय 'लहुस्सग'त्ति तुच्छाशयत्वादिना लघ्व्य, तत किमित्याह—'नो' नैव 'ताभि' 'स्त्रीभि' 'विनिहन्यात्' विशेषेण—सयमजीवितव्यपरोपणात्मकेनातिशयेन च—सामस्त्यतदुच्छेदरूपेणातिपातयेत्, आत्मानमिति गम्यते, कृत्यमाह—'चरेत्' धर्मानुष्ठानमासेवेत, आत्मान गवेषयते—कथ मयाऽऽत्मा भवान्निस्तारणीय इत्यन्वेषयते आत्मगवेषक,

१ एतास्तु सङ्गान् समतिक्रम्य सुखोत्तारा एव भवन्ति शेषा । यथा महासागरमुत्तीर्य नदी भवेदपि गङ्गासमाना ॥ १ ॥

असोगवणियाए चिंतेहि, सो तत्थ अतिगतो चिंतेति—केरिसं भोगकज्जं वक्खित्ताणं ?, पुणरवि णरगं जातियव्वं होहित्ति, एए णाम परिणामदुस्सहा भोगत्ति पंचमुट्ठियं लोयं काऊण पाऊयं कंबलरयणं छिंदित्ता रओहरणं काउं रण्णो मूलं गतो, एयं चिंतियं, राया भणइ—सुचिंतियं, विणिग्गतो, राया चिंतेइ—पिच्छामि किं कवडत्तणेण गणियाघरं पविस्सइ ण वत्ति? पासायतलगओ पेच्छइ, नवरं मयगकलेवरस्स जणो ओसरइ, मुहाणि य ठएइ, सो मज्झेण गतो, राया भणइ—णिव्विण्णकामभोगो भगवंति सिरिओ ठावितो। सो संभूयगविजयस्स मूले पव्वतितो, थूलभद्दसामीवि संभूयविजयाणं मूले घोरागारं तवं करेइ, विहरंता पाडलिपुत्तं आगया, तिण्णि अणगारा अभिग्गहे गिण्हंति—एको सीहगु-

---

१ अशोकवनिकायां चिन्तय, स तत्रातिगतश्चिन्तयति—कीदृशं भोगकार्यं व्याक्षिप्तानां ?, पुनरपि नरके यातव्यं भविष्यतीति, एते नाम परिणामदुस्सहा भोगा इति पञ्चमौष्टिकं लोचं कृत्वा प्रावृतं कम्बलरत्नं छित्त्वा रजोहरणं कृत्वा राज्ञो मूलं गतः, एतच्चिन्तितं, राजा भणति—सुचिन्तितं, विनिर्गतः, राजा चिन्तयति—पश्यामि किं कपटेन गणिकागृहं प्रविशति न वेति ?, प्रासादतलगतः प्रेक्षते, नवरं—मृतककलेवरात् जनोऽपसरति, मुखानि च स्थगयति, स मध्येन गतः, राजा भणति—निर्विण्णकामभोगो भगवानिति श्रीयकः स्थापितः। स संभूतविजयस्य मूले प्रव्रजितः, स्थूलभद्रस्वाम्यपि संभूतविजयानां मूले घोराकारं तपः करोति, विहरन्तः पाटलीपुत्रमागताः, त्रयोऽनगारा अभिग्रहान् गृह्णन्ति—एकः सिंहगुहायां,

व्याख्या—वृषभपुर राजगृह पाटलिपुत्रस्य भवत्युत्पत्ति, नन्द शकडाल स्थूलभद्र सिरियको वररुचिश्च, त्रयाणामनगाराणा अभिग्रह आसीत् 'चउण्ह मासाण' सुब्व्यत्ययाच्चतुर्षु मासेषु वसतिमात्रनिमित्त, क कुत्रोषित ? निशामयत—गणिकागृह एको, द्वितीय उषितस्तु व्याघ्रवसतौ, सर्पवसतौ तृतीय, को दुष्करकारकोऽत्र ?, तेषु मध्ये व्याघ्रो वा सर्पो वा शरीरपीडाकरौ तु भक्तव्यौ, ज्ञान वा दर्शन वा चारित्र वा न प्रत्यलौ भेत्तु, भगवानपि स्थूलभद्र तीक्ष्णे—निशितासिधारादौ चङ्क्रमितो न पुनश्छिन्न, अग्निशिखायामुषितश्चातुर्मासा न पुनर्दग्ध, अन्योऽपि चानगारो भणन्नहमपि स्थूलभद्रसम कम्बलकश्चन्दनिकायाम्—उच्चारभूमौ मलिनित इति गाथापञ्चार्थ ॥ १००—१०५ ॥ एतदर्थस्तु वृद्धसम्प्रदायादवसेय, स चायम्—

पुंवि खिइप्पइट्ठिय णाम नयर, तत्थ वत्थुमि खीणे चणगपुर णिविट्ठ, ततो उसहपुरं, ततो रायगिह, ततो चंपा, ततो पाडलिपुत्त इच्चाइ भाणियव्व जाव सगडाले पच्चत्तमुवगते णदेण सिरितो भणितो—कुमारामच्चत्तण पडिवज्जाहि, सो भणइ—मम भाया जेट्ठो थूलभद्दो बारसम वरिस गणियाघर पविट्ठस्स, सो सद्दावितो भणइ—चितेमि, राया भणइ—

१ पूर्वं क्षितिप्रतिष्ठित नाम नगर, तत्र वस्तुनि क्षीणे चणकपुर निविष्ट, तत ऋषभपुर, ततो राजगृह, ततश्चम्पा, तत पाटलीपुत्रमित्यादि भणितव्य यावत् शकटाले पञ्चत्वमुपगते नन्देन श्रीयको भणित —कुमारामात्यत्व प्रतिपद्यस्व, स भणति—मम भ्राता ज्येष्ठ स्थूलभद्रो द्वादश वर्षं गणिकागृह प्रविष्टस्य, स शब्दितो भणति—चिन्तयामि, राजा भणति—

सीहगुहाखमणो भणति—गणियाघरं वच्चामित्ति अभिग्गहं गिण्हइ, आयरिया उवउत्ता, वारिओ, अप्पडिसुणंतो गतो, वसही मग्गिया, दिण्णा, सा सब्भावेण ओरालियसरीरा विभूसिया अविभूसिया वा, सुणति धम्मं, सो तीसे सरीरे अज्झोववन्नो, ओभासइ, सा ण इच्छति, भणति—जति नवरि किंचि देसि, किं देमि ?, सयसहस्सं, सो मग्गिउमारद्धो, णेवालविसये सावतो, जो तहिं जाइ तस्स सयसहस्समुल्लं कंबलं देइ, तहिं गतो, तेण दिण्णं सड्ढरायाणएणत्ति, एगत्थ चोरेहिं पंथो बद्धो, सउणो वासति—सयसहस्संति, चोरसेणावई जाणइ, नवरि संजयं पेच्छइ, वोलीणो, पुणो वासति—सयसहस्सं गतं, तेण सेणावइणा गंतूण पलोइओ, सब्भावं पुच्छिओ भणति—अत्थि कंबलो, गणिकाए णेमि, मुक्को गतो, तीसे दिण्णो, ताए चंदणिकाए छूढो, सो भणइ—मा विणासेहि, सा

१ सिंहगुहाक्षपणो भणति—गणिकागृहं व्रजामीति अभिग्रहं गृह्णाति, आचार्या उपयुक्ताः, वारितः, अप्रतिशृण्वन् गतः, वसतिर्मार्गिता, दत्ता, सा सद्भावेनोदारशरीरा विभूषिता अविभूषिता वा, शृणोति धर्मं, स तस्याः शरीरेऽध्युपपन्नः, अवभासयति (याचते), सा नेच्छति, भणति—यदि नवरं किञ्चिद्ददासि, किं ददामि ?, शतसहस्रं, स मार्गयितुमारब्धः, नेपालविषये श्रावकः यस्तत्र याति तस्मै शतसहस्रमूल्यं कम्बलं ददाति, तत्र गतः, तेन दत्तं श्राद्धेन राज्ञेति, एकत्र चौरैः पन्था बद्धः, शकुनो वासयति—शतसहस्रमिति, चौरसेनापतिर्जानाति, नवरं संयतं प्रेक्षते, वलितः, पुनर्वासयति—शतसहस्रं गतं, तेन सेनापतिना गत्वा प्रलोकितः, सद्भावः पृष्टो भणति—अस्ति कम्बलः, गणिकायै नयामि, मुक्तो गतः, तस्यै दत्तः, तया चन्दनिकायां (वर्चोगृहे) निक्षिप्तः, स भणति—मा विनिनेशः, सा

हाए, 'त पेहतओ सीहो उवसतो, अन्नो सप्पगुहाए, सोऽवि दिट्ठीविसो उवसतो, थूलभद्दो कोसाघरे, सा तुट्ठा, परीसहपराजिओ आगओत्ति, भणइ–किं करेमि ?, उज्जाणघरे ठाण देहि, दिन्न, रत्ति सबालङ्कारविभूसिया आगया, चाडुय पकया, सो मदरोपमो अकपो, ताहे सब्भावेण पडिसुणेइ, धम्मो कहितो, साविगा जाया, भणति–जति रायसेण अन्नेण समं वसेज्जा, इयरहा बभचारिणीवय गिण्हति । ताहे सीहगुहाओ आगओ चत्तारि मासे उववास काऊण, आइरिएहिं ईसत्ति अब्भुट्ठिओ, भणिओ य–सागय दुक्करकारगस्सत्ति, एव सप्पईत्तोऽवि, थूलभद्दसामी तत्थेव गणियाघरे भिक्खं गिण्हइ, सोऽवि चउमासेसु पुण्णेसु आगतो, आयरिया सभमेण उट्ठिया, भणिओ य–सागय ते अइदुक्करदुकरकारगस्सत्ति, ते भणति दोण्णिवि–पेच्छह आयरिया राग वहति अमच्चपुत्तोत्ति, बितियए वरिसारत्ते

१ त प्रेक्षमाण सिंह उपशान्त, अन्य सर्पबिले, सोऽपि दृष्टिविष उपशान्त, स्थूलभद्र कोशागृहे, सा तुष्टा, परीषहपराजित आगत इति, भणति–किं करोमि ?, उद्यानगृहे स्थान देहि, दत्त, रात्रौ सर्वालङ्कारविभूषिता आगता, चाटु प्रकृता, स मन्दरोपमोऽकम्प, तदा सद्भावेन प्रतिशृणोति, धर्मे कथित, श्राविका जाता, भणति—यदि राजवशेनान्येन सम वसेयम्, इतरथा ब्रह्मचारिणीव्रत गृह्णाति। तदा सिंहगुहाया आगतश्चतुरो मासान् उपवास कृत्वा, आचार्यैरीषदित्यभ्युत्थित, भणितश्च—स्वागत दुष्करकारकस्येति, एव सर्पबिलसत्कोऽपि, स्थूलभद्रस्वामी तत्रैव गणिकागृहे भिक्षा गृह्णाति, सोऽपि चतुर्षु मासेषु पूर्णेषु आगत, आचार्या सभ्रमेणोत्थिता, भणितश्च–स्वागत तेऽतिदुष्करदुष्करकारकस्येति, तौ भणतो द्वावपि–पश्यत आचार्या राग वहन्ति अमात्यपुत्र इति, द्वितीये वर्षारात्रे

लाढः, प्रशंसाभिधायि वा देशीपदमेतत्, पठ्यते च–'एग एगे चरे लाढं' ति, तत्र चैकः–असहायः प्रतिमाप्रतिपन्नादिः स चैको रागादिवैकल्याद्' 'अभिभूय' निर्जित्य 'परीषहान्' क्षुदादीन्, क पुनश्चरेदित्याह—'ग्रामे' चोक्तरूपे 'नगरे वा' करविरहितसन्निवेशे 'अपिः' पूरणे 'निगमे वा' वणिग्निवासे 'राजधान्यां' वा प्रसिद्धायाम्, उभयत्र वाशब्दानुवृत्तेः, मडम्वाद्युपलक्षणं चैतद्, आग्रहाभावं चानेनाहेति सूत्रार्थः ॥ १८ ॥ पुनः प्रस्तुतमेवाह—

असमाणो चरे भिक्खू, नेव कुज्जा परिग्गहं। असंसत्तो गिहत्थेहिं, अनिकेओ परिव्वए ॥१९॥ (सूत्रम्)

व्याख्या—न विद्यते समानोऽस्य गृहिण्याश्रयामूर्च्छितत्वेन अन्यतीर्थिकेषु वाऽनियतविहारादिनेत्यसमानः–असदृशो, यद्वा समानः–साहङ्कारो न तथेत्यसमानः, अथवा '(अ)समाणो' त्ति प्राकृतत्वादसन्निवासन्, यत्रास्ते तत्राप्यसंनिहित एवेति हृदयं, सन्निहितो हि सर्वः स्वाश्रयस्योदन्तमावहति अयं तु न तथेत्येवंविधः सन् 'चरेत्, अप्रतिवद्धविहारतया विहरेत् 'भिक्षुः' यतिः, कथमेतत् स्यादित्याह—नैव कुर्यात् 'परिग्रहं' ग्रामादिषु ममत्वबुद्ध्यात्मकम्, अत्राह च–"[1]गामे कुले वा नगरे व देसे, ममत्तभावं ण कहिंचि कुज्जा", इदमपि यथा स्यात्तथाह—'असंसक्तः' असम्वद्धो 'गृहस्थैः' गृहिभिः 'अनिकेतः' अविद्यमानगृहो, नैकत्र वद्धास्पदः, 'परिव्रजेत्' सर्वतो विहरेत्, न (ना) नियतदेशादौ गृहिसम्पर्कः, एकत्र वद्धास्पदत्वे नियतदेशादिविहारितायां वा स्यादपि ममत्वबुद्धिः, तदभावे

१ ग्रामे कुले वा नगरे वा देशे, ममत्वभावं न कुत्रचित्कुर्यात्।

भणई–तुमपि एरिसओ चेव होहिसि, उवसामेति लद्धबुद्धी, इच्छामि अणुसट्ठिं, गतो, पुणो आलोएत्ता विहरइ। आयरिएण भणिओ–एव दुक्करदुक्करकारओ थूलभद्दो पुव्विं खरिका (दुअक्खरिया) इच्छइ, इदाणी सड्ढी जाया, अदिट्ठ-दोसा तुमे पत्थियत्ति उवालद्धो, एव चेव विहरति। सा गणिका रहियस्स रण्णा दिण्णा, त अक्खाण जहा णमोकारे। जहा थूलभद्देणित्थीपरीसहो अहियासितो तहा अहियासियव्वो, ण उ जहा तेण णो अहियासितोत्ति ॥ अथ चैकत्र वसतस्तथा स्त्रीजनससर्गतो मन्दसत्त्वस्य भवति अतो नैकस्थेन भाव्य, किन्तु चर्यापरीषह सोढव्य इति तमाह—

एग एव चरे लाढे, अभिभूय परीसहे। गामे वा नगरे वावि, णिगमे वा रायहाणीए ॥ १८ ॥(सूत्रम्)

व्याख्या—'एक एवे' ति रागद्वेषविरहित 'चरेत्' अप्रतिबद्धविहारेण विहरेत्, सहायवैकल्यतो वैकस्तथाविध-गीतार्थो, यथोक्तम्—"ण यो लभिज्जा णिउण सहाय, गुणाहिय वा गुणतो सम वा। एक्कोऽवि पावाइ विवज्जयतो, विहरेज्ज कामेसु असज्जमाणो ॥ १ ॥" 'लाढे' त्ति लाढयति प्रासुकैषणीयाहारेण साधुगुणैर्वाऽऽत्मान यापयतीति

---

१ भणति—त्वमप्येतादृश एव भविष्यसि, उपशाम्यति लब्धबुद्धि, इच्छामि अनुशास्ति, गत, पुनरालोच्य विहरति। आचार्येण भणित—एव दुष्करदुष्करकारक स्थूलभद्र पूर्वं व्यक्षरिका इच्छति, इदानीं श्राद्धी जाता, अदृष्टदोषा त्वया प्रार्थितेति उपालब्ध, एवमेव विहरति। सा गणिका रथिकाय राज्ञा दत्ता, तदाख्यानक यथा नमस्कारे (आवश्यकवृत्तौ)। यथा स्थूलभद्रेण स्त्रीपरिषहोऽध्यासितस्तथाऽध्यासितव्य, न तु यथा तेन नाध्यासित इति। २ न चापि लभेत निपुण सहाय, गुणाधिक वा गुणत सम वा। एकोऽपि पापानि विवर्जयन्, विहरेत् कामेषु असजन् १

कया, मा रोवत्ति, वाणमंतरीए मुक्को, तेहिं तुट्ठेहिं पडिलाहिया जहिच्छिएणं, सो विसज्जितो, एयाणि कुलाणित्ति, आयरिया सुचिरं हिंडिऊण अंतपंतं गहाय आगया, समुद्दिट्ठा, आवस्सए आलोयणाए आलोएहि, भणति–तुब्भेहिं समं हिंडिओ मि, धाईपिंडो ते भुत्तो, भणति–अह सुहमाइं पिच्छहत्ति पदुट्ठो, देवयाए अड्ढरत्ते वासं अंधकारो य विगुव्वितो, एसो हीलेइत्ति, आयरिएहिं भणिओ–अतीहित्ति, सो भणइ–अंधकारोत्ति, आयरिएहिं अंगुली दाइया, सा पज्जलिया, आउट्टो आलोएइ, आयरियावि से णवभागे कहेंति ॥ ततश्च यथा महात्मभिरमीभिः सङ्गमस्थविरैश्चर्यापरीषहोऽध्यासितः तथान्यैरपि अध्यासितव्य इति ॥ यथा चायं ग्रामादिष्वप्रतिबद्धेनाधिसह्यते एवं नैषेधिकीपरीषहोऽपि शरीरादिष्वप्रतिबद्धेनाधिसहनीय इति तमाह—

सुसाणे सुन्नगारे वा, रुक्खमूले य एगओ। अकुक्कुए निसीएज्जा, न य वित्तासए परं ॥२०॥ (सूत्रम्)

व्याख्या—शवानां शयनमस्मिन्निति श्मशानं तस्मिन्–पितृवने, (पा० ५–१–२) श्वभ्यो हितमिति वाक्ये

१ कृता–मा रोदिहीति, व्यन्तर्या मुक्तः, तैस्तुष्टैः प्रतिलम्भिता यथेप्सितेन, स विसृष्टः, एतानि कुलानीति, आचार्याः सुचिरं हिण्डित्वाऽन्तप्रान्तं गृहीत्वा आगताः, भुक्ताः, आवश्यके आलोचनायामालोचय, भणति–युष्माभिः समं हिण्डितोऽस्मि, धात्रीपिण्डस्त्वया भुक्तः, भणति–अथ सूक्ष्माणि प्रेक्षध्वमिति प्रद्विष्टः, देवतया अर्धरात्रे वर्षा अन्धकारं च विकुर्विते, एष हीलतीति, आचार्यैर्भणितः–आयाहीति, स भणति—अन्धकारमिति, आचार्यैरङ्गुलिर्दर्शिता, सा प्रज्वलिता, आवृत्त आलोचयति, आचार्या अपि तस्मै नव भागान् कथयन्ति

तु निरवकाशैवेयमिति भाव इति सूत्रार्थं ॥ १९ ॥ अत्र च शिष्यद्वारमनुसरन् 'असमाणो चरे' इत्यादिसूत्रसूचितमुदाहरणमाह—

कोल्लयरे वत्थव्वो दत्तो सीसो अ हिंडओ तस्स । उवहरइ धाइपिंड अंगुलिजलणा य सादिव्व ॥१०६॥

व्याख्या—'कोल्लयरे' कुल्लयरनाम्नि नगरे वास्तव्य, आचार्य इति शेष, दत्त शिष्यश्च हिण्डक तस्य उपहरति धात्रीपिण्डमङ्गुलिज्वलनाच्च सादेव्यमिति गाथाक्षरार्थं ॥ १०६ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेय, स चायम्—कोल्लयरे नयरे वत्थव्वा सङ्गमथेरा आयरिया, दुब्भिक्खे तेहिं सजया विसज्जिया, त णगर णवभागे काऊण जघाबलपरिहीणा विहरन्ति, णगरदेवया य तेसिं किर उवसता, तेसिं सीसो दत्तो नाम आहिंडितो, चिरेण कालेण उदतवाहतो आगतो, सो तेसिं पडिस्सय ण पविट्ठो णिययावासत्ति, भिक्खवेलाए उवग्गाहिय हिंडताण सकिलिस्सति, कुंठो सड्ढकुलाइं ण दावेइत्ति, तेहिं णाय, एगत्थ सिट्ठिकुले रेवतियाए गहियतो दारतो, छम्मासा रोयतस्स, आइरिएहिं चप्पुडिया

---

१ कोल्लकेरे नगरे वास्तव्या सङ्गमस्थविरा आचार्या, दुर्भिक्षे तै संयता विसृष्टा, तन्नगर नव भागान् कृत्वा परिक्षीणजङ्घाबला विहरन्ति, नगरदेवता च तेषु किलोपशान्ता, तेषा शिष्यो दत्तो नामाहिण्डक, चिरेण कालेनोदन्तवाहक आगत, स तेषा प्रतिश्रय न प्रविष्टो नित्यवास इति, भिक्षावेलायामौपग्रहिक हिण्डमानयो सक्लिश्यति, कुण्ट श्राद्धकुलानि न दर्शयतीति, तैर्ज्ञातम्, एकत्र श्रेष्ठिकुले रेवतिकया गृहीतो दारक, षण्मासा रुदत, आचार्यैश्चप्पुटिका

सृज्यन्ते—तिर्यग्मनुष्यामरैः कर्म्मवशगेनात्मना क्रियन्त इत्युपसर्गाः ते 'अभिधारयेयुः' अन्तर्भावितवार्थत्वादभिधारयेयुरिव, कोऽर्थः ?—उत्कटतयाऽत्यन्तोत्सिक्तरिपुवत् अभिमुखीकुर्युरिव, यथैते सज्जा वयं तत् प्रगुणीभूयाभिमुखैः स्थेयमिति, यद्वा सोपस्कारत्वात् सूत्राणामुपसर्ग्गाः सम्भवेयुः ततस्तानभिधारयेत्—किमेते ममाचलितचेतसः कर्तुमलमिति चिन्तयेत्, पठ्यते च—'उवसग्गभयं भवे' इति सुगमं, 'शङ्काभीत इति' तत्कृतापकारशङ्कातो भीतः—त्रस्तो 'न गच्छेत्' न यायादुत्थाय, कोऽर्थः ?—तत् स्थानमपहाय अन्यदपरं आस्यते अस्मिन्निति आसनं—स्थानमिति सूत्रार्थः ॥ २१ ॥ अग्निद्वारमधुना, तत्र च 'शङ्काभीतो न गच्छेज्ज'त्ति सूत्रावयवमर्थतः स्पृशन् उदाहरणमाह—

**निक्खंतो गयउराओ कुरुदत्तसुओ गओ य साकेयं। पडिमाट्ठियस्स कुडिया आगया अग्गि जालिंति १०७**

व्याख्या—'निष्क्रान्तः' प्रव्रजितो गजपुरात् कुरुदत्तसुतो गतश्च साकेतं प्रतिमास्थितस्य 'कुडिय' त्ति हृतगवेषका (आगता) अग्निं शिरसि ज्वालयन्ति इति गाथाक्षरार्थः ॥ १०७ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—

हत्थिणाउरे णयरे कुरुदत्तसुत्तो णाम इब्भपुत्तो तहारूवाणं थेराणमंतिए पव्वतितो, सो कयाइ एगल्लविहारपडिमं पडिवण्णो, साएयस्स णयरस्स अदूरसामंते चरिमा ओगाढा, तत्थेव पडिमं ठिओ चच्चरे, तओ एगाता

१ हस्तिनापुरे नगरे कुरुदत्तसुतो नामेभ्यपुत्रस्तथारूपाणां स्थविराणामन्तिके प्रव्रजितः, स कदाचित् एकाकिविहारप्रतिमां प्रतिपन्नः, साकेतस्य नगरस्यादूरसमीपे चरमा (पौरुषी) अवगाढा, तत्रैव प्रतिमां स्थितश्चत्वरे, तत एकस्मात्

'उगवादिभ्यो यदि'सूत्र (पा० ५-१-२) 'शुन सम्प्रसारण वा दीर्घत्व'मिति ( वार्तिक ५-१-२ ) वचनतो यति सम्प्रसारणे दीर्घत्वे च शून्यम्-उद्वस तच्च तत् अगार च शून्यागार तस्मिन्वा, वृश्च्यत इति वृक्ष तस्य मूल-अधोभूभागो वृक्षमूल तस्मिन्वा, 'एक ' उक्तरूप स एवैकक , एको वा प्रतिमाप्रतिपत्त्यादौ गच्छतीत्येकग , एक वा कर्मसाहित्य-विगमतो मोक्ष गच्छति-तत्प्राप्तियोग्यानुष्ठानप्रवृत्तेर्यातीत्येकग , 'अकुक्कुच ' अशिष्टचेष्टारहितो 'निषीदेत्' तिष्ठेत्, 'न च' नैव वित्रासयेत् 'परम्' अन्य, किमुक्त भवति ?-'पडिम पडिवज्जिया मसाणे, णो भायए भयभेरवाइ दिस्स । विविहगुणतवोरए य णिच्च, ण सरीरं चाभिकखए सभिक्खू ॥ १ ॥' इत्यागममनुस्मरन् श्मशानादावप्येककोऽप्य-नेकभयानकोपलम्भेऽपि न स्वय सविभीयात्, न च विकृतस्वरमुखविकारादिभिरन्येषा भयमुत्पादयेत्, यद्वा 'अकु-क्कुए' त्ति अकुत्कुच कुन्थ्वादिविराधनाभयात्कर्मबन्धहेतुत्वेन कुत्सित हस्तपादादिभिरस्पन्दमानो निषीदेत्, न च 'वित्रासयेत्' विक्षोभयेत् ' परम् ' उन्दूरादि, मा भूदसयम इति सूत्रार्थ ॥ २० ॥ तत्र च तिष्ठत कदाचिदुप-सर्गोत्पत्तौ यत् कृत्य तदाह—

तत्थ से चिट्ठमाणस्स, उवसग्गेऽभिधारए । सकाभीओ न गच्छेज्जा, उट्ठित्ता अपणमासण ॥२१॥( सूत्रम्)

व्याख्या—'तत्र' इति श्मशानादौ 'से' तस्य तिष्ठत , पठ्यते च-'अच्छमाणस्स' त्ति आसीनस्य उप-सामीप्येन

---

१ प्रतिमा प्रतिपद्य श्मशाने न बिभेति भयभैरवाणि दृष्ट्वा । विविधगुणतपोरतश्च नित्य न शरीर चाभिकाङ्क्षते स भिक्षु ॥ १ ॥

अन्यसमयातिशायिनीं मर्यादां–समतारूपामुच्चां शय्यामवाप्याहो ! सभाग्योऽहं यस्येदृशी सकलर्तुसुखोत्पादिनी मम शय्येति अवचावासौ वा अहो ! मम मन्दभाग्यता येन शय्यामपि शीतादिनिवारिकां न लभे इति हर्षविषादादिना 'न विहन्यात्' नोल्लङ्घयेत्, किमित्येवमुपदिश्यत इत्याह–'पावदिट्ठी विहन्नइ' त्ति प्राग्वदिति सूत्रार्थः ॥ २२ ॥ किं पुनः कुर्यादित्याह—

पइरिक्कमुवस्सयं लद्धुं, कल्लाणं अदुव पावगं। किमेगरायं करिस्सइ ?, एवं तत्थऽहियासए ॥२३॥(सूत्रम्)

व्याख्या—'पइरिक्कं' स्त्र्यादिविरहितत्वेन विविक्तमव्याबाधं वा 'उपाश्रयं' वसतिं 'लब्ध्वा' प्राप्य 'कल्याणं' शोभनम् 'अदुव'त्ति अथवा 'पापं' पांशूत्कराकीर्णत्वादिभिरशोभनं, किं ?, न किञ्चित्, सुखं दुःखं चेति गम्यते, एका रात्रिर्यत्र तदेकरात्रं 'करिष्यति' विधास्यति ? कल्याणः पापको वोपाश्रय इति प्रक्रमः, कोऽभिप्रायः ?–केचित् पुरोपचितसुकृता विविधमणिकिरणोद्योतितासु महाधनसमृद्धासु महारजतरजतोपचितभित्तिषु मणिनिर्मितोरुस्तम्भासु तदितरे तु जीर्णविशीर्णभग्नकटकस्थूणापटलसंवृतद्वारासु तृणकचवरतुपमूपकोत्करपांशुबुसभस्मविण्मूत्रावसङ्कीर्णासु श्वनकुलमार्जारमूत्रप्रसेकदुर्गन्धिष्वाजन्म वसतिषु वसन्ति, मम त्वद्यैवेयमीदृशी श्वोऽन्या भविष्यतीति किमत्र हर्षेण विषादेन वा ?, मया हि धर्मनिर्वाहाय विविक्तत्वमेवाश्रयस्यान्वेष्यं, किमपरेण ?, 'एवमि'त्यमुना प्रकारेण 'तत्रे' ति कल्याणे पापके वाऽऽश्रये 'अध्यासीत' सुखं दुःखं वाऽधिसहेत, प्रतिमाकल्पिकापेक्षं चैकरात्रमिति, स्थविरकल्पिका-

गामातो गावितो हिरियातो, तेण ओगासेण णीयातो, जाव मग्गमाणा कुढिया आगया, जाव साहू दिट्ठो, तत्थ दुवे पथा, पच्छा ते ण जाणति–कयरेण मग्गेण णीयातो ?, ते साहु पुच्छति–कयरेण मग्गेण णीयाओ ?, ताहे सो भगव न वाहरति, तेहि रुट्ठेहिं न वाहरतित्तिकाऊण तस्स सीसे मट्टियाए पालिं बंधिऊण चियागते अगारे घेत्तूण सीसे छूढा, गया य, सो भगव सम्म सहइ ॥ तेन स यथा सम्यक् सोढो नैषेधिकीपरीषह तथाऽन्यैरपि साधुभि सहनीय इति ॥ नैषेधिकीतश्च स्वाध्यायादि कृत्वा शय्या प्रति निवर्त्तेतातस्तत्परीषहमाह—

उच्चावयाहि सिज्जाहि, तवस्सी भिक्खू थामव। णाइवेल विहणिज्जा, पावदिट्ठी विहण्णइ ॥२२॥(सूत्रम्)

व्याख्या—ऊर्द्ध चिता उच्चा, उपलिप्ततलाद्युपलक्षणमेतत्, यद्वा शीतातपनिवारकत्वादिगुणै शय्यान्तरोपरिस्थितत्वेनोच्चा, तद्विपरीतास्त्ववचा, अनयोर्द्वन्द्वे उच्चावचा, नानाप्रकारा वोच्चावचास्ताभि 'शय्याभि' वसतिभि 'तपस्वी' प्रशस्ततपोऽन्वितो, भिक्षु प्राग्वत्, 'स्थामवान्' शीतातपादिसहन प्रति सामर्थ्यवान् 'नातिवेल' स्वाध्यायादिवेलातिक्रमेण 'विहन्यात्' हनेर्गतावपि वृत्तेरत्राह शीतादिभिरभिभूत इति स्थानान्तरं गच्छेत्, यद्वा 'अतिवेलाम्'

१ ग्रामात् गावो हृता, तेनावकाशेन नीता, याव मार्गयमाणा हृतगवेषका आगता, यावत्साधुर्दृष्ट, तत्र द्वौ पन्थानौ, पश्चात्ते न जानन्ति–कतरेण मार्गेण नीता, ते साधु पृच्छन्ति–कतरेण मार्गेण नीता ?, तदा स भगवान् न व्याहरति, तै रुष्टैर्न व्याहरतीतिकृत्वा तस्य शीर्षे मृत्तिकया पालीं बद्ध्वा चितागतानङ्गारान् गृहीत्वा (ते) शीर्षे क्षिप्ता, गताश्च, स भगवान् सम्यक् सहते

दिण्णं, केऽवि भणंति–वियडं चेव अयाणंताण दिण्णं, तेहिवि य तं विसेसं अयाणमाणेहिं पीयं, पच्छा वियडत्ता जाया, ते चिंतेंति–अम्हेहिं अजुत्तं कयं, पमाओ एस, वरं भत्तं पचक्खायंति ते एगाए णदीए तीरे तीसे कट्ठाण उवरिं पाओवगया, तत्थ अकाले वरिसं जायं, पूरो य आगतो, हरिया, वुज्झमाणा य उदएण समुद्दं णीया। तेहिं संमं अहियासियं, अहाउयं पालियं, सेज्जापरीसहो अहियासितो समविसमाहिं सेज्जाहिं। एवं एसो अहियासियव्वोत्ति ॥ शय्यास्थितस्य तदुपद्रवेऽप्युदासीनस्य तथाविधशय्यातरोऽन्यो वा कश्चिदाक्रोशेदतस्तत्परीषहमाह—

अक्कोसेज्ज परो भिक्खुं, न तेसिं पड़ संजले। सरिसो होई बालाणं, तम्हा भिक्खू न संजले ॥२४॥(सूत्रम्)

व्याख्या—'अक्कोसेज्ज' त्ति आक्रोशेत्–तिरस्कुर्यात् 'परः' अन्यो धर्मापेक्षया धर्मबाह्य आत्मव्यतिरिक्तो वा 'भिक्षुं' यतिं, यथा धिग्मुण्ड! किमिह त्वमागतोऽसीति ?, 'न तेसिं' ति सुपो वचनस्य च व्यत्ययात्र तस्मै 'प्रतिसञ्ज्वलेत्' निर्यातने प्रतिभूतश्चाक्रोशदानतः सञ्ज्वलते, तन्निर्यातनार्थं देहदाहलौहित्यप्रत्याक्रोशाभिघातादिभिरग्नि-

१ दत्तं, केचिद्भणन्ति–विकटमेव अजानानाभ्यां दत्तं, ताभ्यामपि च तद्विशेषमजानानाभ्यां पीतं, पश्चाद्विकटात्तौ जातौ, तौ चिन्तयतः—आवाभ्यामयुक्तं कृतं, प्रमाद एषः, वरं भक्तं प्रत्याख्यातमिति तावेकस्या नद्यास्तीरे तस्याः काष्ठानामुपरि पादपोपगतौ, तत्राकाले वर्षा जाता, पूरश्चागतः, हृतौ उह्यमानौ चोदकेन समुद्रं नीतौ । ताभ्यां सम्यगध्यासितं, यथायुष्कं पालितं, शय्यापरीषहोऽध्यासितः समविषमाभिः शय्याभिः, एवमेषोऽध्यासितव्य इति।

पेक्षया तु कतिपया रात्रय , दिवसोपलक्षण च रात्रिग्रहणमिति सूत्रार्थं ॥२३॥ अत्र निर्वेदद्वारम्, इह च 'अदुव पावग' ति सूत्रावयवमर्थत स्पृशन् उदाहरणमाह निर्युक्तिकार —

कोसंबी जण्णदत्तो सोमदत्तो य सोमदेवो य । आयरिय सोमभूई दुण्हपि य होइ णायव्व ॥१०८॥
सन्नाइगमण वियडवेरग्गा दोवि ते नईतीरे । पाओवगया नईपूरएण उदहिं तु उवणीया ॥ १०९ ॥

व्याख्या—कौशाम्बी यज्ञदत्त सोमदत्तश्च सोमदेवश्च आचार्य सोमभूतिर्द्वयोरपि च भवति ज्ञातव्य , सज्ञातिगमन विकटवैराग्यात् द्वावपि तौ नदीतीरे पादपोपगतौ नदीपूरकेणोदधि तूपनीतौ इति गाथाद्वयाक्षरार्थ ॥ १०८–१०९ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेय , स चायम्—

कोसंबीए णयरीए जण्णदत्तो धिज्जाइओ, तस्स दो पुत्ता–सोमदत्तो सोमदेवो य, ते दोऽवि निव्विण्णकामभोगा पव्वतिया सोमभूई अणगारस्स अंतिए, बहुस्सुया बहुआगमा य जाया, ते अनया य सनायपल्लिमागया, तेसिं मायापियरो उज्जेणिं गतेल्लिया, तहिं च विसए धिज्जाइणो वियड आवियंति, तेहिं तेसिं वियड अन्नेण दव्वेण मेलेऊण

१ कौशाम्ब्या नगर्यां यज्ञदत्तो धिग्जातीय , तस्य द्वौ पुत्रौ–सोमदत्त सोमदेवश्च, तौ द्वावपि निर्विण्णकामभोगौ प्रव्रजितौ सोमभूतेरनगारस्य अन्तिके, बहुश्रुतौ बह्वागमौ च जातौ, तौ अन्यदा च सज्ञातपल्लीमागतौ, तयोर्मातापितरावुज्जयिनीं गतौ, तत्र च विषये धिग्जातीया विकटमापिबन्ति, ताभ्यां विकटमन्येन द्रव्येण मेलयित्वा

'जो सहइ हु गामकंटए अक्कोसपहारतज्जणाओ य' त्ति इत्यागमं परिभावयन् 'उपेक्षेत' अवधीरयेत्, प्रक्रमात्परुपभाषा एव, कथमित्याह—न ता मनसि कुर्यात्, तद्वापिणि द्वेषाकरणेनेति भाव इति सूत्रार्थः ॥ २५ ॥ इदानीं मुद्गरद्वारं व्याचिख्यासुः 'सुचा ण'न्ति सूत्रसूचितमुदाहरणमाह—

रायगिहि मालगारो अज्जुणओ तस्स भज्ज खंदसिरी। मुग्गरपाणी गोट्ठी सुदंसणो वंदओ णीइ ॥ ११० ॥

व्याख्या—राजगृहे मालाकारोऽर्जुनकस्तस्य भार्या स्कन्दश्रीः मुद्गरपाणिर्यक्षो गोष्ठी सुदर्शनो वन्दको 'निरेति'—वन्दनार्थं निर्गच्छतीति गाथाक्षरार्थः ॥ ११० ॥ भावार्थस्तु सम्प्रदायादवगम्यः, स चायम्—

रायगिहे णयरे अज्जुणगो नाम मालागारो परिवसति, तस्स भज्जा खंदसिरी णामा, तस्स रायगिहस्स णयरस्स बहिया मोग्गरपाणी नाम जक्खे अज्जुणगस्स कुलदेवयं, तस्स मालागारस्स आरामस्स पन्थे चेव जक्खो। अन्नया खंदसिरी भत्तं तस्स भत्तारस्स णेउं गया, अग्गाइं पुप्फाइं घेत्तुं घरं गच्छति, मोग्गरपाणिघरए य ठ्ठियाए दुल्ललि-

१ यः सहते ग्रामकण्टकान् आक्रोशप्रहारान् तर्जनाश्च। २ राजगृहे नगरे अर्जुनो नाम मालाकारः परिवसति, तस्य भार्या स्कन्दश्रीर्नाम्नी, तस्माद्राजगृहान्नगराद्बहिर्मुद्गरपाणिर्नाम यक्षः अर्जुनस्य कुलदेवता, तस्य मालाकारस्य आरामस्य पथि चैव यक्षः। अन्यदा स्कन्दश्रीः भक्तं तस्मै भर्त्रे नेतुं गता, अग्राणि पुष्पाणि गृहीत्वा गृहं गच्छति, मुद्गरपाणिगृहे च स्थितायां दुर्ललितायां

दीप्येत, सञ्ज्वलनकोपमपि न कुर्यादिति सञ्ज्वलेदित्युपादानं, किमेवमुपदिश्यत इत्याह–'सदृश' समानो भवति, भवेत्ति प्रक्रमः, केषां ?–'बालानाम्' अज्ञानां, तथाविधक्षपकवत्, यथा–कश्चित् क्षपको देवतया गुणैरावर्जितया सततमभिवन्द्यते, उच्यते च–मम कार्यमावेदनीयम्, अन्यदैकेन धिग्जातिना सह योद्धुमारब्ध, तेन च बलवता भग्नशरीरो भुवि पातितः ताडितश्च, रात्रौ देवता वन्दितुमायाता, क्षपकस्तूष्णीमास्ते, ततश्चासौ देवतयाऽभिहितो–भगवन् ! किं मयाऽपराद्धं ?, स प्राह–न तस्य त्वया दुरात्मनो ममापकारिणः किञ्चित्कृतं, सा चावादीत्–न मया विशेषः कोऽप्युपलब्धो यथाऽयं श्रमणोऽयं च धिग्जातिरिति, यतः कोपाविष्टौ द्वावपि समानौ सम्पन्नाविति, ततः सम्यक् मती प्रेरणेति प्रतिपन्नं क्षपकेणेति। उक्तमेवार्थं निगमयितुमाह–'तम्ह' त्ति यस्मात्सदृशो भवति बालानां तस्मा-द्भिक्षुर्न सञ्ज्वलेदिति सूत्रार्थः ॥ २४ ॥ कृत्योपदेशमाह–

सोच्चा ण फरुसा भासा, दारुणे गामकटए। तुसिणीओ उवेक्खिज्जा, ण ताओ मणसी करे ॥२५॥(सूत्रम्)

व्याख्या—'श्रुत्वा' आकर्ण्य, णमिति वाक्यालङ्कारे 'परुषा' कर्कशा 'भाषा' गिरो दारयन्ति मन्दसत्त्वानां संयमविषयां धृतिमिति दारुणास्ताः, ग्रामः–इन्द्रियग्रामस्तस्य कण्टका इव ग्रामकण्टकाः–प्रतिकूलशब्दादयः, कण्टकत्वं चैषां दुःखोत्पादकत्वेन मुक्तिमार्गप्रवृत्तिविघ्नहेतुतया च, तदेकदेशत्वेन परुषभाषा अपि तथोक्ताः, भाषाविशेषणत्वेऽपि चाऽऽविष्टलिङ्गत्वात्पुंलिङ्गता, 'तूष्णीकः' तूष्णीशीलो न कोपात् प्रतिपरुषभाषी, एवंविधश्च

ंमालागारस्स सरीरमणुपविट्ठो, तडतडस्स वंधे छेत्तूण लोहमयं पलसहस्सनिप्फन्नं मोग्गरं गहाय अण्णाइट्ठो समाणो ते छप्पि इत्थिसत्तमे पुरिसे घाएति, एवं दिणे दिणे छ इत्थिसत्तमे पुरिसे घाएमाणे विहरइ, जणवतोऽवि रायगिहातो णगरातो ण ताव णिग्गच्छइ जाव सत्त घातियाइं। तेणं कालेणं तेणं समएणं भगवं महावीरे समोसरिए, जाव सुदंसणो सेट्ठी वंदतो णीइ, अज्जुणएण दिट्ठो, सागारपडिमं ठिओ, न तरइ अक्कमिउं, परिपेरंतेहि भमित्ता परिसंतो, अज्जुणतो सुदंसणं अणमिसाए दिट्ठीए अवलोएइ, जक्खोऽवि मोग्गरं गहाय पडिगओ, पडितो अज्जुणतो, उट्ठिओ य तं पुच्छइ—कहिं गच्छसि ?, भणइ—सामिं वंदिउं, सोऽवि गतो, धम्मं सोच्चा पव्वतितो। रायगिहे

१ मालाकारस्य शरीरमनुप्रविष्टः, त्रटत्रटदितिवन्धान् छित्त्वा लोहमयं सहस्रपलनिष्पन्नं मुद्गरं गृहीत्वा अन्याविष्टः ( परायत्तः ) सन् तान् षडपि स्त्रीसप्तमान् पुरुषान् घातयति, एवं दिने दिने षट् स्त्रीसप्तमान् पुरुषान् घातयन् विचरति, जनपदोऽपि राजगृहात् नगरान्न तावन्निर्गच्छति यावत्सप्त घातितानि। तस्मिन् काले तस्मिन् समये भगवान् महावीरः समवसृतः, यावत् सुदर्शनः श्रेष्ठी वन्दको निरेति, अर्जुनेन दृष्टः, साकारप्रतिमां स्थितः, न शक्नोत्याक्रमितुं, परिपर्यन्तेषु भ्रान्त्वा परिश्रान्तः, अर्जुनः सुदर्शनमनिमेषया दृष्ट्या अवलोकयति, यक्षोऽपि मुद्गर गृहीत्वा प्रतिगतः, पतितोऽर्जुनः, उत्थितश्च तं पृच्छति—क्व गच्छसि ?, भणति स्वामिनं वन्दितुं, सोऽपि गतः, धर्म श्रुत्वा प्रव्रजितः, राजगृहे

याए गोट्ठीएहिं छहिं जणेहि दिट्ठा, ते भणति—एसा अज्जुणमालागारस्स भज्जाऽपडिरूवा, गिण्हामो ण, तेहिं सा गहिया, छवि जणा तस्स जक्खस्स पुरतो भोगे भुजंति, सोऽवि मालागारो णिचकालमेव अग्गेहि वरेहि पुप्फेहिं जक्ख अचेइ, अचिउकामो ततो आगच्छइ, ताए ते भणिया—एसो मालागारो आगच्छति तो तुब्भे मए कि विसज्जेहिह ?, तेहि णाय—एयाए पिय, तेहि भणिय—मालागार बधामो, तेहिं सो वद्धो अवहोडेण, जक्खस्स पुरतो वधिऊण पुरतो चेव से भारिय भुजति, सा य तस्स भत्तारस्स मोहुप्पाइयाइ इत्थिसद्दाइ करेइ, पच्छा सो मालागारो चिंतेति—एय अह जक्ख णिघकालमेव अग्गेहि वरेहि पुप्फेहि अचेमि, तहावि अह एयस्स पुरतो चेव एव कीरामि, जइ एत्थ कोइ जक्खो होंतो तो अह न कीरंतो, एव सुवत्त एय कट्ठ णत्थि एत्थ कोइ मोग्गरपाणी जक्खो, ताहे सो जक्खो अणुकपंतो

---

१ गोष्ठीकै षड्भिर्जनैर्दृष्टा, ते भणन्ति—एषाऽर्जुनमालाकारस्य भार्याऽप्रतिरूपा, गृह्णीम एता, तै सा गृहीता, षडपि जनास्तस्य यक्षस्य पुरतो भोगान् भुञ्जन्ति, सोऽपि मालाकारो नित्यकालमेवाग्र्यैर्वरै पुष्पैर्यक्षमर्चयति, अर्चितुकामस्तत आगच्छति, तया ते भणिता—एष मालाकार आगच्छति तत् यूय मा किं विसृजत, तैर्ज्ञातम्—एतस्या प्रिय, तैर्भणित—मालाकार बध्नीम , तै स बद्धोऽवखोटकेन, यक्षस्य पुरतो बद्ध्वा पुरत एव तस्य भार्या भुञ्जन्ति, सा च तस्य भर्तुर्मोहोत्पादकानि स्त्रीशब्दानि करोति, पश्चात् स मालाकारश्चिन्तयति—एनमह यक्ष नित्यकालमेव अग्र्यैर्वरै पुष्पैरर्चयामि, तथाप्यहमेतस्य पुरत एवैव क्षाम्यामि, यद्यत्र कोऽपि यक्षोऽभविष्यत्तदाऽह नाक्षमिष्यम् , एव सुव्यक्तमेतत् काष्ठ, नास्त्यत्र कोऽपि मुद्गरपाणिर्यक्ष , तदा स यक्षोऽनुकम्पयन्

व्याख्या—'समणं' श्रमणं सममनसं वा—तथाविधवधेऽपि धर्मं प्रति प्रहितचेतसं, श्रमणश्च शाक्यादिरपि स्यादित्याह—'संयतं' पृथ्व्यादिव्यापादननिवृत्तं, सोऽपि कदाचिल्लाभादिनिमित्तं वाह्यवृत्त्यैव सम्भवेदत आह—'दान्तम्' इन्द्रियनोइन्द्रियदमेन 'हन्यात्' ताडयेत्, 'कोऽपि' इति तथाविधोऽनार्यः 'कुत्रापि' ग्रामादौ, तत्र किं विधेयमित्याह—नास्ति 'जीवस्य' आत्मन उपयोगरूपस्य 'नाशः' अभावः, तत्पर्यायविनाशरूपत्वेन हिंसाया अपि तत्र तत्राभिधानाद्, 'इती'त्यस्माद्धेतोः न 'त'मिति घातकं प्रेक्षेत असाधुमर्हति यत्प्रेक्षणं भ्रुकुटिभङ्गादियुक्तं तदसाधुवत्, किन्तु रिपुजयं प्रति सहायोऽयमितिधिया साधुवदेव प्रेक्षेतेति भावः, अथवा अपेर्गम्यमानत्वान्न तं प्रेक्षेतापि असाधुना तुल्यं वर्त्तते इति असाधुवत्, किं पुनरपकारायोपतिष्ठेत् संक्लिश्नाति वा ?, असाधुर्हि सत्यां शक्तौ प्रत्यपकारायोपतिष्ठते असत्यां तु विकृतया दृशा पश्यति सङ्क्लेशं वा कुरुत इत्येवमभिधानं, पठ्यते च—'न य पेहे असाधुयं' ति चकारस्यापिशब्दार्थस्य भिन्नक्रमत्वात् प्रेक्षेतापि न—चिन्तयेदपि न, काम् ?—'असाधुतां' तदुपरि द्रोहस्वभावतां, पठन्ति च—'एवं पेहिज्ज संजतो' इति सूत्रार्थः ॥ २७ ॥ अधुना वणेत्ति द्वारं, तत्र 'हतो न सञ्ज्वलेदि' त्यादि सूत्रमर्थतः स्पृशन्नुदाहरणमाह—

सावत्थी जियसत्तू धारणि देवी य खंदओ पुत्तो । धूआ पुरंदरजसा दत्ता सा दंडईरण्णो ॥ १११ ॥
मुणिसुव्वयंतेवासी खंदगपमुहा य कुंभकारकडे । देवी पुरंदरजसा दंडइ पालग मरूए य ॥ ११२ ॥

भिक्खु हिंडतो सयणमारगोत्ति लोएण अक्कोसिज्जइ णाणापगारेहिं अक्कोसेहि, सो सम्म सहइ, सहतस्स केवल-णाण समुप्पण्ण ॥ एवमन्यैरपि साधुभि आक्रोशपरीषह सोढव्य ॥ कश्चिदाक्रोशमात्रेणातुष्यन्नधमाधमो वधमपि विदध्यादिति वधपरीषहमाह—

हओ ण सजले भिक्खू, मणपि णो पउस्सए। तितिक्ख परम णच्चा, भिक्खुधम्ममि चितए ॥२६॥(सूत्रम्)

व्याख्या—'हत' यष्ट्यादिभि ताडितो 'न सञ्ज्वलेत्' कायत कम्पनप्रत्याहननादिना वचनतश्च प्रत्याक्रोशदानादिना भृश ज्वलन्तमिवात्मान नोपदर्शयेत्, भिक्षु 'मन' चित्त तदपि 'न प्रदूषयेत्' न कोपतो विकृत कुर्वीत, किन्तु 'तितिक्षा' क्षमा–'धर्मस्य दया मूल न चाक्षमावान् दया समाधत्ते। तस्माद्य क्षान्तिपर स साधयत्युत्तम धर्मम् ॥ १ ॥' इत्यादिवचनत 'परमा' धर्मसाधन प्रति प्रकर्षवती 'ज्ञात्वा' अवगम्य 'भिक्षुधर्मे' यतिधर्मे, यद्वा भिक्षुधर्म क्षान्त्यादिक वस्तुस्वरूप वा चिन्तयेत्, यथा–क्षमामूल एव मुनिधर्म, अय चास्मन्निमित्त कर्मोपचिनोति, अस-द्दोष एवायम्, अतो नेम प्रति कोप उचित इति सूत्रार्थ ॥ २६ ॥ अमुमेव प्रकारान्तरेणाह—

समण सजय दत, हणिज्जा कोऽवि कत्थवि। नत्थि जीवस्स नासुत्ति, ण त पेहे असाहुव ॥२७॥(सूत्रम्)

---

१ भिक्षा हिण्डमान स्वजनमारक इति लोकेनाक्रोश्यते नानाप्रकारैराक्रोशै स सम्यक् सहते, सहमानस्य केवलज्ञान समुत्पन्नम्।

अन्नया सो पालकमरुतो दूयत्ताए आगतो सावत्थिं नयरिं, अत्थाणिमज्झे साहूणं अवण्णं वयमाणो खंदएणं निप्पिट्ठपसिणवागरणो कतो, पतोसमावण्णो, तप्पभिइं चेव खंदगस्स छिद्दाणि चारपुरिसेहिं मग्गाविंतो विहरइ, जाव खंदगो पंचजणसएहिं कुमारोलग्गएहिं सद्धिं मुणिसुव्वयसामिसगासे पव्वतितो, बहुसुतो जातो, ताणि चेव से पंच सयाणि सीसत्ताए अणुण्णायाणि । अन्नया खंदओ सामिमापुच्छइ—वच्चामि भगिणीसगासं, सामिणा भणियं—उवसग्गो मारणंतितो, भणइ—आराहगा विराहगा वा ?, सामिणा भणियं—सव्वे आराहगा तुमं मोत्तुं, सो भणइ—लट्ठं, जदि एत्तिया आराहगा, गओ कुंभकारकडं, मरुएण जहिं उज्जाणे ठिओ तहिं आउहाणि णूमियाणि, राया वुग्गाहिओ—जहा एस कुमारो परीसहपराइतो एएण उवाएण तुमं मारित्ता रज्जं गिण्हिहित्ति, जदि ते विपच्चतो

---

१ अन्यदा स पालको ब्राह्मणो दूततायै आगतः श्रावस्ती नगरीम्, आस्थानिकामध्ये साधूनामवर्ण वदन् स्कन्दकेन निष्पृष्टप्रश्नव्याकरणः कृतः, प्रद्वेषमापन्नः, तत्प्रभृत्येव स्कन्दकस्य छिद्राणि चारपुरुषैर्मार्गयन् विहरति, यावत्स्कन्दकः पञ्चभिर्जनशतैः कुमारावलगकैः सार्धं मुनिसुव्रतस्वामिसकाशे प्रव्रजितः, बहुश्रुतो जातः, तान्येव पञ्च शतानि तस्मै शिष्यतयाऽनुज्ञातानि । अन्यदा स्कन्दकः स्वामिनमापृच्छति—व्रजामि भगिनीसकाशं, स्वामिना भणितम्—उपसर्गो मारणान्तिकः, भणति—आराधका विराधका वा ?, स्वामिना भणितं—सर्वे आराधकास्त्वां मुक्त्वा, स भणति—लष्टं, यद्येतावन्त आराधकाः, गतः कुम्भकारकटं, मरुकेण यत्रोद्याने स्थितः तत्रायुधानि गोपितानि, राजा व्युद्ग्राहितः—यथैष कुमारः परीषहपराजित एतेनोपायेन त्वां मारयित्वा राज्यं ग्रहीष्यतीति, यदि तव विप्रत्ययः

पंचसया जतेण वहिआ उ पुरोहिएण रुट्ठेण । रागद्दोसतुलग्ग समकरण चितयतेहि ॥ ११३ ॥

व्याख्या—श्रावस्ती जितशत्रुर्धारिणी देवी च स्कन्दक पुत्रो दुहिता पुरन्दरयशा दत्ता सा दण्डकिराजाय, मुनिसुव्रतान्तेवासिन स्कन्दकप्रमुखाश्च कुम्भकारकटे देवी पुरन्दरयशा दण्डकि पालक मरुकश्च पञ्च शतानि यन्त्रेण घातितानि तु पूरणे पुरोहितेन रुष्टेन पालकेन रागद्वेषयोस्तुलाग्रमिव–तदनभिभाव्यत्वेन रागद्वेषतुलाग्र 'समकरण' माध्यस्थ्यपरिणाम भावयद्भि , स्वकार्य साधितमिति शेष , इति गाथात्रयाक्षरार्थ ॥१११–११२–११३॥ भावार्थस्तु सम्प्रदायादवसेय , स चायम्—

सावत्थीए नयरीए जियसत्तू राया, धारिणी देवी, तीसे पुत्तो खदओ णाम कुमारो, तस्स भगिणी पुरदरजसा, सा कुभकारकडे नयरे दडगी नाम राया तस्स दिन्ना, तस्स य दडकिस्स रण्णो पालगो णाम मरुतो पुरोहितो । अन्नया सावत्थीए मुणिसुव्वयसामी तित्थयरो समोसरिओ, परिसा निग्गया, खदतोऽवि निग्गतो, धम्म सोचा सावगो जाओ ।

---

१ श्रावस्त्या नगर्यां जितशत्रू राजा, धारिणी देवी, तस्या पुत्र स्कन्दको नाम कुमार , तस्य भगिनी पुरन्दरयशा , सा कुम्भकारकटे नगरे दण्डकी नाम राजा तस्मै दत्ता, तस्य च दण्डकिनो राज्ञ पालको नाम ब्राह्मण पुरोहित । अन्यदा श्रावस्त्या मुनिसुव्रतस्वामी तीर्थकर समवसृत , पर्षन्निर्गता, स्कन्दकोऽपि निर्गत , धर्म श्रुत्वा श्रावको जात ।

वंहपरीसहो अहियासितो सम्मं, एवं अहियासेयव्वं, ण जहा खंधएण णाहियासियं ॥ परैरभिहतस्य च तथाविधौ-पधादि ग्रासादि च सदोपयोगि यतेर्याचितमेव भवतीति याञ्चापरीषहमाह—

दुक्करं खलु भो ! णिच्चं, अणगारस्स भिक्खुणो । सव्वं से जाइयं होइ, नत्थि किंचि अजाइयं ॥२८॥ (सूत्रम्)

व्याख्या—दुःखेन क्रियत इति दुष्करं–दुरनुष्ठानं, खलुर्विशेषणे निरुपकारिण इति विशेषं द्योतयति, 'भो' इत्यामन्त्रणे 'नित्यं' सर्वकालं, यावज्जीवमित्यर्थः, अनगारस्य भिक्षोरिति च प्राग्वत्, किं तत् दुष्करमित्याह–यत् 'सर्वम्' आहारोपकरणादि 'से' तस्य याचितं भवति, नास्ति 'किञ्चिद्' दन्तशोधनाद्यपि अयाचितं, ततः सर्वस्यापि वस्तुनो याचनमिति गम्यमानेन विशेष्येण दुष्करमित्यस्य सम्बन्ध इति सूत्रार्थः ॥ २८ ॥ ततश्च—

गोयरग्गपविट्ठस्स, हत्थे नो सुप्पसारए । सेओ अगारवासोत्ति, इइ भिक्खू न चिंतए ॥२९॥ (सूत्रम्)

व्याख्या—गोरिव चरणं गोचरो, यथाऽसौ परिचितापरिचितविशेषमपहायैव प्रवर्त्तते तथा साधुरपि भिक्षार्थं, तस्याग्र्यं–प्रधानं यतोऽसौ एषणायुक्तो गृह्णाति न पुनर्गौरिव यथा कथञ्चित्, तस्मिन् प्रविष्टो गोचराग्रप्रविष्टः तस्य, 'पाणिः' हस्तो 'नो' नैव सुखेन प्रसार्यते पिण्डादिग्रहणार्थं प्रवर्त्त्येत इति सुप्रसारः स एव सुप्रसारकः, कथं हि नि-

१ वंधपरीषहोऽध्यासितः सम्यक्, एवमध्यासितव्यं, न यथा स्कन्दकेन नाध्यासितम् ।

उज्जाण पलोएहिं, आउहाणि ओल्इयाणि दिट्ठाणि, ते वधिऊण तस्स चेव पुरोहियस्स समप्पिया, तेण सवे पुरिसजतेण पीलिया, तेहिं सम्म अहियासिय, तेसि केवलणाण उप्पण्ण सिद्धा य। खदतोऽवि पासे धरिओ, लोहियचिरिकाहिँ भरिज्जतो सवतो पच्छा जते पीलितो णिदाण काऊण अग्गिकुमारेसु उववण्णो। तपि से रयहरण रुहिरलित्त पुरिसहत्थोत्ति काउ गिद्धेहि पुरदरजसाते पुरतो पाडिय, सावि तद्दिवस अधिति करेइ जहा साधू ण दीसति, त च णाए दिट्ठ, पच्चभिन्नाओ य कंबलो, णिसिज्जातो छिण्णातो, ताए चेव दिण्णो, ताए नाय–जहा ते मारिया, ताए खिसितो राया–पाव! विणट्ठोऽसि,ताए चितिय–पव्वयामि, देवेहिँ मुणिसुव्वयसगास नीया, तेणवि देवेण णगर दड्ढ सजणवय, अज्जवि दडगारण्णति भण्णइ। अरण्णस्स य वणाख्या भवति, तेन द्वारगाथाया वनमित्युक्तम्। एत्थ तेहिं साहूहिं

१ उद्यान प्रलोक्य, आयुधान्यवलगितानि ( गोपितानि ) दृष्टानि, ते बध्ध्वा तस्मायेव पुरोहिताय समर्पिता, तेन सर्वे पुरुषयन्त्रेण पीलिता, तै सम्यगध्यासित, तेषा केवलज्ञानमुत्पन्न सिद्धाश्च। स्कन्दकोऽपि पार्श्वे धृत, रुधिरच्छटाभिर्भ्रियमाण सर्वत पश्चात् यन्त्रे पीलितो निदान कृत्वाऽग्निकुमारेषूत्पन्न। तदपि तस्य रजोहरण रुधिरलिप्त पुरुषहस्त इतिकृत्वा गृध्रै पुरन्दरयशस पुरत पातित, साऽपि तद्दिवसेऽधृतिं करोति यथा साधवो न दृश्यन्ते, तच्चानया दृष्ट, प्रत्यभिज्ञातश्च कम्बल, निषद्याश्छिन्ना, तयैव दत्त, तया ज्ञात यथा ते मारिता, तया खिंसितो राजा–पाप! विनष्टोऽसि, तया चिन्तित–प्रव्रजामि, देवैर्मुनिसुव्रतसकाश नीता, तेनापि देवेन नगर दग्ध सजनव्रजम् अद्यापि दण्डकारण्यमिति भण्यते। अरण्यस्य च वनाख्या भवति। अत्र तै साधुभि

भमंतस्स बहुओ जणो तस्स रूवेणावक्खित्तो ण किंचि अन्नं जाणइ, तच्चित्तो चेव चिट्ठइ, तेण सो न हिंडइ गामागरादि, जहागयपहियाहिंतो चेव भिक्खं जायतित्ति, एस जायणापरीसहो पसत्थो ॥ एवं शेपसाधुभिरपि याच्ञापरीपहः सोढव्यः ॥ याच्ञाप्रवृत्तश्च कदाचिल्लाभान्तरायदोपतो न लभेतापीत्यलाभपरीपहमाह—

परेसु गासमेसिज्जा, भोयणे परिणिट्ठिए। लद्धे पिंडे आहरिज्जा, अलद्धे[2] नाणुतप्पए ॥३०॥ (सूत्रम्)

व्याख्या—'परेसु' इति गृहस्थेपु 'ग्रासं' कवलम्, अनेन च मधुकरवृत्तिमाह, 'एपयेद्' गवेषयेत्, भुज्यत इति भोजनम्—ओदनादि तस्मिन् 'परिनिष्ठिते' सिद्धे, मा भूत्प्रथमगमनात्तदर्थं पाकादिप्रवृत्तिः, ततश्च 'लब्धे' गृहिभ्यः प्राप्ते 'पिण्डे' आहारे 'अलब्धे वा' अप्राप्ते वा नानुतप्येत संयतः, तद्यथा—अहो! ममाधन्यता यदहं न किञ्चिल्लभे, उपलक्षणत्वाल्लब्धे वा लब्धिमानहमिति न हृष्येत, यद्वा लब्धेऽप्यल्पेऽनिष्टे वा सम्भवत्येवानुताप इति सूत्रार्थः॥३०॥ किमु...म्बनमालम्ब्य नानुतप्येतेत्याह—

अज्जेवाहं ण लब्भामि, अवि लाभो सुए सिया। जो एवं पडिसंविक्खे, अलाभो तं न तज्जए॥३१॥(सूत्रम्)

१ भ्राम्यतो बहुर्जनस्तस्य रूपेणाक्षिप्तः न किञ्चिदन्यत् जानाति, तच्चित्तश्चैव तिष्ठति, तेन स न हिण्डते ग्रामाकरादिषु, यथागतपथिकादिभ्य एव भिक्षां याचते इति, एप याचनापरीषहः प्रशस्तः । २ अलद्धे वा नाणुतप्पेज्ज संजए (टीका)

रुपकारिणा पर प्रतिदिन प्रणयितु शक्य , उत्तरत्रेतिशब्दस्य भिन्नक्रमत्वाद् 'इती'त्यस्माद्धेतो 'श्रेयान्' अतिशयप्रशस्य 'अगारवासो' गार्हस्थ्य, तत्र हि न कश्चिद्याच्यते, स्वभुजार्जित च दीनादिभ्य सविभज्य भुज्यते, 'इती'त्येतद्भिक्षु न चिन्तयेद्, यतो गृहवासो बहुसावद्यो निरवद्यवृत्त्यर्थं च तत्परित्याग , तत स्वयपचनादिप्रवृत्तेभ्यो गृहिभ्य पिण्डादिग्रहण न्याय्यमिति भाव इति सूत्रार्थ ॥२९॥ साम्प्रत रामद्वार, तत्र 'दुक्कर खलु भो ! णिच्च' इति सूत्रमर्थत स्पृशन्नुदाहरणमाह—

जायणपरीसहम्मि बलदेवो इत्थ होइ आहरण ।

व्याख्या—याञ्चापरीषहे बलदेवोऽत्र भवत्याहरणम्–उदाहरणम् । अत्र सम्प्रदाय —

जया सो वासुदेवसव वहतो सिद्धत्थेण पडिवोहिओ कण्हस्स सरीरग सक्कारेउ कयसामातितो लिंग पडिवज्जिउ तुगीसिहरे तव तप्पमाणो माणेण–कहि भिचाण भिक्खट्ठ अल्लीस ?, तेण कट्ठाहाराईण भिक्ख गिण्हइ, न गाम नयर वा अल्लियति । तेण सो णाहियासितो जायणापरीसहो, एव न कायव्व,। अन्ने भणति–बलदेवस्स भिक्ख

१ णोऽपरत क्यम् २ यदा स वासुदेवशव वहन् सिद्धार्थेन प्रतिबोधित कृष्णस्य शरीरक सत्कार्य ( सस्कृत्य ) कृतसामायिको लिङ्ग प्रतिपद्य तुङ्गिशिखरे तप तपन् मानेन–क भृत्यान् भिक्षार्थमाश्रयिष्ये ?, तेन काष्ठाहारकादिभ्यो भिक्षा गृह्णाति, न ग्राम नगर वाऽऽश्रयते । तेन स नाध्यासितो याचनापरीषह , एव न कर्तव्यम् । अन्ये भणन्ति–बलदेवस्य भिक्षा

चउत्थे जामे वासुदेवं उट्ठवेइ, वासुदेवो तेण पिसाएण तहेव भणितो, वासुदेवो भणति—मं अणिज्जिउं कहं मम सहाए खाहिसि ?, जुद्धं लग्गं, जहा जहा जुज्झइ पिसाओ तहा तहा वासुदेवो अहो बलसंपुण्णो अयं मल्लो इति तूसए, जहा जहा तूसए तहा तहा पिसाओ परिहायति, सो तेण एवं खविओ जेण घेत्तुं उयट्टीए छूढो, पभाए पस्सए ते भिन्नजाणुकोप्परे, केणंति पुट्ठा भणंति—पिसाएण, वासुदेवो भणति—स एस कोवो पिसायरूवधारी मया पसंतयाए जितो, उयट्टिणीए णीणेऊण दरिसिओ । इति सूत्रार्थः ॥ सम्प्रति 'पुरे'तिद्वारं, 'पुरा' इति पूर्वस्मिन् काले कृतं कर्मेति गम्यते, तत्र च 'णाणुतप्पेज्ज संजएत्ति' सूत्रावयवमर्थतः स्पृशन्नुदाहरणमाह—

किसिपारासरढंढो अलाभए होइ आहरणं ॥ ११४ ॥

व्याख्या—कृषिप्रधानः पारासरः कृषिपारासरो जन्मान्तरनाम्ना 'ढण्ढ' इति ढण्ढणकुमारः 'अलाभके' अलाभपरीषहे भवत्याहरणमिति गाथापश्चार्द्धाक्षरार्थः । भावार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—

---

१ चतुर्थे यामे वासुदेवमुत्थापयति, वासुदेवस्तेन पिशाचेन तथैव भणितः, वासुदेवो भणति—मामनिर्जित्य कथं मम सहायान् भक्षयिष्यसि ?, युद्धं लग्नं, यथा यथा युध्यते पिशाचस्तथा तथा वासुदेवः अहो बलसंपन्नोऽयं मल्ल इति तुष्यति, यथा यथा तुष्यति तथा तथा पिशाचः परिहीयते, स तेनैवं क्षपितः येन गृहीत्वा कट्यां (जङ्घायां) क्षिप्तः, प्रभाते तान् भिन्नजानुकूर्पराान् पश्यति, केनेति पृष्टा भणन्ति—पिशाचेन, वासुदेवो भणति—स एष कोपः पिशाचरूपधारी मया प्रशान्ततया जितः, जङ्घाया निष्काश्य दर्शितः ।

व्याख्या—'अद्यैव' अस्मिन्नेवाह्न्यह 'न लभे' न प्राप्नोमि, 'अपि' सम्भावने, सम्भाव्यत एतत् 'लाभ' प्राप्ति 'श्व' आगामिनि दिने 'स्याद्' भवेत्, उपलक्षण श्व इत्यन्येद्युरन्यतरेद्युर्वा वा भूदित्सनाश्यामाह, य 'एवम्' उक्तप्रकारेण 'पडिसविक्खे' त्ति प्रतिसमीक्षतेऽदीनमना अलाभमाश्रित्यालोचयति, 'अलाभ' अलाभपरीषह त 'न तर्जयति' नाभिभवति, अन्यथाभूतस्त्वभिभूयत इति भाव ॥ ३१ ॥ अत्र लौकिकमुदाहरणम्—

वासुदेवबलदेवसच्चगदारुगा अस्सवहिया अडवीए नग्गोहपायवस्स अहे रत्तिं वासोवगया, जामग्गहण, दारुगस्स पढमो जामो, कोहो पिसायरूव काऊण आगतो, दारुग भणइ—आहारत्थीऽह उवागओ, एए सुत्ते भक्खयामि, युद्ध वा देहि, दारुगेण भणिय—बाढ, तेण सह सपलग्गो, दारुगो य त पिसाय जहा जहा न सक्केइ णिहणिउ तहा तहा रुस्सति, जहा जहा रुस्सइ तहा तहा सो कोहो वड्ढति, एव सो दारुगो किच्छपाणो त जामग निघाहेइ, पच्छा सच्चग उट्ठावेइ, सच्चगोऽवि तहेव पिसाएण किच्छपाणो कतो, ततिए जामे बलदेव उट्ठवेइ, एवं बलदेवोऽवि

१ वासुदेवबलदेवसत्यकदारुका अश्वापहृता अटव्या न्यग्रोधपादपस्याधो रात्रौ वासमुपागता, यामग्रहण, दारुकस्य प्रथमो याम, क्रोध पिशाचरूप धृत्वाऽऽगत, दारुक भणति—आहारार्थ्यहमुपागत, एतान् सुप्तान् भक्षयामि, युद्ध वा देहि, दारुकेण भणित—बाढ, तेन सह सप्रलग्न, दारुकश्च त पिशाच यथा यथा न शक्नोति निहन्तु तथा तथा रुष्यति, यथा यथा रुष्यति तथा तथा स क्रोधो वर्धते, एव स दारुक कृच्छ्रप्राणस्त याम निर्वहति, पश्चात्सत्यकमुत्थापयति, सत्यकोऽपि तथैव पिशाचेन कृच्छ्रप्राण कृत, तृतीये यामे बलदेवमुत्थापयति, एव बलदेवोऽपि

स्सीणं को दुक्करकारतो ?, तेहिं भणियं, जहा—ढंढो अणगारो, अलाभपरीसहो कहिओ, सो कहिं?, सामी भणइ—णगरिं पविसंतो पेच्छिहिसि, दिट्ठो पविसंतेणं, हत्थिखंधाओ ओवरिऊण वंदिओ, सो य इक्केण इब्भेण दिट्ठो, जहा महप्पा एस जो वासुदेवेण वंदितो, सो य तं चेव घरं पविट्ठो, तेण परमाए सद्धाए मोयगेहिं पडिलाभितो, भमिऊण सामिस्स दावइ पुच्छइ य—जहा मम अलाभपरीसहो खीणो ?, पच्छा सामिणा भण्णति—ण खीणो, एस वासुदेवस्स लाभो, तेण परलाभं न उवजीवामित्तिकाउं असुच्छियस्स परिट्ठवितस्स केवलणाणं समुप्पण्णं । एवं अहियासियव्वो अलाभपरीसहो जहा ढंढेण अणगारेण ॥ अलाभाचान्तप्रान्ताशिनां कदाचिद्रोगाः समुत्पद्येरन्निति रोगपरीषहमाह—

णच्चा उप्पइयं दुक्खं, वेदणाए दुहट्टिए । अदीणो ठावए पण्णं, पुट्ठो तत्थऽहियासए ॥३२॥(सूत्रम्)

व्याख्या—'ज्ञात्वा' अधिगम्य 'उत्पत्तिकम्' उद्भूतं, दुःखयति इति दुःखः प्रस्तावात् ज्वरादिरोगस्तं 'वेदनया'

---

१ को दुष्करकारकः !, तैर्भणितं यथा—ढण्ढणोऽनगारः, अलाभपरीषहः कथितः, स क ?, स्वामी भणति—नगरीं प्रविशन् प्रेक्षयिष्यसे, दृष्टः प्रविशता, हस्तिस्कन्धादवतीर्य वन्दितः, स चैकेनेभ्येन दृष्टो, यथा महात्मैष यो वासुदेवेन वन्दितः, स च तदेव गृहं प्रविष्टः, तेन परमया श्रद्धया मोदकैः प्रतिलम्भितः, भ्रान्त्वा स्वामिने दर्शयति, पृच्छति च—यथा ममालाभपरीषहः क्षीणः ?, पश्चात् स्वामिना भण्यते—न क्षीणः, एष वासुदेवस्य लाभः, तेन परलाभं नोपजीवामीतिकृत्वाऽमूर्छितस्य परिष्ठापयतः केवलज्ञानं समुत्पन्नम्। एवमध्यासितव्योऽलाभपरीषहो यथा ढण्ढेनानगारेण

[1]एगमि गामे एगो पारासरो नाम, तम्मि य अन्ने पारासरा अत्थि, सो पुण किसीए कुसलो अहवा सरीरेण किसो तेण किसिपारासरो, सो य तम्मि गामे आउत्तिय राउलिय चरिं वाहेइ, ते य गोणादी दिवस छाएल्लया भत्तवेल पडिच्छति, पच्छा ते भत्तेवि आणीए मोएउकामे भणइ—एक्केक्क हलवभ देह, तो पच्छा भुजह, तेहिं छहिवि हलसएहि वहुय वाहिय, तेण ताहि वहुय अतराइय वद्ध, मरिऊण य सो ससार भमिऊण अन्नेण सुकयविसेसेण वासुदेवस्स पुत्तो जातो ढढोत्ति, अरिट्ठनेमिसयासे पवइतो, (ग्रन्थाग्रम् ३०००) अतराय कम्म उदिन्न, फीयाए वारवईए हिंडतो न लभति, कहिचिवि जया लभति तदा ज वा त वा, तेण सामी पुच्छितो, तेहि कहिय जहावत्त, पच्छा तेण अभिग्गहो गहितो, जहा—परस्स लाभो न गिण्हियव्वो । अन्नया वासुदेवो पुच्छइ तित्थयर—एएसि अट्ठारसण्हं समणसाह-

१ एकस्मिन् ग्रामे एक पाराशरो नाम, तस्मिंश्चान्ये पाराशरा सन्ति, स पुन कृषौ कुशलोऽथवा शरीरेण कृशस्तेन कृषिपाराशर (कृशपाराशर ), स च तस्मिन् ग्रामे आयुक्तिक राजकुलिक चारिं वाहयति, ते च गवादयो दिवसे छायार्थिन भक्तवेला प्रतीच्छन्ति, पश्चात्तान् भक्तेऽपि आनीते मोक्तुकामान् भणति—एकैक हलवर्यं दत्त तत पश्चात् भुङ्क्ष्व, तै षड्भिरपि हलशतैर्बहु वाहित, तेन बहु तत्रा तरायिक बद्ध, मृत्वा च स ससार भ्रान्त्वा अन्येन सुकृतविशेषेण वासुदेवस्य पुत्रो जातो ढण्ढ इति, अरिष्टनेमिन सकाशे प्रव्रजित , अ तराय कर्मोदीर्णं, स्फीताया द्वारिकाया हिण्डमानो न लभते, कचिदपि यदा लभते तदा यद्वा तद्वा, तेन स्वामी पृष्ट , तै कथित यथावृत्त, पश्चात् तेनाभिग्रहो गृहीत , यथा—परस्य लाभो न ग्रहीतव्य । अ यदा वासुदेव पृच्छति तीर्थकरम्—एतस्यामष्टादशश्रमणसाहस्रा

भावः—यस्मात्करणादिभिः सावद्यपरिहार एव श्रामण्यं, सावद्या च प्रायश्चिकित्सा, ततस्तां नाभिनन्देद्, एतदप्यौत्सर्गिकम्, अपवादतस्तु सावद्याऽप्येपामियमनुमतैव, यदुक्तम्—"काहं अछित्तिं अदुवा अहीहं, तवोविहाणेण य उज्जमिस्सं। गणं व णीतीइ वि सारविरसं, सालंबसेवी समुवेति मोक्खं ॥ १ ॥" इति सूत्रार्थः ॥ ३३ ॥ इदानीं भिक्षेति द्वारं, तत्र च 'तिगिच्छं णाहिणंदिज्जा' इति सूत्रावयवमर्थतः स्पृशन्नुदाहरणमाह—

महुराइ कालवेसिय जंबुय अहिउत्थ मुग्गसेलपुरं। राया पडिसेहेइ जंबुयरूवेण उवसग्गं ॥ ११५ ॥

व्याख्या—मथुरायां कालवेसिको जम्बुकोऽभ्युपितो मुद्गसेलं पुरं राजा प्रतिषेधयति जम्बुकरूपेण उपसर्गमिति गाथाक्षरार्थः। भावार्थस्तु सम्प्रदायावगम्यः, स चायम्—

महुराए जियसत्तुणा रण्णा काला नाम वेसाऽपडिरूवंति काउं ओरोहे छूढा, तीसे पुत्तो कालाए कालवेसिओ कुमारो, सो तहारूवाणं थेराणं अंतिए धम्मं सोऊण पव्वतितो, एगल्लविहारपडिमं पडिवण्णो, गतो मुग्गसेलपुरं,

१ करिष्याम्यच्छित्तिमथवाऽध्येष्ये तपोवि (धानेषु) (पउप) च उद्यंस्यामि। गणं वा नीत्या अपि सारयिष्यामि, सालम्बसेवी समुपैति मोक्षम् (शुद्धिम्) ॥ १ ॥ २ मथुरायां जितशत्रुणा राज्ञा कालानाम्नी वेश्याऽप्रतिरूपेति कृत्वाऽवरोधे क्षिप्ता, तस्याः पुत्रः कालायाः कालवेशिकः कुमारः, स तथारूपाणां स्थविराणामन्तिके धर्मं श्रुत्वा प्रव्रजितः, एकाकिविहारप्रतिमां प्रतिपन्नः, गतो मुद्गशैलपुरं,

स्फोटपृष्ठग्रहाद्यनुभवरूपया दु खेनार्त्तं –पीडित क्रियते स दु खार्त्तित , एवविधोऽपि 'अदीन ' अविक्लव ' स्थापयेत् ' दु खार्तितत्वेन चलन्तीं स्थिरीकुर्यात् 'प्रज्ञा' स्वकर्म्मफलमेवैतदिति तत्त्वधिय, 'स्पृष्ट' इत्यपेर्लुप्तनिर्दिष्टत्वात् व्यासोऽपि राजमन्दादिभि , यद्वा पुष्ट इव पुष्टो व्याधिभिरविक्लवतया 'तत्रेति' प्रज्ञास्थापने सति रोगोत्पाते वा'अध्यासीत' अधिसहेत, प्रक्रमाद्रोगजनितदु खमिति सूत्रार्थ ॥ ३२ ॥ स्यादेतत्–चिकित्सया किं न तदपनोद क्रियते ? इत्याह—

तेगिच्छ नाभिनदिज्जा, सचिक्खऽत्तगवेसए। एय खु तस्स सामण्ण, ज न कुज्जा न कारवे ॥३३॥(सूत्रम्)

व्याख्या—'चिकित्सा' रोगप्रतिकाररूपा 'नाभिनन्देत्' नानुमन्येत, अनुमतिनिषेधाच्च दूरापास्ते करणकारणे, 'समीक्ष्य' स्वकर्मफलमेवैतत् भुज्यत इति पर्यालोच्य, यद्वा 'सचिक्ख'त्ति 'अचा सन्धि लोपौ बहुलमि'त्येकारलोपे ' सचिक्खे ' समाधिना तिष्ठेत, न कूजनकर्करायतादि कुर्यात्, आत्मान–चारित्रात्मान गवेषयति–मार्गयति कथमय मम स्यादित्यात्मगवेषक , किमित्येवमत आह—'एतद्' अनन्तरमभिधास्यमान 'खु'त्ति खलु, स च यस्मादर्थे , ततो यस्मादेतत् 'तस्य' श्रमणस्य ' श्रामण्य ' श्रमणभावो यन्न कुर्यान्न कारयेत्, उपलक्षणत्वान्नानुमन्येत, प्रक्रमात् चिकित्सा, जिनकल्पिकाद्यपेक्ष चैतत्, स्थविरकल्पापेक्षया तु 'ज न कुज्जा' इत्यादौ सावद्यमिति गम्यते, अयमत्र

ओस्सरिआ ताहे सद्दं करेंती खाति, जाहे आगया ताहे न दीसति, सोऽवि उवसग्गं सम्मं सहति खमति, एवं अहियासेयव्वं ॥ रोगपीडितस्य शयनादिषु दुःसहतर(ः)तृणस्पर्श इत्येतदनन्तरं तत्परीषहमाह—

अचेलगस्स लूहस्स, संजयस्स तवस्सिणो । तणेसु सुयमाणस्स, हुज्जा गायविराहणा ॥३४॥(सूत्रम्)

व्याख्या— अचेलकस्य रूक्षस्य संयतस्य तपस्विन इति प्राग्वत्, तरन्तीति तृणानि— दर्भादीनि तेषु शयानस्योपलक्षणत्वात् आसीनस्य वा भवेत् गात्रस्य—शरीरस्य विराधना—विदारणा गात्रविराधना, अचेलकत्वादीनि तु तपस्विविशेषणानि मा भूत्सचेलस्य तृणस्पर्शासम्भवेनारूक्षस्य तत्सम्भवेऽपि स्निग्धत्वेनासंयतस्य च शुषिरहरिततृणोपादानेन तथाविधगात्रविराधनाया असम्भव इति ॥ ३४ ॥ ततः किमित्याह—

आयवस्स निवाएणं, तिदुला हवइ वेयणा । एयं णच्चा न सेवंति, तंतुजं तणतज्जिया ॥३५॥(सूत्रम्)

व्याख्या—'आतपस्य' घर्मस्य नितरां पातो निपातस्तेन 'तिउल' त्ति सूत्रत्वात्तौदिका, यद्वा त्रीन्—प्रस्तावात् मनोवाक्कायान् विभापितण्यन्तत्वात् चुरादीनां दोलतीव स्वरूपचलनेन त्रिदुला, पाठान्तरस्तु—'अतुला विपुला वा' भवति वेदना, एवं च किमित्याह—'एतद्' अनन्तरोक्तं पाठान्तरतः 'एवं' ज्ञात्वा 'न सेवन्ते' न भजन्ते, आस्तर-

१ अपसृतास्तदा शब्दं कुर्वती खादति, यदा आगताः तदा न दृश्यते, सोऽप्युपसर्ग सम्यक् सहते क्षमते, एवमध्यासितव्यम् ।

तांहि तस्स भगिणी हयसत्तुस्स रण्णो महिला, तस्स साहुस्स अरसिया, ततो तीए भिक्खाए सह ओसह दिन, सो य अहिगरणंति भत्त पच्चक्खाति। तेण य कुमारत्ते सियालाण सद्द सोऊण पुच्छिया ओलग्गिया-केसि एस सद्दो सुव्वति ?, ते भणंति-एए सियाला अडविवासिणो, तेण भणति-एए बंधिऊण मम आणेह, तेहिं सियालो बंधिऊण आणितो, सो त हणइ, सो हम्मतो खिखिएइ, ततो सो रतिं विंदइ, सो सियालो हम्मतो मतो, अकामणिज्जराए वाणमंतरो जाओ, तेण वाणमंतरेण सो भत्तपच्चक्खातो दिट्ठो, ओहिणा आभोइओ, इमो सोत्ति आगंतूण सपिल्लिय सियालिं विरचिऊण खिखियतो खाइ, राया त साधु भत्तपच्चक्खाययतिकाउ रक्खावेति पुरिसेहिंति, मा कोइ से उवसग्ग करिस्सइत्ति, जाव ते पुरिसा त थाण एंति ताव तीए सीआलीए खइतो, जाहे ते पुरिसा

१ तत्र तस्य भगिनी हतशत्रो राज्ञो महिला, तस्य साधोरर्शासि, ततस्तया भिक्षया सहौषध दत्त, स चाधिकरणमिति भक्त प्रत्याख्याति। तेन च कुमारत्वे शृगालाना शब्द श्रुत्वा पृष्टा अवलगका -केषामेष शब्द श्रूयते ?, ते भणन्ति-एते शृगाला अटवीवासिन , तेन भण्यते-एतान् बद्ध्वा मम ( पार्श्वे ) आनयत, तै शृगालो बद्ध्वाऽऽनीत , स त हन्ति, स हन्यमान खिङ्खिङ्करोति, तत स रतिं विन्दति, स शृगालो हन्यमानो मृत , अकामनिर्जरया व्यन्तरो जात , तेन व्यन्तरेण स प्रत्याख्यातभक्तो दृष्टः, अवधिनाऽऽभोगित , अथ स इत्यागत्य सबालका शृगालीं विकुर्व्य (विरच्य) खिङ्खिङ्कुर्वन् खादति, राजा त साधु प्रत्याख्यातभक्त इतिकृत्वा रक्षयति पुरुषै , मा कश्चित्तस्योपसर्ग करिष्यतीति ( कार्षीदिति ), यावत्ते पुरुषास्तत् स्थानमायान्ति तावत्तया शृगाल्या खादित , यदा ते पुरुषाः

सावत्थीए नयरीए जियसत्तू रण्णो पुत्तो भद्दो नाम, सो निव्विण्णकामभोगो तहारूवाणं थेराणमंतिते पव्वतितो, कालेण य एगल्लविहारपडिमं पडिवण्णो, सो विहरंतो वेरज्जे चारिउत्तिकाऊण गहिओ, सो य पंतावेऊण खारेण तच्छिओ, सो दब्भेहिं वेढिऊण मुक्को, सो दब्भेहिं लोहियसंमीलिएहिं दुक्खाविज्जंतो सम्मं सहइ ॥ एवं शेषसाधुभिरपि सम्यक् सोढव्यः तृणस्पर्शपरीषहः ॥ तृणानि च मलिनान्यपि कानिचित् स्युरिति तत्सम्पर्कात् स्वेदतो विशेषेण जल्लसम्भव इत्यनन्तरं तत्परीषहमाह—

किलिन्नगाए पंकेणं, मेहावी व रएण वा । घिंसु वा परितावेणं, सायं नो परिदेवए ॥३६॥ (सूत्रम्)

व्याख्या—क्लिन्नमनेकार्थत्वाद्धातूनां निचितं पाठान्तरतः क्लिष्टं वा—बाधितं गात्रं—शरीरमस्येति क्लिन्नगात्रः क्लिष्टगात्रो वा, मेधावी—'वाहितो वा अरोगी वा, सिणाणं जो उ पत्थइ । वोक्कंतो होइ आयारो, जढो हवइ संजमो ॥ १ ॥' इत्यागममनुसरन् न स्नानरूपमर्यादानतिवर्ती, केन पुनः क्लिन्नगात्रः क्लिष्टगात्रो वेत्याह—'पङ्केन'

१ श्रावस्त्यां नगर्यां जितशत्रो राज्ञः पुत्रो भद्रो नाम, स निर्विण्णकामभोगः तथारूपाणां स्थविराणामन्तिके प्रव्रजितः, कालेन चैकाकिविहारप्रतिमां पतिपन्नः, स विहरन् वैराज्ये चारिक इतिकृत्वा गृहीतः, स च पीडयित्वा (पिट्टयित्वा) तक्षितः (सिक्तः) क्षारेण, स दर्भैर्वेष्टयित्वा मुक्तः, स दर्भैः रुधिरसंमिलितैर्दुःख्यमानः सम्यक् सहते । २ व्याधिमान् वाऽरोगो वा स्नानं यस्तु प्रार्थयते । व्युत्क्रान्तो भवत्याचारस्त्यक्तो भवति संयमः ॥ २ ॥

णायेति गम्यते, तन्तुभ्यो जात तन्तुज, पठ्यते च–'ततय'ति तत्र तन्त्रं–वेमविलेपन्याञ्छनिकादि तस्माज्जात तन्त्रजम्, उभयत्र वस्त्र कम्बलो वा, तृणैस्तर्जिता –निर्भर्त्सिता तृणतर्जिता, किमुक्त भवति ?–यद्यपि तृणैरत्यन्तविलिखितशरीरस्य रविकिरणसम्पर्कसमुत्पन्नस्वेदवशत क्षतक्षारनिक्षेपरूपैव पीडोपजायते तथाऽपि–'प्रदीप्ताङ्गारकल्पेषु, वज्रकुण्डेष्वसन्धिषु । कूजन्त करुण केचित्, दह्यन्ते नरकाग्निना ॥१॥ अग्निभीता प्रधावन्तो, गत्वा वैतरणीं नदीम् । शीततोयामिमा ज्ञात्वा, क्षाराम्भसि पतन्ति ते ॥ २ ॥ क्षारदग्धशरीराश्च, मृगवेगोत्थिता पुन । असिपत्रवनं यान्ति, च्छायाया कृतबुद्धय ॥ ३ ॥ शक्त्यष्टिप्रासकुन्तैश्च, खड्गतोमरपट्टिशै । छिद्यन्ते कृपणास्तत्र, पतद्भिर्वातकम्पितै ॥ ४ ॥' इत्यादिका रौद्रतरा नरकेषु परवशेन मयाऽनुभूता वेदनास्तत्कियतीय ?, भूयाश्च लाभ स्ववशस्य सम्यक् सहन इति परिभावनातो न तत्परिजिहीर्षया वस्त्र कम्बलादिकमुपाददते, जिनकल्पिकापेक्ष चैतत्, स्थविरकल्पिकाश्च सापेक्षसंयमत्वात्सेव तेऽपीति सूत्रार्थ ॥ ३५ ॥ अत्र संस्तारद्वारमनुसरन् 'तिउला हवइ वेयण'त्ति सूत्रसूचितमुदाहरणमाह—

सावत्थीइ कुमारो भद्दो सो चारिओत्ति वेरज्जे। खारेण तच्छियगो तणफासपरीसह विसहे ॥११६॥

व्याख्या—श्रावस्त्या कुमारो भद्र 'चारिक' चर इति वैराज्ये क्षारेण तक्षिताङ्ग तृणस्पर्शपरीषह 'विसहे'त्ति विषहते, सेति विशेष इति गाथार्थ ॥ ११७ ॥ भावार्थस्तु सम्प्रदायावसेय, स चायम्—

गुणो, मम तु सम्यक् सहमानस्य महान् गुण इति मत्वा न तदपनयनाय स्नानादि कुर्यात्, यतः—"न शक्यं निर्मलीकर्तुं, गात्रं स्नानशतैरपि । अश्रान्तमेव श्रोतोभिरुद्भिरन्नवभिर्मलम् ॥ १ ॥" पठ्यते च—'वेइंतो निज्जरापेहि'त्ति वेदयमानः—सहमानः, शेषं प्राग्वद्, अत्र केचिच्चतुर्थपादमधीयते, 'जलं काए ण उव्वटे'त्ति अत्रोद्वर्त्तनग्रहणमुद्वर्त्तयेदपि न, किं पुनः स्नायात् ?, यद्वा—'वेइज्ज'त्ति विद्यात्—जानीयाद्धर्ममाचारम्, अर्थाद्यतीनां, ज्ञात्वा च 'ज्ञानस्य फलं विरतिरि'ति जलं कायेन धारयेत्, तथा 'वेयंतो'त्ति विदन्—जानानोऽन्यत्तथैवेति सूत्रार्थः ॥ ३७ ॥ अत्र 'मलधारिणो'त्ति द्वारमनुसरन् 'सायं णो परिदेवए' इति सूत्रावयवमर्थतः स्पृशन्नुदाहरणमाह—

चंपाएँ सुनंदो नाम सावओ जल्लधारणदुगुंछी । कोसंबीइ दुगंधी उप्पण्णो तस्स सादिव्वं ॥ ११७ ॥

व्याख्या—चंपायां सुनन्दो नाम श्रावको जल्लधारणजुगुप्सी कौशाम्ब्यां दुर्गन्धिरुत्पन्नः, तस्य सादिव्यं—सदेवत्वमित्यक्षरार्थः ॥ ११८ ॥ भावार्थस्तु सम्प्रदायादवसेयः, स चायम्—

चंपाए नयरीए सुनन्दो नाम वाणियगो सावगो, अवण्णाए चेव जो जं मग्गेइ साहू तस्स तं चेव देइ ओसहभेसज्जाइयं सत्तुगाइयं च, सव्वभंडिओ सो, तस्स अन्नया गिम्हे सुसाहुणो जल्लपरिदिद्धंगा आवणं आगया, तेसिं

१ चम्पायां नगर्यां सुनन्दो नाम वणिक् श्रावकः, अवज्ञयैव यो यन्मार्गयति साधुस्तस्मै तदेव ददाति औपधभैपज्यादिकं सक्तुकादिकं च, सर्वभाण्डिकः सः, तस्यान्यदा ग्रीष्मे सुसाधवो जल्लपरिदिग्धाङ्गा आपणमागताः, तेषां

वा खेदार्द्रमलरूपेण 'रजसा' वा तेनैव काठिन्य गतेन पांशुना वा, भिन्नकालत्वाच्चानयोर्वा ग्रहण, 'घिंसु य' त्ति ग्रीष्मे, वाशब्दाच्छरदि वा, परि-समन्तात्ताप परितापस्तेन, हेतौ तृतीया, किमुक्त भवति ?-परितापात्प्रस्वेद प्रस्वेदाच्च पङ्करजसी तत क्लिन्नगात्रता क्लिष्टगात्रता वा भवति, एवंविधश्च किमित्याह-'सात' सुखम्, आश्रित्येति शेष 'नो परिदेवेत्' न प्रलपेत्-कथ कदा वा ममैव मलदिग्धदेहस्य सुखानुभव स्यात् ?, इति सूत्रार्थ ॥ ३६ ॥ किं तर्हि कुर्यादित्याह—

वेएज्ज निज्जरापेही, आरिय धम्मणुत्तर । जाव सरीरभेओत्ति, जल्ल काएण धारए ॥ ३७ ॥ (सूत्रम्)

व्याख्या—'वेदयेत्' सहेत, जलजनित दु खमिति प्रक्रम, कीदृश सन् इत्याह-निर्जरण निर्जरा-कर्मणामात्यन्तिक क्षयस्तामपेक्षते-कथ ममासौ स्यादित्यभिलपतीति निर्जरापेक्षी, क एव कुर्यादित्याह-आराद्धेयधर्मेभ्यो यात इत्यार्यस्त 'धर्म' श्रुतचारित्ररूप नास्त्युत्तर-प्रधानमन्यदस्मादित्यनुत्तरस्त, गम्यमानत्वात् प्रसन्नो-भावभिक्षुरित्यर्थ, सम्प्रति सामर्थ्योक्तमप्यर्थमादरख्यापनाय निगमनव्याजेन पुनराह-'जाव सरीरभेओ' त्ति सूत्रत्वात् 'यावत्' इति मर्यादाया शरीरस्य भेदो-विनाशस्त मर्यादीकृत्य, किमित्याह-'जल्ल' कठिनतापन्न मलम्, उपलक्षणत्वात् पङ्करजसी च 'कायेन' शरीरेण धारयेत्, दृश्यन्ते हि केचिदिन्द्राग्निदग्धानीव गिरिशिखराणि विच्छायकृष्णदेहा शीतोष्णवातातपादिभि॰ परिशोषितपरिदग्धोपहतशरीरा॰ रजोऽवगुण्डितमलदिग्धदेहा, अकामनिर्जरातश्च न कश्चित्तेषा

णाहियासिओ जल्लपरीसहो । एवं शेपसाधुभिर्न करणीयम् ॥ जल्लोपलिप्तश्च शुचीन् सत्क्रियमाणान् पुरस्क्रियमाणांश्चापरानुपलभ्य सत्कारपुरस्काराभ्यां स्पृहयेदतस्तत्परीपहमाह—

अभिवादण अब्भुट्ठाणं, सामी कुज्जा निमंतणं । जे ताइं पडिसेवंति, न तेसिं पीहए मुणी॥३८॥(सूत्रम्)

व्याख्या—'अभिवादनं' शिरोनमनचरणस्पर्शनादि पूर्वमभिवादये इत्यादिवचनं 'अभ्युत्थानं' ससम्भ्रममासनमोचनं 'स्वामी' राजादिः 'कुर्यात्' विदधीत 'निमन्त्रणम्' अद्य भवद्भिर्भिक्षा मदीयगृहे ग्रहीतव्येत्यादिरूपं, 'ये' इति स्वयूथ्याः परतीर्थिका वा 'तानि' अभिवादनादीनि 'प्रतिसेवन्ते' आगमनिपिद्धान्यपि भजन्ते, न तेभ्यः स्पृहयेत्—यथा सुलब्धजन्मानोऽमी य एवमेवंविधैरभिवादनादिभिः सत्क्रियन्त इति 'मुनिः' अनगार इति सूत्रार्थः ॥ ३८ ॥ किंच—

अणुक्कसाई अप्पिच्छे, अण्णाएसि अलोलुए । रसेसु नाणुगिज्झिज्जा, नाणुतप्पिज्ज पण्णवं॥३९॥(सूत्रम्)

व्याख्या—उत्कण्ठितः सत्कारादिषु शेत इत्येवं शील उत्कशायी न तथा अनुत्कशायी, यद्वा प्राकृतत्वादणुकपायी सर्वधनादित्वादिनि, कोऽर्थः ?—न सत्कारादिकमकुर्वते कुप्यति, तत्सम्पत्तौ वा नाहङ्कारवान् भवति, यत

१ नाध्यासितो जल्लपरीपहः ।

गधो जल्लस्स ताण ओसहाण गधमभिभविउ उच्छलति, तेण सुगंधदव्वभाविएण चिंतिय–सघ लट्ठ साहूण जदि-णाम जल्ल उयाट्टिता तो सुदर होंत, एव सो तस्स ठाणस्स अणालोइयपडिकतो कालगतो कोसबीए नयरीए इब्भ-कुले पुत्तत्ताए आगतो, सो निविण्णकामभोगो धम्म सोऊण पव्वतितो, तस्स त कम्ममुदिन्न, दुरभिगधो जातो, तओ जतो जतो वच्चति तओ तओ उड्डाहो, पच्छा साहूहि भणितो–तुम मा णिग्गच्छ उड्डाहो, पडिस्सए अच्छाहि, रत्तिं देवयाए सो काउस्सग्ग करेइ, पच्छा देवयाए सुगधो कतो, सो जहा नाम कोट्ठपुडाण वा अन्नेसि वा विसिट्ठ-दव्वाण जारिसो गधो तारिसो गधो जातो, पुणोऽवि उड्डाहो, पुणोऽवि देवयाराहण, साभावियगधो जातो । तेण

---

१ गन्धो जल्लस्य तेषामौषधाना गन्धमभिभूयोच्छलति, तेन सुगन्धद्रव्यभावितेन चिन्तित सर्वं लष्ट साधूना यदि नाम जल्लमुद्वर्तिष्यन्त तदा सुन्दरमभविष्यत्, एव स तस्मात् स्थानादनालोचितप्रतिक्रान्त कालगत कौशाम्ब्या नगर्यामिभ्यकुले पुत्रतया आगत, स निर्विण्णकामभोगो धर्मं श्रुत्वा प्रव्रजित, तस्य तत्कर्मोदीर्णं, दुरभिगन्धो जात, ततो यतो यतो व्रजति ततस्तत उड्डाह (अपभ्राजना), पश्चात् साधुभिर्भणित –त्व मा यासी उड्डाह, प्रतिश्रये तिष्ठ, रात्रौ देवताया स कायोत्सर्गं करोति, पश्चाद्देवतया सुगन्धीकृत, स यथा नाम कोष्ठपुटाना वा अन्येषा वा विशिष्टद्रव्याणा यादृशो गन्धस्तादृशो गन्धो जात, पुनरप्युड्डाह, पुनरपि देवताराधन, स्वाभाविक-गन्धो जात । तेन

मथुरायामिन्द्रदत्तः पुरोहितः साधुसेवकः श्रेष्ठी प्रासादविद्यापातनं पादच्छेदश्चेन्द्रकीले चस्य भिन्नक्रमत्वादिति गाथासंस्कारः ॥ ११९ ॥ एतदर्थश्च सम्प्रदायादवसेयः, स चायम्—

चिरकालपइट्ठियाए महुराए इंददत्तेणं पुरोहिएणं पासायगएणं हेट्ठेणं साधुस्स वच्चंतस्स पाओ ओलंबितो सीसे कतोत्तिकाउं, सो य सावएण सिट्ठिणा दिट्ठो, तस्सामरिसो जाओ, दिट्ठं भो! एएण पावेणं साहुस्स उवरिं पादो कतोत्ति, तेण पइण्णा कया—अवस्स मए एयस्स पादो छिंदेयव्वो, तस्स छिद्दाणि मग्गइ, अलभमानो अन्नया आयरिआण सगासे गंतूण वंदित्ता परिकहेइ, तेहिं भण्णइ—का पुच्छा ?, अहियासेयव्वो सक्कारपुरक्कारपरीसहो, तेण भणियं—मए पइण्णा कएल्लिया, आयरिएहिं भण्णइ—एयस्स पुरोहियस्स किं घरे वट्टइ ?, तेण भण्णइ—एयस्स पुरोहियस्स पासाओ कएल्लतो, तस्स पवेसणे रण्णो भत्तं करेहित्ति, तेहिं भण्णइ—जाहे राया पविसइ तं पासायं

१ चिरकालप्रतिष्ठितायां मथुरायामिन्द्रदत्तेन पुरोहितेन प्रासादगतेन अधस्तात् साधोर्गच्छतः (उपरि) पादोऽवलम्बितः, शीर्षे कृत इतिकृत्वा, स च श्रावकेण श्रेष्ठिना दृष्टः, तस्यामर्षो जातः, दृष्टं भो! एतेन पापेन साधोरुपरि पादः कृत इति, तेन प्रतिज्ञा कृता—अवश्यं मया एतस्य पादश्छेत्तव्यः, तस्य छिद्राणि मार्गयति, अलभमानोऽन्यदा आचार्याणां सकाशे गत्वा वन्दित्वा परिकथयति, तैर्भण्यते—का पृच्छा ?, अध्यासितव्यः सत्कारपुरस्कारपरीषहः, तेन भणितं—मया प्रतिज्ञा कृता, आचार्यैर्भण्यते—एतस्य पुरोहितस्य किं गृहे वर्त्तते ?, तेन भण्यते—एतेन पुरोहितेन प्रासादः कारितः, तस्य प्रवेशने राज्ञो भक्तं करिष्यतीति, तैर्भण्यते—यदा राजा प्रविशति तं प्रासादं

उक्तम्—"पलिमंथ मह वियाणिया, जावि य वंदण पूयणा इह। सुहुमे सल्ले दुरुद्धरे, इति सखाइ मुणी ण मज्जइ ॥१॥" न वा तदर्थं छद्म तत्र वा गृद्धिं विधत्ते, अत एवाल्पा—स्तोका धर्मोपकरणप्राप्तिमात्रविषयत्वेन न तु सत्कारादिकामितया महती अल्पशब्दस्याभाववादित्वेनाविद्यमाना वा इच्छा—वाञ्छा वा यस्येति अल्पेच्छ, इच्छायाश्च कषायान्तर्गतत्वेऽपि पुनरल्पत्वाभिधानं बहुतरदोषत्वोपदर्शनार्थम्, अत एव च अज्ञातो जातिश्रुतादिभि एषति—उञ्छति अर्थात् पिण्डादीत्यज्ञातैषी, कुत पुनरेवम्?, यत 'अलोलुप' सरसोदनादिषु न लाम्पट्यवान्, एवंविधोऽपि सरसाहारभोजिनोऽपरान् वीक्ष्य कदाचिदन्यथा स्यात् अत आह—सरसेषु—रसवत्स्वोदनादिषु, पाठान्तरतो—'रसेषु वा' मधुरादिषु 'नानुगृध्येत्' नाभिकाङ्क्षां कुर्वीत, रसगृद्धिवर्जनोपदेशश्च तद्गृद्धित एव वालिशानामभिवादनादिस्पृहासम्भवात्, तथा न 'तेभ्यो' रसगृद्धेभ्य स्पृहयेन्मुनि, पाठान्तरतश्च नानुतप्येत् तीर्थान्तरीयान् पत्यादिभि सत्क्रियमाणानवेक्ष्य, किमेतत्परित्यागेनाहमत्र प्रव्रजित? इति, प्रज्ञा—हेयोपादेयविवेचनात्मिका मतिस्तद्वान्, अनेन सत्कारकारिणि तोष यत्कारकारिणि च द्वेषमकुर्वताऽयं परीषहोऽध्यासितव्य इत्युक्त भवतीति सूत्रार्थ ॥ ३९ ॥ अत्र 'अङ्गविद्ये'ति द्वारमनुसरन् सूत्रोक्तमर्थं व्यतिरेकोदाहरणेन स्पष्टयन्नाह—

महुराइ इददत्तो पुरोहिओ साहुसेवओ सिट्ठी। पासायविज्जपाडण पायच्छिज्जेंदकीले य ॥ ११८ ॥

---

१ विघ्न मदं विजानीयात् याऽपि च वन्दना पूजेह। सूक्ष्म शल्य दुरुद्धरमिति सख्याय मुनिर्न माद्यति ॥ १ ॥

व्याख्या—सेशब्दो मागधप्रसिद्ध्याऽथशब्दार्थे उपन्यासे, 'नूनं' निश्चितं 'मये'ति आत्मनिर्देशः 'पूर्वं' प्राक् क्रियन्त इति कर्माणि तानि च मोहनीयादीन्यपि सम्भवन्त्यत आह—अज्ञानम्—अनवबोधस्तत्फलानि ज्ञानावरणरूपाणीत्यर्थः 'कृतानि' ज्ञाननिन्दादिभिरुपार्जितानि, यदुक्तम्—ज्ञानस्य ज्ञानिनां चैव, निन्दाप्रद्वेषमत्सरैः। उपघातैश्च विघ्नैश्च, ज्ञानघ्नं कर्म बध्यते ॥ १ ॥ 'मये'त्यभिधानं च स्वयमकृतस्योपभोगासम्भवाद्, उक्तं च—"शुभाशुभानि कर्माणि, स्वयं कुर्वन्ति देहिनः। स्वयमेवोपभुज्यन्ते, दुःखानि च सुखानि च ॥१॥" कुत एतदित्याह—येन हेतुना अहं 'नाभिजानामि' नाभिमुख्येनावबुद्ध्ये पृष्टः केनचित् स्वयमजानता जानता वा 'कण्हुई'त्ति सूत्रत्वात् कस्मिंश्चित् सूत्रादौ वस्तुनि वा, प्रगुणेऽपीत्यभिप्रायः। न हि स्वयं स्वच्छस्फटिकवदतिनिर्मलस्य प्रकाशरूपस्यात्मनोऽप्रकाशकत्वं किन्तु ज्ञानावृतिवशत एव, उक्तं हि—"तत्र ज्ञानावरणीयं नाम कर्म भवति येनास्य। तत्पञ्चविधं ज्ञानमावृतं रविरिव मेघैस्तथा ॥ १ ॥" अथवा 'से नूणं'ति सेशब्दः प्रतिवचनवाचिनोऽथशब्दस्यार्थे, स हि केनतिकिञ्चित्पर्यनुयुक्तः तथाविधविमर्शाभावेन स्वयमजानन् कुत एतन्ममाज्ञानमिति चिन्तयन् गुरुवचनमनुसृत्यात्मानमात्मनैव प्रति वक्ति, 'से' इत्यथ 'नूनं' निश्चितमेतत्, शेषं प्राग्वत्। आह—यदि पूर्वं कृतानि कर्माणि किं न तदैव वेदितानि ?, उच्यते, अथेति वक्तव्यान्तरोपन्यासे 'पश्चाद्' अबाधोत्तरकालम् 'उदीर्यन्ते' विपच्यन्ते कर्माण्यज्ञानफलानि कृतानि, अलर्कमूषिकविषविकारवत् तथाविधद्रव्यसाचिव्यादेव तेषां विपाकदानात्, ततस्तद्विघातायैव यत्नो विधेयो

तोहे तुम राय हत्थेण गहेऊण अवसारिज्जासि जहा–पासाओ पडति, ताहेऽह पासाय विज्जाए पाडिस्स, तेण तहा कय, सेट्ठिणा राया भणितो–एएण तुब्भे मारिया आसि, रुट्ठेण रण्णा पुरोहितो सावगस्स अप्पितो, तेण तस्स इदकीले पादो कतो, पच्छा छिन(नो), एव काउ ईयरो विसज्जितो। तेण णाहियासितो सक्कारपुरक्कारपरीसहो इति॥ यथा तेन श्राद्धेनासौ न सोढो न तथा विधेय, किन्तु साधुवत्सोढव्य, इह पूर्वत्र च श्रावकपरीषहाभिधानमाद्यनयचतुष्टय मतेनेति भावनीयम्, उक्त हि प्राक्–"तिण्हपि णेगमनतो परीसहो जाव उज्जसुत्तातो"त्ति, अङ्ग चात्र पादो, विद्या च प्रासादपातनविद्या ॥ साम्प्रतमनन्तरोक्तपरीषहान् जयतोऽपि कस्यचिज्ज्ञानावरणापगमात् प्रज्ञाया उत्कर्षे अपरस्य तु तदुदयादपकर्षे उत्सेकवैक्लव्यसम्भव इति प्रज्ञापरीषहमाह—

से नूण मए पुव, कम्माऽणाणफला कडा। जेणाह नाभिजाणामि, पुट्ठो केणइ कण्हुई ॥ ४० ॥

अह पच्छा उइज्जति, कम्माऽणाणफलाकडा। एवमासासि अप्पाण, णच्चा कम्मविवागय ॥४१॥ (सूत्रम्)

१ तदा त्व राजान हस्तेन गृहीत्वाऽपसारये यथा–प्रासाद पतति, तदाऽह प्रासाद विद्यया पातयिष्यामि, तेन तथा कृत, श्रेष्ठिना राजा भणित –एतेन यूय मारिता अभविष्यन्, रुष्टेन राज्ञा पुरोहित श्रावकायार्पित, तेन तस्येन्द्रकीले पाद कृत, पश्चात् छिन्न, एव कृत्वेतरो विसृष्ट। तेन नाध्यासित सत्कारपुरस्कारपरीषह इति। २ छोट्टमओ काऊण सो छिन्नो प्र० अधिकम्। ३ नयाणामपि नैगमाय परीषहो यावदृजुसूत्रान् ॥ १ ॥

व्याख्या—उज्जयणी कालक्षपणाः सागरक्षपणाः सुवर्णभूमौ इन्द्रः आयुष्कशेषं पृच्छति सादिव्यकरणं चेति गाथाक्षरार्थः ॥ १२० ॥ भावार्थस्तु सम्प्रदायात् ज्ञातव्यः, स चायम्—

उज्जेणीए कालगायरिया बहुसुया, तेसिं सीसो न कोइ इच्छइ पढिउं, तस्स सीसस्स सीसो बहुसुओ सागरखमणो णाम सुवण्णभूमीए गच्छेणं विहरइ, पच्छा आयरिआ तत्थ पलाइउं गया सुवण्णभूमिं, सो य सागरखमणो अणुओगं कहइ, पण्णापरीसहं न सहइ, भणइ—खंता ! गयं एयं तुब्भ सुयखंधं ?, तेण भण्णइ—गयंति, तो सुण, सो सुणावेउं पयत्तो । ते य सेज्जायरणिब्बंधे कहिए तस्सिस्सा सुवण्णभूमिं जतो चलिया, लोगो पुच्छति विंदं गच्छंतं—को एस आयरिओ गच्छइ ?, तेण भण्णइ—कालगा आयरिया, तं जणपरंपरएण फुसंतं कोउं सागरसमणस्स संपत्तं, जहा—कालगा आयरिआ आगच्छंति, सागरखमणो भणइ—खंतग ! सच्चं मम पितामहो आगच्छति ?, तेण

१ उज्जयिन्यां कालकाचार्या बहुश्रुताः, तेषां शिष्यो न कोऽपि इच्छति पठितुं, तस्य शिष्यस्य शिष्यो बहुश्रुतः सागरक्षपणो नाम सुवर्णभूमौ गच्छेन विहरति, पश्चादाचार्यास्तत्र पलाय्य गताः सुवर्णभूमौ, स च सागरक्षपणोऽनुयोगं कथयति, प्रज्ञापरीषहं न सहते, भणति—वृद्ध ! गत एष तव श्रुतस्कन्धः ?, तेन भण्यते—गत इति, तत शृणु, स श्रावयितुं प्रवृत्तः । ते च शय्यातरेण निर्बन्धेन कथिते तच्छिष्याः सुवर्णभूमिर्यतः(ततः)चलिताः, लोकः पृच्छति वृन्दं गच्छन्तं—क एष आचार्यो गच्छति ?, तेन भण्यते—कालकाचार्याः, तत् जनपरम्परकेण स्पृशत् कर्णयोः(वृत्तान्तं) सागरश्रमणस्य संप्राप्तं, यथा-कालकाचार्या आगच्छन्ति, सागरक्षपणो भणति—वृद्ध ! सत्यं (श्रुतं) मम पितामह आगच्छति?, तेन

न तु विषाद', 'एवम्' अमुना प्रकारेण 'आश्वासय' स्वस्थीकुरु, कम् ?—आत्मान, मा वैक्लव्य कृथा इत्यर्थ , उक्तमेव हेतु निगमयन्नाह—ज्ञात्वा कर्मविपाक, कर्मणा कुत्सितविपाकम्। इत्थ प्रज्ञाऽपकर्षमाश्रित्य सूत्रद्वय व्याख्यातम्, एतदेव तदुत्कर्षपक्ष एव व्याख्यायते-प्रज्ञोत्कर्षवतैव परिभावनीय-'से' इत्युपन्यासे नून मया पूर्व 'कर्माणि' अनुष्ठानानि ज्ञानप्रशसादीनि, ज्ञानमिह विमर्शपूर्वको बोध , तत्फलानि कृतानि येनाह ना अपिशब्दस्य लुप्तनिर्दिष्टत्वान्नाऽपि-पुरुषोऽप्यभिजानामि 'पृष्ट' पर्यनुयुक्त 'केनापि' अविवक्षितविशेषेण, सर्वेणापीत्यर्थ , 'कस्मिंश्चिद्'यत्र तत्रापि वस्तुनि, 'अथे'त्युत्कर्षानन्तरम् 'अपत्थ'त्ति अपथ्यानि आयतिकटुकानि कर्माण्यज्ञानफलानि 'उदिज्जति'त्ति सूत्रत्वात्तिङ्व्यत्ययेनोदेष्यन्ति, वर्त्तमानसामीप्ये वर्त्तमानवद्वा( पा० ३-३-१३१ )इत्यनेन वर्त्तमानसामीप्ये वा लटि उदीर्यन्ते, सन्निहितकाल एवोदेष्यन्तीत्यर्थ , अय चाशय —उत्सेको हि ज्ञानावरणकारणमवश्यवेद्य च तत्, तदुदये च कुतो ज्ञानम् ?, अनियते वाऽस्मि क उत्सेक ?, इत्येवमालोचयन्नाश्वासय-प्रज्ञामलेपावलुप्तचेतनमात्मान स्वस्थीकुरु ज्ञात्वा कर्मविपाकम्, इह च तन्त्रन्यायेन युगपदर्थद्वयसम्भव , तन्त्र च दैर्घ्यप्रसारिता तन्तव , ततो यथा तदेकमनेकस्य तिरश्चीनस्य तन्तो सङ्ग्राहि तथा यदेकेनानेकार्थस्याभिधान स तन्त्रन्याय इति सूत्रद्वयार्थ ॥ ४०-४१ ॥

अत्र सूत्रद्वार, सूत्र चागमः, अस्मिंश्च प्रस्तुतसूत्रसूचितमुदाहरणमाह—

उज्जेणी कालखमणा सागरखमणा सुवण्णभूमीए । इदो आउयसेस पुच्छइ सादिव्वकरण च ॥१२०॥

निरट्ठगंमि विरओ, मेहुणाओ सुसंवुडो। जो सक्खं नाभिजाणामि, धम्मं कल्लाण पावगं ॥४२॥(सूत्रम्)
तवोवहाणमायाय, पडिमं पडिवज्जओ। एवंपि मे विहरओ, छउमं ण णियट्टति ॥ ४३ ॥ (सूत्रम्)

व्याख्या—'णिरट्ठगंमि'त्ति अर्थः–प्रयोजनं तदभावो निरर्थं तदेव निरर्थकं तस्मिन् सति, 'विरतः' निवृत्तः, कस्मात् ?–मिथुनस्य भावः कर्म वा मैथुनम्–अब्रह्म तस्मात्, आश्रवान्तरविरतावपि यदस्योपादानं तदस्यैवातिगृद्धिहेतुतया दुस्त्यजत्वात्, उक्तं हि–"दुर्पचया इमे कामा' इत्यादि, सुष्ठु संवृतः सुसंवृतः–इन्द्रियनोइन्द्रियसंवरणेन, यः 'साक्षात्' इति परिस्फुटं नाभिजानामि 'धर्मं' वस्तुस्वभावं 'कल्लाण'त्ति विन्दुलोपात्कल्याणं शुभं 'पापकं' वा तद्विपरीतं, वेत्यस्य गम्यमानत्वात्, यद्वा धर्मम्–आचारं कल्यः–अत्यन्तनीरुक्तया मोक्षस्तमानयति(अणति)–प्रज्ञापयतीति कल्याणो–मुक्तिहेतुस्तं, पापकं वा नरकादिहेतुम्, अयमाशयः—यदि विरतौ कश्चिदर्थः सिद्ध्येन्नैवं ममाज्ञानं भवेत्, कदाचित् सामान्यचर्ययैव न फलावाप्तिरत आह—तपो–भद्रमहाभद्रादि उपधानम्–आगमोपचाररूपमाचाम्लादि 'आदाय' स्वीकृत्य चरित्वेतियावत् 'प्रतिमां' मासिक्यादिभिक्षुप्रतिमां 'पडिवज्जिय'त्ति प्रतिपद्याङ्गीकृत्य, पठ्यते च–'पडिमं पडिवजओ'त्ति प्रतिपद्यमानस्य–अभ्युपगच्छतः, 'एवमपि' विशेषचर्ययाऽपि, आस्तां सामान्यचर्ययेत्यपि

१ दुष्प्रत्यजा इमे कामाः ।

भणंति—ण जाण, मयावि सुय, आगया य साहुणो, सो अब्भुट्ठिओ, सो तेहिं साधूहि भणति–खमासमणा केइ इहागया ?, पच्छा सो सकिओ भणइ–खतो पर इक्को आगओ, न उण जाणामि खमासमणा, सो पच्छा खामेति, भणति–मिच्छामिदुक्कड ज एत्थ मए आसादिया, पच्छा भणति–खमासमणा ! केरिस अह वक्खाणेमि ?, खमासमणेण भण्णति–लट्ठ, किन्तु मा गव्व करेहि, को जाणति ?, कस्स को आगमोत्ति ?, पच्छा धूलिणाएण चिक्खिल्लपिंडएण य आहरण करेति। न तहा कायव्व जहा सागरखमणेण कय । ताण अज्जकालगाण समीव सक्को य आगतु णिओयजीवे पुच्छति, जहा अज्जरक्खियाण तहेव जाव सादिव्वकरण च ॥ इद च प्रज्ञासद्भावमङ्गीकृत्योदाहरणमुक्त, तदभावे तु स्वयमभ्यूह्यमिति ॥ इदानीं प्रज्ञाया ज्ञानविशेषरूपत्वात्तद्विपक्षभूतत्वादज्ञानस्य तत्परीषहमाह, सोऽप्यज्ञानभावाभावाभ्या द्विधैव, तत्र भावपक्षमङ्गीकृत्येदमुच्यते—

---

१ भण्यते–न जाने, मयाऽपि श्रुतम्, आगताश्च साधव, सोऽभ्युत्थित, स तै साधुभिर्भण्यते–क्षमाश्रमणा केचिदिहागता ?, पश्चात् स शङ्कितो भणति–वृद्ध परमेक आगत, न पुनर्जानामि क्षमाश्रमणा (इति), स पश्चात् क्षमयति, भणति–मिथ्या मे दुष्कृत यदत्र मया आशातिता, पश्चात् भणति–क्षमाश्रमणा ! कीदृशमह व्याख्यानयामि ?, क्षमाश्रमणेन भण्यते–स्पष्ट, किन्तु मा गर्व कार्षी, को जानाति ? कस्य क आगम इति, पश्चाद्धूलिज्ञातेन कर्दमपिण्डेन च दृष्टान्त कुर्वन्ति । न तथा कर्त्तव्य यथा सागरक्षपणेन कृत । तेषामार्यकालकाना समीपे शक्रश्च आगत्य निगोदजीवान् पृच्छति, यथा आर्यरक्षिताना तथैव यावत् सादिव्यकरण च ॥

व्याख्या—'परितान्तः' खिन्नो वाचनया गङ्गाकूले पिताऽशकटायाः संवत्सरैरधीते द्वादशभिरसंस्कृताध्ययनमिति गाथाक्षरार्थः ॥ १२१ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—

गंगाकूले दोन्नि साहू पव्वइया भायरो, तत्थ एगो बहुसुतो एगो अप्पसुतो, तत्थ जो सो बहुसुतो सो सीसेहिं सुत्तत्थनिमित्तमुवसप्पंतेहिं दिवसतो विरेगो नत्थि, रत्तिंपि पडिपुच्छणसिक्खगाईहिं सुइयं न लहइ, जो सो अप्पसुतो सो रत्तिं सव्वं सुयइ । अन्नया कयाई सो आयरिओ णिद्दापरिखेतितो चिंतेति—अहो मे भाया पुण्णवंतो जो सुयइ, अम्हं पुण मंदपुण्णाणं सुइउंपि ण लब्भइ, तेण णाणावरणिज्जं कम्मं बद्धं, सो तस्स ठाणस्स अणालोइयपडिक्कंतो कालमासे कालं किच्चा देवलोएसु उववण्णो । तओ चुतो इहेव भारहे वासे आहीरघरे दारतो जातो, कमेण वड्ढितो जोव्वणत्थो वीवाहितो, दारिया जाया, अतीव रूववती, सा य भद्दकन्नया । कयाइ ताणि पियापुत्ताणि

---

१ गङ्गाकूले द्वौ साधू प्रव्रजितौ भ्रातरौ, तत्रैको बहुश्रुत एकोऽल्पश्रुत., तत्र यः स बहुश्रुत. स शिष्यै. सूत्रार्थनिमित्तमुपसर्पद्भिर्दिवसतः क्षणो नास्ति, रात्रावपि प्रतिप्रच्छनाशिक्षणादिभिः स्वपितु न लभते, यः सोऽल्पश्रुतः स रात्रीं सर्वां स्वपिति । अन्यदा कदाचित्स आचार्यो निद्रापरिखेदितश्चिन्तयति—अहो मम भ्राता पुण्यवान् यः स्वपिति, अस्माभिः पुनर्मन्दपुण्यैः स्वपितुमपि न लभ्यते, तेन ज्ञानावरणीयं कर्म बद्धं, स तस्मात् स्थानात् अनालोचितप्रतिक्रान्तः कालमासे कालं कृत्वा देवलोकेषूत्पन्न. । ततश्च्युतः इहैव भारते वर्षे आभीरगृहे दारको जातः, क्रमेण वृद्धो यौवनस्थो विवाहित', दारिका जाता, अतीव रूपवती, सा च भद्रकन्यका । कदाचित् ते पितापुत्र्यौ

शब्दार्थः 'विहरतो'त्ति निष्प्रतिबन्धत्वेनानियत विचरत छादयतीति छद्म—ज्ञानावरणादिकर्म 'न निवर्त्तते' नापैतीति भिक्षु न चिन्तयेदित्युत्तरेण सम्बन्ध । अज्ञानाभावपक्षे तु समस्तशास्त्रार्थनिष्कनिकषोपलकल्पना(ता)यामपि न दर्प्पाध्मातमानसो भवेत्, किन्तु—'पूर्वपुरुषसिंहाना विज्ञानातिशयसागरान न्तम् । श्रुत्वा साम्प्रतपुरुषा कथ स्व-बुद्ध्या मद यान्ति ?, ॥१॥' इति परिभावयन् विगलितावलेप सन्नेव भावयेत्—'णिरट्ठय' सूत्रद्वयम् , अक्षरगमनिका सैव, णवर 'निरट्ठयमिऽवि' निरर्थकेऽपि प्रक्रमात् प्रज्ञावलेपे रतो, मैथुनात् सुसवृत सन्निरुद्धात्मा सन् योऽह 'साक्षात्' समक्ष नाभिजानामि धर्म कल्याण पापक वा, अयमभिप्राय —'जे एग जाणति से सव जाणति (जे सव जाणति) से एग जाणति'[1] इत्यागमात् छद्मस्थोऽहमेकमपि धर्म्म वस्तुस्वरूप न तत्त्वतो वेद्मि, तत साक्षाद्भावस्वभावावभासि चेन विज्ञानमस्ति किमितोऽपि मुकुलितवस्तुस्वरूपपरिज्ञानतोऽवलेपेनेति भाव , तथा तपउपधानादिभिरप्युपक्रमणहेतुभि उपक्रमयितुमशक्ये छद्मनि दारुणे वैरिणि प्रतपति क किल ममाहङ्कारावसर इति सूत्रद्वयार्थ ॥ ४२—४३ ॥ साम्प्रतमावृत्त्या पुन सूत्रद्वारमङ्गीकृत्य प्रकृतसूत्रोपक्षिप्तमज्ञानसद्भाव उदाहरणमाह—

परितंतो वायणाए गगाकूले पिया असगडाए । सवच्छरेहऽहिज्जइ बारसहि असखयज्झयण ॥ १२१ ॥

---

१ य एक जानाति स सर्वं जानाति य सर्वं जानाति स एक जानाति ।

संवच्छरेहिमहिज्जियमज्झयणमसंखयं, खवियं तं कम्मं, सेसं लहुं चेव अहिज्जियं ॥ एवमज्ञानपरीषहः सोढव्यः, प्रतिपक्षे च भौमद्वारं, तत्राप्येतत्सूत्रसूचितमिदमुदाहरणं—

इमं च एरिसं तं च तारिसं पिच्छ केरिसं जायं ?। इय भणइ थूलभद्दो सन्नाइघरं गओ संतो ॥१२२॥

व्याख्या—'इदं चे'ति द्रव्यम् 'ईदृशमि'ति स्तम्भमूलस्थितमतिप्रभूतं च, अतिशयज्ञानित्वेन तस्य हृदि विपरिवर्त्तमानतया द्रव्यस्येदमा निर्देशः, 'तच्चे'ति तस्याज्ञानतः परिभ्रमणं 'तादृशमि'ति विप्रकृष्टदुर्गदेशान्तरविषयं, पश्य कीदृशं ? केन सदृशं ? जातं, न केनापि, कश्चिद्गृहे सति द्रव्ये द्रव्यार्थी बहिर्भ्राम्यति ?, इति भावः, 'इती'त्येवं भणति स्थूलभद्रः 'स्वज्ञातिः' अत्यन्तसुहृत्तद्गृहं गतः सन्निति गाथार्थः ॥ १२२ ॥ सम्प्रदायश्चात्र—

थूलभद्दो आयरिओ बहुसुतो, तस्स एगो पुव्विं मित्तो होत्था, सन्नायगोऽवि य। सो सूरी विहरंतो तस्स घरं गतो महिलं पुच्छति-सो अमुको कहिं गतोत्ति ?, सा भणइ-वाणिज्जेणं, तं च घरं पुव्विं लट्ठं आसि, पच्छा सडियपडियं जायं, तस्स पुव्विल्लएहिं एगस्स खंभस्स हेट्ठा भूमीए दव्वं निहेल्लयं, तं सो आयरितो णाणेण जाणति, पच्छा तेणं

१ संवत्सरैरधीतमध्ययनमसंख्यकं, क्षपितं तत् कर्म, शेषं लघ्वेवाधीतम्। २ स्थूलभद्र आचार्यो बहुश्रुतः, तस्यैकः पूर्वमित्रमभूत्, सज्ञातीयोऽपि च। स सूरिर्विहरन् तस्य गृहं गतो महेलां पृच्छति—सोऽमुकः क गत इति, सा भणति-वाणिज्याय, तच्च गृहं पूर्वं लष्टमासीत्, पश्चाच्छटितपतितं जातं, तस्य पूर्वजैः एकस्य स्तम्भस्याधस्ताद् भूमौ द्रव्यं निहितं, तत्र आचार्यो ज्ञानेन जानाति, पश्चात्तेन

जनेहिं आहीरेहिं सम सगड पयस्स भरेऊण णगरिं विक्किणणट्ठा पत्थिआणि, सा य कण्णया सारत्थ तस्स सगडस्स करेइ, ततो ते गोयदारया तीए रूवेणाक्खित्ता तीसे सगडस्स अब्भासयाइ सगडाइ खेडति त पलोइता, ताइ सव्वाति सगडाति उप्पहेण भग्गाइ, तओ तीए नाम कथ–असगडत्ति, असगडाए पिया असगडपिया। तस्स त चेव वेरग्ग जाय, त दारिय परिणावेउ सय च घरसार दाऊण पव्वतितो। तेण तिण्णि उत्तरज्झयणाणि जाव अहीयाणि, ताव असखे उद्दिट्ठे त णाणावरण कम्मसुदिन्न, गया दो दिवसा अविलच्छट्ठेण, न एगो सिलोगो ठाति, आयरिएहिं भणति–उट्ठेहि जा एयमज्झयणमसखयमणुण्णविज्जति, सो भणति–एयस्स केरिसो जोगो ?, आयरिया भणति—जाव न उट्ठेति ताव आयबिल, सो भणति–अलाहि मे अणुण्णाए ण, एव तेण अदीणेण आयबिलाहारेण बारसहिं

---

१ अथैराभीरै सम शकट घृतेन भृत्वा नगरीं विक्रयणाय प्रस्थिते, सा च कन्यका सारथित्व तस्य शकटस्य करोति, ततस्ते गोपदारका तस्या रूपेणाक्षिप्ता तस्या शकटस्याभ्यासे शकटानि खेटयन्ति ता प्रलोकयन्त, तानि सर्वाणि शकटानि उत्पथेन भग्नानि, ततस्तस्या नाम कृतम्–अशकटेति, अशकटाया पिता अशकटापिता। तस्य तदेव वैराग्योत्पादक जात, ता दारिका परिणाय्य सर्व च गृहसार दत्त्वा प्रव्रजित। तेन त्रीणि उत्तराध्ययनानि यावदधीतानि, तावद् असख्येय उद्दिष्टे तज्ज्ञानावरण कर्मोदीर्ण, गतौ द्वौ दिवसौ आचाम्लषष्ठेन (युग्मेन), नैक श्लोकस्तिष्ठति, आचार्यैर्भण्यते–उत्तिष्ठ यावदेतदध्ययनमसख्येयकमनुज्ञायते, स भणति–एतस्य कीदृशो योग ?, आचार्या भणन्ति—यावन्नोत्तिष्ठते तावदाचाम्ल, स भणति–अल ममानुज्ञया, एव तेनादीनेनाचामाम्लाहारेण द्वादशभि । १ ०गोऽवि आरुग्गो प्र० ।

णत्थि णूणं परे लोए, इड्ढी वावि तवस्सिणो। अदुवा वंचिओमित्ति, इइ भिक्खू ण चिंतए॥४४॥(सूत्रम्)

व्याख्या—'नास्ति' न विद्यते 'नूनं' निश्चितं 'परलोको' जन्मान्तरमित्यर्थः, भूतचतुष्टयात्मकत्वाच्छरीरस्य, तस्य चेहैव पातात्, चैतन्यस्य च भूतधर्मभूतत्वात्, तदतिरिक्तस्य चात्मनः प्रत्यक्षतोऽनुपलभ्यमानत्वाद्, 'ऋद्धिर्वा' तपोमाहात्म्यरूपा, अपिः पूरणे, कस्य ?–तपस्विनः, सा च आमर्शौषध्यादिः–'पादरजसा प्रशमनं सर्वरुजां साधवः क्षणात्कुर्युः । त्रिभुवनविस्मयजननान् दद्युः कामांस्तृणाग्राद्वा ॥ १ ॥ धर्माद्रत्नोन्मिश्रितकाञ्चनवर्षादिसर्गसामर्थ्यम् । अद्भुतभीमोरुशिलासहस्रसम्पातशक्तिश्च ॥ २ ॥' इत्यादिका च, तस्या अप्यनुपलभ्यमानत्वादिति भावः, 'अदुव'त्ति अथवा, किंबहुना ?–वञ्चितोऽस्मि भोगानामिति गम्यते 'इती'त्यमुना शिरस्तुण्डनोपवासादिना यातनात्मकेन धर्मानुष्ठानेन, उक्तं च—"तपांसि यातनाश्चित्राः, संयमो भोगवञ्चना"इत्यादि, 'इती'त्यनन्तरमुपदर्शितं भिक्षुः 'न चिन्तयेत्' न ध्यायेत्, परिफल्गुरूपत्वादस्य, तथाहि—यत्तावदुक्तं–'भूतचतुष्टयात्मकत्वाच्छरीरस्य जन्मान्तराभाव' इति, तदसत्, न हि शरीरस्य जन्मान्तरानुयायित्वमस्माभिरुच्यते, किन्त्वात्मनः, न च भूतधर्म्म एव चैतन्ये आत्मव्यपदेशः, तस्य तद्धर्मत्वेनोत्तरत्र निपेत्स्यमानत्वात्, यदपि ऋद्धिर्वा तपस्विनो नास्ति, तदपि वचनमात्रमेव, अथात्मन ऋद्धीनां चाभावे अनुपलम्भो हेतुरुक्तः, सोऽपि स्वसम्बन्धी सर्वसम्बन्धी वा ?, तत्र न तावदात्मनोऽभावे स्वसम्बन्ध्यनुपलम्भो हेतुः, स्वयं तस्य घटादिवदुपलभ्यमानत्वात्, यथैव हि घटादिगता रूपादय उपलभ्यन्ते, तथा आत्म-

तंओडुत्त हत्थ काउ भण्णति–'इम च एरिस त च तारिसमित्यादिगाथा' इम च एरिस दव्वजाय, सो अण्णाणेण भमइ, एव च भणमाणे जणो जाणति, जहा–घरमेव पुर्व्वि लट्ठ इयार्णि तु सडियपडिय दट्ठु अणिचयाणिरूवणत्थ भयव दसेइ । सो य आगतो, महिलाए सिट्ठ–जहा थूलभद्दो आगतो आसि, सो भणति–थूलभद्देण किंचि भणिय ?, ण किंचि, णवर खभडुत्त हत्थ दायतो भणियाइओ–'इम च एरिसमिस्सादि,' तेण पडिएण णाय–जहा एत्थ अवस्स किंचि अत्थि, तेण खाणियं जाव णाणापगाररयणाण भरिय कलस पेच्छइ । तेण णाणपरीसहो णाहियासिओ ॥ नैवं शेषसाधुभि कर्त्तव्यम् । इह च प्रज्ञानानयोर्भावाभावाभ्या सूत्रे परीषहत्वेनोपवर्णन निर्युक्तौ चाज्ञानपरीषहे तयैवोदाहरणद्वयोपवर्णनमन्यत्रापि यथासम्भवमेव भावनीयमिति ज्ञापनार्थं ॥ साम्प्रतमज्ञानाद्दर्शनेऽपि सशयीत कश्चिदिति तत्परीषहमाह—

१ तरसमुग्न हस्त कृत्वा भण्यते–इद चेदृश तच्च तादृशमित्यादिगाथा, इद चेदृश द्रव्यजात, सोऽज्ञानेन भ्राम्यति, एव च भणति जनो जानाति, यथा–गृहमेव पूर्वं लष्टमिदानी तु शटितपतित दृष्ट्वा अनित्यतानिरूपणार्थं भगवान् दर्शयति । स आगत, महेलया शिष्ट—यथा स्थूलभद्र आगत आसीत्, स भणति–स्थूलभद्रेण किञ्चित् भणित ?, न किञ्चित्, नवर स्तम्भसमुख हस्त दर्शयन् भणितवान्—इद चेदृशमित्यादि, तेन पण्डितेन ज्ञात—यथाऽत्रावश्य किञ्चिदस्ति, तेन खानित यावन्नानाप्रकाररत्नैर्भृत कलश पश्यति । तेन ज्ञानपरीषहो नाध्यासित ।

"तद्यथा–विषसम्पृक्तमन्नमनादेयमेवं दुःखानुषक्तं सुखमनादेय"मिति, प्रयोगश्च–यद्विपक्षानुविद्धं न तत्तत्त्वतस्तदेव, यथा विषव्यामिश्रमन्नम्, अतृप्तिकाङ्क्षाशोकादिनिमित्तं च वैषयिकं सुखं, न चास्यासिद्धता, कालत्रये यथायोगमतृप्त्यादीनां प्रतिप्राणि स्वसंविदितत्वात्, नापि तपसो यातनात्मकत्वं, मनइन्द्रिययोगानामहान्यैव तत्प्रतिपादनात्, उक्तं हि–"मनइन्द्रिययोगानामहानिश्चोदिता जिनैः। यतोऽत्र तत्कथं तस्य, युक्ता स्यात् दुःखरूपता ? ॥ १ ॥" शिरस्तुण्डमुण्डनादेश्च किञ्चित्पीडात्मकत्वेऽपि समीहितार्थसम्पादकत्वेन न दुःखदायकता, यदुक्तम्–"इष्टा चेष्टार्थसंसिद्धौ, कायपीडाऽप्यदुःखदा। रत्नादिवणिगादीनां, तद्वदत्रापि भाव्यताम् ॥ १ ॥" प्रयोगश्च–यदिष्टार्थप्रसाधकं न तत्कायपीडात्मकत्वेऽपि दुःखदायि, यथा रत्नवणिजामध्वश्रमादि, इष्टार्थप्रसाधकं च तपः, न चास्याप्यसिद्धता, प्रशमहेतुत्वेन तपसस्तत्परिपक्तितारतम्यात्परमानन्दतारतम्यस्यानुभूयमानत्वेन तत्प्रकर्षे तस्यापि प्रकर्षानुमानात्, प्रयोगश्च–यत्तारतम्येन यस्य तारतम्यं तस्य प्रकर्षे तत्प्रकर्षो, यथाऽग्नितापप्रकर्षे तपनीयविशुद्धिप्रकर्षः, अनुभूयते च प्रशमतारतम्येन परमानन्दतारतम्यं, लोकप्रतीतत्वाच्चेति सूत्रार्थः ॥ ४४ ॥ तथा–

अभू जिणा अत्थि जिणा, अदुवावि भविस्सइ। मुसं ते एवमाहंसु, इति भिक्खू न चिंतए ॥४५॥ (सूत्रम्)

व्याख्या–'अभूवन्' आसन् 'जिनाः' रागादिजेतारः, अस्तीति विभक्तिप्रतिरूपको निपातः, ततश्च विद्यन्ते जिनाः, अस्य कर्मप्रवादपूर्वसप्तदशप्राभृतोद्धृततया वस्तुतः सुधर्मस्वामिनैव जम्बुस्वामिनं प्रति प्रणीतत्वात्, तत्काले च

गता अपि ज्ञानसुखादय इति नात्र महदन्तरमुत्पश्याम , उक्त चाथसेनवाचकेन—"आत्मप्रत्यक्ष आत्माऽय"मित्यादि, अथाय न दृग्गोचर इति नास्तीत्युच्यते, नायमप्येकान्तो, यतस्तेनैवोक्तम्—"न च नास्तीह तत् सर्व चक्षुषा यन्न गृह्यते," अन्यथा चैतन्यमपि न दृग्गोचर इति तस्याप्यसत्त्व स्यात्, अथ तत् स्वसविदितमिति सदुच्यते, अयमपि तथाभूत एवेति सन्नस्तु, उक्त हि—"अस्त्येव चात्मा प्रत्यक्षो, जीवो ह्यात्मानमात्मना । अहमस्मीति सवेत्ति, रूपादीनि यथेन्द्रियै ॥ १ ॥" इति, किं बहुना ?, यथा चैतन्यमस्तीत्यभ्युपगम्यते तथाऽऽत्माप्यभ्युपगन्तव्य , तथा चाह—"ज्ञान स्वस्थ परस्थ वा, यथा ज्ञानेन गृह्यते । ज्ञाता स्वस्थ परस्थो वा, तथा ज्ञानेन गृह्यताम् ॥१॥" इति । अथ सर्वसम्बन्ध्यनुपलम्भ आत्माभावे हेतु , अयमप्यसिद्ध , अहमस्मीति प्रत्ययेन प्रतिप्राणि स्वात्मन केवलिना च सर्वात्मनासुपलम्भस्य प्रतिषेद्धुमशक्यत्वात् । एवमृद्धीनामप्यभावे सर्वसम्बन्ध्यनुपलम्भोऽसिद्ध , स्वसम्बन्धी तु नियतदेशकालापेक्षोऽन्यथा वा ?, प्रथमपक्षे को वा किमाह ?, क्वचित्कदाचित्तासामनुपलम्भस्य (उपलम्भस्य) चास्माकमपि सम्मतत्वात्, द्वितीयपक्षे पुनरनैकान्तिकता, देशादिविप्रकृष्टानामनुपलम्भेऽपि सत्त्वात्, दृश्यते च क्वचित् कदाचित् चरणरेणुस्पर्शादितो रोगोपशमादि, ततश्चेहापि कालान्तरे महाविदेहादिषु सर्वकालमृद्ध्यन्तराणामपि सम्भवस्यानुमीयमानत्वात्, यदपि—वञ्चितोऽस्मीति भोगसुखानामनेन शिरस्तुण्डमुण्डनोपवासादिना यातनात्मकेन धर्मानुष्ठानेनेति, तदप्यसमीक्षिताभिधान, भोगसुखाना दु खानुषक्तत्वेन तत्त्ववेदिनामनादेयत्वात्, तथा च वात्स्यायनोऽप्याह—

गंतो आगंतूण सम दरिसणं देज्जासु, ण य सो आगतो वक्खित्तचित्तत्तणओ, पच्छा सो चिंतेइ—सुबहुं कालं किलिट्ठोऽहं, सलिंगेणं चेव ओहावइ, पच्छा तेण सीसेण देवलोगगएण आभोईतो, पेच्छइ—ओहावेंतं, पच्छा तेण तस्स पहे गामो विउव्वितो णडपेच्छा य, सो तत्थ छम्मासे पेक्खंतो अच्छितो, ण छुहं ण तण्हं कालं वा दिव्वप्पभावेण वेएति, पच्छा तं संहरिउं गामस्स बहिं विजणे उज्जाणे छद्दारए सव्वालंकारविभूसिए विउव्वति संजमपरिक्खत्थं, दिट्ठा तेण ते, गिण्हामि एसिमाहरणगाणि, वरं सुहं जीवंतोत्ति, सो एगं पुढविदारयं भणइ—आणेहि आभरणगाणि, सो भणइ—भगवं ! एगं ताव मे अक्खाणयं सुणेहि, तओ पच्छा गिण्हिज्जासि, भणइ—सुणेमि, सो भणइ—एगो कुंभकारो, सो मट्टियं खणंतो तडीए अक्कंतो, सो भणइ—

१० कादागत्य मह्यं दर्शनं दद्याः, न च स आगतो व्याक्षिप्तचित्तत्वात्, पश्चात्स चिन्तयति—सुबहुकालं क्लिष्टोऽहं, स्वलिङ्गेनैवावधावति, पश्चात्तेन शिष्येण देवलोकगतेनाभोगितः, पश्यति—अवधावन्तं, पश्चात्तेन तस्य पथि ग्रामो विकुर्वितः नटप्रेक्षणकं च, स तत्र षण्मासान् प्रेक्षमाणः स्थितः, न क्षुधं न तृष्णां कालं वा दिव्यप्रभावेण वेदयति, पश्चात्तं संहृत्य ग्रामाद्बहिर्विजने उद्याने षड् दारकान् सर्वालङ्कारविभूषितान् विकुर्वति संयमपरीक्षार्थं, दृष्टास्तेन ते, गृह्णाम्येषामाभरणानि, वरं सुखं जीवन्निति, स एकं पृथ्वीदारकं भणति—आनय आभरणानि, स भणति—भगवन् ! एकं तावन्ममाख्यानकं शृणु, ततः पश्चात् गृह्णीयाः, भणति—शृणोमि, स भणति—एकः कुम्भकारः, स मृत्तिकां खनन् तट्याऽऽक्रान्तः, स भणति—

जिनसम्भवादित्युक्त, विदेहादिक्षेत्रान्तरापेक्षया वेति भावनीय, 'अदुवे'ति अथवा, अपि भिन्नक्रमो 'भविस्सइ'त्ति वचनव्यत्ययाद्भविष्यन्ति, जिना इत्यपि 'मृषा' अलीक, 'ते' जिनास्तित्ववादिन , 'एवम्' अनन्तरोक्तन्यायेन 'आहसु'त्ति आहु नुवत इति भिक्षुर्न चिन्तयेत्, जिनस्य सर्वज्ञाधिक्षेपप्रतिक्षेपादिषु प्रमाणोपपन्नतया प्रतिपादनात् तदुपदेश-मूलत्वाच्च सकलैहिकामुष्मिकव्यवहाराणामिति सूत्रार्थ ॥ ४५ ॥ इदानीं शिष्यागमनद्वार, तत्र च 'नत्थि नूण परे लोए' इति सूत्रावयवसूचितमुदाहरणमाह—

ओहाविउकामोऽवि य अज्जासाढो उ पणीयभूमीए। काऊण रायरूवं पच्छा सीसेण अणुसिट्ठो ॥१२३॥

व्याख्या—'अवधावितुकामोऽपि' उन्निष्क्रमितुकामोऽपि, च पूरणे, आर्याषाढस्तु 'पणितभूमौ' व्यवहारभूमौ हट्टमध्य इत्यर्थ , कृत्वा राजरूप पश्चाच्छिष्येणानुशिष्ट इति गाथाक्षरार्थ ॥ १२३ ॥ भावार्थस्तु वृद्धसम्प्रदायाद-वसेय , स चायम्—

[1]अत्थि वच्छाभूमीए अज्जासाढा णामायरिया बहुस्सुया बहुसीसपरिवारा य, तत्थ गच्छे जो काल करेइ त निज्जा-वेंति भत्तपच्चक्खाणाइणा, तो बहवो णिज्जामिया । अन्नया एगो अप्पणतो सीसो आयरतरेण भणितो—देवलो-

1 अस्ति वत्सभूमौ आर्याषाढा नामाचार्या बहुश्रुता बहुशिष्यपरीवाराश्च, तत्र गच्छे य काल करोति त नियामयन्ति भक्तप्रत्याख्याना दिना, ततो बहवो निर्यामिता । अन्यदा एक आत्मीय शिष्य आदरतरेण भणित —देवलो-

भद्रं ते, 'लप' ब्रूहि 'ता' इति तावद्यावदद्यापि दूरं न नीयस इति भावः, 'किञ्चित्' अस्तल्पं 'सुभाषितं' सूक्तमिति श्लोकार्थः ॥ १२५ ॥ सोऽवादीत्—

जेण रोहंति वीयाणि, जेण जीयंति कासया । तस्स मज्झे विवज्जामि, जा० ॥ १२६ ॥

व्याख्या—'येन' जलेन 'रोहन्ति' प्रादुर्भवन्ति वीजानि, येन 'जीवन्ति' प्राणधारणं कुर्वन्ति 'कर्पकाः' कृषीवलाः तस्य मध्ये 'विवज्जामि'त्ति विपद्ये म्रिये, जातं शरणतो भयमिति श्लोकार्थः ॥ १२६ ॥ तस्सवि तहेव गिण्हति । एस आउक्कातो गतो, इयाणिं तेउक्कातो तइतो, तहेव अक्खाणयं कहेइ—एगस्स तावसस्स अग्गिणा उडओ दड्ढो, पच्छा सो भणति—

जमहं दिया य राओ य, तप्पेमि महुसप्पिसा । तेण मे उडओ दड्ढो, जा० ॥ १२७ ॥

व्याख्या—यमहं दिवा च रात्रौ च 'तर्पयामि' प्रीणयामि मधुसर्पिषा, तेनार्थादग्निना मे 'ओटजः' तापसाश्रमो दग्धो, जातं शरणतो भयमिति श्लोकार्थः ॥ १२७ ॥ अथवा—



१ तस्यापि तथैव गृह्णाति । एषोऽप्कायो गतः, इदानीं तेजस्कायस्तृतीयः, तथैव आख्यानकं कथयति—एकस्य तापसस्य अग्निना उटजो दग्धः, पश्चात् स भणति—

जेण भिक्ख वलि देमि, जेण पोसेमि नायए। सा मे मही अक्कमइ, जाय सरणओ भय ॥ १२४ ॥

व्याख्या—'जेण'त्ति प्राकृतशैल्या यया भिक्षा वलि ददामि, यथाक्रम भिक्षुदेवेभ्य इति गम्यते, 'जेण'त्ति यया पोपयामि 'नायए'त्ति ज्ञातीन्, सा 'मे'त्ति मा मही 'आक्रामति' अवष्टभ्नाति 'जातम्' उत्पन्न, शरणतो भयम् इति श्लोकार्थ ॥ १२४ ॥ अयमिहोपनय,—चौरभयादह भवन्त शरणमागत, त्व च एव विलुम्पसि, ततो ममापि जात शरणतो भयम्, एवमुत्तरत्राप्युपनया भावनीया, तेणं भण्णइ—अइपडियवाइतोऽसित्ति घेत्तूण आभरणगाणि पडिग्गहे छूढाणि। गओ पुढविकाइतो, इयाणि आउकाओ वीओ, सोऽवि अक्खाणय कहेइ—जहा एगो तालायरो कहाकहओ पाडलओ णाम, सो अन्नया गग उत्तरतो उवरि वुट्ठोदएण हीरति, त पासिऊण जणो भणइ—

वहुस्सुय चित्तकह, गगा वहइ पाडल। वुज्झमाणग! भद्द ते, लव ता किंचि सुहासिय ॥ १२५ ॥

व्याख्या—'वहुश्रुत' वहुविध 'चित्रकथ' नानाकथाकथक गङ्गा वहति 'पाडल' पाटलनामकम्, उह्यमानक!

---

१ तेन भण्यते—अतिपण्डितवादिकोऽसीति गृहीत्वाऽऽभरणानि प्रतिग्रहे क्षिप्तानि। गत पृथ्वीकायिक, इदानीमप्कायो द्वितीय, सोऽप्याख्यानक कथयति—यथैकस्तालाचर कथाकथक पाटलो नाम, सोऽन्यदा गङ्गामुत्तरन् उपरि वृष्टोदकेन ह्रियते, त दृष्ट्वा जनो भणति—

व्याख्या—ज्येष्ठाषाढयोर्मासयोर्यः शुभशैत्यादिगुणान्वितत्वेन शोभनो वाति 'मारुतो' वायुः, तेन (मे मम) भज्यतेऽङ्गं, तस्य मेघोन्नतिसम्भवत्वेन वातप्रकोपादिति भावः, एवं च जातं शरणतो भयं, घर्म्मार्दितानां हि शरणमयमिति श्लोकार्थः ॥ १३० ॥ अथवा—

जेण जीवंति सत्ताणि, निरोहंमि अणंतए। तेण मे भज्जए अंगं, जायं० ॥ १३१ ॥

व्याख्या—'जेण' इत्यादि, येन वातेन जीवन्ति सत्त्वानि 'निरोधे' प्रक्रमाद्वातस्य 'अनन्तके' अपरिमिते, तेन मे भज्यतेऽङ्गं जातं शरणतो भयमिति श्लोकार्थः ॥१३१॥ तस्संवि तहेव गिण्हइ। एस वाउकाओ गतो, इयाणिं वणस्सइकाइतो पंचमो, तहेव अक्खाणं कहेति, जहा एगंमि रुक्खे केसिंपि सउणाण आवासो, तहियं पिल्लगाणि जायाणि, पच्छा रुक्खब्भासाओ वल्ली उट्ठिया, रुक्खं वेढंती उवरिं विलग्गा, वेल्लीअणुसारेण सप्पेण विलग्गिऊण ते पिल्लगा खइया, पच्छा सेसगा भणन्ति—

जाव वुच्छं सुहं वुच्छं, पादवे निरुवद्दवे। मूलाउ उट्ठिया वल्ली, जा० ॥ १३२ ॥

१ तस्यापि तथैव गृह्णाति। एष वायुकायो गतः, इदानीं वनस्पतिकायिकः पञ्चमः, तथैवाख्यानं कथयति—यथा एकस्मिन् वृक्षे केषाञ्चिदपि शकुनानामावासः, तत्रापत्यानि जातानि, पश्चात् वृक्षाभ्यासात् वल्ली उत्थिता, वृक्षं वेष्टयन्ती उपरि विलग्ना, वल्ल्यनुसारेण सर्पेण विलग्य तान्यपत्यानि खादितानि, पश्चात् शेषा भणन्ति—

वग्घस्स मए भीएण, पावगो सरण कओ। तेण दड्ढ मम अग, जा० ॥ १२८ ॥

व्याख्या—'वग्घस्स'त्ति सुव्व्यत्ययात् 'व्याघ्रात्' पुण्डरीकात् मया भीतेन 'पावक' अग्नि शरणीकृत, तेनाङ्ग शरीरं मम दग्ध, जात शरणतो भयमिति श्लोकार्थ ॥ १२८ ॥ तस्संवि तहेव गिण्हइ। एस तेउक्काओ, इयाणि वाउक्काओ चउत्थो, तहेव अक्खाणय कहेति–जहा एगो जुवाणो घणनिचियसरीरो, सो पच्छा वाएहिं गहितो, अन्नेण भण्णति—

लघणपवणसमत्थो पुव होऊण सपइ कीस ?। दडयगहियग्गहत्थो वयस ! को नामओ वाही ? ॥१२९॥

व्याख्या—लङ्घनम्–उत्प्लुत्य गमन प्लवन–धावन तत्समर्थ पूर्वं भूत्वा साम्प्रत 'कीस'त्ति कस्मात् 'दण्डयगहियग्गहत्थो'त्ति प्राकृतत्वात् गृहीतदण्डाग्रहस्तो, गच्छसीति गम्यते, तदद्य ते वयस्य ! किंनामको व्याधिरिति गाथार्थ ॥ १२९ ॥ स प्राह—

जिट्ठासाढेसु मासेसु, जो सुहो वाइ मारुओ। तेण मे भज्जए अग, जा० ॥ १३० ॥

---

१ तस्यापि तथैव गृह्णाति। एष तेजस्काय, इदानीं वायुकायश्चतुर्थ, तथैव आख्यानक कथयति–यथैको युवा घननिचितशरीर, स पश्चाद्वातेन गृहीत, अन्येन भण्यते—

जत्थ राया सयं चोरो, भंडिओ य पुरोहिओ । दिसं भयह नायरिया !, जायं० ॥ १३४ ॥

व्याख्या—यत्र राजा स्वयं चौरः—स्वपुरं मुष्णाति, भण्डकश्च पुरोहितः, अतो दिशं भजत नागरका ! जातं शरणतो भयमिति श्लोकार्थः ॥ १३४ ॥

अहवा एगस्स धिज्जातियस्स धूया, सा य जोवणत्था, पडिरूवदंसणिज्जा, सो धिज्जातितो तं पासिऊण अज्झोववण्णो, तीसे कएण अतीव दुब्बलीभूतो, बंभणीए पुच्छितो—णिब्बंधे कए कहियं, ताए भणति—मा अधिइं करेसु, तहा करेमि जहा केणइ पओएण संपत्ती हवति, पच्छा धूयं भणइ—अम्ह पुव्विं दारियं जक्खा भुंजंति, पच्छा वरस्स दिज्जइ, तो तव कालपक्खचउद्दसीए जक्खो एही, मा तं विमाणेसु, मा य तत्थ तुमं उज्जोयं काहिसि, तीएवि जक्खकोउहल्लेण दीवओ सरावेण ठवितो नीतो, सो य आगतो, सो तं परिभुंजिऊण रत्तिं किलंतो पासुत्तो,

१ अथवा एकस्य धिग्जातीयस्य दुहिता, सा च यौवनस्था, अप्रतिरूपदर्शनीया, स धिग्जातीयस्तां दृष्ट्वाऽध्युपपन्नः, तस्याः कृते अतीव दुर्बलीभूतः, ब्राह्मण्या पृष्टः—निर्बन्धे कृते कथितं, तया भण्यते—माऽधृतिं कार्षीः, तथा करिष्यामि यथा केनचित्प्रयोजनेन संपत्तिर्भविष्यति, पश्चाद्दुहितरं भणति—अस्माकं पूर्वं दारिकां यक्षा भुञ्जते, पश्चाद्वराय दीयते, ततस्त्वां कृष्णपक्षचतुर्दश्यां यक्ष एष्यति, मा तं विमंस्थाः, मा च तत्र त्वमुद्योतं कार्षीः, तयाऽपि यक्षकौतूहलेन दीपः शरावेण स्थगितो नीतः, स चागतः, स तां परिभुज्य रात्रौ श्रान्तः प्रसुप्तः,

व्याख्या—यावदुषित सुखसुपित पादपे निरुपद्रवे, इदानीं मूलादुत्थिता वल्ली ततो वृक्षादेव तत्त्वतो भय, स चोत्कनीत्या शरणमिति जात शरणतो भयमिति श्लोकार्थ ॥ १३२ ॥

तस्संपि तहेव गिण्हइ । एस वणस्सतिकातो गतो, इयाणि तसकाओ छट्ठो, तहेव अक्खाणय कहेइ–जहा एक नगर परचक्केण रोहिय, तत्थ य बाहरियाए मायगा, ते अब्भितरएहिं णीणिज्जंति, बाहि परचक्केण घेप्पंति, पच्छा केणवि अन्नेण भण्णति—

अब्भितरया खुभिया, पिल्लंति (य) बाहिरा जणा। दिस भयह मायगा !, जा० ॥ १३३ ॥

व्याख्या—'अभ्यन्तरका' नगरमध्यवर्त्तिन 'क्षुभिता' परचक्रात्रस्ता 'प्रेरयन्ति' निष्काशयन्ति, मा भूदन्नादिक्षय एभ्यो वा भेद, चशब्दो भिन्नक्रम, ततो 'बाह्याश्च' परचक्रलोका उपद्रवन्ति, भवत इति गम्यते, नगरसत्का एत इति, अतो दिश भजत मातङ्गा !, यतो जात शरणतो भय, नगर हि भवता शरण, तत एव भयमिति श्लोकार्थ ॥ १३३ ॥ अथवा–एगत्थ नयरे सयमेव राया चोरो पुरोहिओ भंडिति (डओत्ति), ततो दोवि विहरति, पच्छा लोओ अन्नमन भणति—

१ तस्यापि तथैव गृह्णाति । एष वनस्पतिकायिको गत, इदानीं त्रसकाय षष्ठ, तथैवाख्यानक कथयति–यथैक नगर परचक्रेण रुद्ध, तत्र च बाहिरिकाया मातङ्गा, तेऽभ्यन्तरैर्निष्काश्यन्ते, बहि परचक्रेण गृह्यन्ते, पश्चात्केनाप्यन्येन भण्यते– २ एकत्र नगरे स्वयमेव राजा चौर पुरोहितो भण्डक, ततो द्वावपि विहरत, पश्चाल्लोकोऽन्योऽन्य भणति–

विमंस्था विमुखं कृथा यक्षमागतं, यक्षाहतको'हु'त्ति खलु तातकोऽन्यमिदानीं 'विमार्गय' अन्वेपय तातकमिति मागधिकार्थः ॥ १३६ ॥ पच्छा सा धिज्जाइणी भणइ—

नवमास कुच्छीइ धालिया, पासवणे पुलिसे य मद्दिए।
धूया मे गेहिए हडे, सलणए असलणए य मे जायए ॥ १३७ ॥

व्याख्या—नव मासान् कुक्षौ धारिता या, प्रश्रवणं पुरीषं च मर्दितं यस्या इति गम्यते, 'धूय'त्ति दुहिता च, गम्यमानत्वात्तया, 'मे' मम 'गेहको' भर्त्ता 'हृतः' चौरितोऽतो हेतोः, शरणकमशरणकम्, अपकारित्वान्मे जातमिति मागधिकार्थः ॥ १३७ ॥ अहवा एगेण धिज्जाइएण तलायं खणावियं, तत्थेव पालीए देसे देउलमारामो कतो, तत्थ तेण जन्नो पवत्तिओ, छगलका जत्थ मारिज्जंति। अन्नया कयाइ सो धिज्जाइतो मरिऊण छगलको चेवायाओ, सो य घित्तूण अप्पणिज्जेहिं पुत्तेहिं तस्स चेव तलाए जन्ने मारिउं णिज्जति, सो य जाईस्सरो णिज्जमाणो अप्पणिज्जियाए

१ पश्चात् सा धिग्जातीया भणति—। २ अथवैकेन धिग्जातीयेन तटाकं खानितं, तत्रैव पाल्यां देशे देवकुलमारामः (च) कृतः, तत्र तेन यज्ञः प्रवर्त्तितः, अजा यत्र मार्यन्ते। अन्यदा कदाचित् स धिग्जातीयो मृत्वा छगलकश्चैवायातः, स च गृहीत्वाऽऽत्मीयैः पुत्रैः तस्यैव तटाके यज्ञे मारयितुं नीयते, स च जातिस्मरो नीयमान आत्मीयया

इमांए कोउएण सराव फेडिय, नवर पेच्छइ पियर, ताए नाय–ज होइ त होउ, इच्छाए भुजामि भोए, पच्छा ताइ रइकिलताइ उग्गए सूरे न पडिवुज्झति, पच्छा वभणी मागहिय भणइ—

अइरुग्गयए य सूरिए, चेइयथूभगए य वायसे। भित्तीगयए य आयवे, सहि! सुहिओ हु जणो न वुज्झइ॥

व्याख्या—अचिरोद्गतके च सूर्ये, कोऽभिप्राय ?–प्रथमोदिते रवौ, चैत्यस्तूपगते च वायसे, अनेनोच्चे विय-सतीत्याह, भित्तिगते चातपे, अनेन चोचतर इति, सखि! सुखितो दुर्वाक्यालङ्कारे जनो 'न वुध्यते' न निद्रा जहाति, अनेनात्मनो दु खितत्व प्रकटयति, सा हि भर्तृविरहदु खिता रात्रौ न निद्रा लब्धवतीति मागधिकार्थ ॥ १२५ ॥ पच्छा सा तीसे धूया पडिसुणित्ता पडिभणति मागहिय—

तुम एव य अम्म हे! लवे, मा हु विमाणय जक्खमागय। जक्खहडए हु तायए, अन्नि दाणि विमग्ग तायय॥

व्याख्या–त्वमेव चाम्ब !–मात हे इत्यामन्त्रणे 'अलापी' उक्तवती शिक्षासमये यथा–'मा हु'त्ति मैव 'विमाणय'त्ति

---

१ अनया कौतुकेन शराव स्फेटित, नवर पश्यति तात, [redacted] ज्ञात–यद्भवति तद्भवतु, इच्छया भुञ्जे भोगान्, पश्चात्तौ रतिक्लान्तौ उद्गते सूर्ये (अपि) न प्रतिबुध्येते, पश्चाद् ब्राह्मणी मागधिका भणति–। २ पश्चात्तस्या [redacted] दुहिता प्रतिश्रुत्य प्रतिभणति मागधिकाम्

ठिओ, तेण साहुणा तस्स कहियं–जहा एस तुब्भ पिया, किमभिण्णाणं ?, तेण भणियं–अहंपि जाणामि, किं पुण एसो कहिहिइ, तेण छगलगेण पुव्वभवे पुत्तेण समं निहाणगं निहियं, तं गंतूण पाएहिं खडखडेइ, एयमभिन्नाणं, पच्छा तेण मुक्को, साहुसमीवे धम्मं सोउण भत्तं पच्चक्खाएऊण देवलोयं गतो। एवं तेण सरणमिति काउं तडागारामे जण्णो य पवत्तिओ, तमेव असरणं जायं। एवंविधोऽत्र समवतारः–एवं तुम्हं अम्हे गया सरणं। इह च पूर्वकं मनुष्यजातेस्त्रसस्य स्मरणार्थमुदाहरणत्रयमिदं तु तिर्यग्जातेरिति भावनीयम्। सो तहेव तस्स आहरणगाणि घित्तूण सिग्घं गंतुं समाढत्तो पंथे, णवरिं संजइं पासति मंडियंटिविडिक्कियं, तेण सा भण्णइ—

कडए ते कुंडले य ते, अंजियक्खि! तिलयते य ते।
पवयणस्स उड्डाहकारिए! दुट्ठा सेहि! कतोऽसि आगया? ॥ १३९ ॥

---

१ स्थितः, तेन साधुना तस्मै कथितं—यथैष तव पिता, किमभिज्ञानम् ?, तेन भणितम्—अहमपि जानामि, किं पुनरेष कथयिष्यति, तेन छगलकेन पूर्वभवे पुत्रेण समं निधानं निहितं, तद्गत्वा पादाभ्यां खटत्कारयति, एतदभिज्ञानं, पश्चात् तेन मुक्तः, साधुसमीपे धर्मं श्रुत्वा भक्तं प्रत्याख्याय देवलोकं गतः। एवं तेन शरणमितिकृत्वा तटाकारामो यज्ञश्च प्रवर्त्तितौ, त एवाशरणं जातम्। एवं युष्मान् वयं गताः शरणं। स तथैव तस्याभरणानि गृहीत्वा शीघ्रं गन्तुं समाढतः पथि, नवरं संयतीं पश्यति अलङ्कारोद्भटां, तेन सा भण्यते–

भासाए धुधुयइ अप्पणा चेव सोयमाणो, जहा मम चेव मए पवत्तिय, एव सो वेवमाणो साहुणा अतिसयणाणिणा एगेण दीसति, तेण भणिय—

सयमेव य लुक्ख लोविया, अप्पणिआ य वियड्डि खाणिया ।
ओवाइयलद्धओ य सि, कि छेला ! वेवेति वाससी ? ॥ १३८ ॥

व्याख्या—सयमेव च–आत्मनैव च 'रुक्ख'त्ति सुब्लोपाद्वृक्षा रोपिता, भवतेति गम्यते, आत्मीया च 'वियड्डि'त्ति देशीवचनत तडागिका खानिता, याचितस–प्रार्थितस्य प्रासेरुपरि देवेभ्यो देयमुपयाचित तेनैव लब्ध–अवसर दुरापत्वेनोपयाचितलब्ध स एवोपयाचितलब्धकोऽसि त्वमिति, किं छगलक ! 'वेवेति वाससि ?–आरससीति मागधिकार्थं ॥१३८॥ततो सो छगलको तेण पढिएण तुण्हिको ठिओ, तेण धिज्जाइएण चिंतिय–किंपि पव्वइयगेण पढिय, तेण एस तुण्हिको ठिओ, तओ सो तवस्सि भणति–कि भगव ! एस छगलको तुब्भेहि पढियमेत्ते चेव तुण्हिको

१ भापया वुवुत्करोति आत्मनैव शोचन्, यथा ममैव मया प्रवर्त्तितम्, एव स वेपमान साधुना अतिशयज्ञानिना एकेन दृश्यते, तेन भणित—। २ तत स छगलकस्तेन पठितेन तूष्णीक स्थित, तेन धिग्जातीयेन चिन्तित–किमपि प्रव्रजितकेन पठित, तेनैष तूष्णीक स्थित, तत स तपस्विन भणति—किं भगवन् ! एष छगलको युष्माभि पठितमात्रे एव तूष्णीक

फांसुयएसणिज्जं इमं मोयगादि संवलो घेप्पति, सो णिच्छइ, भायणे आभरणगाणि छूढाणि मा दीसिहिंति, तेण दंडिएण वला मोडिऊण पडिग्गहो गहिओ, जाव मोयगे छुहति ताव पेच्छइ आभरणयाणि, तेण सो खरंटिओ उवालद्धो य, पुणोऽवि संवोहिओ—जहा न जुज्जइ तुम्हं एवं विपरिणामो, मज्झं च अणागमणकारणं सुणेसु—संकंतदिव्वपेमा विसयपसत्ताऽसमत्तकत्तव्वा। अणहीणमणुयकज्जा नरभवमसुहं न इंति सुरा ॥ १ ॥ पच्छा दिव्वं देवरूवं काऊण पडिगतो। तेण पुव्विं दंसणपरीसहो नाहियासितो, पच्छा अहियासितो ॥ एवं शेषसाधुभिरपि सहनीयो दर्शनपरीषहः ॥ इहोदाहरणोपदर्शकत्वात् प्रकृतनिर्युक्तेः कथं सूत्रस्पर्शकत्वमिति यत्कैश्चिदुच्यते, तदयुक्तं, सूत्रसूचितार्थाभिधायित्वात् तस्याः, तदभिधानस्य तत्त्वतः सूत्रव्याख्यानरूपत्वेन सूत्रस्पर्शकत्वादिति। किं च—'कालीपव्वंगसंकासे'इत्यादिना क्षुदादिभिरत्यन्तपीडितस्यापि यत्परीषहणमुक्तं, तत्र मन्दसत्त्वस्य कस्यचिदश्रद्धानात् सम्यक्त्वविचलितमपि सम्भवेदिति तद्दृढीकारार्थं दृष्टान्ताभिधानमर्थतः सूत्रस्पर्शकमिति व्यक्तमेवैतत्, न च केपाञ्चि-

---

१ प्रासुकैषणीयमिदं मोदकादि शम्बलो गृह्यतां, स नेच्छति, भाजने आभरणानि क्षिप्तानि मा दर्शीति, तेन दण्डिकेन बलादामोट्य प्रतिग्रहो गृहीतः, यावन्मोदकान् क्षिपति तावत्पश्यति आभरणानि, तेन स तिरस्कृतः उपालब्धश्च, पुनरपि संबोधितः—यथा न युज्यते युष्माकमेवं विपरिणामः, मम चानागमनकारणं शृणु—संक्रान्तदिव्यप्रेमाणो विषयप्रसक्ता असमाप्तकर्त्तव्याः। अनधीनमनुजकार्या नरभवमशुभं नायान्ति सुराः ॥ १ ॥ पश्चाद्दिव्यं देवरूपं कृत्वा प्रतिगतः। तेन पूर्वं दर्शनपरीषहो नाध्यासितः पश्चात् अध्यासितः ॥

व्याख्या—कटके च 'ते' तव कुण्डले च ते अञ्जिताक्षि ! तिलकश्च 'ते' त्वया कृत , प्रवचनस्य उड्डाहकारिके ! दुष्टशिक्षिते कुतोऽस्यागतेति मागधिकार्थ ॥ १३९ ॥ दर्शनपरीक्षार्थं च साध्वीविकरण । सैवमुक्ता सतीदमाह—

राईसरिसवमित्ताणि, परछिद्दाणि पाससि । अप्पणो विल्लमित्ताणि, पासतोऽवि न पाससि ॥ १४० ॥

व्याख्या—राजिकासर्षपमात्राणि परच्छिद्राणि पश्यस्यात्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसीति श्लोकार्थ ॥ १४० ॥ तथा—

समणोऽसि सजओ असि, बभयारी समलेट्ठुकचणे। वेहारियवाअओ य ते, जिट्ठज्जा! किं ते पडिग्गहे? १४१

व्याख्या—श्रमणोऽसि सयतोऽसि बहिर्वृत्त्या ब्रह्मचारी समलोष्ठकाञ्चनो विहारिकवातकश्च ते–यथाऽह वैहारिक इत्यादिरूपो ज्येष्ठार्य ! किं 'ते' तव पतद्ग्रहक इति श्लोकार्थ ॥ १४१ ॥ एव ताए उड्डाहितो समाणो पुणोऽवि गच्छति, णवर पेच्छति खधावारमित, तस्स किर णीवट्टमाणो दडियस्सेव सवडहुत्तो गतो, तेण हत्थिखधा ओरुहित्ता वदितो भणिओ य–भयव ! अहो परम मगल निमित्त च ज साहू अज्ज मए दिट्ठो, भयव ! ममाणुग्गहत्थ

१ एव तया निर्भर्त्सित सन् पुनरपि गच्छति, नवर पश्यति स्कन्धावारमायान्त, तस्मात् किल निवर्तमानो दण्डिकस्यैव सपक्ष गत , तेन हस्तिस्कन्धादवतीर्य वन्दित भणितश्च–भगवन् ! अहो परम मङ्गल निमित्त च यत्साधुरद्य मया दृष्ट , भगवन् ! ममानुग्रहार्थं

दिह्वोदाहरणाना निर्युक्तिकालादर्वाकालभावितेत्य योक्तत्वमाशङ्कनीयं, स हि भगवाश्चतुर्दशपूर्ववित् श्रुतकेवली कालत्रयविपय वस्तु पश्यत्येवेति कथमन्यकृतत्वाशङ्केति ॥ सम्प्रत्यध्ययनार्थोपसहारमाह—

एए परीसहा सवे, कासवेण पवेइया। जे भिक्खू ण विहण्णिज्जा, पुट्ठो केणइ कण्हुइ ॥ ४६ ॥ (सूत्रम्)

व्याख्या—'एते' अनन्तरमुपदर्शितस्वरूपा, 'परीषहा' क्षुदादय 'सर्वे' द्वाविंशतिसख्या अपि न तु कियन्त एव 'काश्यपेन' श्रीमन्महावीरेण 'प्रवेदिता' प्ररूपिता, 'जे'त्ति यानुक्तन्यायेन ज्ञात्वेति शेष, 'भिक्षु' यतिर्नैव 'विहन्येत' पराजीयेत, कोऽर्थ ?—सयमात्पात्येत, 'स्पृष्टो' बाधित केनापि प्रक्रमाद्द्वाविंशतेरेकतरेण दुर्जयेनापि परीषहेण 'कण्हुइ'त्ति कुत्रचित् देशे काले वा इति सूत्रार्थ ॥ ४६ ॥ इति परिसमाप्तौ, ब्रवीमीति सुधर्मस्वामी जम्बूस्वामिनमाह। नया पूर्ववत्। इति श्रीशान्तिसूरिविरचिताया शिष्यहितायामुत्तराध्ययनटीकाया द्वितीयमध्ययन समाप्तमिति ॥

द्वितीयमध्ययन समाप्तम् ॥



मन्यतरद्विवक्षितम्, अकाराद्यक्षरात्मिकाया वा मातृकाया एकतरोऽकारादिः, सङ्ग्रहैकक: येनैकेनापि ध्वनिना बहवः संगृह्यन्ते, यथा जातिप्राधान्ये व्रीहिरिति, पर्यायैकक: शिवकादिरेकक: पर्यायो, भावैकक: औदयिकादिभावानामन्यतमो भाव इति गाथार्थः ॥ १४२ ॥ इत्थमविनाभाविताऽऽक्षिप्तमेककं निक्षिप्य प्रस्तुतमेव चतुष्कं निक्षेप्तुमाह—

णामं ठवणा दविए खित्ते काले य गणण भावे य । निक्खेवो य चउण्हं गणणसंखाइ अहिगारो ॥१४३॥

व्याख्या—तत्र नामस्थापने क्षुण्णे, 'द्रव्ये' विचार्ये सचित्ताचित्तमिश्राणि द्रव्याणि चतुःसङ्ख्यतया विवक्षितानि, 'क्षेत्रे' चतुःसङ्ख्यापरिच्छिन्ना आकाशप्रदेशा यत्र वा चत्वारो विचार्यन्ते, 'काले च' चत्वारः समयावलिकादयः कालभेदाः यदा वा अमी व्याख्यायन्ते, गणनायां चत्वार एको द्वौ त्रयश्चत्वार इत्यादिगणनान्तःपातिनो, भावे च चत्वारो मानुपत्वादयोऽभिधास्यमाना भावाः, एषां मध्ये केनाधिकारः ?, उच्यते, गणनासङ्ख्ययाऽधिकारः, किमुक्तं भवति ?—गणनाचतुर्भिरधिकारः, तैरेव वक्ष्यमाणानामङ्गानां गण्यमानतया तेषामेवोपयोगित्वादिति गाथार्थः॥१४३॥ इदानीमङ्गनिक्षेपमाह—

णामंगं ठवणंगं दव्वंगं चेव होइ भावंगं । एसो खलु अंगस्सा णिक्खेवो चउविहो होइ ॥ १४४ ॥

नम श्रुतदेवतायै ॥ उक्त परिपहाध्ययन, सम्प्रति चतुरङ्गीयमारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तराध्ययने परीपहसहनमुक्त, तच्च किमालम्बनमुररीकृत्य कर्त्तव्यमिति प्रश्नसम्भवे मानुपत्वादिचतुरङ्गदुर्लभत्व तदालम्बनमनेनोच्यते इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य चत्वार्यनुयोगद्वाराणि व्यावर्णनीयानि तावद्यावन्नामनिष्पन्नो निक्षेप, तत्र च चतुरङ्गीयमिति द्विपद नाम, अतश्चत्वारो निक्षेसव्या अङ्ग च, न चैक विना चत्वार इत्येक एव तावन्निक्षेपमर्हतीति मन्वान आह निर्युक्तिकृत्—

णामठावणादविए माउयपय सगहिक्कए चेव । पज्जव भावे य तहा सत्तेए इक्कगा हुति ॥ १४२ ॥

व्याख्या—इहैककशब्दस्यैकत्र निर्दिष्टस्यापि प्रक्रान्तत्वेन सर्वत्र सम्बन्धात्, नामैकक स्थापनैकको द्रव्यैकक, 'मा उयपय'त्ति सुपो लोपान्मातृकापदैकक सङ्ग्रहैकक, 'च' समुच्चये, एवेति पूरणे, 'पज्जव'त्ति प्राग्वत् पर्यवैकक 'भावे' भावैकक, 'च' पूर्ववत्, तथे'ति शेपाणामपि निरुपचरितवृत्तितया तुल्यत्वमाह, उपसहर्तुमाह—'सत्तेते' अनन्तरोक्ता एकका भवन्ति, एतद्व्याख्या च दशवैकालिकनिर्युक्तावेव निर्युक्तिकृता कृतेत्यत्रोदासित, स्थानाशून्यार्थं तु तदुक्तमेव किञ्चिदुच्यते—तत्र नामैकको यस्यैकक इति नाम, स्थापनैकक पुस्तकादिन्यस्त एककाङ्क, द्रव्यैकक सचित्तादिस्त्रिधा—तत्र सचित्त एकक पुरुपादिरर्थे, अचित्त फलकादि, मिश्रो वस्त्रादिविभूपित पुरुपादिरेव, मातृकापदैकक 'उप्पण्णे इ वा विगमे इ वा धुवे इ वा' इति, एपा मातृकावत्सकलवाङ्मयमूलतयाऽवस्थिताना-

व्याख्या—तत्र 'जमदग्निजटा' वालकः 'हरेणुका' प्रियङ्गुः 'शवरनिवसनकं' तमालपत्रं, 'सपिण्णियं'ति पिन्नि-पिन्निका ध्यामकाख्यं गन्धद्रव्यं तया सह सपिन्निकं, वृक्षयस्य च वाह्या त्वक् चातुर्जातकाङ्गं प्रतीतैव 'मल्लियवासियं'ति मल्लिका जातिस्तद्वासितमनन्तरोक्तद्रव्यजातं, चूर्णीकृतमिति गम्यते, कोटिम् 'अग्घेइ'त्ति अर्हति, कोटिमूल्यार्हं भवति, महार्घतोपलक्षणं चैतत् ॥ १४६ ॥ तथा 'ओसीरं' प्रसिद्धं, 'हीवेरो' वालकः, पलं पलमनयोः, तथा 'भद्रदारोः' देवदारोः कर्षः, 'सयपुप्फाणं'ति वचनव्यत्ययात् शतपुष्पाया भागो, भागश्च तमालपत्रस्य, भाग इह पलिकामात्रम् ॥ १४७ ॥ अस्य माहात्म्यमाह—एतत् स्नानमेतद्विलेपनमेप चैव पटवासः 'वासवदत्तया' चण्डप्रद्योतदुहित्रा 'कृतो' विहितः 'उदयनं' वीणावत्सराजम् 'अभिधारयन्त्या' चेतसि वहन्त्या, अनेन परचित्ताक्षेपकत्वमस्य माहात्म्यमुक्तमिति सूत्रार्थः ॥ १४८ ॥ औपधाङ्गमाह—

दुन्नि य रयणी माहिंदफलं च तिण्णि य समूसणंगाइं । सरसं च कणयमूलं एसा उदगट्ठमा गुलिआ ॥
एसा उ हरइ कंडुं तिमिरं अवहेडयं सिरोरोगं । तेइज्जगचाउत्थिग मूसगसप्पावरद्धं च ॥ १५० ॥

व्याख्या—'द्वे रजन्यौ' पिण्डदारुहरिद्रे 'माहेन्द्रफलं च' इन्द्रयवाः, त्रीणि च समूपणं-त्रिकटुकं तस्याङ्गानि-सुण्ठीपिप्पलीमरिचद्रव्याणि, 'सरसं च' आर्द्रं 'कनकमूलं' विल्वमूलमेपा 'उदकाष्टमे'त्युदकमष्टमं यस्यां सा तथा,

व्याख्या—नामाङ्ग स्थापनाङ्ग द्रव्याङ्ग चैव भवति भावाङ्गम्, एतत् खलु 'अङ्गस्सा' इति प्राकृतत्वात् अङ्गस्य निक्षेपश्चतुर्विधो भवतीति गाथासमासार्थं ॥ १४४ ॥ अत्र च नामस्थापने प्रसिद्धत्वादनादृत्य द्रव्याङ्गमभिधित्सुराह—

गधगमोसहग मज्जाउज्जसरीरजुद्धग। एत्तो इक्किक्कपि य णेगविह होइ णायव ॥ १४५ ॥

व्याख्या—'गन्धाङ्गम्' औषधाङ्गम्, 'मज्जाउज्जसरीरजुद्धग'ति बिन्दोरलाक्षणिकत्वादङ्गशब्दस्य च प्रत्येकमभिसम्बन्धात् मद्याङ्गमातोद्याङ्ग शरीराङ्ग युद्धाङ्गमिति षड्विध द्रव्याङ्गम्, 'एत्तो'त्ति सुब्व्यत्ययादेषु-गन्धाङ्गादिषु मध्ये एकैकमपि च अनेकविध भवति ज्ञातव्यमिति गाथाक्षरार्थ ॥ १४५ ॥ भावार्थं तु विवक्षुराचार्यो 'यथोद्देश निर्देश' इति न्यायमाश्रित्य गन्धाङ्ग प्रतिपादयन्नाह—

जमदग्गिजडा हरेणुअ सवरनियसणिय सपिण्णिय। रुक्खस्स य वाहितया मल्लियवासिय कोडी अग्घइ
ओसीरहरिवेराण पल पल भद्ददारुणो करिसो। सयपुप्फाण भागो भागो य तमालपत्तस्स ॥ १४७ ॥
एय ण्हाण एय विलेवण एस चेव पडवासो। वासवदत्ताइ कओ उदयणमभिधारयतीए ॥ १४८ ॥

भवति, आमोडकः पुष्पोन्मिश्रो वालवन्धविशेषः, स्फारत्वादस्य, इत्थं दृष्टान्ताभिधायितयेदं व्याख्यायते, प्रसङ्गतो वाऽस्यङ्गामोडकाङ्गयोरप्यभिधानमिति सूत्रार्थः ॥ १५२ ॥ शरीराङ्गमाह—

सीसं उरो य उदरं पिट्ठी बाहा य दुन्नि ऊरू य । एए खलु अट्ठंगा अंगोवंगाइ सेसाइं ॥ १५३ ॥

व्याख्या—'शिरश्च उरः, चः प्राग्वद्, उदरं 'पिट्ठि'त्ति प्राकृतत्वात्पृष्ठं बाहू द्वौ उरू च एतान्यष्टाङ्गानि, प्राग्वल्लिङ्गव्यत्ययः, 'खलुः' अवधारणे, एतान्येवाङ्गानि, अङ्गोपाङ्गानि 'शेषाणि' नखादीनि, उपलक्षणत्वादुपाङ्गानि च कर्णादीनि, यत उक्तम्—"होंति उवंगा कण्णा णासच्छी जंघ हत्थ पाया य । णह केस मंसु अंगुलि ओट्ठा खलु अंगुवंगाइं ॥ १ ॥" इति गाथार्थः ॥ १५३ ॥ साम्प्रतं युद्धाङ्गमाह—

जाणावरणपहरणे जुद्धे कुसलत्तणं च नीई अ । दक्खत्तं ववसाओ सरीरमारोग्गया चेव ॥ १५४ ॥

व्याख्या—'जाणावरणपहरणे'त्ति यानं च—हस्त्यादि, तत्र सत्यपि न शक्नोत्यभिभवितुं शत्रुम् अत आवरणं—कवचादि, सत्यप्यावरणे प्रहरणं विना किं करोतीति प्रहरणं च—खड्गादि, यानावरणप्रहरणानि, यदि युद्धे कुशलत्वं नास्ति किं यानादिना ? इति 'युद्धे' सङ्ग्रामे 'कुशलत्वं च' प्रावीण्यरूपं, सत्यप्यस्मिन्नीतिं विना न शत्रुजयनम्

१ भवन्त्युपाङ्गानि कर्णौ नासाऽक्षिणी जङ्घे हस्तौ पादौ च । नखाः केशाः श्मश्रूणि अङ्गुलय ओष्ठौ खल्वङ्गोपाङ्गानि ॥ १ ॥

'गुटिका' वटिका, अस्या फलमाह—एषा तु हन्ति कण्डु तिमिरम् 'अवहेडय'न्ति अर्द्धशिरोरोग समस्तशिरोव्यथ, 'तेइज्जगचाउत्थिग'त्ति सुब्लोपे तार्त्तीयीकचातुर्थिकौ, रूढ्या ज्वरौ, 'मूषकसर्प्पापराद्धम्' उन्दरादिदष्ट, च समुच्चय इति गाथाद्वयार्थ ॥ १४९–१५० ॥ मद्याङ्गमाह—

सोलस दक्खा भागा चउरो भागा य धाउगीपुप्फे । आढगमो उच्छुरसे मागहमाणेण मज्जग ॥१५१॥

व्याख्या—षोडश द्राक्षा भागाश्चत्वारो भागाश्च 'धातकीपुप्फे' धातकीपुष्पविषया 'आढगमो'त्ति आर्षत्वादाऽऽढकक 'इक्षुरसे' इक्षुरसविषये, आढक इह केन मानेनेत्याह—'मागधमानेन' दो असती पसती उ' इत्यादिरूपेण 'मद्याङ्ग' मदिराकारण भवतीति गाथार्थ ॥ १५१ ॥ आतोद्याङ्गमाह—

एग मुगुदा तूर एग अहिमारुदारुय अग्गी । एग सामलीपुड वद्ध आमेलओ होइ ॥ १५२ ॥

व्याख्या—'एकमुकुन्दा तूर्यम्' इति एकैव मुकुन्दा वादित्रविशेषो गम्भीरस्वरत्वादिना तूर्यकार्यकारित्वात् तूर्यम्, अनेनास्याविशिष्टमातोद्याङ्गत्वमेवाह, किमेवैकैव मुकुन्दा तूर्यम् ?, सोपस्कारत्वाद्यथैकमभिमारस्य वृक्षविशेषस्य दारुककाष्ठमभिमारदारुकम् 'अग्नि' विशेषतोऽग्निजनकत्वाद्, यथा वा 'एक शाल्मलीपोण्ड' शाल्मलीपुष्प वद्धमामोडको

१ द्वे असत्यौ प्रसृतिस्तु

धर्मोकर्णनं, 'श्रद्धा' धर्मकरणाभिलाषः, तपः—अनशनादिः तत्प्रधानः संयमः—पञ्चाश्रवविरमणादिस्तपःसंयमः, मध्यपदलोपी समासः, तपश्च संयमश्च तपःसंयममिति समाहारो वा तस्मिन्, 'वीर्यं च' वीर्यान्तरायक्षयोपशमसमुत्था शक्तिः, अस्य च द्विष्ठस्याप्येकत्वेन विक्षितत्वान्नोक्तसङ्ख्याविरोधः, एतानि भावाङ्गानि, 'खलु' निश्चितम् दुर्लभकानि भवन्ति संसारे, लिङ्गव्यत्ययश्च प्राकृतत्वाद्, एतच्चानुक्तावपि सर्वत्र भावनीयमिति गाथार्थः ॥१५६॥ इह द्रव्याङ्गेषु शरीराङ्गं भावाङ्गेषु च संयमः प्रधानमिति तदेकार्थिकान्याह—

अंग दसभाग भेए अवयवाऽसगल चुण्ण खंडे अ। देस पएसे पव्वे साह पडल पज्जवखिले अ ॥ १५७ ॥

दया य संजमे लज्जा, दुगुञ्छाऽछलणा इअ। तितिक्खा य अहिंसा य, हिरि एगट्ठिया पया ॥१५८ ॥

व्याख्या—अङ्गं दशभागो भेदोऽवयवोऽसकलश्चूर्णः खण्डो देशः प्रदेशः पर्व शाखा पटलं पर्यवखिलं चेति शरीराङ्गपर्याया इति वृद्धाः। व्याख्यानिकस्तु अविशेषतोऽमी अङ्गपर्यायाः, तथा दशभाग इति दशा भाग इति च भिन्नावेव पर्यायावित्याह। चः समुच्चये, सूत्रत्वाच्च सुपः क्वचिदश्रवणमिति ॥ संयमपर्यायानाह—दया च संयमो लज्जा जुगुप्साऽछलना, इतिशब्दः स्वरूपपरामर्शकः पर्यन्ते योक्ष्यते, तितिक्षा चाहिंसा च ह्रीश्चेत्येकार्थिकानि—अभिन्नाभिधेयानि पदानि सुबन्तशब्दरूपाणि, पर्यायाभिधानं च नानादेशजविनेयानुग्रहार्थमिति गाथाद्वयार्थः ॥१५७–१५८॥ क्षेत्रादिदुर्लभत्वोपलक्षणं चेह मानुष्यत्वादिदुर्लभत्वाभिधानमित्यभिप्रायेणाह—

अतो 'नीतिश्च' अपक्रमादिलक्षणा, सत्यामपि चास्या दक्षत्वाधीनो जय ततो 'दक्षत्वम्' आशुकारित्व, सत्यप्यस्मिन्निर्व्यवसायस्य कुतो जय इति 'व्यवसायो' व्यापार , तत्रापि यदि न शरीरमहीनाङ्ग ततो न जय इति शरीरम्-अर्थात् परिपूर्णाङ्ग, तत्राप्यारोग्यमेव जयायेति 'आरोग्गय'त्ति अरोगता, च समुच्चये, एवोऽवधारणे, तत समुदितानामेवैषा युद्धाङ्गत्वमिति सूत्रार्थ ॥ १५४ ॥ भावाङ्गमाह—

भावगपि य दुविह सुअमग चेव नोसुयग च । सुयमग वारसहा चउव्विह नोसुअग च ॥ १५५ ॥

व्याख्या—भावाङ्गमपि च द्विविध 'सुयमङ्ग चेव'त्ति श्रुताङ्ग चैव नोश्रुताङ्ग च, श्रुताङ्ग द्वादशधा—आचारादि, भावाङ्गता चास्य क्षायोपशमिकभावान्तर्गतत्वात्, उक्त–हि—"[1]भावे खओवसमिए दुवालसगपि होइ सुयणाण'ति, 'चतुर्विधम्' चतुष्प्रकार नोश्रुताङ्ग तु, नोशब्दस्य सर्वनिषेधार्थत्वात् अश्रुताङ्ग पुन , मकारश्च सर्वत्रालाक्षणिक इति गाथार्थ ॥ १५५ ॥ एतदेवाह—

माणुस्स धम्मसुई सद्धा तवसजमंमि विरिअ च । एए भावगा खलु दुल्लभगा हुति ससारे ॥ १५६ ॥

व्याख्या—'मानुष्यम्' मनुजत्वम् , अस्य चादावुपन्यास एतद्भाव एव शेषाङ्गभावात्, 'धर्मश्रुति' अर्हत्प्रणीत

१ भावे क्षायोपशमिके द्वादशाङ्गमपि भवति श्रुतज्ञानमिति

चुल्लग पासग धन्ने जूए रयणे अ सुमिण चक्के य। चम्म जुगे परमाणू दस दिट्ठंता मणुअलंभे ॥१६०॥

व्याख्या—'चोल्लगं' परिपाटीभोजनम्, पाशको धान्यं द्यूतं रत्नं च 'सुमिण'त्ति स्वप्नः चक्रं च चर्म युगं परमाणुर्दश दृष्टान्ता 'मणुयलम्भे'त्ति भावप्रधानत्वान्निर्देशस्य मनुजत्वप्राप्ताविति गाथासमासार्थः ॥ १६० ॥ व्यासार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—

"बंभदत्तस्स एगो कप्पडितो ओल [य] ग्गतो बहुसु आवईसु अवत्थासु य सवत्थ सहातो आसि, सो य रज्जं पत्तो, वारससंवच्छरितो अहिसेतो, कप्पडिओ तत्थ अल्लियावंपि न लहइ, ततो अणेण उवातो चिंतितो—उवाहणाउ पवंधेऊण धयवाहेहिं समं पहावितो, रण्णा दिट्ठो, उइण्णेणं अवगूहितो, अन्ने भणंति—तेण दारपालं सेवमाणेण वारसमे संवच्छरे राया दिट्ठो, ताहे राया तं दट्ठूणं संभंतो, इमो सो वरातो मम सुहदुक्खसहायगो, एत्ताहे करेमि वित्तिं, ताहे भणइ—किं देमित्ति ?, सोऽवि भणति—देहि करचोल्लए घरे घरे जाव सवंमि भरहे णिट्ठियं, ताहे पुणोऽवि

१ ब्रह्मदत्तस्यैकः कार्पटिकोऽवलगको बह्वीष्वापत्सु अवस्थासु च सर्वत्र सहाय आसीत्, स च राज्यं प्राप्तः, द्वादशसांवत्सरिकोऽभिषेकः, कार्पटिकस्तत्राश्रयणमपि न लभते, ततोऽनेनोपायश्चिन्तितः—उपानहः प्रबध्य ध्वजवाहकैः समं प्रधावितः, राज्ञा दृष्टः, अवतीर्णेनावगूढः अन्ये भणन्ति—तेन द्वारपालं सेवमानेन द्वादशे वर्षे राजा दृष्टः, तदा राजा तं दृष्ट्वा संभ्रान्तः, अयं स वराकः मम सुखदुःखसहायः, अधुना करोमि वृत्तिं, तदा भणति—किं ददामीति ?, सोऽपि भणति—देहि करभोजनं गृहे गृहे यावत्सर्वस्मिन् भरते निष्ठितं ( भवति ), तदा पुनरपि

**माणुस्स खित्त जाई कुल रूवारोग्ग आउयं बुद्धी। सवणुग्गह सद्धा संजमो अ लोगमि दुलहाइ ॥१५९॥**

व्याख्या—'मानुष्यम्' मनुष्यभाव 'क्षेत्रम्' आर्य 'जाति' मातृसमुत्था 'कुल' पितृसमुत्थम् 'रूपम्' अन्यूनाङ्गता 'आरोग्य' रोगाभाव 'आयुष्य' जीवित 'बुद्धि' परलोकप्रवणा 'श्रवण' धर्म्मसम्बद्धम् 'अवग्रह' तदवधारणम्, अथवा श्रवणा –तपस्विन तेषामवग्रह –सुन्दरा एत इत्यवधारण श्रवणावग्रह, श्रद्धा संयमश्च प्राग्वत्, एतानि लोके दुर्लभानि, प्राक् चतुर्णां दुर्लभत्वमुक्तम्, इह तु मानुषत्व क्षेत्रादीनामायुष्कपर्यन्तानामुपलक्षण, श्रवण च शुश्रवग्रहयो, पुनश्च मानुषत्वादीनामिहाभिधान विशिष्टक्षेत्रादियुक्तानामेवैषा मुक्त्यङ्गत्वमिति ख्यापनार्थम्, केचिदेतत्स्थाने पठन्ति "इन्दियलद्धी निव्वत्तणा य पज्जत्ति निरुवहय खेम । धाणारोग्ग सद्धा गाहग उवओग अट्ठो य ॥ १ ॥" 'इन्द्रियलब्धि' पञ्चेन्द्रियप्राप्ति 'निर्वर्त्तना च' इन्द्रियाणामेव निष्पादना 'पर्याप्ति' समस्तपर्याप्तिता 'णिरुवहय'त्ति निरुपहतम्, उपहतेरभावात्, सा च गर्भस्थस्य कुब्जत्वादिभिर्जातस्य च भित्त्यादिभि, 'क्षेमम्' देशसौस्थ्यम् 'ध्राणम्' सुभिक्ष विभवो वा 'आरोग्यम्' नीरोगता 'श्रद्धा' उक्तरूपा 'ग्राहक' शिक्षयिता गुरु 'उपयोग' स्वाध्यायाद्युपयुक्तता 'अर्थ' धर्म्मविषयमर्थित्वम्, एतानि दुर्लभानीति गम्यते, इह च पुन श्रद्धाग्रहण तन्मूलत्वादशेषकल्याणाना तस्या दुर्लभतरत्वख्यापनार्थमिति गाथार्थ ॥ १५९ ॥ यदुक्त–'मनुष्यादिभावाङ्गानि दुर्लभानि' इति, तत्र मानुष्याङ्गदुर्लभत्वसमर्थनाय दृष्टा तमा(ताना)ह—

तो थालं गिण्हउ, तो अह अहं जिणामि तो एगं दीणारं जिणामि, तस्स इच्छाए जंतं पडति अतो न तीरइ जिणिउं, जह सो ण जिप्पइ एवं माणुसलंभोऽवि । अवि णाम सो जिप्पेज्ज ण य माणुसाओ भट्ठो पुणो माणुसत्तणं २ ॥

'धण्णे'त्ति जत्तियाणि भरहे धण्णाणि ताणि सव्वाणि पिंडियाणि, एत्थ पत्थो सरिसवाण छूढो, ताणि सव्वाणि अदूयालियाणि, तत्थेगा जुण्णा थेरी सुप्पं गहाय ते विणेज्जा, पुणोऽवि पत्थं पूरेज्जा ?, अवि सा दिव्वपसाएण पूरेज्ज न वि माणुसत्तणं ३ ॥

'जूए' जहा एगो राया, तस्स सभा अट्ठोत्तरखंभसयसन्निविट्ठा, जत्थ अत्थाणियं देइ, एक्केको य खंभो अट्ठसयंसितो, तस्स रण्णो पुत्तो रज्जकंखी चिंतेइ—थेरो राया, मारेऊणं रज्जं गेण्हामि, तं चामच्चेण णायं, तेण रण्णो सिट्ठं, तओ

१ तदा स्थालं गृह्णातु, अथ अहं जयामि तदा दीनारमेकं जयामि, तस्येच्छया यत्त्वं पतति, अतो न शक्यते जेतुं, यथा स न जीयते एवं मानुष्यलाभोऽपि । अपि नाम स जीयेत न च मानुष्याद्भ्रष्टः पुनर्मानुष्यम् २ ॥ धान्यानीति, यावन्ति भरते धान्यानि तानि सर्वाणि पिण्डितानि, अत्र प्रस्थः सर्षपाणां निक्षिप्तः, तानि सर्वाणि मिश्रितानि, तत्रैका वृद्धा स्थविरा सूर्पं गृहीत्वा तानि पृथक्कुर्यात्, पुनरपि प्रस्थं पूरयेत् ?, अपि सा दिव्यप्रसादेन पूरयेत् नैव मानुष्यम् ३ ॥ द्यूतम्—यथैको राजा, तस्य सभा अष्टोत्तरस्तम्भशतसन्निविष्टा, यत्र आस्थानिकां करोति, एकैकश्च स्तम्भोऽष्टशतास्त्रिकः, तस्य राज्ञः पुत्रो राज्यकाङ्क्षी चिन्तयति—स्थविरो राजा, मारयित्वा राज्यं गृह्णामि, तच्चामात्येन ज्ञातं, तेन राज्ञे शिष्टं, ततो

तुम्ह घरे आढवेऊण भुजामि, राया भणइ–कि ते एएण ?, देस ते देमि, तो सुह छत्तच्छायाए हत्थिखधवरगतो हिंडिहिसि, सो भणइ–किं मम एद्दहेण आउट्टेण ?, ताहे से दिण्णो चोल्लगो, तओ पढमदिवसे रायाणो घरे जिमितो, तेण से जुवलय दीणारो य दिण्णो, एव सो परियाडीए सुसज्जेसु राउलेसु बत्तीसाए रायवरसहस्सेसु, तेर्सि खद्धा भोइया, तत्थ य णयरीए अणेगाओ कुलकोडीओ, णगरस्स चेव सो कया अत काही ?, ताहे गामेसु, ताहे पुणो भारहवासस्स । अवि सो वचेज्ज अत, ण य माणुसत्तणाओ भट्ठो पुणो माणुसत्तण लहइ १ ॥

'पासग'त्ति चाणक्कस्स सुवण्ण णत्थि, ताहे केणवि उवाएण विढविज्जा सुवण्ण, ताहे जतपासया कया, केई भणति–वरदिण्णया, ततो एगो दुक्खो पुरिसो सिक्खावितो, दीणारथाल भरिय, सो भणइ–यदि मम कोइ जिणइ

---

१ तव गृहादारभ्य भुञ्जे, राजा भणति–कि ते एतेन ?, देश तुभ्य ददामि, तव सुख छत्रच्छायया हस्तिवरस्कधगतो हिण्डिष्यसे, स भणति–किं ममैतावताऽऽकुट्टेन ?, तदा तस्मै दत्त करभोजन, तत प्रथमदिवसे राज्ञो गृहे जिमित , तेन तस्मै युगलक दत्त दीनारश्च, एव स परिपाट्या सुसज्जेषु राजकुलेषु द्वात्रिंशति वरराजसहस्रेषु, तैरतिशयेन भोजित , तत्र च नगर्यामनेका कुलकोट्य , नगरस्यैव स कदा अन्त करिष्यति ?, तदा ग्रामेषु, तदा पुनर्भरतवर्षस्य । अपि स व्रजेदन्त, न च मानुष्याद्भ्रष्ट पुनर्मानुष्य लभते १ ॥ पाशका इति, चाणक्यस्य सुवर्णं नास्ति, तदा केनाप्युपायेन अर्जनीय सुवर्ण, तदा यन्त्रपाशका कृता , केचिद्भणन्ति–वरदत्ता , तत एको दक्ष पुरुषः शिक्षित , दीनारस्थाल भृत , स भणति–यदि मा कोऽपि जयति

'सुविणए'त्ति एगेण कप्पडिएण सुविणते चंदो गिलितो, कप्पडियाण य कहियं, ते भणंति–संपुण्णचंदमंडलसरिसं पोलियं लहेसि, लद्धा घरछाइणियाए, अण्णेणावि दिट्ठो, सो ण्हाऊण पुप्फफलाणि गहाय सुविणयपाढयस्स कहेइ, तेण भणियं–राया भविस्ससि। इओ य सत्तमे दिवसे तत्थ राया मतो अपुत्तो, सो य निव्विण्णो अच्छइ जाव आसो अहिवासितो आगतो, तेण तं दट्ठूणं हिसियं पयक्खिणीकतो य, तओ य विलइओ पट्ठे, एवं सो राया जातो। ताहे सो कप्पडिओ सुणेइ, जहा तेणवि दिट्ठो एरिसो सुविणतो, सो आएसफलेण किर राया जातो, सो चिंतेइ—वच्चामि जत्थ गोरसो, तं पिवेत्ता सुयामि, जाव पुणोऽवि तं सुमिणं पेच्छामि, अवि पुणो सो पेच्छेज्जा ण माणुसातो ६ ॥

---

१ स्वप्न इति, एकेन कार्पटिकेन स्वप्ने चन्द्रो गिलितः, कार्पटिकेभ्यश्च कथितं, ते भणन्ति–संपूर्णचन्द्रमण्डलसदृशीं पोलिकां लप्स्यसे, लब्धा गृहच्छादनिकया, अन्येनापि दृष्टः, स स्नात्वा पुष्पफलानि गृहीत्वा स्वप्नपाठकाय कथयति, तेन भणितं–राजा भविष्यसि। इतश्च सप्तमे दिवसे तत्र राजा मृतोऽपुत्रः, स च निर्विण्णस्तिष्ठति यावदश्वोऽधिवासित आगतः, तेन तं दृष्ट्वा हेषितं प्रदक्षिणीकृतश्च, ततश्च विलगितः पृष्ठे, एवं स राजा जातः। तदा स कार्पटिकः शृणोति, यथा तेनापि दृष्ट ईदृशः स्वप्नः, स आदेशफलेन किल राजा जातः, स चिन्तयति–व्रजामि यत्र गोरसम्, तत् पीत्वा स्वपिमि, यावत्पुनरपि स्वप्नं तं पश्यामि, अपि पुनः स पश्येत् न मानुषात् ६ ॥

रायो त पुत्त भणति—अम्हं जो ण सहइ अणुक्कमं सो जूय खेलइ, जो जिणइ रज्ज से दिज्जइ, कह पुण जिणियव्व ?, उब्भ एगो आतो, अवसेसा अम्ह आया, जइ तुम एगेण आएण अट्ठसयस्स खभाण एक्केक्क असिय अट्ठसयवारा जिणसि तो तुज्झ रज्ज, अवि देवया विभासा ४ ॥

'रयणे' जहा एगो वाणियओ वुड्ढो, रयणाणि से अत्थि, तत्थ य महे अन्ने वाणियया कोडिपडागातो उब्भेंति, सो ण उब्भवेति, तस्स पुत्तेहिं थेरे पउत्थे ताणि रयणाणि विदेसीवणियाण हत्थे विक्कीयाणि, वरं अम्हेऽवि कोडिपडागाओ उब्भवेंता, तेऽवि वाणियगा समततो पडिगया पारसकूलाईणि, थेरो आगतो, सुय जहा विक्कीयाणि, ते अवाडेइ, लहु रयणाणि आणेह, ताहे ते सव्वतो हिंडिउमाढत्ता, किं ते सव्वरयणाणि पिंडिज्जा ?, अवि य देवप्पभावेणऽवि य विभासा ५ ॥

१ राजा त पुत्र भणति—अस्माक ( वंशे ) यो न सहते अनुक्रम स द्यूत क्रीडति, यो जयति राज्य तस्मै दीयते, कथ पुनर्जेतव्य ?, तवैक आय अवशेषा अस्माक आया , यदि त्वमेकेनायेन अष्टशतस्य स्तम्भानामेकैकमस्रिमष्टशतवारान् जयसि ततस्तव राज्यम् । अपि देवता विभाषा ४ ॥ रत्नानीति, यथैको वणिक् वृद्ध , रत्नानि तस्य सन्ति, तत्र च महे अन्ये वणिज कोटीपताका उर्ध्वयन्ति, स नोर्ध्वयति, तस्य पुत्रै स्थविरे प्रोषिते तानि रत्नानि विदेशवणिजा हस्ते विक्रीतानि, वर वयमपि कोटीपताका ऊर्ध्वयन्त , तेऽपि वणिज सम तत प्रतिगता पारस कूलादीनि, स्थविर आगत , श्रुत यथा विक्रीतानि, तान् तिरस्कुरुते लघु रत्नानि आनयत, तदा ते सर्वतो हिण्डितुमारब्धा , कि ते सर्वरत्नानि पिण्डयेयु ? अपि च देवप्रभावेणापि च विभाषा ५ ॥

तो, जाहे ताओ गाहेंति आयरिया ताहे ताणि कड्ढिंति विउल्लेंति य, पुव्वपरिचएणं ताणि रोलिंति, तेण ताणि चेव ण गणियाणि, गहियातो कलातो। ते अन्ने बावीसं कुमारा गाहिज्जंता आयरियं पिट्टंति, अवयणाणि य भणंति, जति सो आइरितो पिट्टेति ताहे गंतूण माऊणं साहिंति, ताहे ताओ आयरियं खिंसंति—कीस आहणसि ?, किं सुलभाणि पुत्तजम्माणि ?, अतो ते ण सिक्खिया। इओ य महुराए जियसत्तू राया, तस्स सुया निव्वुईनाम दारिया, सा रण्णो अलंकिया उवणीया, राया भणइ—जो ते रोयइ भत्तारो, तो ताए णायं—जो सूरो वीरो विक्कंतो सो मम भत्तारो होइ, सो पुण रज्जं दिज्जा, ताहे सा बलं वाहणं गहाय गया इंदपुरं नयरं, तस्स इंददत्तस्स रण्णो बहवे पुत्ता, इंददत्तो तुट्ठो चिंतेइ—णूणं अन्नेहिंतो राईहिं लट्ठयरो, आगया, ततो तेण ऊसियपडायं नयरं कारियं, तत्थ एगंमि

1 यदा तान् ग्राहयति आचार्यस्तदा ते कर्पयन्ति व्याकुलयन्ति च, पूर्वपरिचयेन ते लुठन्ति, तेन ते नैव गणिताः, (न) गृहीताः कलाः। तेऽन्ये द्वाविंशतिः कुमारा ग्राह्यमाणा आचार्यं पिट्टयन्ति, अवचनानि च भणन्ति, यदि स आचार्यः पिट्टयति तदा गत्वा मातृभ्यः कथयन्ति, तदा ता आचार्यं खिंसन्ति—कथमाहंसि ?, किं पुत्रजन्मानि सुलभानि ?, अतस्ते न शिक्षिताः। इतश्च मथुरायां जितशत्रू राजा, तस्य सुता निर्वृतिनाम्नी दारिका, सा राज्ञोऽलङ्कृतोपनीता, राजा भणति—यस्तुभ्यं रोचते (स) भर्त्ता, ततस्तया ज्ञापितं—यः शूरो वीरो विक्रान्तः स मम भर्त्ता भवति, स पुना राज्यं दद्यात्, तदा सा बलं वाहनं (च) गृहीत्वा गता इन्द्रपुरं नगरं, तस्येन्द्रदत्तस्य राज्ञो बहवः पुत्राः, इन्द्रदत्तस्तुष्टश्चिन्तयति—नूनमन्येभ्यो राजभ्यो लष्टतरः, आगता, ततस्तेनोच्छ्रितपताकं नगरं कारितं। तत्रैकस्मि-

'चक्क'ति दार, इदपुर नाम नयर, इंददत्तो नाम राया, तस्स इट्ठाण वराण देवीण बावीस पुत्ता, अन्ने भणंति–एकाए चेव देवीए पुत्ता, राइणो पाणसमा, अन्ना एका अमच्चधूया, सा पर परिणेंतेण दिट्ठिल्लिया, अन्नया कयाति रिउण्हाया समाणी अच्छइ, रायणा दिट्ठा, कस्स एसत्ति, तेहिं भणिय–तुम्ह देवी एसा, ताहे सो ताए समं एक्करत्तिं वसितो, सा य रिउण्हाया, तीसे गब्भो लग्गो, सा य अमच्चेण भणिल्लिया—जया तुमे गब्भो आहूतो होइ तया ममं साहेज्जसु, ताहे तस्स कहिय, दिवसो मुहुत्तो ज च राएण उल्लविओ सायकारो, तेण त पत्तए लिहियं, सो सारवेइ, णवण्हं मासाण दारतो जातो, तस्स दासचेडाणि तद्दिवसं जायाणि, तंजहा–अग्गियतो पव्वइतो बहुलिया सागरो य, तेण सहजायगाणि, तेण कलाइरियस्स उवणीतो, तेण लेहाइयातो गणियप्पहाणातो कलाओ गाहि-

१ चक्रमिति द्वारम्, इन्द्रपुर नाम नगरम्, इन्द्रदत्तो नाम राजा, तस्येष्टाना वराणा देवीना द्वाविंशति पुत्रा, अन्ये भणन्ति–एकस्या एव देव्या पुत्राः, राज्ञः प्राणसमा, अन्यैकाऽमात्यदुहिता, सा पर परिणयता दृष्टा, अन्यदा कदाचिदृतुस्नाता सती तिष्ठति, राज्ञा दृष्टा, कस्यैषेति, तैर्भणित–तव देव्येषा, तदा स तया समभेकरात्रमुषित, सा च ऋतुस्नाता, तस्या गर्भो लग्न, सा चामात्येन भणिताऽऽसीत् यदा तव गर्भ उत्पन्नो भवति, तदा मह्य कथये, तदा तस्मै कथित, दिवसो मुहूर्तश्च यच राज्ञाऽऽलप्त सत्यङ्कार, तेन तत् पत्रके लिखित, स गोपयति, नवसु मासेषु दारको जात, तस्य दासचेटास्तद्दिवसे जाता, तद्यथा–अग्निक पर्वतो बाहुल सागरश्च, तेन सहजाताः, तेन कलाचार्यायोपनीत, तेन लेखादिका गणितप्रधाना कला ग्राहित,

तणतो, सुरिंददत्तो नाम, सो समत्थो विंधिउं, अभिण्णाणाणि य से कहियाणि, कहिं ?, सो दरसितो, ततो राइणा अवगूहितो भणति–जुत्तं तव अट्ठ रहचक्के भेत्तूण पुत्तलियं अच्छिंमि विंधेत्ता रज्जं सुकलत्तं निव्वुइं दारियं संपावित्तए, तओ कुमारो जहा आणवेहित्ति भणिऊण ठाणं ठाइऊणं धणुं गेण्हति, ताणिऽवि दासरूवाणि चाउद्दिसिं ठियाणि रोडंति, अन्ने य उभयपासिं गहियखग्गा दो जणा, जइ कहवि लक्खस्स चुकइ ततो सीसं छिंदेयव्वंति, सोऽवि उज्झातो पासे ठितो भयं देइ—मारिज्जसि जइ चुकसि, ते वावीसंपि कुमारा मा एसो विंधिस्सइत्ति ते विसेसलुंठणाणि विग्घाणि करेंति, तओ ताणि चत्तारि ते य दो पुरिसे वावीसं च कुमारे अगणिंतो ताणं अट्ठण्हं रहचक्काणं अंतरं जाणिऊण तंमि लक्खे निरुद्धाए दिट्ठीए अन्नं मयं अकुणमाणेण सा धीउल्लिया वामे अच्छिंमि विद्धा,

१. स्तनयः सुरेन्द्रदत्तो नाम, स समर्थो व्यद्धुम्, अभिज्ञानानि च तस्मै कथितानि, क ?, स दर्शितः, ततो राज्ञाऽवगूढो भण्यते—युक्तं तवाष्ट रथचक्राणि भित्त्वा पुत्तलिकामक्ष्णि विद्ध्वा राज्यं सुकलत्रं निर्वृतिं दारिकां संप्राप्तुं, ततः कुमारो यथाऽऽज्ञापयतीति भणित्वा स्थानं स्थित्वा धनुर्गृह्णाति, तेऽपि दासाश्चतसृषु दिक्षु स्थिता विघ्नं कुर्वन्ति, अन्यौ चोभयपार्श्वयोः गृहीतखड्गौ द्वौ जनौ, यदि कथमपि लक्षात् स्खलति ततः शीर्ष छेत्तव्यमिति, सोऽप्युपाध्यायः पार्श्वे स्थितो भयं ददाति–मारयिष्यसे यदि स्खलसि, ते द्वाविंशतिरपि कुमारा मा एष व्यत्स्यतीति ते विशेषलुण्ठनानि विघ्नान् ( च ) कुर्वन्ति, ततस्ते चत्वारः तौ च द्वौ पुरुषौ द्वाविंशतिं च कुमारानगणयन् तेषामष्टानां रथचक्राणामन्तरं ज्ञात्वा तस्मिन् लक्ष्ये निरुद्धया दृष्ट्या अन्यत् मतं ( मनः ) अकुर्वता सा पुत्तलिका वामेऽक्ष्णि विद्धा,

अक्खे अट्ठ चक्काणि, तेसिं पुरओ ठिया धीउल्लिया, सा अच्छिमि विंधियव्वा, तओ इंददत्तो राया संनद्धो निग्गओ सह पुत्तेहिं, सावि कण्णा सव्वालंकारविभूसिया एगमि पासे अच्छइ, सो रंगो रायाणो ते य दंडभडभोइया जारिसो दोवईए, तत्थ रण्णो जेट्ठपुत्तो सिरिमाली नाम कुमारो, सो भणिओ–पुत्त ! एसा दारिया रज्जं च घेत्तव्वं, अतो विंधेहि पुत्तलियंति, ताहे सो अकयकरणो तस्स समूहस्स मज्झे धणु चेव गिण्हिउं न तरइ, कहवि णेण गहियं, तेण जओ वच्चउ तओ वच्चउ त्ति मुक्को सरो, सो चक्के अब्भिडिऊण भग्गो, एवं कस्सति एगं अरगं वोलीणो कस्सति दोण्णि, अन्नेसिं वाहिरेण चेव णीइ, ताहे राया अद्धिातिं पकतो–अहो ! अहं एएहिं धरिसितोत्ति, ततो अमच्चेण भणितो–कीस अधिइं करेसि ?, राया भणइ–एएहिं अहं अप्पहाणो कतो, अमच्चो भणइ—अत्थि अन्नो तुम्हं पुत्तो मम धूयाए

१ अक्षेऽष्ट चक्राणि, तेषां पुरतः स्थिता शालभञ्जिका, सा अक्ष्णि वेद्धव्या, ततः इन्द्रदत्तो राजा सन्नद्धो निर्गतः सह पुत्रैः, साऽपि कन्या सर्वालङ्कारविभूषिता एकस्मिन् पार्श्वे तिष्ठति, स रङ्गो राजानः ते च दण्डभटभोजिका यादृशो द्रौपद्याः, तत्र राज्ञो ज्येष्ठपुत्रः श्रीमाली नाम कुमारः, स भणितः—पुत्र ! एषा दारिका राज्यं च ग्रहीतव्यम्, अतो विध्य पुत्तलिकामिति, तदा सोऽकृतकरणस्तस्य समूहस्य मध्ये धनुरेव ग्रहीतुं न शक्नोति, कथमपि अनेन गृहीतं, तेन यतो व्रजतु ततो व्रजत्विति मुक्तः शरः, स चक्रे आस्फाल्य भग्नः, एवं कस्यचित् एकमरकं व्यतिक्रान्तः, कस्यचिद् द्वौ, अन्येषां बाह्य एव निरेति, तदा राजाऽधृतिं प्रगतः—अहो अहमेतैः धर्षित इति, ततोऽमात्येन भणितः—कथमधृतिं करोषि ?, राजा भणति—एतैरहं अप्रधानः कृतः, अमात्यो भणति—अस्ति अन्यस्तव पुत्रो मम दुहितु–

जंहिं समिला पब्भट्ठा सागरसलिले अणोरपारंमि । पविसेज्जा जुगछिड्डं कहवि भमंती भमंतम्मि ॥ २ ॥ सा चंडवायवीईपणोल्लिया अवि लभेज्ज जुगछिड्डं । ण य माणुसाउ भट्ठो जीवो पडिमाणुसं लहइ ॥ ३ ॥ इति गाथाभ्यो जुगोदाहरणमवसेयम् ॥

इयाणिं परमाणू, जहा एगो खंभो महप्पमाणो, सो देवेण चुण्णेऊणं अविभागिमाणि खंडाणि काऊण णलियाए पक्खित्तो, पच्छा मंदरचूलियाए ठाऊण फूमितो, ताणि णट्ठाणि, अत्थि कोऽवि ?, तेहिं चेव पुग्गलेहिं तमेव खंभं णिव्वत्तेज्ज ? णो इणमट्ठे समट्ठे, एस अभावो, एवं भट्ठो माणुसातो ण पुणो । अहवा सभा अणेगखंभसयसंनिविट्ठा, सा कालंतरेण झामिया पडिया, अत्थि पुण कोऽवि ?, तेहिं चेव पोग्गलेहिं करेज्जा ?, णोत्ति, एवं माणुस्सं दुल्लभं ॥ लब्धेऽवि मानुष्यत्वे श्रुतिरपि दुर्लभेति दर्शयन्नाह—

१ यत्र (दि) समिला प्रभ्रष्टा सागरसलिलेऽनर्वाक्पारे । प्रविशेद्युगच्छिद्रं कथमपि भ्राम्यति भ्राम्यन्ती ॥२॥ सा चण्डवातवीचिप्रणोदिताऽपि लभेत युगच्छिद्रम् । न च मानुषाद्भ्रष्टो जीवः प्रतिमानुषं लभते ॥ ३ ॥ इदानीं परमाणुः—यथैकः स्तम्भो महाप्रमाणः, स देवेन चूर्णयित्वा अविभागान् खण्डान् कृत्वा नलिकायां प्रक्षिप्तः, पश्चान्मन्दरचूलिकायां स्थित्वा फूत्कृतः, ते नष्टाः, अस्ति कोऽपि ?, तैरेव पुद्गलैस्तमेव स्तम्भं निर्वर्त्तयेत्, न एषोऽर्थः समर्थः, एषोऽभावः, एवं भ्रष्टो मानुषान्न पुनः । अथवा सभा अनेकस्तम्भशतसन्निविष्टा, सा कालान्तरे ध्माता पतिता (च), अस्ति पुनः कोऽपि ?, तैरेव पुद्गलैः कुर्यात् ? नेति, एवं मानुषं दुर्लभं ॥ लब्धेऽपि

तेओ लोगेण ओकिट्ठिकलणायकलयलोम्मिस्सो साहुकारो कतो, जहा त चक्क दुक्खं भेत्तु एव माणुस्सत्तणति ७ ॥

'चम्मे'त्ति एगो दहो जोयणसयसहस्सविच्छिन्नो चम्मावणद्धो, एग से मज्झे छिद्द, जत्थ कच्छभस्स गीवा मायइ, तत्थ कच्छभो वाससए गए गीव पसारेइ, तेण कहवि गीवा पसारिया, जाव तेण छिड्डेण गीवा निग्गया, तेण जोइस दिट्ठ कोमुईए पुप्फफलाणि य, सो गतो, सयणिज्जगाण दाएमि, आणित्ता सव्वओ घुलति, णवि पेच्छति, अवि सो माणुसातो ८ ॥

'जुगे'त्ति पुव्वते होज्ज जुग अवरते तस्स होज्ज समिला उ। जुगछिड्डमि पवेसो इय ससइओ मणुयलभो ॥ १ ॥

---

१ ततो लोकेनोत्कृष्टिकलनादकलकलोन्मिश्र साधुकार कृत । यथा तच्चक्र दु ख भेत्तुमेव मानुषत्वमिति ७ ॥ चर्मेति, एको ह्रदो योजनशतसहस्रविस्तीर्णश्चर्मावनद्ध , एक तस्य मध्ये छिद्र, यत्र कच्छपस्य ग्रीवा माति, तत्र कच्छपो वर्षशते गते ग्रीवा प्रसारयति, तेन कथमपि ग्रीवा प्रसारिता, यावत्तेन छिद्रेण ग्रीवा निर्गता, तेन ज्योतिर्दृष्ट कौमुद्या पुष्पफलानि च, स गत , स्वजनान् दर्शयामि, आनीय सर्वतो भ्राम्यति, नैव प्रेक्षते, अपि स मानुषात् ८ ॥ युगमिति, पूर्वान्ते भवेद् युगमपरान्ते तस्य भवेत् समिला तु । युगच्छिद्रे प्रवेश इति सशयितो मानुष्यलाभ ॥ १ ॥

लाद्यवलोकनगोचरात्, 'रमणात्' कुर्कुटादिक्रीडात्मकात्, क्वचित्सुपोऽश्रवणं प्राग्वत्, प्रक्रान्तार्थनिगमनायाह—'एभिः' अनन्तरोक्तस्वरूपैः 'कारणैः' आलस्यादिहेतुभिः 'लद्धूण सुदुल्लहंपि' त्ति अपेर्भिन्नक्रमत्वाल्लब्ध्वाऽपि 'सुदुर्लभम्' अतिशयदुरापं 'मानुष्यं' मनुजत्वं 'न लभते' न प्राप्नोति 'श्रुतिं' धर्माकर्णनात्मिकां, कीदृशीम् ?—'हितकरीम्' इह परत्र च तथ्यपथ्यविधायिनीम्, अत एव संसारादुत्तारयति—मुक्तिप्रापकत्वेन निस्तारयति इति संसारोत्तारणी तां 'जीवः' जन्तुः इति गाथार्थः ॥१६०–१६१॥ इत्थं धर्मश्रुतिदुर्लभत्वमभिधाय तल्लाभेऽपि श्रद्धादुर्लभत्वमाह—

मिच्छादिट्ठी जीवो उवइट्ठं पवयणं न सद्दहइ । सद्दहइ असब्भावं उवइट्ठं वा अणुवइट्ठं ॥ १६२ ॥

सम्मद्दिट्ठी जीवो उवइट्ठं पवयणं तु सद्दहइ । सद्दहइ असब्भावं अणभोगा गुरुनिओगा वा ॥१६३॥

व्याख्या—मिथ्या इति-विपरीता दृष्टिः-बुद्धिरस्येति मिथ्यादृष्टिः, जीवः 'उपदिष्टं' गुरुभिराख्यातं 'प्रवचनम्' आगमं 'न श्रद्धत्ते' इदमित्थमिति न प्रतिपद्यते, कदाचित्तद्विपरीतमपि न श्रद्दधातीत्याह—'श्रद्धत्ते' तथेति प्रतिपद्यते, किं तदित्याह—अविद्यमानाः सन्तः—परमार्थसन्तो भावा—जीवादयोऽभिधेयभूता यस्मिन् तदसद्भावम्, सर्वव्याप्यादिरूपात्मादिप्रतिपादकं कुप्रवचनमिति गम्यते, 'उपदिष्टं' परेण कथितं, वाशब्दस्य भिन्नक्रमत्वात् अनुपदिष्टं वा—स्वयमभ्यूहितमिति गाथार्थः ॥ १६२ ॥ इत्थं श्रद्धादुर्लभत्वमभिधाय साम्प्रतं लब्धाया अप्युपघातसम्भवमाह—'संम' गाहा, तथा सम्यक् इति—प्रशंसार्थोऽपि निपातः, यद्वा समञ्चति—जीवादीनवैपरीत्येनाव-

आलस्स मोहऽवन्ना थंभा कोहा पमाय किविणत्ता। भय सोगा अन्नाणा वक्खेव कुऊहला रमणा॥१६०॥
एएहिं कारणेहिं लद्धूण सुदुल्लहंपि माणुस्सं। न लहइ सुइं हिअकरिं संसारुत्तारिणिं जीवो ॥ १६१ ॥

व्याख्या—'आलस्यात्' अनुद्यमस्वरूपात्, न धर्माचार्यसकाशं गच्छति न शृणोति च इति सर्वत्र शेषः, 'मोहात्' गृहकर्त्तव्यताजनितवैचित्यात्मकात् हेयोपादेयविवेकाभावात्मकाद्वा, 'अवज्ञातो' यथा किममी मुण्डश्रमणा जानन्ति ? इति, 'अवर्णाद्वा' साध्वश्लाघात्मकात् यथाऽमी मलदिग्धदेहाः सकलसंस्काररहिताः प्राकृतप्रायवयस इत्यादिरूपात्, 'स्तम्भात्' जात्यादिसमुत्थादहङ्कारात् कथमहं प्रकृष्टतरजातिरेनमुपसर्प्पामीत्यादिरूपात्, 'क्रोधाद्' अप्रीतिरूपात् आचार्यादिविषयात्, महामोहोपहतो हि कश्चिदाचार्यादिभ्योऽपि कुप्यति, 'प्रमादात्' निद्रादिरूपात्, कश्चिद्धि निद्रादिप्रमत्त एवाऽऽस्ते, 'कृपणत्वात्' द्रव्यव्ययासहिष्णुत्वलक्षणात्, यद्यहममीषामन्तिके गमिष्यामि अवश्यभावी द्रव्यव्यय इति वरं दूरत एषां परिहार इति, 'भयात्' कदाचिन्नरकादिवेदनाश्रवणोत्पन्नसाध्वसात्, निःसत्त्वो हि नरकादिभयमावेदयन्तीत्यमी इति भयान्न पुनः श्रोतुमिच्छति, 'शोकाद्' इष्टवियोगोत्थदुःखात्, कश्चिद्धि प्रियप्रणयिनीमरणादौ शोचन्नेवास्ते, 'अज्ञानात्' मिथ्याज्ञानात्—'न मांसभक्षणे दोषो, न मद्ये न च मैथुने' इत्यादिरूपात्, 'व्याक्षेपाद्' इदमिदानीं कृत्यमिदं च इदानीमिति बहुकृत्यव्याकुलतात्मकात्, 'कुतूहलाद्' इन्द्रजा-

बहुरयपएसअव्वत्तसमुच्छ दुगतिगअबद्धिगा चेव । एएसिं निग्गमणं वुच्छामि अहाणुपुवीए ॥१६४॥

व्याख्या—'व्याख्यानतो विशेषप्रतिपत्तिः' इति न्यायात् वहुषु—क्रियानिष्पत्तिविपयसमयेषु रताः, कोऽर्थः ?—बहुषु एव समयेषु क्रियानिष्पत्तिरित्यसद्भावं प्रतिपन्नाः १, 'पएसि' त्ति सूचकत्वादस्य अन्त्यप्रदेशजीववादिनः अन्त्य एव प्रदेशो जीव इत्यभ्युपगताः २, अव्यक्ताः—'सत्या सत्यभामे'तिवत् अव्यक्तवादिनः, न अत्र व्यक्त्या यतिरयमयतिर्वा इत्यादिरूपतया वस्तु विज्ञातुं शक्यं, ततः सर्वमव्यक्तमेवेति प्रतिज्ञावन्तः ३, 'समुच्छ' त्ति सूत्रत्वात् सामुच्छेदाः, तत्र समिति—सामस्त्येन निरन्वयात् उदिति—ऊर्ध्वं क्षणादुपरि भवनात् छेदो—नाशः समुच्छेदस्तं विदन्ति तत्त्वधिया सामुच्छेदाः, एषां द्वन्द्वे वहुरतप्रदेशाव्यक्तसामुच्छेदाः, द्विकं—क्रियाविषयमेकसमयमनुभूयमानमिह गृह्यते, तत्प्रतिज्ञातारोऽप्युपचारात् द्विकाः, एवं त्रिकं—जीवाजीवनोजीवराशित्रयं तदभ्युपगन्तारोऽपि तथैव त्रिकाः, वद्धं—जीवप्रदेशैरन्योऽन्याविभागेन संपृक्तं न वद्धम्—अवद्धम्, अर्थात्कर्म, तदभ्युपगमविषयमेपामस्तीति अवद्धिकाः, एषां द्वन्द्वे द्विकत्रिकावद्धिकाः, चः समुच्चये, एवेति पूरणे । अत्र कः कस्य शिष्य इत्याशङ्काऽपोहार्थमेतन्निर्गमाभिधित्सया सम्वन्धमाह—'एएसिं' एतेषामनन्तरमुपदर्शितानां, निर्गमनं—यस्य यत उत्पत्तिः तदात्मकं 'वक्ष्यामि' परिभाषिष्ये, 'अथे'त्यानन्तर्ये 'आनुपूर्व्या' क्रमेणेति गाथार्थः ॥ १६४ ॥

प्रतिज्ञातमेवाह—

गच्छति इति सम्यक् तथा दृष्टि अस्येति सम्यग्दृष्टि जीव उपदिष्ट प्रवचन, तुशब्दो मिथ्यादृष्टित सम्यग्दृष्टेर्विशेषमाह, 'श्रद्धत्ते' नि शङ्क प्रतिपद्यते, तत्किमसौ प्रवचनमेव श्रद्धत्ते इत्याह–श्रद्धत्ते 'असद्भावम्' उक्तस्वरूपम् 'अनाभोगात्' अज्ञानात्, तथा 'गुरव' धर्माचार्यास्तेषा नियोग –व्यापारण गुरुनियोगस्तस्माद्वा, कश्चिद्धि सम्यग्दृष्टिर्विशेषतो जीवादिस्वरूपानवगमाद् गुरुप्रत्ययाचातत्त्वमपि तत्त्वमिति प्रतिपद्यते। तदेव प्रथमगाथया मिथ्यात्वहेतुकत्वमश्रद्धानस्योक्तम्, द्वितीयगाथया पुनस्तदभावेऽप्यनाभोगगुरुनियोगहेतुकत्व, तथा च मिथ्यात्वादितद्धेतूना व्यापित्वादश्रद्धानभूयस्त्वेन श्रद्धानदुर्लभतोक्ता भवतीति गाथाद्वयपरमार्थ ॥ १६३ ॥ ननु किमेवविधा अपि केचिदत्यन्तमृजव सम्भवेयु ? ये स्वयमागमानुसारिमतयोऽपि गुरूपदेशतोऽन्यथापि प्रतिपद्येरन्, एवमेतत्, तथाहि–जमालिप्रभृतीना निह्नवाना शिष्यास्तद्भक्तियुक्ततया स्वयमागमानुसारिमतयोऽपि गुरुप्रत्ययाद्विपरीतमर्थं प्रतिपन्ना, उक्त हि–"तए ण तस्स जमालिस्स अणगारस्स एवमाइक्खमाणस्स एव भासतस्स एव पण्णवेमाणस्स एव परूवेमाणस्स अत्थि एगयया समणा णिग्गथा एयमट्ठ सद्दहति पत्तियति रोयति" इत्यादि। के पुनरमी असद्भाव प्रतिपन्ना इत्याह—

१ ततस्तस्य जमालेरनगारस्य एवमाख्यायत एव भाषमाणस्य एव प्रज्ञापयत एव प्ररूपयत सन्त्येके श्रमणा निर्ग्रन्था (ये) एनमर्थं श्रद्धति प्रतियन्ति रोचन्ते।

तेणं[1] कालेणं तेणं समएणं कुंडपुरं नयरं, तत्थ सामिस्स जेट्ठा भगिणी सुदंसणा नाम, तीए पुत्तो जमाली, सो सामिस्स मूले पव्वइओ पंचहिं सएहिं समं, तस्स य भज्जा सामिणो धूया अणुज्जंगीनामा वीयं णामं पियदंसणा, सावि तमणु पव्वतिया सहस्सपरिवारा, तहा भाणियव्वं जहा पण्णत्तीए, एक्कारस अंगा अहीया, सामिणा अणुण्णातो सावत्थिं गतो पंचसयपरिवारो, तत्थ य तिंदुगुज्जाणे कोट्ठगे चेतिते समोसढो, तत्थ से अंतपंतेहिं रोगो उप्पण्णो, ण तरइ वइट्ठतो अच्छिउं, ताहे सो समणे भणइ—मम सेज्जासंथारगं करेह, तेहिं काउमारद्धो, पुणो अधरो भणति—कतो ? कज्जति ?, ते भणंति—न कओ, अज्जवि कज्जति, ताहे तस्स चिंता जाया—जण्णं समणे भगवं० आइक्खति 'चलमाणे चलिए उदीरिज्जमाणे उदीरिए जाव निज्जरिज्जमाणे निज्जिण्णे' तं च मिच्छा,

---

१ तस्मिन् काले तस्मिन समये कुण्डपुर नगर, तत्र स्वामिनो ज्येष्ठा भगिनी सुदर्शना नाम, तस्याः पुत्रो जमालिः, स स्वामिनो मूले प्रव्रजितः पञ्चभिः शतैः समं, तस्य च भार्या स्वामिनो दुहिताऽनवद्याङ्गीनाम्नी द्वितीयं नाम प्रियदर्शना, साऽपि तमनु प्रव्रजिता सहस्रपरिवारा, तथा भणितव्यं यथा प्रज्ञप्तौ, एकादशाङ्गान्यधीतानि, स्वामिनाऽनुज्ञातः श्रावस्ती गतः पञ्चशतपरीवारः, तत्र च तिन्दुकोद्याने कोष्ठके चैत्ये समवसृतः, तत्र तस्य अन्तप्रान्तै रोग उत्पन्नः, न शक्नोति उपविष्टः स्थातुं, तदा स श्रमणान् भणति—मम शय्यासंस्तारकं कुरुत, तैः कर्त्तुमारब्धः, पुनरधीरो भणति—कृतः ? क्रियते ?, ते भणन्ति—न कृतः, अद्यापि क्रियते, तदा तस्य चिन्ता जाता—यत् श्रमणो भगवान् आख्याति—चलत् चलितमुदीर्यमाणमुदीर्णं यावन्निर्जीर्यमाणं निर्जीर्णं, तच्च मिथ्या,

बहुरय जमालिपभवा जीवपएसा य तीसगुत्ताओ। अवत्ताऽऽसाढाओ सामुच्छेयाऽऽसमित्ताओ ॥१६५॥
गगाए दोकिरिया छलुगा तेरासिआण उप्पत्ती । थेरा य गुट्ठमाहिल पुट्ठमवद्ध परूविति ॥ १६६ ॥

व्यारया—'बहुरता ' उक्तरूपा , जमाले प्रभव –एतत्तीर्थापेक्षया प्रथमत उपलब्धिरेपा, न पुन सर्वथोत्पत्तिरेव, प्रागप्येयविधाभिधायिसम्भवात्, ते अमी जमालिप्रभवा , 'जीवपएसा य' त्ति प्रस्तावात्प्रदेश इत्यन्त्यप्रदेशो जीवो येपा ते प्रदेशजीवा , प्राकृतत्वाच व्यत्यय , ते च तिष्यगुप्तात्, 'अव्यक्ता ' अव्यक्तवादिन आपाढात्, सामुच्छेदा अश्वमित्रात्, 'गङ्गात्' इति गङ्गाचार्यात्, द्वे क्रिये वदन्ति द्वैक्रिया , 'छलुग' त्ति पट्पदार्थप्रणयनादुलूकगोत्रत्वाच्च पडुलूकस्तस्मात्, त्रिभी राशिभिर्दीव्यन्ति–जिगीप तीति त्रैराशिकास्तेपामुत्पत्ति , 'स्थविराश्च' स्थिरीकरणकारिण 'गोट्ठामाहिल'त्ति गोष्ठमाहिला 'स्पृष्टम्' कञ्चुकवत् छुसम् 'अवद्धम्' न क्षीरनीरवदन्योऽ यानुगत, कर्मेति गम्यते, 'परूपयन्ति' प्रज्ञापयन्ति, तत्कालापेक्षया लट्, बहुवचन च पूज्यत्वात्, तथ स्थविरत्व च पूर्वपर्यायापेक्षया, अनेन च गोष्ठमाहिलादवद्धिकानामुत्पत्तिरित्युक्त भवति इति गाथाद्वयार्थ ॥ १६५–१६६ ॥ यथा बहुरता जमालिप्रभवा तथा चाह—

जिट्ठा सुदसण जमालि अणुज्ज सावत्थि तिदुगुज्जाणे। पच सया य सहस्सं ढकेण जमालि मुत्तूण ॥१६७॥

व्याख्या—अक्षरार्थं सुगम , नवरम्, 'अणुज्ज' त्ति अनवद्याङ्गी ॥१६७॥ भावार्थस्तु वृद्धसम्प्रदायादवसेय , स चायम्

तथाहि—कृतक्रियमाणके किमेकान्तेन निश्चितभेदे ? अथ कथञ्चिद् ?, यद्येकान्तेन तत्किं तदैक्ये सतोऽपि करणप्रसङ्गतः १ उत क्रियानुपरमप्राप्ते २ राहोस्वित् प्रथमादिसमयेष्वपि कार्योपलम्भप्रसक्ते ३ रथ क्रियावैफल्याऽऽपत्तितो ४ दीर्घक्रियाकालदर्शनानुपपत्तेर्वा ५ ?, तत्र न तावत्सतोऽपि करणप्रसङ्गत इति युक्तम्, असत्करणे हि खपुष्पादेरेव करणमापद्यत इति कथञ्चित्सत एव करणमस्माभिरभ्युपगतं, न चाभ्युपगतार्थस्य प्रसञ्जनं युज्यते १, नापि क्रियानुपरमप्राप्तेः, यत इह क्रिया किमेकविषया भिन्नविषया वा ?, यद्येकविषया न कश्चिद्दोषः, तत्र हि यदि कृतं क्रियमाणमुच्यते तदा तन्मतेन निष्पन्नमेव कृतमिति तस्यापि क्रियमाणतया क्रियानुपरमप्राप्तिलक्षणो दोषः स्यात्, न तु क्रियमाणं कृतमित्युक्तौ, तत्र क्रियाऽऽवेशसमय एव कृतत्वाभिधानात्, उक्तं हि—"क्रियाकालनिष्ठाकालयोरैक्य"मिति, अथैवमपि कृतक्रियमाणयोरैक्ये कृतस्य सत्त्वात् सतोऽपि करणे तदवस्थः प्रसङ्गः, तदसत्, पूर्वं हि लब्धसत्ताकस्य क्रियायामयं प्रसङ्गः स्यात्, न तु क्रियासमकालसत्तावासौ, अथ भिन्नविषया क्रिया तदा सिद्धसाधनं, प्रतिसमयमन्यान्यकारणतया वस्तुनोऽभ्युपगमेन भिन्नविषयक्रियानुपरमस्यास्माकं सिद्धत्वात् २, अथ प्रथमादिसमयेष्वपि कार्योपलम्भप्रसक्तेरिति पक्षः, क्रियमाणस्य हि कृतत्वे प्रथमादिसमयेष्वपि सत्त्वादुपलम्भः प्रसज्यत इति, तदपि न, तदा हि शिवकादीनामेव क्रियमाणता, ते चोपलभ्यन्ते एव, उक्तं च—"अन्नारम्भे अन्नं

१ अन्यारम्भेऽन्यत् कथं दृश्यतां यथा घटः पटारम्भे ? । शिवकादयो न कुम्भः कथं दृश्यतां स तदद्धायाम् ॥ १ ॥

इंम पच्चक्खमेव दीसति–सेज्जासथारए कज्जमाणे अकडे, सथरिज्जमाणे असथरिए, जम्हा ण एय तम्हा चलणमाणेऽवि अचलिए उदीरिज्जमाणेवि अणुदीरिए णिज्जरिज्जमाणेवि अणिज्जिण्णे, एव सपेहेइ, एव सपेहित्ता निग्गथे सद्दावेइ, सद्दावित्ता एव वयासी–जण समणे भगव महावीरे एवमाइक्खइ—चलमाणे चलिए, उदीरिज्जमाणे उदीरिए, जाव णिज्जरिज्जमाणे णिज्जरिए, त ण मिच्छा, इम पच्चक्खमेव दीसइ–सिज्जासथारए कज्जमाणे अकडे, जाव तम्हा ण अणिज्जिण्णे। तए णं जमालिस्स एवमाइक्खमाणस्स अत्थेगतिया णिग्गथा एयमट्ठ सद्दहति, अत्थेगइया नो सद्दहति, जे सद्दहति ते ण जमालिं चेव अणगार उवसंपज्जित्ता ण विहरति, तत्र ये न श्रद्धति ते एवमाहु–भगवन्! भवतोऽयमाशय —यथा घट पटो नैव, पटो वा न घटो यथा। क्रियमाण कृत नैव, कृत न क्रियमाणकम् ॥ १॥ प्रयोगश्च–यौ निश्चितभेदौ न तयोरैक्य, यथा घटपटयो, निश्चितभेदे च कृतक्रियमाणके, अत्र चासिद्धो हेतु,

---

१ इद प्रत्यक्षमेव दृश्यते–शय्यासस्तारक क्रियमाणोऽकृत, सस्तीर्यमाणोऽसस्तीर्ण, यस्मादेव तस्मात् चलदपि अचलितमुदीर्यमाणमपि अनुदीर्ण निर्जीर्यमाणमप्यनिर्जीर्णम्, एव सप्रेक्षते ( विचारयति ), एव सप्रेक्ष्य निर्ग्रन्थान् शब्दयति, शब्दयित्वा एवमवादीत्–यद् श्रमणो भगवान् महावीर एवमाख्याति–चलत् चलितमुदीर्यमाणमुदीर्ण यावत् निर्जीर्यमाण निर्जीर्ण, तत् मिथ्या, इद प्रत्यक्षमेव दृश्यते—शय्यासस्तारक क्रियमाणोऽकृत, यावत्तस्मात् अनिर्जीर्णम्। ततो जमालेरेवमाख्यायत सन्त्येकका निर्ग्रन्था एतमर्थ श्रद्दधति, सन्त्येकका न श्रद्दधति, ये श्रद्दधति ते जमालिमेवानगारमुपसम्पद्य विहरन्ति,

कृतमेव, कृतं तु स्यात्क्रियमाणं क्रियावेशसमये, क्रियोपरमे पुनरक्रियमाणमिति उक्तं, च–तेणेह[1] कज्जमाणं नियमेण कयं कयं तु भयणिज्जं। किञ्चिदिह कज्जमाणं उवरयकिरियं व होज्जाहि ॥ १ ॥ किञ्च भवतो मतिः–क्रियान्त्यसमय एवाभिमतकार्यभवनं, तत्रापि प्रथमसमयादारभ्य कार्यस्य कियत्यपि निष्पत्तिरेष्टव्या, अन्यथा कथमकस्मादन्त्यसमये सा भवेद्?, उक्तं च– आद्यतन्तुप्रवेशे च, नोतं किञ्चिद्यदा पटे । अन्त्यतन्तुप्रवेशे च, नोतं स्यान्न पटोदयः ॥ १ ॥ तस्मादाद्यद्वितीयाऽऽदितन्तुयोगात्प्रतिक्षणम्। किञ्चित्किञ्चिदुतं तस्य, यदुतं तदुतं ननु ॥ २ ॥" इह प्रयोगः–यद्यस्याः क्रियायाः आद्यसमये न भवति तत्तस्या अन्त्यसमयेऽपि न भावि, यथा घटक्रियादिसमयेऽभवन्पटः, न भवति च कृतक्रियमाणयोर्भेदे क्रियादिसमये कार्यम्, अन्यथा घटान्त्यसमयेऽपि पटोत्पत्तिः स्यात्, एवं च–'यथा वृक्षो धवश्चेति, न विरुद्धं मिथो द्वयम्। क्रियमाणं कृतं चेति, न विरुद्धं तथोभयम् ॥ १ ॥ प्रयोगश्च–यद्येनाविनाभूतं न तत्तत एकान्तेन भिद्यते, यथा वृक्षत्वाद्धवत्वं, कृतत्वाविनाभूतं च क्रियमाणत्वमिति। सकललोकप्रसिद्धत्वाच्च घटपटयोः तदाश्रयेणैवमुक्तं संस्तारकादावपि योज्यं, तत् प्रतिपद्यस्व भगवन्! 'चलमाणे चलिए' इत्यादि तीर्थकृद्वचोऽत्यन्तमवितथमिति । स चैवमुच्यमानोऽपि न प्रतिपन्नवान्, ततश्च–

१ तेनेह क्रियमाणं नियमेन कृतं कृतं तु भजनीयम्। किञ्चिदिह क्रियमाणमुपरतक्रियं वा भवेत् ॥ १ ॥

कह दीसउ? जह घडो पडारम्भे। सिवकादतो ण कुम्भो कह दीसउ सो तदद्धाए ॥ १ ॥" घटगताभिलापतया च मूढ शिवकादिकरणेऽपि घटमह करोमीति मन्यते, तथा चाह—"पइंसमयकज्जकोडीनिरवेक्खो घडगयाभिलासोऽसि। पइसमयकज्जकाल थूलमइ घड मिलाएसि ॥ १ ॥" ३, नापि क्रियावैफल्याऽऽपत्तितो, यत प्रागेव प्राससत्ताकस्य करणे क्रियावैफल्य स्यात्, न तु क्रियमाणकृतत्वे, तत्र हि क्रियमाण क्रियापेक्षमिति तस्या साफल्यमेव, अनेकान्तवादिना च केनचिद्रूपेण प्राक् सत्त्वेऽपि रूपान्तरेण करण न दोषाय ४, दीर्घक्रियाकालदर्शनानुपपत्तेरित्यपि न युक्त, यत शिवकाद्युत्तरोत्तरपरिणामविशेषविषय एव दीर्घक्रियाकालोपलम्भो न तु घटक्रियाविषय, उक्त हि— "पईसमउप्पण्णाण परोप्परविलक्खणाण सुबहूण। दीहो किरियाकालो जइ दीसइ किंथ कुभस्स? ॥ १ ॥" ५। अथ कथञ्चिन्निश्चितभेदे कृतक्रियमाणे, तत्तीर्थकृदुक्तमेव, निश्चयव्यवहारानुगतत्वात् तद्वचस, तत्र च निश्चयनयाऽऽश्रयेण कृतक्रियमाणयोरभेदो, यदुक्तम्—"क्रियमाण कृतं दग्ध, दह्यमान स्थित गतम्। तिष्ठच्च गम्यमान च, निष्ठितत्वात् प्रतिक्षणम् ॥ १ ॥" व्यवहारनयमतेन तु नानात्वमप्यनयो, तथा च क्रियमाण

१ प्रतिसमयकार्यकोटीनिरपेक्षो घटगताभिलापोऽसि। प्रतिसमयकार्यकाल स्थूलमतिर्घट मेलयसि (घटे गृह्णासि) ॥१॥ २ प्रतिसमयोत्पन्नाना परस्परविलक्षणाना सुबहूनाम्। दीर्घे क्रियाकालो यदि दृश्यते किमथ कुम्भस्य? ॥ १ ॥

पंडिसुणेति, इच्छामो अज्जो! सम्मं पडिचोयणा, ताहे सा गंतूण जमालिं पण्णवेति, सो जाहे ण गिण्हति, ताहे सहस्सपरिवारा सामिं उवसंपज्जित्ता णं विहरइ। इमोऽवि ततो लहुं चेव गतो चंपं णयरिं, सामिस्स अदूरसामंते ठिच्चा सामिं भणति—जहा णं देवाणुप्पियाणं वहवे अंतेवासी समणा णिग्गंथा छउमत्था भवित्ता छउमत्थावक्कमणेणं अवकंता, णो खलु अहं तहा छउमत्थो भवित्ता छउमत्थावक्कमणेणं अवकंते, अहं णं उप्पण्णणाणदंसणधरे अरहा जिणे केवली भवित्ता केवलिअवक्कमणेणं अवकंते, तए णं भगवं गोयमो जमालिं एवं वयासी—णो खलु जमाली! केवलिस्स णाणे वा दंसणे वा सेलंसि वा थंभंसि वा जाव कहिंसि आवरिज्जइ वा निवारिज्जति वा, जदि णं तुमं जमाली! उप्पण्णणाणदंसणधरे तो णं इमाइं दो वागरणइं वागरेहि—सासए लोए? असासए?, सासए जीवे असासए?, तए णं

---

१ प्रतिशृणोति, इच्छाम आर्य! सम्यक् प्रतिचोदना, तदा सा गत्वा जमालिं प्रज्ञापयति, स यदा न गृह्णाति तदा सहस्रपरिवारा स्वामिनमुपसंपद्य विहरति। अयमपि ततो लघ्वेव गतश्चम्पां नगरीं, स्वामिनोऽदूरसमीपे स्थित्वा स्वामिनं भणति—यथा देवानुप्रियाणां वह्वोऽन्तेवासिनः श्रमणा निर्ग्रन्थाः छद्मस्था भूत्वा छद्मस्थावक्रमणेनावक्रान्ताः, नो खल्वहं तथा छद्मस्थो भूत्वा छद्मस्थावक्रमणेनावक्रान्तः, अहमुत्पन्नज्ञानदर्शनधरोऽर्हन् जिनः केवली भूत्वा केवल्यवक्रमणेनावक्रान्तः, ततो भगवान् गौतमो जमालिमेवमवादीत्—नो खलु जमाले! केवलिनो ज्ञानं वा दर्शनं वा शैले (न) वा स्तम्भे (न)वा यावत्कचिदपि आव्रियते वा निवार्यते वा, यदि जमाले! त्वमुत्पन्नज्ञानदर्शनधरस्तदा इमे द्वे व्याकरणे व्याकुरु—शाश्वतो लोकोऽशाश्वतः?, शाश्वतो जीवोऽशाश्वतः?, ततः

जाहे ण ट्ठाति ताहे ते णिग्गथा जमालिस्स अतिआतो जहा पण्णत्तीए जाव सामि उवसपज्जित्ता ण विहरति। साऽवि य ण पियदसणा ढकस्स कुम्भकारस्स घरे ठिया, सा आगया चेइयवदिया ताहे पवदिया, तपि पण्णवेइ, साऽवि विप्पडिवण्णा तस्स नेहाणुरागेण, पच्छा आगया अज्जाण परिकहेइ, त च ढक भणति, सो जाणइ—जहा एसा विप्पडिवन्ना नाहघतेण, ताधे सो भणति—अह ण याणामि एय विसेसयरं, एव तीसे अन्नया कयाइ सज्झाय-पोरिर्सि करेंतीए तेण भायणाणि उवत्ततेण ततो हुत्तो इंगालो छूढो, जहा तीसे सघाडी एगदेसमि दड्ढा, सा भणइ—इमा अज्ज ! सघाडी दड्ढा, ताहे सो भणति—तुब्भे चेव पण्णवेह—जह डज्झमाणमडज्झ, केण तुज्झ सघाडी दड्ढा ?, जतो उज्जुसुयणयमयातो वीरजिणिदवयणावलवीण जुज्जेज्ज डज्झमाण डज्झ वोत्तु ण तुज्झति, ततो तहत्ति

१ यदा न तिष्ठति तदा ते निर्ग्रन्था जमालेरतिकात् यथा प्रज्ञप्तौ यावत् स्वामिनमुपसपद्य विहरन्ति। साऽपि च प्रियदर्शना ढङ्कस्य कुम्भकारस्य गृहे स्थिता, सा आगता चैत्यवन्दिका तदा प्रवन्दिका, तामपि प्रज्ञापयति, साऽपि विप्रतिपन्ना तस्य स्नेहानुरागेण, पश्चादागता आर्याभ्य परिकथयति, त च ढङ्क भणति, स जानाति—यथैषा विप्रतिपन्ना नाथत्वेन, तदा स भणति—अह न जानामि एत विशेषव्यतिकरम्, एव तस्या अन्यदा कदाचित् स्वाध्यायपौरुषीं कुर्वन्त्यास्तेन भाजनान्युद्वर्तयता तत सकाशात् अङ्गार क्षिप्त, यथा तस्या सघाटी एकदेशे दग्धा, सा भणति—इयमार्य ! सघाटी दग्धा, तदा स भणति—यूयमेव प्रज्ञापयत—अथ दह्यमानमदग्ध, केन युष्माक सघाटी दग्धा, यत ऋजुसूत्रनयमतात् वीरजिनेन्द्रवचनावलम्बिना युज्येत दह्यमान दग्ध वक्तु न युष्माकमिति, ततस्तथेति

भवति, तते णं से जमाली सामिस्स एवं आइक्खमाणस्स एयमट्ठं णो सद्दहति, असद्दहंते सामिस्स अंतियातो अवक्कमति, अवक्कमेत्ता बहूहिं असब्भावुब्भावणाहिं मिच्छत्ताभिणिवेसेहि य अप्पाणं च परं च तदुभयं च वुग्गाहेमाणे उप्पाएमाणे बहूइं वासाइं सामण्णपरियायं पाउणति, बहूहिं छट्ठट्ठमादीहिं भावेति, भावित्ता अद्धमासियाए संलेहणाए अप्पाणं झोसेइ, झोसित्ता तीसं भत्ताइं अणसणयाए छेदेति, छेदित्ता तस्स ठाणस्स अणालोइयपडिकंतो कालमासे कालं किच्चा लंतए कप्पे तेरससागरोवमट्ठितिकेसु देवेसु देवकिब्बिसेसु देवेसु देवत्ताए उववण्णे। एवं जहा पण्णत्तीए, जाव अंतं काहिति। एयाए दिट्ठीए बहुए जीवे रया तेण बहुरयत्ति भण्णति, अहवा बहुसु समयेसु कज्जसिद्धिं पडुच्च रया—सत्ता बहुरया इति। यथा जीवप्रदेशास्तिष्यगुप्तात् तथाऽऽह—

---

१ भवति, ततः स जमालिः स्वामिन एवमाख्यायत एनमर्थं न श्रद्धत्ते, अश्रद्दधत् स्वामिनोऽन्तिकात् अपक्राम्यति, अपक्रम्य बहुभिरसद्भावोद्भावनाभिर्मिथ्यात्वाभिनिवेशैश्चात्मानं च परं च तदुभयं च व्युद्ग्राहयन् व्युत्पादयन् बहूनि वर्षाणि श्रामण्यपर्यायं पालयति, बहुभिः षष्ठाष्टमादिभिर्भावयति, भावयित्वा अर्धमासिक्या संलेखनया आत्मानं क्षपयति, क्षपयित्वा त्रिंशतं भक्तानि अनशनितया छेदयति, छित्त्वा तस्य स्थानस्य अनालोचिताप्रतिक्रान्तः कालमासे कालं कृत्वा लान्तके कल्पे त्रयोदशसागरोपमस्थितिकेषु देवेषु देवकिल्बिषेषु देवेषु देवतयोत्पन्नः। एवं यथा प्रज्ञप्तौ यावदन्तं करिष्यति। एतस्यां दृष्टौ बहवो जीवा रतास्तेन बहुरत इति भण्यते, अथवा बहुषु समयेषु कार्यसिद्धिं प्रतीत्य रताः—सक्ता बहुरता इति।

से जमाली भगवया गोयमेण एव वुत्ते समाणे सकिए कखिए जाव णो सचाएति भगवतो गोयमस्स किंचिवि पमोक्खमक्खाइत्तएत्ति तुसिणीए सचिट्ठति, जमालित्ति समणे भगव महावीरे जमालि एव वयासी—अत्थि ण जमाली ! मम वहवे अतेवासी छउमत्था जे ण पहू एय वागरण वागरित्तए, जहा ण अह, नो चेव ण एयप्पयार भास भासित्तए, जहा ण तुम, सासए लोए जमाली !, जन्न कयाइ णासी न कयाइ ण भवइ न कयाइ न भविस्सइ भुव च भवइ भविस्सइ य धुवे जाव णिचे, असासए लोए जमाली !, ज ण उस्सप्पिणी भवित्ता ओसप्पिणी भवइ ओसप्पिणी भवित्ता उस्सप्पिणी भवइ, सासए जीवे जमाली !, ज ण कयाइ नासी जाव णिचे, असासए, जण्ण णेरतिते भवित्ता तिरिक्खजोणिए भवति, तिरिक्खजोणिए भवित्ता मणुस्से भवति, मणुस्से भवित्ता जोणीए देवे

१ ॥ जमालिर्भगवता गौतमेनैवमुक्त सन् शङ्कित काङ्क्षितो यावन्न शक्नोति भगवतो गौतमस्य किञ्चिदपि प्रमोक्षमाख्यातुमिति तूष्णीक सतिष्ठते, जमाले ! इति श्रमणो भगवान् महावीरो जमालिमेवमवादीत्—सन्ति जमाले ! मम बहवोऽन्तेवासिनश्छद्मस्था ये प्रभव एतद्व्याकरण व्याकर्त्तुं, यथाऽह, नो चैव एतत्प्रकारा भाषा भाषितु, यथा त्व, शाश्वतो लोको जमाले !, यत् न कदाचिन्नासीत् न कदाचिन्न भवति न कदाचिन्न भविष्यति, बभूव च भवति भविष्यति च ध्रुवो यावन्नित्य , अशाश्वतो लोको जमाले !, यत् उत्सर्पिणी भूत्वा अवसर्पिणी भवति अवसर्पिणी भूत्वा उत्सर्पिणी भवति, शाश्वतो जीवो जमाले !, यत् न कदाचिन्नासीत् यावन्नित्य , अशाश्वतो, यत् नैरयिको भूत्वा तिर्यग्योनिको भवति, तिर्यग्योनिको भूत्वा मनुष्यो भवति, मनुष्यो भूत्वा यो या देवो

स्थविरैरभाणि—भद्र ! भवतोऽयमाशयः—यथा संस्थान एवास्ति, घटस्तेन तदात्मकः । तदन्त्यदेश एवास्ति, जीवस्तेन तदात्मकः ॥ १ ॥ प्रयोगश्च—यस्मिन्नेव सति यद्भवति तत्तदात्मकं, यथा संस्थान एव सति भवन् घटस्तदात्मकः, अन्त्यदेश एव च सति भवत्यात्मा, अत्रासिद्धो हेतुः, तथाहि—कथमात्मनोऽन्त्यप्रदेशे एव सति भावः ?, अथ शेषप्रदेशेषु सत्सु अप्यसौ नास्तीति, तत्किमस्य शेषप्रदेशानां च कश्चिद्विशेषोऽस्ति न वा ?, नास्ति चेत्किं न शेषप्रदेशभावेऽप्यस्य सद्भावः, अथास्ति चेत्, स किं पूरणत्व १ मुपकारित्व २ मागमाभिहितत्वं ३ वा ?, यदि पूरणत्वं तत्किं वस्तुतो विवक्षातो वा ?, वस्तुतश्चेत्किमस्यैव पूरणत्वं ? न शेषप्रदेशानाम्, अथास्यैव अन्त्यत्वाद्, अन्त्यत्वमप्यात्मप्रदेशापेक्षं तदवष्टब्धाकाशप्रदेशापेक्षं वा ?, न तावदात्मप्रदेशापेक्षम्, आत्मप्रदेशानां कथञ्चित्पाथोवदावर्त्तमानत्वेनानवस्थितानामयमन्त्योऽनन्त्यश्चायमिति विभागाभावात्, ये पुनरष्टौ स्थिराः ते मध्यवर्त्तिन एव, नापि तदवष्टब्धाकाशप्रदेशापेक्षं, तेषामशेषदिक्षु पर्यन्तसम्भवेनैकस्यैवान्त्यत्वाभावात्, देशान्तरसंचारे चानवस्थितत्वात्, न च वस्तुतोऽन्त्यस्यैव पूरणत्वं, द्वितीयादीनामपि पूरणत्वाद्, अन्यथा तथा तथा व्यपदेशानुपपत्तेः, विवक्षातोऽपि न, यतोऽसौ स्वस्याशेषपुरुषाणां वा ?, यद्यशेषपुरुषाणां नेयं नियता, न हि सर्वं एव भवदभिमतमेकं पूरणमाचक्षते, नापि स्वस्य, यतोऽस्या अपि कुतो नियतत्वम् ?, अथान्त्यत्वाद् एतदपि कुतो नियतम् ?, 'एगे भन्ते ! जीवप्पएसे जीवत्ति वत्तव्वं सिया ! इत्यादिनिरूपणायां पर्यन्तभवनात्, तन्नियमोऽपि कुतो ?, विवक्षानियमात्, एवं सति चक्रकाख्यो दोषः, तथाहि—विवक्षानैयत्य-

रायगिहे गुणसिलए वसु चउदसपुवि तीसगुत्ताओ। आमलकप्पा नयरि मित्तसिरी कूरपिंडादि ॥१६८॥

व्याख्या—अक्षरार्थं क्षुण्णो ॥ १६८ ॥ भावाऽर्थस्तु सम्प्रदायादवसेय , स चायम्—

बीतो सामिणो सोलसवासाति उप्पाडियणाणस्स तो उप्पण्णो। तेण कालेण तेण समएण रायगिहे गुणसिले चेतिए वसू णाम भगवतो आयरिया चोद्दसपुवी समोसढा, तस्स सीसो तीसगुत्तो णाम, सो आयप्पवायपुधे इम आलावग अज्झाएइ—'एगे भते! जीवपएसे जीवेत्ति वत्तव सिया ?, णो इणमट्ठे समट्ठे, एव दो जीवप्पएसा तिण्णि सखेज्जा असखेज्जा वा जाव एगपएसूणेऽवि य ण जीवे णो जीवेत्ति वत्तव सिया, जम्हा कसिणे पडिपुण्णलोगागासप्पएससमतुल्लप्पएसे जीवेत्ति वत्तव'मित्यादि, एत्थ सो विपडिवन्नो, जदि सधे जीवप्पएसा एगप्पएसहीणा जीवधवएस ण लहति तो ण सो चेव एगे जीवप्पएसे जीवत्ति, तब्भावभावित्वात् जीवधवएसस्सत्ति, स चैव विवदमान

१ द्वितीय स्वामिन उत्पादितज्ञानात् षोडशवर्षाणि तदोत्पन्न । तस्मिन् काले तस्मिन् समये राजगृहे गुणशीले चैत्ये वसवो नाम भगवन्त आचार्याश्चतुर्दशपूर्विण समवसृता , तेषा शिष्यस्तिष्यगुप्तो नाम, स आत्मप्रवादपूर्वे इममालापकमध्येति ' एको भदन्त ! जीवप्रदेशो जीव इति वक्तव्य स्यात् ?, नैषोऽर्थ समर्थ , एव द्वौ जीवप्रदेशौ त्रय सख्येया असख्येया वा, यावदेकप्रदेशोनोऽपि च जीवो नो जीव इति वक्तव्य स्यात्, यस्मात् कृत्स्न प्रतिपूर्णलोकाकाशप्रदेशसमतुल्यप्रदेशो जीव इति वक्तव्यमित्यादि, अत्र स विप्रतिपन्न , यदि सर्वे जीवप्रदेशा एकप्रदेशहीना जीवव्यपदेश न लभन्ते तदा स चैव एको जीवप्रदेशो जीव इति, जीवव्यपदेशस्येति

भवन्सर्वस्वदेशेषु, पटो यद्वत्तदात्मकः । भवन्सर्वस्वदेशेषु, तद्वदात्मा तदात्मकः ॥ १ ॥ प्रयोगश्च–यो यावत्स्वप्रदेशाविनाभावी स तदात्मको, यथा घटः, सकलस्वप्रदेशाविनाभावी च जीव इति, एवं च प्रज्ञाप्यमानोऽपि जाहे न ठाइ, ताहे से काउस्सग्गो कतो, एवं सो बहूहिं असब्भावभावणाहिं मिच्छत्ताभिणिवेसेहि य अप्पाणं परं उभयं च वुग्गाहेमाणो गतो आमलकप्पं नयरिं, तत्थ अंबसालवणे ठितो, तत्थ मित्तसिरीनाम समणोवासतो, तप्पमुहा य अण्णेऽवि णिग्गया आगया साहुणोत्ति, सोऽवि जाणति–जहा एए णिण्हगत्ति, पच्छा सो पण्णवेति, सोऽवि जाणति, तथावि माइट्ठाणेणं गतो धम्मं सुणति, सो ते ण विरोहेति पण्णवेहामि णं, एवं सो कम्मं पडिच्छंतो जाव तस्स संखडी विउला विच्छिण्णा जाया, ताहे ते निमंतिया, तुब्भे चेव मम घरे पादाद्याक्रमणं करेह, एवं ते आगया, ताहे तस्स णिविट्ठस्स तं विउलं खज्जयं णीणियं, ताहे सो एक्केक्कातो खंडं खंडं च देति, कूरस्स

१ यदा न तिष्ठति, तदा तस्य कायोत्सर्गः कृतः, एवं स बहुभिरसद्भावभावनाभिर्मिथ्यात्वाभिनिवेशैश्चात्मानं परमुभयं च व्युद्ग्राहयन् गत आमलकल्पां नगरीं, तत्राम्रशालवने स्थितः, तत्र मित्रश्रीर्नाम श्रमणोपासकः, तत्प्रमुखाश्चान्येऽपि निर्गता आगताः साधव इति, सोऽपि जानाति–यथा एते निह्नवा इति, पश्चात्स प्रज्ञापयति, सोऽपि जानाति, तथापि मातृस्थानेन (मायया) गतो धर्मं शृणोति, स तान् न विरोधयति प्रज्ञापयिष्यामि एतान्, एवं स कर्म प्रतीच्छन् यावच्चास्य संखण्डी विपुला विस्तीर्णा जाता, तदा ते निमन्त्रिताः, यूयमेव मम गृहे पादावधारणं कुरुत, एवं ते आगताः, तदा तेभ्यो निविष्टेभ्यः तद्विपुलं खाद्यमानीतं, तदा स एकैकस्मात् खण्डं खण्डं च ददाति, कूरस्य

मन्त्यत्वात्, तन्नैयत्यं च निरूपणाया पर्यन्तभवनात्, तन्नियमोऽपि विवक्षानियमादिति, एव सति चक्रवत् पुन पुनरावर्त्तते इति, यदि च पूरणत्वमन्त्यस्य विशेप तदा तच्छेपप्रदेशापेक्षमेवेत्य त्याविनाभावित्वे तदविनाभावित्वमपि बलादापततीति सकलप्रदेशाविनाभावित्वात्तदात्मकत्वसिद्धि , नाप्युपकारित्व विशेप , यतस्तदन्येपामपि कथ न ?, किमात्मप्रदेशा एव न ते ?, यद्वाऽऽत्मप्रदेशत्वेऽप्येकका इति ?, न तावदाद्य पक्ष , अशेपाणामात्मप्रदेशत्वेन वादिप्रतिवादिनोरिष्टत्वात्, अथात्मप्रदेशत्वेऽप्येकका इति, एकत्व त्वन्मता त्यप्रदेशसहायकाभावात् परस्परसाहायकविरहतो वा ?, यदि त्वन्मता त्यप्रदेशसहायकाभावात् शेपप्रदेशानामनुपकारित्व, त्वन्मतस्यान्त्यस्यापि तत्साहायकासत्त्वात् तदस्तु, युक्त च बहूनामुपकारित्वम्, एकस्य तु तदभावो, यदुक्तम्—"जुत्तो य तदुवयारो देसूणे ण उ पएसमेत्तमि । जह ततूणमि पडे पडोवयारो न ततुमि ॥१॥" नापि परस्परसहायकासत्त्वात्, यतस्तत्किं त्वत्कल्पिता त्य प्रदेशतो न्यूनत्वे तदभावे वा ?, यदि न्यूनत्वे तत्किं शक्तितोऽवगाहनातो वा ?, न तावच्छक्तित , एकपटतन्तूनामिवैकात्मप्रदेशाना तन्न्यूनत्वायोगात्, नाप्यवगाहनात , सर्वेपामप्यमीपामेकैकाकाशप्रदेशावगाहित्वेन तुल्यत्वात्, तदभावपक्षे चान्त्यप्रदेशस्येव शेपप्रदेशानामप्यात्मोपकारित्व सिद्धमेव, आगमाभिहितत्व च विशेपकमुच्यमान तदन्यतामेव सूचयति, यत स्फुटमेवागमवचन "कसिणे पडिपुण्णे लोगागासपएसतुल्लपएसे जीवत्ति वत्तव सिय" त्ति, ततश्च—

---

१ युक्तश्च तदुपचारो देशोने न तु प्रदेशमात्रे । यथा तन्तूने पटे पटोपचारो न तन्तौ ॥ १ ॥

तेणं कालेणं तेणं समएणं समणस्स भगवतो दो वाससयाणि चोद्दसुत्तराणि सिद्धिं गयस्स, ततो ततितो उप्पन्नो। सेयविया णयरी, पोलासं उज्जाणं, तत्थ अज्जासाढा णाम आयरिया वायणायरिया य, तेसिं च बहवे सीसा आगाढजोगपडिवन्नया अज्झायंति, तेसिं रत्तिं विसूइया जाया, णिरुद्धा वाएण, ण दे(चे)व कोइ उवट्ठवितो जाव कालगया, सोहम्मे णलिणिगुम्मे विमाणे उववण्णा, ओहिं पउंजंति, जाव पेच्छंति तं सरीरगं, ते य साहुणो आगाढजोगपडिवण्णगा, एएऽवि ण जाणंति, ताहे तं चेव सरीरं अणुपविट्ठो, पच्छा उट्ठवेन्ति, वेरत्तियं पकरेह, एवं तेण तेसिं दिव्वप्पभावेणं लहुं चेव समाणियं, पच्छा णिप्फण्णेसु तेसु भणंति—खमह भंते! जमेत्थ मए असंजएण वंदाविया, अहं अमुगदिवसं कालगतिल्लतो, एवं सो खामेत्ता गतो, तेऽवि तं सरीरगं छड्डेऊण इमे एयारूवे अब्भत्थिए

१ तस्मिन् काले तस्मिन् समये श्रमणाद्भगवतः द्वे वर्षशते चतुर्दशोत्तरे सिद्धिं गतात्, तदा तृतीय उत्पन्नः। श्वेताम्बी नगरी, पोलासमुद्यानं, तत्र आर्याषाढा नाम आचार्या वाचनाचार्याश्च, तेषां च बहवः शिष्या आगाढयोगप्रतिपन्ना अधीयन्ते, तेषां रात्रौ विसूचिका जाता, निरुद्धा (निरुद्धचेष्टा) वातेन, नैव कोऽप्युत्थापितः यावत्कालगताः, सौधर्मे नलिनीगुल्मे विमाने उत्पन्नाः, अवधिं प्रयुञ्जन्ति, यावत्प्रेक्षन्ते तच्छरीरकं, तांश्च साधून् आगाढयोगप्रतिपन्नान्, एतेऽपि न जानन्ति, तदा तदेव शरीरमनुप्रविष्टाः, पश्चादुत्थापयन्ति, वैरात्रिकं प्रकुरुत, एवं तेन तेषां दिव्यप्रभावेण लघ्वेव समापितं, पश्चात् निष्पन्नेषु तेषु भणन्ति—क्षमध्वं भगवन्तः! यदत्र मयाऽसंयतेन वन्दनं दापिताः, अहममुकस्मिन् दिने कालगत. (आसीत्), एवं स क्षमयित्वा गतः, तेऽपि तच्छरीरकं त्यक्त्वा इमान् एतद्रूपान् अभ्यर्थितान् ( संकल्पान् )

कुसणस्स वत्थस्स, ते जाणति—एस पच्छा पुणो दाहिति, पच्छा पाएसु पडितो, सयण च भणति—वदेह, साहू पडिलाभिया, अहो अह धन्नो ! ज तुब्भे मम चेव घरमागया, ताहे भणति—किह धरिसिया ? अम्हे, ताहे सो भणति—णणु तुब्भ सिद्धतो पज्जतवयवमेत्ततोऽवयवी, यदि सच्चमिण तो का विहसणा ? मिच्छमिहरा उ, तुब्भे मए ससिद्धतेण पडिलाभिया, जदि णवरि वद्धमाणसामिस्स तणएण सिद्धतेण तो पडिलाभेमि, एत्थ सबुद्धा, इच्छामो अज्जो ! सम पडिचोयणा, ताहे पच्छा सावएण पडिलाभिया, मिच्छादुक्कड च ण कय, एव ते सवे सबोहिया आलोइयपडिक्कता विहरति ॥ यथा अव्यक्ता आषाढात्तथाऽऽह—

सियवियपोलासाढे जोगे तद्दिवसहिययसूले य । सोहम्मि नलिणगुम्मे रायगिहे पुरि य बलभद्दे १६९

व्याख्या—अक्षरार्थ सुगम ॥ १६९ ॥ भावार्थस्तु सम्प्रदायादवसेय, स चायम्—

१ सूपस्य वस्त्रस्य, ते जानन्ति—एष पश्चात् पुनर्दास्यति, पश्चात् पादयो पतित, स्वजन च भणति—वन्दध्व, साधव प्रतिलम्भिता, अहो अह धन्यो यद्यूय ममैव गृहमागता, तदा भणन्ति—कि धर्षिता वय ?, तदा स भणति—ननु युष्माक सिद्धान्त पर्यन्तावयवमात्रोऽवयवी, यदि सत्यमिद तदा का विधर्षणा ?, मिथ्यादुष्कृतमितरथा तु, यूय मया स्वसिद्धान्तेन प्रतिलम्भिता, यदि नवर वर्धमानस्वामिन सत्केन सिद्धान्तेन तदा (युष्मान्) प्रतिलम्भयामि, अत्र सबुद्धा, इच्छाम आर्य ! सम्यक् प्रतिचोदना, तदा पश्चात् श्रावकेण प्रतिलम्भिता, मिथ्यादुष्कृत च कृतम्, एव ते सर्वे सबोधिता आलोचितप्रतिक्रान्ता विहरन्ति ।

पवर्गसाधकत्वेन तदुपदर्शितेषु तपःप्रभृतिष्वप्यनिश्चयात् कथं न शिरोलुञ्चनादेरानर्थक्यम् ?, अथ तस्य स्वयमनिश्चयकारित्वेऽपि तद्वक्तरि तीर्थकृति प्रत्ययात्तस्यापि निश्चयकारितेति न दोषः, तर्हि किं न तत एवालयविहारादिदर्शनेन यत्यादिष्वपि तद्भावनिश्चयाद्वन्दनाविधिः, उक्तं च—"जइ जिणमयं पमाणं मुणित्ति ता वज्झकरणसंसुद्धं । देवंपि वंदमाणो विसुद्धभावो विसुद्धो उ ॥ १ ॥" सर्वथा निश्चयकारित्वाभावे च ज्ञानस्य प्रतिदिनोपयोगिनि भक्तपानादावपि भक्ष्याभक्ष्यादिविभागाभाव एव प्राप्तो, यत उक्तम्—'को जाणइ किं भत्तं किमतो किं पाणयं जलं मज्जं ? । किमलाबुं माणिकं किं सप्पो चीवरं हारो ?' ॥ १ ॥ को जाणति किं सुद्धं किमसुद्धं किं सजीवमज्जीवं ? । किं भक्खं किमभक्खं ? पत्तमभक्खं ततो सव्वं ॥ २ ॥" अथ कथञ्चिदेव निश्चयकारित्वाभावः साध्यते, यतः प्रतिसमयमन्यान्यसूक्ष्मपरिणामरूपेण भक्तादि न निश्चेतुं शक्यं, स्थिरस्थूलरूपतया च निश्चीयत एवेति नोक्तदोषः, एवं सति यत्यादिष्वप्यान्तरपरिणामरूपेणानिश्चयो वहिर्वेषादिरूपेण तु निश्चय एवास्तु, अथ यत्यादिषु प्रकृताचार्यवत् अन्यथात्वमपि सम्भवति, एतदरिष्टाऽऽदिवशतो भक्तादिष्वपि समानम् , यदि च निश्चयनयेन निश्चयस्य कर्तुमशक्यत्वाद्व-

---

१ यदि जिनमतं प्रमाणं मुनिरिति ताद्बाह्यकरणसंशुद्धम् । देवमपि वन्दमानो विशुद्धभावो विशुद्ध एव ॥१॥ २ को जानाति किं भक्तं कूमयः कि जलं पानकं मद्यम् । किमलाबु माणिक्यं किं सर्पश्चीवर हारः ? ॥ १ ॥ को जानाति किं शुद्धं किमशुद्धं किं सजीवमजीवम् । किं भक्ष्यं किमभक्ष्यं ? प्राप्तमभक्ष्यं ततः सर्वम् ॥ २ ॥

सवेवि पडिवन्ना—एचिर काल असजतो वदिओत्ति, ताहे अवत्तभाव भावेंति, जहा सव अवत्त भणेज्जाह, सज-
तोऽयि वा देवोऽवि वा, मा मुसावाओ भवेज्जा असजयवद्‌ण च, जहा तुम मम ण पत्तियसि, जह सजतो ण
वा ?, तुमपि एव भाणियघो, एव सजती देवी वा, एव विभासा । एव ते असब्भावेण अप्पाण पर उभय च वुग्गा-
हेमाणा विहरति । अनुशासितुमारब्धाश्च स्थविरै —यथा देवानाप्रिया ! इद युष्माकमाकूतं—यस्मान्न शक्यते कर्तुं,
कचिज्ज्ञानेन निश्चय ?। तस्मादव्यक्तमेवास्तु, वस्तुतत्त्वाविनिश्चयात् ॥१॥ प्रयोगश्च—यत् ज्ञान न तन्निश्चयकारि, यथेद-
माचार्यगोचर ज्ञान, ज्ञान चेद यत्यादिविपय वेदनम्, अनिश्चयकारित्वे च ज्ञानस्य निश्चयाधीनत्वात् वस्तुव्यक्तेरव्यक्त-
त्वसिद्धि , ननु चेदमनुमान ज्ञानमेव, ततश्चैतदपि निश्चयकारि न वा ?, यदि निश्चयकारि तर्हि यथाऽस्य ज्ञानत्वेऽपि
निश्चयकारिता तथा ज्ञानान्तराणामपीति विपर्ययसाधनात् विरुद्धो हेतु , अथ न निश्चयकारि वृथाऽस्य प्रयोग , स-
साध्यनिश्चयाकरणात्, शेपज्ञानाना चानिपिद्धैव निश्चयकारिता, किञ्च—यज्ज्ञान न तन्निश्चयकारीति प्रतिज्ञाया
सर्वथा निश्चयकारित्वाभाव साध्यते कथञ्चिद्वा ?, यदि सर्वथा तदा श्रुतज्ञानस्यापि ज्ञानत्वादनिश्चयकारित्वे स्वर्गा-

१ सर्वेऽपि प्रतिपन्ना , इयच्चिर कालमसयतो वन्दित इति, तदाऽव्यक्तभाव भावयन्ति, यथा सर्वमव्यक्त भणेत, सयतोऽपि वा देवोऽपि वा, मा मृपावादो भवेत् असयतवन्दन च, यथा त्व मा न प्रत्येपि—यथा सयतो न वा ?, त्वमप्येव भणितव्य , एव सयती देवी वा, एव विभापा, एव ते असद्भावेनात्मान परमुभय च व्युद्ग्राहयन्तो विहरन्ति

सिंलए पचतियगा, ते इहं आणेह, ता तेहिं आणीया भणिया य–लहुं कडगमद्देण मद्दह, ताहे हत्थीहिं कडएहि य आणिएहिं भणंति–अम्हे जाणामो जहा तुमं सावतो, सो भणति–कहिंथ सावतो ?, तुब्भेऽत्थ केऽवि चोरा णु चारिगा णु अभिमरा णु ?, ते भणंति–अम्हे समणा निग्गंथा, सो भणति–किह तुब्भे समणा ?, तुब्भे अवत्ता, तुब्भे समणा वा चारिगा वा, अहंपि समणोवासतो वा ण वा, तम्हा पडिवज्जह ववहारणयं, ततो ते संबुद्धा लज्जिया पडिवण्णा–णिस्संकिया समणा णिग्गंथा मोत्ति, ताहे अंबाडिया, खरेहि य मउएहि य मए तुम्ह संबोहणट्ठा कयं, मुक्का खामिया य ॥ यथा सामुच्छेदा अश्वमित्रात्तथाऽऽह—

मिहिलाए लच्छिघरे महगिरि कोडिन्न आसमित्तो अ। णेउणमणुप्पवाए रायगिहे खंडरक्खा य ॥१७०॥

व्याख्या—सुगमा ॥ १७० ॥ एतद्भावार्थाभिव्यञ्जकस्तु सम्प्रदायोऽयम्—'सामिस्स दो वाससयाणि वीसुत्तराणि

१ शीले प्रव्रजिताः, तानिहानयत, ततश्चौरानीता भणिताश्च—लघु कटकमर्देन मर्दयत, तदा हस्तिषु कटकेषु चानीतेषु भणन्ति–वयं जानीमो यथा त्वं श्रावकः, स भणति–कुत्रात्र श्रावकः ?, यूयमत्र केऽपि चौरा नु चारिका नु अभिमरा नु ?, ते भणन्ति–वयं श्रमणा निर्ग्रन्थाः, स भणति—कथं यूयं श्रमणाः ?, यूयमव्यक्ताः, यूयं श्रमणा वा चारिका वा ?, अहमपि श्रमणोपासको वा न वा, तस्मात् प्रतिपद्यध्वं व्यवहारनयं, ततस्ते संबुद्धा लज्जिताः प्रतिपन्नाः–निश्शङ्किताः श्रमणा निर्ग्रन्थाः स्म इति, तदा तिरस्कृताः, खरैश्च मृदुभिश्च मया युष्माकं संबोधनार्थाय कृतं, मुक्ताः क्षामिताश्च । २–स्वामिनः द्वे वर्षशते विंशत्युत्तरे

हुशो दृष्टिसवाद भक्तादिज्ञान व्यवहारतो निश्चयकारि, तर्हि यत्सादिज्ञानमपि तत एव तथाऽस्तु, युक्त चैतत्, छद्मस्थावस्थाया व्यवहारनयाश्रयत्वात् सर्वप्रेक्षानाम्, अन्यथा हि तीर्थोच्छेदप्रसङ्ग, तदुक्तम्—"छउमत्थसमयचज्जा ववहारणयाणुसारिणी सव्वा। त तह समायरतो सुज्झइ सव्वोवि सुद्धमई(मणो) ॥ १ ॥ जइ जिणमय पवज्जह ता मा ववहारणिच्छए मुयह। ववहारणउच्छेए तित्थुच्छेओ जतोऽवस्स ॥ २ ॥" ततश्च—बहुशो दृष्टिसवाद, सत्य सव्यवहारत। भक्तादिष्विव विज्ञान, वस्तु व्यक्त तदिष्यताम् ॥ १ ॥ प्रयोगश्च—यत् ज्ञान बहुशो दृष्टिसवाद तत्सत्य, यथा भक्तादिज्ञान, बहुशो दृष्टिसवाद च यत्सादिज्ञानम्, इत्याद्यनुशिष्यमाणा अपि यदा तु न गुरुवचनमिष्टवन्त ताहे अणिच्छन्ता य बारसविहेण काउस्सग्गेण उग्घाडिया, जाहे रायगिहं णयरि गया, तत्थ मोरियवसप्पसूतो बलभद्दो नाम राया समणोवासतो, तेण ते आगमिया—जहा इह आगमियत्ति, ताहे तेण गोहा आणत्ता—वचह गुण-

१ छद्मस्थसमयचर्या व्यवहारनयानुसारिणी सर्वा। ता तथा समाचरन् शुध्यति सर्वोऽपि शुद्धमति (विशुद्धमना) ॥१॥ यदि जिनमत प्रपद्यध्व तदा मा व्यवहारनिश्चयौ मुञ्चत। व्यवहारनयोच्छेदे तीर्थोच्छेदो यतोऽवश्यम्। २ तदा अनिच्छन्तश्च द्वादशविधेन कायोत्सर्गेण उद्घाटिता, यदा राजगृह नगर गता, तत्र मौर्यवशप्रसूतो बलभद्रो नाम राजा श्रमणोपासक, तेन ते ज्ञाता, यथेहागता इति तदा तेनारक्षका आज्ञप्ता :—व्रजत गुण—

तर्हि प्रत्यक्षनिराकृतः पक्षो, द्रव्यरूपेणावस्थितस्यैव वस्तुनो दर्शनात्, अन्यथा द्वितीयादिसमयेषु वस्तुनोऽभावप्रसङ्गः, वस्त्वन्तरोत्पत्तेरदोष इति चेत् किं न तद्भेदेन प्रतिभाति ?, अथ मायागोलकवत्सादृश्यात्, तन्न, प्रत्यक्षेणैकत्वग्रहादेव भेदाप्रतिभासात्, अथ भ्रान्तमेवैकत्वग्राहि प्रत्यक्षम्, एवं च सति चक्रकाख्यो दोषः, एकत्वग्राहिणो हि प्रत्यक्षस्य भ्रान्तत्वं प्रकृतानुमानप्रामाण्ये, तच्च सादृश्याद्भेदाप्रतिभासे, स चैकत्वग्राहिणः प्रत्यक्षस्य भ्रान्तत्वे, तदपि प्रकृतानुमानप्रामाण्ये इति तदेवावर्त्तते, ऐहिकामुष्मिकव्यवहारविलुप्तिश्च सर्वथा नाशे, तथा चाह–"तित्ती समो किलामो सारिक्ख विपक्खपच्चयाईणि। अज्झयणं झाणं भावणा य का सव्वणासम्मि ? ॥१॥ अन्नन्नो पइगासं भोत्ता अन्नोन्नंसोऽवि का तित्ती ?। गन्तादओवि एवं इय संववहारवोच्छित्ती ॥२॥" अथ सन्तानाश्रयो व्यवहारः, सन्तानोऽपि सन्तानिभ्यः किं भिन्नो न वा ?, यदि भिन्नो वस्तुसन्न वा ?, यदि न वस्तुसन्, किं तेन शशविषाणेनेव कल्पितेन ?, वस्तुसत्त्वेऽपि क्षणिकोऽक्षणिको वा ?, यद्यक्षणिकस्तेनैव प्रकृतानुमानव्यभिचारः, क्षणिकत्वे च तदवस्थैव व्यवहारविलुप्तिः, अथाभिन्नः, तथाहि–सदृशापरापरक्षणप्रबन्धः सन्तानः, स च सन्तानिन एव, तदसत्, यतः सर्वथोच्छेदे प्राग्भावित्वमेव कारणस्य कारणत्वं, तच्च विसदृशक्षणापेक्षयाऽपि समानमिति कथं सदृशक्षणस्यैवोत्पत्तिः ? येन तत्प्रबन्धः

१ तृप्तिः श्रमः क्लमः सादृश्यं विपक्षः प्रत्ययादीनि । अध्ययनं ध्यानं भावना च का सर्वनाशे ? ॥१॥ अन्योऽन्यः पतिग्रासं भोक्ताऽन्योऽन्यः का तृप्तिः ? । गन्त्रादयोऽप्येवमिति संव्यवहारव्युच्छित्तिः ॥ २ ॥ २ अन्ते न सोऽपि (वि०)

सिद्धिं गयस्स, तो चउत्थो उप्पण्णो, मिहिलानयरीए लच्छीगिह चेइय, महागिरी आयरिया, तत्थ तेसि सीसो कोडिन्नो, तस्सवि आसमित्तो सीसो, सो पुण अणुप्पवाए पुवे णेउणियवत्थु, तत्थ छिण्णछेयणयवत्तव्वयाए आलावतो जहा—सधे पडुप्पन्नसमयणेरइया वोच्छिज्जिस्सति, एव जाव वेमाणियत्ति,' एव तस्स तमि वितिगिच्छा जाया—जहा सधे सजया वोच्छिज्जिस्सति, एव सधेसि समुच्छेदो भविस्सइत्ति, ताहे तस्स तत्थ थिर चित्त जाय, भण्यते चाचार्यैर्यथा—भद्र! तवायमाशय —अस्ति कारणमुत्पादे, विनाशे नास्ति कारणम् । उत्पत्तिमन्त सर्वेऽपि, विनाशे नियतास्तत ॥ १ ॥ प्रयोगश्च—ये यद्भाव प्रत्यनपेक्षास्ते तद्भावनियता, यथा अन्त्या कारणसामग्री स्वकार्यजनने, अनपेक्षाश्च विनाश प्रति भावा, अत्र च विनाशनैयत्य भावाना कि वैश्रसिक विनाशमाश्रित्य साध्यते प्रायोगिक वा ?, यदि वैश्रसिक कि सर्वथा कथञ्चिद्वा ?, कथञ्चित्पक्षे सिद्धसाधन, सरत्तरङ्गवत्सततमुदयव्ययवत्त्वेन केषाञ्चित्पर्यायाणा तद्रूपेण वस्तुषु वैश्रसिकविनाशनैयत्यस्य सिद्धत्वाद्, अथ सर्वथा विनाश साध्यते

१ सिद्धिगतात्, तदा चतुर्थ उत्पन्न, मिथिलानगर्या लक्ष्मीगृह चैत्य, महागिरय आचार्या, तत्र तेषा शिष्य: कौण्डिन्यः, तस्याप्यश्वमित्र शिष्य, स पुनरनुप्रवादे पूर्वे निपुण वस्तु, तत्र छिन्नच्छेदनकवक्तव्यताया आलापको यथा—सर्वे प्रत्युत्पन्नसमयनैरयिका व्युच्छेत्स्यन्ति, एव यावद्वैमानिका इति, एव तस्य तस्मिन् विचिकित्सा जाता—यथा सर्वे सयता व्युच्छेत्स्यन्ति, एव सर्वेषा समुच्छेदो भविष्यतीति, तदा तस्य तत्र स्थिर चित्त जात,

कत्वे विनाशस्यापि विनाशप्रसङ्ग' इति, तदप्यत एव न दोषाय, तथाहि–कपालोत्पादस्यैव कपालत्वं, कपालोत्पादश्च कपालेभ्यो नान्य इति तेषामेव विनाशः, स चोभयसम्मत एव, न च कृतकेनावश्यं विनष्टव्यं, सम्यग्दर्शनादिकृतत्वे सिद्धत्वादिपर्यायाणामविनाशित्वाद्, अविनाशित्वं च साद्यपर्यवसितत्वात्तेषाम्, उभये हि पर्यायाः–स्थिरा अस्थिराश्च, यदुक्तम्—"स्थिरः कालान्तरस्थायी, पर्यायोऽक्षणभङ्गुरः। क्षणिकश्च क्षणादूर्ध्वमतिष्ठन्नस्थिरो मतः ॥ १ ॥" ततश्च—यस्मान्नाशोऽपि जन्मेव, कादाचित्कः सहेतुकः। तस्मान्न सर्वथैवामी, भावाः क्षणविनश्वराः ॥ १ ॥ प्रयोगश्च—यत्कादाचित्कं तत्सहेतुकं, यथोत्पादः, कादाचित्कत्वं च विनाशस्य उत्पत्तिक्षणानन्तरमेव भावात्, समकालभावित्वे च विनाशग्रातत्वेनोत्पादाभावे सर्वशून्यतापत्तेः, इह विनाशस्य कादाचित्कत्वमापाद्य तद्बलेन सहेतुकत्वमापादितं, तच्च परप्रसिद्धानेव हेतूनपेक्ष्य, स्वप्रसिद्ध्या तु न किञ्चिदहेतुकं नाम, द्रव्यादिचतुष्टयापेक्षत्वेन सर्वस्य तद्धेतुकत्वात्, तत् प्रतिपद्यस्व पर्यायनयाङ्गीकारतः कथञ्चिदुच्छेदि वस्तु, द्रव्यार्थिकनयाश्रयणाच्च कथञ्चिन्नित्यमिति, तथा च पूज्याः—"[1]जमणंतपज्जवमयं वत्थुं भवणं च चित्तपरिणामं । ठीतिभवभंगरूवं णिच्चाणिच्चाइं तोऽभिमतं॥१॥ सुखदुक्खबंधमोक्खा उभयनयमयाणुवत्तिणो जुत्ता। एगयरपरिचाए इय (ह) संववहारवुच्छित्ती ॥ २ ॥

१ यदनन्तपर्यायमयं वस्तु भवनं च चित्रपरिणामम् । स्थितिभवभङ्गरूपं नित्यानित्यानि ततोऽभिमतानि ॥ १ ॥ सुखदुःखबन्धमोक्षा उभयनयमतानुवृत्तेर्युक्ताः । एकतरपरित्यागे इति (ह) संव्यवहारव्युच्छित्तिः ॥ २ ॥

सन्तान उच्यते, अथ मध्यक्षणस्यैवोत्पत्तिरिष्टा, तर्हि वस्तु कथचित् स्थितिमदपि दृष्टमिति तथैवास्तु, सजातीयेतरव्यावृत्तवस्तुव्यतिरिक्ता च न किञ्चिदतिरिक्त सादृश्यम्, अतिरिक्त च खपुष्पमिव न तत्त्वविचारोपयोगि, पूर्वापरविनिर्लुठितक्षणाभ्युपगमे च सन्तानिनोऽप्यसन्त एवेत्ययुक्तमतो भेदाभेदविचार, अथ प्रायोगिक विनाशमाश्रित्य भावाना विनाशनैयत्य साध्यते, तर्हि तस्य हेत्वन्वयव्यतिरेकानुविधायित्वेनानपेक्षत्वमसिद्धम्, तथाहि—तत्किं विनाशहेतूनामसामर्थ्याद्ध्य वैयर्थ्यात्कृतकत्वे विनाशस्यापि विनाशप्रसङ्गतो वा ?, यद्यसामर्थ्यात्तत्किं विनाशस्य तुच्छरूपतया कर्तुमशक्यत्वेन वस्त्वन्तरोत्पादव्यापृतत्वेन वा ?, तत्राद्यपक्षे विनाशस्य तुच्छरूपत्वमसिद्ध, यतो जैनानामुत्तरावस्थोत्पाद एव पूर्वावस्थाप्रच्युतिर्नाशः, यदुक्तम्—"कपालाना तु उ(समु)त्पाद, स एव च घटव्यय । अन्यो न दृश्यते नाशो, मध्ये कुम्भकपालयो ॥ १ ॥" न चानयोरेकत्वे विरोधो, निमित्तभेदोदयत्वात्, यदुक्तम्—"एकत्वेऽपि विरुद्धत्व, न चोत्पादविनाशयो । निमित्तभेदभूलत्वात्स्नुषापुत्रपितृत्ववत् ॥ १ ॥" सिद्धे चैकत्वे पूर्वविनाशाभूत एवोत्तरोत्पाद इत्यनयोस्तुल्य एव हेतुव्यापार, ततो भावान्तरोत्पादव्यापृतत्वेनेत्यपि प्रत्युक्तम्, उक्त च—"अन्यदुत्तरसम्भूति, पूर्वनाशाविनाकृता । नाविनाश्य तत पूर्वं, प्रकुर्याद्धेतुरुत्तरम् ॥ १ ॥" अथ वैयर्थ्यात् यत हि विनश्वरस्वभावो भाव इति किं तस्य विनाशहेतुना ?, नन्वेव नाशस्वभावत्वाद्वस्तुन उत्पाद एव न स्यात्, नाशोत्पादयोर्विरुद्धत्वेन त्वयाऽभ्युपगतत्वात्, अविरुद्धताभ्युपगमे वा जैनमतानुप्रवेश, यदपि—'कृत-

यावि, एत्थं सो वितिगिच्छंतो खणिगवायं पण्णवेइ, एत्थ ते संबुद्धा भणंति—इच्छामो अज्जो! सम्मं पडिचोयणा एवमेवं तहत्ति, एवं ते संबोहिया मुक्का खामिया पडिवण्णा य ॥ यथा गङ्गाद् द्विक्रियास्तथा चाह—

नइखेडजणव उल्लग महगिरि धणगुत्त अज्जगंगे य। किरिया दो रायगिहे महातवो तीरमणिनाए ॥१७१॥

व्याख्या—क्षुण्णा ॥ १७१ ॥ सम्प्रदायश्चायम्—

सामिस्स अट्ठवीसाइं दोवाससयाइं सिद्धिं गयस्स तो पंचमतो उप्पण्णो, उल्लुगा नाम णई, तीसे तीरे उल्लुगतीरं नगरं, बीए तीरे खेडत्थाम, (ग्रन्थाग्रम् ४०००) तत्थ महागिरीणं आयरियाणं सीसो धणगुत्तो नाम, तस्स सीसो गंगदेवो णाम आयरितो, सो पुव्विमे तडे उल्लुगतीरे णयरे, आयरिया से अवरिमे तडे, ताहे सो सरदकाले आयरियं वंदतो उच्चलितो, सो य उवरितो खल्लीडो, तस्स उल्लुगं णइं उत्तरंतस्स सा खल्ली उण्हेण डज्झति, हेट्ठा य सीयलेण पाणिएण

१ अपि, अत्र स विचिकित्सयन् क्षणिकवादं प्रज्ञापयति, अत्र ते संबुद्धा भणन्ति—इच्छाम आर्य! सम्यक् प्रतिचोदना, एवमेवं तथेति, एवं ते संबुद्धा मुक्ताः क्षामिताः प्रतिपन्नाश्च। २ स्वामिनोऽष्टाविंशतिर्द्वे वर्षशते च सिद्धिगतात् तदा पञ्चम उत्पन्नः, उल्लुकानाम्नी नदी, तस्यास्तीरे उल्लुकतीरं नगरं, द्वितीये तीरे खेटस्थाम, तत्र महागिरीणामाचार्याणां शिष्यो धनगुप्तो नाम, तस्य शिष्यो गङ्गदेवो नामाचार्यः, स पौरस्त्ये तटे उल्लुकतीरे नगरे, आचार्यास्तस्य पाश्चात्ये तटे, तदा स शरत्काले आचार्याणां वन्दनाय उच्चलितः, स चोपरि खल्वाटः, तस्योल्लुकनदीमुत्तरतः सा खलतिरुष्णेन दह्यते, अधस्तात् शीतलेन पानीयेन

हारवोच्छित्ती ॥ २ ॥" एव प्रज्ञाप्यमानोऽपि यतो नेच्छति ततोऽसौ निह्नवोत्ति णाऊण उग्घाडितो, सो समुच्छेयणवाय वागरतो हिंडेति जहा—सुण्णो लोगो भविस्सति, असब्भावभावणाहि भावितो रायगिह गतो, तत्थ खडरक्खा आरक्खिया समणोवासया, ते य सुकपाला, ते य आगमिलिया, तेहिं मारिउमारद्धा, ताहे ते भीया भणति—अम्हेहिं सुय जहा तुम्भे सड्ढा तहावि एत्तिए असजए सजए मारेह, ते भणति—जे ते पवइगा ते वोच्छिण्णा अन्ने चोरा वा चारिया वा जाव सयमेव विणस्सिहिह, को तुब्भे विणासेति ?, तुब्भ चेव सिद्धतो, जइ पर सामिस्स सिद्धतेण ते चेव तुब्भे, तेहिं चेव अम्हेहि विणासेज्जह, जतो त चेव वत्थु कालादिसामग्गि पप्प पढमसमयिकत्तेण वोच्छिज्जइ दुसमयकत्तेण उप्पज्जति, एवमाइ, तिसमयणेरइया वोच्छिज्जति चउसमया उप्पज्जति, एव पचसमयग-

१ निह्नव इति ज्ञात्वोद्घाटित , स सामुच्छेदनवाद व्याकुर्वन् हिण्डते, यथा शून्यो लोको भविष्यति, असद्भावभावनाभिर्भावयन् राजगृह गत , तत्र खण्डरक्षा आरक्षका श्रमणोपासका , ते च शुल्कपाला , ते च ज्ञातवन्त , तैर्मारयितुमारब्धा , तदा ते भीता भणन्ति—अस्माभि श्रुत यथा यूय श्राद्धास्तथापीयत असयतान्(इव) सयतान् मारयत, ते भणन्ति—ये ते प्रव्रजितास्ते व्युच्छिन्ना अन्ये चौरा वा चारिका वा, यावत् स्वयमेव विनङ्क्ष्यथ, को युष्मान् विनाशयति ?, युष्माकमेव सिद्धान्त , यदि पर स्वामिन सिद्धान्तेन त एव यूय तैश्चैवास्माभिर्विनाश्यन्ते, यतस्तदेव वस्तु कालादिसामग्रीं प्राप्य प्रथमसामयिकत्वेन व्युच्छिद्यते द्वितीयसामयिकत्वेनोत्पद्यते, एवमादि, त्रिसमयनैरयिका व्युच्छिद्यन्ते चतु सामयिका उत्पद्यन्ते, एव पञ्चसमयगता

किञ्च—यत्रेन्द्रियपञ्चकमपि सञ्चरन्मनोदुर्लक्षं, अत एव दीर्घां शुष्कां तिलशष्कुलिका भक्षयतो बुद्धस्य पञ्च ज्ञानानि समुत्पन्नानीति कैश्चिदुच्यते, तत्रैकेन्द्रियस्य देशान्मनः सञ्चरंल्लक्षिष्यत इति दुराशयम्, इह च सञ्चरणमुपयोगगमनम्, अन्यथा शरीरव्यापिनः तस्य सञ्चारायोगात्, अथात्रानुमानसिद्धः क्रम इति यौगपद्याभावः, तथाहि—यत् क्रियावत् तत् क्रमेणैव देशान्तरस्कन्दि, यथाऽऽदित्यः, क्रियावच्च सूच्यादि, इदमपि समानमत्रापि, यौ दूरदेशौ न तयोर्युगपदेकस्य सञ्चारो यथा हिमवद्विन्ध्यशिखरयोर्देवदत्तस्य, दूरदेशौ च शिरश्चरणगतत्वगिन्द्रियदेशावित्यनुमानेन मनसः क्रमसञ्चारसिद्धेः, स्यादेतद्—आगमसिद्धमुपयोगयौगपद्यं, न च तद् युगपन्मनसः सञ्चारं विनेति न मनसः क्रमसञ्चारसाधकानुमानोत्थानम्, आगमसिद्धता चास्य बहुबहुविधादिग्राहित्वाभिधानेनावग्रहादीनामनेकग्रहणस्य तत्रोक्तत्वात्, तदभिधानाच्च युगपदनेकोपयोगताऽप्युक्तैवेति, नन्वत्रानेकग्रहणं किं सामान्यविशेषाणां ग्रहणमपेक्ष्य केवलविशेषाणां वा ?, न तावदाद्यः पक्षो यतोऽनुवृत्तिव्यावृत्तिरूपेण विलक्षणत्वं सामान्यविशेषाणां, तथा चाह—'य एकत्र ग्रहणपरिणामः स नान्यत्रे'ति कथं युगपत्सामान्यविशेषग्रहणम् ?, अथ द्वितीयः पक्षः, उक्तं हि—"विशेषाणां व्यावृत्तिरूपेणाविलक्षणत्वात् युगपद्बहूनामपि ग्रहणम्,' तन्न, विरुद्धत्वादस्य, तथाहि—विशेषाश्चाविलक्षणाश्चेति परस्परविरुद्धं वचः, अथ भिन्नेष्वपि विशेषेष्वभिन्नं सामान्यमिति तद्रूपेण तेषां ग्रहणम्, इदमस्मदिष्टमेव, उक्तं च—"[1]उंसिणेयं सीयेयं ण विभागेणोवओगदुगमिट्ठं । होज्जा समदुगगहणं सामन्नं वेयणामेत्तं ॥ १ ॥" न चैवमनेकग्रहणं युगपदनेकोपयो-

१ उष्णेयं शीतेयं न विभागेनोपयोगद्वयमिष्टम् । भवेत् समकं द्विकग्रहणं सामान्यं वेदनामात्रम् ॥ १ ॥

सीय, ताहे सो चिंतेति–जहा सुत्ते भणियं–एगा किरिया वेइज्जति–सीया उसिणा वा, अहं दो किरियातो वेएमि, तो दो किरिआओ एगसमएण वेइज्जति, ताहे आयरियाण साहइ, तेहिं भणियं—मा अज्जो ! पण्णवेहि, णत्थि एयं जं एगसमएण दो किरिआओ वेइज्जति, तथाहि तदाशयः—तथा प्रतीयमानत्वाच्छ्वेत श्वेततया यथा । यौगपद्येन किं नेष्टमुपयोगद्वयं तथा ? ॥१॥ प्रयोगश्च—यद्यथा प्रतीयते तत्तथाऽस्ति, यथा श्वेतं श्वेततया, प्रतीयते च यौगपद्येनोपयोगद्वयं, नन्वत्र यौगपद्येनोपयोगद्वयप्रतीतिः किं क्रमानुपलक्षणमात्रेण यद्वैकत्रोपयुक्तस्यान्यत्राप्युपयोगनिश्चयेन ?, यदि क्रमानुपलक्षणमात्रेण, तदाऽनैकान्तिको हेतुः, उत्पलपत्रशतव्यतिभेदादिषु प्रतीयमानस्यापि यौगपद्यस्याभावात्, अथ तत्र सूच्याः सूक्ष्मत्वेनाशुसञ्चारित्वेन च समयादिगत एव क्रमः, स च समयादिसौक्ष्म्यान्न लक्ष्यत इति यौगपद्याभिमानः, एवं सत्यत्रापि मनसोऽतीन्द्रियत्वेन सूक्ष्मत्वादत्यन्तास्थिरतयाऽऽशुसञ्चारित्वाच्च शिरश्चरणगतत्वगिन्द्रियदेशयोः सञ्चरणक्रमः समयादिसौक्ष्म्यान्न लक्ष्यते, तत उपयोगयौगपद्याभिमान इत्यस्तु, उक्तं च—"सुहुमासुचलं चित्तं"ति, तथा "समयादिसुहुमयातो मन्नसि जुगवंपि भिण्णकालंपि । उप्पलदलसयवेहं व जह व तमलायचक्कंति ॥ १ ॥"

१ शीतं, तदा स चिन्तयति—यथा सूत्रे भणितम्–एका क्रिया वेद्यते–शीता उष्णा वा, अहं द्वे क्रिये वेदयामि, ततो द्वे क्रिये एकसमयेन वेद्येते, तदा आचार्यान् कथयति, तैर्भणितं–मा आर्य ! प्रज्ञापय, नास्त्येतत् यत् एकसमयेन द्वे क्रिये वेद्येते । २ सूक्ष्ममाशुचलं चित्तमिति । ३ समयादिसौक्ष्म्यात् मन्यसे युगपदपि भिन्नकालमपि । उत्पलदलशतवेधमिव यथा वा तदलातचक्रमिति ॥ १ ॥

वं[1]ओगमेत्तोवउत्तसत्तित्ति तस्समं[2]त्तो य । अत्थंतरोवओगं जाउ कहं केण वंसेण ? ॥२॥" एवं प्रज्ञाप्यमानोऽपि असं[3]द्द-हंतो असब्भावभावणाए अप्पाणं परं उभयं च वुग्गाहेति, साहुणो पण्णवेति, परंपरेण सुयं आयरिएहिं, वारिओ, जाहे ण ठाइ ताहे उग्घाडितो, सो हिंडंतो रायगिहं गतो, महातवोतीरप्पभे पासवणे, तत्थ मणिणागो णाम णागो, तस्स चेइए ठाइ सो, तत्थ य परिसामज्झे कहेति–जहा एवं खलु जीवा एगसमएण दो किरिया वेएंति, ताहे तेण णागेण तीसे चेव परिसाए मज्झे भणितो—मा एयं पण्णवणं पण्णवेहि, ण एसा पण्णवणा सुट्ठु दुट्ठु-सेहा !, अहं एचिरं कालं वद्धमाणसामिस्स मूले सुणामि–जहा एगा किरिया वेदिज्जइ, तुमं विसिट्ठतरातो जातो?,

---

१. पयोगमात्रोपयुक्तशक्तिरिति तत्समाप्तश्च । अर्थान्तरोपयोगं यातु कथं केन वांऽशेन ? ॥ २ ॥ २ तस्समं नेव ( वि ) । ३ अश्रद्दधत् असद्भावभावनया आत्मानं परमुभयं च व्युद्ग्राहयति, साधून् प्रज्ञापयति, परम्परकेण श्रुतमाचार्यैः, वारितः, यदा न तिष्ठति तदोद्घाटितः, स हिण्डमानो राजगृहं गतः, महातपस्तीरप्रभं प्रस्रवणं, तत्र मणिनागो नाम नागः, तस्य चैत्ये तिष्ठति सः, तत्र च पर्षन्मध्ये कथयति–यथैवं खलु जीवा एकसमयेन द्वे क्रिये वेदयन्ति, तदा तेन नागेन तस्या एव पर्षदो मध्ये भणितः—मा एतां प्रज्ञापनां प्रज्ञिज्ञपः, नैषा प्रज्ञापना सुन्दरा दुष्टशैक्ष !, अहमियच्चिरं कालं वर्धमानस्वामिनः मूलेऽश्रृणवं–यथैका क्रिया वेद्यते, त्वं विशिष्टतरको जातः

गित्वाविनाभावि येन तदभिधानात्तदप्युक्त भवेत्, तथा च पूज्या —“बहुवहुविहाइगहणे णणूवओगवहुआ सुएऽभिहिया। तमणेगग्गहण चिय उवओगाणेगया णत्थि ॥ १ ॥” अथैकत्रोपयुक्तस्यान्यत्राप्युपयोगनिश्चयेनेति पक्ष, सोऽपि न, यस्माद्यद्यन्यत्रोपयुक्तमपि मनोऽन्यत्राप्युपयुज्यमान निश्चीयेत तदा कश्चित् व्याक्षिप्तमना पुर सन्निहितपदार्थान्तरेऽप्युपयोग लक्षयेत्, न चैव, तदुक्तम्—“अन्नंविणिउत्तमन्नं विणितोग लहति जइ मणो तेण। हत्थिं ठियपि पुरतो किमन्नचित्तो न लक्खेइ ? ॥ १ ॥” ततश्च स्थितमेतत्–गवावहितचित्तस्य, नोपयोगो यथा गजे। शीतोपयुक्तचित्तस्य, नोपयोगस्तथाऽऽतपे ॥ १ ॥ प्रयोगश्च–य एकत्रावहितचित्तो न सोऽन्यस्य ग्राहको, यथा गवाहितचित्तो हस्तिन, शीतावहितचित्तश्च शीतवेदनाकाले जीव, इत्थ सद्युपयोगमाश्रित्योक्त, सामान्येन तु–कारण परिणाम्येकोपयुक्तनिजशक्तिकम्। तदैवाशक्तमन्यस्मिन्नुपयुक्त(योक्तु) मृदादिवत् ॥१॥ प्रयोगश्च—यत्परिणामि कारणमेकत्रोपयुक्तशक्तिक न तदैव तदन्यत्रोपयुज्यते, यथा घटोपयुक्ता मृत् शरावादिषु, शीतवेदनोपयुक्तश्च तत्काले जीव, उक्त च–“उवंओगमतो जीवो उवउज्जइ जेण जम्मि त काल। सो तम्मओवओगो होइ जहिंदोवओगम्मि ॥ १ ॥ सो तदु-

---

१ बहुबहुविधादिग्रहणे ननूपयोगबहुता श्रुतेऽभिहिता। तदनेकग्रहणमेव उपयोगानेकता नास्ति ॥ १ ॥ २ अन्यविनियुक्तमन्य विनियोग लभते यदि मनस्तेन। हस्तिन स्थितमपि पुरत किमन्यचित्तो न लक्षयति ? ॥ १ ॥ ३ उपयोगमयो जीव उपयुज्यते येन यस्मिन् तस्मिन् काले। स तन्मयोपयोगो भवति यथेन्द्रोपयोगे ॥ १ ॥ स तदु-

एत्थं जंबूदीवे णत्थि मम पडिवादी, ताहे तेण पडहतो णीणावितो, जहा सुण्णा परप्पवाया, तस्स य लोगेणं पोट्टसालो णामं कयं, पच्छा तेण रोहगुत्तेण वारियं—मा वाएह पडहयं, अहं से वायं देमि, एवं सो पडिसेहित्ता गतो आयरियाणं आलोएति, एवं मे पडहगो खोभितो, आयरिया भणंति—दुट्ठु कयं, सो विज्जावलिओ वाए पराजिओऽवि विज्जाहिं उट्ठेति, आह च—

विच्छुय सप्पे मूसग मिगी वराही य कागि पोयाइं । एयाहिं विज्जाहिं सो उ परिव्वायगो कुसलो ॥१७३॥

व्याख्या—सुगमा ॥ १७३ ॥ सो भणइ—किं सक्का एत्ताहे णिलोक्किउं ?, ताहे तस्स आयरिया इमातो विज्जातो सिद्धिल्लियातो दिंति तस्स पडिवक्खा—

मोरिय नउलि बिराली वग्घी सीही य उलुगि ओवाइ । एयाओ विज्जाओ गिण्ह परिव्वायमहणीओ॥१७४॥

१ जम्बूद्वीपे नास्ति मम प्रतिवादी, तदा तेन पटहो दापितः—यथा शून्याः परप्रवादाः, तस्य च लोकेन पोट्टशालो नाम कृतं, पश्चात्तेन रोहगुप्तेन वारितं, मा वीवदः पटहम्, अहमेतस्मै वादं ददामि, एवं स प्रतिषिध्य गत आचार्येभ्य आलोचयति, एवं मया पटहः क्षोभितः, आचार्या भणन्ति—दुष्ठु कृतं, स विद्यावलिको वादे पराजितोऽपि विद्याभिरुत्तिष्ठते, स भणति—किं शक्यमधुना निलातुं, तदा तस्मै आचार्या इमा विद्याः सिद्धा ददति तस्य प्रतिपक्षाः,

तां छड्ड एय वाय, मा ते दोसेण सेहामि, एय ते ण सुदर, भगवया एत्थ चेव समोसरिएण वागरिय, एव सो पण्णवितो अब्भुगगतो, उवट्ठिओ भणति–मिच्छामि दुक्कड ॥ यथा षडुलूकात् त्रैराशिकानामुत्पत्तिस्तथाऽऽह–

**पुरिमतरजि भुयगुह वलसिरि सिरिगुत्त रोहगुत्ते य । परिवाय पुट्टसाले घोसण पडिसेहणा वाए ॥१७२॥**

व्याख्या—स्पष्टा ॥ १७२ ॥ सम्प्रदायस्त्वयम्—

पंचसया चोयाला सिद्धि गतस्स वीरस्स तो तेरासियदिट्ठी उप्पण्णा, अतरजिया णाम णयरी, तत्थ भूयगुह णाम चेइय, तत्थ सिरिगुत्ता नाम आयरिया ठिया, तत्थ वलसिरीणाम राया, तेर्सि पुण सिरिगुत्ताण थेराण सड्ढी (सेहो) य रोहगुत्तो नाम, सो पुण अन्नगामे ठियल्लतो, पच्छा तत्तो एति । तत्थ य एगो परिवायगो पोट्ट लोहपट्टेण वधेऊण जबुसाह च गहाय हिंडति, पुच्छिओ भणति–णाणेण पोट्ट फुट्टति, तो लोहपट्टेण वद्ध, जबूसाला य जहा

१ ततस्त्यजैन वाद, मा तव दोषेण शिक्षयामि, एतत्तव न सुन्दर, भगवताऽत्रैव समवसृतेन व्याकृतम् , एव स प्रज्ञापितोऽभ्युपगतवान्, उपस्थितो भणति–मिथ्या मे दुष्कृतम् । २ पञ्चसु शतेपु चतुश्चत्वारिंशदधिकेपु सिद्धि गताद्वीरात् तदा त्रैराशिकदृष्टिरुत्पन्ना, अन्तरञ्जिका नाम नगरी, तत्र भूतगुह नाम चैत्य, तत्र श्रीगुप्ता नाम आचार्या स्थिता , तत्र वलश्रीर्नाम राजा, तेषा पुन श्रीगुप्ताना स्थविराणा शैक्षश्च रोहगुप्तो नाम, स पुनरन्यग्रामे स्थित , पश्चात् तत आयाति । तत्र चैक परिव्राट् उदर लोहपट्टेन बद्धा जम्बूशाखा च गृहीत्वा हिण्डते, पृष्टो भणति–ज्ञानेनोदर स्फुटति, ततो लोहपट्टो बद्ध, जम्बूशाला च यथाऽत्र

मुयंइ, तेहिं विच्छुएहिं हएहिं पच्छा सप्पे मुयइ, ताहे तेसिं पडिघायए णउले मुयति, ताहे उंदरे तेसिं मज्जारे, ताहे मिगे तेसिं वग्घे, ताहे सूयरे तेसिं सिंहे, ताहे कागे तेसिं उलूगे, ताहे पोयागिं, पोयागी सउलिया, तीसे संपाती–ओलावी, एवं जाहे ण तरइ ताहे गद्दभी मुक्का, तेण य सा रयहरणेण आहया, ताहे तस्सेव परिव्वायगस्स उवरिं छेरित्ता गया, ताहे सो परिव्वायगो हीलिज्जंतो णिच्छूढो, एवं सो तेणं परिव्वायगो पराजितो, ताहे आगतो आयरियस्स सगासे, आलोएइ, ताहे आयरिएहिं भणियं–कीस ते उट्ठिएण ण भणियं ?—णत्थि तिन्नि रासी, एयस्स बुद्धिं परिभूय मए पण्णविया, ता इयाणिंपि गंतुं भणाहि, सो णेच्छति, मा उब्भावणा होहित्ति ण पडिसुणेइ, पुणो पुणो भणिओ भणइ–को व एत्थ दोसो ?, किं च जायं ? जइ तिण्णि रासी भणिया, अत्थि चेव तिन्नि

१ मुञ्चति, तैर्वृश्चिकेषु हतेषु पश्चात् सर्पान् मुञ्चति, तदा तेषां प्रतिघाताय नकुलान् मुञ्चति, तदा मूषकान् तेषां मार्जारान्, तदा मृगान् तेषां व्याघ्रान्, तदा शूकरान् तेषां सिंहान्, तदा काकान् तेषामुलूकान्, तदा शकुनिकाः, ( पोताक्यः शकुनिकाः ) तासां उल्ला-(उला)वकान्, एवं यदा न शक्नोति तदा गर्दभी मुक्ता, तेन च सा रजोहरणेनाहता, तदा तस्यैव परिव्राजकस्योपरि हदित्वा गता, तदा स परिव्राट् हील्यमानो निष्काशितः, एवं स तेन परिव्राट् पराजितः, तदा आगत आचार्यस्य सकाशे, आलोचयति, तदा आचार्यैर्भणितं–कथं त्वयोत्तिष्ठता न भणितं–न सन्ति त्रयो राशयः, एतस्य बुद्धिं परिभूय मया प्रज्ञापिताः, तत् इदानीमपि गत्वा भण, स नेच्छति, मा अपभ्राजना भूदिति न प्रतिशृणोति, पुनः पुनर्भणितो भणति–को वाऽत्र दोषः ?, किं च जातं ? यदि त्रयो राशयो भणिताः, सन्त्येव त्रयो

व्याख्या—सुगमा ॥ १७४ ॥ रयहरणं च से अभिमंतिऊण दिन्न, जइ अन्नपि उट्ठेति ततो रयहरण भमाडे-ज्जाहि, अजज्जो होहिसि, इदेणऽवि ण सक्का जेउ, तो एयातो विज्जातो गहाय गतो सभ, भाणिय चणेण—एस कि जाणति ?, एयस्सेव पुव्वपक्खो होउ, परिवायतो चिंतेति—एए णिउणा, अतो एयाण चेव सिद्धतं गेण्हामि, जहा मम दो रासी—जीवरासी अजीवरासी य, ताहे इयरेण तिन्नि रासी कया, सो जाणइ—जहा एएण मम सिद्धतो गहितो, तेण तस्स बुद्धि परिभूय तिन्नि रासी ठविया—जीवा अजीवा णोजीवा य, जीवा—ससारत्थाई अजीवा —घडाई णोजीवा—घरकोलियाच्छिन्नपुच्छाई, दिट्ठतो दडो, जहा दडस्स आदि मज्झो अग्गं च, एव सव्वभावावि तिविहा, एव सो तेण णिप्पिट्ठपसिणवागरणो कतो, ताहे सो परिवायगो रुट्ठो विच्छुए मुयति, ताहे पडिमल्ले मोरे

१ रजोहरण च तस्मै अभिमन्त्र्य दत्त, यद्य यदप्युत्तिष्ठते ततो रजोहरण भ्रामयेः, अजय्यो भविष्यसि, इन्द्रेणापि न शक्यो जेतु, तत एता विद्या गृहीत्वा गत सभा, भाणित चानेन—एप किं जानाति ?, एतस्यैव पूर्वपक्षो भवतु, परिव्राट् चिन्तयति—एते निपुणा, अत एतेपामेव सिद्धा त गृह्णामि, यथा मम द्वौ राशी—जीवराशिरजीवराशिश्च, तदा इतरेण त्रयो राशय कृता, स जानाति—यथैतेन मम सिद्धान्तो गृहीत, तेन तस्य बुद्धिं परिभूय त्रयो राशय स्थापिता—जीवा अजीवा नोजीवाश्च, जीवा —ससारस्थादय अजीवा —घटादय नोजीवा —गृहकोकिलाच्छिन्नपुच्छादय, दृष्टान्तो दण्डो, यथा दण्डस्य आदिर्मध्यमग्र च, एव सर्वभावा अपि त्रिविधा, एव स तेन निष्पृष्टप्रश्नव्याक-रण कृत, तदा स परिव्राट् रुष्टो वृश्चिकान् मुञ्चति, तदा प्रतिमल्लान् मयूरान्

नामन्यत्र सञ्चारतः सुखदुःखाद्यात्मधर्मसङ्कीर्णतापत्तिः, तदुक्तम्—"अह खंधो इव संघायभेयधम्मा स तोऽवि सव्वेसिं। अवरोप्परसंचारे सुहाइगुणसंकरो पत्तो ॥ १ ॥" तथात्वे च कृतनाशाकृताभ्यागमौ, अथ प्रयोगतस्तन्न, अमूर्त्तद्रव्यत्वादिभिर्नभस इव जीवस्य खण्डशो विनाशयितुमशक्यत्वात्, तथात्वे वा सर्वनाशादिदोषप्रसङ्गः, उक्तं च—"देव्वामुत्तत्ता कयभावादविकारदरिसणातो य। अविणासकारणेहिं नभसोव न खंडसो णासो ॥१॥ णासे य सव्वनासो जीवस्स ण सो य जिणमयचातो। तत्तो य अणिम्मोक्खो दिक्खावेफल्लदोसो य ॥२॥" किञ्च—अयं कुतो निश्चीयते ?, अथ गृहकोलिकाच्छिन्नपुच्छशरीरान्तराले जीवस्यासत्त्वात्, तदसत्त्वं च तदग्रहणात्, तर्हि तत्तदग्रहणमौदारिकशरीररूपेण सर्वथा वा ?, न तावदाद्यः पक्षो, यतो न जीवस्यौदारिकमेवैकं शरीरं येन तदग्रहणेन तदसत्त्वनिश्चयः स्यात्, द्वितीयपक्षे पुनरनैकान्तिकमग्रहणं, दीपरश्मीनामिव भित्त्यादिकमन्तरेण विनौदारिकशरीरमशरीरस्य सूक्ष्मशरीरस्य वा सतोऽपि जीवस्याग्रहणात्, तथा चोक्तम्—"गेज्झामोत्तिगयातो णागासे जह पदीवरस्सीतो। तह जीवलक्ख-

---

१ अथ स्कन्ध इव संघातभेदधर्मा स तदापि सर्वेषाम्। अपरापरसंचारे सुखादिगुणसांकर्यं प्राप्तम् ॥ १ ॥ २ अमूर्त्तद्रव्यत्वात् अकृतकत्वात् अविकारदर्शनाच्च। अविनाशकारणत्वाच्च नभस इव न खण्डशो नाशः ॥ १ ॥ नाशे च सर्वनाशो जीवस्य न स च जिनमतत्यागः। ततश्चानिर्मोक्षो दीक्षावैफल्यदोषश्च ॥ २ ॥ ३ ग्राह्या मूर्त्तिगतत्वात् न आकाशे यथा प्रदीपरश्मयः। तथा जीवलक्ष-

रासी, अज्जो ! असब्भावो तित्थयराण य आसायणा, तहावि ण पडिवज्जति, एव सो आयरिएहिं सम सपलग्गो, ताहे आयरिया रायउल गया, भणति—तेण मम सीसेण अवसिद्धतो भणितो, अम्ह दुवे चेव रासी, इयाणि सो विपडिवण्णो, तो तुब्भे अम्ह वाय सुणेज्जाह, त पडिसुणति, तत्थ रायसभाए मज्झे रण्णो पुरतो आवडिय ॥ ततस्त श्रीगुप्तगुरुरवोचत्—भद्राभिधत्स्व, प्रत्युवाच—'यस्मादजीववज्जीवान्नोजीवोऽपि विभिद्यते । तथैवाऽध्यक्षगम्यत्वादस्तु राशित्रय तत ॥१॥ प्रयोगश्च—यद्यतो विलक्षण तत्ततो भिन्न, यथा जीवादजीवो, विलक्षणश्च जीवान्नोजीव , ततश्च जीवाजीवौ द्वौ नोजीवश्चेति राशित्रयसिद्धि , गुरुराह—असिद्धोऽय हेतु , यस्माज्जीवान्नोजीवस्य वैलक्षण्य लक्षणभेदेन देशभेदेन वा ?, न तावल्लक्षणभेदेन जीवलक्षणाना स्फुरणादीना त्वदभिमते नोजीवेऽपि जीवदेशे गृहलोकि(कोलि)कात्रुटितपुच्छादावभेदेन दर्शनात्, नापि देशभेदेन, स हि जीवात् पृथग्भावे भवेदन्यथा वा ?, यदि पृथग्भावे स किं विश्रसात प्रयोगतो वा ?, विश्रसातश्चेत् पुद्गलानामिव नोजीवाना स्वतश्चटनविचटनधर्मत्वेनान्यसम्बन्धि-

१ राशय , आर्य ! असद्भाव तीर्थकराणा चाशातना, तथापि न प्रतिपद्यते, एव स आचार्यै सम सप्रलग्न:, तदा आचार्या राजकुल गता , भणन्ति–तेन मम शिष्येणापसिद्धान्तो भणित , अस्माक द्वावेव राशी, इदानीं स विप्रतिपन्न , ततो यूयमस्माक वाद शृणुत, तत् प्रतिशृणोति, तत्र राजसभाया मध्ये राज्ञ पुरत आपतित

ईयं तु । मिच्छत्तं संमत्तं सव्वनयमयावरोहेणं ॥२॥" ततश्च—सहाजीवेन तद्देशो, यथैको लक्षणैक्यतः । सह जीवेन तद्देशः, तथैको लक्षणैक्यतः ॥१॥ प्रयोगश्च—यद्येनैकलक्षणं न तत्ततो भिन्नं, यथा अजीवान्नोअजीवः, एकलक्षणश्च नोजीवो जीवेनेति, एवं सम्यग् गुरुभिः सहोक्तिप्रत्युक्तिकया, जहा एगदिवसं तहा छम्मासा गया, ताहे राया भणइ —मम रज्जं सीयति, ताहे आयरिएहिं भणियं—इच्छाए मए एचिरं कालं धरितो, इत्ताहे णं पासह कलं दिवसे आगते समाणे णिग्गहामि, ताहे पभाए भणइ—कुत्तियावणे परिक्खिज्जउ, तत्थ सव्वदव्वाणि अत्थि, आणेह—जीवे अजीवे नोजीवे, ताहे देवयाए जीवा अजीवा दिन्ना, नोजीवे णत्थित्ति भणति, अजीवे वा पुणो देति, एवमादिगाणं चोयालसएण पुच्छाण णिग्गहितो, णयरे य घोसियं—जयइ महइ महा वद्धमाणसामित्ति, सो य निव्विसओ कओ, पच्छा णिण्हतोत्ति काऊण उग्घाडितो, छट्ठतो एसो, तेण वेसेसियसुत्ता कया, छउलूगो य गोत्तेणं, तेण छलूओत्ति

---

१ यिकं तु । मिथ्यात्वं सम्यक्त्वं सर्वनयमतावरोधेन ॥२॥ २ यथैको दिवसस्तथा षण्मासा गताः, तदा राजा भणति—मम राज्यं सीदति, तदाऽऽचार्यैर्भणितम्—इच्छया मयैतावच्चिरं कालं धृतः, अधुना पश्यत कल्ये दिवस आगते सति निगृह्णामि, तदा प्रभाते भणति—कुत्रिकापणे परीक्ष्यतां, तत्र सर्वद्रव्याणि सन्ति, आनय—जीवान् अजीवान् नोजीवान्, तदा देवतया जीवा अजीवा दत्ताः, नोजीवा न सन्तीति भणति, अजीवान्वा पुनर्ददाति, एवमादिभिश्चतुश्चत्वारिंशदधिकशतेन पृच्छाभिर्निगृहीतः, नगरे च घोषितं—जयति महातिमहान् वर्धमानस्वामीति, स च निर्विषयः कृतः, पश्चान्निह्नव इतिकृत्वा उद्घाटितः, षष्ठ एषः, तेन वैशेषिकसूत्राणि कृतानि, षडुलूकश्च गोत्रेण, तेन षडुलूक इति

णाइ देहे ण तयतरालमि ॥ १ ॥ देहरहिय न गिण्हइ णिरतिसतो णातिसुहुमदेह च। ण य से होइ विवाहा जीवस्स भवतराले घ ॥ २ ॥" अथान्यथेति पक्ष", तत्र चापृथग्भूतोऽपि भिन्नदेश इति पुच्छादि नोजीवो जीवाद्विलक्षण, उच्यते, इहापि पुच्छादेर्नोजीवत्व स्वल्पतरप्रदेशत्वेन समभिरूढनयाश्रयणेन वा?, यद्यल्पतरप्रदेशत्वेन तदा पुच्छवत् शेषावयवानामेकैकशो नोजीवता अजीवावयवाना च नोअजीवतेति राशिबहुत्वम्, अथ यथा जीवाजीवाना बहुत्वेऽपि जात्याश्रयणात् न राशिबहुत्व तथा तदेकदेशानामपि, तथापि राशिचतुष्टयापत्ति, उक्त च—"एवं च रासतो ते ण तिण्णि चत्तारि सपसज्जति। जीवा तहा अजीवा णोजीवा णोअजीवा य ॥१॥" अथाभिन्नलक्षणत्वादजीवान्नोअजीवो न भिद्यते इति न दोष, तर्हि तद्वदेव जीवान्नोजीवोऽपि न भेत्स्यतीति राशिद्वयसिद्धि, यत्तु समभिरूढनयाश्रयणेनेति त(त्त)न्मतानभिज्ञेनोक्त, स हि जीवदेशं नोजीवमिच्छन्नपि न राशिभेदमिच्छति, सर्वनयानामपि चैकमत्यमत्रार्थे, सर्वनयमतत्वे च जिनमतस्य किमेकतरनयमतेन?, तदुक्तम्,—"णे य रासिभेयमिच्छति तुम व णोजीवमिच्छमाणोऽवि। अन्नोवि णतो णेच्छइ जीवाजीवाहिय किंचि ॥१॥ इच्छउ व समभिरूढो देस णोजीवमेगण-

१ णानि देहे न तदन्तराले ॥१॥ देहरहित न गृह्णाति निरतिशय नातिसूक्ष्मदेह च। न च तस्य भवति विराधा जीवस्य भवान्तराल इव ॥२॥ २ एव च राशयस्ते न त्रयश्चत्वार सप्रसज्यन्ते। जीवास्तथा अजीवा नोजीवा नोअजीवाश्च ॥ १ ॥ ३ न च राशिभेदमिच्छति त्वमिव नोजीवमिच्छन्नपि। अन्योऽपि नयो नेच्छति जीवाजीवाधिक किञ्चित् ॥ १ ॥ इच्छतु वा समभिरूढो देश नोजीवमेकन-

य अणंतविरोसो य, एते छत्तीसं, एक्केक्कंमि चत्तारि विगप्पा, पुढवी अपुढवी नोपुढवी णोअपुढवी, एवमबादिष्वपि, तत्थ पुढविं देहत्ति मट्टिया देति, अपुढविं देहत्ति तोआइ, णोपुढवी देहत्ति न किंचि देति, पुढविवइरित्तं वा पुणो देइ, नो अपुढविं देहित्ति न किंचि देति, एवं जहासंभवं विभासा ॥ स्थविराश्च गोष्ठमाहिलाः स्पृष्टमबद्धं प्ररूपयन्ति यथा तथाऽऽह—

दसपुरनगरुच्छुघरे अज्जरक्खिय पुसमित्ततियगं च। गुट्ठामाहिल नव अट्ठ सेसपुच्छा य विंझस्स १७५

व्याख्या—अस्याः संस्कारः सुकरः ॥ १७५ ॥ अर्थस्तु सम्प्रदायादवसेयः, स चावश्यकचूर्णितोऽवगन्तव्यः, नवरमिहोपयोगि किञ्चिदुच्यते—

पंचसया चुलसीया तइया सिद्धिं गयस्स वीरस्स। अवद्धियाण दिट्ठी, दसपुरनयरे समुप्पण्णा ॥ १ ॥ ते देविं-

---

१ अनन्ताविशेषश्च, एते षट्त्रिंशत्, एकैकस्मिंश्चत्वारो विकल्पाः—पृथ्वी अपृथ्वी नोपृथ्वी नोअपृथ्वी, ततः पृथ्वीं देहीति मृत्तिकां ददाति, अपृथ्वीं देहीति तोयादि, नोपृथ्वीं देहीति न किञ्चिद्ददाति, पृथ्वीव्यतिरिक्तं वा पुनर्ददाति, नोअपृथ्वीं देहीति न किञ्चिद्ददाति, एवं यथासंभवं विभाषा। २ पञ्च शतानि चतुरशीत्यधिकानि तदा सिद्धिगतात् वीरात्। अबद्धिकानां दृष्टिर्दशपुरनगरे समुत्पन्ना ॥ १ ॥ ते देवे-

जंतो, चोयालसयं पुण इम–तेण छ मूलपयत्था गहिया, तजहा–दवगुणकम्मसामण्णविसेससमवाया, तत्थ दव णवहा, तजहा–पुढवी आऊ तेऊ वाऊ आगास कालो दिसा जीवो मण, गुणा सत्तरस, तजहा–रूव रसो गधो फासो सखा परिमाण पुहुत्त सजोगो विभागो परत्त अपरत्त बुद्धी सुह दुक्ख इच्छा दोसो पयत्तो, कम्म पचहा–उक्खेवण वक्खेवण आउटण पसारण गमण च, सामण्ण तिविह –महासामन्न सत्तासामन्न, सामन्नविसेससामण्णं। तत्र महासामान्यं षट्स्वपि पदार्थेषु पदार्थत्वबुद्धिकारि, सत्ता सामान्य त्रिपदार्थसद्बुद्धिविधायि, सामान्यविशेष-सामान्य द्रव्यत्वादि, अन्ये तु व्याचक्षते–त्रिपदार्थसत्करी सत्ता, सामान्य द्रव्यत्वादि, सामान्यविशेष पृथिवी-त्वादि, विसेसो एगविहो, एव समवाओऽवि, अन्ने भणति–सामन्न दुविह–परमपर च, विसेसो दुविहो–अतविसेसो

---

१ जात, चतुश्चत्वारिंशदधिक शत पुनरिदम्—तेन षट् मूलपदार्था गृहीता, तद्यथा–द्रव्य गुण कर्म सामान्य विशेषा सम वाय, तत्र द्रव्य नवधा, तद्यथा—पृथ्वी आपः तेजो वायुराकाश कालो दिग् जीवो मन, गुणा सप्तदश, तद्यथा–रूप रसो गन्ध स्पर्श सङ्ख्या परिमाण पृथक्त्व सयोग विभाग परत्वमपरत्व बुद्धि सुख दु खमिच्छा द्वेष प्रयत्न, कर्म पञ्चधा–उत्क्षेपणमपक्षेपणमा कुञ्चन प्रसारण गमन च, सामान्य त्रिविध—महासामान्य सत्तासामान्य सामान्यविशेषसामान्य (च), विशेष एकविध, एव समवायोऽपि। अन्ये भणन्ति–सामान्य द्विविध–परमपर च, विशेषो द्विविध —अन्त्यविशेषश्च

तत्थ पुण अवयवा लग्गंति, घयकुडे बहुं चेव लग्गति, एवमेवाहमज्जो! दुब्बलियापूसमित्तं पइ सुत्तत्थतदुभएसु णिप्फावकुडसमाणो जातो, फग्गुरक्खियं पति तेल्लकुडसमाणो, गोट्ठामाहिलं पइ घयकुडसमाणो, एवमेस सुत्तेण अत्थेण य उववेतो तुब्भं आयरितो होउ, तेहिं सव्वं पडिच्छियं, इयरोऽवि भणितो—जहाऽहं वट्टितो फग्गुरक्खियस्स गोट्ठामाहिलस्स तहा तुब्भेहिवि वट्टियव्वं, ताणिवि भणियाणि—जहा तुब्भे ममं वट्टियाइं तहा एयस्सवि वट्टेज्जाह, अविय–अहं कए वा अकए वा ण रूसामि एस ण खमिहित्ति. एवं दोवि वग्गे अप्पाहेत्ता भत्तं पचक्खाय कालगया देवलोगं गया, इयरेणऽवि सुयं–जहा आयरिया कालगया, ताहे आगतो पुच्छइ—को गणहरो ठवितो ?, कुडगदिट्ठंतो य सुतो, ताहे वीसुं पडिस्सए ठाइऊण पच्छा आगतो, ताहे तेहिं सव्वेहिं अब्भु-

---

१ तत्र पुनरवयवा लगन्ति, घृतकुटे बह्वेव लगति, एवमेवाहमार्या! दुर्बलिकापुष्पमित्रं प्रति सूत्रार्थतदुभयेषु निष्पावकुटसमानो जातः, फल्गुरक्षितं प्रति तैलकुटसमानः, गोष्ठमाहिलं प्रति घृतकुटसमानः, एवमेष सूत्रेणार्थेन चोपपेतो युष्माकमाचार्यो भवतु, तैः सर्वं प्रतीप्सितम्, इतरोऽपि भणितो—यथाऽहं वृत्तः फल्गुरक्षिते गोष्ठमाहिले तथा युष्माभिरपि वर्तितव्यं, तेऽपि च भणिताः—यथा यूयं मयि वृत्तास्तथैतस्मिन्नपि वर्त्तयेत, अपि च–अहं कृते वा अकृते वा नारुष्यम् एष न क्षमिष्यते इति, एवं द्वावपि वर्गौ संदिश्य भक्तं प्रत्याख्याय कालगता देवलोकं गताः, इतरेणापि श्रुतं–यथाऽऽचार्याः कालगताः, तदाऽऽगतः पृच्छति–को गणधरः स्थापितः ?, कुटदृष्टान्तश्च श्रुतः, तदा विष्वक्प्रतिश्रये स्थित्वा पश्चादागतः, तदा तैः सर्वैरभ्यु-

दंवदिया रक्खिज्जा दसपुर गया, महुराए अकिरियवाई उट्ठितो, जहा णत्थि माया णत्थि पिया एवमादिणाहियवादी, तत्थ सघसमघातो कतो, तत्थ पुण वादी णत्थि, ताहे इमेसिं पयट्टिय, इमे य जुगप्पहाणा, ताहे आगया, तेसिं साहेति, ते य महल्ला, ताहे तेहिं गोट्ठामाहिलो पयट्टिओ, तस्स य वायलद्धी अत्थि, सो गतो, सो तेण वाए पराजितो, सोऽवि ताव तत्थ सड्ढेहि आभट्ठो वरिसारत्ते ठितो अच्छति, ततो आयरिया समिक्खति, को गणहरो हवेज्जा ?, ताहे दुब्बलियापूस्समित्तो समिक्खितो, जो पुण तेसिं सयणवग्गो सो बहुओ, तेसिं गोट्ठामाहिलो वा फग्गुरक्खितो वा अणुमतो, गोट्ठामाहिलो आयरियाण माउलओ, तत्थ आयरिया सघे सद्दावित्ता दिट्ठंत करेंति—णिप्फावकुडो तेल्लकुडो घयकुडो य, ते पुण हेट्ठाहोत्ता कया णिप्फावा सवे णेंति, तेल्लमवि णेति

---

१ न्द्रवन्दिता रक्षितार्या दशपुर गता , मथुरायामक्रियावादी उत्थित —यथा नास्ति माता नास्ति पिता एवमादिनास्तिकवादी, तत्र सङ्घसमवाय कृत , तत्र पुनर्वादी नास्ति, तदाऽमीभ्य प्रवर्त्तितम् , इमे च युगप्रधाना , तदा आगता , तेभ्यः कथयति, ते च महान्त , तदा तैर्गोष्ठमाहिल प्रेषित , तस्य च वादलब्धिरस्ति, स गतः, तेन स वादे पराजित , सोऽपि तावत्तत्र श्राद्धैर्चिंहात वर्षारात्रे स्थितोऽभूत् , तत आचार्या समीक्षन्ते—को गणधरो भवेत् ?, तदा दुर्बलिकापुष्पमित्र समीक्षित , य पुनस्तेषा स्वजनवर्गो स बहुः, तेषा गोष्ठमाहिलो वा फल्गुरक्षितो वाऽनुमत , गोष्ठमाहिल आचार्याणा मातुल , तत्राचार्या सर्वान् शब्दयित्वा दृष्टान्त कुर्वन्ति—निष्पावकुट तैलकुटो घृतकुटश्च, ते पुनरवाङ्मुखीकृता निष्पावा सर्वे निर्यन्ति, तैलमपि निरेति

पुट्ठो जहा अबद्धो कंचुइणं कंचुओ समन्नेइ। एवं पुट्ठमबद्धं जीवं कम्मं समन्नेइ ॥ १७६ ॥

व्याख्या—जहा सो कंचुकिणं पुरिसं फुसति, ण उण सो कंचुओ सरीरेण समं बद्धो, एवं चेव कम्मंपि पुट्ठं, ण उण बद्धं जीवपएसेहिं समं, जस्स बद्धं तस्स कम्मसंसारवुच्छित्ती ण भविस्सति, ताहे सो भणति—एत्तियं आयरिएहिं अम्हं भणियं, एसो ण याणति, ताहे सो संकितो समाणो पुच्छतो गतो, मा मए अन्नहा गहियं हवेज्जा, ताहे पुच्छिया आयरिया, तैरुक्तम्—यथा तस्यायमाशयः—यतो यद्भेत्स्यते तेन, स्पृष्टमात्रं तदिष्यताम्। कञ्चुकी कञ्चुकेनेव, कर्म भेत्स्यति चात्मनः ॥१॥ प्रयोगः—यद्येन भविष्यत्पृथग्भावं तत्तेन स्पृष्टमात्रं, यथा कञ्चुकः कञ्चुकिना, भविष्यत्पृथग्भावं च कर्म्म जीवेन, अत्र प्रष्टव्योऽयम्—कञ्चुकवत्स्पृष्टमात्रता कर्म्मणः किमेकैकजीवप्रदेशपरिवेष्टनेन सकलजीवप्रदेशप्रचयपरिवेष्टनेन वा ?, यद्येकैकजीवप्रदेशपरिवेष्टनेन तत्किमिदं परिवेष्टनं मुख्यमौपचारिकं वा ?, यदि मुख्यं सिद्धान्तविरोधः, मुख्यं हि परिक्षेपणमेव परिवेष्टनम्, एवं च भिन्नदेशस्य कर्मणो ग्रहणं, सिद्धान्ते तु यत्राकाशदेशे

१ यथा स कञ्चुकिनं पुरुषं स्पृशति, न पुनः स कञ्चुकः शरीरेण समं बद्धः, एवमेव कर्मापि स्पृष्टं न पुनर्बद्धं जीवप्रदेशैः समं, यस्य बद्धं तस्य कर्मसंसारव्युच्छित्ती न भविष्यतः, तदा स भणति—एतावदाचार्यैरस्मभ्यं भणितम्, एष न जानाति, तदा स शङ्कितः सन् प्रच्छको गतः, मा मयाऽन्यथा गृहीतमभविष्यत् ( भूत् ), तदा पृष्टा आचार्याः

ट्ठितो, इह चेव ठाह, ताहे णेच्छइ, सोऽवि बाहिं ठितो अन्नाणि वुग्गाहेति, ताणि न सक्केइ। इतो य आयरिया अत्थपोरिसिं करेंति, सो ण सुणइ, भणइ—तुब्भेत्थ णिप्फावकुडा कहेह, तेसु उट्ठितेसु विंझो अणुभासति, अट्ठमे कम्मप्पवाए पुव्वे कम्म पण्णविज्जति, जीवस्स य कम्मस्स य कह बंधो ?, तत्थ ते भणति—बद्ध पुट्ठ णिकाईय, बद्ध जहा सुइकलावो, पुट्ठ जहा घणणिरंतरातो कयाओ, णिकाईय जहा तावेऊण पिट्टिया, एव कम्म रागदोसेहिं जीवो पढम बंधइ, पच्छा त परिणाम अमुंचतो पुट्ठ करेति, तेणेव संकिलिट्ठपरिणामेण त अमुचतो किंचि णिकाएति, णिकाईय णिरुवक्कम, उदएण णवरि वेइज्जइ, अन्नहा त ण वेइज्जति, ताहे सो गोट्ठामाहिलो वारेति, एत्तिय ण भवति, अण्णयावि अम्हेहिं सुय—जइ एत्तिय कम्म बद्ध पुट्ठ णिकाचिय एव भो मोक्खो ण भविस्सति, तो खाइ किह बज्झइ ?, भणइ—सुणेह—

---

१ स्थित, इह चैव तिष्ठत, तदा नेच्छति, सोऽपि बहिः स्थितोऽन्यान् व्युद्ग्राहयति, तान् शक्नोति। इतश्चाचार्या अर्थपौरुषीं कुर्वन्ति, स न शृणोति, भणति—यूयमत्र निष्पावकुटा कथयत, तेपूत्थितेषु विन्ध्योऽनुभाषते, अष्टमे कर्मप्रवादे पूर्वे कर्म प्रज्ञाप्यते, जीवस्य च कर्मणश्च कथं बन्ध ?, तत्र ते भणन्ति—बद्ध स्पृष्ट निकाचित, बद्ध यथा सूचीकलाप, स्पृष्ट यथा घनेन निरन्तरा कृता, निकाचित यथा तापयित्वा पिट्टिता, एव कर्मापि रागद्वेषाभ्यां जीव प्रथम बध्नाति, पश्चात्त परिणामममुञ्चन् स्पृष्ट करोति, तेनैव संक्लिष्टपरिणामेन तममुञ्चन् किञ्चिन्निकाचयति, निकाचित निरुपक्रमम्, उदयेन नवर वेद्यते, अन्यथा तन्न वेद्यते, तदा स गोष्ठमाहिलो वारयति, एतावत् न भवति, अन्यदाऽप्यस्माभि श्रुत—यद्येतावत् कर्म बद्ध स्पृष्ट निकाचितम् एव भो मोक्षो न भविष्यति, तदा कथय कथ बध्यते ?, भणति—शृणुत

तत्किं यत्रैव स्थितं तत्रैव वेदनानिवन्धनमुतान्यत्रापि ?, यदि तत्रैव तर्हि त्वन्मतेन वहिरेवैतदवस्थितमित्यन्तः साता-दिवेदनोच्छेदप्रसङ्गः, अथान्यत्रापि तद्वेदनानिवन्धनं तर्हि किं नैकात्मस्थितं सर्वात्मस्वपि ?, उक्तं च—"[1]जइ वावि भिन्नदेसंपि वेयणं कुणइ कम्ममेवं ते । कह अन्नसरीरगयं ण वेयणं कुणति अन्नस्स ? ॥१॥" तथा च कृतनाशाकृताभ्यागमप्रसङ्गः, अथ येनैव कृतं तस्यैव तन्निवन्धनं, तथापि पादवेदनायां शिरोवेदनाऽऽपत्तिः, अथ सञ्चारित्वात्तस्यान्तरप्यवस्थानमिति नान्तः सातादिवेदनोच्छेदप्रसङ्गः, एवं तर्हि न कञ्चुकतुल्यता, तस्य वहिरेव नियतत्वात्, युगपदुभयत्र वेदनाऽभावप्रसङ्गश्च, यथा च वहिःस्थमन्तःसञ्चारितया वेदनाहेतुरेवमन्तःस्थितं वहिःसञ्चारितया तद्धेतुरिति विपर्ययकल्पनाऽपि किं न ?, नियामकाभावात्, सञ्चारित्वे च कर्म्मणो वायोरिव न भवान्तरानुवृत्तिः, तदुक्तम्—"[2]णे भवंतरमण्णेई सरीरसंचारतो तदणिलो व"त्ति, किञ्च—काञ्चनोपलयोरपि पृथग्भावोऽस्ति वा न वा ?, न तावन्नास्ति प्रत्यक्षतस्तद्दर्शनात्, अस्तित्वे च यथा भविष्यत्पृथग्भावित्वेऽपि तयोरविभागावस्थानेन स्पृष्टमात्रता तथा जीवकर्म्मणोरपि स्यात्, न च काञ्चनसत्त्वैव तत्र पूर्वं नास्ति, चाकचिक्यदर्शनात्प्रत्यक्षतः, तथा यत्र यन्नास्ति न तस्य तत उत्पादः, सिकताभ्य इव तैलस्येत्यनुमानतश्च तत्सिद्धेः, ततश्च—'यत्र यद्वेदनाहेतुः, कर्म्म

१ यदि वाऽपि भिन्नदेशमपि वेदनां करोति कर्म एवं ते । कथमन्यशरीरगतं न वेदनां करोत्यन्यस्य ? ॥ १ ॥ २ न भवान्तरमन्वेति शरीरसञ्चारतस्तदनिल इव ।

य आत्मप्रदेशोऽवगाढ तेन तत्रैवावगाढ कर्म्मं गृह्यते इत्युक्तम्, अत एवाह शिवशर्माचार्य —"एगपएसोगाढ सघपएसेहि कम्मुणो जोग । गेण्हइ जहुत्तहेऊ साईयमणाइय वावि ॥ १ ॥" अथौपचारिक यथा हि कञ्चुकी कञ्चुकेनेवावष्टब्धश्चावृतश्च, एव जीवप्रदेशा अपि कर्म्मप्रदेशैरिति मुख्यपरिवेष्टनाभावेऽपि तेषा तत्परिवेष्टनमुच्यते, तर्हि स्फुटैवास्मदिष्टबन्धसिद्धि, अस्माकमप्यनन्तकर्म्माणुवर्गणाभिरात्मप्रदेशानामुक्तरूपपरिवेष्टनस्यैव बन्धत्वेनेष्टत्वात्, आगमश्चात्र—"एगमेगे आयपएसे अणताणताहि कम्मवग्गूहि आवेढियपरिवेढियत्ति,' ततश्च विपर्ययसाधनाद्विरुद्धो हेतु, सकलजीवप्रदेशप्रचयपरिवेष्टनेनेत्यस्मिन्नपि पक्षे भिन्नदेशकर्म्मग्रहणेन तथैव सिद्धान्तविरोध, तथा तत्र बहि प्रदेशबन्ध एव कर्म्मण सम्भवति, ततश्च मलस्येव न तस्य भवान्तरानुवृत्ति, एव च पुनर्भवाभाव, सिद्धाना वा पुनर्भवाऽऽपत्ति, न च मलस्य शरीरेण स्पृष्टतया दृष्टान्तवैषम्य, शरीरात्मप्रदेशानामन्योऽन्यमविभागेनावस्थानाद्, अन्यथा हि मृणालस्पर्शाद्यनुभवाभावप्रसङ्ग, किञ्च—इय देहान्त सातादिवेदना सनिबन्धना निर्निबन्धना वा ?, निर्निबन्धना चेत्किं न सिद्धानामपि ?, सनिबन्धनत्वे च किं पय पानादिदृष्टहेतुकैव यद्वा कर्म्मनिबन्धनाऽपि ?, यदाऽऽद्य पक्षस्तर्हि बहिर्वेदनापि दृष्टा बाह्यहेतुकैवेति किं कर्म्मकल्पनया ?, अथ कर्म्महेतुकाऽपि तर्हि

१ एकप्रदेशावगाढ सर्वप्रदेशै कर्मणो योग्यम् । गृह्णाति यथोक्तहेतो सादिकमनादिक वाऽपि ॥१॥ २ एकैक आत्मप्रदेशोऽनन्तानन्ताभि कर्मवर्गणाभिरावेष्टितपरिवेष्टित इति ॥

भवदाशयः—सावधि स्यादभिष्वङ्गि, गृहिणामित्वरं यथा। प्रत्याख्यानं तथा चेदं, यावज्जीवं यतेरपि ॥ १ ॥ प्रयोगः—यत्परिमाणवत् प्रत्याख्यानं तत्साभिष्वङ्गं, यथा गृहिणामित्वरप्रत्याख्यानं, परिमाणवच्च यतेरपि यावज्जीवं सर्वसावद्यप्रत्याख्यानमित्ययमनैकान्तिको हेतुः, तथाहि—किमत्र परिमाणवत्त्वमात्रेण साभिष्वङ्गता साध्यते उत आशंसयाऽपि ?, प्रथमपक्षे किं यतेरद्धाप्रत्याख्यानमस्ति न वा ?, यद्यस्ति किं पौरुष्यादिपदोपेतमितरथा वा ?, यदि पौरुष्यादिपदोपेतं किं न परिणामवत्त्वेन साभिष्वङ्गता ?, अथ न समतास्थितत्वात् तर्हि परिमाणवत्त्वमनैकान्तिकम्, अथानभिमतमेव तत्र पौरुष्यादिपदोपादानम्, एवं सति प्रव्रज्यादिन एवानशनापत्तिः, तथा च—"[1]णिप्फादिया य सीसा दीहो परिवालितो य परियातो' इत्याद्यागमविरोधः, न चाद्धाप्रत्याख्यानं नास्त्येव यतेरिति पक्षः, '[2]अणागतमइक्कंतं' इत्यागमेन तस्याभिधानात्, द्वितीयपक्षे तु नैवमस्याशंसा—यथा भवान्तरे सावद्यमहं सेविष्ये, येन साभिष्वङ्गता स्यात्, यदपि यावज्जीवेति पदोच्चारणं तदपि व्रतभङ्गभयादेव, तदुक्तम्—"[3]वयभंगभयाउ चिय जावजीवंति णिद्दिट्ठं" किञ्च—परिणामवत्त्वेन साभिष्वङ्गतां साधयतस्तवाकृतमपरिमाणं प्रत्याख्यानमिति, तत्र च नञा परिमाणाभावमात्रमुच्यते वस्त्वन्तरविधिर्वा ?, यदि परिमाणाभावमात्रं तदा तस्याभिष्वङ्गहेतुत्वेनैव निषेधः, तद्धेतुत्वं

१ निष्पादिताश्च शिष्याः दीर्घः परिपालितश्च पर्यायः। २ अनागतमतिक्रान्तं। ३ व्रतभङ्गभयादेव यावज्जीवमिति निर्दिष्टम् ॥

तत्रस्थमेव तत् । सर्वत्र वेदनाहेतु , कर्म सर्वत्रग तत् ॥ १ ॥ प्रयोगश्च—यत्र यद्वेदनानिमित्त कर्म तत्रस्थमेव तद् , अन्यथा दर्शितन्यायेनातिप्रसङ्गाद् , वेदनाहेतुश्च सर्वत्रात्मप्रदेशेषु कर्म इत्याद्याचार्योक्त तेण गतूण सिट्ठ, एत्तिय भणिय आयरिएहिं, एव पुणरवि सो सलीणो अच्छइ, समप्पउ ततो खोभेहामि । अन्नया णवमे पुबे पच्चक्खाणे साहूण जावज्जीवाए तिविह तिविहेण पाणातिवाय पच्चक्खामि, एय पच्चक्खाण वण्णिज्जइ, ताहे सो भणति—अवसिद्धतो, ण होति एव पुण, कह कायव ?, सुणेह—

पच्चक्खाण सेय अपरिमाणेण होइ कायव । जेसि तु परीमाण त दुट्ठ होइ आससा ॥ १७७ ॥

व्याख्या—सव पच्चक्खामि पाणाइवाय अपरिमाणाए तिविह तिविहेण, एव सव आवकहिय, किं निमित्त परिमाण न कीरति ?, जो सो आससादोसो सो णियत्तितो भवति, जावजीवाए पुण भणतेण परिमाणेण अब्भुवगय भवति, जहाऽह हणिस्सामि पाणाई, एतन्निमित्त अपरिमाणाए कायव ॥ स चैव वदन्विन्ध्येनाभिदधे—यथाऽय

१ तेन गत्वा शिष्टम्—एतावत् भणितमाचार्यै , एव पुनरपि स सलीनस्तिष्ठति, समाप्यता [ततः] क्षोभयिष्यामि । अन्यदा नवमे पूर्वे प्रत्याख्याने साधूना यावज्जीवतया त्रिविध त्रिविधेन प्राणातिपात प्रत्याख्यामि, एतत् प्रत्याख्यान वर्ण्यते, तदा स भणति—अपसिद्धान्त , न भवत्येव पुन , कथ कर्त्तव्य ?, शृणुत । सर्व प्रत्याख्यामि प्राणातिपातमपरिमाणतया त्रिविध त्रिविधेन, एव सर्व यावत्कथिक, कि निमित्त परिमाण न क्रियते ?, य स आशसादोष स निवर्त्तितो भवति, यावज्जीवतया पुनर्भणता परिमाणेनाभ्युपगत भवति, यथाऽह हनिष्यामि प्राणादीन् , एतन्निमित्तमपरिमाणेन कर्त्तव्य

मन्यथा तद्भङ्गप्रसङ्गः, ततश्च जीवन्नहं सावद्यं न सेविष्ये मृतस्य तु कर्मोदयस्वाभाव्यादवश्यंभाविन्यविरतिरित्ययमेव तस्य भावः, तथा च यथाभावं व्यञ्जनोच्चारणे बलादापतितं यावज्जीवेति, तथा च जीवनावधित्वादपरिमाणत्वहानिः, अन्यथा व्यञ्जनोच्चारणमिति पक्षे च परिस्फुटैव मृषाभाषिता, ज्ञात्वा अन्यथाभिधानात्, उक्तं च–"जो पुण अव्वयभावं मुणमाणोऽवस्सभाविणं भणति। वयमपरिमाणमेवं पचक्खं सो मुसावाई ॥ १ ॥" ततश्च–'नाशंसातो यतस्तस्य, यावज्जीवेति पठ्यते। किन्तु भङ्गभयादेव, तस्मादस्तु यथास्थितम् ॥ १ ॥ प्रयोगश्च–यत्र नाशंसा न तत्सावधित्वेऽपि साभिष्वङ्गं, यथा कायोत्सर्गो, न विद्यते च यतिप्रत्याख्याने यावज्जीवेति पदेऽप्याशंसेति, इत्यादि जहा आयरिएहिं भणियं तहा सव्वे भणंति, जहा एत्तियं भणियं आयरिएहिं, जेऽवि अन्ने थेरा बहुस्सुया अन्नगच्छेल्ला तेऽवि पुच्छिया, एत्तियं चेव भणंति, ताहे भणति–तुब्भे किं जाणह ?, तित्थयरेहिं एत्तियं भणियं, तेहिं भणियं—तुमं न जाणसि, जाहे ण ट्ठाइ ताहे संघसमवातो कतो, देवयाए काउस्सग्गो कतो, जा सड्डिया सा

---

१ यः पुनरव्रतभावं जुणन् अवश्यभाविनं भणति। व्रतमपरिमाणमेवं प्रत्याख्यं स मृषावादी ॥ १ ॥ २ यथा आचार्यैर्भणितं तथा सर्वे भणन्ति, यथैतावद्भणितमाचार्यैः, येऽपि अन्ये स्थविरा बहुश्रुता अन्यगच्छीयास्तेऽपि पृष्टाः, एतावदेव भणन्ति, तदा भणति–यूयं किं जानीथ ?, तीर्थकरैरेतावत् भणितं, तैर्भणितं–त्वं न जानीषे, यदा न तिष्ठति तदा संघसमवायः कृतः, देवतायै कायोत्सर्गः कृतः, या श्राद्धा सा

च तस्यानैकान्तिकमनन्तरमेवोक्तमिति किं तन्निषेधेन ?, अथ वस्त्वन्तरविधिस्तत्र वस्त्वन्तर शक्तिरनागताद्धा वा ?, यदि शक्तिस्तत्र किं यावच्छक्तिस्तावन्मम प्रत्याख्यानम् अथ यावति विषये शक्तिस्तावतीति ?, प्रथमपक्षे शकनक्रियापरिमाणपरिमितत्वात् प्रत्याख्यानस्य परिमाणवत्त्वमेवोक्तं भवतीति स्ववचनविरोध , प्रत्याख्यानानवस्था चैव, शक्तेरनियतत्वात्, तथा चातीचारासत्त्व, तदसत्त्वे च प्रायश्चित्ताभाव , द्वितीयपक्षे तु प्राणवधाद्यन्यतरविरतावपि संयतत्वापत्ति , शक्त्यपेक्षत्वात्तद्धेतुप्रत्याख्यानस्य, उक्त च–"एत्तियमेत्ती सत्तित्ति णातियारो ण यावि पच्छित्त । ण य सव्वव्वयनियमो एगेण य संजयत्तन्ति ॥ १ ॥" अथानागताद्धा तत्रापि किं भाव प्रत्याख्यानं व्यञ्जन वा ?, न तावद् व्यञ्जन स्वप्रमादादवपि तदुच्चारणे प्रत्याख्यानप्रसङ्गात् प्रमादत शक्तिवैकल्यतो वा व्यञ्जनस्खलने तदभावापत्तेश्च, तत प्रथमपक्ष एवावशिष्यते, तत्र च सदा सावद्यमहं न सेविष्ये इति तस्य भाव उत कदाचिदिति ?, यदि आद्यपक्षस्तदा मृतस्यापि तत्सेवायामपरिपूर्णप्रतिज्ञत्वेन व्रतभङ्गप्रसङ्ग , तथा सिद्धानामपि संयतत्वापत्ति , सकलानागताद्धाप्रत्याख्यानधारित्वात् । एव च 'सिद्धे नो चारित्ती नो अचारित्ती' इत्यागमविरोध , अथ द्वितीयपक्षस्तत्र किं यथा भावस्तथा व्यञ्जनमथान्यथा ?, यदि यथा भावस्तथा व्यञ्जनम् एव सति विज्ञातविषयादेरेव प्रत्याख्यान-

१ एतावन्मात्रा शक्तिरिति नातीचारो न चापि प्रायश्चित्तम् । न च सर्वव्रतनियम एकेनापि संयतत्वमिति ॥ १ ॥ २ सिद्धा नो चारित्रिणो नो अचारित्रिण ॥

करणे ८ वेयावच्चकरणे इय ९ । समोसरणसन्निसेज्जा १० कहाए य ११ निमंतणा १२ ॥ २ ॥' एस बारसविहो, सत्तरभेतो जहा पंचकप्पे ॥ इत्युक्ता अल्पतरविसंवादिनो निह्नवाः, प्रसङ्गत एव बहुतरविसंवादिनं बोटिकमाह—

रहवीरपुरं नयरं दीवगमुज्जाण अज्जकण्हे अ । सिवभूइस्सुवहिंमि पुच्छा थेराण कहणा य ॥ १७८ ॥

व्याख्या—अक्षरार्थः सुगमः ॥ १७८ ॥ भावार्थस्तु सम्प्रदायादवसेयः, स चायम्—

छव्वाससएहिं णवोत्तरेहिं सिद्धिं गयस्स वीरस्स । तो बोडियाण दिट्ठी रहवीरपुरे समुप्पन्ना ॥ १ ॥ तेणं कालेणं तेणं समयेणं रहवीरपुरं कब्बडं, तत्थ दीवगं णाम उज्जाणं, तत्थ अज्जकण्हा आयरिया समोसढा । तत्थ एगो सिवभूई णाम साहस्सिमल्लो, सो रायाणं उवगतो, तुमं ओलग्गामित्ति, जा परिक्खामित्ति, रायाए अन्नया भणितो वच्च माइघरे सुसाणे किण्हचउद्दसीए वलिं देहि, सुरा पसुतो दिन्नो, अन्ने य पुरिसा भणिया—एयं बीहाविज्जाह,

---

१ वैयावृत्यकरण इति । समवसरणसन्निपद्या कथा च निमन्त्रणा ॥२॥ एष द्वादशविधः, सप्तदशभेदो यथा पञ्चकल्पे । २ षट्सु वर्षशतेषु नवोत्तरेषु सिद्धिं गतात् वीरात् । तदा बोटिकानां दृष्टी रथवीरपुरे समुत्पन्ना ॥१॥ तस्मिन् काले तस्मिन् समये रथवीरपुरं कर्वटं,तत्र दीपकं नामोद्यानं, तत्र आर्यकृष्णा आचार्याः समवसृताः । तत्रैकः शिवभूतिनामा सहस्रमल्लः, स राजानमुपगतः, त्वामवलगामीति, यावत्परीक्ष इति, राज्ञाऽन्यदा भणितः—व्रज मातृगृहे श्मशाने कृष्णचतुर्दश्यां वलिं देहि, सुरा पशुश्च दत्तौ, अन्ये च पुरुषा भणिताः—एनं भापयध्वं,

आगया, भणइ–सदिसहत्ति, ताहे भणिया–वच्च तित्थयर पुच्छ, किं ?, ज गोट्ठामाहिलो भणइ त सच्च ?, दुब्बलियाप्पमुहो सघो ज भणइ त सच्च ?, ताहे सा भणति–मम अणुबल देह, काउस्सग्गो दिन्नो, ताहे सा गया, तित्थयरो पुच्छितो, तेहिं वागरिय—जहा सघो सम्मावाई, इयरो मिच्छावादी, निण्हवो एस सत्तमो, ताहे आगया, भणिओ—ओस्सारेह, सघो सम्मावादी, एस मिच्छावादी निण्हवो, ताहे सो भणति—एसा अप्पिड्ढिया वराई, का एयाए सत्ती गतूण ?, तीसेऽवि ण सद्दहति, ताहे पूसमित्ता भणति–जहा अज्जो ! पडिवज्जउ, मा उग्घाडिज्जिहिसि, णेच्छति, ताहे सो सघेण बज्झोकतो बारसविहेण समोएण, तजहा–'उवहि १ सुय २ भत्तपाणे ३ अजलीपग्गहे ति य ४ । दायणा य ५ णिकाए य ६ अब्भुट्ठाणेत्ति आयरे ७ ॥ १ ॥ किइकम्मस्स य

१ आगता, भणति–सदिशतेति, तदा भणिता—गच्छ तीर्थकर पृच्छ, किम् ?, यद्गोष्ठमाहिलो भणति तत्सत्यम् ? दुर्बलिकाप्रमुख सघो यद्भणति तत्सत्यम् ?, तदा सा भणति—ममानुबल दत्त, कायोत्सर्गो दत्त , तदा सा गता, तीर्थकर पृष्ट , तैर्व्याकृत–यथा सघ सम्यग्वादी, इतरो मिथ्यावादी, निह्नव एष सप्तम , तत आगता, भणित –उत्सारयत, सघ सम्यग्वादी, एष मिथ्यावादी निह्नव , तदा स भणति–एषाऽल्पर्द्धिका वराकी, कैतस्या शक्तिर्गत्वा ?, तस्या अपि न श्रद्दधाति, तदा पुष्पमित्रा भणन्ति–यथा आर्य ! प्रतिपद्यता, मा उद्घाटिष्ठा , नेच्छति, तदा स सघेन बाह्य कृतो द्वादशविधात् सभोगात्, तद्यथा—उपधि श्रुत भक्तपाने अञ्जलिप्रग्रह इति च । दान च निकाचना च अभ्युत्थानमिति चापरम् ॥ १ ॥ कृतिकर्मणश्च करण

पहाविता पंडुमहुरंतेणं, तत्थ पचंताणि ताविउमारद्धो, दुग्गे ठितो, एवं ताव जाव णगरसेसं जायं, पच्छा णगरमवि गहियं ओवइत्ता, ततो णिवेइयं तेण रण्णो, तुट्ठेण भणियं—किं देमि ?, सो चिंतियं भणति—जं मए गहियं तं सुगहियं, जहिच्छतो भविस्सामि, एवं होउत्ति। एवं सो य बाहिं चेव हिंडंतो अड्ढरत्ते आगच्छति वा ण वा, तस्स भज्जा ताव ण जेमेइ सुयति वा जाव णागतो भवति, साविं णिव्विण्णा। अन्नया मायरं सा वड्डेति—तुम्ह पुत्तो दिवसे २ अड्ढरत्ते एति, अहं जग्गामि, छुहातिया अच्छामि, ताहे ताए भणइ—मा दारं देज्जाहि, अहं अज्ज जग्गामि, सो दारं मग्गति, इयरीय अंबाडितो, भणितो य—जत्थ इमाए वेलाए उग्घाडियाणि तत्थ वच्च, तस्स भवियव्वयाए तेण मग्गंतेण उग्घाडितो साहुपडिस्सतो दिट्ठो, तत्थ गतो, वंदति, भणइ—पव्वावेह मए,

१ प्रधावितः पाण्डुमथुराध्वना, तत्र प्रत्यन्तांस्तापयितुमारब्धः, दुर्गे स्थितः, एवं तावद्यावत् नगरशेषं जातं, पश्चान्नगरमपि गृहीतमवतीर्य, ततो निवेदितं तेन राज्ञे, तुष्टेन भणितं— किं ददामि ?, स चिन्तितं ( चिन्तयित्वा ) भणति—यन्मया गृहीतं तत्सुगृहीतं, यादृच्छिको भविष्यामि, एवं भवत्विति। एवं स च बहिरेव हिण्डमानोऽर्धरात्र आगच्छति वा न वा, तस्य भार्या तावन्न जेमति स्वपिति वा यावन्नागतो भवति, साऽपि निर्विण्णा। अन्यदा मातरं सा कलहयति—युष्माकं पुत्रो दिवसे दिवसे अर्धरात्रे आयाति, अहं जागर्मि, क्षुधार्त्ता तिष्ठामि, तदा तया भण्यते—मा द्वारं दाः, अद्यमहं जागर्मि, स द्वारं मार्गयति, इतरया निर्भर्त्सितः, भणितश्च—यत्रास्यां वेलायामुद्घाटितानि (द्वाराणि) तत्र व्रज, तस्य भवितव्यतया तेन मार्गयता उद्घाटितः साधुप्रतिश्रयो दृष्टः, तत्र गतो, वन्दते, भणति—प्रव्राजयत मां,

सो गतूण माइघलिं दाऊण छुहिओमिचि तत्थेव सुसाणे त पसु पओलित्ता खाइ, ते य गोहा सिवारसिएहिं समता भेरव रव करेति, तस्स रोमुग्गमोऽवि न कज्जइ, तआ अब्भुट्ठिओ गतो, तेहि सिट्ठ, वित्ती दिन्ना। अन्नया सो राया दडे आणवेति–जहा महुर गेण्हह, ते सब्बबलेण उद्धाईया, ततो अदूरसामतेण गतूण भणति–अम्हे ण पुच्छिय–कयर महुर घयामो, राया य अविण्णवणिज्जो, ते गुगुयता अच्छति, सिवभूई आगतो भणति–कि भो! अच्छह ?, तेहिं सिट्ठ, तो भणति–दोऽवि गिण्हामो सम चेव, ते भणति–ण सक्का, दो भागिएहिं एकेक्काए घहू कालो होतित्ति, सो भणति–जं दुज्जय त मम देह, भणितो जा णिज्जाइ, भणइ–सूरे त्यागिनि विदुषि च वसति जन स च जनाद्गुणी भवति। गुणवति धन धनाच्छ्री श्रीमत्याज्ञा ततो राज्यम् ॥ १ ॥ एव भणित्ता

---

१ स गत्वा मातृबलिं दत्त्वा बुभुक्षितोऽस्मीति तत्रैव श्मशाने त पशु पक्त्वा खादति, ते च पुरुषा शिवारसितैः समन्ताद्भैरव रव कुर्वन्ति, तस्य रोमोद्गमोऽपि न क्रियते, तदाऽभ्युत्थितो गत, तैः शिष्ट, वृत्तिर्दत्ता। अन्यदा स राजा दण्डिकान् आज्ञापयति—यथा मथुरा गृह्णीत, ते सर्वबलेनोद्धाविता, ततोऽदूरसामन्ते गत्वा भणन्ति–अस्माभिर्न पृष्ट—कतरा मथुरा व्रजाम, राजा चाविज्ञप्य, ते कान्दिशीकास्तिष्ठन्ति, शिवभूतिरागतो भणति–कि भोस्तिष्ठत ?, ते शिष्ट, ततो भणति–द्वे अपि गृह्णीम समकमेव, ते भणन्ति–न शक्ये, द्विभागिकै एकैकस्या (महणे) बहु कालो भवतीति, स भणति–या दुर्जेया ता मम दत्त, भणितो यावन्नियोति, भणति–एव भणित्वा

च—सम्यक्त्वज्ञानशीलानि, तपश्चेतीह सिद्धये। तेषामुपग्रहार्थाय, स्मृतं चीवरधारणम् ॥ ५ ॥ शीतवातातपैर्दंशैर्मशकैश्चापि खेदितः। मा सम्यक्त्वादिषु ध्यानं, न सम्यक् संविधास्यति ॥ ६ ॥ तस्य त्वग्रहणे यत् स्यात्, क्षुद्रप्राणिविनाशनम्। ज्ञानध्यानोपघातो वा, महान् दोषस्तदैव तु ॥ ७ ॥ यः पुनरतिसहिष्णुतयैतदन्तरेणापि न धर्मबाधकस्तस्य नैतदस्ति, तथा चाह—"य एतान् वर्जयेद्दोषान्, धर्मोपकरणादृते। तस्य त्वग्रहणं युक्तं, यः स्याज्जिन इव प्रभुः ॥ १ ॥" स च प्रथमसंहनन एव, न चेदानीं तदस्तीत्यादिकया प्रागुक्तया च युक्त्योच्यमानोऽसौ कम्मोदयेण चीवराइयं छड्डेत्ता गतो, तस्स उत्तरा भइणी, उज्जाणे ठियस्स वंदिया गया, तं च दट्ठूण तीएवि चीवरातियं सव्वं छड्डियं, ताहे भिक्खाए पविट्ठा, गणियाए दिट्ठा, मा अम्ह लोगो विरज्जिहित्ति उरे से पोत्ती बद्धा, सा णेच्छति, तेण भणियं—अच्छउ एसा तव देवयादिन्ना। तेण य दो सीसा पव्वाविया—कोडिण्णो कोट्टवीरो य, तओ सीसाण परंपरफासो जातो ॥ एतदर्थोपसंहारिके भाष्यगाथे—

---

१ कर्मोदयेन चीवरादिकं त्यक्त्वा गतः, तस्योत्तरा भगिनी, उद्याने स्थितं वन्दिका गता, तं च दृष्ट्वा तयाऽपि चीवरादिकं सर्वं त्यक्तं, तदा भिक्षायै प्रविष्टा, गणिकया दृष्टा, माऽस्मासु लोको विरङ्क्षीत् इति उरसि तस्याः पोतिका बद्धा, सा नेच्छति, तेन भणितं—तिष्ठतु एषा तव देवतादत्ता। तेन च द्वौ शिष्यौ प्रव्राजितौ—कौण्डिन्यः कोट्टवीरश्च, ततः शिष्याणां परम्परास्पर्शो जातः ॥

नेच्छति, सय लोओ कतो, ताहे से लिंग दिन्न, ते विहरिया । पुणोऽवि आगयाण रण्णा कंबलरयण से दिन्न, आयरिएण–किं एएण जईण ?, कि गहियति भणिऊण तस्स अणापुच्छाए फालिय, णिसेज्जातो कयातो, ततो स कसाइतो । अण्णया जिणकप्पिया वण्णिज्जति जहा—जिणकप्पिया य दुविहा पाणीपाया पडिग्गहधरा य। पाउरणम पाउरणा एक्केका ते भवे दुविहा ॥ १ ॥ इत्यादि, सो भणइ—किं एस एव ण कीरइ ?, तेहिं भणियं—एस वोच्छिन्नो, मम ण वोच्छिज्जइत्ति सो चेव परलोगत्थिणा कायव्वो ॥ तत्रापि सर्वथा निष्परिग्रहत्वमेव श्रेय , सूरिभिरुक्तम्—धर्मोपकरणमेवैतत्, न तु परिग्रहस्तथा ॥ जन्तवो बहवस्सन्ति, दुर्दर्शा मांसचक्षुषाम् । तेभ्य स्मृत दयार्थं तु, रजोहरणधारणम् ॥ १ ॥ आसने शयने स्थाने, निक्षेपे ग्रहणे तथा । गात्रसङ्कुचने चेष्ट, तेन पूर्वं प्रमार्जनम् ॥ २ ॥ तथा—सन्ति सम्पातिमा सत्त्वा , सूक्ष्माश्च व्यापिनोऽपरे । तेषा रक्षानिमित्त च, विज्ञेया मुखवस्त्रिका ॥ ३ ॥ किंच—भवन्ति जन्तवो यस्मादन्नपानेषु केषुचित् । तस्मात्तेषा परीक्षार्थं, पात्रग्रहणमिष्यते ॥ ४ ॥ अपर

१ नेच्छति, स्वय लोच कृत , तदा तस्मै लिङ्ग दत्त, ते विहृता । पुनरप्यागतेषु राज्ञा कम्बलरत्न तस्मै दत्त, आचार्येण–किमेतेन यतीना ?, किं गृहीतमिति भणित्वा तमनापृच्छ्य स्फाटित, निषद्या कृता , तत्र [illegible] कषायित । अन्यदा जिनकल्पिका वर्ण्यन्ते, यथा–जिनकल्पिकाश्च द्विविधा पात्रपाणय प्रतिग्रहधराश्च । सप्रावरणा अप्रावरणा एकैकास्ते भवेयुर्द्विविधा ॥ १ ॥ स भणति–किमेष एव न क्रियते ?, तैर्भणितम्–एष व्युच्छिन्न , मम न व्युच्छिद्यते इति [illegible] एव परलोकार्थिना कर्त्तव्यः ।

नि 'दुर्लभानि' दुःखेन लभ्यन्त इतिकृत्वा दुष्प्रापाणि 'इह' अस्मिन्संसारे, कस्य ?—जायत इति जन्तुस्तस्य देहिन इत्यर्थः, पठ्यते च—'देहिन' इति, कानि पुनस्तानि ?—मनसि शेते मानुषः, अथवा मनोरपत्यमिति वाक्ये "मनोर्जातावञ्यतौ षुक् च" (पा० ४-१-१६१) इत्यञि प्रत्यये षुगागमे च मानुषस्तद्भावः मानुषत्वं—मनुजभावः, 'श्रवणं' श्रुतिः, सा च 'अर्थप्रकरणादिभ्यः सामान्यशब्दा अपि विशेषेऽवतिष्ठन्ते' इति न्यायाद्धर्मविषया, श्रद्धाऽपि तत एव धर्मविषया, 'संयमे' आश्रवविरमणाद्यात्मनि, चः समुच्चये भिन्नक्रमः, ततो विशेषेणेरयति—प्रवर्त्तयति आत्मानं तासु तासु क्रियास्विति वीर्यं च—सामर्थ्यविशेष इति सूत्रार्थः ॥१॥ तत्र यथा मानुषत्वं दुर्लभं तथा दर्शयितुमाह—

समावण्णाण संसारे, णाणागोत्तासु जाइसु। कम्मा णाणाविहा कट्टु, पुढो विस्संभिया पया ॥२॥ (सूत्रम्)

व्याख्या—'सम्' इति समन्तात् आपन्नाः—प्राप्ताः समापन्ना णं इति वाक्यालङ्कारे, क्वेत्याह—संसारे, तत्रापि क ?—नाना इत्यनेकार्थः, गोत्रशब्दश्च नामपर्यायः, ततो नानागोत्रासु—अनेकाभिधानासु जायन्ते जन्तव आस्विति जातयः—क्षत्रियाद्याः तासु, अथवा जननानि जातयः ततो जातिषु—क्षत्रियादिजन्मसु नाना—हीनमध्यमोत्तमभेदेनानेकं गोत्रं यासु तास्तथा तासु, अत्र हेतुमाह—क्रियन्त इति कर्माणि—ज्ञानावरणीयादीनि 'नानाविधानि' अनेकप्रकाराणि 'कृत्वा' निर्वर्त्य 'पुढो'त्ति पृथग् भेदेन, किमुक्तं भवति ?—एकैकशः, 'विस्संभिय'त्ति विन्दोरलाक्षणिकत्वाद्

ऊहाए पन्नत्त वोडियसिवभूइउत्तराहि इम । मिच्छादसणमिणमो रहवीरपुरे समुप्पन्न ॥ १ ॥
वोडियसिवभूईओ वोडियलिगस्स होइ उप्पत्ती । कोडिण्णकोट्टवीरा परपराफासमुप्पन्ना ॥ २ ॥

व्याख्या—'ऊहया' सवितर्कात्मिकया 'प्रज्ञस' प्ररूपित, वोटिकश्चासौ चारित्रविकलतया मुण्डमात्रत्वेन शिवभूतिश्च वोटिकशिवभूति स चोत्तरा च तद्भगिनी वोटिकशिवभूत्युत्तरे ताभ्याम् 'इदम्' अनन्तरोक्त, यत्रास्योत्पत्तिस्तदाह—मिथ्यादर्शनम् 'इणमो'त्ति आर्षत्वादिद रथवीरपुरे समुत्पन्नम् ॥ वोटिकशिवभूतेर्वोटिकलिङ्गस्य भवत्युत्पत्ति , पठ्यते च–'वोडियलिङ्गस्स आसि उप्पत्ती,' तत्र च कौण्डिन्यकोट्टवीरौ परम्परा–अव्यवच्छिन्नशिष्यप्रशिष्यसतानलक्षणा तस्या स्पर्शो यत्र तत्परम्परास्पर्श यथा भवत्येवमुत्पन्नौ, अनेन कौण्डिन्यकोट्टवीराभ्या वोटिकसन्तानस्योत्पत्तिरुक्ता भवतीति गाथाद्वयार्थ ॥ १–२ ॥ इयता ग्रन्थेन श्रद्धादुर्लभत्वमुक्तम्, अस्याश्च सम्यक्त्वरूपत्वात् सम्यक्त्वपूर्वकत्वाच्च सयमस्य तस्याप्यनेनैव दुर्लभत्वमुक्तमेवेति भावनीय । तथा चत्वारीत्यङ्गमित्यस्य च व्याख्याने चतुरङ्गेभ्यो हित तत्स्वरूपव्यावर्णनेन चतुरङ्गीयमिति व्युत्पत्ति सुज्ञानैवेति निर्युक्तिकृता नोपदर्शिता । गतो नामनिष्पन्ननिक्षेप , सम्प्रति सूत्रानुगमेऽस्खलितादिगुणोपेत सूत्रमुच्चारणीय, तच्च—

चत्तारि परमगाणि, दुल्लहाणिह जतुणो । माणुसत्त सुई सद्धा, सजमम्मि य वीरिय ॥ १ ॥ (सूत्रम्)

व्याख्या—'चत्वारि' चतु सङ्ख्यानि परमाणि च तानि प्रत्यासन्नोपकारित्वेन अङ्गानि च मुक्तिकारणत्वेन परमाङ्ग-

धभावनाभावितान्तःकरणावसरे, असुराणामयमासुरस्तम्–असुरसम्बन्धिनं, चीयत इति कायस्तं, निकायमित्यर्थः, वालतपःप्रभृतिभिरपि तत्प्राप्तिरिति दर्शनार्थं देवलोकोपादानेऽपि पुनरासुरकायग्रहणम्, अथवा देवलोकशब्दस्य सौधर्मादिषु रूढत्वात्तदुपादानमुपरितनदेवोपलक्षणम्, इदं चाधस्तनदेवोपलक्षणमिति न पौनरुक्त्यम्, 'आहाकम्मेहिं'ति आधानम्–आधाकरणमित्यर्थः, तदुपलक्षितानि कर्माण्याधाकर्माणि तैः, किमुक्तं भवति ?–स्वयंविहितैरेव सरागसंयममहारम्भासुरभावनादिभिर्देवनारकासुरगतिहेतुभिः क्रियाविशेषैः यथाकर्मभिर्वा–तत्तद्गत्यनुरूपचेष्टितैः 'गच्छति' याति, इति सूत्रार्थः ॥ ३ ॥ तथा—

एगया खत्तिओ होइ, तओ चंडालबुक्कसो। तओ कीडपयंगो य, तओ कुंथू पिवीलिया ॥ ४ ॥ (सूत्रम्)

व्याख्या—'एकदे'ति मनुष्यजन्मानुरूपकर्मप्रकृत्युदयकाले 'खत्तिय'त्ति 'क्षण हिंसायां' क्षणनानि क्षतानि तेभ्यस्त्रायत इति क्षत्रियो–राजा भवति, 'तत' इति तदनन्तरं तको वा प्राणी 'चण्डालः' प्रतीतः, यदि वा शूद्रेण ब्राह्मण्यां जातश्चण्डालः, 'वोक्कसो' वर्णान्तरभेदः, तथा च वृद्धाः–"वंभणेण सुद्दीओ जातो णिसाउत्ति वुचति, वंभणेण वेसीए जातो अंवट्ठोत्ति वुचति, तत्थ णिसाएणं जो अंवट्ठीते जातो सो वुक्कसो भणणति" इह च क्षत्रियग्रहणादुत्तमजातयः

१ ब्राह्मणेन शूद्रया जातो निषाद इत्युच्यते, ब्राह्मणेन वैश्याया जातोऽम्बष्ठ इति उच्यते, तत्र निषादेन योऽम्बष्ठयां जातः स बुक्कसो भण्यते,

विश्व–जगद् विभ्रति–पूरयन्ति कचित्कदादिदुत्पत्त्या सर्वजगद्व्यापनेन विश्वभृत , उक्त च–"णत्थि किर सो पएसो लोए वालग्गकोडिमित्तोऽपि । जम्मणमरणावाहा जत्थ जिएहि न सपत्ता ॥१॥" इदमुक्त भवति–अवाप्यापि मानुपत्व स्वकृतविचित्रकर्मानुभावत पृथग्जातिभागिन्य एव भवन्ति, का —'प्रजा' जनसमूहरूपा', तदनेन प्राप्तमानुपत्वानामपि कर्मवशाद्विविधगतिगमन मनुपत्वदुर्लभत्वे हेतुरुक्त , यद्वा ससारे कर्माणि नानाविधानि कृत्वा पृथगिति भिन्नासु नानागोत्रासु–अनेककुलकोट्युपलक्षितासु जातिपु–देवाद्युत्पत्तिरूपासु समापन्ना —सम्प्राप्ता वर्त्तन्त इति गम्यते, णेति प्राग्वत्, 'विश्वम्भिता' सञ्जातविश्रम्भा सत्य प्रक्रमात्कर्म्मस्वेव तद्विपाकदारुणत्वापरिज्ञानात् का ?–प्रजायन्ते इति प्रजा —प्राणिन इति सम्बन्ध , तदनेन प्राणिना विविधदेवादिभवभवन मूलत एव मनुजत्वदुर्लभत्वे कारणमुक्तमिति सूत्रार्थ ॥ २ ॥ अमुमेवार्थं भावयितुमाह—

एगया देवलोएसु, नरएसुऽवि एगया। एगया आसुरे काये, आहाकम्मेहि गच्छइ ॥ ३ ॥ (सूत्रम्)

व्याख्या—'एकदा' इत्येकस्मिन् शुभकर्मानुभवकाले दीव्यन्तीति देवा तेपा लोका —उत्पत्तिस्थानानि देवगत्यादिपुण्यप्रकृत्युदयविपयतया लोक्यन्त इतिकृत्वा तेपु देवलोकेपु, नरान् कायन्ति–योग्यतयाऽऽह्वयतीति नरका तेपु रत्नप्रभादिपु नारकोत्पत्तिस्थानेपु, अपिशब्दस्य चार्थत्वात्तेपु च, 'एकदा' अशुभानुभवकाले, तथा 'एकदा' तथावि-

१ नास्ति किल स प्रदेशो लोके वालाग्रकोटीमात्रोऽपि । जन्ममरणावाधा यत्र जीवैर्न सप्राप्ता ॥ १ ॥

तामपि भवाभिनन्दिना प्राणिनामिति, कथमन्यथा न तत्प्रतिघातार्थमुद्यच्छेयुरिति भावः । पाठान्तरं वा–'सव्वट्ठ इव खत्तिय'त्ति इवो भिन्नक्रमः, ततः सर्वैः शयनादिभिरर्थः–प्रयोजनमस्येति सर्वार्थः क्षत्रियः, स चार्थाद्भ्रष्टराज्यः तद्वत्, ततो यथाऽसौ न निर्विद्यते, अर्थात्सर्वार्थान् प्रार्थयमानः, तथैतेऽपि प्राणिनः सुखान्यभिलपन्तोऽनिर्विद्यमानाश्च, कर्म्मभिः–ज्ञानावरणीयादिभिः सङ्गाः–सम्बन्धाः कर्मसङ्गास्तैः, यद्वा कर्माणि–उक्तरूपाणि तत्तत्क्रियाविशेपात्मकानि वा, तथा सज्यन्तेऽमीषु जन्तव इति सङ्गाः–शब्दादयोऽभिष्वङ्गविपयाः, ततश्च कर्माणि च सङ्गाश्च कर्म्मसङ्गाः तैः सम् इति भृशं मूढाः–वैचित्त्यमुपागताः सम्मूढाः, 'दुःखम्' असातात्मकं जातमेपामिति दुखिताः, कदाचित्तन्मानसमेव स्यादत आह—'बहुवेदनाः' बह्वयो वेदनाः–शरीरव्यथा येषां ते तथा, मनुष्याणामिमा मानुष्या न तथाऽमानुष्याः, तासु–नरकतिर्यगाभियोग्यादिदेवदुर्गतिसम्बन्धिनीषु 'योनिषु' अभिहितरूपासु 'विनिहन्यन्ते' विशेषेण निपात्यन्ते, अर्थात्कर्म्मभिः, कोऽर्थः ?—न तत उत्तारं लभन्ते 'प्राणिनः' जन्तवः, तदनेन सत्यप्यावर्त्ते निर्वेदाभावात् कर्म्मसङ्गसंमूढाः दुःखहेतुनरकादिगत्यनुत्तरणेन प्राणिनो मनुजत्वं न लभन्त इत्युक्तमिति सूत्रद्वयार्थः ॥ ५—६ ॥ कथं तर्हि तदवाप्तिः ? इत्याह—

कम्माणं तु पहाणाए, आणुपुव्वी कयाइ उ । जीवा सोहिमणुप्पत्ता, आययंति मणुस्सयं ॥ ७ ॥ (सूत्रम्)

व्याख्या—'कर्मणां' मनुजगतिविबन्धकानाम् 'तुः' पूर्वस्माद्विशेषद्योतकः 'पहाणाए'त्ति प्रकृष्टं हानम्–अपगमः

चण्डालग्रहणान्नीचजातयो बुक्कसग्रहणाच्च सङ्कीर्णजातय उपलक्षिता , 'ततो' मानुषत्वादुद्धृत्येति शेष', 'कीट ' प्रतीत 'पतङ्ग ' शलभ', च समुच्चये, ततस्तको वा 'कुन्थु पिपीलिक'त्ति, चशब्दस्य लुप्तनिर्दिष्टत्वात् कुन्थु पिपीलिका च, भवतीति सर्वत्र सम्बध्यते, शेषतिर्यग्भेदोपलक्षण चैतदिति सूत्रार्थ ॥४॥ किमित्थ पर्यटन्तस्ते निर्विद्य ते न वेत्याह—

एवमावट्टजोणीसु, पाणिणो कम्मकिव्बिसा । ण णिविज्जति ससारे, सव्वट्ठेसु व खत्तिया ॥ ५ ॥ (सूत्रम्)
कम्मसगेहि समूढा, दुक्खिया बहुवेयणा । अमाणुसासु जोणीसु, विणिहम्मति पाणिणो ॥६॥ (सूत्रम्)

व्याख्या—'एवम्' अमुनोक्तन्यायेन आवर्त्तनम् आवर्त्त –परिवर्त्त इति योऽर्थो, युवन्ति–मिश्रीभवन्ति कार्मणशरीरिण औदारिकादिशरीरैरासु जन्तवो जुषन्ते सेवन्ते ता इति वा योनय , आवर्त्तोपलक्षिता योनय आवर्त्तयोनय तासु, 'प्राणिन ' जन्तव , कर्म्मणा–उक्तरूपेण किल्बिषा –अधमा कर्म्मकिल्बिषा , प्राकृतत्वाच्च पूर्वापरनिपात', किल्बिषाणि–क्लिष्टतया निकृष्टान्यशुभानुबन्धीनि कर्म्माणि येषा ते किल्बिषकर्म्माण , 'न निर्विद्यन्ते' कदैतद्विमुक्तिरिति नोद्विजन्ते, क्व या आवर्त्तयोनय ? इत्याह–'ससारे' भवे, केष्विव के न निर्विद्यन्ते ? इत्याह–सर्वे च ते अर्थ्यन्त इत्यर्थाश्च–मनोज्ञशब्दादयो धनकनकादयो वा सर्वार्थास्तेष्विव 'क्षत्रिया ' राजान , किमुक्त भवति ?–यथा मनोज्ञान् शब्दादीन् भुञ्जानाना तेषा तर्षोऽभिवर्धते, एव तासु तासु योनिषु पुन पुनरुत्पत्त्या सत्या कलकलीभावमनुभव-

द्धारयति ततः स्मृतो धर्मः ॥ २ ॥" तस्य–एवमन्वर्थनाम्नो धर्मस्य 'दुर्लभा' दुरापा प्रागुक्तालस्यादिहेतुतः, स च— 'मृद्वी शय्या प्रातरुत्थाय पेया, भक्तं मध्ये पानकं चापराह्णे । द्राक्षाखण्डं शर्करा चार्धरात्रे, मोक्षश्चान्ते शाक्यपुत्रेण दृष्टः ॥१॥' इत्यादिसुगतादिकल्पितोऽपि स्याद् अतस्तदपोहायाह–यं धर्म्मं श्रुत्वा 'प्रतिपद्यन्ते' अङ्गीकुर्वन्ति 'तपः' अनशनादि द्वादशविधम् 'क्षान्तिं' क्रोधजयलक्षणां मानादिजयोपलक्षणं चैषा, 'अहिंसयन्ति' अहिंस्रताम्–अहिंसनशीलताम्, अनेन च प्रथमव्रतमुक्तम्, एतच्च शेषव्रतोपलक्षणम्, एतत्प्रधानत्वात्तेषाम्, एतद्वृत्तितुल्यानि हि शेषव्रतानि, एवं च तपसः क्षान्त्यादिचतुष्कस्य महाव्रतपञ्चकस्य चाभिधानाद्दशविधस्यापि यतिधर्म्मस्याभिधानम्, इह च यद्यपि श्रुतेः शाब्दं प्राधान्यं तथापि तत्त्वतो धर्म एव प्रधानं, तस्या अपि तदर्थत्वादिति, स एव यच्छब्देन परामृश्यते, अथवा काक्वा नीयते–'यद्' यस्मात् श्रुत्वा प्रतिपद्यन्ते तपःप्रभृति नाश्रुत्वा 'सुच्चा[1] जाणति कल्लाणं, सोच्चा जाणति पावगं' इत्याद्यागमात्, तत एवमतिमहार्थतया दुरापेयमिति सूत्रार्थः ॥ ८ ॥ श्रुत्यवाप्तावपि श्रद्धादुर्लभतामाह—

आहच्च सवणं लद्धुं, सद्धा परमदुल्लहा । सोच्चा णेयाउयं मग्गं, बहवे परिभस्सइ ॥ ९ ॥ (सूत्रम्)

व्याख्या—'आहच्च' इति कदाचित् 'श्रवणम्' प्रक्रमाद्धर्माकर्ण्णनम्, उपलक्षणत्वान्मनुष्यत्वं च लब्ध्वेति, अपि-

१ श्रुत्वा जानाति कल्याणं श्रुत्वा जानाति पापकम्

प्रहाण तस्यायो–लाभ प्रहाणाय तस्मिन्, यद्वा सूत्रत्वात् प्रहाणौ प्रहान्या वा तद्विबन्धकानन्तानुबन्ध्यादिकर्मसु प्रहीणेषु, कुतश्चिदीश्वरानुग्रहादेस्तदप्राप्ते, अन्यथा हि तद्वैफल्यापत्ति, एतेन–'अन्यो जन्तुरनीशोऽयमात्मन सुखदु खयो । ईश्वरप्रेरितो गच्छेत्, श्वभ्र वा स्वर्गमेव वा ॥१॥' इत्यपास्त भवति, अथ कथ पुनस्तेपा प्रहाणिरित्याह— 'आनुपूर्व्या' क्रमेण न तु झगित्येव, तथापि 'कयाइ उ'त्ति तुशब्दस्यैवकारार्थत्वात्कदाचिदेव न सर्वदा, 'जीवाः' प्राणिन 'शुद्धिम्' क्लिष्टकर्मविगमात्मिकाम् अनु–तद्विघातिकर्मापगमस्य पश्चात्प्राप्ता 'आददते' स्वीकुर्वन्ति मनुष्यता, पाठान्तरतश्च 'जाय'ते मणुस्सय(सत्तय)'ति सुव्यत्ययान्मनुष्यताया, तदैव तन्निर्वर्त्तकमनुजगत्यादिकर्मोदयादिति भाव, अनेन मनुजत्वविबन्धककर्मापगमस्य तथाविधकालादिसव्यपेक्षत्वेन दुरापतया मनुपत्वदुर्लभत्वमुक्तमिति सूत्रार्थ ॥ ७ ॥ कदाचिदेतदवाप्तौ श्रुति सुलभैव स्यादत आह—

माणुस्स विग्गह लद्धु, सुती धम्मस्स दुल्लहा । ज सोच्चा पडिवज्जति, तव खतिमहिंसय ॥८॥ (सूत्रम्)

व्याख्या—'माणुस्स'ति सूत्रत्वान्मानुष्यक मनुष्यसम्बन्धिन विशेपेण गृह्यते आत्मना कर्म्मपरतन्त्रेणेति विग्रहस्त मनुजगत्याद्युपलक्षितमौदारिकशरीर 'लद्धु'ति अपेर्गम्यमानत्वात् लब्ध्वापि, 'श्रुति' आकर्णन, कस्य ?–धारयति दुर्गतौ निपततो जीवानिति धर्म्म, तथा च वाचक –"प्राग्लोकबिन्दुसारे सर्वाक्षरसन्निपातपरिपठित । धृञ् धरणाऽर्थो धातुस्तदर्थयोगाद्भवति धर्म्म ॥ १ ॥ दुर्गतिभयप्रपाते पतन्तमभयकरदुर्लभत्राणे । सम्यक् चरितो यस्मा-

माणुसत्तंमि आयाओ, जो धम्मं सोच्च सद्दहे। तवस्सी वीरियं लद्धुं, संवुडो निद्धुणे रयं ॥११॥(सूत्रम्)

व्याख्या—'मानुषत्वे' मनुजत्वे 'आयातः' आगतः, किमुक्तं भवति ?—मानुषत्वं प्राप्तो, य इत्यनिर्दिष्टस्वरूपो य एव कश्चिद्धर्म्मं श्रुत्वा 'सद्दहे'त्ति श्रद्धत्ते—रोचयते 'तपस्वी' निदानादिविरहितया प्रशस्ततपोऽन्वितः, कथं ?—'वीर्यं' संयमोद्योगं लब्ध्वा 'संवृतः' स्थगितसमस्ताश्रवः, स किमित्याह—'णिद्धुणे'त्ति निर्धुनोति—नितरामपनयति रज्यते अनेन स्वच्छस्फटिकवच्छुद्धस्वभावोऽप्यात्माऽन्यथात्वमापाद्यत इति रजः—कर्म्म वध्यमानकं बद्धं च, तदपनयनाच्च मुक्तिं प्राप्नोतीति भावः, उभयत्र लिप्स्यमानसिद्धौ चे (पा. ३-३-७) ति लट्, इह च श्रद्धानेन सम्यक्त्वमुक्तं, तेन च ज्ञानमाक्षिप्तं, प्रदीपप्रकाशयोरिव युगपदुत्पादात्तयोः, तथा च 'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' (तत्त्वा० अ. १-सू. १) इति न विरुध्यत इति सूत्रार्थः ॥ ११ ॥ इत्थमामुष्मिकं मुक्तिफलमुक्तम्, इदानीमिहैव फलमाह—

सोही उज्जुभूयस्स, धम्मो सुद्धस्स चिट्ठति। णिव्वाणं परमं जाइ, घयसित्तेव पावए ॥ १२ ॥ (सूत्रम्)

व्याख्या—'शुद्धिः' कषायकालुष्यापगमो, भवतीति गम्यते, 'ऋजुभूतस्य' चतुरङ्गप्राप्त्या मुक्तिं प्रति प्रगुणीभूतस्य, तथा च 'धर्म्मः' क्षान्त्यादिः 'शुद्धस्य' शुद्धिप्राप्तस्य 'तिष्ठति' अविचलिततयाऽऽस्ते इति, अशुद्धस्य तु कदाचित्कषायोदयात्तद्विचलनमपि स्यादित्याशयः, तदवस्थितौ च 'निर्वाणं' निर्वृतिर्निर्वाणं स्वास्थ्यमित्यर्थः 'परमं' प्रकृष्टम्

शब्दस्य गम्यमानत्वात् लब्ध्वापि–अवाप्यापि 'श्रद्धा' रुचिरूपा प्रक्रमाद्धर्म्मविषयैव 'परमदुर्लभा' अतिशयदुरापा, कुत पुन परमदुर्लभत्वमस्या इत्याह—'श्रुत्वा' आकर्ण्य न्यायेन चरति–प्रवर्त्तते नैयायिक, न्यायोपपन्न इत्यर्थ, त 'मार्गम्' सम्यग्दर्शनाद्यात्मक मुक्तिपथ बहव नैक एव, परि इति सर्वप्रकार 'भरसइ'त्ति भ्रश्यन्ति–च्यवन्ते प्रक्रमान्नैयायिकमार्गादेव, यथा जमालिप्रभृतयो, यच प्राप्तमप्यपैति तच्चिन्तामणिवत् परमदुर्लभमेवेति भाव। इहैव केचिन्निह्नववक्तव्यता व्याख्यातवन्त, उचित चैतदप्यास्त(प्यस्ति) इति सूत्रार्थ ॥ ९ ॥ एतत्त्रयावाप्तावपि सयमवीर्यदुर्लभत्वमाह—

सुइ च लद्धु सद्ध च, वीरिय पुण दुल्लह। बहवे रोयमाणाऽवि, णो य ण पडिवज्जइ ॥ १० ॥ (सूत्रम्)

व्याख्या—श्रुति चशब्दान्मनुष्यत्व च 'लद्धु'ति प्राप्यलब्ध्वापि, श्रद्धा च वीर्य प्रक्रमात् सयमविषय, पुन शब्दस्य विशेषकत्वाद्विशेषेण दुर्लभ, यत बहव नैक एव रोचमाना अपि–न केवल प्राप्तमनुष्यत्वा शृण्वन्तो वेत्यपिशब्दार्थ, श्रद्दधाना अपि, नो चेति चशब्दस्यैवकारार्थत्वान्नैव 'ण'मिति वाक्यालङ्कारे अथवा 'णो य ण'न्ति सूत्रत्वान्नो एत 'पडिवज्जति'त्ति तत एव प्रतिपद्यन्ते चारित्रमोहनीयकर्म्मोदयत, सत्यकिश्रेणिकादिवन्न कर्तुमभ्युपगच्छन्तीति सूत्रार्थ ॥ १० ॥ सम्प्रति दुर्लभस्यास्य चतुरङ्गस्य फलमाह—

रणं–मिथ्यात्वाविरत्यादिकं, तथा यशोहेतुत्वाद्यशः–संयमो विनयो वा, यदुक्तम्–"एवं धम्मस्स विणओ, मूलं परमो से मोक्खो। जेण कित्तिं सुयं सिग्घं, णीस्सेसं चाभिगच्छइ ॥ १ ॥" इति, तत् 'सञ्चिनु' भृशमुपचितं कुरु, कया ?–क्षान्त्या, उपलक्षणत्वान्मार्दवादिभिश्च, ततः किं स्यादित्याह–'पाढवं' ति पार्थिवमिव पार्थिवं शीतोष्णादिपरिषहसहिष्णुतया समदुःखसुखतया च पृथिव्यामिव भवं, पृथिवी हि सर्वंसहा, कारणानुरूपं च कार्यमिति भावो, यदि वा पृथिव्या विकारः पार्थिवः, स चेह शैलः, ततश्च शैलेशीप्राप्त्यपेक्षयाऽतिनिश्चलतया शैलोपमत्वात्परप्रसिद्धया वा पार्थिवं 'शरीरं' तनुं 'हित्वा' त्यक्त्वा ऊर्ध्वं दिशमिति सम्बन्धः, 'प्रक्रामति' प्रकर्षेण गच्छति येन भवानिति उपस्कारो, यद्वा सोपस्कारत्वात् सूत्राणामेवं नीयते—यत एवं कुर्वन् भव्यजन्तुरूर्ध्वं दिशं प्रक्रामति ततस्त्वमतिदृढचेता इत्थमित्थं च कुर्वित्युपदिश्यते, प्रक्रामतीति वर्त्तमानसामीप्ये वर्त्तमाननिर्देश आसन्नफलावाप्तिसूचक इति सूत्रार्थः ॥ १३ ॥ इत्थं येषां तद्भव एव मुक्त्यवाप्तिस्तान् प्रत्युक्तं, येषां तु न तथा तान्प्रत्याह—

विसालिसेहिं सीलेहिं, जक्खा उत्तर उत्तरा। महासुक्का व दिप्पंता, मन्नंता अपुणोच्चयं ॥१४॥(सूत्रम्)
अप्पिया देवकामाणं, कामरूवविउव्विणो। उड्ढं कप्पेसु चिट्ठंति, पुव्वा वाससया बहू ॥ १५ ॥ (सूत्रम्)

१. एवं धर्मस्य विनयो मूलं परमोऽसौ मोक्षः। येन कीर्तिं श्रुतं शीघ्रं निःश्रेयसं चाधिगच्छति ॥ १ ॥

'एगमासपरियाए समणे वतरियाण तेयल्लेस वीईवयति' इत्याद्यागमेनोक्त 'नैवास्ति राजराजस्य तत्सुख'मित्यादिना च वाचकवचनेनानूदित 'याति' प्राप्नोति, क इव ?—'घयसित्तेव'त्ति इवस्य भिन्नक्रमत्वात् घृतेन सिक्तो घृतसिक्त पुनातीति पावक -अग्नि , लोकप्रसिद्ध्या, समयप्रसिद्ध्या तु पापहेतुत्वात्पापक तद्वत् , स च न तथा तृणादिभि र्दीप्यते यथा घृतेनेत्यस्य घृतसिक्तस्य निर्वृतिरनुगीयते, ततो विशेषेणास्य दृष्टान्तत्वेनाभिधानमिति भावनीय, यद्वा—निर्वाणमिति जीवन्मुक्ति याति,—'निर्जितमदमदनाना वाक्कायमनोविकाररहितानाम्। विनिवृत्तपराशानामिहैव मोक्ष सुविहितानाम् ॥ १ ॥' इति वचनात्, कथभूत सन् ?—घृतसिक्तपावक इव—तपस्तेजसा ज्वलितत्वेन घृततर्पिताग्निसमान इति सूत्रार्थ ॥ १२ ॥ पठन्ति च नागार्जुनीया —"चउद्धा संपय लद्धु, इहेव ताव भायते । तेयते तेजसपन्ने, घयसित्तेव पावए ॥१॥ त्ति" तत्र चतुर्धा—चतुष्प्रकारा सपदा—सम्पत्ति प्रक्रमान्मनुष्यत्वादिविषया लब्ध्वा इहैव लोके तावद् , आस्ता परत्र, 'भ्राजते' ज्ञानश्रिया शोभते, 'तेजते' दीप्यते तेजसा—अर्थात्तपोजनितेन सम्पन्नो—युक्तस्तेज सम्पन्न , शेष प्राग्वदिति सूत्रार्थ ॥ १२ ॥ इत्थमामुष्मिकमैहिकं च फलमुपदर्श्य शिष्योपदेशमाह—

विगिंच कम्मुणो हेउ, जस सचिणु खतिए । पाढव सरीर हिच्चा, उड्ढ पक्कमती दिस ॥ १३ ॥ (सूत्रम्)

व्याख्या—'विगिंच'त्ति वेविग्धि पृथक् कुरु 'कर्म्मण ' प्रस्तावान्मानुषत्वादिविबन्धकस्य 'हेतुम्' उपादानका-

१ एकमासपर्याय श्रमणो व्यन्तराणा तेजोलेश्या व्यतिव्रजति ॥

पमस्थितित्वात्, तत्रापि च तेपामसङ्ख्येयानामेव सम्भवात्, एवं वर्षशतान्यपि बहूनि, पूर्ववर्षशतायुपामेव चरणयोग्यत्वेन विशेपतो देशनौचित्यमिति ख्यापनार्थमित्थमुपन्यास इति सूत्रार्थः ॥ १४–१५ ॥ तत्किमेपामेतावदेव फलमित्याशङ्क्याह—

तत्थ ठिच्चा जहाठाणं, जक्खा आउक्खए चुया। उवेंति माणुसं जोणिं, से दसंगेऽभिजायइ ॥१६॥(सूत्रम्)

व्याख्या—'तत्र' तेपूक्तरूपोत्पत्तिस्थानेषु 'स्थित्वा' इत्यासित्वा 'यथास्थानम्' इति यद्यस्य स्वानुष्ठानानुरूपं यदिन्द्रादिपदं तस्मिन् यक्षाः 'आयुःक्षये' स्वजीवितावसाने 'च्युताः' भ्रष्टाः 'उवेन्ति'त्ति उपयन्ति मनुषाणामियं मानुषी तां 'योनिम्' उत्पत्तिस्थानं, तत्र च 'से' इति स सावशेपकुशलकर्मा कश्चिज्जन्तुः दशाङ्गानि भोगोपकरणानि वक्ष्यमाणान्यस्येति दशाङ्गः अभिजायते, एकवचननिर्देशस्तु विसदृशशीलतया कश्चिद्दशाङ्गः कश्चिन्नवाङ्गादिरपि जायत इति वैचित्र्यसूचनार्थः, यद्वा 'से' इति सूत्रत्वात् तेषां दशानामङ्गानां समाहारो दशाङ्गी, प्राकृतत्वाच्च पुंसा निर्देशः, 'अभिजायते' उपभोग्यतयाऽऽभिमुख्येनोत्पद्यत इति सूत्रार्थः ॥ १६ ॥ कानि पुनर्दशाङ्गानीत्याह—

खित्तं वत्थु हिरण्णं च, पसवो दासपोरुसं। चत्तारि कामखंधाणि, तत्थ से उववज्जइ ॥ १७ ॥

मित्तवं नाइवं होइ, उच्चागोत्ते य वण्णवं। अप्पायंके महापन्ने, अभिजाय जसो बले ॥१८॥ (सूत्रम्)

व्याख्या—'विसालिसेहिं'ति मागधदेशीयभाषया विसदृशैः—स्वस्वचारित्रमोहनीयकर्मक्षयोपशमापेक्षया विभिन्नैः 'शीलैः' व्रतपालनात्मकैरनुष्ठानविशेषैः, किम्?—इज्यन्ते पूज्यन्त इति यक्षाः, यान्ति वा तथाविधर्द्धिसमुदयेऽपि क्षयमिति यक्षाः, ऊर्ध्वं कल्पेषु तिष्ठन्तीति उत्तरेण सम्बन्धः, 'उत्तरोत्तराः' उत्तरोत्तरविमानवासिनः, उत्तरो वा उपरितनस्थानवर्त्त्युत्तरः—प्रधानो येषु तेऽमी उत्तरोत्तराः 'महाशुक्लाः' अतिशयोज्ज्वलतया चन्द्रादित्यादयः, त इव 'दीप्यमानाः' प्रकाशमानाः, अनेन शरीरसम्पदुक्ता, सुखसम्पदमाह—'मन्यमानाः' मनसि अवधारयन्तः शब्दादिविषयावाप्तिसमुत्पन्नरतिसागरावगाढतयाऽतिदीर्घस्थितितया वा, किम्?—न पुनश्च्यवनम् अपुनश्च्यवस्तम्—अधस्तिर्यगादिपूत्पत्त्यभावं, यदुक्तं 'मन्यमाना अपुनश्च्यवं'मिति, तत्रोक्तमेव हेतुं सूत्रकृदाह—'अप्पिया' इत्यादिना, 'अर्पिताः' प्राक्कृतसुकृतेन ढौकिता इव, केषाम्?—काम्यन्ते—अभिलष्यन्ते इति कामाः देवानां कामाः देवकामाः—दिव्याङ्गनाङ्गस्पर्शादयः, 'कामरूवविउव्विणो'त्ति सूत्रत्वात्कामरूपविकरणाः—यथेष्टरूपाभिनिर्वर्त्तनशक्तिसमन्विताः, कुर्वन्ति हि ते उत्तरवैक्रियाणि समवसरणागमनादिषु तथा तथेति, येऽपि प्रयोजनाभावान्न कुर्वन्ति तेषामपि शक्तिरस्त्येवेत्येवमुच्यते, 'ऊर्ध्वं' कल्पोपरिवर्त्तिषु ग्रैवेयकेष्वनुत्तरविमानकेषु च कल्पेषु सौधर्मादिषु यदि वा—ऊर्ध्वम्—उपरि कल्प्यन्ते विशिष्टपुण्यभाजामवस्थितिविषयतयेति सौधर्मादयो ग्रैवेयकादयश्च सर्वेऽपि कल्पा एव तेषु 'तिष्ठन्ति' आयुःस्थितिमनुपालयन्ति पूर्वाणि—वर्षसप्ततिकोटिलक्षषट्पञ्चाशत्कोटिसहस्रपरिमितानि बहूनि, जघन्यतोऽपि पल्यो-

भोच्चा माणुस्सए भोए, अप्पडिरूवे अहाउयं। पुव्विं विसुद्धसद्धम्मे, केवलं बोहि बुज्झिया ॥१९॥(सूत्रम्)

व्याख्या—'भुक्त्वा' आसेव्य 'मानुष्यकान्' मनुष्यसम्बन्धिनः भुज्यन्त इति भोगाः—मनोज्ञशब्दादयस्तान्, अविद्यमानं प्रतिरूपमतिप्रकर्षवत्त्वेनानन्यतुल्यमेषामित्यप्रतिरूपाः तान्, 'यथायुः' आयुषोऽनतिक्रमेण पूर्वं—पूर्वजन्मविशुद्धो निदानादिरहितत्वेन 'सद्धर्म्मः(र्मा)' शोभनो धर्मोऽस्येति विशुद्धसद्धर्मा, केवलत्वाच्च 'धर्मादनिच् केवला'-दिति ( पा० ५-४-१२४ ) इत्यनिच् भवति, 'केवलाम्' अकलङ्कां 'बोधिं' जिनप्रणीतधर्म्मप्राप्तिलक्षणां 'बुद्धा' अनुभूय प्राप्येतियावत् ॥ १९ ॥ ततोऽपि किमित्याह—

चउरंगं दुल्लभं मच्चा, संजमं पडिवज्जिया। तवसा धुतकम्मंसे, सिद्धे भवति सासए ॥२०॥ तिबेमि (सूत्रम्)

व्याख्या—चतुर्णामङ्गानां समाहारश्चतुरङ्गी तामभिहितस्वरूपां 'दुर्लभां' दुष्प्रापां 'मत्वा' ज्ञात्वा 'संयमं' सर्वसावद्ययोगविरतिरूपं 'प्रतिपद्य' आसेव्य, 'तपसा' बाह्येनान्तरेण च धुतम्—अपनीतं, कम्मंसित्ति—कार्म्मग्रन्थिकपरिभाषया सत्कर्म्मानेनेति धुतकर्मांशः, तदपनयनाच्च बन्धादीनामप्यर्थतोऽपनयनमुक्तमेव, यद्वा धुताः कर्म्मणोऽंशा—भागा येन स तथाविधः, किमित्याह—सिद्धो भवति, स च किमाजीविकमतपरिकल्पितसिद्धवत् पुनरेहैति उत नेत्यत आह—'शाश्वतः' शश्वद्भवनात्, शश्वद्भवनं च पुनर्भवनिबन्धनकर्म्मबीजात्यन्तिकोच्छेदात्, तथा चाह—"दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः। कर्म्मबीजे तथा दग्धे, न रोहति भवाङ्कुरः ॥ १ ॥"

व्याख्या—'क्षि निवासगत्यो' क्षियन्ति निवसन्त्यस्मिन्निति क्षेत्र–ग्रामारामादि सेतुकेतूभयात्मक वा, तथा वसन्त्यस्मिन्निति वास्तु–खातोच्छ्रितोभयात्मक 'हिरण्य' सुवर्णम्, उपलक्षणत्वात् रूप्यादि च, 'पशव' अश्वादय, दास्यते–दीयते एभ्य इति दासा –पोष्यवर्गरूपास्ते च पोरुसति–सूत्रत्वात्पौरुषेय च–पदातिसमूह दासपौरुषेय, 'चत्वार' चतु सङ्ख्या, अत्र हि क्षेत्र वास्त्विति चैको हिरण्यमिति द्वितीय पशव इति तृतीयो दासपौरुषेयमिति चतुर्थ, एते किमित्याह—काम्यत्वात् कामा –मनोज्ञशब्दादय, तद्धेतव स्कन्धा पुद्गलसमूहा तत कामस्कन्धा, यत्र भवन्तीति गम्यते, प्राकृतत्वाच्च नपुसकनिर्देश, 'तत्र' तेषु कुलेषु 'से' इति स 'उपपद्यते' जायते। अनेन चैकमङ्गमुक्त, शेषाणि तु नवाङ्गान्याह—मित्राणि–सहपांशुक्रीडितादीनि सन्त्यस्येति मित्रवान्, ज्ञातय –स्वजना स त्यस्येति ज्ञातिमान् भवति, उच्चै –लक्ष्म्यादिक्षयेऽपि पूज्यतया गोत्र–कुलमस्येत्युच्चैर्गोत्र, च समुच्चये, वर्ण्ण –श्यामादि स्निग्धत्वादिगुणै प्रशस्योऽस्येति वर्ण्णवान्, 'अल्पातङ्क' आतङ्कविरहितो नीरोग इत्यर्थः, महती प्रज्ञाऽस्येति महाप्रज्ञ –पण्डित, 'अभिजात' विनीत, स हि सर्वजनाभिगमनीयो भवति, दुर्विनीतस्तु शेषगुणान्वितोऽपि न तथेति, अत एव च 'जसो'त्ति यशस्वी, तथा च सति 'बले'त्ति बली कार्यकरण प्रति सामर्थ्यवान्, उभयत्र सूत्रत्वान्मत्वर्थीयलोप, एकैकोऽपि हि मित्रत्वादिगुणस्तत्तत्कार्याभिनिर्वर्त्तनक्षम, किं पुनरमी समुदिता ?, शरीरसामर्थ्याच्चेह बलीति ॥ १७–१८ ॥ तत्किमेवविधगुणसम्पत्समन्वित मानुषत्वमेव तत्फलमित्याह—

उत्तराध्ययनटीकायां तृतीयमध्ययनं समाप्तम् ॥

इति, इह पुनस्तस्येहागमनकल्पनमतिमोहविलसितं, तथा च स्तुतिकृत्–"दग्धेन्धन पुनरुपैति भव प्रमथ्य, निर्वाणमप्यनवधारितभीरुनिष्ठ । मुक्त स्वयकृतभवश्च परार्थशूरस्त्वच्छासनप्रतिहतेष्विह मोहराज्यम् ॥१॥" इति सूत्रार्थ ॥ २०॥ इति परिसमाप्तौ, ब्रवीमि प्राग्वदिति। उक्तोऽनुगम , सम्प्रति नया , तेऽपि प्राग्वदेव । इति श्रीशा·त्याचार्यविरचिताया शिष्यहितायामुत्तराध्ययनटीकाया तृतीयमध्ययन समाप्तमिति ॥ ॥

तृतीयमध्ययन समाप्तम् ॥

नोत्सहन्त एतेष्विति विषयाः, यद्वाऽऽसेवनकाले मधुरत्वेन परिणामे चातिकटुकत्वेन विषस्योपमां यान्तीति विषयाः, अत एवाविवेकिलोकाऽऽसेविता विवेकिलोकपरित्यक्ताश्च, तदुक्तम्—"आपातमात्रमधुरा विपाककटवो विषोपमा विषयाः। अविवेकिजनाऽऽचरिता विवेकिजनवर्जिताः पापाः ॥१॥" कष्यतेऽस्मिन् प्राणी पुनः पुनरावृत्तिभावमनुभवति कषोपलकष्यमाणकनकवदिति कषः—संसारस्तस्मिन् आ-समन्तादयन्ते—गच्छन्त्येभिरसुमन्त इति कषायाः, यद्वा कषाया इव कषायाः, यथा हि तुवरिकादिकषायकलुषिते वाससि मञ्जिष्ठादिरागः श्लिष्यति चिरं चावतिष्ठते तथैतत्कलुषित आत्मनि कर्म सम्बध्यते चिरतरस्थितिकं च जायते, तदायत्तत्वात् तत्स्थितेः, उक्तं हि शिवशर्मणा—"जोगा पयडिपएसं ठितिअणुभागं कसायओ कुणइ"इत्यादि, एतद्दुष्टता च निरुक्त्यैव भाविता, 'णिद्द'त्ति नितरां द्रान्ति—गच्छन्ति कुत्सितामवस्थामिहामुत्र चानयेति निद्रा, तद्वशाद्धि प्रदीपनकादिषु विनाशमिहैवानुभवन्ति, धर्मकार्येष्वपि शून्यमानसत्वान्न प्रवर्तन्ते, तथा चाह—"जागरिया धम्मीणं अहम्मीणं च सुत्तया सेया। वच्छाहिवभगिणीए अकहिंसु जिणो जयंतीए ॥ १॥" विरूपा स्त्रीभक्तचौरजनपदविषयतयाऽसम्बद्धभाषितया च कथा विकथा, तत्प्रसक्तो हि परगुणदोषोदीरणादिभिः पापमेवोपार्जयति, अत एवाह वाचकः—"यावत् परगुणदोषपरिकीर्त्तने

१ योगात् प्रकृतिप्रदेशौ स्थित्यनुभागौ कषायतः करोति । २ जागरिता धर्मिणामधर्मिणां च सुप्तता श्रेयसी। वत्साधिपभगिन्यै अचकथत् जिनो जयन्त्यै ॥ १ ॥

॥ ॐ नम ॥ उक्तं तृतीयमध्ययनम्, अधुना चतुर्थावसर, तस्य चायमभिसम्बन्ध, इहानन्तराध्ययने चत्वारि मनुष्यत्वादीन्यङ्गानि दुर्लभान्युक्तानि, इह तु तत्प्राप्तावपि महते दोषाय प्रमादो महते च गुणायाप्रमाद इति मन्यमान प्रमादाप्रमादौ हेयोपादेयतयाऽऽह। इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि प्राग्वद् व्यावर्णनीयानि तावद् यावन्नामनिष्पन्ने निक्षेपे प्रमादाप्रमादमिति नाम, ततश्च प्रमाद इत्यप्रमाद इति च निक्षेप्तव्यमित्युभयनिक्षेपप्रतिपिपादयिषयाऽऽह निर्युक्तिकृत्—

नामठवणपमाओ दव्वे भावे य होइ नायव्वो। एमेव अप्पमाओ चउव्विहो होइ नायव्वो ॥ १७९॥

व्याख्या—'णामठवणपमाए'त्ति, प्रमादशब्द उभयत्र सम्बध्यते, ततश्च नामप्रमाद स्थापनाप्रमाद, 'दव्वे'इति द्रव्यप्रमाद, 'भावे य'त्ति भावप्रमादश्च भवति ज्ञातव्य, 'एवमेवे'ति नामस्थापनाद्रव्यभावभेदत एव अप्रमादश्चतुर्विधो भवति ज्ञातव्य इति गाथार्थ ॥१७९॥ इह च नामस्थापने प्रतीते इत्यनादृत्य द्रव्यभावप्रमादावभिधित्सुराह—

मज्ज विसय कसाया निद्दा विगहा य पचमी भणिया। इअ पचविहो एसो होइ पमाओ य अपमाओ १८०

व्याख्या—माद्यन्ति येन तत् मद्य, यद्वशाद्गम्यागम्यवाच्यावाच्यादिविभाग जनो न जानाति, अत एवाह— "कार्याकार्ये न जानीते, वाच्यावाच्ये तथैव च। गम्यागम्ये च यन्मूढो, न पेय मद्यमित्यत ॥१॥" विषीदन्ति–धर्मं प्रति

असंखयं जीविय मा पमायए, जरोवणीयस्स हु नत्थि ताणं ।

एवं वियाणाहि जणे पमत्ते, कन्नू विहिंसा अजया गहिंति ?॥ १ ॥ (सूत्रम्)

व्याख्या—संस्क्रियत इति संस्कृतं न तथा शक्रशतैरपि सतो वर्द्धयितुं त्रुटितस्य वा कर्णपाशवदस्य सन्धातुमशक्यत्वात्, किं तत् ?—'जीवितं' प्राणधारणरूपं, ततः किमित्याह—मा प्रमादीः, किमुक्तं भवति ?—यदीदं कथञ्चित् संस्कर्तुं शक्यं स्यात् चतुरङ्ग्यवासावपि न प्रमादो दोषायैव स्यात्, यदा त्विदमसंस्कृतं तदैतत्परिक्षये प्रमादिनस्तदतिदुर्लभमिति मा प्रमादं कृथाः, कुतः पुनरसंस्कृतम् ?—जरया—वयोहानिरूपया उपनीतस्य—प्रक्रमान्मृत्युसमीपं प्रापितस्य, प्रायो हि जरानन्तरमेव मृत्युरित्येवमुपदिश्यते, हुर्हेतौ, यस्मान्न अस्ति—विद्यते त्राणं—शरणं येन मृत्युतो रक्षा स्यात्, उक्तं च वाचकैः—"मङ्गलैः कौतुकैर्योगैर्विद्यामन्त्रैस्तथौषधैः । न शक्ता मरणात् त्रातुं, सेन्द्रा देवगणा अपि ॥ १ ॥" यद्वा स्यादेतत्—वार्द्धके धर्म्मं विधास्यामीत्याशङ्क्याह—जरामुपनीतः—प्रापितो गम्यमानत्वात् स्वकर्म्मभिर्जरोपनीतस्तस्य नास्ति त्राणं, पुत्रादयोऽपि हि न तदा पालयन्ति, तथा चात्यन्तमवधीरणास्पदस्य न धर्म्मं प्रति शक्तिः श्रद्धा वा भाविनी, यद्वा त्राणं येनासावपनीयते पुनर्यौवनमानीयते न तादृक्करणमस्ति, ततो यावदसौ (त्वां) नासादयति तावद्धर्म्मे मा प्रमादीः, उक्तं हि—"तद्यावदिन्द्रियवलं जरया रोगैर्न बाध्यते

व्यापृत मनो भवति। तावद्वर विशुद्धे ध्याने व्यग्र मन कर्तुम् ॥१॥" इह च चूर्णिकृतेन्द्रियाण्येव पञ्चमप्रमादतया व्याख्यातानि, तत्र च विषयग्रहणेऽपि पुनरिन्द्रियग्रहण विषयेष्वपीन्द्रियवशत एव प्रवर्त्तन्त इति तेषामेवातिदुष्टता-ख्यापक, महासामर्थ्या अपि ह्येतद्वशादुपघातमाप्नुवन्ति, आह च वाचक —"इह चेन्द्रियप्रसक्ता निधनमुपजग्मु., तद्यथा-गार्ग्य सत्यकिर्नैकर्द्धिगुण प्राप्तोऽनेकशास्त्रकुशलोऽनेकविद्यावलसम्पन्नोऽपी"त्यादि। एते च तत्तत्पुद्गलो-पचितद्रव्यरूपतया विवक्ष्यमाणा द्रव्यप्रमाद आत्मनि च रागद्वेषपरिणतिरूपतया विवक्षिता भावप्रमाद इति हृदयम्, अत एव न भावप्रमाद पृथगुक्त। उपसहारमाह-'इती'त्यनन्तरमुपदर्शित पञ्चविध.-पञ्चप्रकार 'एष' इति इहैवोच्यमानतया प्रत्यक्षत उपलभ्यमानो 'भवति' विद्यते प्रकर्षेण माद्यन्त्यनेनेति प्रमाद अप्रमादश्च तदभावरूप पञ्चविधो, भावस्य चैकत्वेऽपि प्रतिषेध्यापेक्षया पञ्चविधत्वमिति गाथार्थ ॥ १८० ॥ प्रस्तुतयोजनामाह—

पचविहो अ पमाओ इहमज्झयणमि अप्पमाओ य। वण्णिज्जए उ जम्हा तेण पमायप्पमायति ॥ १८१ ॥

व्याख्या—पञ्चविध चशब्दस्तद्गतभेदसूचक प्रमादः 'इह'अस्मिन्नध्ययने अप्रमादश्च पञ्चविधो वर्ण्यते, तुशब्दोऽन्याध्ययनेभ्यो विशेष द्योतयति, यस्माद्धेतोस्तेन प्रमादाप्रमादमित्येतदुच्यत' इति गाथार्थ ॥ १८१ ॥ इत्यवसितो नामनिष्पन्ननिक्षेप., सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपावसरः, स च सूत्रे सति भवति, तच्चेदम्—

सुणेति सुरट्ठाए अत्थित्ति, एतेणं भरुकच्छहरणीगामे दूरेल्लेकूवियाए करिसतो दिट्ठो, एक्केणं हत्थेणं हलं वाहेइ, एक्केणं फलहीतो उप्पाडेति, तं दट्ठूण ठितो, पेच्छामि ताव से आहारेति, आवल्ला मुक्का, भज्जा य से भत्तं गहाय आगया, पत्थिया, कूरस्स उब्भज्जिय घडतो पेच्छति, जिमितो सण्णाभूमिं गतो, तत्थ परिक्खइ, सव्वं संवट्टिं, स वेयालियंमि वसहिं तस्स घरे मग्गति, दिन्ना। इतो य संकहा य, पुच्छइ—का जीविका ?, तेण कहिए भणति—अहं अट्टणो तुमं इस्सरं करेमित्ति, तीसे महिलाए कप्पासमोल्लं दिन्नं, सा य उंवलेद्दा, उज्जेणिए गया, तेणवि वमणविरेयणाणि कयाणि, पोसितो णिजुद्धं सिक्खावितो, पुणरवि महिमाकाले तेणेव विहिणा आगतो, पढमदिवसे फलहियमल्लो, मच्छियमल्लोवि, जुद्धे एको अज्जितो एको अपराजितो, रायावि वीयदिवसे होहिइत्ति अतिगतो

१ शृणोति सुराष्ट्रायामस्तीति, एतेन भृगुकच्छधरणीग्रामे दूरं कूपिकायाः कर्पको दृष्टः, एकेन हस्तेन हलं वाहयति, एकेन कर्पासानुत्पाटयति, तं दृष्ट्वा स्थितः, प्रेक्षे तावदस्याहारमिति, वलीवर्दौ मुक्तौ, भार्या च तस्य भक्तं गृहीत्वाऽऽगता, प्रस्थिता, कूरस्य संपूर्ण( उद्भिद्य ) घटं प्रेक्षते जिमितः संज्ञाभूमिं गतः, तत्र परीक्षते, सर्वं संवृत्तं, स वैकालिके वसतिं तस्य गृहे मार्गयति, दत्ता। इतश्च संकथा च, पृच्छति—का जीविका ?, तेन कथिते भणति—अहमट्टनस्त्वामीश्वरं करोमीति, तस्यै महिलायै कर्पासमूल्यं दत्तं, सा च संतुष्टा, उज्जयिन्यां गता ( सा वलीवर्दान् प्रगुणय्योज्जयिनी गता ), तेनापि वमनविरेचनानि कृतानि, पोषितो नियुद्धं शिक्षितः, पुनरपि महिमकाले तेनैव विधिना आगतः, प्रथमदिवसे कर्पास ( फलही ) मल्लो, मात्स्यिकमल्लोऽपि, युद्धे एकोऽजितः एकोऽपराजितः, राजाऽपि द्वितीयदिवसे भविष्यतीति अतिगतः

२ हरेल्ल० ३. ट्टिअवल्ली। ४ उवल्ला सवलेद्दा। उवलद्धा।

प्रसभम्। तावच्छरीरमूर्च्छां त्यक्त्वा धर्मे कुरुष्व मतिम् ॥ १ ॥" जरोपनीतस्य च त्राण नास्तीत्यत्राट्टणो दृष्टान्त,

तत्र च सम्प्रदाय —

उज्जेणी नयरी जियसत्तू राया, तस्स अट्टणो मल्लो, सवरज्जेसु अजेतो। इतो य समुद्दतडे सोपारय णयर, तत्थ सिंहगिरी राया, सो य मल्लाण जो जिणति तस्स बहु दव्व देति, सो य अट्टणो तत्थ गतूण वरिसे वरिसे पडाग हरति, राया चिंतेइ–एस अन्नाओ रज्जाओ आगतूण पडाग हरति, एसा मम ओहावणत्ति पडिमल्ल मग्गति, तेण मच्छितो एगो दिट्ठो वस पियतो, बल च से विन्नासिय, णाऊण पोसितो, पुणरवि अट्टणो आगतो, सो य किर मल्लजुद्ध होहितित्ति अणागते चेव सगातो णयरातो अप्पणो पत्थयणस्स बयल्ल भरेऊण अघायाहेण एति, सपत्तो सोपारय, जुद्धे पराजिओ मच्छियमल्लेण, गतो सय आवास चिंतेइ—एयस्स वुड्ढी तरुणस्स मम हाणी, अन्न मग्गइ मल्ल,

१ उज्जयिनी नगरी जितशत्रू राजा, तस्याट्टनो मल्ल, सर्वराज्येषु अजेय। इतश्च समुद्रतटे सोपारक नगर, तत्र सिंहगिरी राजा, स च मल्लाना यो जयति तस्मै बहु द्रव्य ददाति, स चाट्टनस्तत्र गत्वा वर्षे वर्षे पताका हरति, राजा चिन्तयति–एषोऽन्यस्मात् राज्यादागत्य पताका हरति, एषा ममापभ्राजनेति प्रतिमल्ल मार्गयति, तेन मात्स्यिक एको दृष्ट वसा पिबन्, बल च तस्य जिज्ञासित, ज्ञात्वा पोषित, पुनरप्यट्टनः आगत, स च किल मल्लयुद्ध भविष्यतीति अनागत एव स्वस्मात् नगरात् आत्मन पथ्यदनस्य बलीवर्दं भृत्वा अव्याबाधेनायाति, सम्प्राप्त सोपारक, युद्धे पराजितो मात्स्यिकमल्लेन, गत स्वकमावास चिन्तयति–एतस्य वृद्धिस्तरुणस्य मम हानि, अन्य मार्गयति मल्ल,

आगंतूणा विहणितोत्ति ण पसंसई, रायाणे य अपसंसंते सवो रंगो तुण्हिक्को अच्छति, इतो य अट्टणेण राइणो जाणणणिमित्तं भणति—'साहह वण ! सउणाणं साहह भो सउणिगा सउणिगाणं। णिहतो णिरंगणो अट्टणेण णिक्खित्तसत्थेणं ॥१॥' एवं भणियमेत्ते राइणा एस अट्टणोत्तिकाउं तुट्ठेण पूजितो, दवं च से पज्जत्तियं आमरणंतियं दिण्णं, सयणवग्गो य से तं सोउं तस्स सगासमुवगतो, पायवडणमाईहिं पत्तियावेउं दवलोभेणं अल्लियावितो, पच्छा सो चिंतेइ—ममं एते दवलोभेण अल्लियावेंति, पुणोऽवि मम परिभविस्संतित्ति, जरापरिगतो अहं ण पुणो सुमहल्लेणावि पयत्तेण सक्किस्सं जुवत्तं काउं, तं जावऽज्जवि सचेट्ठो ताव पवयामित्ति संपहारेउं पवतितो ॥ एवं जरोपनीतस्याट्टनस्येवान्यस्यापि न त्राणं—बन्धुभिः पालनं जरातो वा रक्षणम्, 'एव' मित्येवं प्रकारं पाठान्तरतः—एनं वा—अनन्तरोक्तमर्थं 'विजानीहि' विशेषेण विविधं वा अवबुध्यस्व, तथैतच्च वक्ष्यमाणं जानीहि, यथा 'जनाः' लोकाः 'प्रमत्ताः' प्रमादपराः,

---

१ आगन्तुकेन विहत इति न प्रशंसति, राज्ञि चाप्रशंसति सर्वो रङ्गस्तूष्णीकस्तिष्ठति, इतश्चाट्टनेन राज्ञो ज्ञापननिमित्तं भण्यते—कथय वन ! शकुनेभ्यः कथयत भोः शकुनिकाः ! शकुनिकान्। निहतो निरञ्जनोऽट्टनेन निक्षिप्तशस्त्रेण ॥ १ ॥ एवं भणितमात्रे राज्ञा एषोऽट्टन इतिकृत्वा तुष्टेन पूजितः, द्रव्यं च तस्मै पर्याप्तमामरणान्तिकं दत्तं, स्वजनवर्गश्च तस्य तत् श्रुत्वा तस्य सकाशमुपगतः, पादपतनादिभिः प्रत्याय्य द्रव्यलोभेनाश्रितः, पश्चात्स चिन्तयति—मामेते द्रव्यलोभेनाश्रयन्ति, पुनरपि मां पराभविष्यन्तीति, जरापरिगतोऽहं न पुनः सुमहताऽपि प्रयत्नेन शक्ष्यामि यौवनं कर्त्तुं, तद्यावदद्यापि सचेष्टस्तावत्प्रव्रजामीति संप्रधार्य प्रव्रजितः।

इमेचि सए २ आलए गया, अट्टणेण फलहियमल्लो भणितो—कहेहि पुत्ता ! ज ते दुक्खाविय , तेण कहिय, मक्खित्ता मलितो सेएण पुणण्णवीकतो, मच्छियस्सवि रण्णा समद्दगा विसज्जिया, भणइ—अह तस्स पिउणोऽपि ण वीहेमि, सो को वराओ ?, वीयदिवसे समजुद्धा, तईयदिवसे अवप्पहारो णीसहो वइसाह ठितो मच्छितो, अट्टणेण भणितो—फलहित्ति, तेण फलिहग्गहेण कड्ढितो सीसे कुडिकागाहेण, सक्कारितो गतो उज्जेणिं । तत्थ य विमुक्कजुज्झ-वावारो अच्छति, सो य महल्लोत्तिकाउ परिभूयए सयणवग्गेण, जहा—अय सपय ण कस्सइ कज्जस्स खमोत्ति, पच्छा सो माणेण तेसि अणाउच्छाए कोसविए णयरिए गतो, तत्थ वरसमेत्त उवरेगमतिगतो रसायण उवजीवेति, सो वलिट्ठो जातो, जुद्धमहे पवत्तेति, रायमल्लो णिरगणो णाम, त णिहणति, पच्छा राया मण्णुइतो—मम मल्लो

१ इमावपि स्वस्मिन् स्वस्मिन् आलये गतौ, अट्टनेन फलहिमल्लो भणित —कथय पुत्र ! यत्ते दु खित, तेन कथित, म्रक्षित्वा मर्दितः सेकेन पुननवीकृत , मात्स्यिकायापि राज्ञा समर्दका विसृष्टा , भणति—अह तस्य पितुरपि न बिभेमि, स को वराक ?, द्वितीयदिवसे समयुद्धौ, तृतीयदिवसे प्रहारार्त्तो निस्सह वैशाख स्थितो मात्स्यिक , अट्टनेन भणित —फलहिरिति, तेन पार्ष्णिग्राहेण दृष्ट शीर्षे कुण्डिकाग्राहेण, सत्कृतो गत उज्जयिनीं । तत्र च विमुक्तयुद्धव्यापारस्तिष्ठति, स च वृद्ध इतिकृत्वा परिभूयते स्वजनवर्गेण, यथाऽय साम्प्रत न कस्मैचित् कार्याय क्षम इति, पश्चात्स मानेन ताननापृच्छ्य कौशाम्ब्या नगर्यां गत , तत्र वर्षमात्रमुपरेक(निर्व्यापारता )मतिगतो रसायनमुपजीवति, स वलिष्ठो जात , युद्धमहे प्रवर्त्तते, राजमल्लो निरङ्गनो नाम, त निहन्ति, पश्चाद् राजा मन्युयितो मम मल्ल

अथवा यथाऽऽचारपञ्चमाध्ययनस्य 'आवन्ती'त्यादानपदेन नाम तथा अस्याप्यसंस्कृतमिति नाम, ततश्चासंस्कृतनाम्नोऽस्यैवाध्ययनस्यैषा नामनिष्पन्ननिक्षेपनिर्युक्तिस्तत्प्रस्ताव एव व्याख्यातव्येति गाथार्थः ॥१८२॥ सम्प्रति संस्कृतप्रतिषेधादसंस्कृतं विज्ञायत इति संस्कृतशब्दस्य निक्षेपो वाच्यः, तत्र च यद्यपि समित्युपसर्गोऽप्यस्ति तथाऽपि धात्वर्थद्योतकत्वात्तस्य करणस्यैव चात्र धात्वर्थात्तदेव निक्षेप्तुमाह निर्युक्तिकृत्—

नामंठवणाकरणं खित्ते काले तहेव भावे य । एसो खलु करणंमी णिक्खेवो छव्विहो होइ ॥ १८३ ॥

व्याख्या—नाम स्थापना द्रव्यं क्षेत्रं कालः 'तथैवे'ति तेनैव वस्तुरूपतालक्षणेन प्रकारेण 'भावे य'त्ति भावश्च, एष एव-अनन्तरोक्तः, खलुशब्दस्यैवकारार्थत्वात् 'करणे' करणविषये 'निक्षेपो' न्यासः षड्विधो भवति, किमुक्तं भवति ?-नामकरणादिभेदेन निक्षिप्यमाणं षड्विधमेव करणं भवतीति गाथार्थः ॥ १८३ ॥ तत्र च नामकरणं करणमिति नामैव नाम्नो वा करणं नामकरणं-प्रियङ्करशुभङ्कराद्यभिधानाधानं, यदिवा नामतः करणं नामकरणं, यत्पूज्यनामापेक्षया पूजादिविधानं, स्थापनाकरणम्-अक्षनिक्षेपादि, यो वा यस्य करणस्याकारः, तथा च भाष्यकृत्—"णामं णामस्स व णामतो य करणंति णामकरणंति । ठवणाकरणं नासो करणागारो य जो जस्स ॥ १ ॥" द्रव्यकरणं तु द्रव्यमेव क्रियत इति करणं, कृत्यल्युटोऽप्यन्यत्रापीति ( कृत्यल्युटो बहुलम् पा० ३-३-१३३ ) कर्म्मण्यपि

१ नाम नाम्नो वा नामतश्च करणमिति नामकरणमिति । स्थापनाकरणं न्यासः करणाकारश्च यो यस्य ॥ १ ॥

उभयत्र सूत्रत्वादेकवचन, 'कम्' अर्थं प्रक्रमात् त्राण, नु इति वितर्के, विविधम्-अनेकधा हिंसा-हिंसनशीला, आर्पत्वाद्वा वीति-विश्रब्धान् स्वेषु स्वेपूत्पत्तिस्थानेष्वनाकुलमवस्थितान् जन्तून् हिंसन्तीति विहिंसा, तथा अयता-तत्तत्पापस्थानेभ्योऽनुपरता 'गहिन्ति'त्ति सूत्रत्वाद् गमिष्यन्ति, ग्रहीष्यन्ति वा-स्वीकरिष्यन्ति, किमुक्त भवति ?—एवमेते प्रमत्तादिविशेषणान्विता जना स्वकृतैरीदृग्भि कर्म्मभिर्नरकादिकमेव यातनास्थान गमिष्यन्ति ग्रहीष्यन्ति वा, यद्वैव नीयते-असस्कृत जीवितमिति मा प्रमादीरित्यादि (दौ) गुरुणोक्ते कदाचिच्छिष्यो वदेत्-वहुरय जन प्रमत्त, तद्वदहमपि भविष्यामीत्याशङ्क्य गुरुराह—भद्र ! एव जानीहि जन प्रमत्तो विहिंस्रोऽयत 'कन्नु'त्ति कामप्यवक्तव्या नरकादिगतिमसौ गमिष्यति ग्रहीष्यति वा, अत किं तव विवेकिन एवविधजनव्यवहाराश्रयणेन ?, सूत्रत्वाचैकत्वेऽपि वहुवचनमिति सूत्रार्थ ॥ १ ॥ असस्कृत जीवितमित्युक्तम्, अतस्तद् व्याचिख्यासुराह निर्युक्तिकृत्—

उत्तरकरणेण कय जं किंची सखय तु नायव्व । सेसं असखय खलु असखयस्सेस निज्जुत्ती ॥ १८२ ॥

व्याख्या—मूलत स्वहेतुभ्य उत्पन्नस्य पुनरुत्तरकाल विशेषाधानात्मक करणमुत्तरकरण तेन कृत-निर्वर्त्तित, 'यत्किञ्चिदि'त्यविवक्षितघटादि, यत्तदोर्नित्समभिसम्बन्धात् तत् सस्कृत, तु अवधारणे, स चैव योज्यते-यदुत्तरकरणकृत तदेव सस्कृत ज्ञातव्य, 'शेपम्' अतोऽन्यत्सस्कारानुचित विदीर्णमुक्ताफलोपममसस्कृतमेव, खलुशब्दस्यैवकारार्थत्वात्, असस्कृतमित्यस्य सूत्रावयवस्य 'एपा' वक्ष्यमाणलक्षणा निर्युक्ति, वहुवक्तव्यतया च प्रतिज्ञानम्,

त्यनुगतोऽर्थः प्रतीयते, द्रव्यरूपाणि चैतानि, करणमितिरूढ्या तु संज्ञाकरणान्युच्यन्ते, आह च भाष्यकृत्— "सन्ना नामंति मई तण्णो णामं जमहिहाणं ॥ जं वा तयत्थविगले कीरति दव्वं तु दवणपरिणामं । पेलुकरणादि न हि तं तयत्थसुन्नं ण वा सद्दो ॥ १ ॥ जइ ण तदत्थविहीणं तो किं दव्वकरणं ?. जतो तेणं । दव्वं कीरति. सन्नाकरणंति य करणरूढीओ ॥ २ ॥" नोसंज्ञाकरणं तु यत्करणमपि सन्न तत् संज्ञया रूढं, उक्तं हि—णोसन्नाकरणं पुण दव्वस्सारूढकरणसन्नंपी"ति गाथार्थः ॥ १८४ ॥ एतदेव भेदतोऽभिधातुमाह—

**नोसन्नाकरणं पुण पओगसा वींससा य बोद्धव्वं। साईअमणाईअं दुविहं पुण विस्ससाकरणं ॥ १८५ ॥**

व्याख्या—नोसंज्ञाकरणं पुनः 'पओगसा वीससा य'त्ति सूत्रत्वात् प्रयोगतो विश्रसातश्च बोद्धव्यं, तत्र प्रयोगः—जीवव्यापारः तद्धेतुकं करणं प्रयोगकरणं, उक्तं च—"होई पओगो जीववावारो तेण जं विणिम्माणं । सज्जीवमजीवं वा पओगकरणं तयं बहुहा ॥ १ ॥" एतद्विपरीतं तु विश्रसाकरणं, तत्र पश्चादुक्तमप्यल्पवक्तव्यमिति विश्रसाकरण-

---

१ संज्ञा नामेति मतिस्तन्नो नाम यदभिधानम् ॥ यद्वा तदर्थविकले क्रियते द्रव्यं तु द्रवणपरिणामम् । वेणुकरणादि नैव तत् तदर्थशून्यं न वा शब्दः ॥ १ ॥ यदि न तदर्थविहीनं तदा किं द्रव्यकरणं ?. यतस्तेन । द्रव्यं क्रियते. संज्ञाकरणमिति च करणरूढितः ॥ २ ॥
२ नोसंज्ञाकरणं पुनर्द्रव्यस्यारूढकरणसंज्ञमपि । ३ भवति प्रयोगो जीवव्यापारः तेन यद्विनिर्माणम् । सजीवमजीवं वा प्रयोगकरणं तकत् बहुधा ॥ १ ॥

ल्युटो दर्शनात्, भावसाधनपक्षे तु द्रव्येण द्रव्यस्य द्रव्ये वा यथासम्भव क्रियात्मक करण, तथा चाह—"'त तेण तस्स तमि य सभवतो उ किरिया मया करण। दव्वस्स व दव्वेण व दव्वमि व दव्वकरणति ॥ १ ॥" तच्चागमनोआगमभेदतो द्विधा, तत्रागमतो ज्ञाता तत्र चानुपयुक्तो, नोआगमतस्तु ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तभेदात्त्रिधा, तत्र ज्ञशरीरभव्यशरीरद्रव्यकरणे प्रतीते एवेत्यनादृत्य तद्व्यतिरिक्तमाह—

दव्वकरण तु दुविह सन्नाकरण च नो य सन्नाए। कडकरणमट्ठकरण वेलूकरण च सन्नाए ॥ १८४ ॥

व्याख्या—द्रव्यकरण, तुशब्दो नोआगमत इदमिति विशेषद्योतक, 'द्विविधं' द्विप्रकार सज्ञाकरण च 'णो य सण्णाए'त्ति करणमिति प्रक्रमात्, चशब्दो भिन्नक्रम, ततश्च नोसज्ञाकरण च। तत्र सज्ञाकरणमाह—'कटकरण' कटनिर्वर्त्तक चित्राकारमयोमय पाइलगादि, 'अर्थकरणम्' अर्थाभिनिर्वर्त्तकमधिकरण्यादि येन द्रम्मादि निष्पाद्यते, अर्थार्थं वा करणमर्थकरण यत्र राज्ञोऽर्थाश्चिन्त्यन्ते, अर्थ एव वा तैस्तैरुपायै क्रियत इत्यर्थकरण, वेलुकरण च रूतपूणिकानिर्वर्त्तक चित्राकारमय वेणुशलाकादि, 'सज्ञाया' सज्ञाकरणे, आह—नामकरणसनाकरणयो क प्रतिविशेषो ?, न हि नामसनाशब्दयोरर्थान्तरविषयत्वमुत्पश्याम, उच्यते, इह नामकरण करणमित्यभिधानमात्र, सनाकरण तु यत्रान्वर्थोऽस्ति, सज्ञाकरणेषु हि कटकरणादिषु क्रियतेऽनेनेति करणमि-

१ तत्तेन तस्य तस्सि वा सभवतस्तु क्रिया मता करणम्। द्रव्यस्य [illegible] द्रव्येण वा द्रव्ये वा द्रव्यकरणमिति ॥ १ ॥

खंधेसु अ दुपएसाइएसु अब्भेसु अब्भरुक्खेसुं। णिप्फण्णगाणि दव्वाणि जाणि तं वीससाकरणं ॥१८७॥

व्याख्या—'स्कन्धेषु च' परमाणुसञ्चयात्मकेषु द्विप्रदेशादिकेषु आदिशब्दात्त्रिप्रदेशादिपरिग्रहः, परमाणवश्चानेनैवोपलक्षिताः, 'अभ्रेषु' प्रतीतेषु 'अभ्रवृक्षेषु' तद्विशेषेष्वेव वृक्षाकारेषु, उपलक्षणं चैतदिन्द्रधनुरादीनां, तथा च सम्प्रदायः—चक्खुप्फासियं जं चक्खुसा दीसइ, तं पुण अब्भा अब्भरुक्खा एवमाइ'। दृश्यते च 'अब्भेसु विज्जमादीसु'त्ति, तत्र च यदि विद्युत्प्रतीतैव गृह्यते तदा तस्याः सजीवत्वात्तच्छरीरस्य चौदारिकशरीरकरणाख्यप्रयोगकरणत्वप्रसक्तिः, अथ विद्योतन्त इति विद्युन्ति तानि आदिर्येषां तानि विद्युदादीन्यभ्राणि तेष्वित्यभ्रविशेषणतया व्याख्यायते, आदिशब्दाच्च धूम्रादिपरिग्रह इति, तदा नोक्तदोषः, परमप्रातीतिकं, सामायिकनिर्युक्तौ चाभ्रादीन्येव विश्रसाकरणमुक्तं, तद्यथा—"चक्खुसमचक्खुसंपि य सादियं रूविवीससाकरणं। अब्भाणुप्पभितीणं बहुहा संघायभेयकयं ॥ १ ॥"ति, नेह तत्त्वनिश्चयः, तेषु द्विप्रदेशादिष्वभ्रादिषु वा किमित्याह—निष्पन्नान्येव निष्पन्नकानि, जीवव्यापारं विनैव भेदसङ्घाताभ्यां लब्धसत्ताकानि द्रव्याणि तद्विश्रसाकरणं सादि, चाक्षुषमचाक्षुषं वेति प्रक्रमः, द्विप्रदेशादिकरणानि हि सङ्घाताद् भेदात् सङ्घातभेदाभ्यां च विनाऽपि जीवप्रयोगं निष्पद्यन्ते, निष्पन्नान्यपि च न चक्षुषा

१ चक्षुःस्पर्शं यच्चक्षुषा दृश्यते, तत्पुनरभ्राणि अभ्रवृक्षा एवमाद्याः। २ चाक्षुषमचाक्षुषमपि च सादिकं रूपिविश्रसाकरणम्। अभ्राणुप्रभृतीनां बहुधा संघातभेदकृतम् ॥ १ ॥

माह–सहादिना वर्त्तते सादिक ततोऽन्यत्त्वनादिकमिति भेदतो द्विविध, पुनरिति मूलभेदापेक्षया, विश्रसाकरणम्–उक्तरूपमिति गाथार्थ ॥ १८५ ॥ तत्रानादिक वक्तुमाह—

धम्माधम्मागासा एय तिविह भवे अणाईय । चक्खुअचक्खुप्फासे एय दुविह तु साईय ॥ १८६ ॥

व्याख्या—धर्माधर्माकाशानाम् योऽन्यसवलनेन सदाऽवस्थानमनादिकरण, न हि तत्कदाचिन्नासीन्नास्ति न भविष्यति वा, उक्त हि–"धम्माधम्मणहाण अणाइसहायणाकरण" न च करणमनादि च विरुद्धमिति वाच्य, यतोऽत्रान्योऽन्यसमाधान करणमभिप्रेत, न त्वन्योऽन्यनिर्वर्त्तनम्, आह च–"अन्नोऽन्नसमाहाण जमिह करण ण णिवत्ती", इह च धर्माधर्माकाशाना करणमिति वक्तव्ये कथञ्चित्क्रियाक्रियावतोरभेददर्शनार्थमनुकूलितक्रियत्वख्यापनार्थं वा धर्माधर्माकाशा करणमित्युक्तम्, 'एतद्' अनन्तरोक्त 'त्रिविध' त्रिप्रकार 'भवेत्' स्यात् अनादिक, करणमिति प्रक्रम । इत्थमनादिक पश्चान्निर्दिष्टमपि पश्चानुपूर्व्यपि व्याख्याङ्गमिति ख्यापनाय उक्त, सम्प्रति तु सादिकमाह–'चक्खुमचक्खुप्फासे'त्ति स्पर्शशब्द प्रत्येकमभिसम्बध्यते, ततश्चक्षुषा स्पृश्यते–गृह्यमाणतया युज्यत इति चक्षु स्पर्श–स्थूलपरिणतिमत्पुद्गलद्रव्यम् अतोऽन्यदचक्षु स्पर्शम्, 'एय दुविह तु'त्ति एतद्विविधमेव, तुश दस्यैवकारार्थत्वात् सादिकमिति गाथार्थ ॥ १८६ ॥ इदमेव द्वितय व्यक्तीकर्तुमाह—

१ धर्माधर्मनभसामनादिसधावनाकरणम् । २ अन्योऽन्यसमाधान यदिह (तत्) करण न निर्वृत्ति ॥

मूलुत्तरकरणं मूलकरणं जमादीए । पंचण्हं देहाणं उत्तरमादीतियस्सेव ॥ १ ॥" इति गाथार्थः ॥ १८८ ॥ कानि पुनस्तान्यङ्गानीत्याह—

सीसमुरोयरपिट्ठी दो बाहू अ हुंति ऊरू अ। एए अट्ठंगा खलु अंगोवंगाइँ सेसाइँ ॥ १८९ ॥

हुंति उवंगा कण्णा नासऽच्छी जंघ हत्थ पाया य। अंगोवंगा अंगुलिनहकेसामंसु एमाइ ॥१९०॥

व्याख्या—तत्राद्या प्राग्वत्, नवरम् अङ्गोपाङ्गानि उपलक्षणत्वादुपाङ्गानि च शेषाणि, तानि वक्ष्यन्त इति शेषः, तत्रोपाङ्गानि कर्णौ नासे अक्षिणी जङ्घे हस्तौ पादौ च; अङ्गोपाङ्गानि अङ्गुलयो नखाः केशाः स्मश्रु 'एवमादीनि' एवंप्रकाराण्युत्तरकरणं, वृद्धास्त्वङ्गान्यपि मूलकरणमिति मन्यन्ते, आपेक्षिकत्वाच्च मूलोत्तरत्वयोरुभयथाऽप्यविरोध इति गाथाद्वयार्थः ॥ १८९—१९० ॥ इदमेवान्यथाऽऽह—

तेसिं उत्तरकरणं बोद्धव्वं कण्णखंधमाईयं । इंदियकरणा ताणि य उवघायविसोहिओ हुंति ॥ १९१ ॥

व्याख्या—'तेषाम्' आद्यानां त्रयाणां शरीराणामुत्तरकरणं 'बोद्धव्यम्' अवगन्तव्यं, 'कण्णखंधमादीयं'ति तत्रौदारिकस्य कर्णयोर्वृद्ध्यापादनं स्कन्धस्य च मर्दनादिना दृढीकरणम्, आदिशब्दाद्दन्तरागादिकरणपरिग्रहः, एवं वैक्रियस्यापि, आहारकस्य तु नास्त्येव, गमनादिना वा तस्याप्युत्तरकरणमिति ग्राह्यं । तथा इन्द्रियाणां—चक्षुरादीनां

वीक्ष्यन्ते इत्यचाक्षुप विश्रसाकरणम्, अभ्रादिकरणानि तु स्वय निष्पद्यन्ते चक्षुपा च वीक्ष्यन्त इति चाक्षुप विश्र-
साकरणम्, अत्र च पश्चादुद्दिष्टस्यापि यदचाक्षुपस्य प्रथममभिधान तत्प्राग्वत्पश्चानुपूर्व्येति गाथार्थ ॥ १८७ ॥

सम्प्रति प्रयोगकरणमाह—

दुविह पओगकरण जीवेतर मूल उत्तर जीवे। मूले पचसरीरा तिसु अगोवगणाम च ॥ १८८ ॥

व्याख्या—'द्विविध' द्विभेद-प्रयोगकरण 'जीवत्ति' जीवप्रयोगकरणम् 'इयरे'त्ति अजीवप्रयोगकरण, तत्र जीवेन-
उपयोगलक्षणेन यदौदारिकादिशरीरमभिनिर्वर्त्यते तज्जीवप्रयोगकरण, तच्च द्विधा-मूलकरणमुत्तरकरण च, तत्र 'मूल'
इति मूलकरणे विचार्यमाणे 'पञ्च' इति पञ्चसङ्ख्यावच्छिन्नानि विशीर्यन्ते-उत्पत्तिसमयत प्रभृति पुद्गलविचटनाद्विनश्य-
न्तीति शरीराणि-औदारिकवैक्रियाहारकतैजसकार्म्मणानि, इह च विपयविपयिणोरभेदोपचारेण करणविपयत्वाच्छरी-
राण्यपि करणमुक्त, मूलत्व चोत्तरोत्तरावयवव्यक्त्यपेक्षया, ततश्च यदवयवविभागविरहितमौदारिकशरीराणा प्रथमम-
भिनिर्वर्त्तन तत् मूलकरण, 'तिसु अगोवगणाम चे'ति, चशब्द प्रकृतमनुकर्पति, तच्चेह प्रक्रमादुत्तरकरणमेवानुकृष्यते,
ततश्च त्रिपु-औदारिकवैक्रियाहारेपु तैजसकार्म्मणयोस्तदसम्भवादङ्गोपाङ्गनामैवोत्तरकरणमिति सम्बन्ध, अत्र चाङ्गो-
पाङ्गनामशब्देनाङ्गोपाङ्गनामकर्म्मनिर्वर्त्तितान्यङ्गोपाङ्गानि गृह्यन्ते, कार्ये कारणोपचारात्, आह च भाष्यकृत्—"सज्जीव

१ सजीव मूलोत्तरकरण मूलकरण यदादौ। पञ्चाना देहानामुत्तरमादित्रिकस्यैव ॥ १ ॥

वत्येव, कालान्तरादि त्रयाणामित्यस्यायमर्थः—त्रयाणां सङ्घातनापरिशाटनोभयेषां कालः—कियत्कालं सङ्घातना परिशाटनोभयं चेत्येवमात्मकः अन्तरं च सङ्घातनायाः सकृदवाप्तौ पुनः कियता कालेनावाप्तिरेवंरूपम्, एवं परिशाटनाया उभयस्य च, आदिशब्दात् सादित्वानादित्वे च, किमित्याह—'यथैवे'ति येनैव प्रकारेण 'सूत्रे' सामायिकाध्ययने 'निर्दिष्टा' इति आर्षत्वात् 'निर्दिष्टं' प्रतिपादितमिति गाथार्थः ॥ १९२ ॥ एतच्चातिदिष्टमपि निर्युक्तिकृता विनेयानुग्रहार्थं सम्प्रदायत उच्यते, स चायम्—

एयाणि तिन्निवि करणाणि कालतो मग्गिज्जंति—तत्थोरालियसंघायकरणं एगसमइयं, जं पढमसमओववन्नगस्स, जहा तेल्ले ओगाहिमतो छूढो तप्पढमयाए आइयति, एवं जीवोऽवि उववज्जंतो पढमे समये गेण्हति ओरालियसरीरपाओग्गाइं दव्वाइं, न पुण मुंचति किंचिवि, परिसाडणावि समओ, मरणकालसमए एगंततो मुंचति न गिण्हति, मज्झिमकाले किंचि गेण्हइ किंचि मुंचति, जहण्णेणं खुड्डागं भवग्गहणं तिसमऊणं, उक्कोसेणं तिन्नि पलिओवमाइं

१ एतानि त्रीण्यपि करणानि कालतो मृग्यन्ते—तत्रौदारिकसंघातकरणमेकसामयिकं, यत्प्रथमसमयोत्पन्नस्य, यथा तैलेऽवगाहकः क्षिप्तस्तत्प्रथमतयाऽऽदत्ते, एवं जीवोऽपि उत्पद्यमानः प्रथमे समये गृह्णाति औदारिकशरीरप्रायोग्याणि द्रव्याणि, न पुनर्मुञ्चति किञ्चिदपि। परिशाटनाऽपि समयः(म्), मरणकालसमये एकान्ततो मुञ्चति न गृह्णाति, मध्यकाले किञ्चिद्गृह्णाति किञ्चिन्मुञ्चति, जघन्येन क्षुल्लकभवग्रहणं त्रिसमयोनम्, उत्कृष्टेन त्रीणि पल्योपमानि

करणानि—अवस्थान्तरापादनानि इन्द्रियकरणानि, तानि च 'उपघातविशुद्धित' उपघातात् विशुद्धेश्च भवन्ति, तत्रोपघाताद्विषाद्यभ्यवहारतोऽन्धबधिरताद्यापादनानि विशुद्धितश्च ब्राह्मीसमीराञ्जनादिना स्पष्टताद्यापादनान्युत्तरकरणं भवति, पठ्यते च—'इंदियकरणं च तहं'त्ति अत्र चैकवचनान्ततया सर्वं व्याख्येयमिति गाथार्थ ॥ १९१ ॥

अथवाऽन्यथा करणमुच्यते—

**संघायणपरिसाडणउभयं तिसु दोसु नत्थि संघाओ । कालंतराइ तिण्ह जहेव सुत्तंमि निद्दिट्ठं ॥१९२॥**

व्याख्या—'संघायणे'ति संहन्यमानाना—संयुज्यमानानामौदारिकादिपुद्गलानां तैजसकार्मणपुद्गलै सह यदात्मनस्तत्तत्पुद्गलग्रहणात्मिकासु तदनुकूलक्रियासु वर्त्तनात्मकं प्रयोजकत्वं सा सङ्घातना, तथा परि—समन्ताच्छटता—पृथग्भवतामौदारिकादिपुद्गलानां यदात्मनस्तान्प्रति तत्तच्छरीरविमोक्षात्मकं प्रयोजकभवनं सा परिशाटना, उभयाभिहितावयवावस्थेति उभय—सङ्घातनापरिशाटनाकरणं । किमिदं त्रयमपि पञ्चस्वप्यौदारिकादिषु अथान्यथेत्याह—त्रिष्वाद्येषु, किमुक्तं भवति ?—औदारिकवैक्रियाहारकेषु, 'द्वयो.' तैजसकार्म्मणयो, किमित्याह—'नास्ति' न विद्यते, कोऽसौ ?—सङ्घात, तदभावाच्च सङ्घातनापि नास्तीति भाव, सा हि प्रथमत उत्पद्यमानस्य जीवस्य तैलभृततसतापिकाप्रक्षिप्तापूपवत् तैलसदृशानौदारिकादिपुद्गलानाददानस्यैवौदारिकादिष्वपि वर्ण्यते न च तैजसकार्मणयो प्रथमत उपादानसम्भव, अनादिसंहतिमत्वात्तयो, परिशाटना तु शैलेशीचरमसमये, प्रतिसमयं सङ्घातनापरिशाटनोभयं च सम्भ-

देहाभावेऽवि तो परभवो सो। चुतिसमए उ ण देहो न विग्गहो जइ स को होउ ? ॥ ८ ॥ इदाणिं अंतरं—संघायंतरकालो जहण्णयं खुड्डयं तिसमऊणं। दो विग्गहंमि समया तइयो संघायणासमओ ॥ ९ ॥ तेहूणं खुड्डभवं धरिउ परभवमविग्गहेणं वा। गंतूण पढमसमए संघाययतो स विण्णेओ ॥१०॥ इदाणिं संघायपरिसाडंतरं—उभयंतरं जहण्णं समओ णिव्विग्गहेण संघाए। परमं सतिसमयातिं तेत्तीसं उदहिणामाइं ॥ ११ ॥ अणुभविउं देवादिसु तेत्तीसमिहागयस्स ततियंमि। समए संघाययतो दुविहं साडंतरं वोच्छं॥ १२ ॥ खुड्ड(ड्डा)गभवग्गहणं जहण्णमुकोसयं च तेत्तीसं। तं सागरोवमाइं संपुण्णा पुवकोडी य ॥१३॥ आह—इह क्षुल्लकभवग्रहणं पूर्णमौदारिकसर्वशाटयोर्जघन्यमन्तरमुक्तं, तच्च 'परभवपढमे साडो' इति वचनात्समयोनमेव प्राप्नोतीति कथं न विरोधः ?, उच्यते, निश्चयनयमतमिदं 'परभवपढमे साडो'त्ति, स ह्युत्तरपर्यायोत्पादमेव पूर्वस्य विनाशमेवाह विगच्छदेव च विगतमुत्प-

१ देहाभावेऽपि ततः परभवः सः। च्युतिसमये तु न देहो न विग्रहो यदि स को भवतु ? ॥ ८ ॥ इदानीमन्तरं—संघातान्तरकालो जघन्यं क्षुल्लकस्त्रिसमयोनः। द्वौ विग्रहे समयौ तृतीयः संघातनासमयः ॥ ९ ॥ तैरूनं क्षुल्लकभवं धृत्वा परभवमविग्रहेण वा। गत्वा प्रथमसमये संघातयतः स विज्ञेयः ॥ १० ॥ इदानीं संघातपरिशाटान्तरम्—उभयान्तरं जघन्यं समयो निर्विग्रहेण संघाते। परमं सत्रिसमयान्त्रयस्त्रिंशदुदधयः ॥ ११ ॥ अनुभूय देवादिषु त्रयस्त्रिंशतमिहागतस्य तृतीये। समये संघातयतो द्विविधं शाटान्तरं वक्ष्ये ॥ १२ ॥ क्षुल्लकभवग्रहणं जघन्यमुत्कृष्टं च त्रयस्त्रिंशत्। तत् सागरोपमाणि संपूर्णानि पूर्वकोटी च ॥ १३ ॥

समऊणाणि,—दो विग्गहंमि समया समओ सघायणाय तेहूण । खुड्डागभवग्गहण सवजहन्नो ठितीकालो ॥ १ ॥ उक्कोसो समऊणो जो सो सघयणासमयहीणो । किह ण दुसमयविहीणो साडणसमए विहीणमि ! ॥ २ ॥ भण्णति भवचरिममिवि समए सघायसाडणा चेव । परभवपढमे साडणमतो तदूणो ण कालोत्ति ॥ ३ ॥ जइ परपढमे साडो णिव्विग्गहतो य तमि सघातो । णणु सघसाडसघायणातो समए विरुद्धातो ॥ ४ ॥ आचार्य आह—जम्हा विगच्छमाण विगय उप्पज्जमाणमुप्पन्न । तो परभवादिसमए मोक्खादाणाण ण विरोहो ॥ ५ ॥ चुतिसमए णेहभवो इहदेहविमोक्खतो जहातीतो । जइ परभवोवि ण तहि तो सो को होउ ससारी ? ॥ ६ ॥ णणु जह विग्गहकाले देहाभावेऽवि परभवग्गहण । तह देहाभावमिवि होज्जेहभवोऽवि को दोसो ? ॥ ७ ॥ ज चिय विग्गहकालो

१ समयोनानि—द्वौ विग्रहे समयौ समय सघातनाया तैरूनम् । क्षुल्लकभवग्रहण सर्वजघन्य स्थितिकाल ॥ १ ॥ उत्कृष्ट समयोन य स सघातनासमयहीन । कथ न द्विसमयविहीन शाटनसमये विहीने ? ॥ २ ॥ भण्यते भवचरमेऽपि समये सघातशाटने एव । परभवप्रथमे शाटनमतस्तदूनो न काल इति ॥ ३ ॥ यदि परभवप्रथमे शाटो निर्विग्रहतश्च तस्मिन् सघात । ननु सर्वशाटसघातने समये विरुद्धे ॥ ४ ॥ यस्माद्विगच्छद्विगतमुत्पद्यमानमुत्पन्नम् । तत परभवादिसमये मोक्षादानयोर्न विरोध ॥ ५ ॥ च्युतिसमये नेहभव इहदेहविमोक्षतो यथाऽतीत । यदि परभवोऽपि न तत्र तत स को भवतु ससारी ? ॥ ६ ॥ ननु यथा विग्रहकाले देहाभावेऽपि परभवग्रहणम् । तथा देहाभावेऽपि भवेदिहभवोऽपि को दोष ? ॥ ७ ॥ [illegible] एव विग्रहकाल

वच्चइ णिव्विग्गहओ य जंतस्स ॥ २ ॥ उभयग्गहणं समतो सो पुण दुसमयविउव्वियमयस्स । परमतराइं संघायसमयहीणाइं तेत्तीसं ॥ ३ ॥ वेउव्वियसरीरपरिसाडणकालोऽवि समयतो चेव ॥ इदाणिं अंतरं—वेउव्वियसरीरसंघायंतरं जहण्णेणं एगं समयं, सोऽवि य पढमसमए विउव्विय मयस्स विग्गहेणं तइए समए वेउव्विएसु देवेसु संघायंतस्स भवति, अहवा ततियसमए विउव्विय मयस्स अविग्गहेणं देवेसु संघायंतस्स संघायपरिसाडंतरं जहण्णेणं समय एव, सो पुणोऽचिर विउव्विय मयस्स अविग्गहेणं संघायंतस्स भवति । साडस्स अंतरं—जहन्नेणं अंतोमुहुत्तं । तिण्हवि एतेसिं उक्कोसेणं अणंतं कालं—वणस्सइकालो । इदाणिं आहारयस्स—आहारे संघाओ परिसाडो य समयं समो होइ । उभयं जहण्णमुक्कोसयं च अंतोमुहुत्तं तु ॥ १ ॥ बंधणसाडुभयाणं जहन्नमंतोमुहुत्तमंतरणं । उक्को-

---

१ व्रजति निर्विग्रहश्च गच्छतः ॥ २ ॥ उभयग्रहणं समयः स पुनर्द्वौ समयौ विकुर्व्य मृतस्य । परमतराणि संघातसमयहीनानि त्रयस्त्रिंशत् ॥ ३ ॥ वैक्रियशरीरपरिशाटनकालोऽपि समय एव । इदानीमन्तरं—वैक्रियशरीरसंघातान्तरं जघन्येनैकः समयः, सोऽपि च प्रथमसमये विकुर्व्य मृतस्य विग्रहेण तृतीये समये वैक्रियेषु देवेषु संघातयतो भवति, अथवा तृतीयसमये विकुर्व्य मृतस्याविग्रहेण देवेषु संघातयतः संघातपरिशाटान्तरं जघन्येन समय एव, स पुनरचिरं विकुर्व्य मृतस्य अविग्रहेण संघातयतो भवति । शाटस्यान्तरं—जघन्येनान्तर्मुहूर्तं । त्रयाणामप्येतेषामुत्कृष्टेनानन्तः कालो—वनस्पतिकालः । इदानीमाहारकस्य—आहारके संघातः परिशाटश्च समयः समो भवति । उभयं जघन्यमुत्कृष्टं चान्तर्मुहूर्तमेव ॥ १ ॥ बन्धनशाटोभयानां जघन्यमन्तर्मुहूर्तमन्तरम् । उत्कृ-

स एव

धमानमेव चोत्पन्न, यत उक्तम्–"जम्हा विगच्छमाण विगय"मित्यादि, तथा चास्य य एवोत्तरभवोत्पाद स एव

पूर्वभवपरित्याग, एव च यदेवोत्तरभवौदारिकपुद्गलाना सघातस्तदेव पूर्वभवौदारिकपुद्गलाना शाट इति परभवप्रथम-

समय एवैतदभिप्रायेण शाटः, व्यवहारनयमतेन त्वन्य एवोत्तरस्योत्पाद, अन्य एव च पूर्वस्य विनाशो, विनष्टस्यैव

च विनष्टता उत्पन्नस्यैव चोत्पन्नता, ततो न य एवोत्तरभवोत्पाद स एव पूर्वभवपरित्याग, एव चान्यदेवोत्तरभवौ-

दारिकपुद्गलाना सघातोऽन्यदेव च पूर्वभवौदारिकपुद्गलाना शाट, ततो नास्य परभवप्रथमसमय एव सघातशाटौ,

किन्तु पूर्वभवान्त्यसमय एव शाट उत्तरभवाद्यसमय एव सघात', तथा च निश्चयव्यवहारनयात्मकत्वाज्जिनम-

तस्य यदाऽसौ क्षुल्लकभव उत्पद्यते तदा व्यवहारनयस्याश्रयणात्पूर्वभवान्त्यसमय एव शाटो विवक्ष्यते, यदा तु तत

उद्वर्तते तदा निश्चयनयाङ्गीकरणात्परभवप्रथमसमय एवोत्पाद इति परिपूर्णमेव क्षुल्लकभवग्रहणमौदारिकसर्वशाटयो-

र्जघन्यमन्तरमिति न कश्चिद्विरोध । इदाणि विउव्वियस्स—वेउव्वियसघातो समतो सो पुण विउव्वणादीतो ।

ओरालियाण अहवा देवादीणाइगहणमि ॥ १ ॥ उक्कोसो समयदुग जो समय विउव्विउ मतो बितिए । समए सुरेसु

१ इदानीं वैक्रियस्य–वैक्रियसघातः समयः स पुनर्विकुर्वणादेः । औदारिकाणामथवा देवादीनामादिग्रहणे ॥ १ ॥ उत्कृष्टः समयद्विक

य समय विकुर्व्य मृतो द्वितीये । समये सुरेषु

न च तानि विस्तरतो वक्तुं शक्यानि अत आह—'चतुर्विधं' चतूरूपम्, 'इदम्' इत्युत्तरकरणं, समासेन, उच्यत
इति शेषः, तदेवाह—'सङ्घातना च' संघातनाकरणं 'परिशाटना च' परिशाटनाकरणं 'मिस्से'त्ति मिश्रं सङ्घातनाप-
रिशाटनाकरणं तथैव 'प्रतिषेधः' इति सङ्घातनापरिशाटनाशून्यम्, अमीषां चोदाहरणानि दर्शयन्नाह—पटे सङ्घा-
तनैव तन्तुसङ्घातनिष्पन्नत्वात्तस्य, शङ्खे परिशाटनैव परिशाट्यमानत्वादेवास्य, शकटे उभयं यतस्तत्र किञ्चित्सङ्घात्यते
कीलिकादि किञ्चिच्च परिशाट्यतेऽधिकत्वगादि, स्थूणानामुभयाभावः, तथा च 'उड्ढतिरिच्छाणं'ति भावप्रधानत्वा-
दस्योर्ध्वतिर्यक्त्वयोः करणं, चशब्दान्नमनोन्नमनादि च तत्रोत्तरकरणं च, न तु सङ्घातनापरिशाटना च, आह—
इदमप्यजीवानां क्रियत इत्यजीवकरणमेव, तत्कथमस्य जीवकरणत्वेनोपन्यासः ?, उच्यते, जीवेन क्रियत इति विव-
क्षया जीवकरणत्वेनेदमुक्तमित्यदोष इति गाथार्थः ॥ १९३-१९४ ॥ अजीवप्रयोगकरणमाह—

अजियप्पओगकरणं दव्वे वण्णाइयाण पंचण्हं। चित्तकर(णं)कुसुंभाईसु विभासा उ सेसाणं ॥ १९५ ॥

व्याख्या—अस्याक्षरार्थः सुगमः ॥ १९७ ॥ भावार्थस्त्वयं—जं जं णिज्जीवाणं कीरइ जीवप्पओगओ तं तं।
वण्णादि रूवकम्मादि वावि तदजीवकरणन्ति ॥ १ ॥ उक्तं द्रव्यकरणं, क्षेत्रकरणमाह—

ण विणा आगासेणं कीरइ जं किंचि खित्तमागासं। वंजणपरिआवन्नं उच्छुकरणमाइअं बहुहा ॥ १९६ ॥

१ यद्यन्निर्जीवानां क्रियते जीवप्रयोगतस्तत्तत्। वर्णादि रूपकर्मादि वाऽपि तदजीवकरणमिति ॥ १ ॥

सेणमवद्ध पोग्गलपरियट्ट देसूण ॥ २ ॥ तेयाकम्माण पुण सताणाणादितो ण सघातो । भव्वाण होज्ज साडो सेले-सीचरिमसमयमि ॥ ३ ॥ गत जीवमूलप्रयोगकरणम्, उत्तरप्रयोगकरणमाह—

इत्तो उत्तरकरण सरीरकरण पओगनिप्फन्न । त भेयाऽणेगविह चउविहमिण समासेण ॥ १९३ ॥
सघायणा य परिसाडणा य मीसे तहेव पडिसेहो । पडसखसगडथूणा उड्ढतिरिच्छाण करण च ॥१९४॥

व्याख्या—'इत' इति मूलप्रयोगकरणादनन्तरम् 'उत्तरकरण'मिति उत्तरप्रयोगकरणम्, उच्यते इति गम्यते, तत्कतरदित्याह—शरीर च तत्करण च तां ता क्रिया प्रति साधकतमत्वेन शरीरकरण तस्य प्रयोग'—वीर्यान्तराय-क्षयोपशमजजीववीर्यजनितो व्यापार तेन निष्पन्न शरीरकरणप्रयोगनिष्पन्नम्, अत एव शरीरनिष्पत्त्यपेक्षया-ऽस्योत्तरत्वमिति भावनीय, 'तत्' इत्युत्तरकरण 'भेदात्' इति भेदमाश्रित्य 'अनेकविधम्' अनेकप्रकारम्, इदमत्र तात्पर्यम्—ससारिणा कार्याणि विसदृशरूपाणि बहूनि दृष्टानि, अतस्तत्साधनैरपि करणैर्बहुभिरेव भवितव्य,

---

ष्टेनापार्ध पुद्गलपरावर्त्तो देशोन ॥२॥ तैजसकार्म्मणयो पुन सतानानादितो न सघात । भव्याना भवेत् शाट शैलेशीचरमसमये ॥ ३ ॥ [ उभय अनादिणिहण सत भव्वाण होज्ज केसिंचि । अ तरमनादिभावादच्च तविजोगतो न यसिं ॥४॥ ] उभयमनादिनिधन सा त भव्यान भवेत्केषाञ्चित् । अन्तरमनादिभावादत्यन्तावियोगतो नैवानयो ॥ ४ ॥

विवक्षितत्वात्, यदि वा यत्करणं 'क्रियते' निष्पाद्यते यस्मिन् यस्मिन् काले तस्य स एव कालः करणं कालकरणम्, अत्राधिकरणसाधनत्वेन विवक्षितत्वात्करणशब्दस्य, 'ओघेने'ति नामादिविशेषानपेक्षमेतत्कालकरणं, तथा च वृद्धाः– 'कालकरणं जं जावतिएण कालेण कीरति, जंमि वा कालंमि'त्ति, इहापि कालस्याकृत्रिमत्वेन करणासम्भवादित्थमुपन्यासः, नामतः पुनर्भवन्त्येकादश 'करणानि' कालविशेषरूपाणि चतुर्यामप्रमाणानि, करणत्वं चैषां तत्तत्क्रियासाधकतमत्वादिति गाथार्थः ॥ १९७ ॥ कानि पुनस्तानीत्याह–

बवं च बालवं चेव, कोलवं थीविलोअणं। गराइ वणियं चेव, विट्ठी हवइ सत्तमी ॥ १९८ ॥

सउणि चउप्पयं नागं, किंसुग्घं करणं तहा। एए चत्तारि धुवा, सेसा करणा चला सत्त ॥ १९९ ॥

व्याख्या—ववं च बालवं चैव कौलवं स्त्रीविलोचनं गरादि वणिजं चैव विष्टिर्भवति सप्तमी। शकुनि चतुष्पदं नागं किंस्तुघ्नं करणं तथा, 'एतानी'ति शकुन्यादीनि चत्वारि 'ध्रुवाणी'त्यवस्थितानि, शेषाणि करणानि 'चलानि'– अनवस्थितानि सप्तेति श्लोकद्वयार्थः ॥ १९८–१९९ ॥ कस्य पुनः क ध्रुवत्वमित्याह—

किण्हचउद्दसिरत्तिं सउणिं पडिवज्जाए सया करणं। इत्तो अहक्कमं खलु चउप्पयं नाग किंछुग्घं ॥ २०० ॥

१ कालकरणं यावता कालेन क्रियते, यस्मिन्वा काल इति।

व्याख्या—आह–नित्यत्वात्क्षेत्रस्य करणं न सङ्गच्छते तत्कथं क्षेत्रकरणसम्भवः?, उच्यते, न विनाऽऽकाशेन 'क्रियते' निर्वर्त्यते 'यदि'ति यस्मात् 'किञ्चिदपि' अल्पमपि द्व्यणुकस्कन्धादि, अतस्तत्प्राधान्याद् द्रव्यकरणमपि क्षेत्रकरणमुच्यते इत्युपस्कारः, ननु यद्याकाशेन विना न किञ्चित् क्रियते तदाऽऽकाशकरणतैवास्तु कथं क्षेत्रकरणता?, उच्यते, 'क्षेत्रम्' इति क्षेत्रशब्दवाच्यमाकाशं, तथा च पर्यायशब्दत्वादनयोरित्थमभिधानमदुष्टमेवेति भावः, तच्च व्यञ्जन–शब्दस्तस्य पर्यायः–अन्यथा च भवनं व्यञ्जनपर्यायः तमापन्न–प्राप्तं व्यञ्जनपर्यायापन्नम्, 'उच्छुकरणमाइय'ति प्रक्रमान्मकारस्य चागमिकत्वादिक्षुक्षेत्रकरणादिकं 'बहुधा' बहुप्रकारम्, एकत्वेऽपि क्षेत्रस्येक्षुक्षेत्रकरणादिरूपेणाभिलापस्य बहुप्रकारत्वात्, तथा च सम्प्रदायः—'वंजणपरियावन्नं णाम जं खेत्तंति अभिलप्पति तंजहा–उच्छुखेत्तकरणं सालिखेत्तकरणं तिलखित्तकरणं एवमादि' अथवा यस्मिन् क्षेत्रे करणं क्रियते वर्ण्यते वा तत् क्षेत्रकरणमिति गाथार्थः ॥ १९६ ॥ इदानीं कालकरणमाह—

कालो जो जावइओ जं कीरइ जंमि जंमि कालंमि। ओहेण नामओ पुण हवंति इक्कारसक्करणा ॥ १९७ ॥

व्याख्या—कालो 'यः' समयादिर्यावत्परिमाणः यत्करणनिष्पत्तावपेक्षाकारणत्वेन व्याप्रियते, किमुक्तं भवति?–यस्य भोजनादेर्यावता घटिकाद्वयादिना कालेन निष्पत्तिस्तस्य स एव कालः करणं, तस्यैव तत्र साधकतमत्वेन

१ व्यञ्जनपर्यायापन्नं नाम यत्क्षेत्रमित्यभिलप्यते, तद्यथा–इक्षुक्षेत्रकरणं शालिक्षेत्रकरणं तिलक्षेत्रकरणमेवमादि।

सर्वत्थ भावणा कायवा, भणियं च—"किण्हनिसितईयदसमी सत्तमि चाउद्दसीसु अह विट्ठी । सुक्कचउत्थिक्कारसिणिसि अट्ठमी पुण्णिमा य दिवा ॥ १ ॥" लौकिका अप्याहुः—"कृतृरा सदिवा दर भूतदिवा, शुचराष्टदिवैकरपूर्णदिवा । यदि चन्द्रगतिश्च तिथिश्च समा, इति विष्टिगुणं प्रवदन्ति बुधाः ॥ २ ॥" "सुद्धस्स पडिवइ निसि पंचमिदिणि अट्ठमीएँ राइं तु । दिवसस्स बारसी पुण्णिमाय रत्तिं ववं होति ॥ १ ॥ बहुलस्स चउत्थीए दिवा य तह सत्तमीएँ रत्तिंपि । एकारसीए दिवसे बवकरणं होइ नायवं ॥ २ ॥" इति सम्प्रदायार्थः ॥ प्रागुद्दिष्टं भावकरणमाह—

**भावकरणं तु दुविहं जीवाजीवेसु होइ नायवं । तत्थ उ अजीवकरणं तं पंचविहं तु नायव ॥ २०१ ॥**

व्याख्या—भावः—पर्यायः तस्य करणं भावकरणं, तत्पुनः तुशब्दस्य पुनरर्थत्वात् 'द्विविधं' द्विभेदं, कथमित्याह—

१ सर्वत्र भावना कर्त्तव्या, भणितं च—(वाणिजं) कृष्णनिशि तृतीयादशमीसप्तमीचतुर्दशीष्वथ विष्टिः । शुक्लचतुर्थ्येकादशीरात्र्योः अष्टमीपूर्णिमयोर्दिवा ॥ १ ॥ २ कृति कृष्णपक्षे त्रिति तृतीयातिथौ रेति रात्रौ सेति सप्तम्यां दिवेति दिवसे देति दशम्यां रेति रात्रौ भूतेति चतुर्दश्यां दिवेति दिवसे श्विति शुक्लपक्षे चेति चतुर्थ्यां रेति रात्रौ अष्टेत्यष्टम्यां दिवेति दिवसे एकेति एकादश्यां रेति रात्रौ पूर्णेति पूर्णिमायां दिवा । ३ शुद्धस्य प्रतिपदि निशि पञ्चमीदिने अष्टम्यां रात्रौ तु । दिवसे द्वादश्याः पूर्णिमाया रात्रौ ववं भवति ॥ १ ॥ कृष्णस्य चतुर्थ्यां दिवा च तथा सप्तम्या रात्रावपि । एकादश्या दिवसे ववकरणं भवति ज्ञातव्यम् ॥

व्याख्या—कृष्णचतुर्दश्या रात्रौ शकुनि प्रतिपद्यते, स्वरूपमिति शेष, किं कदाचिदेवेत्याह–'सदा' सर्वकालम्, अनेनास्यावस्थितत्वमाह, करण प्राग्वद्, अत ऊर्द्ध 'यथाक्रमं' यथापरिपाटि 'खलु' अवधारणे ततो यथाक्रममेव, चतुष्पद नाग किंस्तुघ्नमिति, तत्रामावास्याया दिने चतुष्पद रात्रौ नाग प्रतिपदि च दिने किंस्तुघ्नमिति गाथार्थ ॥ २०० ॥ सप्तविधकरणानयनोपायप्रतिपादिकेयं पूर्वाचार्यगाथा–"पक्खतिहितो दुगुणिया दुरूवहीणा य सुक्कपक्खम्मि । सत्तहिए देवसिय त चिय रूवाहिय रत्तिं ॥ १ ॥ एसाऽत्थ भावणा—अभिमयदिणम्मि करणजाणणत्थ पक्खतिहितो दुगुणियत्ति–अहिगयतिहिं पडुच्च अतीयातो दुगुणिज्जति, जहा सुद्धचउत्थीए दुगुणा अट्ठ हवंति, 'दुरुवहीण'ति, सत्तहिए देवसिय करण हवइ, एत्थ य भागा छच्चेव, तओ बवाइयक्कमेण चउप्पहरियकरणभावेण चउत्थिए दिवसे तो वणिय हवइ, त चिय रूवाहिय 'रत्तिं'ति रत्तीए विट्ठी, कण्हपक्खे दोरूवा ण पाडिज्जति, एवं

---

१ पक्षतिथयो द्विगुणिता द्विरूपहीनाश्च शुक्लपक्षे । सप्तहृते दैवसिक तदेव रूपाधिक रात्रौ ॥ १ ॥ एषाऽत्र भावना—अभिमतदिने करणज्ञानार्थं पक्षतिथयो द्विगुणिता इति–अधिकृततिथिं प्रतीत्यातीता द्विगुण्यन्ते, यथा शुक्लचतुर्थ्यां द्विगुणा अष्ट भवन्ति, द्विरूपहीनमिति सप्तहृते दैवसिक करण भवति, अत्र च भागा षडेव, ततो बवादिक्रमेण चतुष्प्राहरिककरणभावेन चतुर्थ्यां दिवसे तद्वणिज करण भवति, तदेव रूपाधिक रात्राविति रात्रौ विष्टि । कृष्णपक्षे द्वे रूपे न पात्येते, एव

भणियं । इह पज्जयऽवेक्खाए दव्वट्ठियनयमयं तं च ॥ २ ॥" इति गाथार्थः ॥ २०२ ॥ उक्तमजीवभावकरणं, साम्प्रतं जीवभावकरणमाह—

जीवकरणं तु दुविहं सुयकरणं चेव नो य सुयकरणं । बद्धमबद्धं च सुअं निसीहमनिसीहबद्धं तु ॥२०३॥

व्याख्या—जीवभावकरणं पुनः, तुशब्दस्य पुनरर्थत्वात्, 'द्विविधं' द्विप्रकारं, श्रुतस्य करणं श्रुतकरणं, भावकरणत्वं चास्य श्रुतस्य क्षायोपशमिकभावान्तर्गतत्वात्, चैवेति पूरणे, 'णो य सुयकरणं'ति चशब्दस्य व्यवहितसम्बन्धत्वात् नोश्रुतकरणं च । तत्राद्यमभिधित्सुराह–'बद्धं' ग्रथितम् 'अबद्धं च' एतद्विपरीतं 'श्रुते' श्रुतविषयं, करणमिति प्रक्रमः, तत्र च 'णिसीहमणिसीहबद्धं तु'त्ति बद्धं द्विविधं–निशीथमनिशीथं च, तुशब्दश्चानयोरबद्धस्य च लौकिकलोकोत्तरभेदसूचकः, ततश्च निसीथं रहसि यत्पठ्यते व्याख्यायते वा, तच्च लोकोत्तरं निशीथादि लौकिकं बृहदारण्यकादि, अनिशीथमेतद्विपरीतं, तच्च लोकोत्तरमाचारादि लौकिकं पुराणादि, अबद्धमपि लौकिकलोकोत्तरभेदेन द्विभेदमेव, तत्र लोकोत्तरं यथैका मरुदेव्यत्यन्तस्थावरा सिद्धा स्वयम्भूरमणे मत्स्यपद्मयोर्वलयवर्ज्जानि सर्वसंस्थानानि सन्ति, विष्णुकुमारमहर्षेर्योजनलक्षप्रमाणशरीरविकरणं कुरुडविकुरुडौ कुणालायां स्थितावतिवृष्ट्या च तन्नाशः तयोश्चाशुभानुभावात्सप्तमनरकपृथिवीगमनं कुणालानाशाच्च भगवतो वीरस्य त्रयोदश्यां समायां केवलज्ञानोत्पत्तिरित्यादि अनेकप्रकारमाचार्यपरम्परायातं, लौकिकं त्वबद्धं द्वात्रिंशदड्डिकाः षोडश करणानि पञ्च स्थानानि,

जीवाजीवेषु भवति 'ज्ञातव्यम्' अवबोद्धव्य, किमुक्त भवति ?–जीवविषयमजीवविषय च, तत्राल्पवक्तव्यत्वाद्-जीवभावकरणमेवादावुपदर्शयति–'तत्थ जमजीवकरण'ति तत्र–तयोर्द्वयोर्मध्ये यदजीवकरण तत् 'पञ्चविध तु' पञ्च-प्रकारमेव 'ज्ञातव्यम्' अवसेयमिति गाथार्थ ॥ २०१ ॥ एतदेव स्पष्टयितुमाह–

वण्णरसगंधफासे सठाणे चेव होइ नायव । पचविह पचविह दुविहऽट्ठविह च पचविह ॥ २०२ ॥

व्याख्या–वर्णरसगन्धस्पर्शे सस्थाने चैव, उभयत्र विषयसप्तमी, ततो वर्णादिविषयं भवति ज्ञातव्यम्, अजीवकरणमिति प्रक्रम, तत्र वर्ण पञ्चविध –कृष्णादि, रस पञ्चविधस्तिक्तादि, गन्धो द्विभेद –सुरभिरितरश्च, स्पर्शोऽष्टविध –कर्कशादि, सस्थान पञ्चविध–परिमण्डलादि, एतद्भेदात्करणमप्येतद्विषयमेतावद्भेदमेव, अत एवाह–'पञ्चविध'मित्यादि, ननु द्रव्यकरणात्कोऽस्य विशेष ?, उच्यते, इह पर्यायापेक्षया तथाभवनमभिप्रेत, द्रव्यकरणे तु द्रव्यस्यैव तथा तथोत्पादो द्रव्यास्तिकमतापेक्षयेति विशेष, उक्त च–"[1]अपरप्पओगज (ओ) ज अजीवरूवादि पज्जयावत्थ । तमजीवभावकरण तप्पज्जाअप्पणावेक्ख ॥ १ ॥ को दव्वविस्ससाकरणाउ विसेसो इमस्स ? ननु

१ अपरप्रयोगज (तो) यदजीवरूपादि पर्यायावस्थम् । तदजीवभावकरण तत्पर्यायात्मनोऽपेक्षया ॥१॥ को द्रव्यविश्रसाकरणाद्विशेषोऽस्य ? ननु भणितम् । इह पर्यायापेक्षया द्रव्यार्थिकनयमत वच ॥ २ ॥

तेन पञ्चदशविधं योजनाकरणं, योजयति ह्येतत्पञ्चदशविधमपि कर्म्मणा सहात्मानमिति, आह च—"[1]मणवयणकायकिरिया पन्नरसविहा उ जुंजणाकरण"मिति गाथार्थः ॥ २०४ ॥ येन करणेनात्र प्रकृतं तदाह—

कम्मगसरीरकरणं आउअकरणं असंखयं तं तु । तेणऽहिगारो तम्हा उ अप्पमाओ चरित्तंमि ॥२०५॥

व्याख्या—'कर्म्मकशरीरकरणं' कार्मणदेहनिर्वर्त्तनं, तदपि ज्ञानावरणादिभेदतोऽनेकविधमित्याह—'आयुःकरणम्' इति आयुषः—पञ्चमकर्म्मप्रकृत्यात्मकस्य करणं—निर्वर्त्तनमायुःकरणं, तत्किमित्याह—'असंखयं तं तु'त्ति तत्पुनरायुःकरणमसंस्कृतं—नोत्तरकरणेन त्रुटितमपि पटादिवत्सन्धातुं शक्यं, यतः—"[2]फुट्टा तुट्टा व इहं पडमादी संधयंति णयणिउणा । सा कावि णत्थि णीई संधिज्जइ जीवियं जीए ॥१॥" एवं च 'स्वरूपतो हेतुतो विषयतश्च व्याख्ये'ति स्वरूपतो हेतुतश्च 'उत्तरकरणेण कय'मित्यादिना ग्रन्थेन व्याख्यातम्, अनेन त्वायुष्ककरणस्यासंस्कृतत्वोपदर्शनेन विषयतः, इदानीं तूपसंहारमाह—'तेणऽहिगारो'त्ति 'तेने'त्यायुःकर्मणाऽसंस्कृतेनाधिकारः, 'तम्हा उ'त्ति तस्मात् तुशब्दोऽवधारणार्थः, तस्य च व्यवहितः सम्बन्धः, ततोऽयमर्थः—यस्मादसंस्कृतमायुःकर्म्म तस्मात् 'अप्रमाद एव' प्रमादाभाव एव, 'चरित्र' इति चरित्रविषयः कर्त्तव्य इति गाथार्थः ॥ २०७ ॥ एवं च व्याख्यातं संस्कृतम्,

१ मनोवचनकायक्रिया पञ्चदशविधं तु योजनाकरणम् । २ स्फुटितास्त्रुटिता वा इह पटादयः संदधति नयनिपुणाः । सा काचिन्नास्ति नीतिः संधीयते जीवितं यया ॥ १ ॥

तद्यथा-आलीढ प्रत्यालीढ वैशाख मण्डल समपद च, तत्रालीढ दक्षिण पादमग्रत कृत्वा वामपाद पृष्ठत सारयति, अन्तर द्वयोरपि पादयो पञ्च पदानि, एतद्विपरीत तु प्रत्यालीढ, वैशाख पुन पार्ष्णी अभ्यन्तरत कृत्वा समश्रेण्या व्यवस्थापयति, अग्रिमतलौ बहिर्भूतौ कार्यौ, मण्डल द्वावपि पादौ दक्षिणवामतोऽवसार्य ऊरू आकुञ्चति, यथा मण्डल भवति, अन्तर चत्वारि पादानि, समपद पुन स्थान द्वावपि पादौ समौ नैरन्तर्येण स्थापयति, एतानि पञ्च स्थानान्यवद्धानि, शयनकरण च षष्ठमिति गाथाक्षरार्थ ॥ २०३ ॥ उक्त श्रुतकरणमधुना नोश्रुतकरणमाह—

नोसुयकरण दुविह गुणकरण तह य जुजणाकरण। गुण तवसजमजोगा जुजण मणवायकाए य २०४

व्याख्या—इह च नोशब्दस्य सर्वनिषेधाभिधायित्वात् श्रुतकरण यत्र भवति तन्नोश्रुतकरण, तच्च द्वेधा—गुणकरण 'तधा च' तेनैव नाश्रुतत्वलक्षणेन प्रकारेण योजनाकरण च, एतत्स्वरूपमाह—'गुण'त्ति प्रक्रमाद् गुणकरण, किमित्याह—तपश्च सयमश्च तप सयमौ तयोरात्मगुणयोर्योगा —तत्करणरूपा व्यापारास्तप सयमयोगा , किमुक्त भवति ?—तप करणम्—अनशनादि सयमकरण च—पञ्चाश्रवविरमणादि गुणकरणमुच्यते, गुणत्व च तप सयमयो कर्म्मनिर्जराहेतुत्वेनात्मोपकारित्वात्, 'जुजण'त्ति योजनाकरण 'मणवयणकाए य'त्ति चशब्दोऽवधारणे, विषयसप्तमी चेय, ततो मनोवाक्कायविषयमेव, तत्र मनोविषय सत्यमनोयोजनाकरणादि चतुर्धा, वाग्विषयमपि सत्यवाग्योजनाकरणादि चतुर्धैव, कायविषय त्वौदारिककाययोजनाकरणादि सप्तधा, ततश्च द्वाभ्या चतुष्काभ्या सप्तकेन च मीलि-

प्रकर्षेण तन्मध्यादल्पस्याप्यग्रहणात्मकेन हित्वा—त्यक्त्वा 'तानि'ति धनैकरसिकान् 'पश्य' अवलोकय, विनेयमेवाह, 'पयट्टिए'त्ति आर्षत्वात् स्वत एवाशुभानुभावतः प्रवृत्तान् प्रवर्त्तितान्वा, प्रक्रमात्पापकर्मोपार्जितधनेनैव, मृत्युमुखमिति गम्यते, 'नरान्' पुरुषान्, पुनरुपादानमादरख्यापकमेकान्तक्षणिकपक्षनिरासार्थं वा, एकान्तक्षणिकपक्षे हि न यैरेव धनमुपार्जितं तेषामेव प्रवर्त्तनं, तथा च बन्धमोक्षाभावश्चेति भावः, एतच्च पश्य वैरं—कर्म्म 'वेरे' वज्जे य कम्मे य' इति वचनात् तेन अनुबद्धाः—सततमनुगताः 'नरकं' रत्नप्रभादिकं नारकनिवासम् 'उपयान्ति' तद्भवभावितया सामीप्येन गच्छन्ति, त एव मृत्युमुखप्रवृत्ता इति प्रक्रमः, यदि वा पाशा इव पाशाः—स्त्र्यादयस्तेषु प्रवृत्तास्तैर्वा प्रवर्त्तिताः पाशप्रवृत्ताः पाशप्रवर्त्तिता वा नरकमुपयान्तीति सम्बन्धः, ते हि द्रव्यमुपार्ज्य स्त्र्यादिष्वभिरमन्ते, तदभिरत्या च नरकगतिभाज एव भवन्तीति भावः, शेषं प्राग्वत् । तदनेन सूत्रेण धनमिहैव मृत्युहेतुतया परत्र च नरकप्रापकत्वेन तत्त्वतः पुरुषार्थ एव न भवतीति तत्त्यागतो धर्म्मं प्रति मा प्रमादीरित्युक्तं भवति, नरकप्राप्तिलक्षणश्चापायो न प्रत्यक्षेणावगम्यते (म्यत इती) हैव मृत्युलक्षणापायदर्शनमुदाहरणं, तत्र च वृद्धसम्प्रदायः—एगंमि नयरे एगो चोरो, सो रत्तिं विभवसंपण्णेसु घरेसु खत्तं खणिउं सुबहुं दविणजायं घेत्तुं अप्पणो घरेगदेसे कूवं सयमेव खणित्ता

१ वैरं वज्रे च कर्मणि च । २ एकस्मिन्नगरे एकश्चौरः, स रात्रौ विभवसंपन्नेषु गृहेषु क्षत्रं खनित्वा सुबहु द्रव्यजातं गृहीत्वाऽऽत्मनो गृहैकदेशे कूपं स्वयमेव खनित्वा

एतद्विपरीत चासंस्कृतमिति। सम्प्रति सूत्रमनुश्रियते–तत्र चासंस्कृत जीवितमिति जरोपनीतस्य न त्राणमिति च मा प्रमादीरित्युक्तेऽर्थस्यापि पुरुषार्थतया सकलैहिकामुष्मिकफलनिबन्धनतया च तदुपार्जने प्रत्यप्रमादो विधेय इति केषाञ्चित्कदाशय, यत आह–"धनैर्दुष्कुलीना कुलीना क्रियन्ते, धनैरेव पापात्पुनर्निस्तरन्ति। धनिभ्यो विशिष्टो न लोकेऽस्ति कश्चिद्धान्यर्जयध्व धनान्यर्जयध्वम् ॥ १ ॥" इति, तन्मतमपाकर्तुमाह—

जे पावकम्मेहि धण मणुस्सा, समाययती अमति गहाय।

पहाय ते पास पयट्टिए नरे, वेराणुबद्धा नरय उवेंति ॥ २ ॥ (सूत्रम्)

व्याख्या—'य' इति ये केचनाविवक्षितस्वरूपा 'पापकर्मभि' इति पापोपादानहेतुभिरनुष्ठानै 'धनं' द्रव्य 'मनुष्या' मनुजा, तेषामेव प्रायस्तदर्थोपायप्रवर्त्तनादित्थमुक्त, 'समाददते' स्वीकुर्वन्ति, 'अमतिम्' इति प्राग्वन्नञ् कुत्सायामपि दर्शनात् कुमतिम्–उक्तरूपा 'गहाय'त्ति गृहीत्वा सम्प्रधार्य, पठ्यते च–'अमय गहाये'ति अशोभन मतममत–नास्तिकादिदर्शनम्, अथवा अमृतमिवामृतम्–आत्मनि परमानन्दोत्पादकतया तच्च प्रक्रमाद्धन 'पहाय'त्ति

---

१ द त्यसकारवान् स्यात्, स्याद्वा सज्ञापूर्वको विधिरनित्य इति न्यायमाश्रित्य नामिसज्ञोद्देशेन गुणविधानात् गुणाभावात आत्मनेपदे एव, धातुर्वा दिवादावात्मनेपदी कस्यचिन्मते स्यात् तुदादौ वा, कर्मणि प्रयोगात्तु न तत्कल्पन।

प्रवर्त्तमानास्तदपहायेहैवानर्थावापत्तितो नरकमुपयन्तीति सूत्रार्थः ॥ २ ॥ इदानीं कर्मणामवन्ध्यतामभिदधत् प्रकृतमेवार्थं द्रढयितुमाह—

तेणे जहा संधिमुहे गहीए, सकम्मुणा किच्चइ पावकारी।
एवं पया पिच्च इहं च लोए, कडाण कम्माण न मोक्खो अत्थि ॥३॥ (सूत्रम्)

व्याख्या—'स्तेनः' चौरः यथेति दृष्टान्तोपदर्शने सन्धिः—क्षत्रं तस्य मुखमिव मुखं—द्वारं तस्मिन् 'गृहीतः' आत्तः 'स्वकर्मणा' आत्मीयानुष्ठानेन, किम् ?—'कृत्यते' छिद्यते, 'पापकारी' पातकनिमित्तानुष्ठानसेवी, कथं पुनरसौ कृत्यत इति चेद्—अत्रोच्यते सम्प्रदायः—

एगंमि नयरे एगो चोरो, तेण अभिज्जतो घरगस्स फलगचियस्स पागारकविसीसगसंनिहं खत्तं खणियं, खत्ताणि अणेगागाराणि—कलसागिई नंदावत्तसंठियं पउमागिइं पुरिसागिइं च, सो य तं कविसीसगसंठियं खत्तं खणंतो घरसामिए णिवेईओ, ततो तेण अद्धपविट्ठो पाएसु गहितो, मा पविट्ठो संतो पहरणेण पहरिस्सतित्ति, पच्छा

१ एकस्मिन्नगरे एकश्चौरः, तेनाभेद्यस्य गृहस्य चितफलकस्य प्राकारकपिशीर्षकसंनिभं क्षत्रं खातं, क्षत्राण्यनेकाकाराणि—कलशाकृति नन्दावर्तसंस्थितं पद्माकृति पुरुषाकृति च, स च तत् कपिशीर्षकसंस्थितं क्षत्रं खनन् गृहस्वामिना निवित्तः, ततस्तेनार्धप्रविष्टः पादयोर्गृहीतः, मा प्रविष्टः सन् प्रहरणेन प्रहार्षीदिति, पश्चा-

तदर्थं दविणजायं पक्खिवइ, जहिच्छियं च सुकं दाऊण कण्णगं विवाहेउ पसूयं सतिं रत्तिं उद्दवेत्ता तत्थेवागडे पक्खिवइ, मा मे भज्जा चेडरूवाणि य परूढपणयाणि होऊण रयणाणि परस्स पयासेस्सति, एवं कालो वच्चति। अण्णया तेणेगा कण्णया विवाहिया अतीव रूवस्सिणी, सा पसूया सता तेण ण मारिया, दारगो य, सो अट्ठ-वरिसो जाओ, तेण चिंतियं–अइचिरं कालं विधारिया, एयं पुव्वं उद्दवेउं पच्छा दारयं उद्दविस्सति, तेण सा उद्दवेउं अगडे पक्खित्ता, तेण य दारगेण गिहाओ निग्गच्छिऊण धाधाकया, लोगो मिलिओ, तेण भण्णइ—एएण मम माया मारियत्ति, रायपुरिसेहिं सुयं, तेहिं गहितो, दिट्ठो कूवो दव्वभरितो, अट्ठाणि य सुबहूणि, सो बधिऊण रायसभं समुवणीतो जायणापगारेहिं, सव्वं दव्वं दवावेऊण कुमारेण मारितो ॥ एवमन्येऽपि धनं प्रधानमिति तदर्थं

१ तत्र द्रव्यजातं प्रक्षिपति, यथेप्सितं च शुल्कं दत्त्वा कन्यकां विवाह्य प्रसूतां सतीमपद्राव्य रात्रौ तत्रैवावटे प्रक्षिपति, मा मम भार्या-श्चेटरूपाणि च प्ररूढप्रणयानि भूत्वा रत्नानि परस्मै प्रचीकशन्निति, एवं कालो व्रजति। अन्यदा तेनैका कन्यका विवोढा अतीव रूपवती, सा प्रसूता सती तेन न मारिता, दारकश्च, सोऽष्टवर्षो जातः, तेन चिन्तितम्–अतिचिरं कालं विधृता, एनां पूर्वमपद्राव्य पश्चाद्दारकमपद्रोष्यामीति, तेन साऽपद्राव्यावटे प्रक्षिप्ता, तेन च दारकेण गृहात् निर्गत्य हाहारवः (कृतः), लोको मिलितः, तेन भण्यते–एतेन मम माता मारितेति, राजपुरुषैः श्रुतं, तैर्गृहीतः, दृष्टः कूपो द्रव्यभृतः, अर्थाश्च सुबहवः, स बद्ध्वा राजसभां समुपनीतो यातनाप्रकारैः, सर्वं द्रव्यं दापयित्वा कुमारेण मारितः

श्चित्काले 'ने'ति निषेधे 'कम्मुणो'त्ति कर्म्मणे प्रस्तावात् कुत्सितानुष्ठानाय स्पृहयेत्—नाभिलाषमपि कुर्याद् आस्तां तत्करणमित्याकूतं, तदभिलषणस्यापि वहुदोषत्वात्, तथा च वृद्धाः—

एगंमि नयरे एगेण चोरेण रत्तिं दुरवगाढे पासाए आरोढुं विमग्गेण खत्तं कयं, सुवहुं च दव्वजायं णीणियं, णियघरं चऽणेण संपावियं । पहायाए रयणीए ण्हाय समालद्ध सुद्धं वासो तत्थ गतो, को किं भासतित्ति जाणणत्थं, जइ तावज्ज लोगो मं ण याणिस्सइ ता पुणोवि पुवट्ठिइए चोरिस्सामीत्ति संपहारिऊण तंमि य खत्तट्ठाणे गओ, तत्थ य लोगो वहू मिलितो संलवति—कहं दुरारोहे पासाए आरोढुं विमग्गेण खत्तं कयं ? कहं च खुड्डलएणं खत्तदुवारेणं पविट्ठो ?, पुणो य सह दव्वेण णिग्गओत्ति । सो सुणेउं हरिसितो चिंतेइ—सच्चमेयं, किहऽहं एएण निग्गतोत्ति ?, अप्पणो उदरं च कडिं च पलोएउं खत्तमुहं पलोएति । सो य रायनिउत्तेहिं पुरिसेहिं कुसलेहिं जाणितो,

१ एकस्मिन् नगरे एकेन चौरेण रात्रौ दुरवगाढं प्रासादमारुह्य विमार्गेण क्षत्रं कृतं, सुवहु च द्रव्यजातं नीतं, निजगृहं चानेन संप्रापितं । प्रभातायां रजन्यां स्नात्वा समालभ्य शुद्धं वासस्तत्र गतः, कः किं भाषत इति ज्ञानार्थं, यदि तावदद्य लोको मां न ज्ञास्यति तदा पुनरपि पूर्वस्थित्या चोरयिष्यामीति संप्रधार्य तस्मिंश्च क्षत्रस्थाने गतः, तत्र च वहुर्लोको मिलितः संलपति—कथं दुरारोहं प्रासादमारुह्य विमार्गेण क्षत्रं कृतं ?, कथं च क्षुल्लकेन क्षत्रद्वारेण प्रविष्टः ?, पुनश्च सह द्रव्येण निर्गत इति । स श्रुत्वा हृष्टश्चिन्तयति—सत्यमेतत्, कथमहमेतेन निर्गत इति ?, आत्मन उदरं च कटीं च प्रलोक्य क्षत्रमुखं प्रलोकयति । स च राजनियुक्तैः पुरुषैः कुशलैर्ज्ञातः,

चोरेणवि वाहिरत्थेण हत्थे गहिओ, सो तेहि दोहिवि वलवतेहि उभयहा कड्ढिज्जमाणो सयंकियपागारकविसीसगेहि फालिज्जमाणो अत्ताणो विलविति ॥ एवमनेनैवोदाहरणदर्शितन्यायेन 'प्रजा' हे प्राणिन ! 'पेच्छ'त्ति प्रेक्षध्व, प्राकृतत्वाद्वचनव्यत्यय, एतच यत्रापि नोच्यते तत्रापि भावनीयम्, 'इह' अस्मिन् 'लोके' जन्मनि, आस्ता परलोक इत्यपिशब्दार्थ, 'कृताना' स्वयंविरचिताना 'कर्म्मणा' ज्ञानावरणादीना 'न मोक्ष' न मुक्ति, ईश्वरादेरपि तद्विमोचन प्रत्यसामर्थ्याद्, अन्यथा सकलसुखित्वाद्यापत्ते, इदमुक्त भवति—यथाऽसावर्थग्रहणवाञ्छया प्रवृत्त स्वकृतेनैव क्षत्रखननात्मकोपायेन कृत्यते, न तस्य स्वकृतकर्मणो विमुक्ति, एवमन्यस्यापि तत्तदनुष्ठानतोऽशुभकारिणो न ततो विमुक्ति, किन्तु तदिहापि विपच्यत एवेति, पठ्यते च—'एव पया पेच इह च'त्ति, इहापि कृत्यत इति सम्बध्यते, कृत्यत इव कृत्यते तथाविधबाधानुभवनेन, काऽसौ ?–प्रजा, क ?–'प्रेत्य' परभवे, 'इह चे'ति इहलोके, किमिति प्रेत्येत्युच्यते–यावता इह कृतमिहैवापगतमत आह—यत् 'कृताना' कर्म्मणा मोक्षो नास्ति ॥ ( ग्रन्थाग्रम् ५००० ) इह परत्र वा वेद्यमेवावश्यं कर्मेति, अहवा 'एव पया पेच इहपि लोए, ण कम्मुणो मीहति तो कयाती' एव प्रजा ! आमन्त्रणपदमेतत्, प्रेत्येह लोके च यत प्राणिन. कृत्यन्ते 'ता' इति ततो हेतो 'कदाचित्' कस्मि-

१० चौरेणापि बाह्यस्थेन हस्ते गृहीतः,स ताभ्या द्वाभ्यामपि बलवद्भ्यामुभयत कृष्यमाण स्वयकृतप्राकारकपिशीर्षकै पाट्यमानोऽत्राणो विलपतीति ।

तत्तत्कर्मफलानुभवनं तत्काले 'न' इति निषेधे, अवधारणफलत्वाद्वाक्यस्य नैव 'वान्धवाः' स्वजनाः, यदर्थं तत्कर्म्म कृतवान् करोषि वा ते 'वान्धवतां' वन्धुभावं तद्विभजनापनयनादिना 'उवेंति'त्ति उपयन्तीति, यतश्चैवमतस्तदुपरि प्रेमादिप्रमादपरिहारतो धर्मे एवावहितेन भाव्यं, तथाविधाभीरीव्यंसकवणिग्वत्। तथा च वृद्धाः—

एगंमि नयरे एगो वाणियगो अंतरावणेसुं ववहरइ, एगा आभीरी उज्जुगा दोरूवए घेत्तूण कप्पासनिमित्तमुवट्ठिया, कप्पासो य तया समग्घो वट्टति, तेण वाणियएण एगस्स रूवस्स दो वारा तोलेउं कप्पासो दिन्नो, सा जाणइ—दोह्रवि रूवगाण दिन्नोत्ति, सा पोट्टलयं वंधिऊण गया, पच्छा वाणियतो चिंतेति—एस रूवगो सुहा लद्धो, ततो अहं एयं उवभुंजामि, तेण तस्स रूवगस्स समियं घयं गुलो चिकिणिउं घरे विसज्जिउं भज्जा संलत्ता—घयपुण्णे

१ एकस्मिन्नगरे एको वणिग् अन्तरापणेषु (आपणान्तरेषु) व्यवहरति, एका आभीरी ऋजुका द्वौ रूप्यकौ गृहीत्वा कर्पासनिमित्तमुपस्थिता, कर्पासश्च तदा समर्घो वर्त्तते, तेन वणिजा एकस्य रूप्यकस्य द्वौ वारौ तोलयित्वा कर्पासो दत्तः, सा जानाति—द्वयोरपि रूप्यकयोर्दत्त इति, सा पोट्टलिकां वद्ध्वा गता, पश्चाद्वणिक् चिन्तयति—एष रूप्यको सुधा लब्धः, ततोऽहमेनमुपभुञ्जे, तेन तस्य रूप्यकस्य युगपत् घृतगुडौ विक्रीय (क्रीत्वा) गृहे विसर्ज्य भार्या संलप्ता—घृतपूर्णान्

रायणो उवणीतो सासितो य ॥ एव पापकर्म्मणामभिलपणमपि सदोपमिति न विदधीतेति सूत्रार्थ ॥ ३ ॥ इह कृताना कर्म्मणामवन्ध्यत्वमुक्त, तत्र च कदाचित् स्वजनत एव तन्मुक्तिर्भविष्यति, अमुक्तो वा विभज्यैवामी धनादिवद् भोक्ष्यन्त इति कश्चिन्मन्येत अत आह—

ससारमावन्न परस्स अट्ठा, साहारण ज च करेति कम्म ।
कम्मस्स ते तस्स उ वेयकाले, न बधवा बधवय उवेति ॥ ४ ॥(सूत्रम्)

व्याख्या—पाठान्तरेऽपि पापकर्मस्पृहण सदोपमिति निपिद्ध, ततस्तत्रापि स्यादेतत्—यथेह सर्व साधारण तथाऽमुष्मिन्नपि भविष्यत्यत आह—'ससार'सूत्र, ससरण–ससार —तेषु तेपूच्चावचेषु पर्यटन तम् आपन्न –प्राप्त, 'परस्य' आत्मव्यतिरिक्तस्य पुत्रकलत्रादे, 'अर्थात्' इति अर्थ–प्रयोजनमाश्रित्य 'साधारण ज च'त्ति चस्य वाशब्दार्थत्वाद् भिन्नक्रमत्वाच्च साधारण वा यदात्मनोऽन्येषा चैतद् भविष्यतीत्यभिसन्धिपूर्वक 'करोति' निर्वर्त्तयति कर्म–कृष्यादिकर्मा तस्यैव कृष्यादे 'ते' तव हे कृष्यादिकर्म्मकर्त्त ! भवान्, कर्म्महेतुत्वात् कर्म्म क्रियत इति वा आस्तामात्मनिमित्त कृतस्येत्यभिप्राय, 'वेदन' वेदो विपाक 'तस्स' परार्थस्य साधारणस्य वा, तुशब्दोऽपिशब्दार्थे,

१ राघ उपनीत शिक्षा प्रापितश्च ।

स्संसि, स मर्मणीव स्पृष्टः, तेणेव एक्कवयणेण संबुद्धो भणति—भयवं ! तुम्हे कत्थ अच्छह ?, तेण भणइ—उज्जाणे, तंतो तं साहुं कयपज्जत्तियं जाणिऊण तस्स सगासं गतो, धम्मं सोउं भणति—पव्वयामि जाव सयणं आपुच्छिऊणं, गतो णियय घरं, बंधवे भज्जं च भणइ—जहा आवणे ववहरंतस्स तुच्छो लाभगो, ता दिसावाणिज्जं करेस्सामि, दो य सत्थवाहा, तत्थेगो मुल्लभंडं दाऊण सुहेण इट्ठपुरं पावेइ, तत्थ विढत्ते ण किंचि गिण्हति, बीओ न किंचि मुल्लभंडं देति, पुव्वविढत्तं च विलुंपेति, तं कयरेण सह वच्चामि ?, सयणेण भणियं—पढमेण सह वच्चसु, तेहिं सो समणुण्णातो बंधुसहितो गओ उज्जाणं, तेहिं भण्णति—कयरो सत्थवाहो ?, तेण भण्णति—णणु परलोगसत्थवाहो एस साहू असोगच्छायाए उवविट्ठो णियएणं भंडेणं ववहारावेइ, एएण सह निव्वाणपट्टणं जामित्ति पव्वइतो ॥ यथा चायं वणिक्

१ छिद्यसि, तेनैवैकवचनेन संबुद्धो भणति—भगवन्तो ! यूयं कुत्र तिष्ठथ ?, तेन भण्यते—उद्याने, ततस्तं साधुं कृतपर्याप्तिकं ज्ञात्वा तस्य सकाशं गतः, धर्मं श्रुत्वा भणति—प्रव्रजामि यावत्स्वजनमापृच्छ्य, गतो निजं गृहं, बान्धवान् भार्यां च भणति—यथा आपणे व्यवहरतस्तुच्छो लाभस्ततो दिशावाणिज्यं करिष्यामि, द्वौ च सार्थवाहौ, तत्रैको मूल्यभाण्डं दत्त्वा सुखेनेष्टपुरं प्रापयति, तत्रोपार्जितान्न किञ्चिद्गृह्णाति, द्वितीयो न किञ्चिन्मूल्यभाण्डं ददाति, पूर्वोपार्जितं च विलुम्पति ( आच्छिनत्ति ), तत्कतरेण सह व्रजामि ?, स्वजनेन भणितः—प्रथमेन सह व्रज, तैः स समनुज्ञातो बन्धुसहितो गत उद्यानं, तैर्भण्यते—कतरः सार्थवाहः ?, तेन भण्यते—ननु परलोकसार्थवाह एप साधुरशोकच्छायायामुपविष्टो निजेन भाण्डेन व्यवहारयति, एतेन सह निर्वाणपत्तनं यामीति प्रव्रजितः ।

करेज्जासित्ति, ताए कया घयपुण्णा, जामाउगो से सवयसो आगतो, सो ताए परिवेसितो घयपुण्णेहिं, सो भुजिउ गतो, वाणियतो ण्हाणपयतो भोयणत्थमुवगतो, सो ताए परिवेसितो साभाविएण भत्तेण, भणति–कि न कया घयउरा ?, ताए भण्णति—कया, पर जामाउएण सवयसेण खतिया ?, सो चितेति—पेच्छ जारिस कय मया, सा वराई आभीरी घचेउ परनिमित्त अप्पा अवुन्नेण सजोईओ, सो य सचितो सरीरचिंताए णिग्गतो, गिम्हो य वट्टति, सो मज्झण्हवेलाए कयसरीरचितो एगस्स रुक्खस्स हेट्ठा वीसमति, साहू य तेणोगासेण भिक्खणिमित्त जाति, तेण सो भणति—भगवं ! एत्थ रुक्खच्छायाए विस्समं मया समाणति, साहुणा भणिय–तुरिय मए णियकज्जेण गंतव, वणिएण भणिय—किं भयव ! कोऽवि परकज्जेणावि गच्छइ ?, साहुणा भणियं–जहा तुमं चिय भज्जाइनिमित्त किलि-

१ कुर्या इति, तया कृता घृतपूर्णा, जामाता तस्य सवयस्य आगत, स तया परिवेषितो घृतपूर्णै, स भुक्त्वा गत, वणिक् स्नात प्रयतो भोजनार्थमुपगत, स तया परिवेषित स्वाभाविकेन भक्तेन, भणति—किं न कृता घृतपूर्णा ?, तया भण्यते—कृता, पर जामात्रा सवयसेन खादिता, स चिन्तयति–पश्य यादृश कृत मया, सा वराकी आभीरी वञ्चयित्वा परनिमित्तमात्माऽपुण्येन सयोजित, स च सचिन्त शरीरचिन्तायै निर्गतो, ग्रीष्मश्च वर्त्तते, स मध्याह्नवेलाया कृतशरीरचिन्त एकस्य वृक्षस्याधस्तात् विश्राम्यति, साधुश्च तेनावकाशेन भिक्षानिमित्त याति, तेन स भण्यते—भगवन्नत्र वृक्षच्छायाया विश्राम्य मया समममिति, साधुना भणित–त्वरित मया निजकार्याय गन्तव्य, वणिजा भणित—किं भगवन् ! कोऽपि परकार्यायापि गच्छति ?, साधुना भणित–यथा त्वमेव भार्यादिनिमित्त

एगो किल राया इंदमहाईए कम्हि ऊसवे अत्तपुरे निग्गच्छंते घोसणं घोसावेइ–जहा सवे पुरिसा नयरातो निग्गच्छंतु, तत्थ पुरोहियपुत्तो रायवल्लभो वेसाघरमणुपविट्ठो घोसिएऽवि ण णिग्गतो, सो रायपुरिसेहिं गहितो, तेण वल्लभेण न तेसिं किंचि दाऊण अप्पा विमोइतो, दप्पायमाणो विवदंतो रायसगासमुवणीतो, राइणावि वज्झो आणत्तो, पच्छा पुरोहिओ उवट्ठितो भणति–सवस्संपि य देमि मा मारिज्जउ, तोऽवि ण मुक्को, सूलाए भिन्नो। एवमन्येऽपि न वित्तेन शरणमिहैव तावदाप्नुवन्ति, आस्तामन्यजन्मनि, तन्मूर्छावतः पुनस्तस्याधिकतरं दोषमाह– 'दीवे'त्यादि वृत्तार्द्धं, तत्र च दीवमित्येतत्पदं संस्कारमनपेक्ष्यैव निक्षेप्तुमाह निर्युक्तिकृत्—

दुविहो य होइ दीवो दव्वदीवो अ भावदीवो य। इक्किक्कोऽवि अ दुविहो आसासपगासदीवो अ ॥२०६॥

व्याख्या—'द्विविधश्च' द्विभेद एव भवति, दीवेति प्राकृतपदोपात्तोऽर्थो, द्रव्यभावभेदात्, तथा चाह–दव्वदीवो य भावदीवो यत्ति, पुनरयमेकैकोऽपि द्विविधः, द्वैविध्यमेवाह–'आसास'त्ति आश्वासयति अत्यन्तमाकुलितानपि

१ एकः किल राजा इन्द्रमहादौ कस्मिंश्चिदुत्सवे स्वकीयपुरे निर्गच्छति घोषणां घोषयति—यथा सर्वे पुरुषा नगरान्निर्गच्छन्तु, तत्र पुरोहितपुत्रो राजवल्लभो वेश्यागृहमनुप्रविष्टो घोषितेऽपि न निर्गतः, स राजपुरुषैर्गृहीतः, तेन वल्लभेन तेभ्यः किञ्चिद्दत्त्वाऽऽत्मा न विमोचितः, दर्पायमाणो विवदन् राजसकाशमुपनीतः, राज्ञाऽपि वध्य आज्ञप्तः, पश्चात्पुरोहित उपस्थितो भणति–सर्वस्वमपि च ददामि मा मीमरः, तदापि न मुक्तः, शूलायां भिन्नः।

स्वजनस्वतत्त्वमालोचयन् प्रव्रज्या प्रत्यादृत , तथाऽन्यैरपि विवेकिभिर्यतितव्य, तथा च वाचक –"रोगाघ्रातो दु खार्दितस्तथा स्वजनपरिवृतोऽतीव । क्वणति करुण सबाष्प रुज निहन्तु न शक्तोऽसौ ॥ १ ॥ माता भ्राता भगिनी भार्या पुत्रास्तथा च मित्राणि । न घ्नन्ति ते यदि रुज स्वजनबल कि वृथा वहसि ? ॥ २ ॥ रोगहरणेऽप्यशक्ता प्रत्युत धर्मस्य ते तु विघ्नकरा । मरणाच्च न रक्षन्ति स्वजनपराभ्या किमभ्यधिकम् ? ॥ ३ ॥ तस्मात् स्वजनस्यार्थे यदिहाकार्यं करोषि निर्लज्ज ! । भोक्तव्य तस्य फल परलोकगतेन ते मूढ ! ॥४॥ तस्मात् स्वजनस्योपरि सङ्ग परिहाय निर्वृतो भूत्वा । धर्मं कुरुष्व यत्नाद्यत्परलोकस्य पथ्यदनम् ॥ ५ ॥" इति सूत्रार्थ ॥४॥ इत्थ तावत् स्वकृतकर्मभ्य स्वजनान्न मुक्तिरित्युक्तम् , अधुना तु द्रव्यमेव तन्मुक्तये भविष्यतीति कस्यचिदाशय स्यादत आह—

वित्तेण ताण न लभे पमत्ते, इममि लोए अदुवा परत्थ ।
दीवप्पणट्ठे व अणतमोहे, नेयाउय दट्ठुमदट्ठुमेव ॥ ५ ॥ ( सूत्रम् )

व्याख्या—'वित्तेन' द्रविणेन 'त्राण' स्वकृतकर्मणो रक्षण 'न लभते' न प्राप्नोति इति, कीदृक् ?–'प्रमत्त ' मद्यादिप्रमादवशग , क्व ?–'इममि'त्ति अस्मिन्ननुभूयमानतया प्रत्यक्ष एव 'लोके' जन्मनि, 'अदुवे'ति अथवा 'परत्रे'ति परभवे, कथ पुनरिहापि जन्मनि न त्राणाय ?, अत्रोच्यते वृद्धसम्प्रदाय —

यथा द्रव्यतोऽपारनीरधिविमग्नानां कदा कदैतदन्तः स्यात् इत्याकुलितचेतसामाश्वासनहेतुराश्वासद्वीपः, एवं संसारसागरमपारमुत्तरीतुमनसामत्यन्तमुद्वेजितानां भव्यानामाश्वासनहेतुः सम्यग्दर्शनं भावाश्वासद्वीपः, तत्र हि द्रव्यद्वीप इव वीचिभिः कुवादिभिरमी नोह्यन्ते नापि मकरादिभिरिवानन्तानुबन्धिभिः क्रोधादिभिरतिरौद्रैरप्युपद्रूयन्ते, यथा च द्रव्याश्वासद्वीपः प्लाव्यमानतयैकः सन्दीनः तथाऽयमपि भावाश्वासद्वीपः सम्यग्दर्शनात्मकः कश्चित् क्षायोपशमिक औपशमिको वा पुनरनन्तानुबन्ध्युदये मिथ्यात्वोदयेन जलोत्पीलेनेव प्लाव्यते, ततस्तन्निबन्धनैर्जलचरैरिवानेकद्वन्द्वैरुपताप्यत इति सन्दीन उच्यते, यस्तु क्षायिकसम्यक्त्वलक्षणो न जलोत्पीलेनेव मिथ्यात्वोदयेनाक्रम्यते अत एव च न तत्स्थस्तन्निबन्धनापायैः कथञ्चिद्युज्यते असावसन्दीनो भावद्वीपः, तथा यथैव तमसाऽन्धीकृतानामपि प्रकाशदीपः तत्प्रकाश्यं वस्तु प्रकाशयति एवमज्ञानमोहितानां ज्ञानमपीति भावप्रकाशदीप उच्यते, अयमप्येकः संयोगिमोऽन्यश्चान्यथा, तत्र यः श्रुतज्ञानात्मको भावदीपः अक्षरपदपादश्लोकादिसंहतिनिर्वर्त्तितः स संयोगिमः, यस्त्वन्यनिरपेक्षो निरपेक्षतया च न संयोगिमः स केवलज्ञानात्मकोऽसंयोगिमो भावदीप इति गाथार्थः ॥ २०७ ॥ 

व्याख्यातं सूत्रस्पर्शिकनिर्युक्त्या 'दीव'त्ति सूत्रपदम्, अत्र च प्रकाशदीपेनाधिकृतं, ततश्च 'दीवप्पणट्ठे वत्ति' प्रकर्षेण नष्टो–दृष्टयगोचरतां गतः प्रणष्टो दीपोऽस्येति प्राकृतत्वात्प्रणष्टदीपः, आहिताग्न्यादेराकृतिगणत्वाद्वा दीपप्रणष्टः तद्वदिति दृष्टान्तः, अत्र सम्प्रदायः—

जनान् स्वस्थीकरोतीत्याश्वास , स एव दीवत्तिपदसम्बन्धात् प्राकृतस्य शतमुखत्वादाश्वासद्वीप इति भवति, तथा प्रकाशयति–घनतिमिरपटलावगुण्ठितमपि घटादि प्रकटयतीति प्रकाश , सर्वधातूना पचादिषु दर्शनात् , स चासौ दीप्यत इति दीपश्च प्रकाशदीप , स च भवति दीवत्तिपदवाच्य इति गाथार्थ ॥ २०६ ॥ पुनरनयोरपि भेदमाह—

सदीणमसदीणो सधिअमस्सधिए अ बोद्धवे । आसासपगासे अ भावे दुविहो पुणिक्किको ॥ २०७ ॥

व्याख्या—संदीयते–जलप्लावनात् क्षयमाप्नोतीति सन्दीन , तदितरस्त्वसन्दीन , तथा 'सजोगिमे य'त्ति सयोगिमं , यस्तैलवर्त्यग्निसयोगेन निर्वृत्त , असयोगिमश्च तद्विपरीत आदित्यविम्बादि ,स ह्येक एव प्रकाशक इति 'ज्ञातव्य ' अवबोद्धव्य , पठ्यते च–'सन्धियमस्सन्धिए य बोद्धवे' इहापि 'सन्धित ' सयोजित ,तद्विपरीतस्तु 'असन्धित ' असयोजित , 'आसासपगासे य'त्ति आश्वासद्वीप प्रकाशदीपश्च, यथाक्रम चेह सम्बन्ध , तत्राश्वासद्वीप सन्दीनासन्दीन , प्रकाशदीपश्च सयोगिमासयोगिम इति, अय च द्रव्यत एवेति व्यामोहापनयनायाह–'भावेऽपि' भावविषयोऽपि, 'दुविह'त्ति द्विधा, 'पुन'रिति प्रथमभेदापेक्षम् ,' एकैक ' इत्याश्वासद्वीप प्रकाशदीपश्च, इदमुक्त भवति—

१ वर्यिमरत्चिमादय ( उ० ३५० ) इति सूत्रादिमो न्यङ्कादेरप्याकृतिगणत्वात्कुत्व च । २ सधान सधा सा जाताऽस्येति सधित ।

न्तीति सूत्रार्थः ॥ ५ ॥ एवं धनादिकमेव सकलकल्याणकारि भविष्यतीत्याशङ्कायां तस्य कुगतिहेतुत्वं कर्म्मणश्चावन्ध्यत्वमुपदर्श्य यत् कृत्यं तदाह—

सुत्तेसु आवी पडिबुद्धजीवी, नो विस्ससे पंडिय आसुपन्ने ।
घोरा मुहुत्ता अवलं सरीरं, भारंडपक्खी व चरऽप्पमत्तो ॥ ६ ॥ (सूत्रम्)

व्याख्या—'सुप्तेषु' द्रव्यतः शयानेषु भावतस्तु धर्म्मं प्रत्यजाग्रत्सु, चः पादपूरणे, 'चशब्दः समाहारेतरेतरयोगसमुच्चयावधारणपादपूरणाधिकवचनादिष्वि'ति वचनात्, अपिः सम्भावने, ततोऽयमर्थः—सुप्तेष्वप्यास्तां जाग्रत्सु च, किमित्याह—प्रतिबुद्धं—प्रतिबोधः द्रव्यतो जाग्रत्ता भावतस्तु यथावस्थितवस्तुतत्त्वावगमस्तेन जीवितुं—प्राणान् धर्त्तुं शीलमस्येति प्रतिबुद्धजीवी, यदि वा प्रतिबुद्धो—द्विधाऽपि प्रतिबोधवान् जीवतीत्येवंशीलः—प्रतिबुद्धजीवी, कोऽभिप्रायः ?—द्विधा प्रसुप्तेष्वपि अविवेकिषु न गतानुगतिकतयाऽयं स्वपिति, किन्तु प्रतिबुद्ध एव यावज्जीवमास्ते, तत्र च द्रव्यनिद्राप्रतिषेधे अगडदत्तोदाहरणं, तत्र च वृद्धवादः—

उंज्जेणीए जियसत्तुस्स रण्णो अमोहरहो नाम रहितो, तस्स जसमती नाम भज्जा, तीसे अगडदत्तो नाम पुत्तो,

१ उज्जयिन्यां जितशत्रो राज्ञोऽमोघरथो नाम रथिकः, तस्य यशोमती नाम भार्या, तस्या अगडदत्तो नाम पुत्रः

जहा केइ धातुवाइया सदीवगा अग्गिं इंधण च गहाय विलमणुपविट्ठा, सो तेसिं पमाएण दीवो अग्गीवि विज्झातो, ततो ते विज्झायदीवग्गीया गुहातममोहिया इतो ततो सयतो परिभमति, परिभमता अपडियारमहाविसेहिं सप्पेहिं डका दुरत्तरे अहे निवडिया, तत्थेव णिहणमुवगया ॥ एव अनन्त –अपर्यवसित , तद्भयापेक्षया प्रायस्तस्यानपगमात् , मुह्यते येनासौ मोहो–ज्ञानावरणदर्शनावरणमोहनीयात्मक , ततश्चानन्तो मोहोऽस्येति अनन्तमोह , किमित्याह–'णेयाउय'त्ति निश्चित आयो–लाभो न्यायो–मुक्तिरित्यर्थ , स प्रयोजनमस्येति नैयायिकस्त, सम्यग्दर्शनादिक मुक्तिमार्गमिति गम्यते, 'दट्टु' ति अन्तर्भूतापिशब्दार्थत्वाद्दृष्ट्वाऽपि–उपलभ्याप्यदृष्टेव भवति, तद्दर्शनफलाभावात् , अथवा 'अदट्ठुमेव'त्ति प्राकृतत्वादद्रष्टैव भवति, इदमत्राकूतम्–यथैप गुहा तर्गत प्रमादात् प्रणष्टदीप प्रथमसुपलब्धयस्तुतत्त्वोऽपि दीपाभावे तदद्रष्टैव जायते, तथाऽयमपि जन्तु कथञ्चित् कर्मक्षयोपशमादेः सम्यग्दर्शनादिक मुक्तिमार्ग भावप्रकाशदीपत श्रुतज्ञानात्मकात् दृष्ट्वाऽपि वित्तादिव्यासक्तितस्तदावरणोदयादद्रष्टैव भवति, तथा च न केवल सतत्राणाय वित्त न भवति, किन्तु कथञ्चित् त्राणहेतु सम्यग्दर्शनादिकमप्ययासमुपह-

१ यथा केचिद्धातुवादिन सदीपका अग्निमिन्धन च गृहीत्वा विलमनुप्रविष्टा , स तेषा प्रमादेन दीपोऽग्निरपि विध्यातः, ततस्ते विध्यातदीपाग्नयो गुहातमोमोहिता इतस्तत सर्वत परिभ्राम्यन्ति, परिभ्राम्य तोऽप्रतीकारमहाविषै सर्पैर्दष्टा उरुत्तरे गर्ते निपतिता , तत्रैव निधनमुपगता ।

देहं किं मे अन्नेण दाणेणंति ?। आसिं चेव देसकाले पुरजणवएण राया विण्णविओ—देवाणुप्पियाणं पुरे असुयपुव्वं संधिछेज्जं संपयं च दव्वहरणं परिमोसो य केणवि कयं, तं अरहंतु णं देवाणुप्पिया ! नगरस्स सारक्खणं काउं, ततो आणत्तो राइणा णगरारक्खो—सत्तरत्तस्स अब्भिंतरे जहा घेप्पति तहा कुणसुत्ति, तं च सोऊण एस थक्को मम गमणस्सत्ति परिगणंतेण विन्नवितो राया, जहा—अहं सत्तरत्तस्स अब्भंतरे चोरे सामि ! तुब्भपायमूलं उवणेस्सामि, तं च वयणं रायणा पडिसुयं, अणुमन्नियं च एवं कुणसुत्ति। तओ सो हट्ठतुट्ठमाणसो निग्गतो रायकुलातो, चिंतियं च णेणं—जहा दुट्ठपुरिसतकरा पाणागाराइट्ठाणेसु णाणाविहलिंगवेसपडिच्छन्ना भमंति, अतो अहमेयाणि ठाणाणि अप्पणा चारपुरिसेहि य मग्गावेमि, मग्गावेऊण निग्गतो नयरातो, निद्धाइऊण इक्कतो एक्कस्स सीयलच्छायस्स

१ ददासि किं मम अन्येन दानेनेति ?। अस्मिन्नेव देशकाले पुरजनपदेन राजा विज्ञप्तः—देवानुप्रियाणां पुरेऽश्रुतपूर्वः संधिच्छेदः साम्प्रतं च द्रव्यहरणं परिमोषश्च केनापि कृतः, तदर्हन्ति देवानुप्रियाः ! नगरस्य संरक्षणं कर्तुं, तत आज्ञप्तो राज्ञा नगरारक्षः—सप्तरात्रस्याभ्यन्तरे यथा गृह्यते तथा कुर्विति, तच्च श्रुत्वा एषोऽवसरो मम गमनस्येति परिगणयता विज्ञप्तो राजा, यथा—अहं सप्तरात्रस्याभ्यन्तरे चौरान् स्वामिन् ! तव पादमूलमुपनेष्यामि, तच्च वचनं राज्ञा प्रतिश्रुतम्, अनुमतं चैनं कुर्विति। ततः स हृष्टतुष्टमानसो निर्गतो राजकुलात्, चिन्तितं चानेन—यथा दुष्टपुरुषतस्कराः पानागारादिस्थानेषु नानाविधलिङ्गवेषप्रतिच्छन्ना भ्राम्यन्ति, अतोऽहमेतानि स्थानान्यात्मना चारपुरुषैश्च मार्गयामि, मार्गयित्वा निर्गतो नगरात्, निर्गत्य एकस्यां (दिशि) एकस्य शीतलच्छायस्य

तस्स य बालभावे चेव पिया उवरतो। सो य अनया अभिक्खणं रोयमाणिं मायरं पुच्छइ, तीए निब्बंधेण कहियं— जहा एस अमोहपहारी रहिओ तुह पिउसन्तियं रिद्धिं पत्तो, तं च पच्चक्खकडुयं, तुमं च अकयविज्जं दट्ठुं अतो अईव डज्झामि, तेण भणियं—अत्थि कोइ जो मं सिक्खावेति, तीए भणियं—अत्थि कोसंबीए दढप्पहारी नाम पिउमित्तो, गतो कोसंबिं, दिट्ठो दढप्पहारी ईसत्थसत्थरहचरियाकुसलो आयरितो, तेण पुत्तो विव णिप्फाइओ ईसत्थे कुंतादिपाडियके जतमुके य अनासु वि कलासु। अण्णया गुरुजणाणुण्णातो सिद्धविज्जो सिक्खादंसणं काउं रायकुलं गतो, तत्थ य असिक्खेडयगहणाइयं जहासिक्खियं सव्वं दाइयं, जहा सव्वो जणो हयहियओ जातो, राया भणइ— नत्थि किंचि अच्छेरयं, नेव य विम्हितो, भणति—किं किं ते देमि ?, तेण विन्नवितो—सामि ? तुब्भे मम साधुकारं ण

१ तस्य च बालभावे एव पितोपरतः। स चान्यदाऽभीक्ष्णं रुदतीं मातरं पृच्छति, तया निर्बन्धेन कथितं—यथैषोऽमोघप्रहारी रथिकस्तव पितृगतां ऋद्धिं प्राप्त, तच्च प्रत्यक्षकटुकं, त्वां चाकृतविद्यं दृष्ट्वाऽतोऽतीव दह्ये, तेन भणितम्—अस्ति कश्चित् यो मां शिक्षयति, तया भणितम्—अस्ति कौशाम्ब्यां दृढप्रहारी नाम पितृमित्रं, गतः कौशाम्बीं, दृष्टो दृढप्रहारी इष्वस्त्रशास्त्ररथचर्याकुशल आचार्यः, तेन पुत्र इव निष्पादित इष्वस्त्रे कुन्तादिषु प्रक्षेप्यमोक्ष्ये चान्यास्वपि कलासु। अन्यदा गुरुजनानुज्ञातः सिद्धविद्यः शिक्षादर्शनं कारयितुं राजकुलं गतः, तत्र चासिखेटकग्रहणादिकं यथाशिक्षितं दर्शितं सर्वं, यथा सर्वो जनो हृतहृदयो जातः, राजा भणति—नास्ति किञ्चिदाश्चर्यं, नैव च विस्मितः, भणति—किं किं तुभ्यं ददामि ?, तेन विज्ञप्त—स्वामिन् ! मम साधुकारं न

यं उत्ताणणयणपेच्छणिज्जं कस्सवि पुण्णविसेससिरिसूयगं भवणं, तत्थ य सिरिवच्छसंठाणं संधिं छेत्तूण अतिगतो परिवायतो, णीणीयातो अणेगभंडभरियातो पेडातो, तत्थ य तं ठवेऊण गतो, अगडदत्तेण चिंतियं—अंतगमणं करेमि, ताव य आगतो परिवायतो जक्खदेउलातो सइएल्लए दालिद्दपुरिसे घेत्तूण, तेण ते य ताओ पेडातो गिण्हाविया, निद्धाइया य सव्वे नयरातो, भणति य परिवायतो—पुत्त ! इत्थ जिण्णुज्जाणे मुहुत्तागं निद्दाविणोयं करेमो जाव रत्ती गलति, तत्तो गमिस्सामोत्ति, ततो तेण लवियं—ताय ! एवं करेमत्ति, ततो तेहिं पुरिसेहिं ठवियाओ पेडातो, णिद्दावसं च उवगया, तो सो य परिवायतो अगलदत्तो य सेज्जं अत्थरिऊण अलियसुईयं काऊण अच्छंति। तओ य अगलदत्तो सणियं उट्ठेऊण अवक्कंतो रुक्खसंछण्णो अच्छति, ते य पुरिसा निद्दावसं गया जाणिऊण वीसंभघाइणा परिवायएण

१ च उत्ताननयनप्रेक्षणीयं कस्यापि पुण्यविशेषश्रीसूचकं भवनं, तत्र च श्रीवत्ससंस्थानं सन्धिं छित्त्वाऽतिगतः परिव्राजकः, अनेकभाण्डभृताः पेटा निष्काशिताः, तत्र च तं स्थापयित्वा गतः, अगडदत्तेन चिन्तितम्—अन्तगमनं करोमि ?, तावच्चागतः परिव्राजको यक्षदेवकुलात् सदा भ्राम्यतः (स्वकीयान्) दरिद्रपुरुषान् गृहीत्वा, तेन च तैः ताः पेटा ग्राहिताः, निर्गताश्च सर्वे नगरात्, भणति च परिव्राजकः—पुत्र ! अत्र जीर्णोद्याने मुहूर्त्तं निद्राविनोदं कुर्मो यावद्रात्रिर्गच्छति ततो गमयिष्याम इति, ततस्तेन लप्तं—तातैवं कुर्म इति, ततस्तैः पुरुषैः स्थापिताः पेटाः, निद्रावशं चोपगताः, ततः स च परिव्राजकोऽगडदत्तश्च शय्यामास्तीर्य अलीकस्वपितं कृत्वा तिष्ठतः। ततश्चागडदत्तः शनैरुत्थायापक्रान्तो वृक्षसंछन्नस्तिष्ठति, ते च पुरुषा निद्रावशं गताः ज्ञात्वा विश्रब्धघातिना परिव्राजकेन

सहयारस्स पायवस्स हेट्ठा णिविट्ठो दुब्बलमयलवत्थो, चोरगहणोवाय चिंतयतो अच्छति, णवरि जकिपि मुणमुणायतो त चेय सहयारपायवच्छायमुवगतो परिघायतो, अयपल्लवसाह भजिऊण णिविट्ठो, दिट्ठो य तेण ओवद्धपिडितो दीहजघो, दट्ठूण य आसकितो हियएण–पावकम्मसूयगाइ लिगाइ, णूण एस चोरोत्ति, भणितो य सो परिव्वायगेण—वच्छ ! कुतो तुम किंनिमित्त वा हिंडसि ?, ततो तेण भणिय–भयव ! उज्जेणीतो अह पक्खीणविभवो हिंडामि, तेण भणिय—पुत्त ! अह ते विउल अत्थसार दलयामि, अगलदत्तो भणति–अणुग्गहिओऽम्हि तुब्भेहि। एव च अदसणो गतो दिणयरो, अइक्कता सझा, कड्ढिय तेण तिदडातो सत्थय, वद्धो परियरो, उट्ठितो भणति—णगर अइगच्छामोत्ति, ततो अगलदत्तो ससकितो त अणुगच्छइ, चितेति य–एस सो तक्करोत्ति, पविट्ठो णयर, तत्थ

१ सहकारस्य पादपस्याधस्तान्निविष्टो दुर्बलमलिनवस्त्र , चौरग्रहणोपाय चिन्तयस्तिष्ठति, नवर यत्किमपि जल्पन् तामेव सहकारपादपच्छायामुपगत परिव्राजक , आम्रपल्लवशाखा भङ्क्त्वा निविष्ट , दृष्टश्च तेनाववद्धपिण्डिको दीर्घजङ्घ , दृष्ट्वा च आशङ्कितो हृदयेन—पापकर्मसूचकानि लिङ्गानि, नूनमेष चौर इति, भणितश्च स परिव्राजकेन–वत्स ! कुतस्त्व किंनिमित्त वा हिण्डसे ?, तत तेन भणित–भगवन् ! उज्जयिनीत अह प्रक्षीणविभवो हिण्डे, तेन भणित–पुत्र ! अह तुभ्य विपुलमर्थसार ददामि, अगडदत्तो भणति–अनुगृहीतोऽस्मि युष्माभि । एव चादर्शन गतो दिनकर , अतिक्रान्ता सन्ध्या, कृष्ट तेन त्रिदण्डात् शस्त्रक, वद्ध परिकर , उत्थितो भणति–नगरमतिगच्छाव इति, ततोऽगडदत्त सशङ्कितस्तमनुगच्छति, चिन्तयति च–एष स तस्कर इति, प्रविष्टो नगर, तत्र

भणइ य-इत्थ वीसामं करेह, तओ न सो निद्दावसमुवगतो वक्खित्तचित्ताए, अन्नं ठाणं गंतूण ठिओ पच्छन्नं, तहिं च सयणिज्जे पुव्वसज्जिया सिला, सा ताए पाडिया चुण्णिया य सेज्जा, सा य हट्ठतुट्ठमाणसा भणति-हा हओ भाउघायगोत्ति, अगडदत्तोऽवि ततो णिद्धाइऊण वालेसु घेत्तूण भणति-हा दासीए धीए को मं घायइत्ति ?, तओ सा पाएसु निवडिया सरणाऽऽगयामिति भणंती, तेणासासिया, मा वीहेहित्ति । सो तं घेत्तूण गतो राउलं, पूजितो रण्णा पुरजणवएण य, भोगाण य भागीजातोत्ति ॥ एवं अन्नेऽवि अपमत्ता इहेव कल्लाणभाइणो भवंति। उक्तो द्रव्यसुप्तेषु प्रतिबुद्धजीविनो दृष्टान्तः, भावसुप्तेषु तु तपस्विनः, ते हि मिथ्यात्वादिमोहितेष्वपि जनेषु यथावदवगमपूर्वकमेव संयमजीवितं धारयन्तीति, एवंविधश्च किं कुर्यादित्याह—न विश्वस्यात्, प्रमादेष्विति गम्यते, किमुक्तं भवति ?-बहुजनप्रवृत्तिदर्शनान्नैतेऽनर्थकारिण इति न विश्रम्भवान् भवेत्, 'पण्डितः' प्राग्वत्, आशु-शीघ्रमुचि-

१ भणति च-अत्र विश्रामं कुरु, ततो न स निद्रावशमुपगतो व्याक्षिप्तचित्ततया, अन्यत् स्थानं गत्वा स्थितः प्रच्छन्नं, तत्र च शयनीये पूर्वसज्जिता शिला, सा तया पातिता चूर्णिता च शय्या, सा च हृष्टतुष्टमानसा भणति—हा हतो भ्रातृघातक इति, अगडदत्तोऽपि ततो निर्गत्य वालेषु गृहीत्वा भणति—हा दास्या धिया ( दासि ! ईदृग्धिया ) को मां घातयतीति, ततः सा पादयोर्निपतिता शरणाऽऽगताऽस्मीति भणन्ती, तेनाश्वासिता, मा भैषीरिति । स तां गृहीत्वा गतो राजकुलं, पूजितो राज्ञा पुरजनपदेन च, भोगानां चाऽऽभागीजात इति ॥ एवमन्येऽपि अप्रमत्ता इहैव कल्याणभागिनो भवन्ति

मारिया, अगलदत्त च तत्थ सत्थरे अपेच्छमाणो मग्गिउं पयत्तो, मग्गतो य साहापच्छाइयसरीरेण अभिमुहमागच्छतो असदेसे असिणा आहतो, गाढपहारीकतो पडितो, पच्चागयसन्नेण य भणितो अगलदत्तो—वच्छ ! गिण्ह इमं असिं, वच्च मसाणस्स पच्छिमभागं, गतूण सतिज्जाघरस्स भित्तिपासे सद्दं करेज्जासि, तत्थ भूमिघरे मम भगिणी वसति, ताए असिं दाएज्जसु, सा ते भज्जा भविस्सति, सव्वदव्वस्स य सामी भविस्ससि, अह पुण गाढपहारो अइक्कतजीवोत्ति । गओ य अगलदत्तो असिलट्ठिं गहाय, दिट्ठा य सा तत्तो भवणवासिणीविव पेच्छणिज्जा, भणइ य—कतो तुमंति ?, दाइतो अगलदत्तेण असिलट्ठी, विसन्नवयणहिययाए सोयं निगूहंतीए ससंभमं अतिनीतो सतिज्जाघरं, दिन्नं आसणं, उवविट्ठो अगलदत्तो ससंकितो, से चरियं उवलक्खेइ य, सा अतिआयरेण सयणिज्जं रएइ,

---

१ मारिता, अगडदत्त च तत्र संस्तारेऽप्रेक्षमाणो मार्गयितुं प्रवृत्त, मार्गयंश्च शाखाच्छन्नशरीरेणाभिमुखमागच्छन् असदेशेऽसिनाऽऽहतो, गाढप्रहारीकृत पतित, प्रत्यागतसंज्ञेन च भणितोऽगडदत्त —वत्स गृहाणेममसिं, व्रज श्मशानस्य पश्चिमभाग, गत्वा शान्त्यार्यागृहस्य भित्तिपार्श्वे शब्दं कुर्यां, तत्र भूमिगृहे मम भगिनी वसति, तस्यै असिं दर्शये, सा तव भार्या भविष्यति, सर्वद्रव्यस्य च स्वामी भविष्यसि, अह पुनर्गाढप्रहारोऽतिक्रान्तजीव इति । गतश्चागडदत्तोऽसियष्टिं गृहीत्वा, दृष्टा च सा तत्र भवनवासिनीव प्रेक्षणीया, भणति च—कुतस्त्वमिति ?, दर्शितोऽगडदत्तेनासियष्टि, विषण्णवदनहृदयया शोकं निगूहन्त्या ससंभ्रममतिनीत शान्त्यार्यागृहं, दत्तमासनम्, उपविष्टोऽगडदत्त सशङ्कित, तस्याश्चरितमुपलक्षयति च, सा अत्यादरेण शयनीयं रचयति,

'परिशङ्कमानो' मा ममेह प्रवर्त्तमानस्य मूलगुणेषु मालिन्यं स्खलना वा भविष्यतीति परिभावयन् प्रवर्त्तेत, 'जं किंचि'त्ति यत्किञ्चिदल्पमपि दुश्चिन्तितादि प्रमादपदं मूलगुणादिमालिन्यजनकतया बन्धहेतुत्वेन पाशमिव पाशं मन्यमानः, तदयमुभयत्राभिप्रायः—यथा भारण्डपक्षी अपरसाधारणान्तर्वर्त्तिचरणतया पदानि परिशङ्कमान एव चरति यत्किञ्चिद्दवरकादिकमपि पाशं मन्यमानः तथाऽप्रमत्तश्चरेत्, ननु यदि परिशङ्कमानश्चरेत्तर्हि सर्वथा जीवितनिरपेक्षेणैव प्रवर्त्तितव्यं, तत्सापेक्षतायां हि कदाचित्कथञ्चिदुक्तदोषसम्भव इत्याशङ्क्याह—'लाभंतरे'त्यादि वृत्तार्द्धं, लम्भनं लाभः-अपूर्वार्थप्राप्तिः अन्तरं—विशेषः, लाभश्चासावन्तरं च लाभान्तरं तस्मिन् सतीत्यर्थः, किमुक्तं भवति ?—यावद्विशिष्टविशिष्टतरसम्यग्ज्ञानदर्शनचारित्रावाप्तिरितः सम्भवति तावदिदं 'जीवितं' प्राणधारणात्मकं 'बृंहयित्वा' अन्नपानोपयोगादिना वृद्धिं नीत्वा, तदभावे प्रायस्तदुपक्रमणसम्भवादित्यमुक्तं, 'खुहा पिवासा य वाही य'त्ति वचनात् क्षुदादीनामप्युपक्रमणकारणत्वेनाभिधानाद्, इह च बृंहयित्वेव बृंहयित्वेति व्याख्येयम्, अन्यथा ह्यसंस्कृतं जीवितमिति विरुध्यत इति भावनीयं, ततः किमित्याह—'पश्चात्' लाभविशेषप्राप्त्युत्तरकालं 'परिण्णाय'त्ति सर्वप्रकारैरवबुध्य यथेदं नेदानीं प्राग्वत्सम्यग्दर्शनादिविशेषहेतुः, तथा च नातो निर्जरा, न हि जरया व्याधिना वा अभिभूतं तत् तथाविधधर्माधानं प्रति समर्थम्, उक्तं हि—"[1]जरा जाव ण पीलेति, वाही जाव ण वड्ढति। जाविंदिया ण हायंति, ताव

१ जरा यावन्न पीडयति व्याधिर्यावन्न वर्धते। यावदिन्द्रियाणि न हीयन्ते, तावद्धर्मं समाचरेत्॥ १॥

तकर्त्तव्येषु यतितव्यमिति प्रज्ञा-बुद्धिरस्येति-आशुप्रज्ञ, किमिति आशुप्रज्ञ ?, यतो घूर्णयन्तीति घोरा -निरनुकम्पा, सततमपि प्राणिनां प्राणापहारित्वात्, क एते ?-'मुहूर्त्ता' कालविशेषा, कदाचिच्छरीरबलाद् घोरा अप्यमी न प्रभविष्यन्तीत्यत आह—'अबलं' बलविरहितं न मृत्युदायिनो मुहूर्त्तान् प्रति सामर्थ्यवत्, किं तत् ?-शरीरम्, एवं तर्हि किं कृत्यमित्याह—'भारण्डपक्खीव चरऽप्पमत्तो' इति पतत्यनेनेति पक्ष सोऽस्यास्तीति पक्षी भारण्डश्चासौ पक्षी च भारण्डपक्षी स यद्वदप्रमत्तश्चरति तथा त्वमपि प्रमादरहितश्चर-विहितानुष्ठानमासेवस्व, अन्यथा हि यथाऽस्य भारण्डपक्षिण पक्ष्यन्तरेण सहान्तर्वर्त्तिसाधारणचरणसम्भवात् स्वल्पमपि प्रमाद्यतोऽवश्यमेव मृत्यु तथा तवापि संयमजीविताद् भ्रंश एव प्रमाद्यत इति सूत्रार्थ ॥ ६ ॥ अमुमेवार्थं स्पष्टयन्नाह—

चरे पयाइं परिसंकमाणो, जं किंचि पासं इह मन्नमाणो ।
लाभंतरे जीविय वूहइत्ता, पच्छा परिण्णाय मलावधंसी ॥ ७ ॥ (सूत्रम्)

व्याख्या—'चरेत्' गच्छेत् 'पदानि' पादविक्षेपरूपाणि 'परिशङ्कमान' अपायं विगणयन्, किमित्येवमत आह—'यत्किञ्चिद्' गृहस्थसंस्तवाद्यल्पमपि पाशमिव पाशं संयमप्रवृत्तिं प्रति स्वातन्त्र्योपरोधितया 'मन्यमानो' जानान, यद्वा 'चरेदि'ति संयमाध्वनि यायात्, किं कुर्वन् ?-'पदानि' स्थानानि, धर्म्मस्येति गम्यते, तानि च मूलगुणादीनि

वेति, तत्थ य से भगिणी कन्नगा चिट्ठति, तस्स भूमिघरस्स मज्झे कूवो, जं च सो चोरो दव्वेण पलोभेउं सहायं दव्ववोढारं आणेति तं सा से भगिणी अगडसमीवे पुव्वणत्थासणे णिवेसेउं पायसोयलक्खेण पाए गिण्हिऊण तम्मि कूवे पक्खिवइ, ततो सो तत्थेव विवज्जइ, एवं कालो वचति नयरं मुसंतस्स, चोरगाहा तं ण सक्किंति गिण्हिउं, तओ नयरे उवरतो जातो। तत्थ मूलदेवो राया, सो कहं राया संवुत्तो ?—उज्जेणीए नयरीए सव्वगणियापहाणा देवदत्ता नाम गणिया, तीए सद्धिं अयलो नाम वाणियदारतो विभवसंपण्णो मूलदेवो य संवसइ, तीए मूलदेवो इट्ठो, गणियामाऊए अयलो,सा भणति–पुत्ति ! किमेएणं जूइकारेणंति ?, देवदत्ताए भणति–अम्मो ! एस पण्डितो, तीए भणइ–किं एस अम्ह अब्भहियं विण्णाणं जाणति, अयलो बाहत्तरिकलापंडिओ एव, तीए भणति–वच्छ !

१. पति, तत्र च तस्य भगिनी कन्या तिष्ठति, तस्य भूमिगृहस्य मध्ये कूपः, यं च स चौरो द्रव्येण प्रलोभ्य सहायं द्रव्यवोढारमानयति तं सा तस्य भगिनी अवटसमीपे पूर्वन्यस्तासने निवेश्य पादशौचमिषेण पादौ गृहीत्वा तस्मिन् कूपे प्रक्षिपति, ततः स तत्रैव विपद्यते, एवं कालो व्रजति नगरं मुष्णतः, चौरग्राहास्तं न शक्नुवन्ति ग्रहीतुं, ततो नगरे उपरको ( उपद्रवो ) जातः। तत्र मूलदेवो राजा, स कथं राजा संवृत्तः ?—उज्जयिन्यां नगर्यां सर्वगणिकाप्रधाना देवदत्ता नाम गणिका, तया सार्धमचलो नाम वणिग्दारको विभवसंपन्नो मूलदेवश्च संवसति, तस्या मूलदेव इष्टः, गणिकामातुरचलः, सा भणति–पुत्रि ! किमेतेन द्यूतकारेण ? इति, देवदत्तया भण्यते—अम्ब ! एष पण्डितः, तया भण्यते—किमेषोऽस्मात् अभ्यधिकं विज्ञानं जानाति ?, अचलो द्वासप्ततिकलापण्डित एव, तया भण्यते—वत्से !

धम्म समायरे ॥ १ ॥" एव ज्ञपरिज्ञया परिज्ञाय तत प्रत्याख्यानपरिज्ञया च भक्त प्रत्याख्याय, सर्वथा जीवितनिरपेक्षो भूत्वेति भाव, मलवदत्यन्तमात्मनि लीनतया मल—अष्टप्रकार कर्म्म तदपध्वंसत इत्येवशील मलापध्वसी—मलविनाशकृत्, स्यादिति शेप, ततो यावल्लाभ देहधारणमपि गुणार्यैवेति भाव, यद्वा जीवित बृहयित्वा लाभान्तरे—लाभविच्छेदेऽन्तर्बहिश्च मलाश्रयत्वान्मल—औदारिकशरीर तदपध्वसी स्यात्, कोऽर्थ ?—जीवित त्यजेद्, इदमुक्त भवति—अयमस्यैको हि गुणो मानुष्यमवाप्य लभ्यते धर्म्म इति भावयन् यावदितस्तल्लाभ तावदिद बृहयेत्, लाभविच्छेद सम्भाव्य सलेखनादिविधानतस्त्यजेत् ॥ इह च यावल्लाभधारणे मण्डिकचौरोदाहरण, तत्र च सम्प्रदाय —

विन्नागंयडे नयरे मडितो नाम तुण्णातो परदव्वहरणपसत्तो आसी, सो य दुट्ठगडो मित्ति जणे पगासेंतो जाणुदेसेण णिच्चमेव अद्दयालेवलित्तेण रायमग्गे तुण्णागस्स सिप्पमुवजीवति, चंकमतोऽवि य दडधरिएण पाएण किलिस्सतो कहिंवि चकमति, रत्ति च खत्त खणिऊण दव्वजाय घेत्तूण णगरसंनिहिए उज्जाणेगदेसे भूमिघर, तत्थ णिक्खि-

१ वेन्नाकतटे नगरे मण्डिको नाम तन्तुवाय परद्रव्यहरणप्रसक्त आसीत्, स च दुष्टव्रणोऽस्मीति जने प्रकाशयन् जानुदेशेन नित्यमेव आर्द्रकलेपलिप्तेन राजमार्गे तन्तुवायस्य शिल्पमुपजीवति, चङ्क्रम्यमाणोऽपि च धृतदण्डेन पादेन क्लिश्यन् कथचिदपि चङ्क्रम्यते, रात्रौ च क्षत्र खनित्वा द्रव्यजात गृहीत्वा नगरसन्निहिते उद्यानैकदेशे भूमिगृह, तत्र निक्षि

अच्छइ, गणिया माऊए अयलो य अप्पाहितो, अन्नाओ पविट्ठो बहुपुरिससमग्गो वेढिउं गब्भगिहं, मूलदेवो अइ-संभमेण सयणीयस्स हिट्ठा णिलुक्को, तेण लक्खितो, देवदत्ताए दासचेडीतो संवुत्तातो अचलस्स सरीरऽब्भंगादि घेत्तुं उवट्ठिया, सो य तंमि चेव सयणीए ठियनिसन्नो भणइ—इत्थ चेव सयणीए ठियं अब्भंगेहि, तातो भणंति—विणासिज्जइ सयणीयं, सो भणइ—अहं एत्तो उक्किट्ठतरं दाहामो, मया एवं सुविणो दिट्ठो, सयणीयऽब्भंगणउव्वलण-ण्हाणादि कायव्वं, ताहिं तधा कयं, ताहे ण्हाणगोल्लो मूलदेवो अयलेण वालेसु गहाय कड्ढितो, संलत्तो यऽणेण—वच्च मुक्कोऽसि, इयरहा ते अज्ज अहं जीवियस्स विवसामि, जदि मया जारिसो होज्जाहि ता एवं मुचेज्जाहि(त्ति) अयला-भिहितो तओ मूलदेवो अवमाणितो लज्जाए निग्गओ उज्जेणीए, पत्थयणविरहितो वेन्नायडं जतो पत्थितो, एगो से

१. तिष्ठति, गणिकामात्रा च अचलः संदिष्टः, अन्यस्मात् ( अन्येन द्वारेण ) प्रविष्टः बहुपुरुषसमग्रो वेष्टयित्वा गर्भगृहं, मूलदेवोऽतिसंभ्रमेण शयनीयस्याधस्तान्निलीनः, तेन लक्षितः, देवदत्तया दासचेट्यः समुक्ताः अचलस्य शरीराभ्यङ्गादि गृहीत्वोपस्थिताः, स च तस्मिन्नेव शयनीये स्थितनिषण्णो भणति—अत्रैव शयनीये स्थितमभ्यङ्ग्य, ता भणन्ति—विनाश्यते शयनीयं, स भणति—अहमित उत्कृष्टतरं दास्यामि, मयैवं स्वप्नो दृष्टः, शयनीयाभ्यङ्गनोद्वर्त्तनस्नानादि कर्त्तव्यं, ताभिस्तथा कृतं, तदा स्नानविलेपनार्द्रो मूलदेवोऽचलेन वालेषु गृहीत्वाऽऽकृष्टः, संलप्तश्चानेन—व्रज मुक्तोऽसि, इतरथा तेऽद्य जीवितस्य व्यवस्यामि, यदि मादृशो भवेस्तदैवं मुञ्चेरिति अचलाभिहितस्ततो मूलदेवोऽवमतो लज्जया निर्गत उज्जयिन्याः, पथ्यदनरहितः वेन्नातटं यतः प्रस्थितः, एकस्तस्य

अयल भण-देवदत्ताए उच्छु खाइउ सद्धा, तीए गतूण भणितो, तेण चिंतिय-कओ खु ताइ अह देवदत्ताए पणतितो, तेण सगड भरेऊण उच्छुयलट्ठीण उवणीय, ताए भण्णति—किमह हत्थिणी ?, तीए भणिय-वच्च मूलदेव भण-देवदत्ता उच्छु खाइउ अहिलसति, तीए गतूण से कहिय, तेण य कइ उच्छुलट्ठीतो छलेउ गंडलीतो काउचाउज्जायगादिसुवासियातो काउ पेसियाओ, तीए भण्णति—पिच्छ विण्णाणति, सा तुण्हिक्का ठिया, मूलदेवस्स पओसमावण्णा अयल भणति-अह तहा करेमि जहा मूलदेव गिण्हिस्सित्ति, तेण अट्ठसय दीणाराण तीए भाडिणिमित्त दिन्न, तीए गतु देवदत्ता भण्णति-अज्ज अयलो तुमे सम वसिही, इमे दीणारा दत्ता, अवरण्हवेलाए गतु भणति-अयलस्स कज्ज तुरिय जाय तेण गाम गतोत्ति, देवदत्ताए मूलदेवस्स पेसिय, आगतो मूलदेवो, तीए समाण

१ अचल भण-देवदत्ताया इक्षून् खादितु श्रद्धा, तया गत्वा भणित , तेन चिन्तित-के इक्षव (क खलु)ते अह देवदत्तया प्रणयित , तेन शकट भृत्वा इक्षुयष्टीनामुपनीत, तया भण्यते-किमह हस्तिनी ?, तया भणित-व्रज मूलदेव भण—देवदत्ता इक्षु खादितुमभिलष्यति, तया गत्वा तस्मै कथित, तेन च कतिचिदिक्षुयष्टयो निस्त्वचीकृत्य खण्डीकृत्य चातुर्जातकादिसुवासिता कृत्वा च प्रेपिता , तया भण्यते—पश्य विज्ञानमिति, सा तूष्णीका स्थिता,मूलदेवे प्रद्वेषमापन्नाऽचल भणति—अह तथा करोमि यथा मूलदेव ग्रहीष्यसीति,तेनाष्टशत दीनाराणा तस्यै भाटीनिमित्त दत्त, तया गत्वा देवदत्ता भण्यते-अद्याचलस्त्वया सम वत्स्यति, इमे च दीनारा दत्ता , अपराह्णवेलाया गत्वा भणति-अचलस्य कार्य त्वरित जात तेन ग्राम गत इति, देवदत्तया मूल्देवाय प्रेपित ( धूर्त ), आगतो मूल देव , तया सम

वण्णेणं पराए भत्तीए तेहिं कुम्मासेहिं सो साधू पडिलाभितो, भणियं चऽणेणं—'धन्नाणं खु नराणं कोम्मासा हुंति साहुपारणए' देवयाए अहासन्निहियाए भणणति–पुत्त ! एतीए गाहाए पच्छद्धे जं मग्गसि तं देमि, 'गणियं च देवदत्तं दंतिसहस्सं च रज्जं च ॥ १ ॥' देवयाए भणणति—अचिरेण भविस्सतित्ति, ततो गतो मूलदेवो वेन्नायडं, तत्थ खत्तं खणंतो गहितो, वज्झाए नीणिज्जइ, तत्थ पुण अपुत्तो राया मओ, आसो अहियासिओ, मूलदेवसगासमागतो, पट्टिदायणं रज्जे अहिसित्तो राया जाओ, सो पुरिसो सद्दाविओ, सो अणेण भणितो–तुज्झं तणियाए आसातेआगतो अहं, इहरहा अहं अंतराले चेव विवज्जंतो, तेण तुज्झं एस मया गामो दत्तो, मा य मम सगासं एज्जसुत्ति, पच्छा उज्जेणीएण रण्णा सद्धिं पीतिं संजोएति, दाणमाणसंपूतियं च काउं देवदत्तं अणेण मग्गितो, तेण पच्चुवगा-

१. पन्नेन परया भक्त्या तैः कुल्माषैः स साधुः प्रतिलम्भितः, भणितं चानेन—'धन्यानामेव नराणां कुल्माषाः साधुपारणके भवन्ति' देवतया यथासन्निहितया भण्यते—पुत्र ! एतस्या गाथायाः पश्चार्धेन यन्मार्गयसि तद्ददामि–'गणिकां च देवदत्तां दन्तिसहस्रं च राज्यं च ॥ १ ॥' देवतया भण्यते–अचिरेण भविष्यतीति, ततो गतो मूलदेवो वेन्नातटं, तत्र क्षत्रं खनन् गृहीतः, वध्यायां नीयते, तत्र पुनः अपुत्रो राजा मृतः, अश्वोऽधिवासितः, मूलदेवसकाशमागतः, पृष्ठिदानं राज्येऽभिषिक्तो राजा जातः, स पुरुषः शब्दितः, सोऽनेन भणितः—त्वत्सत्कयाऽऽशया आगतोऽहम्, इतरथा अहमन्तराल एव व्यपत्स्ये, तेन तुभ्यमेष मया ग्रामो दत्तः, मा च मम सकाशमायासीरिति, पश्चादुज्जयिनीयेन राज्ञा सार्धं प्रीतिं संयोजयति, दानमानसत्कारं ( सम्पूजितां ) च कृत्वा देवदत्तामनेन मार्गितः, तेन प्रत्युपका—

पुरिसो मिलितो, मूलदेवेण पुच्छितो–कहिं जासि ?, तेण भण्णति—विण्णायतडमि, मूलदेवेण भण्णति–दोऽवि सम वच्चामोत्ति, तेण सलत्त–एवं भवउत्ति, दोऽवि पट्ठिया, अंतरा य अडवी, तस्स पुरिसस्स सबल अत्थि, मूलदेवो चिंचितेइ–एसो मम सवलेण सविभाग करेहित्ति, इण्हि सुते परे ताए आसाए वच्चति, ण से किंचि देइ, तइयदिवसे छिण्णा अडवी, मूलदेवेण पुच्छितो–अत्थि एत्थ अब्भासे गामो ?, तेण भण्णति—एस णाइदूरे पथस्स गामो, मूलदेवेण भणितो–तुम कत्थ वससि ?, तेण भण्णति–अमुगत्थ गामे, मूलदेवेण भणितो–तो खाइ अहं एथ गाम वच्चामि, तेण से पथो उवदिट्ठो, गओ त गाम मूलदेवो, तत्थऽणेण भिक्ख हिंडतेण कुम्मासा लद्धा, पयण्णो य कालो वट्टति, सो य गामातो निगच्छइ, साहू य मासखमणपारणए भिक्खानिमित्त पविसति, तेण य सवेगमा-

१ पुरुषो मिलित , मूलदेवेन पृष्ट –क यासि ?, तेन भण्यते— बेन्नाकतटे, मूलदेवेन भण्यते–द्वावपि सम प्रजाव इति, तेन सलप्तम्–एव भवत्विति, द्वावपि प्रस्थितौ, अ तरा चाटवी, तस्य पुरुषस्य शम्बलमस्ति, मूलदेवो चिचि तयति–एप मम शम्बलेन सविभाग करिष्यति, इदानीं श्व परेद्यु तयाऽऽशया प्रजति, न तस्मै किञ्चिद्ददाति, तृतीयदिवसे छिन्नाऽटवी, मूलदेवेन पृष्ट —अस्त्यत्राभ्यासे ग्राम ?, तेन भण्यते–एप नातिदूरे पथो ग्राम , मूलदेवेन भणित –त्व कुत्र वससि ?, तेन भण्यते–अमुष्मिन् ग्रामे, मूलदेवेन भणित —तदा कथया ( गच्छा ) इमेन ग्राम प्रजामि, तेन तस्मै प था उपदिष्ट , गतस्त ग्राम मूलदेव , तत्रानेन भिक्षा हिण्डमानेन कुल्मापा लब्धा , प्रपन्नश्च ( सपन्नश्च ) कालो वर्त्तते, स च ग्रामान्निर्गच्छति, साधुश्च मासक्षपणपारणकेन भिक्षानिमित्त प्रविशति, तेन च सवेगमा—

दव्वजायं णीणेऊण मूलदेवस्स उवरिं चडाविउं पट्ठिया नयरबाहिरियं, जातो मूलदेवो पुरतो, चोरो असिणा कड्डि- एण पिट्ठओ एइ, संपत्ता भूमिघरं, चोरो तं दव्वं णिहिणिउमारद्धो, भणिया अणेण भगिणी–एयस्स पाहुणयस्स पायसोयं देहि, ताए कूवतडसन्निविट्ठे आसणे संणिवेसितो, ताए पायसोयलक्खेण पाओ गहिओ कूवे छुहामित्ति, जाव अतीव सुकुमारा पाया, ताए नायं—जहेस कोइ भूयपुघरज्जो विहलियगो, तीए अणुकंपा जाया, तओ ताए पायतले सन्नितो णस्सत्ति, मा मारिज्जिहिसित्ति, ततो पच्छा सो पलातो, ताए बोलो कतो णट्ठो णट्ठोत्ति, सो असिं कड्डिऊण मग्गतो लग्गो, मूलदेवो रायप्पहे अइसन्निकिट्ठं णाऊण चच्चरसिवंतरितो ठितो, चोरो तं सिवलिंगं एस

१ द्रव्यजातं नीत्वा मूलदेवस्योपरि चटापयित्वा (आरोप्य) प्रस्थितौ नगरबाहिरिकां, यातो मूलदेवः पुरतः, चौरोऽसिना कृष्टेन (सह) पृष्ठत आयाति, संप्राप्तौ भूमिगृहं, चौरस्तत् द्रव्यं निखितुमारब्धः, भणिता अनेन भगिनी–एतस्मै प्राघूर्णकाय पादशौचं देहि, तया कूपतटसन्निविष्ट आसने सन्निवेशितः, तया पादशौचमिषेण पादो गृहीतः कूपे क्षिपामीति, यावदतीव सुकुमारौ पादौ, तया ज्ञातं—यथा एष कश्चित् भूतपूर्वराज्यो राज्यभ्रष्टः, तस्या अनुकम्पा जाता, ततस्तया पादतले संज्ञितो नश्येति, मा मारयिष्यसीति, ततः पश्चात्स पलायितः, तया रावः (पूत्कारः) कृतः नष्टो नष्ट इति, सोऽसिं कृष्ट्वा पृष्ठतो लग्नः, मूलदेवः राजपथेऽतिसंनिकृष्टं ज्ञात्वा चत्वरशिवान्तरितः स्थितः, चौरस्तत् शिवलिङ्गमेष

रसधिएण दिण्णा, मूलदेवेण अंतेउरे छूढा, ताए सम भोगे भुजति। अन्नया अयलो पोयवहणेण तत्थागतो, सुंके विज्जते भंडे जाति पाए दव्वणूमणाणि ठाणाणि ताणि जाणमाणेण मूलदेवेण सो गिण्हावितो,तुमे दव्व णूमियति पुरिसेहिं वद्धिऊण रायसयासमुवणीतो, मूलदेवेण भण्णति-तुम मम जाणसि ?, सो भणति-तुम राया को तुम न जाणइ ?, तेण भण्णइ-अह मूलदेवो, सकारिउ विसज्जितो, एव मूलदेवो राया जातो। ताहे सो अण्ण णगरारक्खिय ठवेति, सोऽवि न सक्को चोर गिण्हिउ, ताहे मूलदेवो सय णीलपड पाउणिऊण रत्ति णिग्गतो, मूलदेवो अणज्जतो एगाए सभाए णिविण्णो अच्छति, जाव सो मडियचोरो आगतूण भणति—को इत्थ अच्छति ?, मूलदेवेण भणिय-अह कप्पडितो, तेण भण्णइ-एहि मणूस करेमि, मूलदेवो उट्ठितो, एगमि ईसरघरे खत्त खय, सुवहु

१ रसधिना दत्ता, मूलदेवेनान्त पुरे न्यस्ता, तया सम भोगान् भुनक्ति। अन्यदाऽचल पोतवाहनेन तत्रागत, शुल्कीये भाण्डे विद्यमाने यानि पात्रेषु द्रव्यगोपनानि स्थानानि तानि जानता मूलदेवेन स ग्राहित, त्वया द्रव्य गोपितमिति पुरुषैर्बद्धा राजसकाशमुपनीतः, मूलदेवेन भण्यते-त्व मा जानासि ?, स भणति—त्व राजा त्वा को न जानाति ?, तेन भण्यते—अह मूलदेव, सत्कृत्य विसृष्ट, एव मूलदेवो राजा जात। तदा सोऽन्य नगरारक्षक स्थापयति, सोऽपि न शक्तश्चौर गृहीतु, तदा मूलदेव स्वय नीलपट प्रावृत्य रात्रौ निर्गत, मूलदेवोऽज्ञायमान एकस्या सभाया निषण्णस्तिष्ठति, यावत्स मण्डिकश्चौर आगत्य भणति-कोऽत्र तिष्ठति ?, मूलदेवेन भणितम्—अह कार्पटिक, तेन भण्यते-एहि मनुष्य करोमि, मूलदेव उत्थित, एकस्मिन्नीश्वरगृहे क्षत्र खात, सुबहु

कार्यकार्यपि मण्डिको यावल्लाभं मूलदेवनृपतिना धारितः तथा धर्मार्थिनाऽपि संयमोपहतिहेतुकमपि जीवितं निर्जरालाभमभिलषता तल्लाभं यावद्धार्यमिति, न च तद्धारणे संयमोपरोध एव, यथाऽऽगमं हि प्रवृत्तस्य तत्तदुपष्टम्भकमेवेति भावनीयम्, इत्यलं प्रसङ्गेनेति सूत्रार्थः ॥ ७ ॥ सम्प्रति यदुक्तं 'जीवितं बृंहयित्वा मलापध्वंसी स्यादि'ति तत्किं स्वातन्त्र्यत एव उतान्यथेत्याह—

छंदंणिरोहेण उवेति मुक्खं, आसे जहा सिक्खियवम्मधारी।
पुव्वाइ वासाइ चरऽप्पमत्तो, तम्हा मुणी खिप्पमुवेति मुक्खं ॥८॥ (सूत्रम्)

व्याख्या—छन्दो—वशस्तस्य निरोधः छन्दोनिरोधः—स्वच्छन्दतानिषेधः तेन 'उपैति' उपयाति 'मोक्षं' मुक्तिं, किमुक्तं भवति ?—गुरुपरतन्त्रतया स्वाग्रहाग्रहयोगितां विना तत्र प्रवर्त्तमानोऽपि सङ्क्लेशविकल इति न कर्म्मबन्धभाक्, किन्त्वविकलचरणतया तन्निर्जरणमेवाप्नोति, अप्रवर्त्तमानोऽपि चाहारादिष्वाग्रहग्रहाकुलितचेताः 'छट्ठट्ठमदसमे'-त्यादिवचनादनन्तसंसारिताद्यनर्थभागेव भवति, तत्सर्वथा तत्परतन्त्रेणैव मुमुक्षुणा भाव्यं, तस्यैव सम्यग्ज्ञानादिसकलकल्याणहेतुत्वाद्, उक्तं च—"णाणस्स होइ भागी थिरयरतो दंसणे चरित्ते य। धण्णा आवकहाए गुरुकु-



१ ज्ञानस्य भवति भागी स्थिरतरो दर्शने चारित्रे च। धन्या यावत्कथं गुरुकुलवासं न मुञ्चन्ति ॥ १ ॥

पुरिसोत्ति काउ फकग्गेण असिणा दुहा काऊण पडिनियत्तो, गतो भूमिघर, तत्थ वसिऊण पहायाए रयणीए तओ निग्गतूण गतो वीहिं, अतरावणे तुण्णागत्त करेति, रायणा पुरिसेहि सद्दावितो, तेण चिंतियं–जहा सो पुरिसो णूण न मारितो, अवस्स च सो एस राया भविस्सइत्ति, तेहिं पुरिसेहिं आणितो, रायणा अब्भुट्ठाणेण पूइतो, आसणे निवेसावितो, स बहु च पिय आभासिउ सलत्तो-मम भगिणीं देहित्ति,तेण दिन्ना, विवाहिया, रायणा भोगा य से सपदत्ता,कइसुवि दिणेसु गएसु रायणा मडितो भणिओ–दव्वेण कज्जति, तेण सुबहु दव्वजाय दिण्ण, रायणा सपूइतो,अण्णया पुणो मग्गितो पुणोऽवि दिण्ण,तस्स य चोरस्स अतीव सक्कारसम्माण पउजति, एएण पगारेण सव्व दव्व दवावितो, भगिणी से पुच्छति, ताए भण्णति—इत्तिय वित्त, तओ पुव्वावेइयलक्खाणुसारेण सव्व दवावेऊण मडितो सूलाए आरोवितो॥ दृष्टान्तानुवादपूर्वकोऽयमिहोपनय –यथाऽयम-

१ पुरुष इतिकृत्वा कङ्काग्रेणासिना द्विधा कृत्वा प्रतिनिवृत्त , गतो भूमिगृह, तत्रोपित्वा प्रभाताया रजन्या ततो निर्गत्य गतो वीथिम्, अन्तरापणे तन्तुवायत्व करोति, राज्ञा पुरुषै शब्दित , तेन चिन्तित—यथा स पुरुषो नून न मारित , अवश्य च स एष राजा भविष्यतीति, तै पुरुषैरानीत , राज्ञाऽभ्युत्थानेन पूजित , आसने निवेशित , स बहु प्रिय चाभाष्य सलप्त—मह्य भगिनीं देहीति, तेन दत्ता, विवाहिता, राज्ञा भोगाश्च तस्मै सम्प्रदत्ता , कतिपयेष्वपि दिनेषु गतेषु राज्ञा मण्डिको भणित —द्रव्येण कार्यमिति, तेन सुबहु द्रव्यजात दत्त, राज्ञा सपूजित ,अन्यदा पुनर्मार्गित पुनरपि दत्त, तस्य च चौरस्यातीव सत्कारसन्मान प्रयुनक्ति, एतेन प्रकारेण सर्व द्रव्य दापित, भगिनी तस्या अपृच्छ्यत, तया भण्यते—एतावत् वित्त, तत पूर्वावेदितलक्ष्यानुसारेण सर्व दापयित्वा मण्डिक शूलायामारोपित ।

संरक्खमाणो धावियलालियवग्गियाईयातो कलातो सिक्खावेइ, बीओ को एयस्स इट्ठजवसजोगासणं दाहिइत्ति घरट्टे वाहेइ ण तु सिक्खावेइ, सेसं अप्पणा भुंजति । संगामकाले उवट्ठिए ते रण्णा वुत्ता–तेसु चेवास्सेसु आरोढुं झत्ति आगच्छह, संपत्ता, भणिया य राइणा–पविसह संगामं, तत्थ पढमोऽसो सिक्खागुणत्तणतो सारहियमणुयत्तमाणो संगामपारतो जातो, दुइओ विसिट्ठसिक्खाभावतोऽसब्भावभावणाभावियत्तणओ गोधूमजंतगजुत्त इव तत्थेव भमिउमाढत्तो, तं च परा उवलक्खेउं हयसारहिं काऊण गृहीतवन्तः ॥ दृष्टान्तानुवादपूर्वकोऽयमुपनयः—यथाऽसावश्वः तथा धर्मार्थ्यपि स्वातन्त्र्यविरहितो मुक्तिमवाप्नोति, अत एव च 'पूर्वाणि' 'उक्तपरिमाणानि 'वर्षाणि' वत्सराणि, कालात्यन्तसंयोगे द्वितीया (पा०२–३–५), किमित्याह–'चर' इति सततमागमोक्तक्रियामासेवस्व, कथम्?–'अप्रमत्तः' गुरुपारतन्त्र्यापहारिप्रमादपरिहर्त्ता, 'तम्ह'त्ति तस्मात् अप्रमादचरणादेव, मन्यते जानाति जीवादीनिति मुनिः–तपस्वी 'क्षिप्रं' शीघ्रम् उपैति मोक्षं, ननु छन्दोनिरोधोऽपि तत्त्वतोऽप्रमादात्मक एवेति कथं न पुनरुक्तदोषः?,

१ संरक्षन् धावनलालितवल्गनादिकाः कलाः शिक्षयति, द्वितीयः क एतस्मै इष्टयवसयोगासनं ददातीति घरट्टे वाहयति न तु शिक्षयति, शेषमात्मना भुङ्क्ते । संग्रामकाले उपस्थिते तौ राज्ञोक्तौ–तयोरेवाश्वयोरारुह्य झटित्यागच्छतं, संप्राप्तौ, भणितौ च राज्ञा–प्रविशतं संग्रामं, तत्र प्रथमोऽश्वः शिक्षागुणत्वात् सारथिमनुवर्त्तमानः संग्रामपारगो जातः, द्वितीयो विशिष्टशिक्षाभावात् असद्भावभावनाभावितत्वात् गोधूमयन्त्रकयुक्त इव तत्रैव भ्रमितुमारब्धः, तथ परे उपलक्ष्य हतसारथिं कृत्वा गृहीतवन्तः ।

ल्वास न मुचति ॥ १ ॥" यद्वा छन्दसा—गुर्वभिप्रायेण निरोध –आहारादिपरिहाररूप छन्दोनिरोध' तेनैवोक्तन्यायतो मुक्त्यवाप्ति , तत्तद्वस्तुविषयाभिलाषात्मिका इच्छा वा छन्द तन्निरोधेन मुक्ति , तस्या एव तद्विवन्धकत्वात्, तथा च लौकिका अप्याहु –"श्लोकार्धेन हि तद्वक्ष्ये, यदुक्त ग्रन्थकोटिभि । तृष्णा च स(चेतस) परित्यक्ता, प्राप्त च परम पदम् ॥ १ ॥" अथवा छन्दो वेद आगम इत्यनर्थान्तर, तत छन्दसा 'आणाए चिय चरण'मित्यादिना निरोध –इन्द्रियादिनिग्रहात्मक छन्दोनिरोध तेनोपैति मोक्ष, न तु सर्वथा जीवित प्रत्यनपेक्षतया, तथा च समयविद —"सर्वत्थ सजम सजमात्तो अप्पाणमेव रक्खिज्जा । मुचइ अइवायातो पुणोऽवि सोही ण याविरती ॥ १ ॥" अत्रोदाहरणमाह—अश्वो यथा 'शिक्षितो' वल्गनप्लवनधावनादिशिक्षा ग्राहितो वृणोति–आच्छादयति शरीरकमिति वर्म्म–अश्वतनुत्राण तद्धरणशीलो वर्म्मधारी, शिक्षितश्चासौ वर्म्मधारी च शिक्षितवर्म्मधारी, अनेन शिक्षकतन्त्रतयाऽस्य स्वातन्त्र्यापोहमाह, ततोऽयमर्थ —यथाऽश्व स्वातन्त्र्यविरहात्प्रवर्त्तमान समरशिरसि न वैरिभिरुपहन्यत इति तन्मुक्तिमाप्नोति, स्वतन्त्रस्तु प्रथममशिक्षितो रणमवाप्तस्तैरुपहन्यते, अत्र च सम्प्रदाय'—

एगेणं रायणा दोण्हवि कुलपुत्ताण दो आसा दिण्णा सिक्खावणपोसणत्थ, तत्थेगो कालोचिएण जवसजोगासणेण

---

१ सर्वत्र सयम सयमात् आत्मानमेव रक्षेत् । मुच्यतेऽतिपातात् पुनरपि शुद्धिर्न चाविरति ॥ १ ॥ २ एकेन राज्ञा द्वाभ्यामपि कुलपुत्राभ्यामश्वौ द्वौ दत्तौ शिक्षणपोषणार्थ, तत्रैक कालोचितेन यवसयोगासनेन

इदमिहाकूतं—यो हि छन्दोनिरोधमुत्तरकालमेव करिष्यामीति वक्ति सोऽवश्यं शाश्वतवादी, स चैवं प्रज्ञाप्यते—यथा भद्र ! इदानीं भवतस्तत्कालात्पूर्वमसावुक्तहेतुतो न समस्ति, तथोत्तरकालमप्यसौ प्रमादिनस्तव न भवितेति, यदि वा एषा उपमेति—उपेत्युपयोगपूर्वकं मेति ज्ञानमुपमा—सम्प्रधारणा यदुत पश्चाद्धर्मं करिष्यामः इति शाश्वतवादिनां—निरुपक्रमायुषां, ये निरुपक्रमायुष्कतया शाश्वतमिवात्मानं मन्यन्ते तेषां युज्येतापि, न तु जलबुद्बुदसमानायुषां, तथा चासावुत्तरकालमपि छन्दोनिरोधमनाप्नुवन् 'विषीदति' कथमहमकृतसुकृतः सम्प्रत्यनर्वाक्पारं भवाम्भोधिं भ्राम्यन् भविष्यामीत्येवमात्मकं वैक्लव्यमनुभवति, कदा ?—शिथिलयति—आत्मप्रदेशान् मुञ्चति 'आयुषि' मनुष्यभवोपग्राहिण्यायुःकर्म्मणि, 'कालोवणीय'त्ति कालेन—मृत्युना स्वस्थितिक्षयलक्षणेन वा समयेनोपनीतः—उपढौकितः तस्मिन्, क ? इत्याह—'शरीरस्य' औदारिककायात्मकस्य 'भेदे' सर्वपरिशाटतः पृथग्भावे, तदिदमैदम्पर्यम्—आदित एव न प्रमादवद्भिर्भाव्यं, तथा चाह—"गमनं किमद्य किं श्वः कदाऽपि वा सर्वथा ध्रुवं क्वापि ?। इति जानन्नपि मूढस्तथापि मोहात्सुखं शेते ॥ १ ॥" इति सूत्रार्थः ॥९॥ किं पुनः पूर्वमिव पश्चादपि छन्दोनिरोधं न लभत इत्याह—

खिप्पं न सक्केइ विवेगमेउं, तम्हा समुट्ठाय पहाय कामे ।
समेच्च लाभं समता महेसी, आयाणरक्खी चरमप्पमत्तो ॥ १० ॥(सूत्रम्)

उच्यते, अप्रमाद एवादर कार्य इति ख्यापनार्थत्वादध्ययनार्थोऽजीवनार्थत्वाच्चास्य न पौनरुक्त्यमिति भावनीय, पूर्वाणि वर्षाणीति च एतावदायुपामेव चारित्रपरिणतिरिति दर्शनार्थमुक्तमिति सूत्रार्थ ॥ ८ ॥ ननु यदि छन्दोनिरोधेन मुक्ति, अयमन्त्यकाल एव तर्हि विधीयतामित्याशङ्क्याह, यद्वा यदि पश्चान्मलापध्वसी स्यात् तदैव छन्दोनिरोधादिकमपि तद्धेतुभूतमस्त्यत आह—

स पुव्वमेव ण लभेज्ज पच्छा, एसोवमा सासयवाइयाणं ।
विसीदति सिढिले आउयमि, कालोवणीए सरीरस्स भेए ॥ ९ ॥ (सूत्रम्)

व्याख्या—'स' इति यत्तदोर्नित्याभिसम्बन्धात् य प्रथममेवाप्रमत्ततया भावितमतिर्न भवति स तदात्मक छन्दोनिरोध 'पुव्वमेव'त्ति एवशब्दस्यात्रोपमार्थत्वात्पूर्वमिवान्त्यकालात् मलापध्वससमयाद्वा अभावितमतित्वात् 'न लभेत्' न प्राप्नुयात्, सम्भावने लिङ्, ततश्च लाभसम्भावनाऽपि न समस्ति, किं पुनस्तल्लाभ इति, 'पश्चात्' अन्त्यकाले मलापध्वससमये वा, 'एसोवम'त्ति एषा—अनन्तरमभिहितस्वरूपा उप—सामीप्येन मीयते—परिच्छिद्यते स्वयप्रसिद्ध्या अपरमप्रसिद्ध वस्त्वनयेत्युपमा, केषा ?—शाश्वता इव वदितु शीलमेषामिति शाश्वतवादिन, उष्ट्रक्रोशिवत् कर्त्र्युपमाने (पा–३–२–१९) इति णिनि, तेषा शाश्वतवादिनाम्—आत्मनि मृत्युमनियतकालभाविनमपश्यताम्,

ऽपि प्रागकृतपरिकर्म्मा न तत्काल एव विवेकमेतुं शक्नोति, मलापध्वंसस्तु तथा सति दूरापास्त एवेति, न च मरुदेव्युदाहरणं तत्राप्यभिधेयम्, आश्चर्यरूपत्वादस्य, न ह्येवं तीव्रभावा बहवः सम्भवन्ति, यत एवं तस्मात् 'सम्' इति सम्यक्प्रवृत्त्या 'उत्थाये'ति च पश्चाच्छन्दो निरोत्साम इत्यालस्यत्यागेनोद्यमं विधाय, तथा 'पहाय कामे'त्ति प्रकर्षेण —मनसाऽपि तदचिन्तनात्मकेन 'हित्वा'त्यक्त्वा कामान् इच्छामदनात्मकान् 'समेत्य' सम्यग्ज्ञात्वा 'लोकं' समस्तप्राणिसमूहं, कया ?—'समतया' समशत्रुमित्रतया क्वचिदरक्तद्विष्टतयेतियावत्, तथा च महर्षिः सन् महः—एकान्तोत्सवरूपत्वान्मोक्षस्तमिच्छतीत्येवंशीलो महैषी वा, किमुक्तं भवति ?—विषयाभिलाषविगमान्निर्निदानः सन् आत्मानं रक्षत्यपायेभ्यः कुगतिगमनादिभ्य इत्येवंशील आत्मरक्षी, यद्वाऽऽदीयते—स्वीक्रियते आत्महितमनेनेत्यादानः—संयमः तद्रक्षी 'चरमप्पमत्तो'त्ति मकारोऽलाक्षणिकः, ततश्चराप्रमत्तः—प्रमादरहितः, इह च प्रमादपरिहारापरिहारयोरैहिकमुदाहरणं वणिग्महिला, तत्र च सम्प्रदायः—

एगा वणिगमहिला पउत्थपतिया सरीरसुस्सूसापरा दासभयगकम्मकरे णिजणिजभियोगेसु न नियोजयति, न य तेसिं कालोवयन्नं जहिच्छं आहारं भतिं वा देति, ते सवे नट्ठा, कम्मंतपरिहाणीए विभवपरिहाणी, आगतो वाणियओ,

१ एका वणिग्महिला प्रोषितपतिका शरीरशुश्रूषापरा दासभृतककर्मकरान् निजनिजाभियोगेषु न नियोजयति, न च तेभ्यः कालोपपन्नं यथेष्टमाहारं भृतिं वा ददाति, ते सर्वे नष्टाः, कर्मान्तपरिहाण्या विभवपरिहाणिः, आगतो वणिक्,

व्याख्या—'क्षिप्रं' तत्क्षण एव 'न शक्नोति' न समर्थो भवति, किं कर्त्तुम्?—'एतुं' गन्तु प्राप्तुमितियावत्, कम्?—'विवेकं' द्रव्यतो बहि सङ्गपरित्यागरूप भावतस्तु कषायपरिहारात्मकं, न शकृतपरिकर्म्मा झगिति तत्परित्याग कर्त्तुमलम्, अत्रोदाहरण ब्राह्मणी—

एगो मरुतो परदेस गतूण साहापारतो होऊण सविसयमागतो, तस्सऽन्नेण मरुतेण खद्धपल्लालित्तोत्तिकाउ दारिका दत्ता, सो य लोए दक्खिणातो लहति, परे विभवे वड्ढति तेण तीसे भारियाए सुबहु अलकार कारिय, सा निचमडिया अच्छइ, तेण भण्णइ—एस पच्चतगामो, ता तुम एयाणि आभरणगाणि तिहिपवणीसु आविंधाहि, कर्हिचि चोरा उवगच्छेज्जा तो सुह गोविज्जति, सा भणइ—अह ताए वेलाए सिग्घमेव अवणेस्सति। अन्नया तत्थ चोरा पडिया, तमेव णिच्चमडियागिह अणुपविट्ठा, सा तेहिं सालकिया गहिया, सा य पणीयभोयणत्ता मसोवचितपाणिपाया ण सक्केइ कडगाईणि अवणेउ, ततो चोरेहिं तीसे हत्थे छेत्तूण अवणीया, गेण्हिउ च निग्गया ॥ एवमन्यो-

१ एको ब्राह्मणः परदेश गत्वा शाखापारगो भूत्वा स्वविषयमागतः, तस्यान्येन ब्राह्मणेन प्रचुरप्रलालित इतिकृत्वा दारिका दत्ता, स च लोकात् दक्षिणा लभते, अतिशयेन वर्धमाने विभवे तेन तस्या भार्याया सुबहुर्लङ्कारा कारिता, सा नित्य मण्डिता तिष्ठति, तेन भण्यते—एष प्रत्यन्तग्राम, तस्मादेतानि आभरणानि तिथिपर्वसु परिधेहि, कदाचिच्चौरा उपगच्छेयुस्तदा सुख गोप्यन्ते, सा भणति—अह तस्यां वेलाया शीघ्रमेवापनेष्यामीति। अन्यदा तत्र चौराः पतिताः, तदेव नित्यमण्डितागृहमनुप्रविष्टा, सा तैः सालङ्कारा गृहीता, सा च प्रणीतभोजनतया उपचितमांसपाणिपादा न शक्नोति कटकादीन्यपनेतु, तत चौरैस्तस्या हस्तौ छित्वा अपनीतानि, गृहीत्वा च निर्गता।

मंदा य फासा बहुलोभणिज्जा, तहप्पगारसुम णं ण कुंज्जा ।
रक्खेज्ज कोहं विणएज्ज माणं, मायं ण सेवेज्ज पहिज्ज लोहं ॥ १२ ॥ (सूत्रम्)

व्याख्या—'मुहूर्मुहुः' वारं वारं, सततप्रवृत्त्युपलक्षणमेतत्, मोहयति—जानानमपि जन्तुमाकुलयति प्रवर्त्तयति चान्यथेहेति मोहः तस्य गुणाः मोहगुणाः—तदुपकारिणः शब्दादयः, तान् 'जयंतं' अभिभवन्तं, किमुक्तं भवति ?—अविच्छेदतस्तज्जयप्रवृत्तं यद्वा कथञ्चिन्मोहनीयात्यन्तोदयत एकदा तैः पराजितमपि पुनः पुनस्तज्जयं प्रति प्रवर्त्तमानं न तु तत एव विमुक्तसंयमोद्योगम्, 'अनेकरूपाः' अनेकमिति—अनेकविधं परुपविपमसंस्थानादिभेदं रूपं—स्वरूपमेपामिति अनेकरूपाः, श्रमणं चरन्तं प्राग्वत्, 'फास'त्ति स्पृशन्ति स्वानि स्वानीन्द्रियाणि गृह्यमाणतया इति स्पर्शाः—शब्दादयस्ते 'स्पृशन्ति' गृह्यमाणतयैव सम्बध्नन्ति, 'असमंजसम्' अननुकूलमिति क्रियाविशेषणमेतत्, चशब्दोऽवधारणे, असमअसमेव, अथवा स्पर्शनविपयाः—स्पर्शाः स्पृशन्ति, स्पर्शोपादानं चास्यैव दुर्ज्जयत्वाद्व्यापित्वाच्च, न 'तेपु' स्पर्शेपु 'भिक्षुः' मुनिः, मनसा उपलक्षणत्वाच्च वाचा कायेन च, यद्वाऽपिशब्दस्य लुप्तनिर्दिष्टत्वान्मनसाऽपि आस्तां वाचा कायेन वा, 'पदूसे'त्ति प्रदुष्येत् प्रद्विष्याद्वा, किमुक्तं भवति ?—कर्कशसंस्तारकादिस्पर्शादौ हन्तोपतापिता वयमेतेनेति न चिन्त-

एवंविह पस्सिऊण पच्छा तेण णिच्छूढा। अण्ण तु पुक्खलेण सुकेण वरेति, लद्धा य णेण, तेण तीसे णियगा भणंति—जइ अप्पाणं रक्खइ ता परिणेमित्ति, ताए यऽमुणियपरमत्थाए दुग्गयकन्नगाए सोउ नियगा भणति—रक्खामि(क्खि-हिइ)अप्पग, सा तेण विवाहिया, गतो वाणिज्जेणं, सावि दासभयगकम्मकरातीण सदेस दाउ तेसि पुधण्हिकाइकाले भोयण देइ, महुराहि च वायाहि उच्छाहेइ, भइ च तेसिं अकालपरिहीण देइ, ण य णियगसरीरसुस्सूसापरा, एव-मप्पाण रक्खतीए भत्ता उवागओ, सो एवविह पस्सिऊण तुट्ठो, तेण सघसामिणी कया ॥ इत्थ तावदिहैव गुणाया-प्रमादो दोषाय च प्रमाद आस्तामन्यजन्मनीत्यभिप्रायेणात्रैवैहिकोदाहरणाभिधानमिति परिभावनीयमिति सूत्रार्थ ॥ १० ॥ प्रमादमूल च रागद्वेषाविति सोपाय तत्परिहारमाह—

मुहुं मुहु मोहगुणे जयत, अणेगरूवा समण चरत ।

फासा फुसती असमजस च, ण तेसु भिक्खू मणसा पउस्से ॥ ११ ॥ (सूत्रम्)

---

१ एवविध दृष्ट्वा पश्चात्तेन निष्काशिता । अन्या तु पुष्कलेन शुल्केन धृणुते, लब्धा चानेन, तेन तस्या निजका भण्यन्ते—यद्यात्मान रक्षति तर्हि परिणयामीति, तस्याश्चाज्ञातपरमार्थाया दुर्गतकन्याया श्रुत्वा निजका भणन्ति—रक्षिष्यति आत्मान, सा तेन विवाहिता, गतो वाणिज्याय, साऽपि दासभृत्यकर्मकरादिभ्य सदेश दापयित्वा ( सगृह्य ) तेभ्य पूर्वाह्णादिकाले भोजन ददाति, मधुराभिश्च वाचाभिरुत्साहयति, भृतिं च तेभ्योऽकालपरिहीणा ददाति, न च निजशरीरशुश्रूषापरा, एवमात्मान रक्षन्त्या भर्त्तोपागतः, स एवविध दृष्ट्वा तुष्ट , तेन सर्वस्वामिनी कृता।

वचनान्महाप्रमादरूपस्याब्रह्मणो निरोधकृदिति, तदभिधानाद्धिंसादिनिरोधोऽप्युक्त एवेति, अनेनार्थतो मूलगुणाभिधानं, रक्षेत् क्रोधमित्यादिना च पिण्डादिकमयच्छते यच्छते वा न कषायवशगो भवेदित्युत्तरगुणोक्तिरिति सूत्रद्वयार्थः ॥ ११-१२ ॥ सम्प्रति यदुक्तं—'तम्हा समुट्ठाय पहाय कामे' इत्यादि, तत्कदाचिच्चरकादिष्वपि भवेत् अत आह—यद्वैतावता चारित्रशुद्धिरुक्ता, सा च न सम्यक्त्वविशुद्धिमपहायातस्तदर्थमिदमाह—

जे संखया तुच्छपरप्पवादी, ते पेज्जदोसाणुगया परज्झा ।
एए अहम्मुत्ति दुगुंछमाणो, कंखे गुणे जाव सरीरभेए ॥ १३ ॥ त्तिबेमि ( सूत्रम् )

व्याख्या—'ये' इति अनिर्दिष्टस्वरूपाः, संस्कृता इति न तात्त्विकशुद्धिमन्तः किन्तूपचरितवृत्तयः, यद्वा संस्कृतागमप्ररूपकत्वेन संस्कृताः, यथा सौगताः, ते हि स्वागमे निरन्वयोच्छेदमभिधाय पुनस्तेनैव निर्वाहमपश्यन्तः परमार्थतोऽन्वयि द्रव्यरूपमेव सन्तानमुपकल्पयांबभूवुः, साङ्ख्याश्चैकान्तनित्यतामुक्त्वा तत्त्वतः परिणामरूपां चै(पावे)व पुनराविर्भावतिरोभावावुक्तवन्तो, यथा वा—'उक्तानि प्रतिषिद्धानि, पुनः सम्भावितानि च । सापेक्षनिरपेक्षाणि, ऋषिवाक्यान्यनेकशः ॥ १ ॥' इतिवचनाद्वचननिषेधनसम्भवादिभिरुपस्कृतस्मृत्यादिशास्त्रा मन्वादयः, अत एव 'तुच्छ'त्ति तुच्छा यदृच्छाभिधायितया निःसाराः 'परप्पवाइ'त्ति परे च ते स्वतीर्थिकव्यतिरिक्ततया प्रवादिनश्च

येत् नैव वा वदेत्परिहरेद्वा तमिति॥ 'मदा ये'ति सूत्र, तथा मन्दायन्तीति मन्दा –हिताहितविवेकिनमपि जनमन्यता नयन्तीतिकृत्वा, चशब्द पूर्वापेक्षया समुच्चये, स्पर्शा प्राग्वच्छब्दादय, बहून् लोभयन्ति–विमोहयन्तीति बहुलोभनीया 'अन्यत्रापी ( कृत्यल्युटो बहुलम् ) ति वचनात् कर्त्तर्यनीय, अनेनात्याक्षेपकत्वमुक्त, 'तहप्पगारेसु'त्ति अपेर्गम्यमानत्वात्तथाप्रकारेष्वतिबहुलोभनीयेष्वपि मृदुस्पर्शमधुररसादिषु 'मन' चित्त न कुर्यात्, अथवा धातूनामनेकार्थत्वा र निवेशयेत्, यद्वा सङ्कल्पात्मकमेव मन, ततो मन इति सङ्कल्पमपि 'न कुर्यात्' न विदध्याद् आस्ता तत्प्रवृत्तिमिति, अथवा मन्दबुद्धित्वान्म दगमनत्वाद्वा मन्दा –स्त्रिय ता एव स्पर्शप्रधानत्वात् स्पर्शा, ततश्च मन्दाश्च स्पर्शा, बहुना कामिना लोभनीया –गृद्धिजनका बहुलोभनीया यास्तासु 'तहप्पगारेसु'त्ति लिङ्गव्यत्ययात्तथाप्रकारासु बहुलोभनीयासु मनोऽपि न कुर्याद्, इह च स्त्रीणामेव बहुतरापायहेतुत्वादित्यमुच्यते, तथा चाह– "स्पर्शेन्द्रियप्रसक्ताश्च, बलवन्तो मदोत्कटा। हस्तिबन्धकिसरक्ता, बध्यन्ते मत्तवारणा ॥ १ ॥" इति। एव च पूर्वसूत्रेण द्वेषस्य परिहार उक्त, अनेन च रागस्य, स तु कथ भवतीत्यत आह—'रक्षयेत्' निवारयेत्, कम् ?–'क्रोधम्' अप्रीतिलक्षण, 'विनयेत्' अपनयेत् 'मानम्' अहङ्कारात्मक, 'माया' परवञ्चनबुद्धिरूपा न कुर्यात्, 'प्रजह्यात्' परित्यजेत् 'लोभम्' अभिष्वङ्गस्वभाव, तथा च क्रोधमानयोर्द्वेषात्मकत्वान्मायालोभयोश्च रागरूपत्वात्तन्निग्रह एव तत्परिहतिरिति भावनीयम्। अथवा स्पर्शपरिहारमभिदधता चतुर्थव्रतमुक्त, तच 'अंबभचेर घोरं पमाय दुरहिट्ठग'ति-

१ अब्रह्मचर्यं घोरं प्रमाद दुरधिष्ठितम्।

परप्रवादिन , ते किमित्याह—'पेज्जदोसाणुगया' प्रेमद्वेषाभ्यामनुगता प्रेमद्वेषानुगता , तथाहि—सर्वथा संवादिनि भगवद्वचसि निरन्वयोच्छेदैकान्तनित्यत्वादिकल्पन वचननिषेधनसम्भावनादि वा न रागद्वेषाभ्या विनेति भावनीयम्, अत एव च 'परज्झ'त्ति देशीपरत्वात्परवशा रागद्वेषग्रहग्रस्तमानसतया न ते स्वतन्त्रा , यदि त एवविधास्तत किमित्याह— 'एते' इति अर्हन्मतबाह्या , अधर्म्महेतुत्वादधर्म्म , 'इती'त्यमुनोल्लेखेन 'दुगुछमाणो'त्ति जुगुप्समान उन्मार्गानुयायिनोऽमी इति तत्स्वरूपमवधारयन् , न तु निन्दन्, निन्दाया सर्वत्र निषेधात्, तदेवविधश्च किं कुर्यादित्याह— 'काङ्क्षेत्' अभिलषेत् 'गुणान्' सम्यग्दर्शनचारित्रात्मकान् भगवदागमाभिहितान्, किं नियतकालमेवोतान्यथेत्याह—यावच्छरीरात्—औदारिकात्पञ्चप्रकाराद्वा भेद —पृथग्भाव शरीरभेदो, मरण विमुक्तिर्वेतियावद्, अनेनेहैव समुत्थान कामप्रहाणादि च तत्त्वत , अन्यत्र तु सवृत्तिमदित्युक्तम्, एव च काङ्क्षात्मकसम्यक्त्वातिचारपरिहाराभिधानत समक्त्वशुद्धिर्वेति सूत्रार्थ ॥ १३ ॥ इति परिसमाप्तौ, ब्रवीमीति पूर्ववत्, उक्तोऽनुगम , सम्प्रति नया , ते च पूर्ववत् ॥ इति श्रीशान्त्याचार्यविरचितायामुत्तराध्ययनटीकाया शिष्यहिताया प्रमादाप्रमादनामक चतुर्थमध्ययन समाप्तमिति ॥ ॥ ॥ ॥ ॥ ॥

॥ १ ॥ षड्विधं मरणमिति यदुक्तं, तत्र नामस्थापने प्रतीते एवेत्यनादृत्य शेषचतुष्टयमाह । अन्ये त्वत्र नामादि-षड्विधनिक्षेपोद्देशाभिधायिनीमपि गाथामधीयते, तत्र नामस्थापने प्राग्वत्, द्रव्यादिचतुष्टयाभिव्यञ्जनार्थमाह—

**दव्वमरणं कुसुंभाइएसु भावि आउक्खओ मुणेयव्वो । ओहे भवतब्भविए मणुस्सभविएण अहिगारो ॥**

व्याख्या—द्रव्यस्य मरणं द्रव्यमरणं, कुसुम्भादिकेषु, आदिशब्दादन्नादिपरिग्रहः, यद्यस्य स्वकार्यसाधनं प्रति समर्थं रूपं तत्तस्य जीवितमिति रूढं, तदभावस्तु मरणं, ततश्च कुसुम्भादे रञ्जनादि स्वकार्यसामर्थ्यं जीवितं, तदभावस्तु मरणं, तथा च लोके मृतं कुसुम्भकमरञ्जकं, मृतमन्नमव्यञ्जनमित्याद्युपदिश्यते, क्षेत्रमरणं तु यस्मिन् क्षेत्रे मरणम्—इङ्गिनीम-रणादि वर्ण्यते क्रियते वा, यदा वा तस्य शस्याद्युत्पत्तिक्षमत्वमुपहन्यते तदा तत् क्षेत्रमरणं, कालमरणं यस्मिन् काले मरणमुपवर्ण्यते क्रियते वा, कालस्य वा ग्रहोपरागादिना वृष्ट्यादिस्वकार्याकरणम्, एते च सुगमत्वात्तत्त्वतो द्रव्यम-रणाभिन्नत्वाच्च निर्युक्तिकृता पृथग् नोक्ते, यत्तु निक्षेपगाथायां षड्विध इतिवचनात् अनयोर्भेदेनाभिधानं तद्विवक्षि-तवस्तुवैशिष्ट्यदर्शकं, न हि ताभ्यां विना नियतदेशत्वादिकं वस्तुनो वैशिष्ट्यमाख्यातुं शक्यमिति, 'भावे' भावविषये निक्षेपे आयुषो—जीवितस्य क्षयो—ध्वंसः आयुःक्षयो 'मुणितव्यो' ज्ञातव्यो, मरणमित्युपस्कारः, तदपि च त्रिविधम्—

१ नामंठवणादविए खित्ते काले तहेव भावे य । मरणस्स उ णिक्खेवो नायव्वो छव्विहो एसो ॥ १ ॥

# उत्तराध्ययनेषु पञ्चममध्ययनम् ।

॥ उक्त चतुर्थमध्ययन, साम्प्रत पञ्चममारभ्यते, अस्य चायमभिसम्बन्ध —अनन्तराध्ययने 'काङ्क्षेत् गुणान् यावच्छरीरस्य भेद'इत्यभिदधता मरण यावदप्रमादोऽनुवर्णित , ततो मरणकालेऽप्यप्रमादो विधेय , स च मरणविभागपरिज्ञानत एव भवति, ततो हि बालमरणादि हेय हीयते पण्डितमरणादि चोपादेयमुपादीयते, तथा च तत्त्वतोऽप्रमत्तता जायते, इत्यनेन सम्बन्धेनाऽऽयातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयमुपवर्ण्य तावद्यावन्नामनिष्पन्ननिक्षेपे 'अकाममरणीयम्' इति नाम, तत्र च काममरणप्रतिपक्षोऽकाममरणम्, अत कामाना मरणस्य च निक्षेप कार्यं , तत्र काममरणयोर्निक्षेप प्रतिपादयितुमाह निर्युक्तिकृत्—

कामाण उ णिक्खेवो चउविहो छव्विहो य मरणस्स । कामा पुव्वुद्दिट्ठा पगयमभिप्पेयकामेहि ॥ २०८ ॥

व्याख्या—काम्यन्त इति कामास्तेषा, तु पूरणे, निक्षेपश्चतुर्विध , षड्विधश्च मरणस्य, भवतीत्युभयत्र गम्यते, तत्र कामा पूर्वोद्दिष्टा पूर्वं—श्रामण्यपूर्वकनाम्नि दशवैकालिकद्वितीयाध्ययने उद्दिष्टा –कथिता , तत्र तेषामनेकधा वर्णनात्, यैरत्र प्रकृतं तान् दर्शयितुमाह–'प्रकृतम्' अधिकृतम् , 'अभिप्रेतकामै.' इच्छाकामैरिति गाथार्थ

'कति' कियन्ति मरणानि, अङ्गीकृत्य इति शेषः, म्रियते—प्राणांस्त्यजति, जन्तुरिति गम्यते, 'एगसमयं'ति सुब्व्यत्ययात् एकस्मिन् समये 'कइखुत्तो'त्ति कतिकृत्वः कियतो वारान्, 'वा' समुच्चये, अपिः पूरणे, 'एक्केकंमि' एकैकस्मिन् वक्ष्यमाणभेदे मरणे म्रियते इति योज्यम्, 'मरणे' वक्ष्यमाणभेद एवैकैकस्मिन् 'कतिभागो'त्ति कतिसङ्ख्यो भागो म्रियते, 'सर्वजीवानाम्' अशेषजीवानाम् 'अणुसमयं'ति प्रतिसमयं निरन्तरमितियावत्, अन्तरं—व्यवधानं सहान्तरेण वर्तत इति सान्तरं, वा विकल्पे, किमुक्तं भवति ?—एषु कतरन्निरन्तरं सान्तरं वा ?, तथैकैकं 'किंचिरं' कियत्परिमाणं कालं सम्भवतीति गाथाद्वयाक्षरार्थः ॥ २१०–२११ ॥ भावार्थं तु स्वत एव वक्ष्यति निर्युक्तिकारः—तत्र च 'यथोद्देशं निर्देश' इति न्यायतः प्रथमं द्वारमाश्रित्याह—

आवीचि ओहि अंतिय वलायमरणं वसट्टमरणं च । अंतोसल्लं तब्भव बालं तह पंडियं मीसं ॥ २१२ ॥
छउमत्थमरण केवलि वेहाणस गिद्धपिट्ठमरणं च । मरणं भत्तपरिण्णा इंगिणी पाओवगमणं च ॥२१३॥

व्याख्या—इह च मरणशब्दस्य प्रत्येकमभिसम्बन्धात् आवीचिमरणम् १ अवधिमरणम् २ 'अन्तिय'त्ति आर्षत्वादत्यन्तमरणं ३ 'वलायमरणं'ति तत एव वलन्मरणं ४ वशार्त्तमरणं च ५ अन्तःशल्यमरणं ६ तद्भवमरणं ७ बालमरणं ८ तथा पण्डितमरणं ९ मिश्रमरणं १० छद्मस्थमरणं ११ केवलिमरणं १२ 'वेहाणसं'ति तत एव वैहायसमरणं

'ओहे'त्ति ओघमरण–सामान्यत सर्वप्राणिना प्राणपरित्यागात्मकं भवति, भवमरण–यन्नारकादेर्नरकादिभवविषयतया विवक्षित, 'तब्भविय'त्ति तद्भविकमरण यस्मिनेव मनुष्यभवादौ मृतः पुनस्तस्मिनेवोत्पद्य यन्म्रियते इति व्याख्यानिकाभिप्रायो, वृद्धास्तु व्याचक्षते–'त भावमरण दुविह–ओघमरण तब्भवमरण च, तथा तद्भवमरणस्वरूप च 'जो जम्मि भवग्गहणे मरइ'। तत्र च 'ओहे तब्भवमरणे' इति पाठो लक्ष्यते। इह चैषा येनाधिकारस्तमाह—'मणुस्सभविएण'त्ति मनुष्यभवभाविना भवमरणान्तर्वर्तिना मनुष्यभविकमरणेनाधिकार –प्रकृतम्, इति गाथार्थः ॥२०९॥ सम्प्रति विस्तरतो मरणवक्तव्यताविषय द्वारगाथाद्वयमाह—

मरणविभत्तिपरूवण अणुभावो चेव तह पएसग्ग। कइ मरइ एगसमय? कइखुत्तो वावि इक्किक्के? ॥२१०॥
मरणमि इक्कमिक्के कइभागो मरइ सव्वजीवाण?। अणुसमय सतर वा इक्कि्क किच्चिर काल?॥ २११ ॥

व्याख्या—तत्र मरणस्य विभक्ति –विभागस्तस्य प्ररूपणा–प्रदर्शना मरणविभक्तिप्ररूपणा, कार्येति शेष, अनुभागश्च–रस, स च तद्विषयस्यायु कर्मण, तत्रैव तत्सम्भवात्, मरणे हि तदभावात्मनि कथ तत्सम्भव इति भावनीयम्, एवेति पूरणे, तथा प्रदेशाना–तद्विषयायु कर्मपुद्गलात्मकानाम् अग्र–परिमाण प्रदेशाग्र, वाच्यमिति गम्यते,

त्यनेनेत्यावी-
वीचीति संज्ञा संजाता अस्मिंस्तारकादित्वात् 'तदस्य संजातं तारकादिभ्य इतजि' (पा० ५-२-३६) प्रत्येक-
चिसंज्ञितम्, अथवा वीचिः-विच्छेदस्तदभावादवीचि तत्संज्ञितम्, उभयत्र प्रक्रमान्मरणं, यद्वा संज्ञितशब्दः प्रत्येक-
मभिसम्बध्यते, ततश्च अनुसमयसंज्ञितं-निरन्तरसंज्ञितम् अवीचिसंज्ञितमिति एकार्थिकान्येतानि, 'तदि'त्यावीचि-
मरणं 'भणन्ति' प्रतिपादयन्ति 'पञ्चविधं' पञ्चप्रकारं, गणधरादय इति गम्यते, अनेन च पारतन्त्र्यं द्योतयति, तदे-
वाह—'दव्वे'त्ति द्रव्यावीचिमरणं 'खेत्ते'त्ति क्षेत्रावीचिमरणं 'काले'त्ति कालावीचिमरणं 'भवे य'त्ति भवावीचि-
मरणं च 'भावे य'त्ति भावावीचिमरणं च, संसार इत्याधारनिर्देशः, तत्रैव मरणस्य सम्भवात्, तत्र द्रव्यावीचिमरणं
नाम यन्नारकतिर्यङ्नरामराणामुत्पत्तिसमयात् प्रभृति निजनिजायुःकर्म्मदलिकानामनुसमयमनुभवनाद्विचटनं, तच्च नार-
कादिभेदाच्चतुर्विधम्, एवं नरकादिगतिचातुर्विध्यापेक्षया तद्विषयं क्षेत्रमपि चतुर्द्धैव, ततस्तत्प्राधान्यापेक्षया
क्षेत्रावीचिमरणमपि चतुर्द्धैव, 'काल'इति यथाऽऽयुष्ककालो गृह्यते, न त्वद्धाकालः, तस्य देवादिष्वसम्भवात्, स च
देवायुष्ककालादिभेदाच्चतुर्विधः, ततस्तत्प्राधान्यापेक्षया कालावीचिमरणमपि चतुर्विधम्, एवं नरकादिचतुर्विधभवा-
पेक्षया भवावीचिमरणमपि चतुर्धैव, तेषामेव च नारकादीनां चतुर्विधमायुःक्षयलक्षणं भावं प्राधान्येनापेक्ष्य भावा-
वीचिमरणमपि चतुर्धैव वाच्यमिति गाथार्थः ॥ २१५ ॥ अधुनाऽवधिमरणमाह—

एमेव ओहिमरणं जाणि मओ ताणि चेव मरइ पुणो ।

१३ गृध्रपृष्ठमरण १४ 'मरण भत्तपरिण्ण'त्ति भक्तपरिज्ञामरणम् १५ इङ्गिनीमरण १६ पादपोपगमनमरण १७ चेति गाथाद्वयार्थ ॥ २१२-२१३ ॥ सम्प्रत्यतिबहुभेददर्शनान्मा भूत् कस्यचिदश्रद्धानमिति सम्प्रदायगर्भ निगमनमाह—

**सत्तरसविहाणाइ मरणे गुरुणो भणति गुणकलिआ । तेसि नामविभत्ति वुच्छामि अहाणुपुव्वीए ॥ २१४ ॥**

व्याख्या—सप्तदश-सप्तदशसङ्ख्यानि विधीयन्ते-विशेषाभिव्यक्तये क्रियन्त इति विधानानि-भेदा 'मरणे' मरणविषयाणि 'गुरव ' पूज्यास्तीर्थकृद्गणभृदादयो 'भणन्ति' प्रतिपादयन्ति, गुणै —सम्यग्दर्शनज्ञानादिभि कलिता—युक्ता गुणकलिता , न तु वयमेव इत्याकूत, वक्ष्यमाणग्रन्थसम्बन्धनार्थमाह—'तेषा' मरणाना नाम्नाम्—अभिधानानामनन्तरमुपदर्शिताना विभक्ति —अर्थतो विभागो नामविभक्तिस्ता 'वक्ष्ये' अभिधास्ये, 'अथे'त्यनन्तरमेव आनुपूर्व्या—क्रमेणेति गाथार्थ ॥ २१४ ॥ यथाप्रतिज्ञातमाह—

**अणुसमयनिरतरमवीइसन्निय त भणति पचविह । दव्वे खित्ते काले भवे य भावे य ससारे ॥ २१५ ॥**

व्याख्या—'अणुसमय' समयमाश्रित्य, इद च व्यवहितसमयाश्रयणतोऽपीति मा भूद्भ्रान्तिरत आह—निरन्तर, न सान्तरम्, अन्तरालासम्भवात्, किं तदेवविधम् ?—'अवीइसनिय'त्ति प्राकृतत्वादा—समन्ताद्वीचय इव वीचय प्रतिसमयमनुभूयमानायुषोऽपरायुर्दलिकोदयात् पूर्वपूर्वायुर्दलिकविच्युतिलक्षणाऽवस्था यस्मिंस्तदाऽऽवीचि, ततश्चा-

व्याख्या—संयमयोगाः—संयमव्यापारास्तैस्तेषु वा विषण्णाः संयमयोगविषण्णा अतिदुश्चरं तपश्चरणमाचरितुमक्षमाः व्रतं च मोक्तुमशक्नुवन्तः कथञ्चिदस्माकमितो मुक्तिरस्त्विति विचिन्तयन्तो म्रियन्ते यत्तद्वलतां—संयमान्निवर्त्तमानानां मरणं वलन्मरणं, तुर्विशेषणे, भग्नव्रतपरिणतीनां व्रतिनामेवैतदिति विशेषयति, अन्येषां हि संयमयोगानामेवासम्भवात् कथं तद्विषादः ? तदभावे च तदिति । पश्चार्द्धेन वशार्त्तमाह—इन्द्रियाणां—चक्षुरादीनां विषयाः—मनोज्ञरूपादय इन्द्रियविषयास्तद्वशं गताः—प्राप्ता इन्द्रियविषयवशगताः स्निग्धदीपकलिकाऽवलोकनाकुलितपतङ्गवत् म्रियन्ते यत्तद्वशार्त्तमरणं, कथञ्चिद्द्रव्यपर्याययोरभेदादेवमुच्यते, एवं पूर्वत्रापि भावनीयं, तुशब्द एषामप्यध्यवसानभेदतो वैचित्र्यख्यापनार्थ इति गाथार्थः ॥ २१७ ॥ अन्तःशल्यमरणमाह—

लज्जाइ गारवेण य बहुस्सुयमएण वाऽवि दुच्चरिअं । जे न कहंति गुरूणं न हु ते आराहगा हुंति ॥२१८॥
गारवपंकनिबुड्डा अइयारं जे परस्स न कहंति । दंसणनाणचरित्ते ससल्लमरणं हवइ तेसिं ॥ २१९ ॥

व्याख्या—तत्र 'लज्जया' अनुचितानुष्ठानसंवरणाऽऽत्मिकया 'गौरवेण च' सातर्द्धिरसगौरवात्मकेन, मा भून्ममालोचनार्हमाचार्यमुपसर्पतस्तद्वन्दनादिना तदुक्ततपोऽनुष्ठानासेवनेन च ऋद्धिरससाताभावसम्भवः इति, 'बहुश्रुतमदेन वा' बहुश्रुतोऽहं तत्कथमल्पश्रुतोऽयं मम शल्यमुद्धरिष्यति ? कथं चाहमस्मै वन्दनादिकं दास्यामि ? अपभ्रा-

व्याख्या—'एवमेव' यथाऽऽवीचिमरण द्रव्यक्षेत्रकालभवभावभेदत पञ्चविध, तथाऽवधिमरणमपीत्यर्थ । तत्स्वरूपमाह–यानि मृत , सम्प्रतीति शेष , तानि चैव 'मरइ पुणो'त्ति आर्षत्वात्तिङ्व्यत्ययेन मरिष्यति पुन , किमुक्त भवति ?–अवधि–मर्यादा, ततश्च यानि नारकादिभवनिबन्धनतयाऽऽयु कर्मदलिकान्यनुभूय म्रियते, यदि पुनस्तान्येवानुभूय मरिष्यति तदा तद् द्रव्यावधिमरण, सम्भवति हि गृहीतोज्झितानामपि कर्म्मदलिकाना पुनर्ग्रहणम्, परिणामवैचित्र्याद्, एव क्षेत्रादिष्वपि भावनीय । पश्चार्द्धेनाऽऽत्यन्तिकमरणमाह–

एमेव आइयंतियमरणं नवि मरइ ताइ पुणो ॥ २१६ ॥

व्याख्या—'एवमेव' अवधिमरणवदात्यन्तिकमरणमपि द्रव्यादिभेदत पञ्चविध, विशेषस्त्वयम्–'णवि मरइ ताइ पुणो'त्ति अपिशब्दस्यैवकारार्थत्वान्नैव तानि द्रव्यादीनि पुनर्म्रियते, इदमुक्त भवति–यानि नरकाद्यायुष्कतया कर्मदलिकान्यनुभूय म्रियते मृतो वा न पुनस्तान्यनुभूय मरिष्यति, एवं क्षेत्रादिष्वपि वाच्य, त्रीण्यपि चामून्यवीच्यवध्यात्यन्तिकमरणानि प्रत्येक पञ्चाना द्रव्यादीना नारकादिगतिभेदेन चतुर्विधत्वाद्विंशतिभेदानीति गाथार्थ ॥२१६॥ साम्प्रत वल मरणमाह—

सजमजोगविसन्ना मरति जे त वलायमरण तु । इदियविसयवसगया मरति जे त वसट्ट तु ॥२१७॥

दुःखेनान्तः—पर्यन्तो यस्य तद्दुरन्तं तस्मिन्, तथा 'दीर्घे' अनादौ केषाञ्चिदपर्यवसिते चेति तत् सर्वथा परिहर्त्तव्यमेवेति भाव इति गाथार्थः ॥ २२० ॥ तद्भवमरणमाह—

**मोत्तुं अकम्मभूमगनरतिरिए सुरगणे अ नेरइए । सेसाणं जीवाणं तब्भवमरणं तु केसिंचि ॥ २२१ ॥**

व्याख्या—'मुक्त्वा' अपहाय, कान्?—'अकम्मभूमगनरतिरिए'त्ति सूत्रत्वात् अकर्म्मभूमिजाश्च ते देवकुरूत्तरकुर्वादिपूत्पन्नतया नरतिर्यञ्चश्च अकर्म्मभूमिजनरतिर्यञ्चस्तान्, तेषां हि तद्भवानन्तरं देवेष्वेवोत्पादः, तथा 'सुरगणांश्च' सुरनिकायान्, किमुक्तं भवति?—चतुर्निकायवर्तिनोऽपि देवान्, निरयो—नरकः तस्मिन् भवा नैरयिकाः, इहापि चशब्दानुवृत्तेस्तांश्च मुक्त्वेति सम्बन्धः, तेषां देवानां च तद्भवानन्तरं तिर्यग्मनुष्येष्वेवोत्पत्तेः, 'शेषाणाम्' एतदुद्धरितानां कर्म्मभूमिजनरतिरश्चां 'जीवानां' प्राणिनां तद्भवमरणं, तेषामेव पुनस्तत्रोत्पत्तेः, तद्धि यस्मिन् भवे वर्त्तते जन्तुस्तद्भवयोग्यमेवायुर्बद्ध्वा पुनस्तत्क्षयेण म्रियमाणस्य भवति, तुशब्दस्तेषामपि सङ्ख्येयवर्षायुषामेवेति विशेषख्यापकः, असङ्ख्येयवर्षायुषां हि युगलधार्मिकत्वादकर्म्मभूमिजानामिव देवेष्वेवोत्पादः, तेषामपि न सर्वेषां, किन्तु 'केषाञ्चित्' तद्भवोत्पादानुरूपमेवायुःकर्म्मोपचिन्वतामिति गाथार्थः ॥ २२१ ॥ अत्रान्तरे प्रत्यन्तरेषु 'मोत्तूण ओहिमरणं' इत्यादिगाथा दृश्यते, न चास्या भावार्थः सम्यगवबुध्यते, नापि चूर्णिकृताऽसौ व्याख्यातेति उपेक्ष्यते ॥

सम्प्रति बालपण्डितमिश्रमरणस्वरूपमाह—

जना हि इय मम इत्यभिमानेन, अपि पूरणे, ये गुरुकर्म्माणो 'न कथयन्ति' नालोचयन्ति, केपाम् ?–'गुरूणाम्' आलोचनार्हाणामाचार्यादीना, किं तद् ?–'दुश्चरित' दुरनुष्ठितम् इति सम्बन्ध , 'न हु' नैव 'ते' अनन्तरमुक्तरूपा आराधयन्ति–अविकलतया निष्पादयन्ति सम्यग्दर्शनादीनि इत्याराधका भवन्ति, तत किमित्याह–गौरव पङ्क इव कालुष्यहेतुतया तस्मिन् निबुड्डा–इति प्राकृतत्वान्निमग्ना इव निमग्ना तत्क्रोडीकृततया, लज्जामदयोरपि प्रागुपादाने यदिह गौरवस्यैवोपादान तदस्यैवातिदुष्टतात्यापनार्थम्, 'अतिचारम्' अपराध ये 'परस्स' आचार्यादे न कथयन्ति, किंविषयम् ? इत्याह—'दर्शनज्ञानचारित्रे' दर्शनज्ञानचारित्रविषय, तत्र दर्शनविषय शङ्कादि ज्ञानविषय कालातिक्रमादि चारित्रविषय समित्यननुपालनादि, शल्यमिव शल्य कालान्तरेऽप्यनिष्टफलविधान प्रत्यवन्ध्यतया, सह तेन सशल्य तच्च तन्मरण च सशल्यमरणम्–अन्त शल्यमरण भवति, 'तेपा' गौरवपङ्कमग्नानामिति गाथाद्वयार्थ ॥ २१८–२१९ ॥ अस्यैवात्यन्तपरिहार्यता ख्यापयन् फलमाह—

एय ससल्लमरण मरिऊण महब्भए दुरतमि । सुइर भमति जीवा दीहे ससारकतारे ॥ २२० ॥

व्याख्या—'एतद्' उक्तस्वरूप सशल्यमरण यथा भवति तथेत्युपस्कार , सुव्यत्ययाद्वा एतेन–सशल्यमरणेन 'मृत्वा'त्यक्त्वा प्राणान्, के ?–जीवा इति सम्बन्ध , किम् ?–'सुचिर भ्रमन्ति' बहुकाल पर्यटन्ति, क्व ?–ससार कान्तारमिवातिगहनतया ससारकान्तार• तस्मिन्निति सण्टङ्क , कीदृशि ?–महद्भय यस्मिन् तन्महाभय तस्मिन्, तथा

लिनः—उत्पन्नकेवलाः सकलकर्म्मपुद्गलपरिशाटतो म्रियन्ते तज्ज्ञेयमिति शेषः, उभयत्राभेदनिर्देशः प्राग्वदिति गाथार्थः
॥ २२३ ॥ साम्प्रतं वैहायसगृध्रपृष्ठमरणे अभिधातुमाह— **एए दुन्निवि मरणा कारणजाए अणुण्णाया ॥ २२४ ॥**
**गिद्धाइभक्खणं गिद्धपिट्ठ उब्बंधणाइ वेहासं ।** तैर्भक्षणं गम्यमानत्वादात्मनः तदनिवारणादिना

व्याख्या—'गृद्धाः' प्रतीतास्ते आदिर्येषां शकुनिकाशिवादीनां 'गिद्धपिट्ठ'त्ति गृध्रैः स्पृष्टं—स्पर्शनं यस्मि-
तद्भक्ष्यकरिकरभादिशरीरानुप्रवेशेन च गृध्रादिभक्षणं, तत् किमुच्यत इत्याह— स ह्यलक्तकपूणिकापुटप्रदाने-
स्तद्गृध्रस्पृष्टम्, यदिवा गृध्राणां भक्ष्यं पृष्ठमुपलक्षणत्वादुदरादि च मर्तुर्यस्मिंस्तद्गृध्रपृष्ठम्, प्रतिपादनमत्यन्तमहासत्त्वविषयतया
नाप्यात्मानं गृध्रादिभिः पृष्ठादौ भक्षयतीति, पश्चान्निर्दिष्टस्यापि चास्य प्रथमतः वन्धनमुद्बन्धनं तदादिर्यस्य
कर्म्मनिर्जरां प्रति प्राधान्यख्यापनार्थम्, 'उब्बंधणाइ वेहासंति' उत्—ऊर्ध्वं वृक्षशाखादौ वैहायसम्, उद्बद्धस्य हि विहा-
तरुगिरिभृगुप्रपातादेरात्मजनितस्य मरणस्य तदुद्बन्धनादि 'वेहास'न्ति प्राकृतत्वाद्यलोपे वैहायसिकेऽन्तर्भावः, सत्य-
यस्यैव भवनमिति तत्प्राधान्यविवक्षयेत्थमुक्तम्। आह—एवं गृध्रपृष्ठस्याप्यात्मघातरूपत्वाद्वैहायसिकेऽन्तर्भावः, सत्य-
मेतत्, केवलमल्पसत्त्वैरध्यवसातुमशक्यताख्यापनार्थमस्य भेदेनोपन्यासः, ननु—"[1]भावियजिणवयणाणं ममत्तरहि-
याण णत्थि हु विसेसो । अत्ताणंमि परंमि य तो वज्जे पीडमुभएवि ॥ १ ॥" इत्यागमः, एते चानन्तरोक्ते मरणे

१ भावितजिनवचनानां ममत्वरहितानां नास्त्येव विशेषः । आत्मनि परस्मिंश्च ततो वर्जयेत् पीडामुभयोरपि ॥ १ ॥

**अविरयमरण वाल मरण विरयाण पडिय विति । जाणाहि वालपडियमरणं पुण देसविरयाण ॥२२२॥**

व्यारया—विरमण विरतं—हिंसाऽनृतादेरुपरमण न विद्यते तद् येषा तेऽमी अविरता तेषा—मृतिसमयेऽपि देशविरतिमप्रतिपद्यमानानां मिथ्यादृशा सम्यग्दृशा वा मरणमविरतमरण—बालमरणमिति ब्रुवत इति सम्बन्ध , तथा 'विरताना' सर्वसावद्यनिवृत्तिमभ्युपगताना मरण 'पण्डित'मिति प्रक्रमात्पण्डितमरणम् , 'विति'त्ति ब्रुवते तीर्थकरगणधराद्य , जानीहि 'वालपण्डितमरण'मिति मिश्रमरण, पुन शब्द पूर्वापेक्षया विशेष द्योतयति, देशात् सर्वविषयापेक्षया स्थूलप्राणिव्यपरोपणादेर्विरता देशविरतास्तेषामिति गाथार्थ ॥ २२२ ॥ एव चरणद्वारेण बालादिमरणत्रयमभिधाय ज्ञानद्वारेण छद्मस्थमरणकेवलिमरणे प्रतिपादयितुमाह—

**मणपज्जवोहिनाणी सुअमइनाणी मरति जे समणा । छउमत्थमरणमेय केवलिमरण तु केवलिणो ॥२२३॥**

व्यारया—मन'पर्यवज्ञानिनोऽवधिज्ञानिनश्च, ज्ञानिशब्दस्य प्रत्येकमभिसम्बन्धात्, श्रुतज्ञानिनो मतिज्ञानिनश्च 'म्रियन्ते' प्राणास्त्यजन्ति ये 'श्रमणा ' तपस्विन छादयन्ति छद्मानि—ज्ञानावरणादीनि तेषु तिष्ठन्तीति छद्मस्था तेषा मरण छद्मस्थमरणमेतत् , इह च प्रथमतो मन पर्यायनिर्देशो विशुद्धिकृतप्राधान्यमङ्गीकृत्य चारित्रिण एव तदुपजायत इति स्वामिकृतप्राधान्यापेक्षो वा, एवमवध्यादिष्वपि यथायोग स्वधियैव हेतुरभिधेय , केवलिमरण तु ये केव-

शब्दश्चोपमेतिवत्सादृश्येऽपि दृश्यते, ततश्च पादपमुपगच्छति—सादृश्येन प्राप्नोतीति पादपोपगमं, किमुक्तं भवति ?— यथैव पादपः क्वचित् कथञ्चिन्निपतितः सममसममिति चाविभावयन्निश्चलमेवास्ते, तथाऽयमपि भगवान् यद् यथा समविषमदेशेष्वङ्गमुपाङ्गं वा प्रथमतः पतितं न तत्ततश्चलयति, तथा च प्रकीर्णकृत्—णिंचल णिप्पडिकम्मो णिक्खिवए जं जहिं जहा अंगं। एयं पादोवगमं णीहारिं वा अणीहारिं ॥ १ ॥ पातोवगमं भणियं सम विसमो पायवोव जह पडितो। णवरं परप्पतोगा कंपेज्ज जहा फलतरूव ॥ २ ॥" चः समुच्चये, इह चैवंविधानशनोपलक्षितानि मरणान्यप्येवमुक्तानि, अत एवाह—त्रीणि मरणानि, एतत्स्वरूपं च यथेदं विधेयं यच्चात्र सपरिकर्म्म अपरिकर्म्म च इत्यादिकं सूत्रकार एवोत्तरत्र तपोमार्गनाम्नि त्रिंशत्तमाध्ययनेऽभिधास्यत इति निर्युक्तिकृता नोक्तम्। द्वारनिर्देशाच्चावश्यं किञ्चिद्वाच्यमितिमत्वेदमाह—'कण्णस'त्ति सूत्रत्वात् कनिष्ठं—लघु जघन्यमितियावत्, मध्यमं—लघुज्येष्ठयोर्मध्ये भावि, ज्येष्ठम्—अतिशयवृद्धमुत्कृष्टमित्यर्थः, एषां द्वन्द्वः तत एतानि, धृतिः—संयमं प्रति चित्तस्वास्थ्यं संहननं—शरीरसामर्थ्यहेतुः वज्रऋषभनाराचादि ताभ्यां, प्राकृतत्वाच्चैकवचननिर्देशः, समाहाराश्रयणाद्वा, तुशब्दात्सपरिकर्म्मा-

१ निश्चलो निष्प्रतिकर्मा निक्षिपति यद्यत्र यथाऽङ्गम्। एतत्पादपोपगमनं निर्हारं वाऽनिर्हारम् ॥ १ ॥ पादपोपगमनं भणितं समो विषमो वा पादप इव यथा पतितः। नवरं परप्रयोगात् कम्पेत यथा फलतरुवत् ॥ २ ॥

आत्मविघातकारिणी, तथा चात्मपीडाहेतुरिति कथ नागमविरोध [1], अत एव च भक्तपरिज्ञानादिपु पीडापरिहाराय 'चत्तारि विचित्ताइ विगईणिज्जूहियाइ'इत्यादिसलेखनाविधि पानकादिविधिश्च तत्र तत्राभिहित, दर्शनमालिन्य चोभयत्रेत्याशङ्कयाह—'एते' अनन्तरोक्ते 'द्वे अपि' गृध्रपृष्ठवैहायसाख्ये मरणे 'कारणजाते' कारणप्रकारे दर्शनमालिन्यपरिहारादिके उदायिनृपानुमृततथाविधाचार्यवत् अनुज्ञाते, तीर्थकृद्गणधरादिभिरिति, अनेन च सम्प्रदायानुसारिता दर्शयन्नन्यथाकथने श्रुताशातनाया अतिदुरन्तत्वमाह इति गाथार्थ ॥ २२४ ॥ साम्प्रतमन्त्यमरणत्रयमाह—

भत्तपरिण्णा इगिणी पाओवगम च तिण्णि मरणाइ । कन्नसमज्झिमजेट्ठा धिइसघयणेण उ विसिट्ठा २२५

व्याख्या—भक्त–भोजन तस्य परिज्ञा–ज्ञपरिज्ञयाऽनेकधेदमसकृद्भुक्तपूर्वमेतद्धेतुक चावद्यमिति परिज्ञान, प्रत्याख्यानपरिज्ञया च "सव्व च असणपाण चउविह जा य बाहिरा उवही । अब्भितर च उवहि जावज्जीव च वोसिरे ॥ १ ॥" इत्यागमवचनाच्चतुर्विधाहारस्य वा [3] यावज्जीवमपि परित्यागात्मक प्रत्याख्यान भक्तपरिज्ञोच्यते, इङ्ग्यते–प्रतिनियतप्रदेश एव चेष्ट्यते अस्यामनशनक्रियायामितीङ्गिनी, पादै –अध प्रसर्प्पिमूलात्मकै पिबति पादपो–वृक्ष , उप-

१ चत्वारि विचित्राणि नियूढविकृतीनि । २ सर्व चाशनपान चतुर्विध यश्च बाह्य उपधिः । अभ्यन्तर चोपधिं यावज्जीव च व्युत्सृजति ।
३ वाशब्द पूर्वगाथोक्तसोपध्याहारत्यागसूचार्थ ।

यते, पादपोपगमनं तु नाम्नैव विशिष्टतमधृतिमतामेवेत्युक्तप्रायं, ततश्च वज्रऋषभनाराचसंहननिनामेवैतत्, उक्तं हि—"पढमंमि य संघयणे वट्टंते सेलकुड्डसामाणे । तेसिंपि य वोच्छेओ चोद्दसपुवीण वोच्छेए ॥ १ ॥" कथं चान्यथैवंविधविशिष्टधृतिसंहननाभावे—'पुव्वभवियवेरेणं देवो साहरइ कोऽवि पायाले । मा सो चरिमसरीरो न वेयणं किंपि पावेज्जा ॥१॥'तथा 'देवो नेहेण नयइ देवारण्णं व इंदभवणं वा । जहियं इट्ठा कंता सवसुहा हुंति सुहभावा ॥२॥ उप्पण्णे उवसग्गे दिवे माणुस्सए तिरिक्खे य । सवे पराजिणित्ता पाओवगया परिहरंति ॥ ३ ॥ पुवावरउत्तरेहिं दाहिणवाएहिं आवडंतेहिं । जह नवि कंपइ मेरू तह झाणातो नवि चलंति ॥ ४ ॥" इति मरणविभक्तिकृदुक्तं महासामर्थ्यं सम्भवि, किञ्च—तीर्थंकरसेवितत्वाच्च पादपोपगमनस्य ज्येष्ठत्वं, इतरयोश्चाविशिष्टसाधुसेवितत्वादन्यथात्वं, तथा चावादि—"सवे[6] सवद्धाए सवण्णू सवकम्मभूमीसु । सवगुरू सवहिया सवे मेरूसु अहिसित्ता ॥ १ ॥

१ प्रथमे च संहनने वर्त्तमाने शैलकुड्यसमाने । तस्यापि च व्युच्छेदश्चतुर्दशपूर्विणां व्युच्छेदे । ॥ १ ॥ २ पूर्वभविकवैरेण देवः संहरति कोऽपि पाताले । मा स चरमशरीरो न वेदनां कामपि प्राप्नुयात् ॥ १ ॥ ३ देवः स्नेहेन नयति देवारण्यं वेन्द्रभवनं वा । यत्रेष्टाः कान्ताः सर्वसुखा भवन्ति शुभभावाः ॥ २ ॥ ४ उत्पन्नानुपसर्गान् दिव्यान् मानुष्यकान् तैरश्चांश्च । सर्वान् पराजित्य पादपोपगताः परिहरन्ति ॥३॥ ५ पूर्वापरोत्तरैर्दक्षिणवातैश्चापतद्भिः । यथा नापि कम्पते मेरुस्तथा ध्यानान्नापि चलन्ति ॥ ४ ॥ ६ सर्वे सर्वाद्धायां सर्वज्ञाः सर्वकर्मभूमिषु । सर्वगुरवः सर्वहिताः सर्वे मेरुषु अभिषिक्ताः ॥ १ ॥

परिकर्मतादिभिश्च विशेषैर्विशिष्टानि–विशेषवन्ति, इदमुक्तं भवति–यद्यपि त्रितयमप्येतत् "धीरेणऽवि मरियव्व कापुरिसेणवि अवस्स मरियव्व । तम्हा अवस्समरणे वरं खु धीरत्तणे मरिउं ॥१॥ संसाररंगमज्झे धीबलसंनद्धबद्धकच्छातो । हतूण मोहमल्लं हरामि आराहणपडागं ॥२॥ जह पच्छिमम्मि काले पच्छिमतित्थयरदेसियमुयारं । पच्छा निच्छयपत्थं उवेमि अब्भुज्जयं मरणं ॥ ३ ॥" इति शुभाशयवानेव प्रतिपद्यते, फलमपि च विमानिकतामुक्तिलक्षणं त्रयस्यापि समानं, तथा चोक्तम्–"एयं पच्चक्खाणं अणुपालेऊण सुविहिओ सम्मं । वेमाणितो व देवो हवेज्ज अहवाऽवि सिज्झिज्जा ॥ १ ॥" तथापि विशिष्टविशिष्टतरविशिष्टतमधृतिमतामेव तत्प्राप्तिरिति कनिष्ठत्वादिस्तद्विशेष उच्यते, तथाहि—भक्तपरिज्ञामरणमार्यिकादीनामप्यस्ति, यत उक्तम्–"सव्वावि य अज्जाओ सव्वेऽवि य पढमसंघयणवज्जा । सव्वेऽवि देसविरया पच्चक्खाणेण उ मरंति ॥ १ ॥" अत्र हि प्रत्याख्यानशब्देन भक्तपरिज्ञैवोक्ता, तत्र प्राक् पादपोपगमनादेरन्यथाऽभिधानात्, इङ्गिनीमरणं तु विशिष्टतरधृतिसंहननवतामेव सम्भवतीत्यार्यिकादिनिषेधत एवावसी-

१ धीरेणापि मर्तव्यं कापुरुषेणाप्यवश्यं मर्तव्यम् । तस्मादवश्यमरणे वरमेव धीरत्वेन मर्तुम् ॥ १ ॥ संसाररङ्गमध्ये धृतिबलसंनद्धबद्धकक्षाकः । हत्वा मोहमल्लं हराम्याराधनापताकाम् ॥ २ ॥ यथा पश्चिमे काले पश्चिमतीर्थकरदेशितमुदारम् । पश्चान्निश्चयपथ्यमुपैमि अभ्युद्यतं मरणम् ॥ ३ ॥ २ एतत्प्रत्याख्यानमनुपाल्य सुविहितः सम्यक् । वैमानिको वा देवो भवेदथवाऽपि सिध्येत् ॥ ४ ॥ ३ सर्वा अपि चार्याः सर्वेऽपि च प्रथमसंहननवर्जाः । सर्वेऽपि देशविरताः प्रत्याख्यानेनैव म्रियन्ते ॥ १ ॥

प्रक्रमात् सुव्यत्ययाच्चात्मप्रदेशेषु, आत्मप्रदेशो ऐकैकस्तत्प्रदेशैरनन्तानन्तैरावेष्टितः संवेष्टितः, तथा च वृद्धव्याख्या—इदाणिं पदेसग्गं-अणंताणंता आउगकम्मपोग्गला जेहिं एगमेगो जीवपएसो आवेढिय परिवेढितो, इति गाथार्थः ॥ २२६ ॥ सम्प्रति कति म्रियन्ते एकसमयेनेतिद्वारमाह—

दुन्नि व तिन्नि व चत्तारि पंच मरणाइ अवीइमरणंसि। कइ मरइ एगसमयंसि विभासावित्थरं जाणे॥२२७॥
सव्वे भवत्थजीवा मरंति आवीइअं सया मरणं। ओहिं च आइअंतिय दुन्निवि एयाइ भयणाए ॥ २२८ ॥
ओहिं च आइअंतिअ बालं तह पंडिअं च मीसं च। छउमं केवलिमरणं अन्नुन्नेणं विरुज्झंति ॥ २२९ ॥

व्याख्या—द्वे वा त्रीणि वा, वाशब्दस्योत्तरत्रानुवृत्तेः चत्वारि वा पञ्च वा मरणानि वक्ष्यमाणविवक्षातः प्रक्रमादेकस्मिन् समये सम्भवन्ति, आवीचिमरणे सतीति शेषः, अनेन चास्य सततावस्थितत्वमेतदविवक्षया च तद्द्वयादिभेदपरिकल्पनेत्याह, कति म्रियन्त एक समये ? इति चतुर्थद्वारस्य विशेषेण भाषणं विभाषणं विभाषा—व्याख्या विविधैर्वा प्रकारैर्भाषणं विभाषा–भेदाभिधानं तया विस्तरः–प्रपञ्चस्तं विस्तरं जानीहि जानीयाद्वा, निगमनमेतत्, प्रस्तुतमेवार्थं प्रकटयितुमाह—'सर्वे' निरवशेषाः, तत् किं मुक्तिभाजोऽपीत्याह—'भवस्थजीवाः' भवन्त्यस्मिन् कर्म्म-

१ इदानीं प्रदेशाग्रम्—अनन्तानन्ता आयुःकर्मपुद्गला यैरेकैको जीवप्रदेश आवेष्टितः परिवेष्टितः

सर्वाहिं लद्धीहिं सव्वेऽवि परीसहे पराजित्ता । सव्वेऽवि य तित्थयरा पाओवगया उ सिद्धिगया ॥ २ ॥ अवसेसा अणगारा तीयपडुप्पण्णऽणागया सव्वे । केती पाओवगया पच्चक्खाणिंगिणिं केती ॥ ३ ॥" इति कृत प्रसङ्गेनेति गाथार्थ ॥ २२५ ॥ इत्थ प्रतिद्वारगाथाद्वयवर्णनात् मूलद्वारगाथाया मरणविभक्तिप्ररूपणाद्वारमनुवर्णितम्, अधुनाऽनुभावप्रदेशाग्रद्वारद्वयमाह—

सोवक्कमो अ निरुवक्कमो अ दुविहोऽणुभावमरणमि । आउगकम्मपएसग्गणतणता पएसेहि ॥ २२६ ॥

व्याख्या—सहोपक्रमेण–अपवर्तनाकरणाख्येन वर्तत इति सोपक्रमश्च, निर्गत उपक्रमान्निरुपक्रमश्च द्विविधो, द्वैविध्य चोक्तभेदेनैव, कोऽसौ ?–अनुभाव–अनुभाग, क ?–'मरणे' इत्यर्थात् मरणविषयायुषि, तत्र हि सप्तभिरष्टभिर्वाऽऽकर्षैर्गवामिव मरपु जलगण्डूपग्रहणरूपैर्यत्पुद्गलोपादान तदनुभागोऽतिदृढ इत्यपवर्तयितुमशक्यतया निरुपक्रममुच्यते, यत्तु षड्भि पञ्चभिश्चतुर्भिर्वा आगृहीत–दलिक तदपवर्तनाकरणेनोपक्रम्यते इति सोपक्रम, न चैतदुभयमप्यायु क्षयात्मनि मरणे सम्भवति, तथा एति याति च इत्यायुस्तन्निबन्धन कर्म्म आयु कर्म्म तस्य विभक्तुमशक्यतया प्रकृष्टा देशा प्रदेशास्तेषामग्र–परिमाणमायु कर्म्मप्रदेशाग्रम्, अनन्तानन्ता –अनन्तानन्तसङ्ख्यापरिमिता मरणप्रक्रमेऽप्यर्थादायु पुद्गलास्तद्विषयत्वाच्च मरणस्यैवमुपन्यास , किमेतावन्त कृत्स्नेऽप्यात्मनि ?, अत आह—'पएसेहिं'ति

१ सर्वाभि लब्धिभि (युता ) सर्वानपि परीषहान् पराजित्य । सर्वेऽपि च तीर्थंकरा पादपोपगतास्तु सिद्धिं गता ॥२॥ । अवशेषा अनगारा अतीतप्रत्युत्पन्नागता सर्वे । केचित्पादपोपगता प्रत्याख्यानेङ्गिन्यौ केचित् ॥ ३ ॥

वंसट्टमरणे अंतोसल्लमरणे तब्भवमरणे गिरिपडणे तरुपडणे जलप्पवेसे जलणप्पवेसे विसभक्खणे सत्थोवहणणे वेहाणसे गिद्धपट्ठे"त्ति, एतेषु च यद्यपि गिरिपतनादिषट्कस्य वैहायस एवान्तर्भावः तथापि वलन्मरणान्तःशल्यमरणयोः प्रक्षेपे कथं नोक्तसङ्ख्याविरोधः?, उच्यते, इहाविरतस्यैव बालमरणं विवक्षितम्, उक्तं हि—'अविरयमरणं बालमरणं' अनयोस्त्वेकत्र संयमस्थानेभ्यो निवर्तनम्, अन्यत्र मालिन्यमात्रं विवक्षितं, न तु सर्वथा विरतेरभाव एवेति कथं बालमरणे सम्भवः?, तथा छद्मस्थमरणमपि विरतानामेव रूढमिति नोक्तसङ्ख्याविरोधः, एवं देशविरतस्यापि द्व्यादिभङ्गभावना कार्या, नवरं बालमरणस्थाने बालपण्डितमरणं वाच्यं, विरतस्य त्ववध्यात्यन्तिकमरणयोरन्यतरत् पण्डितमरणं चेति द्वे, छद्मस्थकेवलिमरणयोश्चान्यतरदिति त्रीणि, भक्तपरिज्ञेङ्गिनीपादपोपगमनानामन्यतरेण सह चत्वारि, कारणिकस्य तु वैहायसगृध्रपृष्ठयोरन्यतरेण सह पञ्च, दृढसंयमं प्रत्येवमुक्तं, शिथिलसंयमस्य त्ववध्यात्यन्तिकमरणयोरन्यतरत्, कुतश्चित्कारणाद्वैहायसगृध्रपृष्ठयोश्चान्यतरदिति द्वे, कथञ्चिच्छल्यसम्भवे चान्तःशल्यमरणेन सह त्रीणि, वलन्मरणेन सह चत्वारि, छद्मस्थमरणेन तु पञ्च, पण्डितमरणस्य यथोक्तभक्तपरिज्ञानादीनां वा विशुद्धसंयमत्वादस्याभाव एवेति, आह—विरतस्यावस्थाद्वयेऽपि तद्भवमरणप्रक्षेपे कथं न षष्ठमरणसम्भवः?, उच्यते, विरतस्य देवेष्वेवोत्पाद इति तत्रै-

१० वशार्त्तमरणमन्तःशल्यमरणं तद्भवमरणं गिरिपतनं तरुपतनं जलप्रवेशो ज्वलनप्रवेशो विषभक्षणं शस्त्रोपहननं वैहायसं गृध्रपृष्ठमिति ।

वशवर्तिनो जन्तव इति भव तत्र तिष्ठन्ति भवस्था ते च ते जीवाश्चेति विशेषणसमास , म्रियन्ते, आवीचिकमवीचिक वा मरणमाश्रित्येति शेप , यद्वा विभक्तिव्यत्ययादावीचिकेन मरणेन म्रियन्ते 'सदा' सर्वकाल, 'ओहिं च'त्ति अवधिमरण, चशब्दो भिन्नक्रम , ततश्च 'आइयतिय'न्ति आत्यन्तिकमरण च, द्वे अप्येते 'भजनया' विकल्पनया, किमुक्त भवति ?–यद्यप्यावीचिमरणवत् अवध्यात्यन्तिकमरणे अपि चतसृष्वपि गतिषु सम्भवत तथाऽप्यायु क्षयसमय एव तयो सम्भवान्न सदाभाव , अत आवीचिकमरणमेव सदेत्युक्तम् , अनेनावीचिमरणस्य सदाभावेन लोके मरणत्वेनाप्रसिद्धि अविवक्षाया हेतुरुक्त इति भावनीय। सम्प्रति 'दोन्निवि' इत्यादि व्यक्तीकरोति–'ओहिं च आइयंतिय'त्ति, चशब्दो भिन्नक्रम , ततोऽवधिमरणमात्यन्तिकमरण च, 'बाल' बालमरण च, तथेत्युत्तरभेदापेक्षया समुच्चये, 'पण्डित च' पण्डितमरण, 'मिश्र च' बालपण्डितमरण च, चशब्दाद्वैहायसगृध्रपृष्ठमरणे, भक्तपरिज्ञेङ्गिनीपादपोपगमनानि च, 'अन्योऽन्येन' परस्परेण विरुध्यन्ते, युगपदसम्भवात् , तत्र चाविरतस्यावध्यात्यन्तिकमरणयो अन्यतरद्बालमरण चेति द्वे, तद्भवमरणेन सह त्रीणि, वशार्तेन चत्वारि, कथञ्चिदात्मघाते च वैहायसगृध्रपृष्ठयोरन्यतरेण पञ्च, आह–वलन्मरणान्त शल्यमरणे अपि बालमरणभेदावेव, यत आगम –"बालमरणे दुवालसविहे पन्नत्ते, तजहा—वलायमरणे

१ बालमरण द्वादशविध प्रज्ञप्त, तद्यथा–वलन्मरण

मरणे अणंतभागो इक्किक्के मरइ आइमं मोत्तुं। अणुसमयाई नेयं पढमचरिमंतरं नत्थि ॥ २३१ ॥

व्याख्या—'मरणे' प्रागुक्तरूपे अनन्तभाग एकैकस्मिन् म्रियते, किं सर्वस्मिन्नपि ? नेत्याह—'आदिमम्' आवीचिमरणं, तस्यैवाद्यत्वात्, 'मुक्त्वा' अपहाय, इयमत्र भावना–शेषमरणस्वामिनो हि सर्वजीवापेक्षया अनन्तेभाग एवेति तेष्वनन्तो भागो म्रियत इत्युच्यते, आवीचिमरणस्वामिनस्तु सिद्धविरहिताः सर्वे एव जीवाः, ते चानन्ता इतिकृत्वाऽनन्तभागहीनाः सर्वे जीवा म्रियन्ते इत्युच्यते । उक्तं कतिभागो म्रियते एकैकस्मिन्निति द्वारम्, अधुनाऽनुसमयद्वारमाह—'अणुसमय'त्ति समयं समयमनु अनुसमयं, वीप्सायामव्ययीभावः, ततश्चानुसमयं–सततम्, 'आदि' प्रथममावीचिमरणं 'ज्ञेयम्' अवबोद्धव्यं, यावदायुस्तस्य प्रतिपादनात्, शेषाणां त्वायुषोऽन्त्यसमय एवैकत्र भावादनुसमयतानभिधानं, बहुसमयविषयत्वादनुसमयतायाः, तथा च वृद्धव्याख्या–"पढमे जाव आउं धरइ सेसाणं एगसमयं जहिं मरइ" न च 'मासं पाओवगया' इत्यागमेन विरोधः, तत्र पादपोपगमनशब्देन निश्चेष्टताया एवाभिधानात्, मरणस्य तु तत्राप्यायुस्त्रुटिसमय एव सद्भावात्, तुः पूरणे। गतमनुसमयद्वारम्, इदानीं सान्तरद्वारमाह—तत्र प्रथमचरमयोरन्तरं–व्यवधानं 'नास्ति' न विद्यते, प्रथमस्यावीचिमरणस्य सदा सम्भवात्, चरमस्य भवापेक्षया केवलिमरणस्य पुनर्मरणाभावादिति भाव इति गाथार्थः ॥ २३१ ॥ शेषाणामपि किमेवमित्याह—

१ प्रथमं यावदायुर्धारयति शेषाणामेकसमयो यत्र म्रियते

वोत्पत्त्यभावान्न तद्भवमरणसम्भव इति गाथात्रयार्थ ॥ २२७–२२८–२२९ ॥ गत कति म्रियन्त एकसमय इति द्वारम्, इदानीं कतिकृत्वो म्रियते एकैकस्मिन् ? इति द्वारमाह—

सखमसखमणता कमो उ इक्किक्कगमि अपसत्थे । सत्तट्ठग अणुबधो पसत्थए केवलिमि सइं ॥ २३० ॥

व्याख्या—'सखमसख'त्ति आर्षत्वात् सङ्ख्या–सङ्ख्याता असङ्ख्या–अविद्यमानसङ्ख्या अनन्ता–अपर्यवसिता, वारा इति प्रक्रम, 'कमो उ'त्ति क्रम परिपाटी, तुशब्दश्च कायस्थितेरल्पबहुत्वापेक्षयाऽय ज्ञेय इति विशेषद्योतक, 'एकेकगमि'त्ति एकैकस्मिन् 'अप्रशस्ते' बालमरणादौ निरूप्यमाणे, तत्र सामान्येन पञ्चेन्द्रियाविरतदेशविरतौ च सङ्ख्याता, शेषा पृथिव्युदकाग्निवायुद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रिया असङ्ख्याता, वनस्पतयोऽनन्ता, एते हि कायस्थित्यपेक्षया यथाक्रम बहुबहुतरबहुतमस्थितिभाज इतिकृत्वा । प्रशस्ते कति वारा म्रियत इत्याह—'सत्तट्ठग'त्ति सप्त वाऽष्ट वा सप्ताष्टास्ते परिमाणमस्येति सप्ताष्टक, कोऽसौ ?–'अनुबन्ध' सातत्येन भवन तन्मरणानामिति, ततोऽयमर्थ –सप्त वा अष्ट वा वारा म्रियते, क्व ?–'प्रशस्तके' सर्वविरतिसम्बन्धिनि पण्डितमरणे, इह च चारित्रस्य निरन्तरमवाप्त्यसम्भवात् तद्वत एव च प्रशस्तमरणभावादर्थाद् व्यवधानमपि देवभवैराश्रीयते, 'केवलिनि' यथाख्यातचारित्रवति समुत्पन्नकेवले 'सइ'ति सकृदेकमेव मरणमिति गाथार्थ ॥ २३० ॥ उक्त कतिकृत्वो म्रियत एकैकस्मिन्निति द्वार, सम्प्रति कतिभाग एकैकस्मिन्मरणे म्रियत इति द्वारमाह—

हापेक्षयेतिभावः, प्रतिनियतायुःपुद्गलापेक्षया तु साद्यपि सम्भवति, उपलक्षणत्वाच्चाशापर्यवसितं च अभव्यानां, भव्यानां पुनः सपर्यवसितमपीति गाथार्थः ॥ २३२ ॥ सम्प्रत्यतिगम्भीरतामागमस्य दर्शयन्नात्मौद्धत्यपरिहारायाह भगवान् निर्युक्तिकारः—

सव्वे एए दारा मरणविभत्तीइ वण्णिआ कमसो। सगलणिउणे पयत्थे जिणचउदसपुव्वि भासंति ॥२३३॥

व्याख्या—'सर्वाणि' अशेषाणि 'एतानि' अनन्तरमुपदर्शितानि 'द्वाराणि' अर्थप्रतिपादनमुखानि 'मरणविभक्तेः' मरणविभक्त्यपरनाम्नोऽस्यैवाध्ययनस्य 'वर्णितानि' प्ररूपितानि, मयेति शेषः, 'कमसो'त्ति प्राग्वत् क्रमतः, आह— एवं सकलापि मरणवक्तव्यतोक्ता उत नेत्याह—सकलाश्च–समस्ता निपुणाश्च–अशेषविशेषकलिताः सकलनिपुणाः तान् पदार्थान् इह प्रशस्तमरणादीन् जिनाश्च–केवलिनः चतुर्दशपूर्विणश्च–प्रभवादयो जिनचतुर्दशपूर्विणो 'भाषन्ते' व्यक्तमभिदधति, अहं तु मन्दमतित्वान्न तथा वर्णयितुं क्षम इत्यभिप्रायः, स्वयं चतुर्दशपूर्वित्वेऽपि यच्चतुर्दशपूर्व्युपादानं, तत्तेषामपि षट्स्थानपतितत्वेन शेषमाहात्म्यख्यापनपरमदुष्टमेव, भाष्यगाथा वा द्वारगाथाद्वयादारभ्य लक्ष्यन्त इति प्रेर्यानवकाश एवेति गाथार्थः ॥ २३३ ॥ इहैव प्रशस्ताप्रशस्तमरणविभागमाह—

एगंतपसत्था तिण्णि इत्थ मरणा जिणेहि पण्णत्ता। भत्तपरिण्णा इंगिणी पाउवगमणं च कमजिट्ठं ॥२३४॥

सेसाण मरणाण नेओ सतरनिरतरो उ गमो । साई सपज्जवसिया सेसा पढमिल्लुगमणाइ ॥ २३२ ॥

व्याख्या—शेपाणा मरणानाम्—अवधिमरणादीना पञ्चदशाना ज्ञेय , सहान्तरेण—व्यवधानेन वर्तत इति सान्तर , निष्क्रान्तोऽन्तरान्निरन्तरश्च, तु शब्दस्य समुच्चयार्थत्वात् , उक्त हि—"तुशब्दो विशेपणपादपूरणावधारणसमुच्चयेपु" कोऽसौ ?—गम्यते अनेन वस्तुस्वरूपमिति गम —प्ररूपणा, इदमुक्त भवति—यदाऽन्यतरद्बालमरणादिक प्राप्य म्रियते मृत्वा च भवान्तरे मरणान्तरमनुभूय पुनस्तदेवाप्नोति तदा सान्तरमिति प्ररूपणा, यदा तु बालमरणादिकमवाप्य पुनस्तदेवाव्यवहितमाप्नोति तदा निरन्तर भवति, तत्प्ररूपकत्वाच्चेह गमोऽपि सान्तरो निरन्तरश्चेत्युक्त । सम्प्रति गाथापश्चार्धेन कालद्वारमाह—सादीनि च सपर्यवसितानि च सादिसपर्यवसितानि 'शेपाणि' पोडश वक्ष्यमाणापेक्षया अवधिमरणादीनि, एकसामयिकतायास्तेपामभिहितत्वात् , प्रवाहापेक्षया तु शेपभङ्गोपलक्षणमेतत , प्रवाहतोऽपि भङ्गत्रयपतितानि शेपमरणानि सम्भवन्ति, तथा च वृद्धा —"बालमरणाणि अणाइयाणि वा अपज्जवसियाणि वा, अणादियाणि वा सपज्जवसियाणि, पडियमरणाणि पुण साइयाणि सपज्जवसियाणि" मुक्त्यवासौ तदुच्छित्तिसम्भवादिति भाव , 'पढमिल्लुग'ति प्रथमकम्—आवीचिमरणम् 'अनादि' आदिरहित प्रवा-

१ बालमरणानि अनादिकानि वा अपर्यवसितानि वा, अनादिकानि [illegible] सपर्यवसितानि, पण्डितमरणानि पुन सादिकानि सपर्यवसितानि

सम्बन्धी भावतस्तु भवपरम्परात्मकः प्राणिनामत्यन्तमाकुलीकरणहेतुः चरकादिमतसमूहो वा यस्मिन् स महौघः तस्मिन्, महत्त्वं चोभयत्रागाधतयाऽदृष्टपरपारतया च मन्तव्यं, तत्र किमित्याह—'एक' इत्यसहायो रागद्वेषादिसहभावविरहितो गौतमादिरित्यर्थः, 'तरति' परं पारमाप्नोति, तत्कालापेक्षया वर्त्तमाननिर्देशः, 'दुरुत्तर'ंति विभक्तिव्यत्ययाद्दुरुत्तरे-दुःखेनोत्तरितुं शक्ये, दुरुत्तरमिति क्रियाविशेषणं वा, न हि यथाऽसौ तरति तथाऽपरैर्गुरुकर्म्मभिः सुखेनैव तीर्यते, अत एव एक इति, सङ्ख्यावचनो वा, एक एव-जिनमतप्रतिपन्नाः, न तु चरकादिमताकुलितचेतसोऽन्ये तथा तरितुमीशत इति, 'तत्रे'ति गौतमादौ तरणप्रवृत्ते 'एक' इति तथाविधतीर्थकरनामकर्मोदयादनुत्तरावासविभूतिरद्वितीयः, किमुक्तं भवति ?-तीर्थकरः, स ह्येक एव भरते सम्भवतीति, 'महापण्णे'त्ति महती-निरावरणतयाऽपरिमाणा प्रज्ञा-केवलज्ञानात्मिका संवित् अस्येति महाप्रज्ञः, स किं इत्याह—'इमम्' अनन्तरवक्ष्यमाणं हृदि विपरिवर्तमानतया प्रत्यक्षं प्रक्रमात्तरणोपायं, 'पट्ठं'ति स्पष्टम्-असन्दिग्धं, पठ्यते च 'पण्हं'ति पृच्छ्यत इति प्रश्नं—प्रष्टव्यार्थरूपम् 'उदाहरे'त्ति भूते लिट्, तत उदाहरेद्—उदाहृतवान्, पठ्यते च—'अण्णवंसि महोघंसि एगे तिण्णे दुरुत्तरं'ति, अत्र सुब्व्यत्यये निक्षेपः, ततश्च—अर्णवान्महौघाद्दुरुत्तरात् तीर्ण इव तीर्णः-तीरप्राप्त इतियोगः, एको घातिकर्म्मसाहित्यरहितः, 'तत्रे'ति सदेवमनुजायां परिषदि, एकोऽद्वितीयः, स च तीर्थकृदेव, शेषं प्राग्वदिति सूत्रार्थः ॥ १ ॥ यदुदाहृतवांस्तदेवाह—

व्याख्या—एकान्तेन–नियमेन प्रशस्तानि–श्लाघ्यानि 'त्रीणि' त्रिसङ्ख्यानि 'अत्र' एतेष्वनन्तराभिहितेषु मरणेषु मरणानि 'जिनै' केवलिभि 'प्रनसानि' प्ररूपितानि, तान्येवाह—भक्तपरिज्ञा इङ्गिनी 'पायवगमण' चेति पादपोपगमन च, इदमपि त्रय किमेकरूपमित्याह—क्रमेण परिपाट्या ज्येष्ठम्–अतिशयप्रशस्तं क्रमज्येष्ठ यथोत्तर प्रधानमितिभाव । शेषमरणान्यपि यानि प्रशस्तानि तेषामत्रैवान्तर्भाव , इतराणि कानिचित् कथञ्चित् प्रशस्तानि, अपराणि तु सर्वथैवाप्रशस्तानीति गाथार्थ ॥ २३४ ॥ इह च येनाधिकारस्तदाह—

इत्थ पुण अहिगारो णायव्वो होइ मणुअमरणेण । मुत्तु अकाममरण सकाममरणेण मरियव्व ॥ २३५ ॥

व्याख्या—'अत्र' एतेषु मरणेषु, पुन शब्दो वाक्योपन्यासार्थ , अधिकारो ज्ञातव्यो भवति मनुजमरणेन, किमुक्त भवति ?–मनुष्यभवसम्भविना पण्डितमरणादिना, तान्येव प्रत्युपदेशप्रवृत्ते । सम्प्रत्युक्तार्थसक्षेपद्वारेणोपदेशसर्वसमाह–मुक्त्वाऽकाममरण–बालमरणाद्यमप्रशस्त 'सकाममरणेन' भक्तपरिज्ञादिना प्रशस्तेन मर्तव्यमिति गाथार्थ ॥ २३५ ॥ गतो नामनिष्पन्ननिक्षेप , सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

अण्णवसि महोहसि, एगे तरइ दुरुत्तर । तत्थ एगे महापण्णे, इम पण्हमुदाहरे ॥ १ ॥

व्याख्या—अर्णो–जल विद्यते यत्रासावर्णव , अर्णसो लोपश्चेति ( पा० ५–२–१०९ वार्तिक ) वप्रत्यय सकारलोपश्च, स च द्रव्यतो जलधिर्भावतश्च ससार तस्मिन् , कीदृशि ?–'महोघसि'त्ति महानोघ –प्रवाहो द्रव्यतो जल-

मन्ये मरणमनपराधवृत्तीनाम् ॥ १ ॥" न तु परमार्थतः तेषां सकामं—सकामत्वं, मरणाभिलापस्यापि निषिद्धत्वाद्, उक्तं हि—"मा मा हु विचिंतेजा जीवामि चिरं मरामि य लहुंति । जइ इच्छसि तरिउं जे संसारमहोदहिमपारं ॥ १ ॥"ति, तुः पूर्वापेक्षया विशेषद्योतकः, तच्च 'उत्कर्षेण' उत्कर्षोपलक्षितं, केवलिसम्बन्धीत्यर्थः, अकेवलिनो हि संयमजीवितं दीर्घमिच्छेयुरपि, मुक्त्यवाप्तिः इतः स्यादिति, केवलिनस्तु तदपि नेच्छन्ति, आस्तां भवजीवितमिति, तन्मरणस्योत्कर्षेण सकामता 'सकृद्' एकवारमेव भवेत्, जघन्येन तु शेषचारित्रिणः सप्ताष्ट वा वारान् भवेदित्याकूतमिति सूत्रार्थः ॥ ३ ॥ यदुक्तं—'स्त इमे द्वे स्थाने' तत्राद्यं तावदाह—

तत्थिमं पढमं ठाणं, महावीरेण देसियं । कामगिद्धे जहा बाले, भिसं कूराणि कुव्वति ॥ ४ ॥

व्याख्या—'तत्रे'ति तयोरकाममरणसकाममरणाख्ययोः स्थानयोर्मध्ये 'इदम्' अनन्तरमभिधास्यमानरूपं 'प्रथमम्' आद्यं स्थानं, 'महावीरेणे'ति चरमतीर्थकृता, 'तत्रैको महाप्रज्ञः' इति मुकुलितोक्तेरभिव्यक्त्यर्थमेतत्, 'देशितं' प्ररूपितं, किं तत् इत्याह—'कामेषु' इच्छामदनात्मकेषु 'गृद्धः' अभिकाङ्क्षावान् कामगृद्धो 'यथा' इत्युपप्रदर्शनार्थः, 'बाल' इत्युक्तरूपो 'भृशम्' अत्यर्थं 'क्रूराणि' रौद्राणि, कर्म्माणीति गम्यते, तानि च प्राणव्यपरोपणादीनि 'कुव्वति'त्ति करोति—क्रिययाऽभिनिर्वर्तयति, शक्तानशक्तावपि क्रूरतया तन्दुलमत्स्यवन्मनसा कृत्वा च प्रक्रमादकाम एव म्रियते इति सूत्रार्थः ॥ ४ ॥ इदमेव प्रथमकवाक्यं प्रपञ्चयितुमाह—

१ मा मैव विचिन्तयेः जीवामि चिरं म्रिये च लघु इति । यदीच्छसि तरीतुं संसारमहोदधिमपारम् ॥ १ ॥

सतिमे [redacted] दुवे ट्ठाणा, अक्खाया मारणंतिया । अकाममरणं चेव, सकाममरणं तहा ॥ २ ॥

व्याख्या—सन्तीति प्राकृतत्वात् वचनव्यत्ययेन स्तो–विद्येते 'इमे' प्रत्यक्षे, च पूरणे, पठ्यते च 'सतिमेए'त्ति स्त एते, मकारोऽलाक्षणिकः, एवमन्यत्रापि यत्र नोच्यते तत्र भावनीयं, 'द्वे' द्विसङ्ख्ये तिष्ठन्त्यनयोर्जन्तव इति स्थाने 'आख्याते' पुरातनतीर्थकृद्भिरपि कथिते, अनेन तीर्थकृतां परस्परं वचनाव्याहतिरुपदर्शिता, ते च कीदृशे ?—'मारणंतिए'त्ति मरणमेवान्तो–निजनिजायुषः पर्यन्तो मरणान्तः तस्मिन् भवे मारणान्तिके, ते एव नामत उपदर्शयति–'अकाममरणम्' उक्तरूपमनन्तरवक्ष्यमाणरूपं च, वक्ष्यमाणापेक्षया च समुच्चये, एवेति पूरणे, 'सकाममरणम्' उक्तरूपं वक्ष्यमाणस्वरूपं च तथेति सूत्रार्थः ॥ २ ॥ केषां पुनरिदं कियत्कालं च ? इत्यत आह—

बालाणं अकामं तु, मरणं असतिं भवे । पंडियाणं सकामं तु, उक्कोसेण सतिं भवे ॥ ३ ॥

व्याख्या—बाला इव बालाः सदसद्विवेकविकलतया तेषाम् 'अकामं तु'त्ति तुशब्दस्यैवकारार्थत्वात् अकाममेव मरणमसकृद्–वारंवारं भवेत्, ते हि विषयाभिष्वङ्गतो मरणमनिच्छन्त एव म्रियन्ते, तत एव च भवाटवीमटन्ति, 'पण्डितानां' चारित्रवतां सह कामेन—अभिलाषेण वर्तते इति सकामं सकाममिव सकामं मरणं प्रत्यसन्नस्ततया, तथात्वं चोत्सवभूतत्वात् तादृशां मरणस्य, तथा च वाचकः—"सञ्चिततपोधनानां नित्यं व्रतनियमसंयमरतानाम् । उत्सवभूतं

सम्भोगजनिता चित्तप्रवृत्तिः, तस्यायमाशयः—कथं दृष्टपरित्यागतोऽदृष्टपरिकल्पनयाऽऽत्मानं विप्रलभेयमिति सूत्रार्थः ॥ ५ ॥ पुनस्तदाशयमेवाभिव्यञ्जयितुमाह—

हत्थागया इमे कामा, कालिया जे अणागया । को जाणइ परे लोए ?, अत्थि वा नत्थि वा पुणो ॥ ६ ॥

व्याख्या—हसन्ति तेनावृत्य मुखं घ्नन्ति वा घात्यमनेनेति हस्तस्तम् आगताः-प्राप्ताः हस्तागताः, उपमार्थोऽत्र गम्यते, ततो हस्तागता इव स्वाधीनतया, क एते ?—'इमे' प्रत्यक्षोपलभ्यमानाः काम्यन्त इति कामाः—शब्दादयः, कदाचिदागामिनोऽप्येवंविधा एव स्युरित्याह—काले सम्भवन्तीति कालिकाः—अनिश्चितकालान्तरप्राप्तयो ये 'अनागता' भाविजन्मसम्बन्धिनः, कथं पुनरमी अनिश्चितप्राप्तय इत्याह—'को जाणइ'त्ति उत्तरस्य पुनःशब्दस्येह सम्बन्धनात् कः पुनर्जानाति ?, नैव कश्चित्, यथा—परलोकोऽस्ति नास्ति वेति, अयं चास्याशयः—परलोकस्य सुकृतादिकर्म्मणां वाऽस्तित्वनिश्चयेऽपि 'को हि हस्तगतं द्रव्यं पादगामि करिष्यती'ति न्यायतः क इव हस्तागतान् कामानपहाय कालिककामार्थं यतेत, तत्त्वतस्तु परलोकनिश्चय एव न समस्ति, तत्र प्रत्यक्षस्याप्रवृत्तेः, अनुमानस्य तु प्रवृत्तावपि गोपालघटिकादिधूमादग्न्यनुमानवदन्यथाऽप्युपलम्भनान्निश्चायकत्वासम्भवान्न ततस्तदस्तित्वनिश्चयो नास्तित्वनिश्चयो वा, किन्तु सन्देह एव, न त्वयमेवं विवेचयति—यथाऽवाप्ता अपि कामा दुरन्ततया त्वकुसुमिताः, दुर-

जे गिद्धे कामभोगेसु, एगे कूडाय गच्छइ। न मे दिट्ठे परे लोए, चक्खुदिट्ठा इमा रती ॥ ५ ॥

व्याख्या—'य'इत्यनिर्दिष्टस्वरूपो गृद्ध, काम्यन्त इति कामा भुज्यन्त इति भोगा ततश्च कामाश्च ते भोगाश्च कामभोगा तेषु—अभिलषणीयशब्दादिषु, यद्वा कामौ च शब्दरूपाख्यौ भोगाश्च स्पर्शरसगन्धाख्या कामभोगा तेषु, उक्त हि—"कामा दुविहा पण्णत्ता—सद्दा रूवा य, भोगा तिविहा पण्णत्ता, तंजहा—गंधा रसा फासा य"त्ति, 'एक' कश्चित् क्रूरकर्म्मा तन्मध्यात् कूटमिव कूट—प्रभूतप्राणिना यातनाहेतुत्वान्नरक इत्यर्थ, यथैव हि कूट-निपतितो मृगो व्याधैरनेकधा हन्यते, एव नरकपतितोऽपि जन्तु परमाधार्मिकैरिति, तस्मै कूटाय, गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ (पा० २-३-१२) वित्यादिना चतुर्थी, 'गच्छति' याति, यद्वा यो गृद्ध 'कामभोगेष्वि'ति कामेषु—स्त्रीसङ्गेषु भोगेषु—धूपनविलेपनादिषु स 'एक' सुहृदादिसाहाय्यरहित कूटाय गच्छति, अथवा कूट द्रव्यतो भावतश्च, तत्र द्रव्यतो मृगादिबन्धन, भावतस्तु मिथ्याभाषणादि, तस्मै गच्छतीत्यनेकार्थत्वात् प्रवर्तते, स हि मांसादिलोलुपतया मृगादिबन्धनान्यारभते, मिथ्याभाषणादीनि चासेवत इति, प्रेरितश्च कैश्चिद्वदति—'न मे'इति न मया 'दृष्ट' अवलोकित, कोऽसौ ?—'परलोको' भूतभाविजन्मात्मक, कदाचिद्विषयाभिरतिरप्येवविधैव स्यादत आह—चक्षुषा—लोचनेन दृष्टा—प्रतीता चक्षुर्दृष्टा 'इय'मिति तामेव प्रत्यक्षा निर्दिशति, रम्यतेऽस्यामिति रति—स्पर्शनादि-

१ कामा द्विविधा प्रज्ञप्ता—शब्दा रूपाणि च, भोगास्त्रिविधा प्रज्ञप्ता, तद्यथा—गन्धा रसा स्पर्शाश्च।

कर्मफलभुजो हि जन्तवः, स चैवं कामभोगेषु—उक्तरूपेषु अनुरागः—अभिष्वङ्गः कामभोगानुरागः—तेन 'क्लेशम्' इह परत्र च विविधबाधात्मकं 'सम्प्रतिपद्यते' प्राप्नोतीति सूत्रार्थः ॥ ७ ॥ यथा च कामभोगानुरागेण क्लेशं संप्रतिपद्यते तथा वक्तुमाह—

तओ दंडं समारभति, तसेसुं थावरेसु य । अट्ठाए य अणट्ठाए, भूयगामं विहिंसइ ॥ ८ ॥

व्याख्या—'तत' इति कामभोगानुरागात् 'से'इति स धाष्टर्यवान् दण्ड्यते संयमसर्वस्वापहरणेनात्मा अनेनेति दण्डो—मनोदण्डादिस्तं 'समारभते' प्रवर्तत इति, केषु ?—त्रस्यन्ति—तापाद्युपतप्ताः छायादिकं प्रत्यभिसर्पन्तीति त्रसाः—द्वीन्द्रियादयस्तेषु, तथा शीतातपाद्युपहता अपि स्थानान्तरं प्रत्यनभिसर्पितया स्थानशीलाः स्थावरास्तेषु च, अर्थः—प्रयोजनं वित्तावाप्त्यादिः तदर्थमर्थाय, चस्य व्यवहितसम्बन्धत्वात् अनर्थाय च—यदात्मनः सुहृदादेर्वा नोपयुज्यते, ननु किमनर्थमपि कश्चिद्दण्डं समारभते, एवमेतत् तथाविधपशुपालवत्, तत्र सम्प्रदायः—यथैकः पशुपालः प्रतिदिनं मध्याह्नगते रवौ अजासु महान्यग्रोधतरुं समाश्रितासु तत्थुत्ताणतो णिविण्णो वेणुविदलेण अजोद्गीर्णकोलास्थिभिः तस्य वटस्य पत्राणि छिद्रीकुर्वन् तिष्ठति, एवं तेन स वटपादपः प्रायसश्छिद्रपत्रीकृतः, अन्नया तत्थेगो रायपुत्तो दातियधाडितो तच्छायसमस्सितो पेच्छए य तस्स वडस्स सर्वाणि पत्राणि छिद्रितानि, तो तेण सो

१ तत्रोत्तानको निविष्टो वेणुविदलेन, अन्यदा तत्रैको राजपुत्रो दायादधाटितः तच्छायासमाश्रितः प्रेक्षते च तस्य वटस्य, ततस्तेन स

न्तत्व च तेषा शल्यविषादिभिरुदाहरणै प्रतीतमेव, तथा च वक्ष्यति—"सल्ल कामा विस कामा, कामा आसीविसोवमा। कामे पत्थेमाणा, अकामा जंति दुग्गति ॥१॥" न हि विषादीनि मुखमधुराण्यप्यायतिविरसतया विवेकिभिर्नं हीयन्ते, यदपि परलोकसन्देहाभिधान तदपि न पापपरिहारोपदेश प्रति बाधक, पापानुष्ठानस्येहैव चौरपारदारिकादिषु महानर्थहेतुतया दर्शनात्, परलोकनास्तित्वानिश्चये च तत्रापि तथानर्थहेतुतया सम्भाव्यमानत्वाद्वल्मीककरप्रवेशनादिवत् प्रेक्षावद्भि परिहर्तुमुचितत्वात्, न च परलोकास्तित्व प्रति सन्देह, तन्निश्चायकानुमानस्य तदहर्जातबालकस्तनाभिलाषादिलिङ्गबलोत्पन्नस्य तथाविधाध्यक्षवदव्यभिचारित्वेन तत्र तत्र समर्थितत्वादित्यल प्रसङ्गेनेति सूत्रार्थ ॥ ६ ॥ अन्यस्तु कथञ्चिदुत्पादितप्रत्ययोऽपि कामान् परिहर्तुमशक्नुवन्निदमाह—

जणेण सद्धिं होक्खामि, इति बाले पगब्भइ। कामभोगाणुरागेण, केस सपडिवज्जइ ॥ ७ ॥

व्याख्या—जायत इति जनो-लोकस्तेन 'सार्द्धं' सह भविष्यामि, किमुक्त भवति ?—बहुर्जनो भोगासङ्गी तदहमपि तद्गति गमिष्यामि, यद्वा 'होक्खामि'त्ति भोक्ष्यामि—पालयिष्यामि, यथा ह्यय जन कलत्रादिकं पालयति तथाऽहमपि, न हीयान् जनोऽज्ञ इति 'बाल' अज्ञ 'प्रगल्भते' धाष्टर्यमवलम्बते, अलीकवाचालतया च स्वयनष्ट परानपि नाशयति, न विवेचयति यथा—किमुन्मार्गप्रस्थितेनाविवेकिजनेन बहुनाऽपि ? मम विवेकिन प्रमाणीकृतेन ?, स्वकृत-

१ शल्य कामा विष कामा, कामा आशीविषोपमा । कामान् प्रार्थयन्तोऽकामा यान्ति दुर्गतिम् ॥ १ ॥ २ प्रमाणीकरणेनेति,

सिखिंज्जा, सिक्खियं ण णिरत्थयं । अट्टमट्टपसाएण, भुंजए गुडतुंवयं ॥१॥ तेण ताणि वडपत्ताणि अणट्ठाए छिद्दि-
याणि, अच्छीणि पुण अट्ठाए पाडियाणि । दण्डमारभत इत्युक्तं, तत्किमसावारम्भमात्र एवावतिष्ठते इत्याह—
'भूयगामं'ति भूताः-प्राणिनस्तेषां ग्रामः-समूहस्तं विविधैः प्रकारैर्हिनस्ति-व्यापादयति, अनेन च दण्डत्रयव्यापार
उक्त इति सूत्रार्थः ॥ ८ ॥ किमसौ कामभोगानुरागेणैतावदेव कुरुते ? उतान्यदपीत्याह—

हिंसे वाले मुसावाई, माइल्ले पिसुणे सढे । भुंजमाणे सुरं मंसं, सेयमेयंति मन्नइ ॥ ९ ॥

व्याख्या—हिंसनशीलो हिंस्रः अनन्तरोक्तनीत्या, तथैवंविधश्च सन्नसौ 'वालः' उक्तरूपो 'मृपावादी'ति अली-
कभापणशीलः, 'माइल्ले'त्ति माया-परवञ्चनोपायचिन्ता तद्वान् 'पिशुनः' परदोपोद्घाटकः 'शठः' तत्तन्नेपथ्यादिक-
रणतोऽन्यथाभूतमात्मानमन्यथा दर्शयति, मण्डिकचौरवत् , अत एव च भुञ्जानः 'सुरां' मद्यं 'मांसं' पिशितं 'श्रेयः'
प्रशस्यतरमेतदिति मन्यते, उपलक्षणत्वात् भापते च-'न मांसभक्षणे दोपो, न मद्ये न च मैथुन'इत्यादि, तदनेन
मनसा वचसा कायेन चासत्यत्वमस्योक्तमिति सूत्रार्थः ॥ ९ ॥ पुनस्तद्व्यक्तव्यतामेवाह—

कायसा वयसा मत्ते, वित्ते गिद्धे य इत्थिसु । दुहओ मलं संचिणइ, सिसुनागुव्व मट्टियं ॥ १० ॥

---

१ शिक्षेत, शिक्षितं न निरर्थकम् । अट्टमट्टप्रसादेन, भुज्यते गुडतुम्बकम् ॥ १ ॥ तेन तानि वटपत्राणि अनर्थाय छिद्रितानि, अक्षिणी पुनरर्थाय पातिते

पसुपालतो पुच्छितो—केणेयाणि पत्राणि छिद्दीकयाणि ?, तेण भण्णइ—मया, एयाणि क्रीडापूर्वं छिद्रितानि, तेण सो बहुणा दव्वजाएण विलोभेउ भणति—सक्केसि जस्साहं भणामि तस्स अच्छीणि छिद्देउ ?, तेण भणति—जुड्डु अब्भासत्थो होउ तो सक्केमि, तेण णयर नीतो, रायमग्गसन्निविट्ठे घरे ठवितो, तस्स रायपुत्तस्स भाया राया, सो तेण मग्गेण अस्सवाहणियाए णिज्जइ, एएण भणति—एयस्स अच्छीणि पाडेहित्ति, तेण य गोलियधणुयएण तस्स णिग्गच्छमाणस्स दोवि अच्छीणि पाडियाणि, पच्छा सो रायपुत्तो राया जातो, तेण य सो पसुपालो भणति—ब्रूहि वर, किं ते प्रयच्छामि ?, तेण भणाति—मज्झ तमेव गामं देहि जत्थ अच्छामि, तेण सो दिण्णो, पच्छा तेण तम्मि पच्चतगामे उच्छू रोविओ तुबीतो य, निप्फण्णेसु तुंबाणि गुले सिद्धिउ त गुडतुंबय भुक्त्वा २ गायति स—अट्टमट्टं च

१ पशुपाल पृष्ट —केनैतानि पत्राणि छिद्रीकृतानि ?, तेन भण्यते—मयैतानि । तेन स बहुना द्रव्यजातेन विलोभ्य भण्यते—शक्नोषि यस्याहं भणामि तस्याक्षिणी छिद्रयितुम् ?, तेन भण्यते—सुष्ठु अभ्यासस्थो भवेय तदा शक्नुयाम, तेन नगर नीत, राजमार्गसन्निविष्टे गृहे स्थापित।, तस्य राजपुत्रस्य भ्राता राजा, स तेन मार्गेणाश्ववाहनिकया याति, एतेन भण्यते—एतस्याक्षिणी पातयेति, तेन च गोलिकधनुषा तस्य निर्गच्छतो द्वे अप्यक्षिणी पातिते, पश्चात्स राजपुत्रो राजा जात , तेन च स पशुपालो भण्यते—तेन भण्यते—मम तमेव ग्राम देहि यत्र तिष्ठामि, तेन स ( तस्मै ) दत्त , पश्चात्तेन तस्मिन् प्रत्यन्तग्रामे इक्षू रोपितस्तुम्ब्यश्च, निष्पन्नेषु तुम्बानि गुडे पक्त्वा तत् गुडतुम्बक भुक्त्वा गायति चासौ—अट्टमट्ट च

तओ पुट्ठो आयंकेण, गिलाणो परितप्पति । पभीओ परलोगस्स, कम्माणुप्पेही अप्पणो ॥ ११ ॥

व्याख्या—'ततो'त्ति तकः ततो वा दण्डारम्भणाद्युपार्जितमलतः स्पृष्टः, केन ?—'आतङ्केन' आशुघातिना शूलविसूचिकादिरोगेण तत्तद्दुःखोदयात्मकेन वा 'ग्लान'इति मन्दोऽपगतहर्षो वा परीति—सर्वप्रकारं तप्यते, किमुक्तं भवति ?—बहिरन्तश्च खिद्यते, 'प्रभीत'इति प्रकर्षेण त्रस्तः, कुतः ?—'परलोगस्स'त्ति परलोकात्, सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठी, किमिति ?—क्रियत इति कर्म—क्रिया तदनुप्रेक्षत इत्येवंशीलः कर्मानुप्रेक्षी, यत इति गम्यते, कस्य ?—आत्मनः, स हि हिंसालीकभाषणादिकामात्मचेष्टां चिन्तयन्न किञ्चिन्मया शुभमाचरितं, किन्तु सदैवाजरामरवच्चेष्टितमिति चिन्तयंश्चेतस्यातङ्कतश्च तनावपि खिद्यते, भवति हि विषयाकुलितचेतसोऽपि प्रायः प्राणोपरमसमयेऽनुतापः, तथा चाहुः—"भवित्रीं भूतानां परिणतिमनालोच्य नियतां, पुरा यद्यत्किञ्चिद्विहितमशुभं यौवनमदात् । पुनः प्रत्यासन्ने महति परलोकैकगमने, तदेवैकं पुंसां व्यथयति जराजीर्णवपुषाम् ॥ १ ॥" इति सूत्रार्थः ॥ ११ ॥ अमुमेवार्थं व्यक्तीकर्तुमाह—( ग्रन्थाग्रम् ६००० )

सुया मे णरए ठाणा, असीलाणं च जा गती । बालाणं कूरकम्माणं, पगाढा जत्थ वेयणा ॥ १२ ॥

व्याख्या—'सुय'त्ति श्रुतानि—आकर्णितानि 'मे' इति मया 'नरके' सीमन्तकादिनाम्नि, कानि ?—'ठाणा' इति

१ प्राकृतानुकरणमेतदिति प्रतिभाति ।

व्याख्या—'कायस'त्ति सूत्रत्वात् कायेन–शरीरेण वचसा–वाचा उपलक्षणत्वात् मनसा च 'मत्तो' दृप्त, तत्र कायमत्तो मदान्धगजवत् यतस्तत प्रवृत्तिमान्, यद्वाऽहोऽहं बलवान् रूपवान् वेति चिन्तयन् वचसा स्वगुणान् ख्यापयन् अहोऽहं सुस्वर इत्यादि वा चिन्तयन्, मनसा च मदाध्मातमानस अहोऽहमवधारणाशक्तिमानिति वा मन्वानो 'वित्ते' द्रविणे 'गृद्धो' गृद्धिमान्, चशब्दो भिन्नक्रम, तत स्त्रीषु च गृद्ध, तत्र वित्ते गृद्ध इति अदत्तादानपरिग्रहोपलक्षण, तद्भावभावित्वात्तयो, स्त्रीषु गृद्ध इत्यनेन मैथुनासेवित्वमुक्त, स हि स्त्रिय ससारसर्वस्वभूता इति मन्यते, तथा च तद्वच'—'सत्य वच्मि हित वच्मि, सार वच्मि पुन पुन । अस्मिन्नसारे ससारे, सार सारङ्गलोचना ॥ १ ॥' तदभिरतिमाश्च मैथुनासेव्येव भवति, स एवंविध किमित्याह—'दुहतो'त्ति द्विधा–द्वाभ्या रागद्वेषात्मकाभ्या बहिरन्त प्रवृत्त्यात्मकाभ्या वा प्रकाराभ्या, सूत्रत्वाद्विविध वा इहलोकपरलोकवेदनीयतया पुण्यपापात्मकतया वा, 'मलम्' अष्टप्रकार कर्म्म 'संचिनोति' बध्नाति, क इव किमित्याह—'शिशुनागो गण्डूपदोऽलस उच्यते, स इव मृत्तिका, स हि स्निग्धतनुतया बही रेणुभिरवगुण्ठ्यते, तामेव चाश्नीते इति बहिरन्तश्च द्विधापि मलमुपचिनोति, तथाऽयमपि, एतद्दृष्टान्ताभिधाने त्वयमभिप्रायो–यथाऽसौ बहिरन्तश्चोपचितमल खरतरदिवाकरकरनिकरसस्पर्शत शुष्यन्निहैव क्लिश्यति विनाश चाप्नोति, तथाऽयमप्युपचितमल आशुकारिकर्म्मवशत इहैव जन्मनि क्लिश्यति विनश्यति चेति सूत्रार्थ. ॥ ११ ॥ अमुमेवार्थं व्यक्तीकर्तुमाह—

र्मभिः' गमिष्यमाणगत्यनुरूपैः तीव्रतीव्रतराद्यनुभावान्वितैर्गच्छंस्तदनुरूपमेव स्थानं, 'स' इति बालः, 'पश्चादि'त्या-युषि हीयमाने 'परितप्यते' यथा धिङ् मामसदनुष्ठायिनं, किमिदानीं मन्दभाग्यः करोमि ? इत्यादि शोचत इति सूत्रार्थः ॥ १३ ॥ अमुमेवार्थं दृष्टान्तद्वारेण दृढयन्नाह—

जहा सागडिओ जाणं, समं हिच्चा महापहं । विसमं मग्गमोतिण्णो, अक्खभग्गंमि सोयइ ॥ १४ ॥

व्याख्या—'यथे'त्युदाहरणोपन्यासार्थः, शक्नोति शक्यते वा धान्यादिकमनेन वोढुमिति शकटं तेन चरति शाकटिकः—गन्त्रीवाहकः 'जाणं'ति जानन्नवबुध्यमानः 'समम्' उपलादिरहितं 'हित्वा'त्यक्त्वा, कम् ?—महांश्चासौ विस्तीर्णतया प्राधान्येन च पन्थाश्च महापथः, 'ऋक्पूरब्धूःपथामानक्षे (पा० ५-४-७४) इत्यकारः समासान्तस्तं, 'विषमम्' उपलादिसङ्कुलं 'मार्गं' पन्थानं 'ओतिन्नो'त्ति अवतीर्णः—गन्तुमुपक्रान्तः, पठ्यते च—'ओगाढो'त्ति तत्र चावगाढ आरूढः प्रपन्न इति चैकोऽर्थः, अश्नीते नवनीतादिकमित्यक्षो—धूः तस्य भङ्गो—विनाशः अक्षभङ्गः तस्मिन्, पाठान्तरतश्चाक्षे भग्ने, शोचते यथा धिग् मम परिज्ञानं यज्जानन्नपीत्थमपायमवाप्तवानिति सूत्रार्थः ॥ १४ ॥ सम्प्रत्युपनयमाह—

एवं धम्मं विउक्कम्म, अहम्मं पडिवज्जिया । बाले मच्चुमुहं पत्ते, अक्खे भग्गे व सोयइ ॥ १५ ॥

व्याख्या—'एव'मिति शाकटिकवद् 'धर्मं' क्षान्त्यादिकं यतिधर्म्मं सदाचारात्मकं वा 'विउक्कम्म'त्ति व्युत्क्रम्य—

लिङ्गव्यत्ययेनोत्पत्तिस्थानानि घटिकालयादीनि येष्वतिसंपीडिताङ्गा दुःखमाकृष्यमाणा बहिर्निष्क्रामन्ति जन्तवः, यद्वा नरके—रत्नप्रभादिनरकपृथिव्यात्मके स्थानानि—सीमन्तकाप्रतिष्ठानादीनि कुम्भीवैतरण्यादीनि वा, अथवा स्थानानि—सागरोपमादिस्थित्यात्मकानि, तत्किमियताऽपि परितप्यत इत्यत आह—'अशीलानाम्' अविद्यमानसदाचाराणां या गतिर्नरकात्मिका सा च श्रुतेति सम्बन्धः, कीदृशानाम् ?—'बालानाम्' अज्ञानां 'क्रूरकर्म्मणां' हिंसामृषाभाषकादीनां, कीदृशी गतिरित्याह—प्रगाढा नामात्युत्कटतया निरन्तरतया च प्रकर्षवत्यो 'यत्र' यस्यां गतौ वेद्यन्त इति वेदनाः—शीतोष्णशाल्मल्याश्लेषणादयः, तदयमस्याशयः—ममैवंविधानुष्ठानस्येदृश्येव गतिरिति सूत्रार्थः ॥ १२ ॥ तथा—

तत्थोववाइयं ठाणं, जहा मे तमणुस्सुयं। आहाकम्मेहिं गच्छन्तो, सो पच्छा परितप्पति ॥ १३ ॥

व्याख्या—'तत्रे'ति नरकेषु उपपाते भवमौपपातिकं 'स्थानं' स्थितिः 'यथा' येन प्रकारेण, भवतीति शेषः, 'मे' मया तदित्यनन्तरोक्तपरामर्शे 'अनुश्रुतम्' अवधारितं, गुरुभिरुच्यमानमिति शेषः, औपपातिकमिति च ब्रुवतोऽयमाशयः—यदि गर्भजत्वं भवेत् भवेदपि तदवस्थायां छेदभेदादिनारकदुःखान्तरम्, औपपातिकत्वे त्वन्तर्मुहूर्तानन्तरमेव तथाविधवेदनोदय इति कुतस्तदन्तरसम्भवः ?, तथा च—'आहाकम्मेहिं'ति आधानमाधाकरणम्, आत्मनेति गम्यते, तदुपलक्षितानि कर्माण्याधाकर्म्माणि, तैः आधाकर्मभिः—स्वकृतकर्मभिः, यद्वाऽऽर्षत्वात्, 'आहेति' आधाय कृत्वा, कर्म्माणीति गम्यते, ततस्तैरेव कर्म्मभिः 'गच्छन्' यान्, प्रक्रमान्नरकं, यद्वा—'यथाक-

एयं अकाममरणं, बालाणं तु पवेइयं। इत्तो सकाममरणं, पंडियाण सुणेह मे ॥ १७ ॥

व्याख्या—'एतद्' अनन्तरमेव दुष्कृतकर्म्मणां परलोकाद्बिभ्यतां यन्मरणमुक्तं तदकाममरणं, बालानामेव, तुशब्दस्यैवार्थत्वात्, 'प्रवेदितं' प्रकर्षेण प्रतिपादितं, तीर्थकृद्गणधरादिभिरिति गम्यते। पण्डितमरणप्रस्तावनार्थमाह—'एत्तो'त्ति इतोऽकाममरणादनन्तरं 'सकाममरणं पण्डितानां सम्बन्धि 'शृणुत' आकर्णयत 'मे' मम, कथयत इत्युपस्कारः इति सूत्रार्थः ॥ १७ ॥ यथाप्रतिज्ञातमाह—

मरणंपि सपुण्णाणं, जहा मे तमणुस्सुयं। विप्पसण्णमणाघायं, संजयाणं वुसीमओ ॥ १८ ॥

व्याख्या—मरणमपि आस्तां जीवितमित्यपिशब्दार्थः, 'पुण कर्म्मणि शुभे'इत्यस्माद्धातोः 'उणादयो बहुल' (पा० ३-३-१)मिति बहुलवचनाद्भावे क्यपि पुण्यम्, उक्तं हि—"पुणं कर्म्मणि निर्दिष्टः शुभविशेषप्रकाशको धातुरयम्। भावप्रत्यययोगाद्विभक्तिनिर्देशसिद्धमेतद्रूपम् ॥ १ ॥" सह तेन वर्तन्त इति सपुण्यास्तेषां न त्वन्येषामपुण्यवतां, किं सर्वमपि ?, नेत्याह—'यथा' येन प्रकारेण 'मे' मम, कथयत इति गम्यते, तदित्युपक्षेपः, तत्रोपात्तम् 'अनुश्रुतम्' अवधारितं, भवद्भिरिति शेषः, सुष्ठु प्रसन्नं मरणसमयेऽप्यकलुषं कषायकालुष्यापगमान् मनः—चेतो येषां ते सुप्रसन्नमनसः महामुनयस्तेषां ख्यातं—स्वसंवेदनतः प्रसिद्धं सुप्रसन्नमनःख्यातं, यद्वा—'सुप्पसन्नेहि अक्खायं' अत्र च सुष्ठु प्रसन्नैः— ॥२४८॥

१ अत्र पूर्वार्धे चतुर्थपञ्चमपष्ठाः पाः उत्तरार्धेऽष्टचाः

विशेषेणोल्लङ्घ्य न धर्मोऽधर्म्म , नञ् विपक्षेऽपि वर्तते इति धर्मप्रतिपक्ष , त–हिंसादिक 'प्रतिपद्य' अभ्युपगम्य 'बाल ' अभिहितरूपो मरण–मृत्युस्तस्य मुखमिव मुख मृत्युमुख–मरणगोचर 'प्राप्तो' गत , किमित्याह–अक्षे भग्न इव शोचति, किमुक्त भवति ?–यथा–अक्षभङ्गे शाकटिक शोचति तथाऽयमपि स्वकृतकर्मणामिहैव मारणान्तिकवेदनात्मक फलमनुभवन्नात्मानमनुशोचति, यथा हा किमेतज्जानताऽपि मयैवमनुष्ठितमिति सूत्रार्थ ॥ १५ ॥ शोचनानन्तरं च किमसौ करोतीत्याह—

तओ से मरणतम्मि, बाले सतस्सई भया। अकाममरण मरेइ, धुत्ते वा कलिणा जिए ॥ १६ ॥

व्याख्या—'तत'इत्यातङ्कोत्पत्तौ यच्छोचनमुक्त तदनन्तर 'से' इति स मरणमेवान्तो मरणान्तस्तस्मिन्, उपस्थित इति शेष , 'बालो' रागाद्याकुलितचित्त 'सत्रस्यति' समुद्विजते बिभेतीतियावत्, कुत ?–'भयात्' नरकगतिगमनसाध्वसाद्, अनेनाकामत्वमुक्तं, स च किमेव बिभ्यत् मरणाद्विमुच्यते ? उत नेत्याह–अकामस्य–अनिच्छतो मरणमकाममरण तेन, सूत्रे चार्षत्वाद्वितीया, 'म्रियते' प्राणास्त्यजति, क इव कीदृश सन् ?–'धूर्त इव' द्यूतकार इव, वाशब्दस्योपमार्थत्वात्, 'कलिना' एकेन, प्रक्रमात् दायेन, जित सन्नात्मान शोचति, यथा ह्ययमेकेन दायेन जित सन्नात्मानं शोचति तथाऽसावपीत्वरैर्विपाककटुभि सङ्क्लेशबहुलैर्मनुजभोगैर्दिव्यसुख हारित शोचन्नेव म्रियत इति सूत्रार्थ ॥ १६ ॥ प्रस्तुतमेवार्थं निगमयितुमाह—

गृहस्थानां दूरापास्तमेव, अत एवाह—नेदं पण्डितमरणं 'सव्वेसु गारिसु'त्ति सर्वेषामगारिणा गृहिणां, चारित्रिणामेव तत्सम्भवात्, तथात्वे च तेषामपि तत्त्वतो यतित्वाद्, उभयत्र विषयसमम्यन्ततया वा नेयं, यथा चैतदेवं तथोपपत्तित आह—नाना—अनेकविधं शीलं—व्रतं स्वभावो वा येषां ते नानाशीलाः 'अगारस्था' गृहस्थाः, तेषां हि नैकरूपमेव शीलं किन्त्वनेकभङ्गसम्भवादनेकविधं, देशविरतिरूपस्य तस्यानेकधाऽभिधानात्, सर्वविरतिरूपस्य च तेष्वसम्भवात्, 'विषमम्' अतिदुर्लक्षतयाऽतिगहनं विसदृशं वा शीलमेषां विषमशीलाः, के ते?—भिक्षवः, न हि सर्वेऽप्यनिदानिनोऽविकलचारित्रिणो वा तत्कालं म्रियन्ते जिनमतप्रतिपन्ना अपि, तीर्थान्तरीयास्तु दूरोत्सारिता एव, तेषु हि गृहिणस्तावदत्यन्तं नानाशीला एव, यतः—केचिद्गृहाश्रमप्रतिपालनमेव महाव्रतमिति प्रतिपन्नाः, अन्ये तु सप्त शिक्षापदशतानि गृहिणां व्रतमित्याद्यनेकधैव ब्रुवते, भिक्षवोऽप्यत्यन्तं विषमशीला एव, यतस्तेषु केषाञ्चित्पञ्चयमनियमात्मकं व्रतमिति दर्शनम्, अपरेषां तु कन्दमूलफलाशितैव इति, अन्येषामात्मतत्त्वपरिज्ञानमेवेति विसदृशशीलता, न च तेषु क्वचिदविकलचारित्रसम्भव इति सर्वत्र पण्डितमरणाभाव इति सूत्रार्थः ॥ १९ ॥ विषमशीलतामेव भिक्षूणां समर्थयितुमाह—

संति एगेहि भिक्खूहिं, गारत्था संजमुत्तरा । गारत्थेहि य सव्वेहिं, साहवो संजमुत्तरा ॥ २० ॥

व्याख्या—'सन्ति' विद्यन्ते 'एकेभ्यः' कुप्रवचनेभ्यो भिक्षुभ्यः 'गारत्थ'त्ति सूत्रत्वादगारस्थाः संयमेन—देश-

पापपङ्कापगमनेनात्य तनिर्मलीभूते, शेपतीर्थकृद्भिरिति गम्यते, आख्यात। पठ्यते च 'विप्पसण्णमणाघाय'त्ति, तत्र च विशेषेण विविधैर्वा भावनादिभि प्रकारै प्रसन्ना–मरणेऽप्यपहतमोहरेणुतयाऽनाकुलचेतसो विप्रसन्नाः, तत्सम्ब्यपि मरणमप्युपचाराद्विप्रसन्न, न विद्यते आघात तथाविधयतनयाऽन्यप्राणिनामात्मनश्च विधिवत् सलिखितशरीरतया यस्मिंस्तदनाघात, केषा पुनरिदम्?, उच्यते–'सयताना' समिति–सम्यग् यताना–पापोपरताना, चारित्रिणामित्यर्थ, 'वुसीमतो'त्ति, आर्षत्वाद्वश्यवता वश्य इत्यायत्त, स चेहात्मा इन्द्रियाणि वा, वश्यानि विद्यन्ते येषा ते अमी वश्यवन्त तेषाम्, अयमपर सम्प्रदायार्थ–'वसति वा साहुगुणेहिं वुसीमत, अहवा वुसीमा–सविग्गा तेसिं'ति एतद्वाधात् पण्डितमरणमेव, ततोऽयमर्थ–यथैतत् सयताना वश्यवता विप्रसन्नमनाघात च सम्भवति, न तथाऽपुण्यप्राणिनाम्। 'अन्ते समाहिमरण अभवजीवा ण पावेंति'त्ति वचनात्, विशिष्टयोग्यताभाजामेव तत्प्राप्तिसम्भवादिति सूत्रार्थ ॥ १८ ॥ यथा चैतदेव तथा दर्शयितुमाह—

न इम सव्वेसु भिक्खूसु, ण इम सव्वेसु गारिसु। नानासीला य गारत्था, विसमसीला य भिक्खुणो ॥१९॥

व्याख्या—'नें'त्यवधारणफलत्वाद्वाक्यस्य नैव 'इद'मिति पण्डितमरण 'सवेसु भिक्खुसु'त्ति सूत्रत्वात् सर्वेषा भिक्षूणा परदत्तोपजीविना व्रतिनामितियावत्, किन्तु केषाञ्चिदेव परोपचितपुण्यानुभाववता भावभिक्षूणा, तथा च

१ वसन्ति वा साधुगुणे वसीमन्त, अथवा वशिमान सविग्नास्तेषामिति। २ अन्ते समाधिमरणमभव्यजीवा न प्राप्नुवन्ति

भावप्रधानत्वान्निर्देशस्य जटित्वं, सङ्घाटी–वस्त्रसंहतिजनिता 'मुंडिणं'ति यत्र शिखाऽपि स्वसमयतश्छिद्यते, ततः प्राग्वत् मुण्डित्वं, 'एतान्यपी'ति निजनिजप्रक्रियाविरचितव्रतिवेषरूपाणि लिङ्गान्यपि, किं पुनर्गार्हस्थ्यमित्यपिशब्दार्थः, किमित्याह–नैव त्रायन्ते भवाद्दुष्कृतकर्मणो वेति गम्यते, कीदृशम्?–'दुःशीलं' दुराचारं 'परियागयं'ति पर्यायागतं–प्रव्रज्यापर्यायप्राप्तम्, आर्षत्वाच्च याकारस्यैकस्य लोपः, यद्वा–'दुस्सीलंपरियागयं'ति मकारोऽलाक्षणिकः, ततो दुःशीलमेव दुष्टशीलात्मकः पर्यायस्तमागतं दुःशीलपर्यायागतं, न हि कषायकलुषचेतसो बहिर्वकवृत्तिरतिकष्टहेतुरपि नरकादिकुगतिनिवारणायालं, ततो न लिङ्गधारणादि विशिष्टहेतुरिति सूत्रार्थः ॥ २१ ॥ आह—कथं गृहाद्यभावेऽप्यमीषां दुर्गतिरिति?, उच्यते—

पिंडोलए व दुस्सीलो, नरगाओ न मुचइ। भिक्खाए वा गिहत्थे वा, सुव्वए कमति दिवं ॥ २२ ॥

व्याख्या—'पिंडोलए व'त्ति वाशब्दोऽपिशब्दार्थः, ततश्च 'पिडि सङ्घाते' पिण्ड्यते तत्तद्गृहेभ्य आदाय सङ्घात्यत इति पिण्डः तमवलगति–सेवते पिण्डावलगो–यः स्वयमाहाराभावतः परदत्तोपजीवी सोऽपि, आस्तां गृहादिमानित्यर्थः, दुःशीलः प्राग्वत्, 'नरकात्' स्वकर्म्मोपस्थापितात् सीमन्तकादेर्न मुच्यते, अत्र चोदाहरणं तथाविधद्रमकः, तत्र च–सम्प्रदायः–[1]रायगिहे णयरे एगो पिंडोलओ उज्जाणियाए विणिग्गए जणे भिक्खं हिंडइ, ण



१ राजगृहे नगरे एकः पिण्डावलगः उद्यानिकायै विनिर्गते जने भिक्षां हिण्डते, न

गिरत्वात्मकेनोत्तरा –प्रधाना संयमोत्तरा , कुप्रवचनाभिभवो हि जीवाद्यालिक्यादपि महिष्टता सर्वेषाऽगारिभ्यि-गयेति कथं न सम्यग्दृशो देशचारित्रिणो गृहिणस्तेभ्य संयमोत्तरा सन्तु ?, एवं गलगारस्येष्वेव तदस्तित्वात आह–'अगारगेभ्यश्च सर्वेभ्य' इति अनुमतिवर्जसर्वोत्तमदेशविरतिप्राप्तेभ्योऽपि साधव संयमोत्तराः, परिपूर्णसंयम-त्वात्तेषां, तथा च वृद्धसम्प्रदाय –एगो सावगो साधु पुच्छति–सावगाण साहूण किमंतर ?, साधुणा भणति–सरिसवमन्दरंतरं, ततो सो आउल्लीहूओ पुणो पुच्छति–कुलिंगीण सावगाण य किमंतर ?, तेण भणति–तदेव सरि-सवमन्दरंतरंति, ततो समासासितो, जतो भणियं–"देसेक्कदेसविरया समणाणं सावगा सुविहियाण । जेसिं परपा-सडा सतिमंपि कलं न अग्घति ॥ १ ॥" तदनेन तेषां चारित्राभावदर्शनेन पण्डितमरणाभाव एव समर्थित इति सूत्रार्थ ॥२०॥ ननु कुप्रवचनभिक्षवोऽपि विचित्रलिङ्गधारिण एवेति कथं तेभ्योऽगारस्था संयमोत्तरा , अत आह—

चीराजिणं निगिणिणं, जडी सघाडि मुंडिणं । एयाइंपि न तायंति, दुस्सीलं परियागतं ॥ २१ ॥

व्याख्या—चीराणि च–चीवराणि अजिनं च–मृगादिचर्म चीराजिनं 'णिगिणिण'त्ति सूत्रत्वात्ताग्न्यं 'जडि'त्ति

१ एकः श्रावकः साधु पृच्छति–श्रावकाणां साधूनां (च) किमन्तरम् ?, साधुना भण्यते–सर्षपमन्दरान्तरम् , ततः स व्याकुलीभूतः पुनः पृच्छति–कुलिङ्गिनां श्रावकाणां च किमन्तरम् ?, तेन भण्यते—तदेव सर्षपमन्दरान्तरमिति, ततः समाश्वस्त , यतो भणितम्—देशैकदेशविरताः श्रमणानां श्रावकाः सुविहितानाम् । येषां परपाषण्डाः शतीमपि कलां नार्घन्ति ॥ १ ॥

व्याख्या—अगारिणो-गृहिणः सामायिकं-सम्यक्त्वश्रुतदेशविरतिरूपं तस्याङ्गानि-निःशङ्कताकालाध्ययनाणुव्रतादिरूपाणि अगारिसामायिकाङ्गानि, 'सड्ढि'त्ति सूत्रत्वात् श्रद्धा-रुचिरस्यास्तीति श्रद्धावान्, कायेनेत्युपलक्षणत्वान्मनसा वाचा च 'फासइ'त्ति स्पृशति सेवते, पोषणं पोषः, स चेह धर्म्मस्य तं धत्त इति पोषधः—आहारपोषधादिः, तं 'दुहतो पक्ख'न्ति तत एव द्वयोरपि सितेतररूपयोः पक्षयोश्चतुर्दशीपूर्णिमास्यादिषु तिथिषु 'एगराइं'ति अपेर्गम्यमानत्वादेकरात्रमपि, उपलक्षणत्वाच्चैकदिनमपि, 'न हावए'त्ति न हापयति—न हानिं प्रापयति, रात्रिग्रहणं च दिवा व्याकुलतया कर्तुमशक्नुवन् रात्रावपि पोषधं कुर्यात्, इह च सामायिकाङ्गत्वेनैव सिद्धेर्यदस्य भेदेनोपादानं तदादरख्यापनार्थमदुष्टमेव, यद्वा-यत एवं गृहस्थोऽपि सुव्रतो दिवं क्रामति अतोऽगारी सामायिकाङ्गानि स्पृशेत् पोषधं च न हापयेदित्युपदेशपरतया व्याख्येयमिति सूत्रार्थः ॥ २३ ॥ प्रस्तुतमेवार्थमुपसंहर्तुमाह—

एवं सिक्खासमावन्नो, गिहवासेऽवि सुव्वओ । मुचति छविपव्वाओ, गच्छे जक्खसलोगयं ॥ २४ ॥

व्याख्या—'एवम्' अमुनोक्तन्यायेन शिक्षया-व्रतासेवनात्मिकया समापन्नो-युक्तः शिक्षासमापन्नो गृहवासेऽपि, आस्तां प्रव्रज्यापर्याय इत्यपिशब्दार्थः, 'सुव्रतः' शोभनव्रतो मुच्यते, कुतः ?-छविः—त्वक् पर्वाणि च-जानुकूर्प्परादीनि छविपर्व तद्योगादौदारिकशरीरमपि छविपर्व ततः, तदनन्तरं च 'गच्छेद्' यायात् यक्षा-देवाः समानो लोकोऽस्येति सलोकस्तद्भावः सलोकता यक्षैः सलोकता यक्षसलोकता ताम्, इयं च देवगतावेव भवतीत्यर्थाद्देव-

यं तस्स केणइ किंचि दिण्ण, सो तेसि वैभारपव्वयकडगसन्निविट्ठाण पव्वतोवरि चडिऊण महतिमहालयं सिल चालेइ, एएसि उवरि पाडेमित्ति रोद्दज्झाई विच्छुट्टिऊण ततो सिलातो निवडितो सिलातले सचुण्णियसव्वकातो य मरिऊण अप्पइट्ठाणे णरए समुप्पन्नो। तर्हि किमत्र तत्त्वत सुगतिहेतुरित्याह—'भिक्खाए व'त्ति भिक्षामत्ति अकति वा भिक्षादो भिक्षाको, वा विकल्पे, अनेन यतिरुक्त, गृहे तिष्ठति गृहस्थ स वा, शोभन निरतिचारतया सम्यग्भावानुगततया च व्रत–शील परिपालनात्मकमस्येति सुव्रत, 'क्रामति' गच्छति 'दिवं' देवलोकं, मुख्यतो मुक्तिहेतुत्वेऽपि व्रतपरिपालनस्य दिव क्रामतीत्यभिधान जघन्यतोऽपि देवलोकप्राप्तिरिति ख्यापनार्थम्, उक्त हि—"अविराहियसामण्णस्स साहुणो सावगस्स य जहण्णो। उववातो सोहम्मे भणितो तेलोक्कदंसीहिं ॥ १ ॥" अनेन व्रतपरिपालनमेव तत्त्वत सुगतिहेतुरित्युक्तमिति सूत्रार्थ ॥ २२ ॥ यद्व्रतयोगाद्गृहस्थोऽपि दिव क्रामति तद्व्रतमाह—

अगारिसामाइयगाइ, सड्ढी काएण फासए। पोसह दुहओ पक्खं, एगराइं न हावए ॥ २३ ॥

---

१ च तस्मै केनचित् किञ्चिद्दत्त, स तेषु वैभारगिरिकटकसन्निविष्टेषु पर्वतस्योपरि चटित्वा (आरुह्य) अतिमहती शिला चालयति, एतेषामुपरि पातयामीति रौद्रध्यायी विच्छुट्य तत शिलातो निपतित शिलातले सचूर्णितसर्वकायश्च मृत्वाऽप्रतिष्ठाने नरके समुत्पन्न।

२ अविराद्धश्रामण्यस्य साधो श्रावकस्य च जघन्येन। उपपात सौधर्मे भणितस्त्रैलोक्यदर्शिभि ॥ १ ॥

व्याख्या–'उत्तरा' उपरिवर्तिनोऽनुत्तरविमानाख्याः, सर्वोपरिवर्तित्वात्तेषां, विमोहा इवाल्पवेदादिमोहनीयोदयतया विमोहाः, अथवा मोहो द्विधा–द्रव्यतो भावतश्च. द्रव्यतोऽन्धकारो भावतश्च मिथ्यादर्शनादिः, स द्विविधोऽपि सततरत्नोद्योतितत्वेन सम्यग्दर्शनस्यैव च तत्र सम्भवेन विगतो येषु ते विमोहाः, द्युतिः–दीप्तिरन्यातिशायिनी विद्यते येषु ते द्युतिमन्तः, 'अणुपुवसो'त्ति प्राग्वदनुपूर्वतः क्रमेण विमोहादिविशेषणविशिष्टाः, सौधर्म्मादिषु ह्यनुत्तरविमानावसानेषु पूर्वपूर्वापेक्षया प्रकर्षवन्त्येव विमोहत्वादीनि, 'समाकीण्णा' व्याप्ता 'यक्षैः' देवैः, आ–समन्ताद्वसन्ति तेष्वित्यावासाः, प्राकृतत्वाच्च सर्वत्र नपुंसकतया निर्देशः, देवास्तु तत्र 'यशस्विनः' श्लाघान्विताः, दीर्घं—सागरोपमपरिमिततया आयुरेषामिति दीर्घायुषः, 'ऋद्धिमन्तो' रत्नादिसम्पदुपेताः, 'समिद्धा' अतिदीप्ताः, 'कामरूपिणः' कामः—अभिलापस्तेन रूपाणि कामरूपाणि तद्वन्तः, विविधवैक्रियशक्त्यन्विता इत्यर्थः, न चैतदनुत्तरेष्वनुपपन्नं विशेषणमिति वाच्यं, विकरणशक्तेस्तत्रापि सत्त्वात्, 'अधुनापपन्नसङ्काशाः' प्रथमोत्पन्नदेवतुल्याः, अनुत्तरेषु हि वर्णद्युत्यादि यावदायुस्तुल्यमेव भवति, 'भूयोऽर्चिमालिप्रभा' इति, भूयःशब्दः प्राचुर्ये, ततः प्रभूतादित्यदीप्तयो न ह्येकस्यैवादित्यस्य तादृशी द्युतिरस्तीति भूयोग्रहणमिति सूत्रार्थः ॥ २६ ॥ २७ ॥ उपसंहर्तुमाह—

ताणि ठाणाइ गच्छंति, सिक्खित्ता संजमं तवं । भिक्खाए वा गिहत्थे वा, जे संतिपरिनिव्वुडा ॥ २८ ॥

व्याख्या—'तानि' अभिहितरूपाणि तिष्ठन्त्येषु सुकृतिनो जन्तव इति स्थानानि-आवासात्मकानि 'गच्छन्ति'

गतिमिति, अनेन च पण्डितमरणावसरेऽपि प्रसङ्गतो बालपण्डितमरणमुक्तमिति सूत्रार्थ ॥२४॥ साम्प्रत प्रस्तुतमेव पण्डितमरण फलोपदर्शनद्वारेणाह–

अह जे संवुडे भिक्खू, दुण्हमेगयरे सिया । सव्वदुक्खपहीणे वा, देव वावि महिड्ढिए ॥ २५ ॥

व्याख्या—'अथे'त्युपप्रदर्शने 'य'इत्यनुद्दिष्टनिर्देशे 'संवृत'इति पिहितसमस्ताश्रवद्वार 'भिक्षु'रिति भावभिक्षु, स च द्वयोरन्यतर-एकतर 'स्यात्' भवेद्, ययोर्द्वयोरन्यतर स्यात् तावाह–सर्वाणि–अशेषाणि यानि दु खानि क्षुत्-पिपासेष्टवियोगानिष्टसयोगादीनि तै प्रकर्षेण–पुनरनुत्पत्त्यात्मकेन हीनो–रहित सर्वदु खप्रहीण, स्यादिति सम्बन्ध, यद्वा–सर्वदु खानि प्रहीणान्यस्येति सर्वदु खप्रहीण, आहिताग्न्यादेराकृतिगणत्वात् निष्ठान्तस्य परनिपात, स च सिद्ध एव, तत स वा देवो वा, अपि सम्भावने, सम्भवति हि सहननादिवैकल्यतो मुक्त्यनवाप्तौ देवोऽपि स्यादिति, कीदृग् ?–महती ऋद्धि –सुखादिसम्पदस्येति महर्द्धिक इति सूत्रार्थ ॥ २५ ॥ आह–यदीमो देवो वा स्यादिति, यत्र चासौ देवो भवति तत्र कीदृशा आवासा ? कीदृशाश्च देवा ? इत्याह–

उत्तराइ विमोहाइ, जुइमताणुपुव्वसो । समाइण्णाइ जक्खेहिं, आवासाइ जससिणो ॥ २६ ॥

दीहाउया इड्ढिमतो, समिद्धा कामरूविणो । अहुणोववन्नसकासा, भुज्जो अच्चिमालिप्पभा ॥ २७ ॥

---

१ मण्णयरेत्ति टीका । २ रिद्धिमता इति टीका ।

कृतमतयः, इदमुक्तं भवति–य एवाविदितधार्मिकगतयोऽनुपार्जितधर्माणश्च त एव मरणादुद्विजन्ते, यथा–क्कास्माभिर्मृत्वा गन्तव्यमिति, उपार्जितधर्माणस्तु धर्मफलमवगच्छन्तो न कुतोऽप्युद्विजन्ते, यथा–क्कास्माभिर्मृत्वा गन्तव्यं, यदुक्तम्–"चरितो निरुपक्लिष्टो धर्म्मो हि मयेति निर्वृतः स्वस्थः। मरणादपि नोद्विजते कृतकृत्योऽस्मीति धर्म्मात्मा ॥ १ ॥" इति सूत्रार्थः ॥ २९ ॥ इत्थं सकामाकाममरणस्वरूपमभिधाय शिष्योपदेशमाह—

तुलिया विसेसमायाय, दयाधम्मस्स खंतिए। विप्पसीइज्ज मेधावी, तहाभूएण अप्पणा ॥ ३० ॥

व्याख्या—'तोलयित्वा' परीक्ष्यात्मानं धृतिदार्ढ्यादिगुणान्वितमिति गम्यते, 'विशेषं' प्रक्रमाद्भक्तपरिज्ञादिकं मरणभेदम् 'आदाय' बुद्ध्या गृहीत्वाऽभ्युपगम्येतियावत्, दयाप्रधानो धर्म्मो दयाधर्म्मो–दशविधयतिधर्मरूपः तस्य सम्बन्धिनी या क्षान्तिस्तया, उपलक्षणत्वात् मार्दवादिभिश्च, 'विप्रसीदेत्' विशेषेण प्रसन्नो भवेत्, न तु मरणादुद्विजेतेति भावः, 'मेधावी' मर्यादावर्त्ती 'तथाभूतेन' उपशान्तमोहोदयेन, यदिवा–यथैव मरणकालात्प्रागनाकुलचेता अभूत् मरणकालेऽपि तथैवावस्थितेन तथाभूतेनात्मना स्वयमयमपरकल्पोऽपि विप्रसीदेत्–कषायपङ्कापगमतः स्वच्छतां भजेत् न तु कृतद्वादशवर्षसंलेखनतथाविधतपस्विवन्निजाङ्गुलीभङ्गादिना कषायितामवलम्बेत मेधावी, किं कृत्वा ?–तोलयित्वा बालमरणपण्डितमरणे, ततश्च 'विशेषं' बालमरणात् पण्डितमरणस्य विशिष्टत्वलक्षणमादाय–गृहीत्वा तथा दयाधर्मस्येति, चशब्दस्य गम्यमानत्वात्, दयाधर्म्मस्य च–यतिधर्म्मस्य विशेषं–शेषधर्म्मातिशायित्वल

यान्ति, उपलक्षणत्वाद्गता गमिष्यन्ति च, उपलक्षण चैतत् सौधर्म्मादिगमनस्य, तत्रापि तेषा केषाञ्चिद्गमनसम्भवात्, 'शिक्षित्वा' अभ्यस्य 'सयम' सप्तदशभेद 'तपो' द्वादशभेद, क इत्याह–'भिक्खाए वा गिहत्थे व'त्ति प्राकृतत्वाद्वचनव्यत्ययेन भिक्षाको वा गृहस्थो वा भावतो यतय एवेतियावत्, अत एवाह–'जे'इति ये शान्त्या-उपशमेन परिनिर्वृता -शीतीभूता विध्यातकषायानला शान्तिपरिनिर्वृता, यद्वा–ये केचन 'सन्ति' विद्यन्ते परिनिर्वृता, अत्र च देवो वा स्यादित्येकवचनप्रक्रमेऽपि यद्बहुवचनाभिधान तद्व्याप्त्यर्थं, ततो न य एक एवेश्वराद्यनुगृहीत स एव सम्यग्दर्शनादिमानपि दिव क्रामति किन्तु सर्वोऽपि इत्युक्त भवतीति सूत्रार्थ ॥ २८ ॥ एतच्चाकर्ण्य मरणेऽपि यथाभूता महात्मानो भवन्ति तथाऽऽह—

तेसि सुच्चा सपुज्जाण, सजयाण वुसीमओ । ण सतसति मरणते, सीलवता बहुस्सुआ ॥ २९ ॥

व्याख्या—'तेषाम्' अनन्तराभिहितस्वरूपाणा भावभिक्षूणा 'श्रुत्वा' आकर्ण्योक्तरूपस्थानावाप्तिमिति शेष, कीदृशाम् ?–'सत्पुज्याना' सता पूजार्हाणा, सती वा पूजा येषा ते सत्पूजास्तेषा 'सयताना' सयमवता 'वुसीमओ'त्ति प्राग्वत्, 'न सन्त्रसन्ति' नोद्विजन्ते, कदा ?–मरणे मरणेन वाऽन्तो मरणान्तस्तस्मिन् आवीचीमरणापेक्षया चाऽन्त्य मरणे, प्राकृतत्वाच्च परनिपात, समुपस्थित इति शेष, 'शीलवन्त' चारित्रिणो 'बहुश्रुता' विविधागमश्रवणावदाती

समायाते 'आघायाय'त्ति आर्षत्वात् आघातयन् संलेखनादिभिरुपक्रमणकारणैः समन्ताद् घातयन्–विनाशयन्, कं ?–समुच्छ्रयम्–अन्तः कार्मणशरीरं वहिरौदारिकं, यद्वा–'समुस्सतं'ति सुब्व्यत्ययात्समुच्छ्रयस्याघाताय—विनाशाय काले सम्प्राप्त इति सम्बन्धनीयं, किमित्याह—सकामस्य–उक्तनीत्या साभिलापस्य मरणं सकाममरणं तेन म्रियते, त्रयाणां–भक्तपरिज्ञेङ्गिनीपादपोपगमनानामन्यतरेण, सूत्रत्वात् सर्वत्र विभक्तिव्यत्ययः, 'मुनिः' तपस्वीति सूत्रार्थः ॥ ३२ ॥ इतिः परिसमाप्तौ, ब्रवीमीति प्राग्वत् ॥ साम्प्रतं नयास्तेऽपि पूर्ववत् । इति श्रीशान्त्याचार्यविरचितायामुत्तराध्ययनटीकायामकाममरणाख्यं पञ्चममध्ययनं समाप्तमिति ॥

पञ्चममध्ययनं समाप्तम् ॥

क्षणमादायेति सम्बन्ध , कया विप्रसीदेत् ?–क्षान्त्या, तथाभूतेनेति निष्कपायेणात्मनोपलक्षित इति सूत्रार्थ ॥३०॥
विप्रसन्नश्च यत् कुर्यात्तदाह—

तओ काले अभिप्पेए, सड्ढी तालीसमंतिए। विणएज्ज लोमहरिस, भेय देहस्स कखए ॥ ३१ ॥

व्याख्या—'तत' इति कपायोपशमानन्तर 'काले' मरणकाले 'अभिप्रेते' अभिरुचिते, कदा च मरणमभिप्रेतम् ?, यदा योगा नोत्सर्प्पन्ति, 'सड्ढि'त्ति प्राग्वत् श्रद्धावान्, तादृशमिति भयोत्थ 'अन्तिके' समीपे गुरूणा मरणस्य वा 'विनयेद्' विनाशयेत्, कम् ?–लुनाति लीयन्ते वा तेपु यूका इति लोमानि तेपा हर्षो लोमहर्पस्त–रोमाञ्च, हा ! मम मरण भविष्यतीति भयाभिप्रायसम्प्राप्य, किं च–'भेद' विनाश 'देहस्य' शरीरस्य काङ्क्षेदिव काङ्क्षेत्, त्यक्ततत्परिकर्म्मत्वात्, अथवा 'तालिस'न्ति सुब्व्यत्ययात् तादृशो यादृश प्रव्रज्याप्रतिपत्तिकाले सलेखनाकाले वा अन्तकालेऽपि तादृश श्रद्धावान् सन्, उक्त हि–'जाए सद्धाए णिक्खंतो, परियायट्ठाणमुत्तम। तमेव अणुपालेज्ज'त्ति, ईदृशश्च परीपहोपसर्गजं लोमहर्प विनयेदिति सम्बन्ध इति सूत्रार्थ ॥ ३१ ॥ निगमयितुमाह—

अह कालमि सपत्ते, आघायाय समुस्सय। सकाममरण मरति, तिण्हमन्नयर मुणी ॥ ३२ ॥ त्तिबेमि

व्याख्या—'अथे'ति मरणाभिप्रायानन्तर 'काल'इति मरणकाले सम्प्राप्ते 'णिप्फोडया य सीसा' इत्यादिना क्रमेण

१ यया श्रद्धया निष्क्रान्त, पर्यायस्थानमुत्तमम्। तामेवानुपालयेत्। २ निष्पादिताश्च शिष्याः

तस्य आश्रयतः औदयिको वहुतरजीवाश्रयत्वात् तस्य, तथा च वृद्धाः—"आसयओ ओदयितो भावो, तंमि भावे
बहुतरा जीवा वट्टंति" पारिणामिकाविवक्षया चैतत् सम्भाव्यते, अतः पारिणामिक एवाश्रयतो महान्, अशेप-
जीवाजीवद्रव्याश्रयत्वात्, प्रस्तुतमर्थमाह—'एतेपाम्' अनन्तरमुक्तानां नामादिमहतां 'प्रतिपक्षो' विपक्षः क्षुल्लकानि
भवन्ति, तत्रापि नामस्थापने प्रतीते, द्रव्यतः परमाणुः, क्षेत्रतः आकाशप्रदेशः, कालतः समयः, प्राधान्यतः सचि-
त्ताचित्तमिश्रभेदतस्त्रिधा, तत्र सचित्तं द्विपदमाहारकं शरीरं चतुष्पदं सिंहः अपदं लवङ्गपुष्पम्, अचित्तं हीरकः, मिश्रं
जन्मसमयानन्तरमलङ्कृतस्तीर्थकृत्, प्रतिक्षुल्लकमामलकाद्बदरं बदरागनक इत्यादि, भावक्षुल्लकं क्षायिको भावः, उक्तं
हि वृद्धैः—"सव्वेत्थोवा जीवा खाइए भावे वट्टंति" सांसारिकसत्त्वापेक्षं चैतद्, अन्यथौपशमिक एव सर्वस्तोक-
तया भावक्षुल्लकं सम्भवतीति गाथार्थः ॥ इत्थं क्षुल्लकनिक्षेपमभिधाय निर्ग्रन्थनिक्षेपमाह—

निक्खेवो नियंठंमि चउव्विहो दुविहो य दव्वंमि। आगमनोआगमओ नोआगमतो य सो तिविहो २३७

व्याख्या—'निक्षेपो' न्यासः 'णियंठंमि'त्ति निर्ग्रन्थे निर्ग्रन्थविषयः 'चतुर्विधो' नामस्थापनाद्रव्यभावभेदात्,
तत्र नामस्थापने क्षुण्णे, द्विविधो भवति द्रव्ये आगमनोआगमतश्च, तत्रागमतः प्राग्वत्, नोआगमतश्च 'स' इति
निर्ग्रन्थः 'त्रिविधः' त्रिभेद इति गाथार्थः ॥ त्रैविध्यमेवाह—

१ आश्रयत औदयिको भावः तस्मिन् भावे बहुतरा जीवा वर्तन्ते । २ सर्वस्तोका जीवाः क्षायिके भावे वर्तन्ते

॥ उक्त पञ्चममध्ययन, साम्प्रत षष्ठमारभ्यते, अस्य चायमभिसम्बन्ध —अनन्तराध्ययने मरणविभक्तिरुक्ता, तत्रापि चानन्तर पण्डितमरण, तच्च 'विरयाण पडियं बेंति'त्ति वचनाद्विरतानामेव, न चैते विद्याचरणविकला इति तत्-स्वरूपमनेनोच्यते, इत्यनेन सम्बन्धेनायातस्याध्ययनस्य महापुरस्येव चत्वार्यनुयोगद्वाराणि भवन्तीत्यादिचर्चस्तावद्या-वन्नामनिष्पन्ननिक्षेपे क्षुल्लकनिर्ग्रन्थीयमिति नाम, तत क्षुल्लकस्य निर्ग्रन्थस्य च निक्षेप कार्य, तत्र क्षुल्लकस्य विपक्षो महान्, तदपेक्षत्वात् क्षुल्लकस्य, इति तन्निक्षेपे निक्षिप्तमेव तद्भवतीत्यभिप्रायेणाह—

नाम ठवणा दविए खित्ते काले पहाण पइ भावो। एएसि महताण पडिवक्खो खुल्लया हुति ॥ २३६ ॥

व्याख्या—अत्र नामस्थापने क्षुण्णे, महच्छब्दश्च प्रक्रमात् सर्वत्र गम्यते, तत्रागमतो ज्ञाताऽनुपयुक्तो द्रव्यमहत्, नोआगमतो ज्ञशरीरभव्यशरीरतद्व्यतिरिक्त द्रव्यमहद् अचित्तमहास्कन्धो दण्डादिकरणेन यश्चतुर्भि समयै सकललोकमापूरयति, क्षेत्रमहत् लोकालोकव्याप्याकाश, कालमहद् अनागताद्धा, प्रधानमहत्त्रिधा-सचित्तमचित्त मिश्र च, तत्र सचित्त द्विपद चतुष्पदमपद च, तत्र द्विपद तीर्थकृत् चतुष्पद सरभ अपद पद्मादिह्रदोत्पन्न पद्मम्, अचित्त चिन्तामणि, मिश्र तीर्थकृदेव राज्याभिषेकादिष्वलङ्कृत, प्रतिमहत् यदन्यापेक्षया महदुच्यते, यथा सर्षपाचनकस्थ-नकाद्बदरमित्यादि, भावमहत् प्राधान्यत क्षायिको भाव कालत पारिणामिकोऽनाद्यनन्तजीवाजीवत्वादिरूपतया-

रिद्धिंसरिसा रिद्धी, सो सिंगणादियकज्जे समुप्पणे चक्कवट्टिंपि सवलवाहणं चुण्णेउं समत्थो । वउसा सरीरोपकरणविभूषाऽनुवर्तिनः ऋद्धियशस्कामाः सातगौरवाश्रिताः अविविक्तपरिवाराः छेदशवलचारित्तजुत्ता णिग्गंथा वउसा भण्णंति, ते पंचविहा, तंजहा—आभोगवकुसा अणाभोगवकुसा संवुडवकुसा असंवुडवकुसा अहासुहुमवकुसा । आभोगवकुसा आभोगेण जो जाणंतो करेइ, अणाभोगेण अयाणंतो, संवुडो मूलगुणाइसु, असंवुडो तेसु चेव, अहासुहुमवकुसो अच्छासु पुसिया अवणेति सरीरे वा धूलिमाइ अवण्णेति । कुत्सितं शीलं यस्य पञ्चसु प्रत्येकं ज्ञानादिषु, सो कुसीलो दुविहो—पडिसेवणाकुसीलो कसायकुसीलो, सम्माराहणविवरीया पडिगया वा सेवणा पडिसेवणा पंचसु णाणाइसु, कसायकुसीलो जस्स पंचसु णाणाइसु कसाएहिं विराहणा कज्जति सो कसायकुसीलोत्ति।

१० र्द्धिसदृशा ऋद्धिः, स शृङ्गनादितकार्ये समुत्पन्ने चक्रवर्तिनमपि सबलवाहनं चूरयितुं समर्थः । वकुशाः छेदशबलचारित्रयुक्ता निर्ग्रन्था वकुशा भण्यन्ते, ते पञ्चविधाः, तद्यथा—आभोगवकुशा अनाभोगवकुशाः संवृतवकुशा असंवृतवकुशा यथासूक्ष्मवकुशाः । आभोगवकुशो आभोगेन यो जानन् करोति, अनाभोगेनाजानन्, संवृतो मूलगुणादिषु, असंवृतस्तेष्वेव, यथासूक्ष्मवकुशः अक्ष्णोः पुष्पिकामपनयति शरीराद्वा धूल्यादिकमपनयति । स कुशीलो द्विविधः—प्रतिसेवनाकुशीलः कषायकुशीलः, सम्यगाराधनविपरीता प्रतिगता वा सेवना प्रतिसेवना पञ्चसु ज्ञानादिषु, कषायकुशीलो यस्य पञ्चसु ज्ञानादिषु कषायैर्विराधना क्रियते स कषायकुशील इति ।

जाणगसरीरभविए तव्वतिरित्ते य निण्हगाईसु। भावमि नियठो खलु पचविहो होइ नायव्वो ॥ २३८ ॥

व्याख्या—'जाणगसरीरभविए'त्ति ज्ञशरीरनिर्ग्रन्थो भव्यशरीरनिर्ग्रन्थश्च पश्चात्कृतपुरस्कृतनिर्ग्रन्थपर्यायतयाऽय घृतकुम्भ इत्यादिन्यायत प्राग्वद्भावनीय, तद्व्यतिरिक्तश्च निह्नवादिषु, आदिशब्दात् पार्श्वस्थादिपरिग्रह, भावनिर्ग्रन्थोऽप्यागमतो नोआगमतश्च, तत्रागमतस्तथैव, नोआगमतस्तु स्वत एवाह निर्युक्तिकृत्—भावे निर्ग्रन्थ, खलुर्वाक्यालङ्कारे, 'पञ्चविध' पञ्चभेदो भवति ज्ञातव्य इति गाथार्थ ॥ पञ्चविधनिर्ग्रन्थस्वरूप च वृद्धसम्प्रदायादवसेय, स चायम्—[1]णोआगमतो णियंठत्ते वट्टमाणा पञ्च, तजहा—पुलाए बकुसे कुसीले णियंठे सिणाए। पुलातो पचविहो, जो आसेवण प्रति, णाणपुलातो दरिसणपुलाओ चरित्तपुलातो लिंगपुलातो अहासुहुमपुलागोत्ति। पुलागो णाम असारो, जहा धन्नेसु पलंजी, एवं णाणदसणचरित्तणिस्सारत्त जो उवेति सो पुलागो, लिंगपुलागो लिंगाउ पुलागी होंतो, अहासुहुसो य एएसु चेव पचसुवि जो थोष थोवं विराहेति, लद्धिपुलाओ पुण जस्स देविंद-

१ नोआगमतो निर्ग्रन्थत्वे वर्त्तमाना पञ्च, तद्यथा—पुलाको बकुश कुशीलो निर्ग्रन्थ स्नातक। पुलाक पञ्चविध—य आसेवना प्रति, ज्ञानपुलाको दर्शनपुलाकश्चारित्रपुलाक लिङ्गपुलाक यथासूक्ष्मपुलाक इति। पुलाको नाम असारो, यथा धान्येषु पलञ्जी, एव ज्ञानदर्शनचारित्रनिस्सारत्व य उपैति स पुलाक, लिङ्गपुलाको लिङ्गात् पुलाकीभवन्, यथासूक्ष्मश्च एतेष्वेव पञ्चस्वपि य स्तोक स्तोक विराधयति, लब्धिपुलाक पुनर्यस्य देवेन्द्र-

सणधरो, पूजामर्हतीति अरहा, अथवा नास्य रहस्यं विद्यत इति अरहा, जितकषायत्वाज्जिनः, एसो पंचविहो सिणायगो। आह च भाष्यकृत्—

तत्थ णियंठपुलातो वकुसकुसीलो णियंठ ण्हातो य। तत्थ पुलाओ दुविहो आसेवण लद्धितो चेव ॥ १ ॥
पुलागवकुसकुसीला नियंठसिणायगा य णायव्वा। एएसिं पंचण्हवि होइ विभासा इमा कमसो ॥ २ ॥
तत्थ पुलातो दुविहो लद्धिपुलातो तहेव इयरो वा। लद्धिपुलातो संघाइकज्ज इयरो य पंचविहो ॥ ३ ॥
णाणे दंसणचरणे लिंगे अहसुहुमए य णायव्वो। णाणे दंसणचरणे तेसिं तु विराहण असारो ॥ ४ ॥
लिंगपुलातो अन्नं णिक्कारणतो करेति सो लिंगं। मणसा अकप्पियाईणिसेवओ होयहासुहुमो ॥ ५ ॥
सरीरे उवकरणे वा बाउसियत्तं दुहा समक्खायं। सुक्किलवत्थाणि धरे देसे सव्वे सरीरंमि ॥ ६ ॥
आभोगमणाभोगं संवुडमसंवुडे अहासुहुमे। सो दुविहोऽवी वउसो पंचविहो होइ णायव्वो ॥ ७ ॥
आभोगे जाणंतो करेति दोसं तहा अणाभोगे। मुलुत्तरेहि संवुडो विवरीय असंवुडो होति ॥ ८ ॥
अच्छिमुहमज्जमाणो होइ अहासुहुमतो तहा वउसो। पडिसेवणाकसाए होइ कुसीलो दुहा एसो ॥ ९ ॥
णाणे दंसणचरणे तवे य अहसुहुमए य बोद्धव्वे। पडिसेवणाकुसीलो पंचविहो ऊ मुणेयव्वो ॥ १० ॥

१० दर्शनधरः। एष पञ्चविधः स्नातकः। २ भाष्यं प्राय एतदनुगतमेवेति न संस्कृतम्

णिंयठो अब्भिंतरबाहिरगंथणिग्गतो, सो उवसतकसातो खीणकसातो वा अंतोमुहुत्तकालितो, सो पचविहो—पढमसमयणियठो अपढमसमयनियठो, अहवा चरमसमयनियठो अचरमसमयनियठो अहासुहुमणियठोत्ति, अतोमुहुत्तणियठकालसमयरासीए पढमसमए पडिवज्जमाणो पढमसमयनियठो, सेसेसु समयएसु वट्टमाणो अपढमसमयनियठो, चरमे—अतिमे समए वट्टमाणो चरमसमयणियठो, अचरमा—आदिमज्झा, अहासुहुमो एएसु सवेसुऽवि। सिणातो—स्नातको मोहणिज्जाइघातियचउकम्मावगतो सिणातो भण्णति, सो पचविहो—अच्छवी असबलो अकम्मसो ससुद्धणाणदसणधरो अरहा जिणो केवली, अच्छवी—अव्यथक', सबलो सुद्धासुद्धो एगतसुद्धो असबलो, अशा—अवयवा कर्मणस्ते अवगया जस्स सो अकम्मंसो, ससुद्धाणि णाणदसणाणि धारेति जो सो ससुद्धणाणद-

१ निर्ग्रन्थ अभ्यन्तरबाह्यग्रन्थनिर्गत , स उपशान्तकषाय क्षीणकषायो वा अन्तर्मुहूर्तकालिक,, स पञ्चविध —प्रथमसमयनिर्ग्रन्थ अप्रथमसमयनिर्ग्रन्थ अथवा चरमसमयनिर्ग्रन्थ अचरमसमयनिर्ग्रन्थ यथासूक्ष्मनिर्ग्रन्थ इति । अन्तर्मुहूर्तनिर्ग्रन्थकालसमयराशौ प्रथमसमय प्रतिपद्यमान प्रथमसमयनिर्ग्रन्थ , शेषेषु समयेषु वर्त्तमानोऽप्रथमसमयनिर्ग्रन्थ , चरमे—अन्तिमे समये वर्त्तमानश्चरमसमयनिर्ग्रन्थ , अचरमा—आदिमध्या , यथासूक्ष्म एतेषु सर्वेष्वपि । मोहनीयादिघातिचतुष्कर्मापगत स्नातको भण्यते, स पञ्चविधः—अच्छवि अशबल अकर्मांश सशुद्धज्ञानदर्शनधर अर्हन् जिन केवली, शबल शुद्धाशुद्ध एकान्तशुद्धोऽशबल ,—अपगता यस्मात् सोऽकर्मांशः, सशुद्धे ज्ञानदर्शने धारयति यः स सशुद्धज्ञान—

वकुशकुशीलनिर्ग्रन्थानां श्रुतमष्टौ प्रवचनमातरः, श्रुतापगतः केवली स्नातक इति सम्प्रदायाभिप्रायः। प्रज्ञप्त्यभिप्रायस्तु—"पुलाए णं भंते! केवतियं सुयं अहिज्जेज्जा ?, गोयमा! जहण्णेणं णवमस्स पुव्वस्स तइयं आयारवत्थुं, उक्कोसेणं नव पुव्वाइं अहिज्जेज्जा"। इदानीं प्रतिसेवना—पञ्चानां मूलगुणानां रात्रिभोजनस्य च पराभियोगाद्बलात्कारेण अन्यतमत् प्रतिसेवमानः पुलाको भवति, मैथुनमेवेत्येके, प्रज्ञप्तिस्तु—"पुलाए णं पुच्छा, जाव मूलगुणे पडिसेवेमाणे पंचण्हं आसवाणं अन्नयरं पडिसेवेज्जा, उत्तरगुणे पडिसेवेमाणे दसविहस्स पच्चक्खाणस्स अन्नयरं पडिसेवेज्जा" वकुशो द्विविधः—उपकरणवकुशः शरीरवकुशश्च, तत्रोपकरणाभिष्वक्तचित्तो विविधविचित्रमहाधनोपकरणपरिग्रहयुक्तः विशेषयुक्तोपकरणकाङ्क्षायुक्तो नित्यं तत्प्रतिकारसेवी भिक्षुरुपकरणवकुशो भवति, शरीराभिष्वक्तचित्तो विभूषार्थं तत्प्रतिकारसेवी शरीरवकुशः। प्रतिसेवनाकुशीलो मूलगुणानविराधयन्नुत्तरगुणेषु काञ्चिद्विराधनां प्रतिसेवते, प्रज्ञप्तिस्तु—"वकुसे णं पुच्छा, जाव णो मूलगुणपडिसेवए होज्जा, उत्तरगुणपडिसेवए हुज्जा, पडिसेव-

---

१ पुलाको भदन्त! कियत् श्रुतमधीयेत ?, गौतम! जघन्येन नवमस्य पूर्वस्य तृतीयमाचारवस्तु, उत्कर्षेण नव पूर्वाणि अधीयेत। २ पुलाकः पृच्छा, यावत् मूलगुणान् प्रतिसेवमानः पञ्चानामाश्रवाणामन्यतरं प्रतिसेवेत, उत्तरगुणान् प्रतिसेवमानो दशविधस्य प्रत्याख्यानस्यान्यतरत् प्रतिसेवेत। ३ वकुशः पृच्छा, यावन्नो मूलगुणप्रतिसेवको भवेत् उत्तरगुणप्रतिसेवको भवेत् प्रतिसेवना—

णाणादी उवजीवति अहसुहुमो अहा इमो मुणेयव्वो । सातिज्जतो राग वच्चति एसो तवचरणी ॥ ११ ॥
एमेव कसायमिवि पचविहो होइ क कुसीलो उ । कोहेण विज्जाति पउजए एव माणादी ॥ १२ ॥
एमेव दसणंमिवि साव पुण देति क चरित्तमि । मणसा कोहाईणि उ करेइ अह सो अहासुहुमो ॥ १३ ॥
पढमापढमा चरिमे अचरिम सुहुमे य होंति णिग्गथे । अच्छवि अस्सवले या अकम्मससुद्ध अरहजिणो ॥ १४ ॥

ते च संयमश्रुतप्रतिसेवनातीर्थलिङ्गलेश्योपपातस्थानविकल्पत साध्या, एते पुलाकादय पञ्च निर्ग्रन्थविशेषा एभि सयमादिभिरनुगमविकल्पै साध्या भवन्ति, तत्र सयमे तावत् पुलाकबकुशकुशीला एए तिण्णिवि दोसु सजमेसु–सामाइते छेओवट्ठावणीए य, कसायकुसीला दोसु–परिहारविसुद्धीए सुहुमसपराए य इति सम्प्रदाय । प्रज्ञप्तिस्त्वाह—कसायकुसीले ण पुच्छा ?, सामाइयसजमे वा हुज्जा, जाव सुहुमसपरायसजमे वा हुज्जा, णो अहक्खायसजमे हुज्जा, णियठा सिणायगा य एए दोऽवि अहक्खायसजमे" पुलागबकुसपडिसेवणाकुसीला य उक्कोसेण अभिन्नदसपुव्वधरा कसायकुसीलनिर्ग्रन्थौ चतुर्दशपूर्वधरौ । जघन्येन पुलाकस्य श्रुतमाचारवस्तु नवमपूर्वे,

१ एते त्रयोऽपि द्वयो सयमयो –सामायिके छेदोपस्थानीये च, कषायकुशीला द्वयो –परिहारविशुद्धौ सूक्ष्मसपराये च । कषायकुशीलः पृच्छा, सामायिकसयमे वा भवेत् यावत्सूक्ष्मसपरायसयमे वा भवेत्, न यथाख्यातसयमे भवेत्, निर्ग्रन्था स्नातकाश्चैते द्वयेऽपि यथाख्यातसयमे । पुलाकबकुशप्रतिसेवनाकुशीलाश्चोत्कृष्टेनाभिन्नदशपूर्वधराः ।

अणुत्तरविमाणेसु उववज्जति," स्नातकस्य निर्वाणमिति। स्थानम्—असङ्ख्येयानि संयमस्थानानि कषायनिमित्तानि भवन्ति, तत्र सर्वजघन्यानि संयमलब्धिस्थानानि पुलाककषायकुशीलयोः, तौ युगपदसङ्ख्येयानि स्थानानि गच्छतः, ततः पुलाको व्युच्छिद्यते, कषायकुशीलस्ततोऽसङ्ख्येयानि स्थानान्येकाकी गच्छति, ततः कषायकुशीलप्रतिसेवनाकुशीलबकुशा युगपदसङ्ख्येयानि स्थानानि गच्छन्ति, ततो बकुशो व्युच्छिद्यते, ततोऽप्यसंख्येयानि स्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते, ततोऽसङ्ख्येयानि स्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते, अत ऊर्द्धमकषायस्थानानि गत्वा निर्ग्रन्थः प्रतिपद्यते, सोऽप्यसङ्ख्येयानि स्थानानि गत्वा व्युच्छिद्यते, प्रज्ञप्तिस्तु—"णियंठस्स णं भंते! केवइया णं संजमठाणा पन्नत्ता?, गोयमा! एगे अजहण्णमुक्कोसए संजमट्ठाणे पण्णत्ते" अत एव ऊर्द्धमेकमेव स्थानं गत्वा स्नातको निर्वाणं प्राप्नोति, एषां संयमलब्धिरुत्तरोत्तरस्यानन्तगुणा भवतीति एष सम्प्रदायः। भाष्यकारोऽप्याह—

संयम सुय पडिसेवण तित्थे लिंगे य लेस उववाए। ठाणं च पति विसेसो पुलागमाईण जोएज्जा ॥ १ ॥
पुलाग वकुसकुसीला सामाइयछेयसंजमे होंति। होति कसायकुसीलो परिहारे सुहुमरागे य ॥ २ ॥
णिग्गंथो य सिणातो अहखाए संजमे मुणेयवो। दसपुवधरुक्कोसा पडिसेव पुलाय वउसा य ॥ ३ ॥

---

१. नानुत्तरविमानेषु उत्पद्यते। २ निर्ग्रन्थस्य भदन्त! कियन्ति संयमस्थानानि प्रज्ञप्तानि?, गौतम! एकं अजघन्योत्कृष्टं संयमस्थानं प्रज्ञप्तम्

णांकुसीले जहा पुलाए" कपायकुशीलनिर्ग्रन्थस्नातकाना प्रतिसेवना नास्ति । तीर्थमिदानीं, सर्वेपा तीर्थङ्कराणा तीर्थेपु भवन्ति, एके त्वाचार्या मन्यन्ते–पुलाकवकुशप्रतिसेवनाकुशीलास्तीर्थे नित्य, शेपास्तु तीर्थेऽतीर्थे वा । 'लिङ्ग'-मिति लिङ्ग द्विविध–द्रव्यलिङ्ग भावलिङ्ग च, भावलिङ्ग प्रतीत्य सर्वे निर्ग्रन्थलिङ्गे भवन्ति, द्रव्यलिङ्ग प्रतीत्य भाज्या । लेश्या पुलाकस्योत्तरास्तिस्रो लेश्या भवन्ति, वकुशप्रतिसेवनाकुशीलयो सर्वा अपि, कपायकुशीलस्य परिहारविशुद्धेस्तिस्र उत्तरा , सूक्ष्मसम्परायस्य निर्ग्रन्थस्नातकयोश्च शुक्लैव केवला भवति, अयोग शैलेशीप्रतिपन्नोऽलेश्यो भवति, प्रज्ञप्तिस्तु–"पुलाए ण पुच्छा, जाव तिसु लेसासु होज्जा, तजहा–तेउलेसाए पम्हलेसाए सुक्कलेसाए, एव वउसस्सवि, एव पडिसेवणाकुसीलस्सवि । कसायकुसीले पुच्छा, जाव छसु लेसासु होज्ज"त्ति । उपपात पुलाकस्योत्कृष्टस्थितिपु देवेपु सहस्रारे, वकुशप्रतिसेवनाकुशीलयोर्द्वाविंशतिसागरोपमस्थितिप्वच्युते कल्पे, कपायकुशीलनिर्ग्रन्थयोस्त्रयस्त्रिंशत्-सागरोपमस्थितिपु सर्वार्थसिद्धे, सर्वेपामपि जघन्य पल्योपमपृथक्त्वस्थितिपु सौधर्म्मे, प्रज्ञप्तिस्तु "कसायकुसीले जहा पुलाए, णवर उक्कोसेण अणुत्तरविमाणेसु, णियठे ण एव चेव, जाव वेमाणिएसु उववज्जमाणे अजहण्णमणुक्कोसेण

१ कुशीलो यथा पुलाक । २ पुलाको भदन्त ! पृच्छा, यावत्तिसृपु लेश्यासु भवेत् , तद्यथा—तेजोलेश्याया पद्मलेश्याया शुक्ललेश्याम् , एव वकुशस्यापि, एव प्रतिसेवनाकुशीलस्यापि । कपायकुशीले पृच्छा ?, यावत् पट्सु लेश्यासु भवेत् इति । ३ कपायकुशीलो यथा पुलाक , नवरमुत्कर्पेण अनुत्तरविमानेपु, निर्ग्रन्थ एवमेव, यावद्वैमानिकेपूत्पद्यमानः अजघन्योत्कृष्टे

तदप्याद्यानां भावपरावृत्तिमपेक्ष्य 'आगारभावमायाए वा से सिया पलिभागमायाए वा से सिया' इत्याद्यागमप्रामाण्यादविरुद्धमेव, इत्यलं प्रसङ्गेनेति ॥ सम्प्रति निर्युक्तिरनुस्रियते, तत्र च 'भावे निर्ग्रन्थः खलुः पञ्चविधो भवति ज्ञातव्यः' इत्यनेन बाह्याभ्यन्तरहेतुका निर्ग्रन्थभेदा उक्ताः, साम्प्रतं त्वान्तरसंयमस्थाननिबन्धनांस्तद्भेदानाह—

उक्कोसो उ नियंठो जहन्नओ चेव होइ णायव्वो। अजहन्नमणुक्कोसा हुंति णियंठा असंखिज्जा ॥२३९॥

व्याख्या—उत्कृष्यत इत्युत्कर्षः स एवोत्कर्षकः, कोऽर्थः ?—उत्कृष्टो निर्ग्रन्थो, जघन्यकश्चैव भवति ज्ञातव्यः, तथा 'अजहण्णमणुक्कोस'त्ति अजघन्या अनुत्कृष्टा भवन्ति निर्ग्रन्थाः असङ्ख्येयाः, संयमस्थानापेक्षया च निर्ग्रन्थानां जघन्यत्वमुत्कृष्टत्वमजघन्यानुत्कृष्टत्वं वा ज्ञेयं, तथा च वृद्धाः—जो उक्कोसएसु संजमट्ठाणेसु वट्टति सो उक्कोसगणियंठो भण्णति, एवं जहण्णओ जहण्णएसु, सेसो अजहन्नमणुक्कोस'त्ति गाथार्थः ॥ इह च निर्गतो ग्रन्थान्निर्ग्रन्थ इति ग्रन्थमेव भेदाभिधानद्वारेणाह—

दुविहो य होइ गंथो बज्झो अब्भिंतरो य नायव्वो। अंतो य चउदसविहो दसहा पुण बाहिरो गंथो २४०

व्याख्या—'द्विविधश्च' द्विभेदो भवति ग्रथ्यते—बध्यते कषायवशगेनात्मनेति ग्रन्थः, अथवा ग्रथ्नाति—बध्नात्या-



१ आकारभावमादाय (मात्रया) वा सा (तस्याः) स्यात् प्रतिभागमादाय (मात्रया) वा सा स्यात्। २ य उत्कृष्टेषु संयमस्थानेषु वर्त्तते स उत्कृष्टकनिर्ग्रन्थो भण्यते, एवं जघन्यो जघन्यकेषु, शेषा अजघन्योत्कृष्टाः

चोद्दसपुव्वधरातो कसायणियठा य होंति णायव्वा । ववगयसुतो य केवलि मूलासेवीपुलाओ य ॥ ४ ॥
चित्तलवत्थासेवि वलाभिओगेण सो भवति वउसो । मूलगुण उत्तरगुणे सरीरवउसो मुणेयव्वो ॥ ५ ॥
ण्हाय कसायकुसीले निग्गथाणं च नत्थि पडिसेवा । सव्वेसु तित्थेसु होति पुलागादि य णियठा ॥ ६ ॥
लिंगे उ भावलिंगे सव्वेसि दव्वलिंग भयणिज्जा । लेसाउ पुलागस्स य उवरिल्लातो भवे तिण्णि ॥ ७ ॥
वकुसपडिसेवगाण सव्वा लेसाउ होंति णायव्वा । परिहारविसुद्धीण तिण्हुवरिल्ला कसाए उ ॥ ८ ॥
णिग्गथसुहुमरागे सुक्का लेसा तहा सिणाएसु । सेलेसिं पडिवण्णो लेसातीए मुणेयव्वो ॥ ९ ॥
पुलागस्स सहस्सारे सेवगवउसाण अच्चुए कप्पे । सकसायणियंठाणं सव्वट्ठे ण्हायगो सिद्धो ॥ १० ॥
पुलागकुसीलाण सव्वजहण्णाइ होंति ठाणाइ । वोलीणेहि असखेहि होइ पुलागस्स वोच्छित्ती ॥ ११ ॥
कसायकुसीलो उवरि असखिज्जाइ तु तत्थ ठाणाइ । पडिसेवणवउसे वा कसायकुसीलो तओऽसंखा ॥ १२ ॥
वोच्छिण्णे उ वउसो उवरि पडिसेवणा कसाओ य । गतुमसखिज्जाइ छिज्जइ पडिसेवणकुसीलो ॥ १३ ॥
उवरि गतु छिज्जति कसायसेवी ततो इ सो णियमा । उद्ध एगट्ठाण णिग्गंथसिणायगाण तु ॥ १४ ॥

अत्र च यत्पुलाकादीना मूलोत्तरगुणविराधकत्वेऽपि निर्ग्रन्थत्वमुक्त तज्जघन्यजघन्यतरोत्कृष्टोत्कृष्टतरादिभेदत सयमस्थानानामसङ्ख्यतया तदात्मकतया च चारित्रपरिणतेरिति भावनीय । यदप्येषा सयमित्वेऽपि षड्लेश्याभिधानं

वक्त्रविकाशात्मकः, 'शोक' इष्टवियोगात् मानसं दुःखं, 'भयम्' इहलोकभयादि सप्तधा, तथा चाह—"इहंपरलोयादाणे आजीवसिलोय तह अकम्हा य। मरणभयं सत्तमयं विभासमेएसि वोच्छामि ॥ १ ॥ इहलोगभयं च इमं जं मणुयाइओ सरिसजाईओ। वीहेइ जं तु परजाइयाणं परलोयभयमेयं ॥ २ ॥ आयाणत्थो भण्णति मा हीरिज्जत्ति तस्स जं वीहे। आयाणभयं तं तू आजीवोमे ण जीवेऽहं ॥ ३ ॥ असिलोगभयं अयसो होति अकम्हाभयं तु अणिमित्तं। मरियव्वस्स उ भीए मरणभयं होइ एयं तु ॥ ४ ॥" 'जुगुप्सा' अस्नानादिमलिनतनुसाधुहीलना, तथा चाह—अण्हाणमाइएहिं साधुं तु दुगुंछति दुगुंछे'ति गाथार्थः ॥ साम्प्रतं बाह्यग्रन्थभेदानाह—

खेत्तं वत्थू धणधन्नसंचओ मित्तनाइसंजोगो। जाणसयणासणाणि अ दासीदासं च कुवियं च ॥ २४२ ॥

व्याख्या—'क्षेत्रं' सेत्वादि, 'वास्तु' खातादि, धनं—हिरण्यादि, धान्यं च—शाल्यादि तयोः सञ्चयो—राशिर्धनधान्यसञ्चयः, मित्राणि च—सहवर्द्धितानि ज्ञातयश्च—स्वजनाः तैः संयोगः—सम्बन्धो मित्रज्ञातिसंयोगः, यानानि च—

१ इहपरलोकादानानि आजीवाश्लोकौ तथाऽकस्माच्च। मरणभयं सप्तमकं विभाषामेतेषां वक्ष्यामि ॥ १ ॥ इहलोकभयं चेदं यन्मनुजादितः सदृशजातितो। बिभेति यत्तु परजातिभ्यः परलोकभयमेतत् ॥२॥ आदानमर्थो भण्यते मा हार्षीदिति तस्माद्यद्बिभेति। आदानभयं तत्तु आजीवोऽवमे न जीविष्याम्यहम् ॥ ३ ॥ अश्लोकभयमयशो भवत्यकस्माद्भयं त्वनिमित्तम्। मर्त्तव्यात्तु भीते मरणभयं भवत्येतत्तु ॥४॥ २ अस्नानादिकैः साधुं तु जुगुप्सते जुगुप्सा।

त्मान कर्मणेति ग्रन्थः, तद्वैविध्यमेवाह—बहिर्भवो बाह्योऽभ्यन्तरश्च 'ज्ञातव्य' अवबोद्धव्य, तत्र च 'अतो अ'ति अन्त शब्दोऽधिकरणप्रधानमव्यय, च पूरणे, ततश्चान्तरिति मध्ये यो ग्रन्थोऽभ्यन्तर इत्यर्थ, स किमित्याह–'चतुर्दशविध' चतुर्दशभेदो 'दशधा' दशप्रकार, पुन शब्दो विशेषद्योतक, 'बाहिरो'त्ति बाह्यो ग्रन्थ इति गाथार्थ ॥ तत्रान्तरस्य चतुर्दश भेदानाह–

कोहो माणो माया लोभे पिज्जे तहेव दोसे य। मिच्छत्त वेअ अरइ रइ हास सोगे य दुग्गछा ॥ २४१ ॥

व्याख्या—'क्रोध' अप्रीतिलक्षण, 'मान' अहमितिप्रत्ययहेतु, 'माया' स्वपरव्यामोहोत्पादक शाठ्य, 'लोभो' द्रव्याद्यभिकाङ्क्षा, 'प्रेम' प्रियेषु प्रीतिहेतु, 'तथैवे'त्यान्तरग्रन्थरूप एव, कोऽसौ ?–'दोषश्च' उपशमत्यागात्मको विकारो, द्वेष इत्यर्थ। इह च यद्यपि प्रेम मायालोभरूप द्वेषश्च क्रोधमानात्मक तथापि तयो पृथगुपादान कथञ्चित् सामान्यस्य विशेषेभ्योऽन्यत्वख्यापनार्थं, 'मिथ्यात्व' तत्त्वार्थाश्रद्धान, तच्च षड्भि स्थानैर्भवति, तानि च नास्ति न नित्य इत्यादीनि, तदुक्तम्–"[1]णत्थि ण णिच्चो ण कुणति कय ण वेएति णत्थि णेव्वाण। णत्थि य मोक्खोवाओ छम्मिच्छत्तस्स ठाणाइ ॥ १ ॥" 'वेद' स्त्रीवेदादिस्त्रिधा, 'अरति' सयमेऽप्रीति, 'रति' असयमे प्रीति, आह च–"[2]इत्थीवेयाईओ तिविहो वेओ य होइ बोद्धव्वो। अरती य सजममी होइ रती संजमे यावि ॥ १ ॥" 'हासो' विस्मयादिषु

१ नास्ति न नित्यो न करोति कृत न वेदयति नास्ति निर्वाणम्। नास्ति च मोक्षोपाय षड् मिथ्यात्वस्य स्थानानि ॥ १ ॥ २ स्त्रीवेदादिकस्त्रिविधो वेदश्च भवति बोद्धव्य। अरतिश्च सयमे भवति रति असयमे चापि ॥ १ ॥

व्याख्या—'यावन्तो' यत्परिमाणा वेदनं विद्या—तत्त्वज्ञानात्मिका न विद्या अविद्या—मिथ्यात्वोपहतकुत्सितज्ञानात्मिका तत्प्रधानाः पुरुषाः अविद्यापुरुषाः, अविद्यमाना वा विद्या येषां ते अविद्यापुरुषाः, इह च विद्याशब्देन प्रभूतश्रुतमुच्यते, न हि सर्वथा श्रुताभावः जीवस्य, अन्यथा अजीवत्वप्राप्तेः, उक्तं हि—"सव्वजीवाणंपि य णं अक्खरस्सऽणंतभागो णिच्चुघाडितो, जदि सोऽवि आवरिज्जेज्ज तो णं जीवो अजीवत्तणं पावेज्जा"। 'सर्वे'अखिलाः 'ते'इत्यविद्यापुरुषा, 'दुक्खसंभव'त्ति दुःखस्य सम्भवो येषु ते दुःखसम्भवाः, यद्वा दुःखं करोति दुःखयति ततो दुःखयतीति दुःखं—पापं कर्म्म ततः सम्भवः—उत्पत्तिर्येषां ते दुःखसम्भवाः, एवंविधाः सन्तः किमित्याह—'लुप्यन्ते' दारिद्र्यादिभिर्बाध्यन्ते 'वहुशः' अनेकशो 'मूढा' हिताहितविवेचनं प्रत्यसमर्थाः, क?—संसरणं—तिर्यग्नरकादिषु भवेषु भ्रमणं संसारः तस्मिन्, कीदृशि?—'अनन्तके' अविद्यमानान्ते, अनेन चानन्तसंसारिकतादर्शनेन तादृशां पण्डितमरणाभाव उक्तः, अध्ययनार्थापेक्षया तु निर्ग्रन्थस्वरूपज्ञापनार्थं तद्विपक्ष उक्त इति भावनीयम्। इह चायमुदाहरणसम्प्रदायः—एगो गोधो दोगच्चेण वाइतो गेहाओ णिग्गतो, सव्वं पुहविं हिंडिऊण जाहे ण किंचि लहति ताहे पुण-



१ सर्वजीवानामपि चाक्षरस्यानन्तभागो नित्योद्घाटितः, यदि सोऽपि आव्रियेत तदा जीवोऽजीवत्वं प्राप्नुयात्। २ एको गोधः (अलसः) दौर्गत्येन पातितो गृहान्निर्गतः, सर्वां पृथ्वीं हिण्डयित्वा यदा न किञ्चित् लभते तदा पुन-

शिविकादीनि शयनानि च–पल्यङ्कादीनि आसनानि च–सिंहासनादीनि यानशयनासनानि, च समुच्चये, दास – अङ्कपतिता दासा अपि तथाविधा एव अनयो समाहार , च प्राग्वत्, 'कुवियं च'त्ति कुप्यं च–विविध गृहोपस्करात्मकम् । अत्र च धनधान्यसञ्चयो मित्रज्ञातिसयोगश्चेति द्वौ शेपाश्चाष्टेति दशविधो वाह्यग्रन्थ इति गाथार्थ ॥ निगमयितुमाह—

सावज्जगथमुक्का अब्भिंतरबाहिरेण गथेण । एसा खलु निज्जुत्ती खुड्डागनियठसुत्तस्स ॥ २४३ ॥

व्याख्या—सहावद्येन–दोपेण वर्त्तत इति सावद्य स चासौ ग्रन्थश्च सावद्यग्रन्थस्तेन मुक्ताः सावद्यग्रन्थमुक्ता , अनेन च रजोहरणमुखवस्त्रिकावर्पाकल्पादेर्दशविधवाह्यग्रन्थान्तर्गतत्वेऽपि धर्मोपकरणत्वेनानवद्यतयाऽमुक्तावपि निर्ग्रन्थत्वमुक्तम् , एव च मा भूत्कस्यचिद्व्यामोहो–वाह्येनैव सावद्यग्रन्थेन मुक्ता इत्याह–आभ्यन्तरवाह्येन ग्रन्थेन, न तु वाह्येनैव, मुक्ता इति शेप , 'एपा' अनन्तरोक्ता 'खलु' निश्चित निरिति–निश्चिताऽधिका वा युक्तिरस्यामिति निर्युक्ति –नामनिष्पननिक्षेपनिर्युक्तिरित्यर्थ , कस्येत्याह–'खुड्डागणियठसुत्तस्स'त्ति क्षुल्लकनिर्ग्रन्थनामकं सूत्र तस्येति गाथार्थ ॥ इत्युक्तो नामनिष्पन्ननिक्षेप , सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीय, तस्य चायमभिसम्बन्ध'–इहानन्तराध्ययनसूत्रे 'मुनि सकाममरण म्रियते' इत्युक्त, स च मननान्मुनिरिति ज्ञान्येव, ये त्वज्ञानिनस्ते किमित्याह—

जावतऽविज्जा पुरिसा, सव्वे ते दुक्खसभवा । लुप्पति बहुसो मूढा, ससारंमि अणतए ॥ १ ॥

भण्णंति–विज्जाभिमंतियं घडयं देहि, तेण से विज्जाए अभिमंतिऊण घडो दिण्णो, सो तं गहाय गतो सगामं, तत्थ वंधूहिं सहवासेहिंवि समं जहारुइयं भवणं विगुरुवियं, भोगे तेहिं सह भुंजंतो अच्छति, कम्मंता य से सीदिउमारद्धा, गवादओ य असंगोविज्जमाणा प्रलयीभूताः, सो य कालंतरेण अतितोसएण तं घडं खंधे काऊण एयस्स पभावेण अहं वंधुमज्झे पमोयामि, आसवपीतो पणच्चितो, तस्स पमाएण सो घडो भग्गो, सो य विज्जाकओ उवभोगो णट्ठो, पच्छा ते गामेयगा प्रलयीभूतविभवाः परपेसाईहिं दुक्खाणि अणुभवंति, जति पुण सा विज्जा गहिया होंता ततो भग्गेवि घडे पुणोवि करेंतो। एवं अविज्जाणरा दुक्खाणि संभूताः क्लिश्यन्ते, नागार्जुनीयास्तु पठन्ति–"ते सवे दुक्खमज्जिया" इह च मकारोऽलाक्षणिकः, अर्जितम्–उपार्जितं दुःखं यैस्तेऽर्जितदुःखाः, प्राकृतत्वान्निष्ठान्तस्य परनिपातः, शेषं प्राग्वत्, यद्वा यावन्तो 'विद्यापुरुषा' विद्याप्रधानाः पुरुषास्ते सर्वे 'अदुःखसम्भवाः' अविद्य-

१ भण्यते–विद्याभिमन्त्रितं घटं देहि, तेन तस्मै विद्ययाऽभिमन्त्र्य घटो दत्तः, स तं गृहीत्वा गतः स्वग्रामं, तत्र बन्धुभिः सहवासिभिरपि समं यथारुचितं भवनं विकुर्व्वितं, भोगांस्तैः सह भुञ्जानस्तिष्ठति, कर्मकराश्च तस्य सीदितुमारब्धाः, गवादयश्चासंगोप्यमानाः प्रलयीभूताः, स च कालान्तरे अतितोषेण तं घटं स्कन्धे कृत्वा एतस्य प्रभावेणाहं बन्धुमध्ये प्रमोदे, पीतासवः प्रणर्तितः, तस्य प्रमादेन स घटो भग्नः, स च विद्याकृत उपभोगो नष्टः, पश्चात् ते ग्रामेयकाः प्रलयीभूतविभवाः परप्रैषादिभिर्दुःखान्यनुभवन्ति, यदि पुनः सा विद्या गृहीताऽभविष्यत्तदा भग्नेऽपि घटे पुनरप्यकरिष्यत्। एवमविद्यानरा दुःखानि ( समनुभवन्तः ) क्लिश्यन्ते।

रंवि घर जतो णियत्तो, जाव एगमि पाणवाडगसमीवे गामदेघकुलियाए एगरत्ति वासोवगतो जाव पेच्छइ ताव देवउलियाओ एगो पाणो निग्गतो चित्तघडहत्थगतो, सो एगपासे ठातिऊण त वियडघड भणति–लहु घर सज्जेहि, एव ज ज सो भणति त चिय घडो करेइ, जाव सयणिज्ज, इत्थीहि सद्धिं भोगे भुजति, जाव पहाए पडिसाहरति। तेण गोहेण सो दिट्ठो, पच्छा चिंतेइ–किं मज्झ बहुएण भमिएण ?, एत चेव ओलग्गामि, सो तेण ओलग्गिओ, आराद्धितो भणति—किं करेमि ? त्ति, तेण भण्णति–तुम्ह पसाएण अहपि एव चेव भोगे भुजामि, तेण भण्णति–किं विज्जं गेण्हसि ? उताहु विज्जाएऽभिमतिय घड गेण्हसि ?, तेण विज्जासाहणपुरच्चरणभीरुणा भोगतिसिएण य

---

१० रपि गृह यस ( तत ) निवृत्त , यावदेकस्य चाण्डालपाटकस्य समीपे ग्रामदेवकुलिकायामेकरात्र वासमुपगत , यावत्प्रेक्षते तावद्देवकुलिकात एकः पाणः ( चाण्डाल ) निर्गतश्चित्रघटहस्तगतः, स एकस्मिन् पार्श्वे स्थित्वा त विकृत ( साधित ) घट भणति–लघु गृह सज्जय, एव यद्यत्स भणति तदेव घट करोति, यावच्छयनीय, स्त्रीभि सार्धं भोगान् भुनक्ति, यावत्प्रभाते प्रतिसरति । तेन गोधेन स दृष्ट , पश्चात् चिन्तयति—किं मम बहुना भ्रान्तेन ?, एनमेवावल्गामि, स तेनावलगित , आराद्धो भणति–किं करोमीति ?, तेन भण्यते–तव प्रसादेन अहमप्येवमेव भोगान् भुञ्जे, तेन भण्यते–किं विद्या गृह्णासि उताहो विद्ययाऽभिमन्त्रित घट गृह्णासि ?, तेन विद्यासाधनपुरश्चरणभीरुणा भोगतर्पितेन च

इह च यस्मादविद्यावन्तः संसारे लुप्यन्ते तस्मात् 'मय्येव निपतत्वेतज्जगद्दुश्चरितं हि यत् । मत्सुचरितयोगेन, स वै कल्याणभाजनम् ॥ १ ॥' इति शाक्यादिपरिकल्पिताविद्यापरिहारेणात्मार्थमेव, न तु परार्थं, सत्यमेषयेद्, अपरक्तस्यापरत्रासङ्क्रमणेन परार्थानुष्ठानस्यानर्थकत्वाद्, अन्यत् प्राग्वदिति सूत्रार्थः ॥ अपरं च—

माया पिया ण्हुसा भाया, भज्जा पुत्ता य ओरसा । नालं ते मम ताणाय, लुप्पंतस्स सकम्मुणा ॥ ३ ॥

एयमट्ठं सपेहाए, पासे समियदंसणे । छिंद गेहिं सिणेहं च, ण कंखे पुव्वसंथवं ॥ ४ ॥

व्याख्या—तत्राद्यसूत्रपूर्वार्धं स्पष्टं, नवरं स्नुषा—वध्वः, पुत्राश्च उरसि भवा औरसाः स्वयमुत्पादिताः, आस्तां जातपुत्रादयः, किमित्याह—'नालं' न समर्थाः 'ते' मात्रादयो मम 'त्राणाय' रक्षणाय, कथंभूतस्य ?—'लुप्यमानस्य' छिद्यमानस्य, केन ?—'स्वकर्म्मणा' स्वकृतेन ज्ञानावरणादिना, किमुक्तं भवति ?—स्वकर्म्मविहितां बाधामनुभवतः एते मात्रादयो न त्राणायेति, एवमात्मकमनन्तरोक्तमर्थं—वस्तु 'सपेहाए'त्ति प्राकृतत्वात् संप्रेक्षया—सम्यग्बुद्ध्या स्वप्रेक्षया वा, 'पासे'त्ति पश्येदवधारयेत्, शमितं दर्शनं प्रस्तावात् मिथ्यात्वात्मकं येन स तथोक्तः, यदिवा सम्यक् इतं—गतं जीवादिपदार्थेषु दर्शनं—दृष्टिरस्येति समितदर्शनः, कोऽर्थः ?—सम्यग्दृष्टिः सन्, ततश्च 'छिंद'त्ति छिन्द्यात्, सूत्रत्वात्तिङ्व्यत्ययः, एवं सर्वत्रानुच्यमानोऽप्ययं भावनीयः, 'गृद्धिं' विषयाभिकाङ्क्षां 'स्नेहं च' स्वजनादिषु प्रेम 'न' नैव 'काङ्क्षेद्' अभिलषेद्, अपेगम्यमानत्वात् काङ्क्षेदपि न, किं पुनः कुर्यादिति भावः । 'पूर्वसंस्तवं' पूर्वपरिचयमे-

मानदु खोत्पत्तय , अमुमेवार्थं व्यतिरेकेणाह—'मूढा' अज्ञानाऽऽकुलितमतय एव लुप्यन्ते बहुश संसारेऽनन्तक इति, काका वा व्यापारयेत, दृश्यन्ते हि यानपात्रिण इहैव मोहाद्वयालुप्यमाना , तथा च वृद्धा —जहा समुद्दे वाणिया दुवा- याहयजाणवत्ता दिसामूढा खणेण अतोजलगयपव्वयमासाएऊण भिन्नपोया महावीतिकल्लोलेहिं वुज्झमाणा कुम्मग मगराईहिं विलुप्पति, एव तेऽवि अविज्जा बहुसो मूढा सारीरमाणसेहिं महादुक्खेहिं विलुप्पन्तीति सूत्रार्थः । यतश्चैव ततो यत्कृत्य तदाह—

समिक्ख पडिए तम्हा, पास जाइपहे बहू । अप्पणा सच्चमेसेज्जा, मित्ति भूएहिं कप्पए ॥ २ ॥

व्याख्या—'समीक्ष्य' आलोच्य 'पण्डितो' हिताहितविवेकभाक् 'त(ज)म्ह'त्ति यस्मादेवमविद्यावन्तो लुप्यन्ते तस्मा-त्, पाठान्तरतश्च तस्मात्, समीक्ष्य मेधावी—मर्यादावर्ती, किं तत् समीक्ष्येत्याह—पाशा—अत्य तपारवश्यहेतव कलत्रा-दिसम्बन्धास्त एव तीव्रमोहोदयादिहेतुतया जातीनाम्—एकेन्द्रियादिजातीना पन्थान —तत्प्रापकत्वान्मार्गा पाशजा-तिपथा तान् 'बहून्' प्रभूतान् अविद्यावता विलुप्तिहेतून्, किमित्याह—'आत्मना' स्वय न तु परोपरोधादिना, सद्भ्यो —जीवादिभ्यो हित —सम्यग् रक्षणप्ररूपणादिभि सत्य —सयम सदागमो वा तमेषयेत्—गवेषयेत् , एषयश्च सत्य किं कुर्याद् इत्याह—'मैत्रीं' मित्रभाव 'भूतेषु' पृथिव्यादिषु जन्तुषु 'कल्पयेत् ' कुर्यात् , पठ्यते वा—'अत्तट्ठा सच्चमेसेज्जा'

१ यथा समुद्रे वणिजो दुर्वाताहतयानपात्रा दिग्मूढाः क्षणेन जलान्तर्गतपर्वतमासाद्य भिन्नपोता महावीचिकल्लोलैरुह्यमानाः कूर्ममकरा दिभिर्विलुप्यन्ते, एव तेऽप्यविद्यामूढा बहुशो शारीरमानसैर्महादु खै विलुप्यन्ते ।

व्याख्या—'अज्झत्थं'ति अध्यात्ममात्मनि यद्वर्तते, यदिवा अध्यात्मं–मनः तस्मिंस्तिष्ठत्यध्यात्मस्थं, सूत्रत्वाद्वर्णलोपः, तच्चेह प्रस्तावात् सुखादि 'सर्वतः' इष्टसंयोगानिष्टसंप्रयोगादिहेतुभ्यो, जातमिति गम्यते, 'सर्वं' निरवशेषं 'दृष्ट्वा' प्रियत्वादिस्वरूपेणावधार्य, तथा 'पाणे'त्ति चस्य गम्यमानत्वात् प्राणांश्च–प्राणिनश्च 'पियादए'त्ति आत्मवत् सुखप्रियत्वेन प्रिया दया–रक्षणं येषां तान् प्रियदयान्, प्रिय आत्मा येषां तान् प्रियात्मकान् वा, दृष्ट्वा इत्यत्रापि सम्बन्धनीयं, ततः किमित्याह—'न हन्यात्' नातिपातयेत्, उपलक्षणत्वान्नापि घातयेत् न वा घ्नन्तं समनुजानीयात्, प्राणिन इति जातावेकवचनं, पाठान्तरतश्च—प्राणिनां प्राणान्–इन्द्रियादीन्, कीदृशः सन्? इत्याह—भयं च उक्तस्वरूपं, वैरं च–प्रद्वेषः भयवैरमिति समाहारस्तस्मादुपरतो निवृत्तः सन्, यदिवा—अध्यात्मस्थशब्दस्याभिप्रेतपर्यायत्वेन रूढत्वादध्यात्मस्थं–यद्यस्याभिमतं, तच्च सुखमेव, 'सर्वत'इति सर्वाभ्यो दिग्भ्यः सर्वेभ्यो वा मनोऽभिमतशब्दादिभ्यो जातं सर्वं शारीरं मानसं च यथा तवेष्टं तथाऽन्येषामपि प्राणिनामित्युपस्कारः, 'दृष्ट्वा' अवधार्य, इहापि चस्य गम्यमानत्वात् प्राणान् प्राणप्राण्यभेदोपचारात् प्रियदयांश्च, दृष्ट्वेत्यत्रापि योज्यते, अन्यत् प्राग्वदिति सूत्रार्थः ॥ इत्थं प्राणातिपातलक्षणाश्रवनिरोधमभिधाय शेषाश्रवनिरोधमाह—

आयाणं नरयं दिस्स, नायइज्ज तणामवि । दोगुंछी अप्पणो पाते, दिन्नं भुंजेज्ज भोयणं ॥ ८ ॥

व्याख्या—आदीयत इत्यादानं–धनधान्यादि "कृत्यल्युटोऽन्यत्रापी"ति ( कृत्यल्युटो बहुलम् पा० ३-३-११३ )

कग्रामोपितोऽयमित्यादिक, यतो न कश्चिदिह परत्र वा त्राणाय स्वकर्मणा विलुप्यमानस्य धर्मं विनेति भाव इति सूत्रद्वयार्थ ॥ अमुमेवार्थं विशेषतोऽनूद्यास्यैव फलमाह—

गवास मणिकुंडल, पसवो दासपोरुस । सव्वमेय चइत्ता ण, कामरूवी भविस्ससि ॥ ५ ॥

व्याख्या—गावश्चाश्वाश्च गवाश्व, 'गवाश्वप्रभृतीनि चे'ति (पा० २–४–११) समाहार, तत्र गावो–वाहदोहोपलक्षिता अश्वा –तुरगा, पशुत्वेऽप्यनयो पृथगुपादान अत्यन्तोपयोगित्वेन प्राधान्यात्, तथा मणयश्च–मरकताद्य कुण्डलानि च–कर्णाभरणानि मणिकुण्डलम्, उपलक्षण चैतच्छेषालङ्काराणा स्वर्णादीना च, पश्यन्ति प्रसूयन्ते वा पशव –अजैडकाद्य, दासाश्च–गृहजाताद्य 'पोरुस'ति सूत्रत्वात् पुरुषाणा समूह इत्यर्थ, 'पुरुषाद्वधविकारसमूहे'त्यां[1]-दिना ढकि पौरुषेय च–पदात्यादिपुरुषसमूहो दासपौरुषेय, यद्वा 'दासपोरस'ति दासपुरुषाणा समूहो दासपौरुष, पुरुषाद् ढञ् न भवति, ग्रहणवता प्रातिपदिकेन तदन्तविधेरभावात्, 'सर्वं' निरवशेष 'एतद्' अनन्तरोक्त 'त्यक्त्वा' हित्वा, सयममनुपाल्येत्यभिप्राय, किमित्याह—'कामरूपी' अभिलषितरूपविकरणशक्तिमान् भविष्यसि, इहैव वैक्रियकरणाद्यनेकलब्धियोगात् परत्र च देवभावावाप्तेरिति सूत्रार्थ ॥ पुन सत्यस्वरूपमेव विशेषत आह—

थावर जगम चेव, धण धण्ण उवक्खर । पच्चमाणस्स कम्मेहिं, नाल दुक्खाउ मोयणे ॥ ६ ॥

अज्झत्थ सव्वओ स व, दिस्स पाणे पियायए । न हणे पाणिणो पाणे, भयवेराओ उवरए ॥ ७ ॥

---

१ पुरुषाद्वधविकारसमूहतेनकृतेषु इति भाष्यकारप्रयोगात् २ नैषा व्याख्याता

कम्मं पुरेकम्मं, सिया तत्थ ण कप्पइ । एयमट्ठं ण भुंजंति, णिग्गंथा गिहिभायणे ॥ १ ॥" इतिसूत्रार्थः ॥ एवं पञ्चाश्रवविरमणात्मके संयम उक्ते यथा परे विप्रतिपद्यन्ते तथा दर्शयितुमाह—

इहमेगे उ मन्नंति, अप्पच्चक्खाय पावगं । आयरियं विदित्ता णं, सव्वदुक्खा विमुच्चइ ॥ ९ ॥

व्याख्या—'इहे'त्यस्मिन् जगति मुक्तिमार्गविचारे वा 'एके' केचन कपिलादिमतानुसारिणः 'तुः' पुनरर्थे 'मन्यन्ते' अभ्युपगच्छन्ति, उपलक्षणत्वात्प्ररूपयन्ति च, यथा 'अप्रत्याख्याय' अनिराकृत्य 'पापकं' प्राणातिपातादिविरतिमकृत्वैव 'आयरियं'ति सूत्रत्वात् आराद्यातं सर्वकुयुक्तिभ्य इत्यार्यं—तत्त्वं तद् 'विदित्वा' ज्ञात्वा 'सर्वदुःखेभ्य' आध्यात्मिकाधिभौतिकाधिदैविकलक्षणेभ्यः स्वपरिभाषया शारीरमानसेभ्यो वा 'मुच्यते' पृथग् भवति, तथा चाह—"पञ्चविंशतितत्त्वज्ञो, यत्र तत्राश्रमे रतः । शिखी मुण्डी जटी वापि, मुच्यते नात्र संशयः ॥१॥" यद्वाऽऽचरणमाचरितं तत्तत्क्रियाकलापः, पाठान्तरतश्च—'आचारिकं' निजनिजाचारभवमनुष्ठानमेव, तद्विदित्वा—स्वसंवेदनतोऽनुभूय सर्वदुःखाद्विमुच्यते, एवं सर्वत्र ज्ञानमेव मुक्त्यङ्गं, न चैतच्चारु, न हि रोगिण इवौषधादिपरिज्ञानतो भावरोगेभ्यो ज्ञानावरणादिकर्मभ्यो महाव्रतात्मकपञ्चाङ्गोपलक्षितां क्रियामननुष्ठाय मुक्तिः ॥ ते चैवमनालोचयन्तो भवदुःखाकुलिता वाचालतयैवमात्मानं स्वस्थयन्ति, तथा चाह—

१ पश्चात्कर्म पुर कर्म स्यात्तत्र न कल्पते । एतदर्थं न भुञ्जते, निर्ग्रन्था गृहिभाजने ॥ १ ॥ २ अर्थतो युग्मरूपत्वान्नात्र सूत्रार्थ इति, एवमग्रेऽपि ।

कर्मणि ल्युट्, आर्षत्वादादानीयं वा, नरककारणत्वान्नरकं दृष्ट्वा, किमित्याह—'नाददीत' न गृह्णीत न स्वीकुर्यादिति-यावत्, 'तणामवि'त्ति तृणमपि, आस्तां रजतरूप्यादि, कथं तर्हि प्राणधारणमित्याह—'दोगुंछी'त्याद्यर्धं, जुगुप्सते आत्मानमाहारं विना धर्मधुराधरणाक्षममित्येवंशीलो जुगुप्सी, आत्मन इति आत्मसम्बन्धिनि पात्रे–भाजने प्राप्ते वा भोजनसमय इति शेषः, 'दत्तं' निसृष्टं, गृहस्थैरिति गम्यते, 'भुंजेज्ज'त्ति भुञ्जीत भोजनम्–आहारं, अनेनाहारस्यापि भावतोऽस्वीकरणमाह, जुगुप्सिशब्देन तदप्रतिबन्धदर्शनात्, ततश्च परिग्रहाश्रवनिरोध उक्तः, तदेवं 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यत' इति न्यायात् मृषावादादत्तादानमैथुनात्मकाश्रवत्रयनिरोध उक्तः, यद्वा 'सत्यमिच्छेदि'ति सत्यशब्देन साक्षात्संयममपि वदता मृषावादनिवृत्तिराक्षिप्ता, तद्द्वारेणापि तस्य सत्यत्वात्, आदानमित्यादिना तु साक्षाददत्तादानविरतिरुक्ता, आदानं हि ग्रहणमेव रूढं, तच्चादत्तस्येति गम्यते, तं 'नरकं' नरकहेतुं दृष्ट्वा नाददीत तृणमप्यदत्तमितीहापि गम्यते, 'गवास'मित्यादिना तु परिग्रहाश्रवनिरोधः, तन्निरोधाभिधानाच्च नापरिगृहीता स्त्री भुज्यत इतिकृत्वा मैथुनाश्रवनिरोधोऽप्युक्त एव। नन्वेवं स्वयं त्यक्तगवादिपरिग्रहस्य परकीयं चानाददानस्य कथं प्राणवृत्तिः?, इत्याह—जुगुप्स्यात्मनः पात्रे दत्तं भुञ्जीत भोजनमिति, पात्रग्रहणं तु व्याख्याद्वयेऽपि मा भूत् निष्परिग्रहतया पात्रस्याप्यग्रहणमिति कस्यचिद् व्यामोह इति ख्यापनार्थं, तदपरिग्रहे हि तथाविधलब्ध्याद्यभावेन पाणिभोक्तृत्वाभावाद्गृहिभाजन एव भोजनं भवेत्, तत्र च बहुदोषसम्भवः, तथा च शय्यम्भवाचार्यः—"पच्छा-

विषण्णा—विषादं गताः पापकर्म्मभिः—पापानुष्ठानैः यथा कथमेवमनुष्ठायिनो वयं भविष्याम इति, पठन्ति च—'विसन्ना पावकिच्चेहिं'ति तथैव, कुतस्त एवंविधा इत्याह—'बाला' रागद्वेषाकुलिताः पण्डितमात्मानं मन्यन्ते इत्येवंशीलाः पण्डितमानिनः, ये हि बालाः पण्डितमानिनश्च न स्युस्ते स्वयं सम्यगजानानाः परं पृच्छेयुः तदुपदेशतश्च तानि परिहरेयुः न तु विषण्णा एवासीरन्, ये तु बालाः पण्डितमानिनश्च ते स्वयमजानाना अपि जानानमन्यमात्मन्यभिमानतोऽनुपासमाना एवंविधा एव भवन्तीति सूत्रार्थः ॥ साम्प्रतं सामान्येनैव मुक्तिपथपरिपन्थिनां दोषदर्शनायाह—

जे केइ सरीरे सत्ता, वण्णे रूवे य सव्वसो । मणसा कायवक्केणं, सव्वे ते दुक्खसंभवा ॥ १२ ॥

व्याख्या—ये केचित् 'शरीरे' शरीरविषये 'सक्ता' बद्धाग्रहाः, क ? इत्याह—'वर्णे' सुस्निग्धगौरत्वादिके 'रूपे च' सुसंस्थानतायां, चशब्दात् स्पर्शादिषु, वस्त्राद्यभिष्वङ्गोपलक्षणं चैतत्, 'सव्वसो'त्ति सूत्रत्वात् सर्वथा—सर्वैः स्वयंकरणकारणादिभिः प्रकारैः, मनसा कथं वर्णादिमन्तो वयं भविष्याम ? इत्यभिसन्धिना, वचसा रसायनादिप्रश्नात्मकेन, चशब्दात् कायेन च रसायनाद्युपयोगेन, एवेति पूरणे, पठ्यते च—'कायवक्केणं'ति कायश्च—शरीरं वाक्यं च—वचनं कायवाक्यं तेन, 'सर्वे' निरवशेषा गुरुपादुकातो मुक्तिः नास्ति वा मुक्तिरित्यादिवादिनोऽपि न केवलमार्यादि

भणता अकरिता य, बधमोक्खपइण्णिणो । वायाविरियमेत्तेण, समासासेंति अप्पग ॥ १० ॥

व्याख्या—'भण त ' प्रतिपादय त , प्रक्रमात् ज्ञानमेव मुक्त्यङ्गमिति, 'अकुर्व तश्च' मुक्त्युपायमनुष्ठान, वन्धमोक्षौ–उक्तरूपौ तयो प्रतिज्ञा–अभ्युपगम तद्व त , सूत्रत्वाच्चैना निर्देश, अस्ति ब धोऽस्ति च मोक्ष इत्येववादिन एव केवल, न तु तथाऽनुष्ठायिन , वाचि वीर्यम्—आत्मशक्तिर्वाग्वीर्य वाचालतेति यावत् , तदेवानुष्ठानशून्य वाग्वीर्यमात्र तेन 'समाश्वासय न्ति' विज्ञानादेव वय मुक्तिगामिन इति स्वास्थ्य प्रापय न्ति, कम् ?–आत्मानमिति सूत्रार्थ ॥ यथा चैतन्न चारु तथा स्वत एवाह—

न चित्ता तायए भासा, कओ विज्जाणुसासण ? । विसण्णा पावकम्मेहिं, याला पडियमाणिणो ॥ ११ ॥

व्याख्या—'न' नैव 'चित्रा' प्राकृतसस्कृतादिरूपा आर्यविपय ज्ञानमेव मुक्त्यङ्गमित्यादिका वा 'त्रायते' रक्षति, पापेभ्य इति गम्यते, केत्याह—भाष्यत इति भाषा–वचनात्मिका, स्यादेतत्–अचिन्त्यो हि मणिमन्त्रमहौपधीना प्रभाव इत्यघोरादिमन्त्रात्मिका वाक् त्राणाय भविष्यतीत्याह, कुतो ? विदन्त्यनया तत्त्वमिति विद्या–विचित्रमन्त्रात्मिका तस्या अनुशासन–शिक्षण विद्यानुशासन त्रायते पापाद्भयाद्वा ?, न कुतोऽपि, तन्मात्रादेव मुक्तौ शेषानुष्ठानवैयर्थ्यप्रसङ्गादिति भाव । अत एव ये तदपि त्राणायेति वदन्ति ते यादृशास्तदेवाह—विविधम्–अनेकप्रकार सन्नामग्ना विषण्णा , केषु ?–'पावकम्मेहिं'ति पापकर्मसु पापहेतुषु हिंसाद्यनुष्ठानेषु, सतत तत्कारितयेति भाव , यद्वा

बहिया उड्ढमायाय, नावकंखे कयाइवि । पुव्वकम्मक्खयट्ठाए, इमं देहमुदाहरे ॥ १४ ॥

व्याख्या—'बहिय'त्ति बहिः, कोऽर्थः ?—बहिर्भूतं भवादिति गम्यते, ऊर्ध्वं सर्वोपरिस्थितम् अर्थान्मोक्षमादाय—गृहीत्वा मयैतदर्थं यतितव्यमिति निश्चित्य बुद्ध्या सम्प्रधार्येतियावत्, अथवा बहिः—आत्मनो बहिर्भूतं धनधान्यादि ऊर्ध्वम्—अपवर्गमादाय—गृहीत्वा, हेयत्वेनोपादेयतया च ज्ञात्वेतियावत्, 'नावकाङ्क्षेत्' विषयादिकं नाभिलषेत्, न क्वचिदभिष्वङ्गं कुर्वीतेति तात्पर्यं, 'कदाचिदपि' उपसर्गपरीषहाकुलिततायामपि, आस्तामन्यदा, एवं सति शरीरधारणमप्ययुक्तमेव, एतद्धारणे तस्याकाङ्क्षासम्भवात्, तस्यापि चात्मनो बहिर्भूतत्वात् अत आह—पुव्वेत्याद्यर्द्धं, पूर्वं—पूर्वकालभावि तच्च तत्कर्म च पूर्वकर्म तस्य क्षयः तदर्थमिमं—प्रत्यक्षं 'देहं' शरीरं 'समुद्धरेद्' उचिताहारादिभोगतः परिपालयेत्, तद्धारणस्य विशुद्धिहेतुत्वात्, तत्पाते हि भवान्तरोत्पत्तावविरतिरपि स्यात्, उक्तं च—"सव्वत्थ संजमं संजमातो अप्पाणमेव रक्खेज्जा । मुच्चति अतिवायातो पुणो विसोही ण याविरती ॥ १ ॥" ततः शरीरोद्धरणमपि निरभिष्वङ्गतयैव विधेयमिति सूत्रार्थः ॥ यथा च देहपालनेऽपि नाभिष्वङ्गसम्भवः तथा दर्शयितुमाह—

विविच्च कम्मणो हेउं, कालकंखी परिव्वए । मायं पिंडस्स पाणस्स, कडं लद्धूण भक्खए ॥ १५ ॥

व्याख्या—'विविच्य' पृथक्कृत्य 'कर्मणो' ज्ञानावरणादेः 'हेतुम्' उपादानकारणं मिथ्यात्वाविरत्यादि, कालम्—

१ सर्वत्र संयमं संयमादात्मानमेव रक्षेत् । मुच्यतेऽतिपातात् पुनर्विशुद्धिर्न चाविरतिः ॥ १ ॥

विदित्वा दु खाद्विमुक्तिरितिवादिन एवेति भाव , 'ते' इति ये अप्रत्याख्याय पापमित्यादिवादिनो 'दु खसम्भवा ' इहान्यजन्मनि च दु खभाजन इति सूत्रार्थ ॥ यथा चैते दु खभाजन तथा दर्शयन्नुपदेशसर्वस्वमाह—

आवण्णा दीहमद्धाण, ससारमि अणतए । तम्हा सव्वदिस पस्स, अप्पमत्तो परिव्वए ॥ १३ ॥

व्याख्या—'आपन्ना ' प्राप्ता 'दीर्घम्' अनाद्यनन्तमध्वानमिवाध्वानम्—उत्पत्तिप्रलयरूप, अन्या यभवभ्रमणेनैकत्रावस्थितेरभावात् , क ?—'ससारे' नरकादिगतिचतुष्टयात्मके 'अनन्तके' अविद्यमाना ते, अपर्यवसितानन्तकायिकाद्युपलक्षितत्वेनेति गर्भ , 'तम्ह'त्ति यस्मादेवमेते मुक्तिपरिपन्थिनो दु खसम्भवा तस्मात् 'सव्वदिस'ति सर्वदिश –प्रस्तावादशेषभावदिश , ताश्च पृथिव्याद्यष्टादशभेदा , उक्त च—'पुढवि जलजलणवाया मूला खधग्गपोरबीया य । बितिचउपणिदितिरिया य णारया देवसंघाया ॥१॥ सम्मुच्छिमकम्माकम्मभूमिगणरा तहतरद्दीवा । भावदिसा दिस्सइ ज ससारी णियममेयाहि ॥ २ ॥" 'पश्यन् ' अवलोकयन् 'अप्रमत्त ' प्रमादविरहित , यथैपामेकेन्द्रियादीना विराधना न भवति तथा 'परिव्रजे ' सयमाध्वनि याया , यद्वा—ससारापन्नाना सर्वदिश पश्य, दृष्ट्वा चाप्रमत्तो—निद्रादिप्रमादपरिहारतो यथैतासु न पर्यटसि तथा परिव्रजे सुशिष्येति सूत्रार्थ ॥ यथा चाप्रमत्तेन परिव्रजितव्यं तथा दर्शयितुमाह—

१ पृथ्वी जलज्वलनवाता मूलानि स्कन्धाग्रपर्वबीजानि च । द्वित्रिचतुष्पञ्चेन्द्रियतिर्यञ्चश्च नारका देवसघाता ॥१॥ समूर्च्छिमकर्माकर्मभूमिगनरास्तथाऽऽन्तरद्वीपा । भावदिश दिश्यते यत्ससारी नियमादेताभि ॥ २ ॥

पतन्तं त्रायत इति पत्रं—पक्षसञ्चयं 'समादाय' गृहीत्वा व्रजति, एवं भिक्षुरपि 'पत्ते'त्ति पात्रमुपलक्षणत्वाच्छेपोपकरणं चादाय परिव्रजेदिति सम्बन्धः, कीदृग् ?–'निरपेक्षो' निरभिलापः, तस्य वा विनाशादौ शोकाकरणतो निरपेक्षो–निरभिष्वङ्गः, तथा च प्रतिदिनमसंयमपलिमन्थभीरुतया पात्राद्युपकरणसन्निधिकरणेऽपि न दोप इत्यर्थः, अथवा यदि लेपमात्रयाऽपि सन्निधिं न कुर्वीत कथमागामिनि दिने भोक्तव्यमित्याह—पक्षीव निरपेक्षः, पात्रं पतद्ग्रहादिभाजनमर्थात्तन्निर्योगं च समादाय व्रजेद्–भिक्षार्थं पर्यटेद्, इदमुक्तं भवति–मधुकरवृत्त्या हि तस्य निर्वहणं, तत्किं तस्य सन्निधिना ? इति सूत्रार्थः ॥ सम्प्रति यदुक्तं 'कृतं लब्ध्वा भक्षयेदि'ति, तत्र कथं तल्लाभ इति तदुपायमाह–यद्वा–यदुक्तं 'निरपेक्षः परिव्रजेदि'ति तदभिव्यक्तीकर्तुमाह—

एसणासमिओ लज्जू, गामे अनियओ चरे । अप्पमत्तो पमत्तेहिं, पिंडवातं गवेसए ॥ १७ ॥

व्याख्या—एषणायाम्–उत्पादनग्रहणग्रासविपयायां सम्यगितः–स्थितः समितः एषणासमितः, प्राधान्याच्च इहैपणाया एवोपादानं, प्रायस्तद्भावे ईर्याभापादिसमितिसम्भव इति ज्ञापनार्थं वा, अनेन निरपेक्षत्वमुक्तं, 'लज्जू'त्ति लज्जा–संयमस्तदुपयोगानन्यतया यतिरपि तथोक्तः, आर्पत्वाच्चैवं निर्देशः, ग्रामे उपलक्षणत्वान्नगरादौ च 'अनियतः' अनियतवृत्तिः 'चरेद्' विहरेत्, अनेनापि निरपेक्षतैवोक्ता । चरंश्च किं कुर्यादित्याह—'अप्रमत्तः' प्रमादरहितः सन् 'पमत्तेहिं'ति प्रमत्तेभ्यो गृहस्थेभ्यः, ते हि विपयादिप्रमादसेवनात् प्रमत्ता उच्यन्ते, 'पिण्डपातं' भिक्षां 'गवेषयेद्'

अनुष्ठानप्रमाण काल्लत इलोयजीए फालफाडी, 'परिभने'रिति पूर्ववत्, पठन्ति च 'विगिंग कम्मुणो हेउ'न्ति अत्र च 'वेविविध' परिलनेत्युपदेशान्तरतया व्याख्येय, मात्रा यावता संयमनिर्वाहमात्रतो, नात्वेति गम्यते, कस्य ?–'पिण्डस्य' ओदनादेरन्नस्य 'पानस्य च' आयामादे, साधसाधानुपादान च यते प्रायस्तत्परिभोगासम्भवात्, कृतम्–आत्मार्थमेव निर्वर्तित, गृहिभिरिति गम्यते, प्रक्रमात्पिण्डादिकमेव 'लब्ध्वा' प्राप्य 'भक्षयेत्' अभ्यवहरेदिति सूत्रार्थ ॥ कदाचित्सुकोप धारयतोऽभिष्वङ्गसम्भव स्यादित्याह–

सन्निहिं च न कुव्विज्जा, लेवमायाए संजए। पक्खी पत्त समादाय, निरवेक्खो परिव्वए ॥ १९ ॥

व्याख्या–सम्यग्–प्रकर्षेण निधीयते–निक्षिप्यतेऽनेनाऽऽत्मा नरकादिष्विति सन्निधि –प्रातरिद भविष्यतीत्यभिसन्धितोऽतिरिक्ताशनादिस्थापन त च न कुर्वीत, चशब्द पूर्वापेक्षया समुच्चये, 'लेवमायाए'त्ति लेप –शकटाक्षादिनिष्पादित पात्रगत परिगृह्यते, तस्य मात्रा–मर्यादा, मात्राशब्दस्य मर्यादावाचित्वेनापि रूढत्वात्, यथोक्तम्–"ईषदर्थक्रियायोगे, मर्यादाया परिच्छदे। परिमाणे धने चेति, मात्राशब्द प्रकीर्तित ॥१॥" लेपमात्रतया, किमुक्त भवति ?–लेपमेक मर्यादीकृत्य न स्वल्पमप्यन्यत् सन्निदधीत, यद्वा परिमाणार्थोऽय मात्राशब्द, लक्षणे तृतीया, ततोऽयमर्थ –लेपमात्रयेति यावता पात्रमुपलिप्यते तावत्परिमाणमपि सन्निधि न कुर्वीत, आस्ता प्रभूतमित्यभिप्राय, 'संयतो' यति, किमित्येव पात्राद्युपकरणसन्निधिरपि न कर्तव्य इत्याह–'पक्खि'त्ति पक्षीव पक्षी, यथा पक्षी

रक्षत्रियः स चेह प्रस्तावात् सिद्धार्थः तस्य पुत्रो ज्ञातपुत्रः—वर्तमानतीर्थाधिपतिर्महावीर इतियावत् 'भगवान्' समग्रैश्वर्यादिमान्, 'वेसालीय'त्ति विशालाः—शिष्याः तीर्थं यशःप्रभृतयो वा गुणा विद्यन्ते यस्येति विशालिकः "इनि ठना" (अत इनि ठनौ पा० ५-२-११५) विति ठन्, यद्वा विशालेभ्यः—उक्तस्वरूपेभ्यो हित इति हितार्थे ठन्प्रत्ययः (तस्मै हितम् पा० ५-१-५), ततश्च विशालीयः 'वियाहिए'त्ति व्याख्याता सदेवमनुजासुरायां पर्षदि विशेषेणानन्यसाधारणात्मकेनाख्याता—कथयिता, केचित्त्वधीयते—'एवं से उदाहु अरिहा पासे पुरिसादाणीए भगवं वेसालीए बुद्धे परिणिव्वुए'त्ति स्पष्टमेव, नवरमर्हन्निति सामान्योक्तावपि प्रक्रमात् महावीरः, पश्यति समस्तभावान् केवलालोकेनावलोकत इति पश्यः, तथा पुरुषश्चासौ पुरुपाकारवर्तितया आदानीयश्च आदेयवाक्यतया पुरुषादानीयः, पुरुपविशेपणं तु पुरुप एव प्रायस्तीर्थंकर इति ख्यापनार्थं, पुरुषैर्वाऽऽदानीयो ज्ञानादिगुणतया पुरुषादानीय इति सूत्रार्थः ॥ इतिः परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः, सम्प्रति नयाः, ते च पूर्ववद्वाच्याः । इति श्रीशान्त्याचार्यविरचितायां शिष्यहितायामुत्तराध्ययनटीकायां पष्ठमध्ययनं समाप्तमिति ॥ ॥ ॥ ॥ ॥

॥ इति श्रीशान्त्याचार्यीयटीकायां श्रीक्षुल्लकनिर्ग्रन्थीयं पष्ठमध्ययनं समाप्तम् ॥

अन्वेपयेदिति सूत्रार्थ ॥ इत्थं प्रसक्तानुप्रसक्त्या सयमखरूपमुक्त, तदुक्तौ च निर्ग्रन्थस्वरूप, सम्प्रत्यत्रैवादरोत्पादनार्थमाह—

एव से उयाहु अणुत्तरनाणी अणुत्तरदसी अणुत्तरनाणदसणधरे ।
अरहा णायपुत्ते भयव वेसालीए वियाहिए ॥ १९ ॥ त्तिबेमि ॥

व्याख्या—'एवम्' अमुना प्रकारेण 'से' इति भगवान् 'उदाहु'त्ति उदाहृतवान् 'अनुत्तरज्ञानी' सर्वोत्कृष्टज्ञानवान् । ननु चानुत्तरज्ञानीति मत्वर्थीयेन न भवितव्य, बहुव्रीहिणैव तदर्थस्योक्तत्वात्, सत्यम्, अनुत्तरज्ञानशब्दोऽय गौरखरशब्दवत् सनाप्रकार एव, केवलज्ञानवाचकत्वात् अस्य, ततो गौरखरवदरण्यमित्यादिवन्न दोप, नास्योत्तरमस्तीत्यनुत्तर तथा पश्यतीत्यनुत्तरदर्शी, सामान्यविशेपग्राहितया च ज्ञानदर्शनयोर्भेद, यत उक्तम्—"जं सामण्णग्गहण दसणमेय विसेसिय नाण"[1]त्ति, अनुत्तरे ज्ञानदर्शने युगपदुपयोगाभावेऽपि लब्धिरूपतया धारयतीत्यनुत्तरज्ञानदर्शनधर । ननु प्रागुक्ताभ्या विशेपणाभ्यामस्यार्थस्योक्तत्वात् कथ न पौनरुक्त्यम् ?, उच्यते, अस्यान्याभिप्रायत्वात्, अत्र हि अनुत्तरज्ञान्यनुत्तरदर्शीति भेदाभिधानेन ज्ञानदर्शनयोर्भिन्नकालमाह, ततश्च मा भूदुपयोगवल्लब्धिद्वयमपि भिन्नकालभावीति व्यामोह इत्युपदिश्यते ज्ञानदर्शनधर, अर्हति देवादिभ्य पूजामित्यर्हन्, स चार्थात्तीर्थकृत्, ज्ञात—उदा-

१ यत्सामान्यग्रहण दर्शनमेतत् विशेपित ज्ञानम् ॥ १ ॥

भिन्नः तद्व्यतिरिक्तः, चः समुच्चये, 'स' तद्व्यतिरिक्तः पुनः 'त्रिविधः' त्रिभेदः, त्रैविध्यमेवाह—एकस्मिन् भवे तस्मिन्नेवातिक्रान्ते भावी एकभविको—योऽनन्तर एव भवे उरभ्रतयोत्पत्स्यते, तथा स एवोरभ्रायुर्बन्धानन्तरं बद्धमायुरनेनेति बद्धायुष्क उच्यते, तृतीयमाह—'अभिमुहतो नामगोए य'त्ति आर्षत्वादभिमुखनामगोत्रश्च, तत्राभिमुखे—सम्मुखे अन्तर्मुहूर्तानन्तरभावितया नामगोत्रे उरभ्रसम्बन्धिनी यस्य स तथोक्तः, अन्तर्मुहूर्तानन्तरमेवोरभ्रभवभावीति गाथार्थः ॥ भावोरभ्रमध्ययननामनिबन्धनं चाह—

उरभाउणामगोयं वेयंतो भावओ उ ओरब्भो । तत्तो समुट्ठियमिणं उरब्भिज्जन्ति अज्झयणं ॥२४६॥

व्याख्या—उरभ्र—ऊरणकः तस्यायुश्च नाम च गोत्रं चोरभ्रायुर्नामगोत्रं, यदुदयादुरभ्रो भवति, 'वेदयन्' अनुभवन् 'भावतो' भावमाश्रित्योरभ्रः, तुशब्दः पर्यायास्तिकमतमेतदिति विशेषणार्थः, 'ततो' भावोरभ्राद् दृष्टान्ततयेहाभिधेयात्समुत्थितम्—उत्पन्नमिदमिति प्रस्तुतं, यस्मादिति गम्यते, 'उरब्भिज्जं'ति उरभ्रीयं ग्रहादित्वाच्छैषिकठप्रत्ययः 'इती'ति तस्माद् अध्ययनं प्रागुक्तनिरुक्तमुच्यत इति शेष इति गाथार्थः ॥ उरभ्रस्यैव चेह प्रथममुच्यमानत्वाद्बहुवक्तव्यत्वाच्चेत्थमुक्तम्, अन्यथा हि काकिण्यादयोऽपि दृष्टान्ता इहाभिधीयन्त एव, तथा चाह निर्युक्तिकृत्—

ओरब्भे अ कागिणी अंबए अ ववहार सागरे चेव । पंचेए दिट्ठंता उरब्भिज्जंमि अज्झयणे ॥ २४७ ॥

॥ व्यारयात क्षुल्लकनिर्ग्रन्थीय षष्ठमध्ययन, साम्प्रत सप्तममारभ्यते, अस्य चायमभिसम्बन्ध -इहानन्तराध्ययने निर्ग्रन्थत्वमुक्त, तच्च रसगृद्धिपरिहारादेव जायते, स च विपक्षेऽपायदर्शनात्, तच्च दृष्टान्तोपन्यासद्वारेणैव परिस्फुट भवतीति रसगृद्धिदोपदर्शकोरभ्रादिदृष्टान्तप्रतिपादकमिदमध्ययनमारभ्यते, इत्यनेनाभिसम्बन्धेनायातस्याध्ययन-स्योपक्रमादिद्वारचतुष्टयमुपवर्ण्य तावद्यावन्नामनिष्पन्ननिक्षेपे उरभ्रीयमिति नाम, अत उरभ्रनिक्षेपमाह—

निक्खेवो उ उरब्भे चउव्विहो दुविहो य होइ दव्वमि । आगमनोआगमओ नोआगमओ अ सो तिविहो ॥

व्यारया—'निक्षेप' न्यास, तु पूरणे, 'उरभ्रे' उरभ्रविषय 'चतुर्विध' चतुष्प्रकार, नामस्थापनाद्रव्यभावभेदात्, तत्र नामस्थापने क्षुण्णे एव इति द्रव्योरभ्रमाह—द्विविधो भवति 'द्रव्य' इति द्रव्यविषय, आगमनोआगमत, तत्रागमत उरभ्रशब्दार्थज्ञ तत्र चानुपयुक्त, नोआगमत पुन, चस्य पुनरर्थत्वात्, 'स' इति द्रव्योरभ्र 'त्रिविध' त्रिभेद इति गाथार्थ ॥ त्रैविध्यमेवाह—

जाणगसरीरभविए तव्वइरित्ते अ सो पुणो तिविहो । एगभविअ बद्धाऊ अभिमुहओ नामगोए अ ॥२४५॥

व्याख्या—ज्ञशरीरोरभ्र उरभ्रशब्दार्थज्ञस्य सिद्धशिलातलगत शरीरमुच्यते, भव्यशरीरोरभ्रस्तु यस्तावदुरभ्रशब्दार्थं न जानाति कालान्तरे च ज्ञास्यति तस्य यच्छरीर, 'तद्व्यतिरिक्तश्च' ताभ्या—ज्ञशरीरभव्यशरीरोरभाभ्या व्यतिरिक्तो—

व्याख्या—'यथे'त्युदाहरणोपन्यासे, आदिश्यते—आज्ञाप्यते विविधव्यापारेषु परिजनोऽस्मिन्नायात इत्यादेशः—अभ्यर्हितः प्राघुणकस्तं 'समुद्दिश्य' आश्रित्य यथाऽसौ समेष्यति समागतश्चैनं भोक्ष्यत इति 'कश्चित्' परलोकापायनिरपेक्षः 'पोषयेत्' पुष्टं कुर्यात् 'एलकम्' ऊरणकं, कथमित्याह—'ओदनं' भक्तं, तद्योग्यशेषान्नोपलक्षणमेतत्, 'यवसं' मुद्गमाषादि 'दद्यात्' तदग्रतो ढौकयेत्, तत एव पोषयेत्, पुनर्वचनमादरख्यापनाय, अपिः सम्भावने, सम्भाव्यत एवैवंविधः कोऽपि गुरुकर्मेति, 'स्वकाङ्गणे' स्वकीयगृहाङ्गणे, अन्यत्र नियुक्तकाः कदाचिन्नौदनादि दास्यन्तीति स्वकाङ्गण इत्युक्तं, यदि वा 'पोसेज्जा विसयंगणे'त्ति विशन्त्यस्मिन् विषयो—गृहं तस्याङ्गणं विषयाङ्गणं तस्मिन्, अथवा विषयं—रसलक्षणं वचनव्यत्ययाद् विषयान्वा गणयन्—संप्रधारयन् धर्मनिरपेक्ष इति भावः, इहोदाहरणं सम्प्रदायादवसेयं, जहेगो ऊरणगो पाहुणयणिमित्तं पोसिज्जति, सो पीणियसरीरो सुण्हातो हलिद्दादिकयंगरागो कयकण्णचूलतो कुमारगा य तं नाणाविहेहिं कीलाविसेसेहिं कीलावेंति, तं च वच्छगो एवं लालिज्जमाणं दट्ठूण माऊए णेहेण य गोवियं दोहएण य तयणुकंपाए मुक्कमवि खीरं ण पिवति रोसेणं, ताए पुच्छिओ भणति—अम्मो ! एस णंदियगो सव्वेहिं

१ यथैक ऊरणकः प्राघूर्णकनिमित्तं पोष्यते, स पीनशरीरः सुस्नातो हरिद्रादिकृताङ्गरागः कृतकर्णचूलकः कुमाराश्च तं नानाविधैः क्रीडाविशेषैः क्रीडयन्ति, तं च वत्स एवं लाल्यमानं दृष्ट्वा मात्रा स्नेहेनैव गोपितं दोहकेन च तदनुकम्पया मुक्तमपि क्षीरं न पिबति रोषेण, तया पृष्टो भणति—अम्ब ! एष नन्दितकः सर्वे-

व्याख्या—'उरब्भ' उक्तरूप 'काकिणि' विंशतिकपर्दका 'उरभ्भे य'त्ति चशब्दस्य भिन्नक्रमत्वात् काकिणिश्च 'अंबए य'त्ति आम्रक च–आम्रफल, व्यवहारश्च–क्रयविक्रयरूपो वणिग्धर्म, चस्य गम्यमानत्वात्, सागरश्च–समुद्र, च सर्वत्र समुच्चये, एवोऽवधारणे, भिन्नक्रमश्चैव योज्यते–पञ्चैवैते न तु न्यूनाधिका 'दृष्टान्ता' उदाहरणानि 'उरभ्रीये' उरभ्रीयनाम्न्यध्ययन इति गाथार्थ ॥ सम्प्रति यदर्थसाधर्म्यादुरभ्रस्य दृष्टान्तता तदुपदर्शनायाह—

आरभें रसगिद्धी दुग्गतिगमण च पच्चवाओ य। उवमा कया उरब्भे उरब्भिज्जस्स निज्जुत्ती ॥ २४८ ॥

व्याख्या—आरम्भण आरम्भ –पृथिव्याद्युपमर्द, रसेषु–मधुरादिषु गृद्धि –अभिकाङ्क्षा रसगृद्धि, दुर्गतिगमन च–नरकतिर्यगादिषु च पर्यटन, प्रत्यपायश्चेहैव शिरश्छेदादि, वक्ष्यति हि "सिर छेत्तूण भुज्जति'त्ति शिरश्छेदादार्तरौद्रोपगतस्य दुर्गतिपाते दु खानुभवनादिरुपमा–सादृश्योपदर्शनरूपा, प्रक्रमादेभिरेवारम्भादिभिरर्थै 'कृता' विहिता 'उरब्भे' उरभ्रविषया, इदमुक्त भवति–साम्प्रतेक्षिणो हि विषयामिषगृध्नवस्तास्तानारम्भानारभन्ते, आरभ्य चोपचितकर्म्मभि कालसौकरिकादिवदिहैव दु खमुपलभ्य नरकादिका कुगतिमाप्नुवन्तीत्युरभ्रोदाहरणता इहोपदर्श्यते, काकिण्यादिसाधर्म्यदृष्टान्तोपलक्षण चैतद्, 'उरभ्रीयस्य निर्युक्ति'रिति निगमनमेतदिति गाथार्थ ॥ इत्यवसितो नामनिष्पन्ननिक्षेप, सम्प्रति सूत्रालापकनिक्षेपावसर, स च सूत्रे सति भवतीत्यत सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

जहाऽऽएस समुद्दिस्स, कोइ पोसेज्ज एलय। ओयण जवस देज्जा, पोसेज्जावि सयगणे ॥ १ ॥

समर्थ इतियावत् 'जातमेदा' उपचितचतुर्थधातुः अत एव 'महोदरः' बृहज्जठरः 'प्रीणितः' तर्पितः, यथासमयमुपढौकिताहारत्वात्, एभिरेव च हेतुभिः 'विपुले' विशाले 'देहे' शरीरे सति "यस्य च भावेन भावलक्षण"मिति (पा० २-३-३७) सप्तमी, किमित्याह—आदेशं 'प्रतिकाङ्क्षति' प्रतिपालयति, पाठान्तरतः 'परिकाङ्क्षति' इच्छति, न चास्य तत्त्वतः प्रतिपालनमिच्छा वा सम्भवति, अतः प्रतिकाङ्क्षतीव प्रतिकाङ्क्षतीत्युपमार्थोऽवगन्तव्यः, एवं परिकाङ्क्षतीत्यत्रापि, इति सूत्रार्थः ॥ स किमेवं चिरस्थायी स्यादित्याह—

जाव न एज्जति आएसो, ताव जीवति सेऽदुही । अह पत्तंमि आएसे, सीसं छेत्तूण भुज्जति ॥ ३ ॥

व्याख्या—'यावदि'ति कालावधारणे 'नेति' नायाति, कोऽसौ ?—आदेशः, तावत् नोत्तरकालं 'जीवति' प्राणान् धारयति, 'सेऽदुहि'त्ति अकारप्रश्लेषात् स इत्युरभ्रोऽदुःखी सुखी सन्, अथवा वध्यमण्डनमिवास्यौदनदानादिनीति तत्त्वतो दुःखितैवास्येति दुःखी, 'अह पत्तंमि आएसे' अथानन्तरं 'प्राप्ते' आगते आदेशे श्रिता अस्मिन् प्राणा इति शिरः तच्छित्त्वा—द्विधा विधाय भुज्यते, तेनैव स्वामिना प्राघुणकसहितेनेति शेषः । सम्प्रति सम्प्रदायशेषमनुस्त्रियते—[1]ततो सो वच्छगो तं नंदियगं पाहुणगेसु आगएसु वधिज्जमाणं दट्ठुं तिसितोऽवि भएणं माऊए थणं णाभि-



---

१ ततः स वत्सकः नन्दितकं प्राघूर्णकेष्वागतेषु वध्य (हन्य)मानं दृष्ट्वा तृषितोऽपि भयेन मातुः स्तन्यं नाभि-

एएहि अम्हसामिसालेहि अद्देहि जवसजोगासणेहि तदुवओगेहि च अलकारविसेसेहि अलंकारितो पुत्त इव परिपालिज्जति, अह तु मदभग्गो सुकाणि तणाणि काहेवि लभामि, ताणिवि ण पज्जत्तगाणि, एव पाणियपि, ण य म कोऽवि लालेति । ताए भण्णति–पुत्त !

आउरचिन्नाइ एयाइ, जाइ चरइ नदिओ । सुक्कत्तणेहि लाढाहि, एय दीहाउलक्खण ॥ २४९ ॥

जहा आउरो मरिउकामो ज मग्गति पत्थ वा अपत्थ वा त दिज्जति से, एव सो णदितो मारिज्जिहिति जदा तदा पेच्छिहिसि, इति सूत्रार्थं ॥

ततोऽसौ कीदृशो जात ? किं च कुरुते ? इत्याह–

तओ स पुट्ठे परि वूढे, जायमेदे महोयरे । पीणिए विपुले देहे, आदेस परिकखए ॥ २ ॥

व्याख्या—'तत'इत्योदनादिदानाद्धेतौ पञ्चमी, 'स' इत्युरभ्र 'पुष्ट' उपचितमासतया पुष्टिभाक् 'परिवृढ' प्रभु

१ रेतैरस्मत्स्वामिश्यालैराढ्यैर्यवसयोग्याशनैस्तदुपयोगैश्चालङ्कारविशेषैरलङ्कृत पुत्र इव परिपाल्यते, अह तु मन्दभाग्य शुष्काणि तृणानि कदापि लभे, तान्यपि न पर्याप्तानि, एव पानीयमपि, न च मा कोऽपि लालयति । तया भण्यते–पुत्र ! आतुरचिह्नानि एतानि, यानि चरति नन्दिक । शुष्कतृणैर्यापयैतत् दीर्घायुर्लक्षणम् ॥ १ ॥ यथा आतुरो मर्तुकामो य मार्गयति पथ्यमपथ्य वा तद्दीयते तस्मै, एव स नन्दिको मारयिष्यते यदा तदा प्रेक्षयिष्ये

ऽधर्म्मगुणयोगादधर्मोऽतिशयेनाधर्मोऽधर्मिष्ठः, ईहत इवेहते वाञ्छतीव तदनुकूलचारितया, किं तत् ?–'नरकायुष्कं' नरकजीवितमिति सूत्रार्थः ॥ उक्तमेवार्थं प्रपञ्चयितुमाह—

हिंसे बाले मुसावाई, अद्धाणंमि विलोवए। अण्णदत्तहरे तेणे, माई कण्हुहरे सढे ॥ ५ ॥
इत्थीविसयगिद्धे य, महारंभपरिग्गहे। भुंजमाणे सुरं मंसं, परिवूढे परंदमे ॥ ६ ॥
अयकक्करभोई य, तुंदिले चिय लोहिए। आउयं नरए कंखे, जहाऽऽएसं व एलए ॥ ७ ॥

व्याख्या—हिनस्तीत्येवंशीलो हिंस्रः–स्वभावत एव प्राणव्यपरोपणकृत् 'बालः' अज्ञः, पाठान्तरश्च कुप्यति–हेतुमन्तरेणापि कुप्यतीत्येवंधर्मा क्रोधी, मृषा–अलीकं वदति–प्रतिपादयतीत्येवंशीलो मृषावादी, 'अध्वनि' मार्गे 'विलुम्पति' मुष्णातीति विलोपकः, यः पथि गच्छतो जनान् सर्वस्वहरणतो लुण्टति, 'अण्णदत्तहरि'त्ति अन्येभ्यो दत्तं–राजादिना वितीर्णं हरति अपान्तराल एवाच्छिनत्त्यदत्तहरः, अन्यैर्वाऽदत्तम्–अनिसृष्टं हरति–आदत्ते अन्यादत्तहरः–ग्रामनगरादिषु चौर्यकृत्, अत एव 'बालः' अज्ञः, विस्मरणशीलस्मरणार्थमेतदिति न पौनरुक्त्यं, सर्वावस्थासु वा बालत्वख्यापनार्थं, पाठान्तरश्च 'स्तेनः' स्तैन्येनैवोपकल्पितात्मवृत्तिः, यद्वा–अन्यादत्तहरः अन्यादत्तं ग्रन्थिच्छेदादिनोपायेनापहरति स्तेनः क्षत्रादिखननेनेति विशेषो, 'मायी' वञ्चनैकचित्तः, 'कण्हुहरः' कण्हु कस्यार्थं हरिष्यामीत्येवमध्यवसायी 'शठः' वक्राचारः। तथा स्त्रियश्च विषयाश्च स्त्रीविषयाः तेषु गृद्धः–अभिकाङ्क्षावान् स्त्रीविषयगृद्धः,

लसंति, ताए भण्णति–किं पुत्त! भयभीतोऽसि ?, णेहेण पण्हुयपि म ण पियसि, तेण भण्णइ–अम्म! कतो मे थणाभिलासो ?, णणु सो वरातो णदितो अज्ज केहिवि पाहुणएहिं आगएहिं मम अग्गतो विणिग्गयजीहो विलोलनयणो विस्सर रसतो अत्ताणो असरणो मारितो, तब्भयातो कतो मे पाउमिच्छा ?, ततो ताए भण्णति–पुत्त! णणु तदा चेव ते कहिय, जहा–आउरचिण्णाइ एयाइ०, एस तेसिं विवागो अणुपत्तो। एस दिट्ठतो इति सूत्रार्थ ॥

इत्थ दृष्टान्तमभिधाय तमेवानुवदन् दार्ष्टान्तिकमाह—

जहा खलु से ओरब्भे, आएसाए समीहिए। एव बाले अहम्मिट्ठे, ईहति निरयाउय ॥ ४ ॥

व्याख्या—'यथा' येन प्रकारेण 'खलु' निश्चयेन 'स' इति प्रागुक्तस्वरूप उरभ्र 'आदेशाय' आदेशार्थं 'समीहित' कल्पित सन् यथाऽयमसौ भवितेत्यादेश परिकाङ्क्षति इत्यनुवर्तते, 'एवम्' अमुनैव न्यायेन 'बाल' अज्ञोऽधर्मो–धर्मविपक्ष पापमितियावत् स इष्ट –अभिलषितोऽस्येत्यधर्मिष्ठ, आहिताग्न्यादेराकृतिगणत्वादिष्टशब्दस्य परनिपात, यद्वा-

---

१० लप्यति, तया भण्यते–किं पुत्र! भयभीतोऽसि ?, स्नेहेन प्रस्नुतामपि मा न पिबसि, तेन भण्यते–अम्ब! कुतो मे स्तन्याभिलाष ?, ननु स वराको नन्दिकोऽद्य केष्वपि प्राघूर्णकेष्वागतेषु ममाग्रतो विनिर्गतजिह्वो विलोलनयनो विस्वर रसन् अत्राणोऽशरणो मारित, तद्भया कुतो मे पातुमिच्छा ?, ततस्तया भण्यते–पुत्र! ननु तदैव तुभ्य कथित, यथा–आतुरचिह्नान्येतानि०, एष तेषा विपाकोऽनुप्राप्त। एष दृष्टान्त।

व्याख्या—आसनं शयनं यानमिति प्राग्वत् , नवरं भुक्त्वेति सम्बन्धनीयं, 'वित्ते'त्ति वित्तं द्रव्यं, 'कामान्' मनोज्ञशब्दादीन् 'भुक्त्वा' उपभुज्य,दुःखेनात्मनः परेषां च दुःखकरणेन सुष्ठु—आदरातिशयेनाहृतम्—उपार्जितं दुःखाहृतं,यद्वा प्राकृतत्वात् दुःखेन संह्रियते—मील्यते स्मेति दुःसंहृतं 'धनं' द्रव्यं 'हित्वा' आसनाद्युपभोगेन द्यूताद्यसद्व्ययेन च त्यक्त्वा, तथा च मिथ्यात्वादिकर्मबन्धहेतुसम्भवाद् 'बहु' प्रभूतं 'सञ्चित्य' उपार्ज्य 'रजः' अष्टप्रकारं कर्म, ततः किमित्याह—'ततो'त्ति ततो रजःसञ्चयात् तको वा सञ्चितरजाः, कर्म्मणा गुरुरिव गुरुः अधोनरकगामितया कर्म्मगुरुः, 'जन्तुः' प्राणी 'प्रत्युत्पन्नं' वर्त्तमानं तस्मिन्परायणः—तन्निष्ठः प्रत्युत्पन्नपरायणः, 'एतावानेव लोकोऽयं,यावानिन्द्रियगोचरः' इति नास्तिकमतानुसारितया परलोकनिरपेक्ष इतियावत्, 'अएव्व'त्ति अजः—पशुः, स चेह प्रक्रमादुरभ्रस्तद्वत् 'आगयाएसे'त्ति प्राकृतत्वादागते—प्राप्ते आदेशे—प्राहुणके, एतेन प्रपञ्चितज्ञविनेयानुग्रहायोक्तमेवोरभ्रदृष्टान्तं स्मारयति, किमित्याह—'मरणान्ते' प्राणपरित्यागात्मनि, अवसाने शोचति, किमुक्तं भवति ?—यथाऽऽदेशे आगते उरभ्र उक्तनीत्या शोचति, तथाऽयमपि धिङ् मां विषयव्यामोहत उपार्जितगुरुकर्माणं, हा ! केदानीं मया गन्तव्यमित्यादिप्रलापतः खिद्यते, अत्यन्तनास्तिकस्यापि प्रायस्तदा शोकसम्भवादिति सूत्रद्वयार्थः ॥ अनेनैहिकापाय उक्तः, सम्प्रति पारभविकमाह—

तओ आउ परिक्खीणे, चुतदेहा विहिंसगा । आसुरियं दिसं बाला, गच्छंति अवसा तमं ॥ १० ॥

व्याख्या—'ततः' शोचनानन्तरं 'तको वा' उपार्जितगुरुकर्म्मा 'आउ'त्ति आयुषि तद्भवसम्बन्धिनि जीविते

च प्राग्वत् , महान्—अपरिमित आरम्भ —अनेकजन्तूपघातकृद्व्यापार परिग्रहश्च—धान्यादिसञ्चयो यस्य स तथोक्त , 'भुञ्जान ' अभ्यवहरन् , 'सुरा' मदिरा, 'मास' पिशित, 'परिवूढे'त्ति परिवृढ प्रभुरुपचितमासशोणिततया तक्रिया-समर्थ इतियावत् , अत एव परान्—अन्यान् दमयति—यत्कृत्याभिमतकृत्येषु प्रवर्तयतीति परन्दम , किच—अज – छागस्तस्य कर्कर—यच्चनकवद्भक्ष्यमाण कर्करायते तथेह प्रस्तावान्मेदोदन्तुरमतिपक्क वा मास तद्भोजी वा, अत एव 'तुन्दिल ' जातवृहज्जठर , चितम्—उपचयप्राप्त लोहित—शोणितमस्येति चितलोहित , शेपधातूपलक्षणमेतत् , 'आयु ' जीवित, 'नरके' सीमन्तकादौ काङ्क्षति तद्योग्यकर्म्मारम्भितया, कमिव क इव ? इत्याह—'जहाएस व एडए'त्ति आदेशमिव यथैडक –उक्तरूप । इह च 'हिंसे' इत्यादिना सार्धश्लोकेनारम्भ उक्त , 'भुजमाणे सुर'मित्यादिना चार्धद्वयेन रसगृद्धि , 'आयुष्क'मित्यादिना चार्धेन दुर्गतिगमन, तत्प्रतिपादनाचार्थत प्रत्यपायाभिधानमिति सूत्रत्रयार्थ ॥ इदानीं यदुक्तम् 'आयुर्नरके काङ्क्षती'ति, तदनन्तरमसौ किं कुरुत इत्याह,—यद्वा साक्षादैहिकापायदर्शनायाह—

आसण सयण जाण, वित्ते कामाणि भुजिया । दुस्साहड धण हिच्चा, बहु सचिणिया रय ॥८॥
ततो कम्मगुरू जतू, पच्चुप्पण्णपरायणे । अए व आगया[1] 'कखे, मरणतमि सोयति ॥ ९ ॥

---

१ आगयाऽऽसेत्ति टीका ।

एगो दमगो, तेण वित्तिं करेंतेण सहस्सं काहावणाण अज्जियं, सो य तं गहाय सत्थेण समं सगिहं पत्थितो, तेण भत्तणिमित्तं रूवगो कागिणीहिं भिन्नो, ततो दिणे दिणे कागिणीए भुंजति, तस्स य अवसेसा एगा कागणी, सा विस्सारिया, सत्थे पहाविए सो चिंतेति–मा मे रूवगो भिंदियव्वो होहित्ति णउलगं एगत्थ गोवेउं कागिणीणिमित्तं णियत्तो, सावि कागिणी अन्नेण हडा, सोऽवि णउलतो अण्णेण दिट्ठो ठविज्जंतो, सोवि तं घेत्तूण णट्ठो, पच्छा सो घरं गतो सोयति । एस दिट्ठंतो,

तथा 'अपथ्यं' अहितम् 'आम्रकम्' आम्रफलं 'भुक्त्वा' अभ्यवहृत्य 'राजा' इति नृपतिः 'राज्यं' पृथिवीपतित्वं, 'तुः' अवधारणे भिन्नक्रमश्च, तेन हारयेदेव, सम्भवत्येव अस्यापथ्यभोजिनो राज्यहरणमित्यक्षरार्थः । भावार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—

१ एको द्रमकः, तेन वृत्तिं कुर्वता सहस्रं कार्षापणानामर्जितं, स च तद् गृहीत्वा सार्थेन समं स्वगृहं प्रस्थितः, तेन भक्तनिमित्तं रूप्यकः काकिणीभ्यो भिन्नः, ततो दिने दिने काकिण्या भुङ्क्ते, तस्य चावशेषा एका काकिणी, सा विस्मृता, सार्थे प्रधाविते स चिन्तयति–मा मे रूप्यको भेत्तव्यो भविष्यतीति नकुलकमेकत्र गोपयित्वा काकिणीनिमित्तं निवृत्तः, साऽपि काकिणी अन्येन हृता, सोऽपि नकुलकोऽन्येन दृष्टः स्थाप्यमानः, सोऽपि तं गृहीत्वा नष्टः, पश्चात्स गृहं गतः शोचति । एष दृष्टान्तः ।

'परिक्षीणे' सर्वथा क्षय गते, कदाचिदायु क्षयस्याऽऽवीचिमरणेन प्रागपि सम्भवादेवमुच्यते, 'च्युत ' भ्रष्टो 'देहात्' शरीरात्, पाठान्तरतस्तु 'च्युतदेहो' अपगतेहत्यशरीर 'विहिसक ' विविधप्रकारै प्राणिघातक , 'आसुरिय'ति अविद्यमानसूर्याम्, उपलक्षणत्वाद्ग्रहनक्षत्रविरहिता च, दिश्यते नारकादित्वेनास्या ससारीति दिक् ताम्, अर्थात् भावदिशम् , अथवा रौद्रकर्मकारी सर्वोऽप्यसुर उच्यते, ततश्चासुराणामियमासुरी या तामासुरीया दिश, नरकगतिमित्यर्थ , 'घाल ' अज्ञो गच्छति–याति 'अवश ' कर्मपरवशो, वचनव्यत्ययाच सर्वत्र बहुवचननिर्देशो व्याप्तिख्यापनार्थो वा, यथा नैक एवविध किन्तु बहव इति, 'तम'ति तमोयुक्तत्वात् तम , देवगतेरप्यसूर्यत्वसम्भवात् तद्व्यवच्छेदाय दिशो विशेषण, ततोऽर्थान्नरकगतिम् ,उक्त हि—"णिचधयारतमसा ववगयगहचदसूरणक्खत्ता" इत्यादिसरूपख्यापक वा द्वितीय व्याख्यानमिति सूत्रार्थ ॥ सम्प्रति काकिण्याम्रदृष्टान्तद्वयमाह—

जहा कागिणीए हेउ, सहस्स हारए नरो । अपत्थ अबग भोचा, राया रज्ज तु हारए ॥ ११ ॥

व्याख्या—'यथा' इत्युदाहरणोपन्यासार्थ , 'काकिण्या ' उक्तरूपाया 'हेउं'ति हेतो कारणात् 'सहस्रं' दशशतात्मक, कार्षापणानामिति गम्यते, 'हारयेत् ' नाशयेत् 'नर ' पुरुष । अत्रोदाहरणसम्प्रदाय —

१ नित्यान्धकारतमसा व्यपगतग्रहचन्द्रसूर्यनक्षत्राः ।

(पा०४-३-१२६) वुञ् 'कामाः' विपयाः, 'देवकामाना' देवसम्वन्धिनां विपयाणाम् 'अन्तिके' समीपे, अन्तिकोपादानं च दूरेऽनवधारणमपि स्यादिति, किमित्येवम् ?, अत आह–'सहस्रगुणिताः' सहस्रैस्ताडिता 'भूयः' अतिशयेन वहु, वहून् वारानित्यर्थः, मनुष्यायुःकामापेक्षयेति प्रक्रमः, अनेनैपामतिभूयस्त्वं सूचयन् कार्षापणसहस्रराज्यतुल्यतामाह, 'आयुः' जीवितं, कामाश्च–शब्दादयः, 'दिव्विय'त्ति दिवि भवा दिव्याः "द्युप्रागपागुदक्प्रतीचो यदि"ति (पा० ४-२-१०१) यत्, त एव दिव्यकाः, इह चादौ 'देवकामाण अंतिए'त्ति काममात्रोपादानेऽपि 'आउं कामा य दिव्विय'त्ति आयुपोऽप्युपादानं तत्रत्यप्रभावादीनामपि तदपेक्षयैवंविधत्वख्यापनार्थं, यद्वा 'सूचनात् सूत्र'मिति पूर्वत्राप्यायुपः सूचितत्वाददोप इति सूत्रार्थः ॥ मनुष्यकामानामेव काकिण्याम्रफलोपमत्वं भावयितुमाह—

अणेगवासानउया, जा सा पण्णवओ ठिई। जाइं जीयंति दुम्मेहा, जाण वाससयाउए ॥ १३ ॥

व्याख्या—अनेकानि–वहूनि तानि चेहासङ्ख्येयानि वर्षाणि–वत्सराणि तेपां नयुतानि–सङ्ख्याविशेपाणि वर्पनयुतान्यनेकानि च तानि वर्पनयुतानि च अनेकवर्पनयुतानि "स्वरोऽन्योऽन्यस्य" इति प्राकृतलक्षणात् सकाराकारदीर्घत्वम्, एवमन्यत्रापि स्वरान्यत्वं भावनीयं,यदिवाऽनेकानि वर्पनयुतानि येपु तान्यनेकवर्पनयुतानि, उभयत्रार्थात् पल्योपमसागरोपमाणीतियावत्, नयुतानयनोपायस्त्वयम्—चतुरशीतिवर्पलक्षाः पूर्वाङ्गं, तच्च पूर्वाङ्गेन गुणितं पूर्वं, पूर्वं (क्रमेणैकान्नविंशतिंवारान्)चतुरशीतिलक्षाहतं नयुताङ्गं,नयुताङ्गमपि चतुरशीतिलक्षाभिताडितं नयुतं,कैवमुच्यत इत्या।

जहा कस्सइ रण्णो अवाजिण्णेण विसूइया जाया, सा तस्स वेज्जेहिं महता जत्तेण तिगिच्छिया, भणितो य–जदि पुणो अवाणि खासि तो विणस्ससि, तस्स य अतीव पीयाणि अवाणि, तेण सदेसे सव्वे अवा उच्छादिया। अण्णया अस्सवाहणियाए णिग्गतो सह अमच्चेण, अस्सेण अवहरिओ, अस्सो दूर गतूण परिस्सतो ठितो, एगमि वणसंडे चूयच्छायाते अमच्चेण वारिज्जमाणोऽवि णिविट्ठो, तस्स य हेट्ठे अवाणि पडियाणि, सो ताणि परामुसति, पच्छा अग्घाति, पच्छा चक्खिउ णिच्छुहति, अमचो वारेइ, पच्छा भक्खेउ मतो। इति सूत्रार्थः ॥

इत्थ दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह—

एव माणुस्सगा कामा, देवकामाण अंतिए। सहस्सगुणिया भुज्जो, आउ कामा य दिव्विया ॥ १२ ॥

व्याख्या—'एव' काकिण्याम्रकसदृशा मनुष्याणाममी मानुष्यका, गोत्रप्रत्यया तत्वात् "गोत्रचरणाद्वुञ्"ति

१ यथा कस्यचित् राज्ञ आम्राजीर्णेन विसूचिका जाता, सा तस्य वैद्यैर्महता यत्नेन चिकित्सिता, भणितश्च–यदि पुनराम्राणि खादिष्यसि तदा विनङ्क्ष्यसि, तस्य चातीव प्रियाणि आम्राणि, तेन स्वदेशे सर्वाण्याम्राण्युत्सादितानि। अ यदा अश्ववाहनिकायै निर्गत सहामात्येन, अश्वेनापहृत, अश्वो दूर गत्वा परिश्रान्त स्थित, एकस्मिन् वनखण्डे चूतच्छायायाममात्येन वार्यमाणोऽपि निविष्ट, तस्य चाधस्तात् आम्राणि पतितानि, स तानि परामृशति, पश्चादाजिघ्रति, पश्चात् स्वादयित्वा निस्पृशति, अमात्यो वारयति, पश्चाद्भक्षयित्वा मृत ।

राज्यतुल्याः, ततो यथा द्रमको राजा च काकण्याम्रफलकृते कार्षापणसहस्रं राज्यं च हारितवान्, एवमेतेऽपि दुर्मेधसोऽल्पतरमनुष्यायुःकामार्थं प्रभूतान् देवायुःकामान् हारयन्तीति सूत्रार्थः ॥ सम्प्रति व्यवहारोदाहरणमाह—

जहा य तिण्णि वणिया, मूलं घेत्तूण निग्गया । एगोऽत्थ लभते लाभं, एगो मूलेण आगओ ॥ १४ ॥

व्याख्या—'यथा' इति प्राग्वत्, 'चः' प्रतिपादितदृष्टान्तापेक्षया समुच्चये, त्रयो 'वणिजः' प्रतीताः 'मूलं' राशिं नीवीमितियावत् गृहीत्वा 'निर्गताः' स्वस्थानात्स्थानान्तरं प्रति प्रस्थिताः, प्राप्ताश्च समीहितं स्थानं, तत्र च गतानाम् 'एको' वणिक्कलाकुशलः 'अत्र' एतेषु मध्ये 'लभते' प्राप्नोति 'लाभं' विशिष्टद्रव्योपचयलक्षणम्, 'एकः' तेष्वेवान्यतरो यस्तथा नातिनिपुणो नाप्यत्यन्तानिपुणः स'मूलेने'ति मूलधनेन यावत् गृहान्नीतं तावतैवोपलक्षितः 'आगतः' स्वस्थानं प्राप्त इति सूत्रार्थः ॥ तथा—

एगो मूलंपि हारित्ता, आगओ तत्थ वाणिओ । ववहारे उवमा एसा, एवं धम्मे विजाणह ॥ १५ ॥

व्याख्या—'एकः' अन्यतरः प्रमादपरो द्यूतमद्यादिष्वत्यन्तमासक्तचेताः 'मूलमपि' उक्तरूपं 'हारयित्वा' नाशयित्वा 'आगतः' प्राप्तः स्वस्थानमित्युपस्कारः, एवं सर्वत्रोदाहरणसूचायां सोपस्कारता द्रष्टव्या, 'तत्र' तेषु मध्ये वणिक् एव वाणिजः । अत्र च सम्प्रदायः—

जहा एगस्स वाणियगस्स तिन्नि पुत्ता, तेण तेसिं सहस्सं सहस्सं दिन्नं काहावणाणं, भणिया य—एएण ववहरि-

१ यथैकस्य वणिजस्त्रयः पुत्राः, तेन तेभ्यः सहस्रं सहस्रं दत्तं कार्षापणानां, भणिताश्च—एतेन व्यवहृत्य

ह—'या से'ति प्रनापक शिष्यान् प्रत्येवमाह—या सा भवतामस्माक च प्रतीता, प्रकर्षेण ज्ञायते वस्तु सतत्त्वमनयेति प्रज्ञा–हेयोपादेयविवेचिका बुद्धि सा विद्यतेऽस्यासौ प्रनावान्, 'अतिशायने मतुप्' अतिशयश्चास्या हेयोपादेययो हानोपादाननिबन्धनत्वमिहाभिमत ततश्च क्रियाया अप्याक्षिप्तत्वात् यदिवा निश्चयनयमतेन क्रियारहिता प्रज्ञाऽप्यप्रज्ञैवेति प्रज्ञयैव क्रियाऽऽक्षिप्यते तत प्रज्ञावान् ज्ञानक्रियावानित्युक्त भवति, तस्य प्रज्ञावत स्थीयतेऽनयाऽर्थात् देवभव इति स्थिति –देवायु, अधिकृतत्वात् दिव्यकामाश्च, तानि च कीदृशीत्याह—यान्यनेकवर्षनयुतानि दिव्यस्थितेर्दिव्यकामाना च विषयभूतानि 'जीयन्ते' हार्यन्ते, तद्धेतुभूतानुष्ठानानासेवनेनेति भाव, पाठान्तरतो 'हारयन्ति या,' के ते १–दुष्टा–विपर्ययादिदोषदुष्टत्वेन मेधा–वस्तुस्वरूपावधारणशक्तिरेषा ते दुर्मेधस, विषयैर्जिता जन्तव इति गम्यते, कदा पुनस्तानि दुर्मेधसो विषयैर्जीयन्त इत्याह—ऊने वर्षशतायुषि, अनेनायुषोऽल्पत्वात् मनुष्यकामानामप्यल्पतामाह, यदिवा प्रभूते ह्यायुषि प्रमादेनैकदा हारितान्यपि पुनर्जीयेरन्, अस्मिंस्तु सक्षिप्तायुष्येकदा हारितानि हारितान्येव, भगवतश्च वीरस्य तीर्थे प्रायो न्यूनवर्षशतायुष एव जन्तव इतीत्थमुपन्यास, अथ चात्र भावार्थ –अल्प मनुष्याणामायुर्विषयाश्चेति काकण्याम्रफलोपमा, देवायुर्देवकामाश्चातिप्रभूततया कार्षापणसहस्र-

१ भूमनिन्दाप्रशसासु, नित्ययोगेऽतिशायने। सम्बन्धेऽस्ति विवक्षाया, भवन्ति मतुबादय ॥ १ ॥ इत्युक्ते

सम्प्रति सूत्रमनुस्रियते—'व्यवहारे' व्यवहारविषया 'उपमा' सादृश्यं 'एषा' अनन्तरोक्ता 'एवं' वक्ष्यमाणन्यायेन 'धर्मे' धर्मविषयामेवोपमां 'विजानीत' अवबुध्यध्वमिति सूत्रार्थः ॥ कथमित्याह—

माणुसत्तं भवे मूलं, लाभो देवगई भवे । मूलच्छेएण जीवाणं, नरगतिरिक्खत्तणं धुवं ॥ १६ ॥

व्याख्या—'मानुषत्वं' मनुजत्वं 'भवेत्' स्यात् मूलमिव मूलं, स्वर्गापवर्गात्मकतदुत्तरोत्तरलाभहेतुतया, तथा लाभ इव लाभः मनुजगत्यपेक्षया विषयसुखादिभिर्विशिष्टत्वात् 'देवगतिः' देवत्वावाप्तिर्भवेत्, एवं च स्थिते किमित्याह—'मूलच्छेदेन' मानुषत्वगतिहान्यात्मकेन 'जीवानां' प्राणिनां 'नरकतिर्यक्त्वं' नरकत्वं तिर्यक्त्वं च तद्गत्यात्मकं 'ध्रुवं' निश्चितम्, इहापि सम्प्रदायः—तिन्नि संसारिणो सत्ता माणुस्सेसु आयाता, तत्थेगो मद्दवज्जवादिगुणसंपन्नो मज्झिमारंभपरिग्गहजुत्तो कालं काऊण काहावणसहस्समूलत्थाणीयं तमेव माणुस्सत्तं पडिलहति, बितितो पुण सम्मद्दंसणचरित्तगुणसुपरिट्ठितो सरागसंजमेण लद्धलाभवणिय इव देवेसु उववन्नो, ततितो पुण हिंसे वाले मुसावाती इच्चेतेहिं पुव्वभणितेहिं सावज्जजोगेहिं वट्टिउं छिन्नमूलवणिय इव णारगेसु तिरिएसु वा उववज्जतित्ति सूत्रार्थः॥

१ त्रयः संसारिणः सत्त्वा मानुषेष्वायाताः, तत्रैको मार्दवार्जवादिगुणसंपन्नो मध्यमारम्भपरिग्रहयुक्तः कालं कृत्वा कार्षापणसहस्रमूलस्थानीयं तदेव मानुषत्वं प्रतिलभते, द्वितीयः पुनः सम्यग्दर्शनचारित्रगुणसुपरिस्थितः सरागसंयमेन लब्धलाभवणिगिव देवेषूत्पन्नः, तृतीयः पुनर्हिंस्रो बालो मृषावादीत्येतैः पूर्वभणितैः सावद्ययोगैः वर्तित्वा छिन्नमूलवणिगिव नारकेषु तिर्यक्षु वोत्पद्यते इति ।

ऊण एंत्तिएण कालेण एज्जाह, ते त मूल घेत्तूण णिग्गया सणगरातो, पिधप्पिधेसु पट्टणेसु ठिया, तत्थेगो भोयणच्छायणवज्ज जूयमज्जमसवेसावसणविरहितो विहीए ववहरमाणो विपुललाभसमन्नितो जातो, वितितो पुण मूलमवि देघतो लाभग भोयणच्छायणमल्लालकारादिसु उवभुजति, ण य अचादरेण ववहरति, ततितो न किंचि सववहरति, केवल जूयमज्जमसवेसगधमल्लतबोलसरीरकियासु अप्पेणेव कालेण त दव णिट्ठवियति, जहावहिकालस्स सपुरमागया । तत्थ जो छिन्नमूलो सो सघस्स असामी जातो, पेसए उवचरिज्जति, वितितो घरवावारे णिउत्तो भत्त पाणसतुट्ठो ण दायवभोत्तवेसु ववसायति, ततितो घरवित्थरस्स सामी जातो । केति पुण कहति–तिन्नि वाणियगा पत्तेय २ ववहरति, तत्थेगो छिन्नमूलो पेसत्तमुवगतो, केण वा सववहार करेउ ?, अच्छिन्नमूलो पुणरवि वाणिज्जाए भवति, इयरो बधुसहितो मोदए, एस दिट्ठतो ।

१ इयता कालेनागच्छत । ते त मूल्य गृहीत्वा निर्गता स्वनगरात्, पृथक् पृथक् पत्तनेषु स्थिता, तत्रैको भोजनाच्छादनवर्ज द्यूतमद्य मासवेश्याव्यसनविरहितो वीथ्या व्यवहरन् विपुललाभसमन्वितो जात , द्वितीय पुन मूलमपि द्रव्यायमाणो लाभ भोजनाच्छादनमाल्यालङ्कारादिषूपभुङ्क्ते, न चात्यादरेण व्यवहरति, तृतीयो न किञ्चित्सव्यवहरति, केवल द्यूतमद्यमासवेश्यागन्धमाल्यताम्बूलशरीरक्रियासु अल्पे नैव कालेन तद्द्रव्य निष्ठितमिति, यथावधिकालेन स्वपुरमागता । तत्र यश्छिन्नमूल स सर्वस्यास्वामी जात, प्रेष्ये उपचर्यते, द्वितीयो गृहव्यापारे नियुक्तो भक्तपानसतुष्टो न दातव्यभोक्तव्येषु व्यवस्यति, तृतीयो गृहविस्तारस्य स्वामी जात । केचित्पुन कथयन्ति–त्रयो वणिज प्रत्येक प्रत्येक व्यवहरन्ति, तत्रैकश्छिन्नमूल प्रेष्यत्वमुपगत , केनैव सव्यवहार करोतु ?, अच्छिन्नमूल पुनरपि वाणिज्यार्थे भवति, इतरो बन्धु सहितो मोदते, एष दृष्टान्त । २० मविद्वतो

—यतोऽयं बालो लोलताशठः ततो नरकगतितिर्यग्गतिनिबन्धनाभ्यां लोलताशठत्वाभ्यां देवत्वमनुजत्वे हारितस्तास्योक्तरूपा द्विविधैव गतिः सम्भवति, एवं च मूलच्छेदेन जीवानां नरकतिर्यक्त्वमुच्यते, मूलं हि मनुष्यत्वं लाभश्च देवत्वम्, उभयोरपि तयोर्हारणादिति सूत्रार्थः ॥ पुनर्मूलच्छेदमेव समर्थयितुमाह—

ततो जिए सई होइ, दुविहं दुग्गतिं गते । दुल्लहा तस्स उम्मज्जा, अद्धाए सुचिरादवि ॥ १८ ॥

व्याख्या—'ततः' देवत्वमानुपत्वजयनात् तको वा बालः 'जिय'त्ति व्यवच्छेदफलत्वाद्वाक्यस्य जित एव 'सति'त्ति सदा भवति 'द्विविधां' नारकतिर्यग्भेदां, दुर्निन्दायां, दुष्टा—निन्दिता गतिर्दुर्गतिस्तां 'गतः' प्राप्तः, सदाजितत्वमेवाभिव्यनक्ति—'दुर्लभाः' दुष्प्रापाः 'तस्से'ति देवमनुजत्वे हारितवतो बालस्य 'उम्मज्ज'त्ति सूत्रत्वादुन्मज्जनमुन्मज्जा—नरकतिर्यग्गतिनिर्गमनात्मिका, स्यादेतत्—चिरतरकालेनोन्मज्जाऽस्य भविष्यति, अत आह—'अद्धायां' काले अर्थादागामिन्यां, किं स्वल्पायामेव ?, इत्याह—सुचिरादपीत्यद्धाशब्देनैव कालाभिधानात् सुचिराच्छब्दः प्रभूतत्वमेवाह, ततोऽयमर्थः—अनागताद्धायां प्रभूतायामपि, बाहुल्याचेत्थमुक्तम्, अन्यथा हि केचिदेकभवेनैव तत उद्धृत्य मुक्तिमप्याप्नुवन्त्येवेति सूत्रार्थः ॥ इत्थं पश्चानुपूर्व्यपि व्याख्याक्रममिति पश्चादुक्तेऽपि मूलहारिण्युपनयमुपदर्श्य मूलप्रवेशिन्यभिधातुमाह—यद्वा विपक्षापायपरिज्ञानतयैवोपादेये प्रवृत्तिरिति पश्चादुक्तमपि मूलहारिणमादावुपदर्श्यैतदाह—

यथा मूलच्छेदेन नरकतिर्यक्त्वप्राप्ति तथा स्वय सूत्रकृदाह—

दुहओ गती बालस्स, आवती वहमूलिया। देवत्त माणुसत्त च, ज जिए लोलुआसढे ॥ १७ ॥

व्याख्या—'दुहतो'त्ति द्विधा द्विप्रकारा, गम्यत इति गति, सा चेह प्रक्रमान्नरकगतिस्तिर्यग्गतिश्च, कस्येत्याह—'बालस्य' द्वाभ्या रागद्वेषाभ्यामाकुलितस्य, 'आवइ'त्ति आगच्छत्यापतति वध –प्राणिघात, उपलक्षणत्वान्महारम्भमहापरिग्रहानृतभाषणमायादयश्च मूल–कारण यस्या सा वधमूलिका, यदिवा–द्विधा गतिर्बालस्य, भवतीति गम्यते, तत्र च गतस्य 'आवइ'त्ति आपत्, सा च कीदृशीत्याह—वधो–विनाशस्ताडन वा मूलम्–आदिर्यस्या सा वधमूलिका, वधग्रहणाच्छेदभेदातिभारारोपणादिपरिग्रह, लभन्ते हि प्राणिनो नरकतिर्यक्षु विविधा वधाद्यापद, किमित्येवम् ?, अत आह—'देवत्व' देवभव 'मानुषत्व' मनुजभव 'यद्' यस्मात् 'जितो' हारितो 'लोलयासढे'त्ति लोलता–पिशितादिलाम्पट्य तद्योगाज्जन्तुरपि तन्मयत्वख्यापनार्थं लोलतेत्युक्त, शाठ्ययोगाच्छठ –विश्वस्तजनवञ्चक, ततो लोलता चासौ शठश्च लोलताशठ, इह च लोलता पञ्चेन्द्रियवधाद्युपलक्षण, तथा च नरकहेतुत्वाभिधानमेतत्, यदुक्तम्–"महारभयाए महापरिग्गहयाए कुणिमाहारेण पचेंदियवहेण जीवा णेरयाउय णियच्छति" शठ इत्यनेन तु शाठ्यमुक्त, तच्च तिर्यग्गतिहेतु, उक्त च—"माया तैर्यग्योनस्य" (तत्त्वार्थ अ० ६ सू० १७) ति, अतश्चायमाशय

---

१ महारम्भतया महापरिग्रहतया मासाहारेण पञ्चेन्द्रियवधेन जीवा नैरयिकायुर्नियमयन्ति।

'गृहिणश्च' ते गृहस्थाः 'सुव्रताश्च' धृतमत्पुरुपव्रताः, ते हि प्रकृतिभद्रकत्वाद्यभ्यासानुभावत एव न विपद्यपि विषीदन्ति सदाचारं वा नावधीरयन्तीत्यादिगुणान्विताः, इदमेव च सतां व्रतं, लौकिका अप्याहुः—"विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां, प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् । असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यस्तनुधनः, सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ? ॥ १ ॥" आगमविहितव्रतधारणं त्वमीषामसम्भवि, देवगतिहेतुतयैव तदभिधानात्, त ईदृशाः किमित्याह—उपयन्ति 'माणुसं'ति मानुषीं—मानुषसम्बन्धिनीं 'योनिम्' उक्तरूपां कर्म्मणा—मनोवाक्कायक्रियालक्षणेन सत्या—अविसंवादिनः कर्म्मसत्याः, 'हुः' अवधारणे, ततः कर्म्मसत्या एव सन्तः, तदसत्यतायास्तिर्यग्योनिहेतुत्वेनोक्तत्वात्, तथा च वाचकः—"धूर्ता नैकृतिकाः स्तब्धा, लुब्धाः कार्पटिकाः शठाः । विविधां ते प्रपद्यन्ते, तिर्यग्योनिं दुरुत्तराम् ॥१॥" इत्यादि, पाठान्तरतश्च 'कर्मसु' अर्थान्मनुष्यगतियोग्यक्रियारूपेषु सक्ता—अभिष्वङ्गवन्तः कर्मसक्ताः प्राणिनः—जीवाः, इह च नरग्रहणेऽपि प्राणिग्रहणं देवादिपरिग्रहार्थमिति न पुनरुक्तम् । यद्वा—विमात्रादिभिः शिक्षाभिर्ये नरा गृहिसुव्रताः यत्तदोर्नित्याभिसम्बन्धात् ते मानुषीं योनिमुपगान्ति, किमित्येवम् ?, अत आह—'कम्मसचा हु पाणिणो'त्ति हुशब्दो यस्मादर्थे, यस्मात् सत्यानि—अवन्ध्यफलानि कर्म्माणि—ज्ञानावरणादीनि येषां ते सत्यकर्म्माणः प्राणिनः, निरुपक्रमकर्म्मापेक्षं चैतदिति सूत्रार्थः ॥ सम्प्रति लब्धलाभोपनगमाह—

एव जिय सपेहाए, तुलिया बाल च पडिय । मूलिय ते पविस्सति, माणुस जोणिमिंति जे ॥ १९ ॥

व्याख्या—'एवम्' उक्तनीत्या 'जिए'त्ति सुव्यत्ययाज्जित लोलतया शाठ्येन च देवमनुजत्वे हारित बालमिति प्रक्रम , 'सपेहाए'त्ति सम्प्रेक्ष्य सम्यगालोच्य, तथा तोलयित्वेव तोलयित्वा–गुणदोपवत्तया परिभाव्य, यदिवैव जित सम्यग्–अविपरीता प्रेक्षा–बुद्धि सम्प्रेक्षा तया तोलयित्वा, कम् ?–'बाल' चस्य भिन्नक्रमत्वात् 'पण्डित च' तद्विपरीतम्,अथवा मनुष्यदेवगतिगामिनम्, इह च द्वितीयव्याख्यायामेव जितमिति बालस्य विशेषण, न तु पण्डितस्य, असम्भवात्, तथा च सति मूले भव मौलिक–मौलधन ते प्रवेशयन्तीव प्रवेशयन्ति, मूलप्रवेशकवणिक्सदृशास्त इत्यभिप्राय , ये किमित्याह—'माणुस'ति मनुष्याणामिय मानुपी ता 'योनिम् ' उत्पत्तिस्थानम् 'आयान्ति' आगच्छन्ति, बालत्वपरिहारेण पण्डितत्वमासेवमाना ये त इति सूत्रार्थ ॥ यथा च मानुषीं योनिमायान्ति तथा चाह—

वेमायाहि सिक्खाहि, जे नरा गिहि सुव्वया । उविंति माणुस जोणी, कम्मसच्चा हु पाणिणो ॥ २० ॥

व्याख्या—विविधा मात्रा–परिमाणमासा विमात्रा –विचित्रपरिमाणा, ताभि परिमाणविशेषमाश्रित्य विसदृशीभि 'शिक्षाभिः' प्रकृतिभद्रकत्वाद्यभ्यासरूपाभि , उक्त हि–"[1]चउहिं ठाणेहिं जीवा मणुयाउ बधति, तजहा–पगतिभद्दयाए पगतिविणीययाए साणुक्कोसयाए अमच्छरियाए"त्ति 'ये'इत्यविवक्षितविशेपा 'नराः' पुरुपा ,

---

१ चतुर्भि स्थानैर्जीवा मनुजायुर्बध्नन्ति, तद्यथा–प्रकृतिभद्रकतया प्रकृतिविनीततया सानुक्रोशतया अमत्सरितया ।

व्याख्या—'एवम्' अमुना न्यायेन लाभान्वितं 'अदीणव'न्ति दीक्ष्वतो दीनवन्तं न तथाऽदीनवन्तम्—अदीनं, दैन्यरहितमित्यर्थः 'भिक्षुं' यतिम् 'अगारिणं' च गृहस्थं 'विज्ञाय' विशेषेण तथाविधशिक्षावशादेवमनुजगामित्वलक्षणेन 'ज्ञात्वा' अवगम्य, यतमान इति शेषः, 'कथम्'? केन प्रकारेण ?, न कथञ्चिदित्यर्थः, 'नुः' वितर्के, 'जिच्चं'ति सूत्रत्वात् जीयेत—हार्येत विवेकी, तत्प्रतिकूलैः कषायोदयादिभिरिति गम्यते, 'ईदृक्षम्' अन्तरोक्तं देवगत्यात्मकं लाभं 'जिच्चमाणो'त्ति वाशब्दस्य गम्यमानत्वाजीयमानो वा—हार्यमाणः, तैरेव कषायादिभिः 'न संविदे'त्ति सूत्रत्वान्न संवित्ते—न जानीते यथाऽहमेभिर्जीये इति, कथं न्वितीहापि योज्यते, ततोऽयमर्थः—कथं नु न संवित्ते?, संवित्त एव, जानीत एव ज्ञपरिज्ञया, प्रत्याख्यानपरिज्ञया च तन्निरोधं प्रति प्रवर्तत एव, इत्येवं च वदन् काकोपदिशति—यत एवं ततो यूयमप्येवं जानाना यथा न देवगतिलक्षणं लाभं जीयेध्वं कषायादिभिस्तथा यतध्वं, कथञ्चिज्जीयमानाश्च सम्यग् विज्ञाय तत्प्रतीकारायैव प्रवर्तध्वमिति, यद्वा—एवमदीनवन्तं भिक्षुमगारिणं च विज्ञाय यतमानो 'जिच्चं'ति जीयते—हार्यते अतिरौद्रैरिन्द्रियादिभिः आत्मा तदिति ज्ञेयं, तच्चेह प्रक्रमान्मनुष्यदेवगतिलक्षणम्, 'एलिक्खं'ति सुव्यत्ययादीदृक्षोऽभिहितार्थाभिज्ञः कथं नु जीयमानो न संवित्ते ?, अपि तु संवित्त एव, संविदानश्च यथा न जीयेत तथा यतेतेत्यभिप्रायः। अथवा—एवमदीनवन्तं भिक्षुमगारिणं च लब्धलाभं विज्ञाय यतमानः कथं नु 'जिच्चं'ति आर्षत्वाज्जीयते—हार्यते, विषयादिभिरिति गम्यते, ईदृक्षं देवगतिलक्षणं लाभमिति शेषः, अयमाशयो—यदि लभमाना न विज्ञाताः

जेसि तु विउला सिक्खा, मूलियते अतिच्छिया । सीलवता सविसेसा, अदीणा जति देवय ॥ २१ ॥

व्याख्या—'येषा तु' येषा पुन 'विपुला' नि शङ्कितत्वादिसम्यक्त्वाचाराणुव्रतमहाव्रतादिविषयत्वेन विस्तीर्णा 'शिक्षा' ग्रहणासेवनात्मिका, अस्तीति गम्यते, मूले भव मौलिक-मूलधनमिव मानुषत्व, त एवविधा, विउट्टियत्ति अतिट्टियत्ति अतिच्छियत्ति पाठत्रयेऽपि अतिक्रान्ता -उल्लङ्घितवन्त इत्यर्थ, यद्वाऽतिक्रम्य-उल्लङ्घ्य, कीदृशा सन्त ?-शील-सदाचार अविरतसम्यग्दृशा विरतिमता तु देशसर्वविरमणात्मक चारित्र तद्विद्यते येषा ते शीलवन्त, तथा सह विशेषेण-उत्तरोत्तरगुणप्रतिपत्तिलक्षणेन वर्त्तन्त इति सविशेषा, अत एव 'अदीना' कथ वयममुत्र भविष्याम इति वैक्लव्यरहिता परिषहोपसर्गादिसम्भवे वा न दैन्यभाज इत्यदीना 'यान्ति' प्राप्नुवन्ति, देवभावो देवता सैव दैवत। ननु तत्त्वतो मुक्तिगतिरेव लाभ, तत्किमिह तत्परिहारतो देवगतिरुक्तेति ?, उच्यते, सूत्रस्य त्रिकालविषयत्वात्, मुक्तेश्चेदानी विशिष्टसहननाभावतोऽभावाद्देवगतेश्च "छेवट्ठेण उ गम्मइ चत्तारि उ जाव आदिमा कप्पा" इति वचनाच्छेदपरिवर्तिसहननिनामिदानीतनानामपि सम्भवादेवमुक्तमिति सूत्रार्थ ॥ प्रस्तुतमेवार्थं निगमयन्नुपदेशमाह—

एव अदीणव भिक्खु, अगारि च विजाणिया । कहन्नु जिच्चमेलिक्खं, जिच्चमाणो न सविदे ॥ २२ ॥

---

१ सेवार्त्तेन तु गम्यते चत्वारो यावदादिमा कल्पा

व्याख्या—कुशाग्रशब्देन कुशाग्रस्थितो जलबिन्दुरुपलक्ष्यते, तन्मात्राः—तत्परिमाणाः 'इमे' इति प्रत्यक्षाः 'कामाः' प्रक्रतत्वान्मनुष्यविषयाः, कदा य इत्याह—'सन्निरुद्धे' अत्यन्तसंक्षिप्ते, यद्वा सम्—एकीभावेन निरुद्धे—अध्यवसानादिभिरुपक्रमणकारणैरवष्टब्धे 'आयुषि' जीविते, अनेन मनुष्यायुषोऽल्पतया सोपक्रमतया वा कामानामल्पत्वमुक्तं, समृद्ध्याद्यल्पतोपलक्षणं चैतद्, अस्मिंस्त्वर्थे उक्ते दिव्यकामास्तु जलधिजलतुल्या इत्यर्थाद्गम्यते, 'कस्स हेउं'ति सूत्रत्वात् कं हेतुं—कारणं 'पुरा काउं'ति तत एव पुरस्कृत्य—आश्रित्य, अलब्धस्य लाभो—योगो लब्धस्य च परिपालनं—क्षेमोऽनयोः समाहारो योगक्षेमं, कोऽर्थः?—अप्राप्तविशिष्टधर्मप्राप्तिं प्राप्तस्य च परिपालनं 'न संविन्ते' न जानीते, जन इति शेषः, तदसंवित्तौ हि मनुष्यविषयाभिष्वङ्ग एव हेतुः, ते च धर्मप्राप्यदिव्यभोगापेक्षयैवंप्रायाः, ततस्तत्त्यागतो विषयाभिलाषिणापि धर्म्म एव यतितव्यमित्यभिप्रायः, यद्वा—यतः कुशाग्रमात्रा—दर्भप्रान्तवदत्यल्पा इमे कामाः, तेऽपि न पल्योपमादिपरिमितौ द्राघीयस्यायुषि, किन्तु 'सन्निरुद्धे' संक्षिप्ते आयुषि, ततः 'कस्स हेउं'ति कस्माद्धेतोः पुरस्कृत्येव पुरस्कृत्य मुख्यतयाऽङ्गीकृत्य, असंयममिति शेषः, 'योगक्षेमम्' उक्तरूपं न संविन्ते, भावार्थस्त्वभिहित एवेति सूत्रार्थः॥ इत्थं दृष्टान्तपञ्चकमुक्तं, तत्र च प्रथममुरभ्रदृष्टान्तेन भोगानामायतावपायबहुलत्वमभिहितम्, आयतौ चापायबहुलमपि यन्न तुच्छं न तत्परिहर्तुं शक्यत इति काकिण्याम्रफलदृष्टान्ततस्तुच्छत्वं, तुच्छमपि च लाभच्छेदात्मकव्यवहारविज्ञतयाऽऽयव्ययतोलनाकुशल एव हातुं शक्त इति वणिग्व्यवहारोदाहरणम्, आयव्ययतोलनाऽपि च

स्युर्लाभो वा न तथाविधस्तदा जयनमपि स्यात्, यदा तु लभमानौ भिक्ष्वगारिणौ दृश्येते लाभश्च देवत्वलक्षण तदा कथमय जानानोऽपि जन्तुर्जीयते ?, अत आह—जीयमानो न सविन्ते, किमुक्त भवति ?—यद्यसौ जीयमानो जानीयात्तदा तदुपायपरतया न जीयेत, यदा त्वसौ विषयव्यामोहतो न जानीते तदा जीयत एवेति किमत्र चित्रम् ? इति सूत्रार्थ ॥ समुद्रदृष्टान्तमाह—

जहा कुसग्गे उदय, समुद्देण सम मिणे । एव माणुस्सगा कामा, देवकामाण अतिए ॥ २३ ॥

व्याख्या—'यथा' इति दृष्टान्तोपन्यासे, कुशो—दर्भविशेषस्तस्याग्र—कोटि कुशाग्र तस्मिन् 'उदक' जल, तत्कि-मित्याह—'समुद्रेण' इति 'तात्स्थ्यात्तद्व्यपदेश' इति न्यायात् समुद्रजलेन 'सम' तुल्य 'मिनुयात्' परिच्छिन्द्यात्, तथा किमित्याह—'एवम्' उक्तनीत्या 'मानुष्यका कामा' मनुष्यसम्बन्धिन कामा—विषया, मानुष्यविशेषण तु तेषामेवोपदेशार्हत्वाद्विशिष्टभोगसम्भवाच्च, 'देवकामाना' दिव्यभोगानाम् 'अन्तिके' समीपे, कृता इति शेष, दूरस्थिताना हि न सम्यगवधारणमित्येवमाह, किमुक्त भवति ?—यथाऽज्ञ कथित् कुशाग्रस्थित जलबिन्दुमालोक्य समुद्रवन्मन्यते, एव मूढाश्चक्रवर्त्यादिमनुष्यकामान् दिव्यभोगोपमान् अध्यवसन्ति, तत्त्वतस्तु कुशाग्रजल-बिन्दोरिव समुद्रा मनुष्यकामाना दिव्यभोगेभ्यो महदेवान्तरमिति सूत्रार्थ ॥ उक्तमेवार्थ निगमयन्नुपदेशमाह—

कुसग्गमित्ता इमे कामा, सन्निरुद्धमि आउए । कस्स हेउ पुरा काउ, जोगक्खेम न सविदे ? ॥ २४ ॥

त्पथप्रस्थितान् विलोक्य सिद्धान्त एव दोष इति तदनपराधित्वमुक्तं, पठ्यते च—'पत्तो णेयाउयं'ति स्पष्टमिति सूत्रार्थः ॥ यस्तु कामेभ्यो निवृत्तस्तस्य गुणमाह—

इह कामा नियट्टस्स, अत्तट्ठे नावरज्झति । पूतिदेहनिरोहेणं, भवे देवेत्ति मे सुयं ॥ २६ ॥

व्याख्या—इह कामेभ्यो निवृत्तः कामनिवृत्तः तस्यात्मार्थः—स्वर्गादिः 'नापराध्यति' न भ्रश्यति, आत्मलक्षणो वाऽर्थो न सापराधो भवति, किं पुनरेवं ?, यतः—पूतिः—कुथितो देहः—अर्थादौदारिकं शरीरं तस्य निरोधः—अभावः पूतिदेहनिरोधः तेन 'भवेत्' स्यात्, प्रक्रतत्वात् कामनिवृत्तो 'देवः' सौधर्म्मादिनिवासी सुरः, उपलक्षणत्वात् सिद्धो वा, 'इती'त्येतत् मया 'श्रुतम्' आकर्णितं, परमगुरुभ्य इति गम्यते, अनेन स्वर्गाद्यवाप्तिः आत्मार्थानपराधे निमित्तमुक्तमिति सूत्रार्थः ॥ ततश्च यदसावाप्नोति तदाह—

इड्ढी जुती जसो वन्नो, आउं सुहमणुत्तरे । भुज्जो जत्थ मणुस्सेसुं, तत्थ से उववज्जति ॥ २७ ॥

व्याख्या—'ऋद्धिः' कनकादिसमुदायः 'द्युतिः' शरीरकान्तिः 'यशः' पराक्रमकृता प्रसिद्धिः 'वर्ण्णः' गाम्भीर्यादिगुणैः श्लाघा गौरादिर्वा 'आयुः' जीवितं 'सुखं' यथेप्सितं विषया( ग्रन्थाग्रम् ७००० )वाप्तावाल्हादः, न विद्यते उत्तरं—प्रधानमस्मादित्यनुत्तरम्, इदं च सर्वत्र योज्यते, 'भूयः' पुनः, देवभवापेक्षमेतत्, तत्रापि ह्यनुत्तराण्येवैतान्यस्य सम्भवन्ति 'यत्र' येषु 'मनुष्येषु' मनुजेषु 'तत्र' तेषु 'से'त्ति सोऽथशब्दार्थो वा, ततोऽनन्तरम् 'उत्पद्यते' जायत इति सूत्रार्थः ॥

कथ कर्तव्येति समुद्रदृष्टान्त , तत्र हि दिव्यकामाना समुद्रजलोपमत्वमुक्त, तथा च तदुपार्जन महानायोऽनुपार्जन तु महान् व्यय इति तत्त्वतो दर्शितमेव भवति ॥ इह च योगक्षेमासवेदने कामानिवृत्त एव भवतीति तस्य दोषमाह—

इह कामानियट्टस्स, अत्तट्ठे अवरज्झति । सुचा नेयाउअ मग्ग, ज भुज्जो परिभस्सति ॥ २५ ॥

व्याख्या—'इह' इति मनुष्यत्वे जिनशासने वा, प्राप्त इति शेष , कामेभ्योऽनिवृत्त —अनुपरत कामानिवृत्त तस्यात्मनोऽर्थ आत्मार्थ —अर्थ्यमानतया स्वर्गादि 'अपराध्यति' अनेकार्थत्वाद्धातुना नश्यति, यद्वा—आत्मैवार्थ आत्मार्थ स एवापराध्यति, नान्य कश्चिदात्मव्यतिरिक्तोऽर्थ सापराधो भवति, उभयत्र दुर्गतिगमनेनेति भावः । आह—विपयवाञ्छाविरोधिनि जिनागमे सति कथ कामानिवृत्तिसम्भव ?, उच्यते, 'श्रुत्वा' आकर्ण्य 'नैयायिक' न्यायोपपन्न 'मार्ग' सम्यग्दर्शनादिक मुक्तिपथ यद् 'भूय' पुनरपि परिभ्रश्यति, कामानिवृत्तित इति शेप , कोऽभिप्राय ?—जिनागमश्रवणात् कामनिवृत्तिं प्रतिपन्नोऽपि गुरुकर्मत्वात् प्रतिपतति, ये तु श्रुत्वापि तदप्रतिपन्ना श्रवण च येपा नास्ति ते कामानिवृत्ता एवेतिभाव । यद्वा—यदसौ कामानिवृत्त सन् श्रुत्वा नैयायिक मार्ग भूय. परिभ्रश्यति—मिथ्यात्व गच्छति तदसात्मार्थ एव गुरुकर्मापराध्यति, अनेन मा भूत्कस्यचिन्मूढस्य सिद्धान्तमधीत्याप्यु

त्यक्त्वा 'बालभावं' बालत्वम् 'अबालं'ति अबालत्वं 'सेवते' अनुतिष्ठति 'मुनिः' यतिरिति सूत्रत्रयार्थः ॥' 'इतिः' परिसमाप्तौ, ब्रवीमीति पूर्ववत्। उक्तोऽनुगमः, सम्प्रति नयाः, तेऽपि प्राग्वदेवेति सूत्रार्थः ॥ इति श्रीशान्त्याचार्यविरचितायामुत्तराध्ययनटीकायामुरभ्रीयमध्ययनं समाप्तम् ॥ ॥ ॥

॥ इति श्रीशान्त्याचार्यविहितशिष्यहितावृत्तियुतमुरभ्रीयाख्यं सप्तममध्ययनं समाप्तम् ॥



एव कामानिवृत्त्या यस्मात्मार्थोऽपराध्यति स वाल इतरस्तु पण्डित इत्यर्थादुक्तम् ॥ सम्प्रति पुनरनयोरेव साक्षात्-स्वरूप फल चोपदर्शयन्नुपदेशमाह—

बालस्स पस्स बालत्तं, अहम्मं पडिवज्जिआ । चिच्चा धम्मं अहम्मिट्ठे, नरएसूववज्जइ ॥ २८ ॥

धीरस्स पस्स धीरत्तं, सव्वधम्माणुवत्तिणो । चिच्चा अधम्मं धम्मिट्ठे, देवेसु उववज्जइ ॥ २९ ॥

तुलिआण बालभावं, अबालं चेव पंडिए । चइऊण बालभावं, अबालं सेवए मुणी ॥ ३० ॥ त्तिबेमि ॥

व्याख्या—'बालस्य' अज्ञस्य 'पश्य' अवधारय 'बालत्वम्' अज्ञत्व, किं तदित्याह—'अधर्म' धर्मविपक्ष विषयासक्तिरूप 'प्रतिपद्य' अभ्युपगम्य, पठ्यते च—'पडिवज्जिणो'त्ति प्रतिपादिनोऽवश्यप्रतिपद्यमानस्य 'त्यक्त्वा' अपहाय 'धर्म' विषयनिवृत्तिरूप सदाचार 'अहम्मिट्ठे'त्ति प्राग्वत् 'नरके' सीमन्तकादावुपलक्षणत्वात् अन्यत्र वा दुर्गतावुत्पद्यते ॥ तथा धी बुद्धिस्तया राजत इति धीर —धीमान् परीषहाद्यक्षोभ्यो वा धीर तस्य 'पश्य' प्रेक्षस्व 'धीरत्व' धीरभाव, सर्वं धर्मं क्षान्त्यादिरूपमनुवर्तते तदनुकूलाचारतया स्वीकुरुत इत्येवशीलो यस्तस्य सर्वधर्मानुवर्तिन ,धीरत्वमेवाह—'त्यक्त्वा' हित्वा अधर्म—विषयाभिरतिरूपमसदाचार 'धम्मिट्ठे'त्ति इष्टधर्म्मा, यद्वा—अतिशयेन धर्मवानिति, इष्ठनि "वि मतोर्लुगि" (पा० ५–३–६५) ति मतुब्लोपे धर्मिष्ठ इति, देवेषूपपद्यत इत्याह ॥ यतश्चैवमतो यद्विधेय तदाह—'तोलयित्वा' इति प्राग्वत् 'बालभाव' बालत्वम् 'अबाल'ति भावप्रधानत्वान्निर्देशस्याबालत्व धीरत्व, 'च' समुच्चये, एवेति प्राकृतत्वादनुस्वारलोप 'एवम्' अनन्तरोक्तप्रकारेण 'पण्डित' बुद्धिमान्

व्याख्या—कपिलायुर्नामगोत्रं 'वेदयन्' अनुभवन् 'भावतः' भावमाश्रित्य भवेत् कपिलः, 'ततः' तस्मात् समुत्थितम् 'इदं' प्रस्तुतम् अध्ययनं 'काविलिज्जं'त्ति कापिलीयमिति, उच्यत इति शेष इति गाथार्थः ॥ कथं पुनरिदं कपिलात्समुत्थितमित्याह—

कोसंवी कासवजसा कविलो सावत्थि इंददत्तो य । इब्भे य सालिभद्दे धणसिट्ठि पसेणई राया ॥२५३॥

कविलो निच्चियपरिवेसिआइ आहारमित्तसंतुट्ठो । वावारिओ(य) दुहि मासेहिं सो निग्गओ रत्तिं ॥२५४॥

दक्खिणणे पत्थंतो बद्धो अ तओ अ अप्पिओ रण्णो । राया से देइ वरं किं देमी केण ते अत्थो ? ॥२५५॥

जहा लाहो तहा लोहो, लाहा लोहो पवड्ढति । दोमासकयं कज्जं, कोडिएवि न निट्ठियं ॥ २५६ ॥

कोडिंपि देमि अज्जेत्ति भणइ राया पहिट्ठमुहवण्णो ।सोऽवि चइऊण कोडिं समणो जाओ समिअपावो२५७

छम्मासे छउमत्थो अट्ठारस जोयणाइ रायगिहे । बलभद्दप्पमुहाणं इक्कडदासाण पंचयमे ॥ २५८ ॥

अइसेसे उप्पण्णे होही अट्ठो इमोत्ति नाऊणं । अद्धाणगमणचित्तं करेइ धम्मट्ठया गीयं ॥ २५९ ॥

आसामक्षरार्थः सुगम एव, नवरं 'निच्चियपरिवेसियाए'त्ति नैत्यिकपरिवेषिकया–प्रतिदिननियुक्तभक्तदात्र्या वावारितो'त्ति व्यापारितो–नियुक्तः 'दुहिं मासेहिं'ति द्वाभ्यां मापकाभ्यां, "तादर्थ्ये चतुर्थी" (वार्त्तिकम्) 'दक्खि-

॥ व्याख्यात उरभ्रीयाख्य सप्तममध्ययन, सम्प्रत्यष्टममारभ्यते, अस्य चायमभिसम्बन्ध —अनन्तराध्ययने रसगृद्धेरपायबहुलत्वमभिधाय तत्त्याग उक्त, स च निर्लोभस्यैव भवतीति इह निर्लोभत्वमुच्यते, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचर्चा प्राग्वद् यावन्नामनिष्पन्ननिक्षेपे कापिलीयमिति नाम, अत कपिलनिक्षेपमाह—

निक्खेवो कविलमी चउविहो दुविहो य दव्वमि। आगमनोआगमओ नोआगमओ य सो तिविहो ॥२५०॥

व्याख्या—'निक्षेप' न्यास 'कपिले' कपिलविषय 'चतुर्विध' चतुष्प्रकारो नामस्थापनाद्रव्यभावभेदात्, तत्राद्यौ प्रतीतौ, 'द्विविध' द्विभेदो भवति 'द्रव्य' इति द्रव्यविषय, द्वैविध्यमेवाह—आगमतो नोआगमतः, तत्रागमतो ज्ञाताऽनुपयुक्तो नोआगमतश्च स 'त्रिविध' त्रिभेद इति गाथार्थ ॥ त्रैविध्यमेवाह—

जाणगसरीरभविए तव्वतिरित्ते य सो पुणो तिविहो। एगभविअबद्धाउअ अभिमुहओ नामगोए अ ॥२५१॥

व्याख्या—कपिलशब्दार्थज्ञशरीर पश्चात्कृतपर्याय ज्ञशरीरमित्युच्यते, तदेव द्रव्यकपिलो, 'भविय'त्ति भव्यशरीर पुरस्कृतकपिलशब्दार्थज्ञतात्मकपर्याय द्रव्यकपिल, तद्व्यतिरिक्तश्च, स तद्व्यतिरिक्तद्रव्यकपिल पुन 'त्रिविधः' त्रिभेद, त्रैविध्यमेवाह—एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्चेति गाथार्थ ॥ भावकपिलमाह—

कविलाउणामगोयं वेयतो भावओ भवे कविलो। तत्तो समुट्ठियमिणं अज्झयणं काविलिज्जंति ॥ २५२ ॥

लए चेव कालगतो, ताधे तंमि मए तं पयं रायणा अण्णस्स मरुयगस्स दिण्णं, सो य आसेण छत्तेण य धरिज्जमाणेण वच्चइ, तं दट्ठूण जसा परुण्णा, कविलेण पुच्छिया, ताए सिट्ठं—जहा पिया ते एवंविहाए इड्ढीए णिगच्छियाइओ, तेण भण्णति—कथं ?, सा भणति—जेण सो विज्जासंपण्णो, सो भणइ—अहंपि अहिज्जामि, सा भणइ—इहं तुमं मच्छरेण ण कोइ सिक्खवेति, वच्च सावत्थीए नयरीए पिइमित्तो इंददत्तो णाम माहणो सो ते सिक्खावेहित्ति । सो गतो तस्स सगासं, तेण पुच्छितो—कओऽसि तुमं ?, तेण जहावत्तं कहियं, सो तस्स सगासे अहिज्जिउं पयत्तो । तत्थ सालिभद्दो णाम इब्भो, सो से तेण उवज्झाएण णेचतियं दवावितो, सो तत्थ जिमितो २ अहिज्जइ, दासचेडी य तं परिवेसेइ । सो य हसणसीलो तीए सद्धिं संपलग्गो, तीए भण्णइ—तुमे मे पीतो, ण य ते किंचिवि, णवरि मा

१ एव कालगतः, तदा तस्मिन् मृते तत्पदं राज्ञाऽन्यस्मै मरुकाय ( ब्राह्मणाय ) दत्तं, स चाश्वेन छत्रेण च ध्रियमाणेन व्रजति, तं दृष्ट्वा यशाः प्ररुदिता, कपिलेन पृष्टा, तया शिष्टं—यथा पिता तवैवंविधया ऋद्ध्या निर्गतवान्, तेन भण्यते—कथम् ?, सा भणति—येन स विद्यासंपन्नः, स भणति—अहमप्यधीये, सा भणति—इह त्वां मत्सरेण न कोऽपि शिक्षयति, व्रज श्रावस्त्यां नगर्यां पितृमित्रमिन्द्रदत्तो नाम ब्राह्मणः स त्वां शिक्षयिष्यतीति । स गतस्तत्सकाशं, तेन पृष्टः—कुतोऽसि त्वं ?, तेन यथावृत्तं कथितं, स तत्सकाशेऽध्येतुं प्रवृत्तः । तत्र शालिभद्रो नाम इभ्यः, अथ स तेन उपाध्यायेन नैत्यिकं दापितः, स तत्र जिमितो २ऽध्येति, दासचेटी च तं परिवेषयति । स च हसनशीलस्तया सार्धं संप्रलग्नः, तया भण्यते—त्वं मे प्रियः, न च तव किञ्चिदपि, नवरं मा

ण'ति प्राकृतत्वाद्दक्षिणा 'पहट्ठमुहवण्ण'त्ति प्रहृष्ट प्रहर्षवान् मुखवर्णो–मुखच्छाया यस्य स तथा, मुखस्य प्रहृष्टत्वादुपचारात्तद्वर्णोऽपि प्रहृष्ट उक्त, यद्वा प्रहृष्टमुखस्येव मुखवर्णो यस्य स तथा, मयूरव्यसकादित्वात् समास, मानसत्वाच्च हर्षादीना मुखस्यापि प्रहृष्टत्व रूढित इति भावनीयम्। 'इक्कडदासाण'ति इक्कडदासजातीनाम् 'अतिशेषे' अतिशये 'होही अट्ठो इमो'त्ति भविष्यति अर्थ–प्रयोजनम् 'अय' पूर्वसङ्गतिकचौरशतपञ्चकप्रतिबोधलक्षण इति ज्ञात्वा च 'अद्धाणगमणचित्त'ति अध्वा–मार्गस्तद्गमने चित्तम्–अभिप्रायोऽध्वगमनचित्त तत्करोतीव करोति, तत्त्वतो हि केवलिनेनामनस्कत्वान तस्याभिप्रायकरणसम्भव, 'धम्मट्ठय'त्ति आर्षत्वाद्धर्मोर्थ–तत्त्वावबोधतस्तेषा धर्म स्यादित्येयमर्थ 'गीय'ति चस्य गम्यमानत्वाद्गीत च–स्वरग्रामानुगतगीतिकानिबद्धमिदमेवाध्ययन करोतीति योग, वर्तमाननिर्देशस्तु सूत्रस्य त्रिकालगोचरतामाह, यदिवा–'गीत'मिति स्वराद्यनुगमनेन शब्दितमिदमिति गम्यते। भावार्थ कथानकादवसेय, तत्र च सम्प्रदाय —

तेण' कालेण तेण समएण कोसवीए णयरीए जितसत्तू राया, कासवो वभणो चोद्दसविज्जाठाणपारगो, रायणो वहुमतो, वित्ती से उवकप्पिया, तस्स जसा णाम भारिया, तेसिं पुत्तो कविलो णाम, कासवो तमि कविले खुड्ड-

१ तस्मिन् काले तस्मिन् समये कौशाम्ब्या नगर्यां जितशत्रू राजा, काश्यपो ब्राह्मण चतुर्दशविद्यास्थानपारग, राज्ञो बहुमत, वृत्तिस्तस्यै उपकल्पिता, तस्य यशा नाम भार्या, तयो पुत्र कपिलो नाम, काश्यपस्तस्मिन् कपिले क्षुल्लक

गर्वणियाए चिंतेउमारद्धो-किं दोहिं मासेहिं साडिगाभरणे पडिवासिगा जाणवाहणाउज्जाणोवभोगा मम वयस्साणं पवागयाण घरं भज्जाचउट्टयं जंचण्णं उवउज्जं ?, एवं जाव कोडीएवि ण ठाएति। चिंततो सुहज्झवसाणो संवेगमावण्णो जाइं सरिऊण सयंबुद्धो सयमेव लोयं काऊण देवयादिण्णगहियायारभंडगो आगतो रायसगासं, रायणा भण्णति-किं चिंतियं ?, सो भणति-'जहा लाभो तहा लोभो' कण्ठ्यः, राया भणति-'कोडिंपि देमि अज्जोत्ति भणति राया पहट्ठमुहवण्णो। सोऽवि चइऊण कोडिं जातो समणो समियपावो ॥१॥ छम्मासा छउमत्थो आसि। इत्तो य रायगिहस्स नयरस्स अंतरा अट्ठारसजोयणाए अडवीए वलभद्दपामोक्खा इक्कडदासा णाम पंच चोरसया अच्छंति, णाणेण जाणियं-जहा ते संबुज्झिस्संति, ततो पट्ठितो संपत्तो य तं पएसं, सोहिएण (साहिएण)य दिट्ठो कोवि एतित्ति आस-

१० कवनिकायां चिन्तयितुमारब्धः-किं द्वाभ्यां मासाभ्यां शाटिकाभरणे प्रतिवेशिका यानवाहनातोद्यानाद्युपभोगा ( नानि उद्यानोपभोगाः ) मम वयस्यानां पर्वागतानां गृहं भार्योपकरणं यच्चान्यत् उपयोज्यम्, एवं यावत् कोट्याऽपि न तिष्ठति। चिन्तयन् शुभाध्यवसानः संवेगमापन्नो जाति स्मृत्वा स्वयंबुद्धो लोचं स्वयमेव कृत्वा देवतादत्तगृहीताचारभाण्डक आगतो राजसकाशं, राज्ञा भण्यते-किं चिन्तितम् ?, स भणति-यथा लाभस्तथा लोभः० ( लाभाल्लोभः प्रवर्धते। द्विमासकनकेनार्थः कोट्या न निवर्त्तते ॥ १ ॥ )। राजा भणति-कोटीमपि ददामि आर्य इति भणति राजा प्रहृष्टमुखवर्णः। सोऽपि त्यक्त्वा कोटीं जातः श्रमणः शमितपापः ॥ १ ॥ षण्मासान् छद्मस्थ आसीत्। इतश्च राजगृहस्य नगरस्य अन्तरा ( अवकाशे ) अष्टादशयोजनायामटव्यां वलभद्रप्रमुखा इक्कडदासा नाम पञ्च चौरशतानि तिष्ठन्ति, ज्ञानेन ज्ञातं-यथा ते संभोत्स्यन्ते, ततः प्रस्थितः प्राप्तश्च तं प्रदेशं, शोधितेन ( शोधकेन ) च दृष्टः कोऽप्येतीत्यास-

रुसिज्जासि, पोत्तमुल्लणिमित्त अहमण्णेहिं २ सम अच्छामि, इयरहाहं तुज्झ आणाभोज्जा ।। अण्णया दासीण महो ढुक्कइ, सा तेण सम णिव्विण्णिया, णिद्द सा न लहइ, तेण पुच्छिया—कतो ते अरती ?, तीए भण्णति—दासीमहो उवट्ठितो, मम पत्तपुप्फाइमोल्ल णत्थि, सहीजणमज्झे विगुप्पिस्स, ताहे सो अधिति पगतो, ताए भण्णति—मा अद्धितिं करेहिं, एत्थ धणोणाम सिट्ठी, अप्पभाए चेव जे ण पढम वद्धावेइ से दो सुवण्णए मासए देइ, तत्थिम गतूण त वद्धावेहि, आमति तेण भणिय । तीए लोभेण मा अण्णो गच्छिहिति अतिपभाए पेसितो, वचतो य आरक्खियपुरिसेहिं गहितो बद्धो य । ततो पभाए पसेणइस्स रण्णो उवणीतो, राइणा पुच्छितो, तेण सब्भावो कहितो, रायणा भणितो—जं मग्गसि त देमि, सो भणति—विचिंतिउ मग्गामि, रायणा तहत्ति भणिए असो-

१ वप , पोतमूल्यनिमित्तमहम यैर् यैः सम तिष्ठामि, इतरथाऽह तवाज्ञाभोज्या । अन्यदा दासीना महो ढौकते, सा तेन सम निर्विण्णा, निद्रा सा न लभते, तेन पृष्टा—कुतस्तेऽरति ?, तया भण्यते—दासीमह उपस्थित , मम पत्रपुष्पादिमूल्य नास्ति, सखीजनमध्ये विजुगुप्स्ये, तदा सोऽधृतिं प्रगतः, तया भण्यते—माऽधृतिं कार्षी , अत्र धनो नाम श्रेष्ठी, अतिप्रभात एव य एन प्रथम वर्धयति तस्मै द्वौ सुवर्णमाषकौ ददाति, तत्रेम गत्वा त्व वर्धापय, ओमिति तेन भणित । तया लोभेन माऽन्यो गम इत्यतिप्रभाते प्रेषित , व्रजन्नारक्षकपुरुषैर्गृहीतो बद्धश्च । ततः प्रभाते प्रसेनजितो राज्ञः उपनीत , राज्ञा पृष्ट , तेन सद्भावः कथितः, राज्ञा भणित —यन्मार्गयसि तद्ददामि, स भणति—विचिन्त्य मार्गयामि, राज्ञा तथेति भणिते अशो-

'जं गिंज्जइ पुव्वं चिय पुण पुणो सव्वकव्वबंधेसु। धुवयंति तमिह तिविहं छप्पायं चउपयं दुपयं ॥१॥" तत्र ध्रुवो-य एकास्पदप्रतिबद्धो न तथाऽध्रुवः तस्मिन्, संसार इति सम्बन्धः, भ्रमन्ति ह्यस्मिन् अनेकेषु उच्चावचस्थानेषु जन्तवः, तेषां क्वचिदनुत्पन्नपूर्वत्वाभावाद्, उक्तं च वाचकैः—"रङ्गभूमिर्न सा काचिच्छुद्धा जगति वर्तते। विचित्रैः कर्मनेपथ्यैर्यत्र सत्त्वैर्न नाटितम् ॥ १ ॥" इति, शाश्वतं-नित्यम् अविद्यमानं शाश्वतमस्मिन्निति अशाश्वतस्तस्मिन्, संसार एव, अशाश्वतं हि सकलमिह राज्यादि, तथा च हारिलवाचकः—'चलं राज्यैश्वर्यं धनकनकसारः परिजनो, नृपाद्वाल्लभ्यं च चलममरसौख्यं च विपुलम्। चलं रूपाऽऽरोग्यं चलमिह चरं जीवितमिदं, जनो दृष्टो यो वै जनयति सुखं सोऽपि हि चलः ॥१॥" यद्वा-ध्रुवो-नित्यो न तथाऽध्रुवस्तस्मिन्, एवं च कियत्कालावस्थायित्वमप्याशङ्क्येत अत आह—शश्वद्भवनाच्छाश्वतः न तथाऽशाश्वतस्तस्मिन्, शश्वद्भवने हि द्व्यादिक्षणावस्थितिरपि सम्भवेत्, तन्निषेधे तु तस्या अपि निषेधात्पर्यायार्थतया तडित्सम्पातवत् क्षणमात्रावस्थायिनीत्युक्तं भवति, एकार्थं वा पदद्वयम्, उपदेशत्वादतिशयख्यापकत्वाच्च न पौनरुक्त्यं, क्व पुनः ईदृशि ?–संसरन्त्यस्मिन् कर्मवशवर्तिनो जन्तव इति संसारस्तस्मिन्, 'दुक्खपउराए'त्ति प्रचुराण्येव प्रचुरकाणि-प्रभूतानि दुःखानि शारीरमानसानि यस्मिन् स तथा तस्मिन्, प्राकृतत्वाच्च सूत्रे एवं निर्देशः, यद्वा दुःखानां प्रचुरः आयो-लाभो यस्मिन् स तथा तस्मिन्, 'किं'मिति प्रश्ने ? 'नामे'ति संभावनायां वाक्यालङ्कारे

१ गद्यीयते पूर्वमेव पुनः पुनः सर्वकाव्यबन्धेषु। ध्रुवकमिति तदिह त्रिविधं षट्पदं चतुष्पदं द्विपदं (च) ॥ १ ॥

ऽणीभूतो, नाओ जहा समणगोत्ति, अम्ह परिभविउ आगच्छति, रोसेण च गहितो सेणावइसमीव णीतो, तेण भण्णति –मुयह एयति, ते भणति–खेलामो एतेणति, तेहि भण्णति–नचसु समणगोत्ति, सो भणइ–वायतगो णत्थि, ताहे ताणवि पचवि चोरसयाणि ताले कुट्टेति, सोऽवि गायति धुवग, "अधुवे असासयमी, ससारमि दुक्खपउराए। किं णाम त होज्ज कम्मय ? जेणाह दुग्गइ ण गच्छेज्जा ॥१॥" एव सघरथ सिलोग तरे धुवग गायति 'अधुवेत्यादि,' तत्थ केइ पढमसिलोगे सबुद्धा, केइ बीए, एव जाव पचवि सया सबुद्धा पव्वतियत्ति।

इत्यभिहित सम्प्रदायोऽवसितश्च नामनिष्पन्नो निक्षेप, सम्प्रति सूत्रानुगमेऽस्खलितादिगुणोपेत सूत्रमुच्चारणीय, तच्चेदम्—

अधुवे असासयमि ससारमि दुक्खपउराए। किं नाम होज्ज त कम्मय? जेणाह दुग्गइ न गच्छेज्जा॥ १ ॥

व्याख्या—स हि भगवान् कपिलनामा स्वयबुद्धश्चौरसङ्घातसम्बोधनायेम ध्रुवकं सङ्गीतवान्, ध्रुवकलक्षणं चेदम्—

१० श्रीभूत, ज्ञातो यथा श्रमणक इति, अस्मान् पराभवितुमागच्छति, रोषेण च गृहीत सेनापतिसमीप नीत, तेन भण्यते–मुञ्चत मिति, ते भणन्ति–क्रीडाम एतेनेति, तैर्भण्यते–नृत्य श्रमणेति, स भणति–वादको नास्ति, तदा तान्यपि पञ्चापि चौरशतानि तालान् कुट्टय न्ति, सोऽपि गायति ध्रुवकम्–अध्रुवे अशाश्वते ससारे प्रचुरदु खे। किं नाम तद्भवेत्कर्म ? येनाह दुर्गतिं न गच्छेयम् ॥१॥ एव सर्वत्र श्लोका न्तरे ध्रुवक गायति अधुवेत्यादि, तत्र केचित् प्रथमश्लोके सबुद्धा केचिद्द्वितीये, एव यावत्पञ्चापि शतानि सबुद्धानि प्रव्रजिता इति।

रिति साधुः, पाठान्तरतश्च 'दोषप्रदोषैः' तत्र दोषैः—इहैव मनस्तापादिभिः प्रदोषैश्च—परत्र नरकगत्यादिभिरिति सूत्रार्थः ॥ पुनर्यदसौ कृतवांस्तदाह—

तो नाणदंसणसमग्गो हियनिस्सेसाए य सव्वजीवाणं। तेसिं विमोक्खणट्ठाए भासइ मुणिवरो विगयमोहो ३

व्याख्या—'तो'त्ति ततोऽनन्तरं, भाषते मुनिवर इति सम्बन्धः, स च कीदृग् ?—ज्ञायतेऽनेन विशेषात्मना वस्त्विति ज्ञानं, दृश्यतेऽनेन सामान्यरूपेण वस्त्विति दर्शनं, ताभ्यां प्रस्तावात् केवलाभ्यां समग्रः—समन्वितः, यदिवा प्राकृतत्वात्समग्रे—परिपूर्णे ज्ञानदर्शने यस्यासौ समग्रज्ञानदर्शनः, किमर्थमसौ भाषत इत्याह—'हियणिस्सेसाए' इति सूत्रत्वात् हितः—पथ्यो भावाऽऽरोग्यहेतुत्वात् निःश्रेयसो—मोक्षः, हितश्चासौ निःश्रेयसश्च हितनिःश्रेयसस्तस्मै, यद्वा प्राकृतत्वादेव निश्शेषं—समस्तं हितं—सम्यग्ज्ञानादि, तस्यैव तत्त्वतो हितत्वात्, ततो निश्शेषं च तद्धितं च निश्शेषहितं तस्मै, कथं नाम निश्शेषहितावाप्तिः स्यादिति, चशब्दो भिन्नक्रमः, तेषामित्यत्र योज्यते, केषाम् ?—'सर्वजीवानाम्' अशेषप्राणिनां 'तेषां' च पञ्चशतसङ्ख्यचौराणां विमोक्षणम्—अष्टविधकर्मणः पृथक्करणं तदेवार्थः—प्रयोजनं विमोक्षणार्थस्तस्मै—तन्निमित्तं, भाषते इति वर्तमाननिर्देशः प्राग्वत्, यद्वा—'भवति स नामातीतः प्राप्तो यो नाम वर्तमानत्व'मितिवचनात् तस्यापि तदा वर्तमानतैवेति तत्कालत्वस्य विवक्षितत्वान्न दोषः, 'मुनिवरः' मुनिप्रधानः, विगतो—विनष्टो मोहो यस्य यस्माद्वा स तादृक्। इह च विगतमोहवचनेन चारित्रमोहनीयाभावतो यथाख्यात-

था 'भवेत्' स्यात् तत् क्रियत इति कर्म तदेव कर्मकम्-अनुष्ठान, यत् कीदृगित्याह—येन कर्म्मणा 'हेतौ (पा० २-३ २३) तृतीया' अहमित्यात्मान निर्दिशति, 'दुर्गति' नरकादिका 'ण गच्छेज्ज'त्ति न गच्छेय-न याया, पठन्ति च—'जेणाध दुग्गईतो मुचेज्ज'त्ति सुगमम्, अत्र भगवतश्छिन्नसशयत्वेऽपि मुक्तिगामितया दुर्गत्यसत्त्वेऽपि च प्रतिबोध्यपूर्वसङ्गतिकापेक्षमित्थमभिधान, नागार्जुनीयास्तु प्रथमपदमेव पठन्ति-'अधुवमि मोहगहणए' तत्र मुह्यतेऽनेन जानन्नपि जन्तुरिति मोहो-दर्शनमोहनीयादि तेन गहनो-गुपिलो मोहगहन स एव मोहगहनकस्तस्मिन्निति सूत्रार्थ ॥ एव च भगवतोद्गीते तेऽप्येनमेव ध्रुवक प्रत्युद्गायन्ति ताल च कुट्टयन्ति, तैश्च प्रत्युद्गीते भगवानाह—

विजहित्तु पुव्वसजोग न सिणेह कहिंचि कुव्विज्जा । असिणेह सिणेहकरेहिं दोसपओसेहिं मुचई भिक्खू ॥२॥

व्याख्या—'विहाय' विशेषेण-तदननुस्मरणाद्यात्मकेन हित्वा-त्यक्त्वा, कमित्याह-पुरा परिचिता मातृपित्रादय पूर्वशब्देनोच्यन्ते ततस्तै, उपलक्षणत्वादन्यैश्च स्वजनधनादिभि सयोग-सम्बन्ध पूर्वसयोगस्त, तत किमित्याह-न 'स्नेहम्' अभिष्वङ्ग क्वचिद्बाह्येऽभ्यन्तरे वा वस्तुनि 'कुविज्ज'त्ति कुर्वीत, तथा च को गुण इत्याह-'असिणेह'त्ति प्राकृतत्वाद्विसर्जनीयलोपेऽस्नेह -अविद्यमानप्रतिबन्ध, 'सिणेहकरेहिं'ति सुब्व्यत्ययादपेर्गम्यमानत्वाच्च स्नेहकरेष्वपि -स्नेहकरणशीलेष्वपि पुत्रकलत्रादिषु, आस्तामन्येष्वित्यपिशब्दार्थ, 'दोषपदे' अपराधस्थाने 'मुच्यते'त्यज्यते, किमुक्त भवति ?-निरतिचारचारित्रो भवति, अमुक्तस्नेहो हि कलत्राद्यभिष्वङ्गात् दोषपदमतिचाररूपमाप्नुयाद्, 'भिक्षु'-

व्याख्या—भुज्यन्त इति भोगाः—मनोज्ञाः शब्दादयः ते च ते आमिषं चात्यन्तगृद्धिहेतुतया भोगामिषं तदेव दूषयत्यात्मानं दुःखलक्षणविकारकरणेन भोगामिषदोषस्तस्मिन् विशेषेण सन्नो—निमग्नो भोगामिषदोषविषण्णः, यद्वा—भोगामिषस्य दोषा भोगामिषदोषाः ते च तदासक्तस्य विचित्रक्लेशा अपत्योत्पत्तौ च तत्पालनोपायपरतया व्याकुलत्वादयस्तैर्विषण्णो—विषादं गतो भोगामिषदोषविषण्णः, आह च—"जया य कुकुडुंवस्सा, कुतत्तीहिं विहम्मइ । हत्थीव बंधणे बद्धो, स पच्छा परितप्पइ ॥१॥ पुत्तदारपरिकिण्णो, मोहसंताणसंततो । पंकोसण्णो जहा णागो, स पच्छा परितप्पति ॥ २ ॥"त्ति । 'हियणिस्सेसबुद्धिवोचत्थे'त्ति हितः—एकान्तपथ्यो निःश्रेयसो—मोक्षः अनयोः कर्मधारये हितनिःश्रेयसः,—यद्वा हितो—यथाभिलाषितविषयावाप्त्याऽभ्युदयः निःश्रेयसः स एव तयोर्द्वन्द्वः, ततश्च तत्र तयोर्वा 'बुद्धिः' तत्प्राप्त्युपायविषया मतिः तस्यां विपर्ययवान् सा वा विपर्यस्ता यस्य स हितनिःश्रेयसबुद्धिविपर्यस्तः विपर्यस्तहितनिःश्रेयसबुद्धिर्वा, विपर्यस्तशब्दस्य तु परनिपातः प्राग्वत्, यद्वा विपर्यस्ता हिते निःशेषा बुद्धिर्यस्य स तथा, बालश्च—अज्ञः 'मंदिए'त्ति सूत्रत्वान्मन्दो—धर्मकार्यकरणं प्रत्यनुद्यतः 'मूढो' मोहाकुलितमानसः, स एवंविधः किमित्याह—'वध्यते' श्लिष्यतेऽर्थाज्ज्ञानावरणादिकर्म्मणा मक्षिकेव 'खेले' श्लेष्मणि, रजसेति गम्यते, इदमुक्तं भवति—

१ यदा च कुकुटुम्बस्य कुतप्तिभिर्विहन्यते । हस्तीव बन्धने बद्धः स पश्चात्परितप्यते ॥ १ ॥ पुत्रदारपरिकीर्णो मोहसंतानसंततः । पङ्कावसन्नो यथा नागः स पश्चात्परितप्यते ॥ २ ॥

चारित्रमुक्त। ननु 'हियणिस्सेसाए य सबजीवाण' तीत्युक्तौ 'तेसिं विमोक्खणट्ठाए' इत्यतिरिच्यते, न, तानेवोद्दिश्यास्य भगवत प्रवृत्तिरिति प्रधानत्वात् पुनस्तद्विमोक्षणार्थताऽभिधान, दृश्यते हि—'ब्राह्मणा आयाता वशिष्ठोऽप्यायात' इति सामान्योक्तावपि पुन प्रधानस्याभिधानमिति सूत्रार्थ ॥ यदसौ भाषते तदाह—

सव्व गथ कलह च विप्पजहे तहाविह भिक्खू। सव्वेसु कामजाएसु पासमाणो न लिप्पई ताई ॥ ४॥

व्याख्या—'सर्वम्' अशेष 'ग्र थ' बाह्यमाभ्य तर च, तत्र बाह्य धनादि, आभ्य तर मिथ्यात्वादि, कलहहेतुत्वात्कलह-क्रोधस्त, चशब्दान्मानादींश्च, अभ्य तरग्र थरूपत्वेऽपि चैषा पृथगुपादान बहुदोषख्यापनार्थ, 'विप्पजहे'त्ति विप्रजह्यात्-परित्यजेत् 'तथाविध'मिति कर्मबन्धहेतु, न तु धर्मोपकरणमपीत्यभिप्राय, पाठान्तरतश्च—तथाविधो, 'भिक्षु' यतिस्तस्यैवैवंविधधर्म्माईत्वादेवमभिधानम्, अन्योक्त्या वा त एवैवमुच्यन्ते, ततश्च किं स्यादित्याह—'सर्वेषु' अशेषेषु 'कामजातेषु' मनोज्ञशब्दादीना प्रकारेषु समूहेषु वा 'पासमाणो'त्ति पश्यन् प्रेक्षमाणो, विपाककटुकात्मक तद्विषय दोषमिति गम्यते, न 'लिप्यते' कर्म्मणा नोपदिह्यते, कामदोषज्ञस्य तेषु प्राय प्रवृत्तेरभावादिति भाव, तायते त्रायते वा रक्षति दुर्गतेरात्मानम् एकेन्द्रियादिप्राणिनो वाऽवश्यमिति तायी त्रायी वेति सूत्रार्थ ॥ इत्थ ग्र थत्यागिनो गुणमभिधाय व्यतिरेके दोषमाह—

भोगामिसदोसविसन्ने हियनिस्सेयसबुद्धिवोच्चत्थे। बाले य मंदिए मूढे बज्झइ मच्छिया व खेलम्मि ॥ ५॥

१ विपज्जत्थे प्र०

च—'जे तरंति वणिया व समुद्द'मिति, स्पष्टम्, उक्तं च केनचित्—"विषयगणः कापुरुषं करोति वशवर्त्तिनं न सत्पुरुषम्। बध्नाति मशकमेव हि लूतातन्तुर्न मातङ्गम् ॥१॥" इति सूत्रार्थः ॥ किं सर्वेऽपि साधवोऽतरं तरन्ति उत नेत्याह—

समणा मु एगे वदमाणा पाणवहं मिया अजाणंता । मंदा निरयं गच्छंति बाला पावियाहिं दिट्ठीहिं ॥ ७॥

व्याख्या—श्राम्यन्ति–मुक्त्यर्थं खिद्यन्त इति श्रमणाः–साधवः 'मु' इत्यात्मनिर्देशार्थत्वाद्वयमिति 'एके' केचन तीर्थान्तरीयाः 'वदमानाः' स्वाभिप्रायमुद्दीपयन्तो 'भासनोपसम्भाषाज्ञानयत्नविमत्युपनिमन्त्रणेषु वदः' (पा० १-३-४७) इत्यनेन भासने आत्मनेपदं, प्राणा–उक्तरूपास्तेषां वधो–घातस्तमजानन्त इति सम्बन्धः, मृगा इव मृगाः प्राग्वत्, अजानन्त इति ज्ञपरिज्ञया के प्राणिनः ? के च तेषां प्राणाः ? कथं वा वधः ? इत्यनवबुध्यमानाः प्रत्याख्यानपरिज्ञया च तद्वधमप्रत्याचक्षाणाः, अनेन च प्रथमव्रतमपि न विदन्ति आस्तां शेषाणीत्युक्तं भवति, अत एव मन्दा इव मन्दा मिथ्यात्वमहारोगग्रस्ततया 'निरयं' पाठान्तरतो 'नरकं वा' प्रतीतं गच्छन्ति–यान्ति, बाला इव बाला–हेयोपादेयविवेकविकलत्वात् 'पावियाहिं'ति प्रापयन्ति नरकमिति प्रापिकास्ताभिः, यद्वा–पापा एव पापिकास्ताभिः, परस्परविरोधादिदोषात् स्वरूपेणैव कुत्सिताभिः, 'न हिंस्यात् सर्वभूतानी'त्याद्यभिधाय 'श्वेतं छागमालभेत वायव्यां दिशि भूतिकाम' इत्यादिपरस्परविरुद्धार्थाभिधायिनीभिः, पापहेतुभिर्वा पापिकाभिर्दृष्टिभिः–दर्शनाभिप्रायरूपाभिः 'ब्रह्मणे ब्राह्मणमालभेत, इन्द्राय क्षत्रियं, मरुद्भ्यो वैश्यं, तपसे शूद्रं, तथा च–'यस्य बुद्धिर्न लिप्येत, हत्वा सर्वमिदं जगत्।

यथाऽसौ तत्स्निग्धतागन्धादिभिराकृष्यमाणा तत्र मज्जति, मग्ना च रेण्वादिना बध्यते, एव जन्तुरपि भोगामिषे मग्न कर्म्मणेति सूत्रार्थ ॥ ननु यद्येवममी भोगा कर्म्मबन्धकारण किं नैतान् सर्वेऽपि ज तवस्त्यज तीत्याह—

दुप्परिचया इमे कामा नो सुजहा अधीरपुरिसेहिं। अह सति सुव्वया साहू जे तरति अतर वणिया व ॥६॥

व्याख्या—दु खेन–कृच्छ्रेण परित्यज्य ते–परिह्रियन्त इति दुष्परित्यजा 'इमे' प्रत्यक्षत उपलभ्यमाना 'कामा' भोगा 'नो' नैव 'सुजह'त्ति सूत्रत्वात् सुखेन-अनायासेन हीयन्त इति सुहाना –सुत्यजा, विषसम्पृक्तस्निग्धमधुरान्नवद्, कै ?–'अधीरपुरुषै' अबुद्धिमद्भिरसत्त्वैर्वा नरै, पुरुषग्रहण तु ये तावदल्पवेदोदयतया सुखेनैव त्यक्तार सम्भवन्ति तैरप्यमी न सुखेन त्यज्य ते, आस्तामतिदारुणस्त्रीषण्डकवेदोदयाऽऽकुलितै स्त्रीनपुसकैरिति। यच्चेह दुष्परित्यजा इत्युक्त्वा पुनर्न सुहाना इत्युक्त तदत्य तदुस्त्यजताख्यापक प्रपञ्चितज्ञविनेयानुग्राहक चेति अपुनरुक्तमेव, अधीरग्रहणेन तु धीरै सुत्यजा एवेत्युच्यते, अत एवाह–'अथ' इत्युपन्यासे 'सन्ति' विद्य ते शोभनानि सम्यग्ज्ञानाधिष्ठितत्वेन व्रतानि–हिंसाविरमणादीनि येषा ते सुव्रता, शान्त्या चोपलक्षिता सुव्रता शान्तिसुव्रता, इह च सन्तीति शेष, साधयन्ति पौरुषेयीभि क्रियाभिर्मुक्तिमिति साधव, ये किमित्याह–ये 'तरन्ति' परपाराबास्याऽतिक्रामन्ति, कम् ?–'अतर' तरीतुमशक्य विषयगण भव वा, क इव ?–वणिज इव, वाशब्दस्येहेवार्थत्वात्, यथा हि वणिजोऽतर नीरधिं यानपात्रादिनोपायेन तरन्ति एवमेतेऽपि धीरा व्रतादिनोक्तरूपमतरम्, अधीरैरेवोक्तनीतितोऽस्य दुस्तरत्वात्, पठन्ति

व्याख्या—'पाणे य णातिवाएज्ज'त्ति चशब्दो व्यवहितसम्बन्धः, ततश्च प्राणान्–इन्द्रियपञ्चकादीन् नातिपातयेत्, यस्त्विति गम्यते, चशब्दात् कारणानुमत्योरपि निषेधः, मृषावादादिनिवृत्त्युपलक्षणं चैतत्, किमिति प्राणान्नातिपातयेदित्याह—'से'त्ति यः प्राणान्नातिपातयिता स 'समितः' समितिमान् इति 'उच्यते' अभिधीयते, कीदृशः सन् ? इत्याह—'त्रायी' इत्यवश्यं प्राणित्राता, समितत्वेऽपि को गुणः ?, उच्यते—'ततः' इति तस्मात् समितात् 'से' इत्यथ 'पापकम्' अशुभं 'कर्म्म' ज्ञानावरणादि 'निर्याति' निर्गच्छति, पठन्ति च—'णिण्णाइं'त्ति अत्र देशीपदत्वादधोगच्छति, किमिव ?–उदकमिव, कुतः ?–'स्थलात्' अत्युन्नतप्रदेशात्, अनेन च पूर्वबद्धस्य कर्म्मणोऽभाव उक्तः, न लिप्यते त्रायीति च बद्धमानस्येति न पौनरुक्त्यं, पापग्रहणं चास्यावश्यंतयाऽभावख्यापकं, पुण्यस्य हि संहननादिदोषान्मुक्त्यनवाप्तेर्देवाद्युत्पत्तौ सम्भवोऽपि स्यात्, अन्यथा हि पुण्यस्यापि स्वर्णनिगडप्रायतया विनिर्गम एव विनिर्मुक्तिरिति सूत्रार्थः ॥ यदुक्तं–'प्राणान्नातिपातयेदि'ति तदेव स्पष्टयितुमाह—

जगनिस्सिएहिं भूएहिं तसनामेहिं थावरेहिं च । नो तेसिमारभे दंडं मणसावयसाकायसा चेव ॥ १० ॥

व्याख्या—जगत्–लोकस्तस्मिन् निश्रितानि–आश्रितानि जगन्निश्रितानि तेषु 'भूतेषु' जन्तुषु 'तसनामेसु'त्ति त्रसनामकर्म्मोदयवत्सु द्वीन्द्रियादिषु 'स्थावरेषु' तन्नामकर्म्मोदयवर्त्तिषु पृथिव्यादिषु, चः समुच्चये, 'नो' नैव 'तेसिं'ति तेषु रक्षणीयत्वेन प्रतीतेषु 'आरभेत' कुर्यात् दण्डनं दण्डः स चेहातिपातात्मकस्तं, 'मणसावयसाकायसा चेव'

आकाशमिव पङ्केन, न स पापेन लिप्यते ॥ १ ॥' इत्यादिकाभिर्दयादमबहिष्कृताभि, तद्बहिष्कृताना हि विविधवल्कलवेषादिधारिणामपि न केनचित्पापात् परित्राण, तथा च वाचक—"चर्म्मवल्कलचीराणि, कूर्चमुण्डजटाशिखा । न व्यपोहन्ति पापानि, शोधकौ तु दयादमौ ॥ १ ॥" इति सूत्रार्थ ॥ अत एवाह सूत्रकृत्—

न हु पाणवह अणुजाणे मुच्चेज्ज कयाइ सव्वदुक्खाण। एवमारिएहिमक्खाय जेहिं इमो साहुधम्मो पन्नत्तो ८

व्याख्या—'न हु' नैव 'प्राणवध' प्राणघात, मृषाद्युपलक्षण चैतत्, 'अणुजाणे'त्ति अपिशब्दस्य लुप्तनिर्दिष्टत्वात् अनुजानन्नपि, आस्ता कुर्वन् कारयन् वा, 'मुच्येत'त्यज्येत, सम्भावने लिङ् (ङ्), ततो मुक्तिसम्भावनाऽपि नास्तीत्युक्त भवति, 'कदाचित्' कस्मिंश्चिदपि काले, कैर्मुच्येत? इत्याह—'सव्वदुक्खाण'ति दु खय तीति दु खानि कर्म्माणि सर्वाणि च तानि दु खानि च सर्वदु खानि तै, सुब्व्यत्ययाच्च तृतीयार्थे षष्ठी, यद्वा सर्वदु खै नरकादिगतिभाविभि शारीरमानसै क्लेशै, तत [redacted] प्राणातिपातनिवृत्ता एव श्रमणास्त एव चातर तर ति न त्वितर इत्युक्त भवति, किमेतत् स्वयैवोच्यते? इत्याह—'एवारिएहिं'ति 'एवम्' उक्तप्रकारेणाऽऽर्यै—सकलहेयधर्मेभ्यो दूर यातैस्तीर्थकरादिभिराचार्यैर्वा आख्यात—कथित, ये कीदृश इत्याह—'यै' आर्यैराचार्यैर्वाऽय 'साधुधर्म्मो' हिंसानिवृत्त्यादि 'प्रज्ञप्त' प्ररूपित, अयमित्यनेन चात्मनि वर्तमान तेषा प्रज्ञाप्यचौराणा प्रत्यक्ष साधुधर्म निदिशतीति सूत्रार्थ ॥ यद्येव तत कि कृत्यम्? इत्याह—

पाणे य नाइवाइज्जा से समियत्ति वुच्चई ताई। तओ से पावय कम्म निज्जाइ उदग व थलाओ ॥ ९ ॥

एतासु च शुद्धैपणाः पञ्च, जिनकल्पिकापेक्षमेतत्, उक्तं हि तदधिकारे–पंचसु गहो दोसु अभिग्गहो'त्ति, एताश्च 'ज्ञात्वा' अवबुध्य, किमित्याह–'ज्ञानस्य फलं विरति'रिति 'तत्रे'त्येपणासु 'स्थापयेत्' निवेशयेत्, भिक्षत इत्येवं-धर्म्मा तत्साधुकारी चेति भिक्षुः सन् 'आत्मानं' स्वं, किमुक्तं भवति ?–अनेपणापरिहारेणैपणाशुद्धमेव गृह्णीयात्, तदपि किमर्थमित्याह–'जायाए'त्ति यात्रायै संयमनिर्वहणनिमित्तं 'घासं'ति ग्रासमेपयेद्–गवेपयेत्, उक्तं हि–"जह सगडक्खोवंगो कीरति भरवहणकारणा णवरं। तह गुणभरवहणत्थं आहारो बंभयारीणं॥ १ ॥"ति, एपणाशुद्धमप्या-दाय कथं भोक्तव्यमिति ग्रासैपणामाह–रसेपु–स्निग्धमधुरादिपु गृद्धो–गृद्धिमान् रसगृद्धो 'न स्यात्' न भवेत्, 'भिक्खाए'त्ति भिक्षादो भिक्षाको वा, अनेन रागपरिहार उक्तः, द्वेपपरिहारोपलक्षणं चैतत्, ततश्च रागद्वेपर-हितो भुञ्जीतेत्युक्तं भवति, यदुक्तम्—"रागदोसविमुक्तो भुंजेज्जा णिज्जरापेही"ति, सूत्रगर्भार्थः ॥ अगृद्धश्च रसेपु यत्कुर्यात्तदाह—

पंताणि चेव सेविज्जा सीयपिंडं पुराणकुम्मासं। अदु वुक्कसं पुलागं वा जवणट्ठा निसेवए मंथुं ॥ १२ ॥

व्याख्या—'प्रान्तानि' नीरसानि, अन्नपानानीति गम्यते, चशब्दादन्तानि च, एवोऽवधारणे, स च भिन्नक्रमः



१ पञ्चसु ग्रहो द्वयोरभिग्रह इति। २ यथा शकटाक्षोपाङ्गः क्रियते भारवहनकारणात् नवरम्। तथा गुणभरवहनार्थमाहारो ब्रह्मचारि-णाम्। ३ रागद्वेपविमुक्तो भुञ्जीत निर्जराप्रेक्षी।

त्ति आर्षत्वात् मनसा वचसा कायेन, चशब्द शेषभङ्गोपलक्षक , ततश्च–यथा मनसा वचसा कायेन च दण्ड नारभते तथा नाऽऽरम्भयेत् न चारभमाणानप्यन्याननुमन्येत, 'एव ' अवधारणे भिन्नक्रमश्च, अत एव नो इत्यस्यानन्तर योजित , पठ्यते च—'जगणिस्सियाण भूयाण, तसाण थावराण य । णो तेसिमारभे दंड'त्ति गतार्थमेव, अपरे तु 'जगणिस्सिएही'त्यादि तृतीयान्ततयैवाधीयते, तत्र च जगन्निश्रितैर्भूतैस्त्रसै स्थावरैश्च हन्यमानोऽपीति शेष , नैव तेष्वारभेत दण्डम् , उज्जयनीश्रावकपुत्रवत् , अत्र च सम्प्रदाय –उज्जेणीए सावगसुतो चोरेहिं हरिउ मालवके सूयगारस्स हत्थे विक्कीतो, लावगे मारयसु, ण मारयामीति हत्थीपादत्तासणसीसारक्खण करण चेति । स एव प्राणत्यागेऽपि सत्त्वानपरोधी, एवमन्यैरपि यतितव्यमिति सूत्रार्थ ॥ उक्ता मूलगुणा , सम्प्रत्युत्तरगुणा वाच्या , तेष्वप्येषणासमिति प्रधानेति तामाह—

सुद्धेसणा उ णच्चा ण तत्थ ठवेज्ज भिक्खू अप्पाण । जाताए घासमेसिज्जा रसगिद्धे न सिया भिक्खाए ११

व्याख्या—शुद्धा –शुद्धिमत्यो दोषरहिता इत्यर्थ , ताश्च ता एषणाश्च–उद्गमैषणाद्या शुद्धैषणा ,एषणा सप्त संसृष्टाद्या , तद्यथा–'संसट्ठमससट्ठा उद्धड तह अप्पलेवडा चेव। उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिय॥१॥'त्ति

१ उज्जयिन्या श्रावकसुतश्चौरैर्हृत्वा मालवके सूपकाराणा हस्ते विक्रीत , पारापतान् मारय, न मारयामीति हस्तिपादत्रासन शीर्षो रक्षण करण च । २ संसृष्टाऽससृष्टोद्धृता तथाऽल्पलेपा चैव। अवगृहीता प्रगृहीतोज्झितधर्मा च सप्तमिका ॥ १ ॥

व्याख्या—'ये' इति प्राग्वत्, 'लक्षणं च' शुभाशुभसूचकं पुरुषलक्षणादि, रूढितः तत्प्रतिपादकं शास्त्रमपि लक्षणं, तद्यथा—अस्थिष्वर्थाः सुखं मांसे, त्वचि भोगाः स्त्रियोऽक्षिषु। गतौ यानं स्वरे चाज्ञा, सर्वं सत्त्वे प्रतिष्ठितम् ॥ १ ॥ 'स्वप्नं चे'त्यत्रापि रूढितः स्वप्नस्य शुभाशुभफलसूचकं शास्त्रमेव, तद्यथा—'अलङ्कृतानां द्रव्याणां, वाजिवारणयोस्तथा। वृषभस्य च शुक्लस्य, दर्शने प्राप्नुयाद्यशः ॥ १ ॥ मूत्रं वा कुरुते स्वप्ने, पुरीषं चापि लोहितम्। प्रबुध्येत तदा कश्चिल्लभते सोऽर्थनाशनम् ॥ २ ॥' 'अंगविज्जं च'त्ति अङ्गविद्यां च शिरःप्रभृत्यङ्गस्फुरणतः शुभाशुभसूचिकां 'सिरफुरणे किर रज्जं' इत्यादिकां विद्यां, प्रणवमायाबीजादिवर्णविन्यासात्मिकां वा, यद्वा—अङ्गानि—अङ्गविद्याव्यावर्णितानि भौमान्तरिक्षादीनि विद्या 'हलि! २ मातङ्गिनी स्वाहा' इत्यादयो विद्यानुवादप्रसिद्धाः, ततश्चाङ्गानि च विद्याश्चाङ्गविद्याः, प्राग्वद् वचनव्यत्ययः, 'चः' सर्वत्र वाशब्दार्थः, ये प्रयुञ्जते—व्यापारयन्ति, पुनर्ये इत्युपादानं लक्षणादिभिः पृथक् सम्बन्धसूचनार्थं, ततश्च प्रत्येकमपि लक्षणादीनि ये प्रयुञ्जते, न तु समस्तान्येव, ते किमित्याह—'न हु' नैव 'ते' एवंविधाः 'श्रमणाः' साधवः 'उच्यन्ते' प्रतिपाद्यन्ते, इह च पुष्टालम्बनं विनैतद्व्यापारणत एवमुच्यते, अन्यथा करवीरलताभ्रामकतपस्विनोऽप्येवंविधत्वापत्तेः, एवमार्यैः आचार्यैर्वा 'आख्यातं' कथितम्, अनेन यथावस्थितवस्तुवादितयाऽऽत्मनि परापवाददोषं व्यपोहत इति सूत्रार्थः ॥ ते चैवंविधा यदवाप्नुवन्ति तदाह—

इह जीवियं अनियमित्ता पब्भट्ठा समाहिजोगेहिं। ते कामभोगरसगिद्धा उववज्जंति आसुरे काए ॥ १४ ॥

सेविज्जा इत्यस्मान तर द्रष्टव्य , ततश्च प्रा ताम्य तानि च सेवेतैव न त्वसाराणीति परिष्ठापयेद्, गच्छनिर्गतापे क्षया वा प्रा तानि चैव सेवेत, तस्य तथाविधानामेव ग्रहणानुज्ञानात्, कानि पुनस्तानीत्याह—'सीयपिंड'ति शीतल पिण्ड –आहार , शीतश्चासौ पिण्डश्च शीतपिण्डस्त, शीतोऽपि शाल्यादिपिण्ड सरस एव स्यात् अत आह— 'पुराणा' प्रभूतवर्षधृता 'कुल्मापा' राजमापा , एते हि पुराणा अत्यन्तपूतयो नीरसाश्च भवन्तीत्येतद्ग्रहणम्, उपलक्षण चैतत् पुराणमुद्गादीना, 'अदु' इति अथवा 'बुकस' शुद्गमापादिनखिकानिष्पन्नमन्नमतिनिपीडितरस वा 'पुलाकम्' असार वल्लचनकादि, वा समुच्चये, 'जवणट्ठ'त्ति यापनार्थं–शरीरनिर्वाहणार्थं, वा समुच्चये, उत्तरत्र योक्ष्यते, 'सेवए'त्ति सेवेतोपभुञ्जीत, यापनार्थमित्यनेनैतत् सूचित–यदि शरीरयापना भवति तदैव निषेवेत, यदि त्वतिवातो द्रेकादिना तद्यापनैव न स्यात्ततो न निषेवेतापि, गच्छगतापेक्षमेतत्, तन्निर्गतश्चैतान्येव यापनार्थमपि निषेवेत, मन्थु वा–बदरादिचूर्णम्, अतिरूक्षतया चास्य प्रा तत्व, सेवेतेति सम्बन्ध , पठ्यते च–'जवणट्ठाए णिसेवए मथु' ति, तथैव नवर मन्थुमित्यत्र चशब्दो लुप्तनिर्दिष्टो द्रष्टव्य , असारवस्तूपलक्षण चोभयत्र मन्थुग्रहण, पुन क्रियाऽभि- धान च न सकृदेवावासा यमूनि सेवेत किन्त्वनेकधाऽपीतिरयापनार्थमिति सूत्रार्थ ॥ यदुक्त–'शुद्धैपणास्त्वात्मान स्थापयेदि'ति, तद्विपर्यये बाधकमाह—

जे लक्खण च सुविण च अगविज्ज च जे पउजति। न हु ते समणा वुच्चति एव आयरिएहि अक्खाय ॥१३॥

च तान्यनन्ततया कर्म्माणि च–क्रियमाणतया ज्ञानावरणादीनि बहुकर्म्माणि तानि लेप इव लेपो बहुकर्म्मणां वा लेप–उपचयो बहुकर्म्मलेपस्तेन लिप्ता–उपचिता बहुकर्म्मलेपलिप्तास्तेषा 'बोधिः' प्रेत्य जिनधर्म्मावाप्तिः 'भवति' जायते 'सुदुर्लभा' अतिशयदुरापा, 'तेषाम्' इति ये लक्षणादि प्रयुञ्जते, पठन्ति च–'बोही जत्थ सुदुल्लहा तेसिं'ति बोधिर्यत्र–संसारे सुदुर्लभा तेषाम्–अनुपरियतामिति योजनीयं, यतश्चैवमुत्तरगुणविराधनायां दोषस्ततस्तदाराधनायामेव यतितव्यमितिभावः इति सूत्रार्थः ॥ आह–किममी द्रव्यश्रमणा जानन्तोऽप्येवं लक्षणादि प्रयुञ्जते ?, उच्यते, लोभतः, अत एव तदाकुलितस्रातगनो दुष्पूरतामाह–

कसिणंपि जो इमं लोयं पडिपुन्नं दलेज्ज एगस्स । तेणावि से ण संतुस्से इइ दुप्पूरए इमे आया ॥ १६ ॥

व्याख्या–'कृत्स्नमपि' परिपूर्णमपि 'यः' सुरेन्द्रादिः 'इमं' प्रत्यक्षं 'लोकं' जगत् 'परिपूर्णं' धनधान्यहिरण्यादिभृतं 'दलेज्ज'त्ति दद्यात्, किं बहुभ्यः ? इत्याह–'एकस्स'त्ति एकस्मै कस्मैचित् कथञ्चिदाराधितवते, 'तेनापि' धनधान्यादिभृतसमस्तलोकदायकेन, हेतौ तृतीया, 'से' इति स 'न सन्तुष्येत्' न हृष्येत्, किमुक्तं भवति ?–ममैतावद्दत्ताऽनेन परिपूर्णता कृतेति न तुष्टिमाश्रयात्, उक्तं हि—"न वह्निस्तृणकाष्ठेषु, नदीभिर्वा महोदधिः । न चैवात्माऽर्थसारेण, शक्यस्तर्पयितुं क्वचित् ॥ १ ॥ यदि शाद्रलपूर्णोऽपि, जम्बूद्वीपः कथञ्चन । अपर्याप्तः प्रहर्षाय, लोभार्त्तस्य जिनैः स्मृतः ॥ २ ॥" 'इतिः' एवमर्थे, एवम्–अमुनोक्तन्यायेन दुःखेन–कृच्छ्रेण–पूरयितुं शक्यः दुष्पूरः दुष्पूर एव

व्याख्या—'इह' अस्मिन् जन्मनि 'जीवित' असयमजीवितम् 'अनियम्य' द्वादशविधतपोविधानादिनाऽनियन्त्र्य 'प्रभ्रष्टा' च्युता, केभ्य ?—'समाहियोगेहिं'ति समाधि –चित्तस्वास्थ्य तत्प्रधाना योगा –शुभमनोवाक्कायव्यापारा समाधियोगा, यद्वा समाधिश्च–शुभचित्तैकाग्रता योगाश्च–पृथगेव प्रत्युपेक्षणादयो व्यापारा समाधियोगा तेभ्य, अनियन्त्रितात्मना हि पदे पदे तद्भ्रशसम्भव इति, 'ते' अनन्तरमुक्ता कामभोगेषु अभिहितस्वरूपेषु रस –अत्यन्तासक्तिरूपस्तेन गृद्धा –तेष्वभिकाङ्क्षावन्त कामभोगरसगृद्धा, यद्वा रसा –पृथगेव शृङ्गारादयो वा, भोगान्तर्गतत्वेऽपि चैषा पृथगुपादानमतिगृद्धिविषयताख्यापनार्थम् 'उपपद्यन्ते' जायन्ते 'आसुरे' असुरसम्बन्धिनि काये, असुरनिकाये इत्यर्थं, इदमुक्त भवति–एवविधा किञ्चित् कादाचित्कमनुष्ठानमनुतिष्ठन्तोऽप्यसुरेष्वेवोत्पद्यन्ते इति सूत्रार्थ ॥ ततोऽपि च्युतास्ते किमाप्नुवन्तीत्याह—

तत्तोऽवि य उवट्टित्ता ससार बहु परियडति । बहुकम्मलेवलित्ताण बोही होइ सुदुल्लहा तेसिं ॥ १५ ॥

व्याख्या–'ततोऽपि च' असुरनिकायाद् 'उद्वृत्य' तत्परित्यागेनान्यत्र गत्वा 'ससार' चतुर्गतिरूप बहुशब्दस्य 'बहुपूपे घृत श्रेय' इत्यादिषु विपुलवाचिनोऽपि दर्शनाद्बहु–विपुल विस्तीर्णमितियावत्, बहुप्रकार वा चतुरशीतियोनिलक्षतया 'अणुपरियति'त्ति अनुपरियन्ति, सातत्येन पर्यटन्तीत्यर्थ, पठन्ति च–'अणुचरति'त्ति स्पष्ट, किंच–बहूनि

१ अणुपरियति इति टीका

च हारिलः—"वातोद्धूतो दहति हुतभुग्देहमेकं नराणा, मत्तो नागः कुपितभुजगश्चैकदेहं तथैव । ज्ञानं शीलं विनयविभवौदार्यविज्ञानदेहान्, सर्वानर्थान् दहति वनिताऽऽमुष्मिकानैहिकांश्च ॥ १ ॥" 'गिज्झेज्ज'त्ति गृद्ध्येद्—अभिकाङ्क्षावान् भवेत्, कीदृशीषु ?—'गंडवच्छासु'त्ति गण्डं—गडु, इह चोपचितपिशितपिण्डरूपतया गलत्पूतिरुधिरार्द्रतासम्भवाच्च तदुपमत्वाद्गण्डे कुचावुक्तौ ते वक्षसि यासां तास्तथाभूतास्तासु, वैराग्योत्पादनार्थं चेत्थमुक्तं, तथाऽनेकानि—अनेकसङ्ख्यानि चञ्चलतया चित्तानि—मनांसि यासां ता अनेकचित्तास्तासु, आह च—"अन्यसाङ्के ललति विशदं चान्यमालिङ्ग्य शेते, अन्यं वाचा चपयति हसत्यन्यमन्यं च रौति । अन्यं द्वेष्टि स्पृशति कशति प्रोर्णुते वाऽन्यमिष्टं, नार्यो नृत्यत्तडित इव धिक् चञ्चलाश्चालिकाश्च ॥ १ ॥" तथा 'जाओ'त्ति याः 'पुरुषं' मनुष्यं, कुलीनमपीति गम्यते, 'प्रलोभ्य' त्वमेव मे शरणं त्वमेव च प्रीतिकृदित्यादिकाभिर्वाग्भिर्विप्रतार्य क्रीडन्ति, 'जहा व'त्ति वाशब्दस्यैवकारार्थत्वाद् यथैव दासैः, एगागन्छ मा यासीरित्यादिवितथोक्तिप्रभृतिभिः क्रीडाभिर्विलसन्तीति सूत्रार्थः ॥ पुनस्तासामेवातिहेयतां दर्शयन्नाह—

नारीसु नो पगिज्झिज्जा इत्थीविप्पजहे अणगारे । धम्मं च पेसलं णच्चा तत्थ ठवेज्ज भिक्खु अप्पाणं ॥१९॥ ॥२९७॥

व्याख्या—'नारीषु' स्त्रीषु 'नो' नैव 'प्रगृध्येत्' प्रशब्द आदिकर्म्मणि ततो गृद्धिगारभेतापि न, किं पुनः कुर्यादिति भावः, 'इत्थी विप्पजहे'त्ति स्त्रियो विविधैः प्रकारैः प्रकर्षेण च जहाति—त्यजतीति स्त्रीविप्रजहः, उणादयो बहु-

दुष्पूरक 'इमे'त्ति अय प्रत्यक्ष 'आत्मा' जीव , एतदिच्छाया परिपूरयितुमशक्यत्वादिति सूत्रार्थं ॥ किमिति न सन्तुष्यतीति स्वसविदित हेतुमाह—

जहा लाभो तहा लोभो लाभा लोभो पवड्ढति। दोमासकय कज्ज कोडीएवि न निट्ठिय ॥ १७ ॥

व्याख्या—'यथा' येन प्रकारेण 'लाभ ' अर्थावाप्ति 'तथा' तेन प्रकारेण 'लोभ ' गार्द्ध्यमभिकाङ्क्षेतियावत् , भवतीति शेष , किमेवमित्याह—लाभाल्लोभ 'प्रवर्धते' प्रकर्षेण वृद्धि भजते, इह च लाभाल्लोभ प्रवर्द्धत इति वचना द्यथा तथेत्यत्र वीप्सा गम्यते, ततश्च–यथा यथा लाभस्तथा तथा लोभो भवतीत्युक्त भवति, लाभाल्लोभ प्रवर्द्धत इत्यपि कुत इत्याह—द्वाभ्या–द्विसङ्ख्याभ्या मापाभ्या–पञ्चरक्तिकामानाभ्या क्रियते–निष्पाद्यत इति द्विमापकृतम् , आर्षत्वाद्वर्त्तमानकाले क्त , 'कार्य' प्रयोजन, तचेह दास्या पुष्पताम्बूलमूल्यरूप 'कोट्याऽपि' सुवर्णशतलक्षात्मिकया 'न निष्ठित' न निष्पन्न, तदुत्तरोत्तरविशेषवाञ्छात इति सूत्रार्थ ॥ सम्प्रति यदुक्त–'द्विमापकृत कार्य कोट्याऽपि न निष्ठित'मिति, तत्र तदनिष्ठिति स्त्रीमूलेति तत्परिहार्यतोपदर्शनायाह—

नो रक्खसीसु गिज्झेज्जा गडवच्छासु णेगचित्तासु। जाओ पुरिस पलोभित्ता खेल्लति जहा व दासेहि ॥१८॥

व्याख्या—'नो' नैव राक्षस इव राक्षस –स्त्रिय तासु, यथा हि राक्षसो रक्तसर्वस्वमपकर्षन्ति जीवित च प्राणिनामपहरन्ति एवमेता अपि, तत्त्वतो हि ज्ञानादीन्येव जीवित च अर्थश्च (सर्वस्व) तानि च ताभिरपह्रियन्त एव, तथा

## अथ नवममध्ययनम् ।

॥ उक्तमष्टममध्ययनं, साम्प्रतं नवममारभ्यते—अस्य चायमभिसम्बन्धः—अनन्तराध्ययने निर्लोभत्वमुक्तम्, इह तु तदनुष्ठितेः इहैव देवेन्द्रादिपूजोपजायत इति दर्श्यते, इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयवर्णनं पूर्ववद्यावन्नामनिष्पन्ननिक्षेपेऽन्वर्थानुगतं नमिप्रव्रज्येतिनाम, अतो नमेः प्रव्रज्यायाश्च निक्षेपो वाच्य इत्युभयनिक्षेपाभिधानायाह निर्युक्तिकृत्—

निक्खेवो उ नमिंमि चउव्विहो दु० ॥ २६० ॥ जाणग० ॥ २६१ ॥

नमिआउनामगोयं वेयंतो भावतो नमी होइ । तस्स य खलु पव्वज्जा नमिपव्वज्जंति अज्झयणं ॥ २६२ ॥

पव्वज्जानिक्खेवो चउव्विहो अन्नतित्थिगा द्वे । भावंमि उ पव्वज्जा आरंभपरिग्गहच्चाओ ॥ २६३ ॥

व्याख्या—'निक्षेपः' न्यासः, 'तुः' पूरणे, 'नमौ' नमिविषयः 'चतुर्विधः' चतुर्भेदो नामादिः, तत्र च नामस्थापने सुगमे, 'द्विविधः' द्विभेदो भवति 'द्रव्ये' द्रव्यविषयः, तमेवाह—आगमनोआगमतः, तत्रागमतो ज्ञाताऽनुपयुक्तः, नोआगमतश्च स 'त्रिविधः' त्रिभेदः, 'जाणगसरीरभविए तव्वइरित्ते य'त्ति नमिशब्दस्य प्रत्येकमभिसम्बन्धात् ज्ञशरीरनमिर्भव्यशरीरनमिस्तद्व्यतिरिक्तनमिश्च, 'स' तद्व्यतिरिक्तनमिर्भवेत् त्रिविधः—एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च,

लमिति ( पा० ३-३-१ ) बहुलवचनाच्छ, यद्वा—'इत्थि'त्ति स्त्रियो 'विप्पजहे'त्ति विप्रजह्यात्, पूर्वत्र च नारीग्रहणान्मनुष्यस्त्रिय एवोक्ता, इह च देवतिर्यक्सम्बन्धिन्योऽपि त्याज्यतयोच्यन्ते इति न पौनरुक्त्यमुपदेशत्वाद्वा, 'अनगार' प्राग्वत्, किं पुन कुर्यादित्याह—'धर्म्ममेव' ब्रह्मचर्यादिरूप, चस्यावधारणार्थत्वात्, 'पेशलम्' इह परत्र चैकान्तहितत्वेनातिमनोज्ञ 'ज्ञात्वा' अवबुध्य, 'तत्र' इति धर्म्मे 'स्थापयेत्' निवेशयेद् 'भिक्षु' यति आत्मान विषयाभिलाषनिषेधत इति सूत्रार्थ ॥ अध्ययनार्थोपसहारमाह—

इइ एस धम्मे अक्खाए कविलेण च विसुद्धपण्णेण। तरिहिति जे उ काहिंति तेहिं आराहिया दुवे लोगु२०त्तिबेमि

व्याख्या—'इति' अनेन प्रकारेण 'एष' अनन्तरमुक्तरूप 'धर्म' यतिधर्म्मः आङिति सकलतत्स्वरूपाभिव्याप्त्या ख्यात –कथित आख्यात, केनेत्याह–'कपिलेन' इत्यात्मानमेव निर्दिशति, पूर्वसङ्गतिकत्वादमी मद्वचनत प्रतिपद्यन्तामिति, 'च' पूरणे, 'विशुद्धप्रज्ञेन' निर्मलावबोधेन, अतोऽर्थसिद्धिमाह–'तरिहिंति'त्ति तरिष्यन्ति, भवार्णवमिति शेष, 'ये' इत्यविशेषाभिधान, 'तु' पूरणे, ततो विशेषत एव तरिष्यन्ति, ये 'करिष्यन्ति' अनुष्ठास्यन्ति, प्रक्रमादमु धर्म्मम्, अन्यच्च 'तै' 'आराधितौ' सफलीकृतौ 'द्वौ' द्विसङ्ख्यौ लोकौ, इहलोकपरलोकावित्यर्थ, इह महाजनपूज्यतया परत्र च नि श्रेयसाभ्युदयप्राप्त्येति सूत्रार्थ ॥ 'इति' परिसमाप्तौ ब्रवीमि इति नयाश्च प्राग्वदिति ॥

इति श्रीशान्त्याचार्यविरचिताया शिष्यहिताया विशेषटीकायामिदमष्टममध्ययन व्याख्यात कापिल नाम ॥

मिहिलावइस्स णमिणो छम्मासायंक विज्जपडिसेहो। कत्तिअ सुमिणगदंसणअहिमंदरनंदिघोसे अ २६६
दुन्निवि नमी विदेहा रज्जाइं पयहिऊण पव्वइआ। एगो नमितित्थयरो एगो पत्तेयबुद्धो अ ॥ २६७ ॥
जो सो नमितित्थयरो सो साहस्सिय परिव्वुडो भयवं। गंथमवहाय पव्वइ पुत्तं रज्जे ठवेऊणं ॥२६८॥
बीओवि नमीराया रज्जं चइऊण गुणसयसमग्गं। गंथमवहाय पव्वइ अहिगारो एत्थ बिइएणं ॥२६९॥
पुप्फुत्तराउ चवणं पव्वज्जा होइ एगसमएणं। पत्तेयबुद्धकेवलि सिद्धि गया एगसमएणं ॥ २७० ॥

सेअं सुजायं सुविभत्तसिंगं, जो पासिआ वसहं गुट्ठमज्झे।
रिद्धिं अरिद्धिं समुपेहिआ णं, कलिंगरायावि समिक्ख धम्मं ॥ २७१ ॥
जो इंदकेउं समलंकियं तु, दट्ठुं पडंतं पविलुप्पमाणं।
रिद्धिं अरिद्धिं समुपेहिआ णं, पंचालरायावि समिक्खधम्मं ॥ २७२ ॥
वुड्ढिं च हाणिं च ससीव दट्ठुं, पूरावरेगं च महानईणं।
अहो अणिच्चं अधुवं च नच्चा, पंचालरायावि समिक्ख धम्मं ॥ २७३ ॥

एतत्स्वरूप च प्राग्वत् , तथा नम्यायुर्नामगोत्र वेदयन् भावतो नमिर्भवति, 'तस्य' नमे 'खलु' इति वाक्यालङ्कारे, 'प्रव्रज्या' वक्ष्यमाणस्वरूपा, इहाभिधीयत इत्युपस्कार , अतश्च 'नमिप्रव्रज्ये'ति नमिप्रव्रज्याख्यमिदमध्ययनमेव प्रस्तुतमुच्यत इति शेप , प्रव्रज्यानिक्षेपश्चतुर्विधो नामादि , नामस्थापने प्राग्वत् , अन्यानि च तान्यनर्हत्प्रणीततीर्थादन्यत्वेन तीर्थानि च–निजनिजाभिप्रायेण भवजलधे तरण प्रति करणतया विकल्पितत्वेनान्यतीर्थानि तेपु भवा अन्यतीर्थिका , अध्यात्मादेराकृतिगणत्वाट्ठक् , ते च शाक्यसरजस्कादय , 'द्रव्ये' विचार्ये, प्रव्रज्येति सम्बन्ध , प्रव्रज्यायोगाच्च त एव प्रव्रज्येत्युच्यते, यथा दण्डयोगात् पुरुपोऽपि दण्ड इति, इह चान्यतीर्थिकशब्देन विवक्षितभावविकलतैव सूचिता, ततोऽन्यतीर्थ्या स्वतीर्थ्या वा प्रव्रज्यापर्यायशून्या द्रव्यप्रव्रज्येति भण्यन्ते, अत एवाह—भावे तु विचार्यमाणे प्रव्रज्या आरम्भश्च–पृथिव्याद्युपमर्द परिग्रहश्च–मूर्च्छा आरम्भपरिग्रहौ तयोस्त्याग –परिहार आरम्भपरिग्रहत्याग , न तु वहिर्वेपधारणाद्येवेति गाथाचतुष्टयार्थ ॥ इह च यद्यपि नमिप्रव्रज्यैव प्रक्रा ता, तथापि यथाऽय प्रत्येकवुद्धस्तथाऽन्येऽपि करकण्ड्वादयस्त्रयस्तत्समकालसुरलोकच्यवनप्रव्रज्याग्रहणकेवलज्ञानोत्पत्तिसिद्धिगतिभाज इति प्रसक्तो विनेयवैराग्योत्पादनार्थं तद्वक्तव्यतामपि विवक्षुरिदमाह निर्युक्तिकृत्—

करकडू कलिंगेसु, पचालेसु य दुम्मुहो । नमीराया विदेहेसु, गधारेसु य नग्गई ॥ २६४ ॥
वसभे अ इदकेऊ वलए अवे अ पुप्फिए वोही । करकडु दुम्मुहस्सा नमिस्स गधाररण्णो अ ॥२६५॥

मट्टियागंधेणं हत्थी अब्भाहतो वणं संभरति, नियट्टो वणाभिमुहो पयातो, जणो ण तरति ओलगिउं, दोवि अडविं पवेसियाइं, राया वडरुक्खं पेच्छइ, देविं भणइ—एयस्स वडस्स हेट्ठेण जाहित्तिति ता तुमं साखं गेण्हेज्जासि, ताए पडिसुयं, ण तरति, राया दक्खो तेण साहा गहिया, सो उत्तिण्णो, णिराणंदो गतो चंपं। सावि य इत्थिया णीया णिम्माणुसं अडविं, जाव तिसायितो पेच्छति दहं महतिमहालयं, तत्थ ओइन्नो अभिरमति हत्थी, इमावि सणियं २ उइण्णा तलागातो, न दिसातो जाणइ एक्काए दिसाए सागारं भत्तं पचक्खाइत्ता पहाविया, जाव दूरं गया ताव तावसो दिट्ठो, तस्स मूलं गया, अभिवातितो, पुच्छति—कतोऽसि अम्मो इहं आगया ?, ताहे कहेइ—अहं चेडगस्स धूया, जाव इहं हत्थिणा आणीया, सो य तावसो चेडगनियल्लतो, तेण आसासिया—मा वीहेहित्ति, ताहे से वणफलाणि दाऊणं एक्काए

---

१ मृत्तिकागन्धेन हस्त्यभ्याहतो वनं स्मरति, निवृत्तो वनाभिमुखः प्रयातः, जनो न शक्नोत्यवलगितुं, द्वावप्यटवीं प्रवेशितौ, राजा वटवृक्षं प्रेक्षते, देवीं भणति—एतस्य वटस्याधस्तनेन यास्यतीति तत्त्वं शाखां गृह्णीयाः, तया प्रतिश्रुतं, न शक्नोति, राजा दक्षस्तेन शाखा गृहीता, स उत्तीर्णो, निरानन्दो गतश्चम्पाम् । साऽपि च स्त्री निर्मानुषां नीता अटवीं, यावत्तृषितः प्रेक्षते ह्रदं महातिमहालयं, तत्रावतीर्णोऽभिरमते हस्ती, इयमपि शनैः अवतीर्णा तडाकात्, न दिशो जानाति एकया दिशा साकारं भक्तं प्रत्याख्याय प्रधाविता, यावद्दूरं गता तावत्तापसो दृष्टः, तस्य मूलं गता, अभिवादितः, पृच्छति—कुतोऽसि अम्ब ! इहागता ?, तदा कथयति—अहं चेटकस्य दुहिता, यावदत्र हस्तिनाऽऽनीता, स च तापसश्चेटकस्य निजकः, तेनाश्वासिता—मा भैषीरिति, तदा तस्यै वनफलानि दत्त्वैकया

वहुआण सद्दय सुच्चा, एगस्स य असद्दय । वलयाण नमीराया, निक्खतो मिहिलाहिवो ॥ २७४ ॥

जो चूअरुक्ख तु मणाभिराम, समजरीपल्लवपुप्फचित्त ।
रिद्धि अरिद्धि समुपेहिआ ण, गधाररायावि समिक्ख धम्म ॥ २७५ ॥

जया रज्ज च रट्ठ च, पुर अतेउर तहा । सव्वमेअ परिच्चज्ज, सचय किं करेसिमं ? ॥ २७६ ॥
जया ते पेइए रज्जे, कया किच्चकरा वहू । तेसिं किच्च परिच्चज्ज, अज्ज किच्चकरो भव ॥ २७७ ॥
जया सव्वं परिच्चज्ज, मुक्खाय घडसी भव । पर गरहसी कीस ?, अत्तनीसेसकारए ॥ २७८ ॥
मुक्खमग्ग पवन्नेसु, साहूसु वभयारिसु । अहिअत्थ निवारिंतो, न दोस वत्तुमरिहसि ॥ २७९ ॥

एतदर्थस्तु प्राय सम्प्रदायादवसेय इति तावत् स एवोच्यते—चंपानयरीए दहिवाहणो राया, चेडगधूया पउमावती देवी, तीसे दोहलो—किहाह रायणेवत्थेण णेवत्थिया उज्जाणकाणणाणि विहरेज्जा ?, सा उलुगसरीरा जाया, राया पुच्छति, ताधे राया य सा य जयहत्थिमि आरूढा, राया छत्त धरेइ, गया उज्जाण, पढमपाउस च, सीयलएण

१ चम्पानगर्यां दधिवाहनो राजा, चेटकदुहिता पद्मावती देवी, तस्या दोहद —कथमह राजनेपथ्येन नेपथ्यिता उद्यानकाननानि विहरेय ?, सा क्षीणशरीरा जाता, राजा पृच्छति, तदा राजा च सा च जयहस्तिनि आरूढा, राजा छत्र धारयति, गतोद्यान, प्रथमप्रावृट् च, शीतलेन

रक्खंति, तत्थ दो संजया तं मसाणं केणति कारणेन अतिगता, जाव एगत्थ वंसकुडंगे दंडगं पेच्छंति, तत्थ एगो दंडलक्खणं जाणति, सो भणति–जो एयं दंडगं गिण्हति सो राया होतित्ति, किंतु पडिच्छियव्वोत्ति जाव अन्नाणि चत्तारि अंगुलाणि वड्ढति ताहे जोग्गोत्ति। तं तेणं मायंगचेडएणं सुयं, एकेण धिज्जाइएण य, ताधे सो धिज्जाइयिगो अप्पसागारियं तस्स चउरंगुलं खणिऊण छिंदेइ, तेण य चेडएण दिट्ठो, सो उद्दालिओ, सो तेण धिज्जाइएण करणं णीतो भणइ–देहि दंडगं, सो भणइ—मम मसाणे, ण देमि, धिज्जाइओ भणिओ—अन्नं गिण्ह, सो णिच्छइ, भणति य–एएण मम कज्जंति, सो दारगो न देइ, ताहे सो दारगो पुच्छिओ–किं न देहि ?, भणई य–अहं एयस्स दंडगस्स पहावेण राया होहामित्ति, ताहे कारणिया हसिऊणं भणंति–जया तुमं राया होज्जासि तया एयस्स तुमं

१ रक्षति, तत्र द्वौ संयतौ तं श्मशानं केनचित्कारणेनातिगतौ, यावदेकत्र वंशजाल्यां दण्डं प्रेक्षाते, तत्रैको दण्डलक्षणं जानाति, स भणति–य एनं दण्डं गृह्णीयात् स राजा भवतीति, किं तु प्रतीक्षितव्य इति यावदन्यांश्चतुरोऽङ्गुलान् वर्धते, तदा योग्य इति। तत्तेन मातङ्गचेटेन श्रुतम्, एकेन धिग्जातीयेन च, तदा स धिग्जातीयोऽल्पसागारिके तस्य चतुरोऽङ्गुलान् खात्वा छिनत्ति, तेन च चेटेन दृष्टः, सोऽपहृतः, स धिग्जातीयेन तेन करणं नीतो भणति–देहि दण्डं, स भणति–मम श्मशाने, न ददामि, धिग्जातीयो भणितः—अन्यं गृहाण, स नेच्छति, भणति च—एतेन मम कार्यमिति, स दारको न ददाति, तदा स दारकः पृष्टः–किं न ददासि ?, भणति च—अहमेतस्य दण्डस्य प्रभावेण राजा भविष्यामीति, तदा कारणिका हसित्वा भणन्ति—यदा त्वं राजाऽभविष्यस्तदैतस्मै त्वं

दिसाएं अडवीओ णीणिया, एत्तोहितो हलच्छिता भूमी त न अक्कमामो, एसो दतपुरस्स विसतो दतचक्को राया, ताती अडवीतो णिग्गया, दन्तपुरे अज्जाण मूले पव्वइया, पुच्छियाए गब्भो ण अक्खातो, पच्छा णाए सयहरिकाण आलोएति, वियाया समाणी सह णामसुद्दाए कंबलरयणेण य सुसाणे उज्झति, पच्छा मसाणपाणो, तेण गहितो, भज्जाए अप्पितो, अवकिन्नतोत्ति नाम कय, सा अज्जा तीए पाणीए सम मेत्ति करेइ, सा अज्जा ताहि सजईहि पुच्छिया—कहिं गब्भो ?, भणइ—मयगो जातो, ता मे उज्झितो, सो तत्थ सवड्ढति । ताहे दारगरूवेहिं सम रमइ, सो ताणि डिंभरूवाणि भणइ—अहं तुब्भ राया मम कर देह, सो लुक्खकच्छूए गहितो, ताणि भणइ—मम कडूयह, ताहे से करकंडुत्ति नाम कय, सो ताए सजईए अणुरत्तो, ता य से मोयए देइ, ज च भिक्ख लद्धं लहेइ । सवड्ढिओ सो सुसाण

१ दिशाऽटव्या निष्काशिता, अतो हलकृष्टा भूमि ता नाक्रमामहे, एष दन्तपुरस्य विषयो दन्तचक्रो राजा, तस्या अटव्या निर्गता, दन्त पुरे आर्याणा मूले प्रव्रजिता, पृष्टया गर्भो नाख्यातः, पश्चाज्ज्ञाते महत्तरिकाभ्य आलोचयति, विजाता सती सह नाममुद्रया कम्बलरत्नेन च श्मशाने उज्झति, पश्चात् श्मशानचाण्डालः, तेन गृहीत , भार्यायै अर्पित , अवकीर्णक इति नाम कृत, साऽऽर्या तया चाण्डाल्या सम मैत्रीं करोति, साऽऽर्या ताभि सयतीभि पृष्टा—क्व गर्भ ?, भणति—मृतो जातस्ततो मयोज्झितः, स तत्र सवर्धते । तदा दारकरूपै सम रमते, स तानि डिम्भरूपाणि भणति—अह युष्माक राजा मह्य कर दत्त, स रूक्षकच्छ्वा गृहीत , तानि भणति—मा कण्डूयत, तदा तस्य करकण्डूरिति नाम कृत, स तस्या सयत्यामनुरक्त , सा च तस्मै मोदकान् ददाति, यच्च भिक्षा लब्धा लभते । संवृद्धः स श्मशान

जो ते रुचति, सो भणइ—मम चंपाए घरं, तो तहिं देहि, ताहे दधिवाहणस्स लेहेइ—देहि मम एगं गामं, अहं तुज्झं जं रुचइ गामं वा नगरं वा तं देमि, सो रुट्ठो दुट्ठमायंगो अप्पाणं ण जाणइत्ति, जो ममं लेहं देइत्ति। दूएण पडिआगएण कहियं, करकंडू कुवितो, चंपा रोहिया, जुद्धं वट्टति, ताए संजईए सुयं, मा जणक्खओ होहितित्ति करकंडूं ओसारित्ता रहस्सं भिंदियत्ति, एस तव पियत्ति, तेण ताणि अम्मापियरो पुच्छियाणि, तेहिं सब्भावो कहितो, माणेणं ण न ओसरइ, ताहे सा चंपं अइगया, रण्णो घरं अतीति, णाया पायपडियाओ दासीओ परुण्णातो, रायणावि सुयं, सोऽवि आगतो, वंदित्ता आसणं दाऊण तं गब्भं पुच्छति, सा भणइ—एसो जो एसणयरं रोहित्ता अच्छइ, तुठो णिग्गतो, मिलितो, दोवि रज्जाणि तस्स दाऊण दहिवाहणो पव्वतितो। करकंडू य महासासणो जातो, सो य किर गोउलप्पितो,

---

१ यस्तुभ्यं रोचते, स भणति—मम चम्पायां गृहं, तत्तत्र देहि, तदा दधिवाहनाय लेखयति—देहि मह्यमेकं ग्रामम्, अहं तुभ्यं यद्रोचते ग्रामो वा नगरं वा तद्ददामि, स रुष्टो दुष्टमातङ्ग आत्मानं न जानातीति, यो मह्यं लेखं ददातीति। दूतेन प्रत्यागतेन कथितं, करकण्डूः कुपितः, चम्पा रुद्धा, युद्धं वर्त्तते, तया संयत्या श्रुतं, मा जनक्षयो भविष्यतीति करकण्डूमपसार्य रहस्यं भेदितवती—एष तव पितेति, तेन तौ मातापितरौ पृष्टौ, ताभ्यां सद्भावः कथितः, मानेन नापसरति, तदा सा चम्पामतिगता, राज्ञो गृहमेति, ज्ञाता पादपतिता दास्यः प्ररुदिताः, राज्ञापि श्रुतं, सोऽप्यागतो, वन्दित्वाऽऽसनं दत्त्वा तं गर्भं पृच्छति, सा भणति—एष य एतन्नगरं रुद्ध्वा तिष्ठति, तुष्टो निर्गतो, मीलितो, द्वे अपि राज्ये तस्मै दत्त्वा दधिवाहनः प्रव्रजितः। करकण्डूश्च महाशासनो जातः, स च किल गोकुलप्रियः

गांम देज्जासि, पडिवण्णो सो, तेण धिज्जाइएण अन्ने धिज्जाइया गहिया–जहा एय मारित्ता हरामो, त तस्स पियाए सुय, ताणि तिन्निवि णट्टाणि जाव कचणपुरं गयाणि । तत्थ राया मरइ अपुत्तो, आसो अहियासितो, तस्स वाहिं सुयतस्स मूल आगओ, पयाहिणीकाऊण ठितो, जाव णायरा पिच्छति लक्खणजुत्त, जयजयसद्दो फतो, णदीतूर आहय, इमोवि जभतो उट्ठिओ, वीसत्थो आस विलग्गो, पवेसिज्जइ, मायगो त्ति धिज्जाइगा ण देंति पयेस, ताहे तेण दडरयण गहिय, त जलिउमारद्ध, ते भीया ठिया, ताहे तेण वाडहाणगा हरिएसा धिज्जाइया कया, उक्त च–"दधिवाहनपुत्रेण, राज्ञा तु करकण्डुना । वाटहानकवास्तव्याश्चण्डाला ब्राह्मणीकृता ॥१॥" तस्स य घरनाम अवकिन्नगोत्ति, पच्छा से त चेय चेडगकयणाम पतिट्ठिय करकडुत्ति । तहिं सो धिज्जातितो आगतो, देहि मम गाम, भणति—

१ ग्राममदास्य, प्रतिपन्न सः, तेन धिग्जातीयेन अन्ये धिग्जातीयाः स्वपक्षीकृता —यथैन मारयित्वा हरामः, तत्तस्य पित्रा श्रुत, ते त्रयोऽपि नष्टा यावत्काञ्चनपुर गता । तत्र राजा मृत अपुत्र, अश्वोऽधिवासितः, तस्य वहि सुतस्य मूलमागत, प्रदक्षिणीकृत्य स्थितः, यावन्नागराः प्रेक्षन्ते लक्षणयुक्त, जयजयशब्दः कृत, नन्दीतूर्यमाहतम्, अयमपि जृम्भमाण उत्थितः, विश्वस्तोऽश्व विलग्नः, प्रवेश्यते, मातङ्ग इति धिग्जातीया न ददति प्रवेश, तदा तेन दण्डरत्न गृहीत, तज्ज्वलितुमारब्ध, ते भीता स्थिताः, तदा तेन वाटधानका हरिकेशा धिग्जातीया कृताः । तस्य च गृहनामावकीर्णक इति, पश्चात् तस्य तदेव चेटकृत नाम प्रतिष्ठित करकण्डुरिति । तत्र स धिग्जातीय आगत, देहि मह्य ग्राम, भणति—

इओ य विदेहे जणवए महिलाए य णयरीए णमी राया, तस्स दाहो जातो, देवी चंदणं घसति, वलियाणि खलखलिंति, सो भणति–कण्णाघातो होइ, देवीए एक्केकं अवणेंतीए सव्वाणि अवणीयाणि, एक्किकं ठियं, तं राया पुच्छइ–ताणि वलयाणि न खलखलिंति ?, सा भणति–अवणीयाणि, सो तेण दुक्खेण अब्भाहतो परलोगाभिमुहो चिंतेति–बहुयाणं दोसो ण एगस्स, जइ य एयातो रोगाओ मुच्चामि तो पव्वयामि, तया य कत्तियपुण्णिमा वट्टति, एवं सो चिंतिंतो पासुत्तो, पभायाए रयणीए सुमिणए पासति–सेयं नागरायं मंदरोवरि च अत्ताणमारूढं, णंदिघोसतूरेण य विबोहितो हट्ठतुट्ठो चिंतेइ—अहो पहाणो सुविणो दिट्ठोत्ति, पुणो चिंतइ–कहिं मया एवंगुणजातितो पव्वतो दिट्ठपुव्वोत्ति चिंतयंतेण जाती संभरिया, पुव्वं माणुसभवे सामण्णं काऊण पुप्फुत्तरे विमाणे उववण्णो आसि, तत्थ देवत्ते

१ इतश्च विदेहे जनपदे मिथिलायां च नगर्यां नमी राजा, तस्य च दाहो जातः, देवी चन्दनं घर्षति, वलयानि शब्दं कुर्वन्ति, स भणति—कर्णाघातो भवति, देव्यैकैकमपनयन्त्या सर्वाण्यपनीतानि, एकैकं स्थितं, तां राजा पृच्छति—तानि वलयानि न खटत्कुर्वन्ति ?, सा भणति—अपनीतानि, स तेन दुःखेनाभ्याहतः परलोकाभिमुखश्चिन्तयति—बहूनां दोषो नैकस्य, यदि चैतस्माद्रोगान्मुच्ये तदा प्रव्रजामि, तदा च कार्त्तिकपूर्णिमा वर्त्तते, एवं स चिन्तयन् प्रसुप्तः, प्रभातायां रजन्यां स्वप्ने पश्यति—श्वेतं नागराजं मन्दरस्योपरि चात्मानमारूढं, नन्दीघोषतूर्येण च विबोधितो हृष्टतुष्टश्चिन्तयति—अहो प्रधानः स्वप्नो दृष्ट इति, पुनश्चिन्तयति—क मयैवंगुणजातीयः पर्वतो दृष्टपूर्व इति चिन्तयता जातिः स्मृता, पूर्वं मनुष्यभवे श्रामण्यं कृत्वा पुष्पोत्तरे विमान उत्पन्न आसं, तत्र देवत्वे

अणेगाणि तस्स गोउलगाणि जायाणि जाव सरयकालेण एग गोवच्छय घोरगत्त सेय त पेच्छइ, भणति य—एयस्स मायर मा दुहेज्जाहि, जया वद्धितो हुज्जा तया अण्णाण गावीण दुद्ध पाएज्जाह, ते गोवा पडिसुणति, सो उच्चत्तविसाणो खद्धवसभो जातो, राया पेच्छति, सो जुद्धिकओ जातो, पुणो कालेण राया आगतो पेच्छति—महाकाय जुण्ण वसभ, पड्डएहिं परिघट्टयत, गोवे पुच्छइ—कहि सो वसहोत्ति ?, तेहिं सो दाइतो, पेच्छतओ विसाय गतो, अणिच्चय चिंतितो सबुद्धो 'सेय सुजाय०' सुत्त, 'गोट्ठगणस्स०' गाहा, 'पोराण०' गाथा १॥ इत्तो पचालेसु जणवएसु कपिल्लपुर नयर, तत्थ दुम्मुहो राया, सो य इदकेउ पासति लोगेण महिज्जत अणेगकुडभीसहस्सपडिमडियाभिराम, पुणो अ विलुत्त पडिय च मुत्तपुरीसाण मज्झे, सोऽवि सबुद्धो पव्वतितो 'जो इदकेउ सुयलकिय तु' सोऽवि विहरति २ ॥

१ अनेकानि तस्य गोकुलानि जातानि यावच्छरत्काल एक गोवत्स घोरगात्र श्वेत त प्रेक्षते, भणति च—एतस्य मातर मा धौक्षिष्ट, यदा वृद्धो भवेत् तदाऽन्यासा गवा दुग्ध पाययेत, ते गोपा प्रतिशृण्वन्ति, स उच्चविपाणः समर्थवृषभो जातः, राजा पश्यति, स युद्ध एकको जातः, पुनः कालेन राजाऽऽगतः पश्यति—महाकाय जीर्ण वृषभ, ह्रस्वमहिषीभि परिघट्टमान, गोपान् पृच्छति—क स वृषभ इति ?, तैः स दर्शितः, पश्यन् विषाद गत , अनित्यता चिन्तयन् सबुद्ध 'श्वेत सुजात०' सूत्र 'गोष्ठाङ्गणस्य०' गाथा 'पुराण०' गाथा १ ॥ इतः पाञ्चालेषु जनपदेषु काम्पील्यपुर नगर, तत्र दुर्मुखो राजा, स चेन्द्रकेतु पश्यति लोकेन मह्यमानमनेकपताकासहस्रपरिमण्डिताभिराम, पुनश्च विलुप्त पतित च मूत्रपुरीषयोर्मध्ये, सोऽपि सबुद्ध प्रव्रजित 'य इन्द्रकेतु स्वलङ्कृत तु०' सोऽपि विहरति २ ॥

मुहं कयं । तस्स किर करकंडुस्स आबालत्तणा सा कंडू अत्थि चेव, तेण कंडूयगं गहाय मसिणं कण्णो कंडूइतो, तं तेण एगत्थ संगोवियं, तं दुम्मुहो पेच्छइ, सो भणइ—'जया रज्जं०' सिलोगो, जाव करकंडू पडिवयणं न देति ताव णमी वयणसमकं इमं भणइ—'जया ते पेतिते रज्जे०' सिलोगो, किं तुमं एयस्स आउत्तगोत्ति भणति, ताहे गंधारो भणति—'जया सव्वं परिचज्ज०' सिलोगो, ताहे करकंडू भणति—'मोक्खमग्गपवण्णाणं०' सिलोगो "रूसऊ वा परो मा वा विसं वा परियत्तउ । भासियव्वा हिया भासा, सपक्खगुणकारिया ॥१॥" इत्येष सम्प्रदायः । एष एव च गाथाकदम्बकभावार्थः, अक्षरार्थस्तु स्पष्ट एव, नवरं मिथिला नाम नगरी, तस्याः पतिः—स्वामी मिथिलापतिस्तस्य, अनेनान्येषामपि तत्पतीनां सम्भवात् तद्व्यवच्छेदमाह, 'नमेः' नमिनाम्नः, 'छम्मासायंकविज्जपडिसेहो'त्ति षण्मासानातङ्को—दाहज्वरात्मको रोगः षण्मासातङ्कः तत्र वैद्यैः—भिषग्भिः प्रतिषेधो—निराकरणम्, अचिकित्स्योऽयमित्यभिधानरूपः षण्मासातङ्कवैद्यप्रतिषेधः, 'कत्तिय'त्ति कार्तिकमासे 'सुविणगदंसणंति' स्वप्न एव स्वप्नकस्तस्मिन् दर्शनं

१ मुखं कृतं । तस्य किल करकण्डोः आबाल्यात् सा कण्डूरस्ति चैव, तेन कण्डूयनं गृहीत्वा मसृणं कर्णौ कण्डूयितौ, तत्तेनैकत्र संगोपितं, तद्दुर्मुखः पश्यति, स भणति—यदा राज्यं० श्लोकः, यावत्करकण्डूः प्रतिवचनं न ददाति तावत् नमिर्वचनसममिदं भणति—यदा ते पैतृके राज्ये० श्लोकः, किं त्वमेतस्यावर्त्तक इति भणति, तदा गान्धारो भणति—यदा सर्वं परित्यज्य० श्लोकः, तदा करकण्डूर्भणति—'मोक्षमार्गप्रपन्नानां' श्लोकः । रुष्यतु वा परो मा वा विषं वा परावर्त्ततु । भाषितव्या हिता भाषा स्वपक्षगुणकारिणी (का) ॥ १ ॥

मदेरो जिणमहिमाइसु आगएण दिट्ठपुव्वोत्ति सबुद्धो पव्वतितो 'बहुयाण०—' सिलोगो ३ ॥ इओ य गंधारजणविस-एसु पुरिसपुरं णाम नयरं, तत्थ णग्गती राया, सो य अन्नया अणुजत्तं णिग्गतो पेच्छइ—चूयं कुसुमियं, तेणेगा मंजरी गहिया, एवं खंधावारेण लयतेण कट्ठावसेसो कतो, पडिनियत्तो पुच्छति—कहिं सो चूयरुक्खो ?, अमच्चेण अक्खातो एसोत्ति, तो किह कट्ठाणि कतो ?, भणति—तुब्भेहिं एक्का मंजरी गहिया, पच्छा सव्वेणवि जणेण गहिया, सो चिंतेइ—एवं रज्जसिरि त्ति, जाव रिद्धी ताव सोहति, अलाहि 'जो चूय०' गाहा, सोऽवि विहरति ४॥ चत्तारिवि विहरमाणा खिइपतिट्ठिए णयरे चाउद्दारं देउलं, पुव्वेण करकंडू पविट्ठो, दुम्मुहो दक्खिणेण, किह साहुस्स अन्नामुहो अच्छामित्ति तेण वाणमंतरेण दक्खिणपासेवि मुहं कयं, नमी अवरेण, तओऽवि मुहं कयं, गंधारो उत्तरेण, तओऽवि

---

१ मन्दरो जिनमहिमादिष्वागतेन दृष्टपूर्व इति सबुद्धः प्रव्रजितः 'बहूनां०' श्लोकः ३ ॥ इतश्च गान्धारजनविषयेषु पुरुषपुरं नाम नगरं, तत्र नग्गती राजा, स चान्यदाऽनुयात्रां निर्गतः पश्यति—चूतं कुसुमितं, तेनैका मञ्जरी गृहीता, एवं स्कन्धावारेणाददानेन काष्ठावशेषः कृतः, प्रतिनिवृत्तः पृच्छति—क स चूतवृक्षः ?, अमात्येनाख्यात एष इति, तदा कथं काष्ठीकृतः ?, भणति—युष्माभिरेका मञ्जरी गृहीता, पश्चात्स र्वेणापि जनेन गृहीता, स चिन्तयति—एवं राज्यश्रीरिति, यावदृद्धिस्तावच्छोभते, अलम् 'यश्चूत०' गाथा, सोऽपि विहरति ४ ॥ चत्वारोऽपि विहरन्तः क्षितिप्रतिष्ठिते नगरे चतुर्द्वारं देवकुलं, पूर्वेण करकण्डूः प्रविष्टः, दुर्मुखो दक्षिणेन, कथं साधोः पराङ्मुखस्तिष्ठामीति तेन व्यन्तरेण दक्षिणपार्श्वेऽपि मुखं कृतं, नमिरपरेण, ततोऽपि मुखं कृतं, गान्धार उत्तरेण, ततोऽपि

अनेकार्थत्वादङ्गीकुरुते वा, वर्तमाननिर्देशः प्राग्वत्, यद्वा 'समिक्ख'त्ति समैक्षिष्ट समीक्षितवान् 'धर्मं' यतिधर्मं । यदा 'ते' त्वया 'पैतृके' पितुरागते राज्ये कृता–विहिताः कृत्यानि कुर्वन्ति–अनुतिष्ठन्ति कृत्यकरा—नियोगिनो वहवः–प्रभूताः, तदैव कृत्यकरत्वं स्वयं तव कर्तुमुचितमासीदित्युपस्कारः, 'तेषामि'ति कृत्यकराणां कृत्यं–परापराधपरिभावनादि कर्तव्यं 'परित्यज्य' व्रताङ्गीकारादपहाय अद्य 'कृत्यकरो' नियुक्तकः–अन्यदोषचिन्तको 'भवान्' त्वं, किमिति जात इति शेषः। तथा 'मोक्खाय घडसी'ति प्राकृतत्वान्मोक्षाय–मोक्षार्थं 'घटते' चेष्टते, तथा 'अत्तणिस्सेसकारए' त्ति आत्मनो निःशेषमिति–शेषाभावं प्रक्रमात् कर्मणः करोति–विधत्त इत्यात्मनिःशेषकारकः, यद्वा 'णिस्सेस'त्ति निःश्रेयसो मोक्षस्तत्कारको। 'मोक्षमार्गं' मुक्त्यध्वानं 'प्रतिपन्नेषु' अङ्गीकृतवत्सु साधुषु ब्रह्मचारिषु 'अहियत्थं'ति अहितार्थं 'निवारयन्' निषेधयन् 'न दोषं' परापवादलक्षणमस्येति शेषः, 'वक्तुम्' अभिधातुमर्हसि, यथा हि भवान् अहितान्निवारयन्, कथं गर्हसीत्यादि, एवं नमिरपि अद्य कृत्यकरो भवानिति कृत्यकरत्वलक्षणादहितान्निवारयति, तथा दुर्मुखोऽपि सञ्चयं किं करोषि ? इति सञ्चयत एवाहितान्निषेधयतीति नायं परापवाद इति वक्तुमुचितं, यद्वा— 'अहियत्थं णिवारिंतो'त्ति सुब्व्यत्ययादहितार्थान्निवारयन्तं न 'दोष'मिति मतुब्लोपान्न दोषवन्तं वक्तुमर्हसि, तथा चार्षम्—"रूसउ वा परो मा वा, विसं वा परियत्तउ। भासियव्वा हिया भासा, सपक्खगुणकारिया ॥१॥"

स्वप्नदर्शनम्, अभूदिति शेष, क.१, य. 'अहिमदर'त्ति अहिमन्दरयो नागराजाचलराजयो. 'नदिघोसे यत्ति' द्वादशतूर्यसङ्घातो नन्दी तस्य घोष, स च स्वप्नमवलोकयतो जात, तेन चासौ प्रतिबोधित इत्युपस्कार । इह च मिथिलापतिर्नेमिरित्युक्तौ मा भूत्तथाविधस्य तीर्थकरस्यापि नमे सम्भवाद्व्यामोह इति 'द्वौ नमी वैदेहौ' इत्याद्युक्त। तथा 'पुप्फुत्तरातो'त्ति पुष्पोत्तरविमानाच्च्यवन–भ्रशनम्, एकसमयेनेति योज्यते, प्रव्रज्या च–निष्क्रमण भवत्येकसमयेनैव, तथा प्रत्येकम्–एकैक हेतुमाश्रित्य 'बुद्धा.' अवगततत्त्वा प्रत्येकबुद्धा., 'केवलिन.' उत्पन्नकेवलज्ञाना, 'सिद्धिगता' मुक्तिपदप्राप्ता., त्रयाणामपि कर्मधारय, एकसमयेनैवेति चतुर्णामपि समसमयसम्भवात्। तथा 'सेय सुजाय'त्ति श्वेत वर्णत सुजात प्रथमत एवाहीनसमस्ताङ्गोपाङ्गतया, सुष्ठु—शोभने विभक्ते—विभागेनावस्थिते शृङ्गविषाणे यस्य स तथा तम्, ऋद्धि–बलोपचयात्मिकाम् अनृद्धि.–तस्यैव बलापचयतस्तर्णकादिपरिभवरूपा 'समुपेहिया ण' ति सम्यगुत्प्रेक्ष्येति–पर्यालोच्य पाठान्तरतः 'समुत्प्रेक्षमाणो' वा कलिङ्गराजोऽपीत्यत्रापिशब्द उत्तरापेक्षया समुच्चये। तथा 'इन्द्रकेतुम्' इन्द्रध्वज 'प्रविलुप्यमान' मिति जनै स्वस्ववस्त्रालङ्कारादिग्रहणत. इतश्चेतश्च विक्षिप्यमाण। तथा 'पूरावरेय'त्ति पूर.—पूर्णता अवरेको–रिक्तताऽनयो समाहारे पूरावरेक। तथा 'समञ्जरीपल्लवपुप्फचित्त' सह मञ्जरीभि –प्रतीताभि पल्लवैश्च–किशलयैर्यानि पुष्पाणि–कुसुमानि तैश्चित्रः—कर्बुर मञ्जरीपल्लवपुष्पचित्रस्त, यद्वा सहमञ्जरीपल्लवपुष्पैर्वर्तते य स तथा चित्र–आश्चर्योऽनयोर्विशेषणसमासः, 'समिक्ख'त्ति आर्षत्वात् समीक्षते पर्यालोचयति,

'अनुत्तरे' प्रधाने 'धर्म्मे' चारित्रधर्मे 'पुत्रं' सुतं 'स्थापयित्वा' निवेश्य, क ?–राज्ये 'अभिनिष्क्रामति' धर्माभिमुख्येन गृहस्थपर्यायान्निर्गच्छति, स्मेतीहापि शेषः, ततश्च प्रव्रजितवानित्यर्थः, प्राग्वत् तिङ्व्यत्ययेन वा व्याख्येयं, 'नमिः' नमिनामा राजा पृथिवीपतिरिति सूत्रार्थः ॥ स्यादेतत्, कुत्रावस्थितः ? कीदृशान् वा भोगान् भुक्त्वा सम्बुद्धः ? किं वाऽभिनिष्क्रामन् करोतीत्याह—

सो देवलोगसरिसे अंतेउरवरगतो वरे भोए। भुंजित्तु णमी राया बुद्धो भोगे परिच्चयइ ॥ ३ ॥

व्याख्या—'सः' इत्यनन्तरमुद्दिष्टः 'देवलोगसरिसे'त्ति देवलोकभोगैः सदृशा देवलोकसदृशाः, मयूरव्यंसकादित्वान्मध्यपदलोपी समासः, 'अंतेउरवरगतो'त्ति वरं–प्रधानं तच्च तदन्तःपुरं च वरान्तःपुरं तत्र गतः—स्थितो वरान्तःपुरगतः, प्राकृतत्वाच्च वरशब्दस्य परनिपातः, वरान्तःपुरं हि रागहेतुरिति तद्गतस्य तस्य भोगपरित्यागाभिधानेन जीववीर्योल्लासातिरेक उक्तः, तत्रापि कदाचिद्वराः शब्दादयो न स्युः तत्सम्भवे वा सुबन्धुरिव कुतश्चिन्निमित्तान्न भुञ्जीतापीत्याह–'वरान्' प्रधानान् 'भोगान्' मनोज्ञशब्दादीन् 'भुक्त्वा' आसेव्य 'नमिः' नमिनामराजा 'बुद्धः' विज्ञाततत्त्वः 'भोगान्' उक्तरूपान् परित्यजति, स्मेति शेषः । इह पुनर्भोगग्रहणमतिविस्मरणशीला अप्यनुग्राह्या एवेति ज्ञापनार्थमिति सूत्रार्थः ॥ किं भोगानेव त्यक्त्वाऽभिनिष्क्रान्तवान् ? उतान्यदपीत्याह—

मिहिलं सपुरजणवयं बलमोरोहं च परियणं सव्वं । चेच्चा अभिनिक्खंतो एगंतमहिट्ठिओ भयवं ॥ ४ ॥

इत्यवसितो नामनिष्पन्नो निक्षेप , सम्प्रति सूत्रालापकनिष्पन्नस्यावसर , स च सूत्रे सति भवतीति सूत्रानुगमे सूत्रमुधारणीय, तच्चेदम्—

चइऊण देवलोगाओ उववन्नो माणुसंमि लोगमि । उवसंतमोहणिज्जो सरती पोराणियं जाइ ॥ १ ॥

व्याख्या—च्युत्वा 'देवलोकात्' प्रतीतात्, 'उत्पन्न' जात 'मानुषे' मानुषसम्बन्धिनि 'लोके' प्राणिगणे उपशान्तम्—अनुदय प्राप्त मोहनीय—दर्शनमोहनीय यस्यासावुपशान्तमोहनीय 'स्मरति' चिन्तयति, सेति शेष , वर्तमाननिर्देशो वा प्राग्वत्, कामित्याह—'पोराणिय'ति पुराणामेव पौराणिकीं, विनयादित्वात् ठक्, चिरन्तनीमित्यर्थ , 'जातिम्' उत्पत्तिं, देवलोकादावपीति प्रक्रम, तद्गतसकलचेष्टोपलक्षण चेह जातिरिति सूत्रार्थ ॥ तत किमित्याह—

जाइं सरित्तु भयवं सहसंबुद्धो अणुत्तरे धम्मे । पुत्तं ठवित्तु रज्जे अभिनिक्खमती नमी राया ॥ २ ॥

व्याख्या—'जातिम्' उक्तरूपा स्मृत्वा, भगशब्दो यद्यपि धैर्यादिष्वनेकेषु अर्थेषु वर्तते, यदुक्त—"धैर्यसौभाग्यमाहात्म्ययशोऽर्कश्रुतधीश्रिय । तपोऽर्थोपस्थपुण्येशप्रयतततनवो भगा ॥ १ ॥" इति, तथापीह प्रस्तावाद्बुद्धिवचन एव गृह्यते, ततो भगो—बुद्धिर्यस्यास्तीति भगवान्, सहत्ति—स्वयमात्मनैव सम्बुद्ध —सम्यगवगततत्त्व सहसम्बुद्धो, नान्येन प्रतिबोधित इत्यर्थ, अथवा 'सहस'त्ति आर्षत्वात् सहसा—जातिस्मृत्यनन्तर झगित्येव बुद्ध , केत्याह—

विहारारामादीति प्रक्रमः, क्व सति?–'प्रव्रजति' प्रव्रज्यामाददाने 'तदा' तस्मिन् काले, राजा चासौ राज्यावस्थामाश्रित्य ऋषिश्च तत्कालापेक्षया राजर्षिः, यदिवा राज्यावस्थायामपि ऋषिरिव ऋषिः–क्रोधादिषड्वर्गजयात्, तथा च राजनीतिः–"कामः क्रोधस्तथा लोभो, हर्षो मानो मदस्तथा। षड्वर्गमुत्सृजेदेनं, तस्मिंस्त्यक्ते सुखी नृपः ॥ १ ॥" तस्मिन् 'नमौ' नमिनाम्नि, 'अभिनिष्क्रामति' गृहात् कषायादिभ्यो वा निर्गच्छतीति सूत्रार्थः ॥ पुनरत्रान्तरे यदभूत्तदाह—

अब्भुट्ठियं रायरिसिं, पव्वज्जाठाणमुत्तमं। सक्को माहणरूवेणं, इमं वयणमब्बवी ॥ ६ ॥

व्याख्या—'अभ्युत्थितम्' अभ्युद्यतं 'राजर्षिं' प्राग्वत् प्रव्रज्यैव स्थानं तिष्ठन्ति सम्यग्दर्शनादयो गुणा अस्मिन्निति-कृत्वा प्रव्रज्यास्थानं, प्रतीति शेषः, 'उत्तमं' प्रधानं, सुब्व्यत्ययेन सप्तम्यर्थे वा द्वितीया, ततः प्रव्रज्यास्थान उत्तमे 'अभ्युपगतं' तद्विषयोद्यमवन्तं 'शक्रः' इन्द्रो 'माहनरूपेण' ब्राह्मणवेषेण, आगत्येति शेषः, तदा हि तस्मिन् महात्मनि प्रव्रज्यां ग्रहीतुमनसि तदाशयं परीक्षितुकामः स्वयमिन्द्र आजगाम, ततः स 'इदं' वक्ष्यमाणम्, उच्यत इति वचनं–वाक्यम् 'अब्रवीत्' उक्तवानिति सूत्रार्थः ॥ यदुक्तवांस्तदाह—

किं नु भो अज्ज मिहिलाए, कोलाहलगसंकुला। सुचंति दारुणा सद्दा, पासाएसु गिहेसु अ? ॥ ७ ॥

व्याख्या—'किम्' इति परिप्रश्ने 'नु' इति वितर्के 'भो' इत्यामन्त्रणे 'अद्य' एतस्मिन् दिने 'मिथिलायां' नगर्यां कोला-

व्याख्या—'मिथिला' मिथिलानाम्नी नगरी, सह पुरै –अन्यनगरैर्जनपदेन च वर्तते या सा तथोक्ता ता न त्वेकामेव, 'बल' हस्त्यश्वादि चतुरङ्गम् 'अवरोध' च अन्त पुर 'परिजन' परिवर्ग 'सर्व' निरवशेष, न तु तथाविधप्रतिबन्धास्पद किञ्चिदेव 'त्यक्त्वा' अपहाय 'अभिनिष्क्रा त' प्रव्रजित, 'एगत'त्ति एक –अद्वितीय कर्म्मणाम तो यस्मिन्निति, मयूरव्यसकादित्वात् समास, तत एका तो–मोक्षस्तम् 'अधिष्ठित' इव आश्रितवानिवाधिष्ठित, तदुपाय सम्यग्दर्शनाद्यासेवनादधिष्ठित एव वा, इहैव जीवन्मुक्त्यवाप्ते, यद्वैकान्त–द्रव्यतो विजनमुद्यानादि भावतश्च सदा "एकोऽह न च मे कश्चिन्नाहमन्यस्य कस्यचित् । न त पश्यामि यस्याह, नासौ दृश्योऽस्ति यो मम ॥ १ ॥" इति भावनात एक एवाहमित्यन्तो–निश्चय एका त, प्राग्वत् समास, तमधिष्ठित, 'भगवान्' इति धैर्यवान् श्रुतवान् चेति सूत्रार्थ ॥ तत्रैवमभिनिष्क्रामति यदभूत्तदाह–यदिवा यदुक्त 'सर्व परित्यज्याभिनिष्क्रान्त' इति, तत्र कीदृक् तत् त्यज्यमानमासीदित्याह—

कोलाहलगब्भूत आसी मिहिलाए पव्वयतमि । तइया रायरिसिम्मि नमिम्मि अभिनिक्खमतमि ॥ ५ ॥

व्याख्या—कोलाहल –विलपिताऽऽक्रन्दितादिकलकल कोलाहल एव कोलाहलक स भूत इति–जातो यस्मिंस्तत् कोलाहलकभूतम् आहितादेराकृतिगणत्वान्निष्ठान्तस्य परनिपात, यदिवा भूतशब्द उपमार्थ, तत –कोलाहलकभूतमिति कोलाहलकरूपतामिवापन्न हा तात ! मातरित्यादिकलकलाकुलिततया 'आसीत्' अभूत् मिथिलाया, सर्व गृह-

मिति एतावन्मात्रं कारणम्, अनयोस्तु पृथगुपादानं प्रतिपाद्यभेदतः साधनवाक्यवैचित्र्यसूचनार्थं, तथा चाह श्रुतकेवली–"कत्थवि पंचावयवं दसहा वा सव्वहा ण पडिसिद्धं । ण य पुण सव्वं भण्णइ हंदी सवियारमक्खायं ॥ १ ॥" तथा–"जिणवयणं सिद्धं चेव भण्णती कत्थती उदाहरणं । आसज्ज उ सोयारं हेऊवि कहिंचि वोत्तव्वो ॥ २ ॥" अथवाऽन्वयव्यतिरेकलक्षणो हेतुः, उपपत्तिमात्रं तु दृष्टान्तादिरहितं कारणं, यथा निरुपमसुखः सिद्धो ज्ञानानावाधप्रकर्षात्, अन्यत्र हि निरुपमसुखासम्भवात् नोदाहरणमस्ति, दृष्टान्तश्च प्रकृष्टमत्यादिज्ञानानावाधाः परमसुखिनो मुनय इति ज्ञानानावाधप्रकर्षः निरुपमसुखत्वे हेतुरुच्यते, तथा च पूज्याः—"हेतू अणुगमवइरेगलक्खणो सज्झवत्थुपज्जातो । आहरणं दिट्ठंतो कारणमुववत्तिमेत्तं तु ॥१॥" इह हि आक्रन्दादिदारुणशब्दहेतुत्वमेव हेतुः, तस्योक्तन्यायेनान्वयान्वितत्वात्, सति चान्वये व्यतिरेकस्यापि सम्भवात्, इदमेव चान्वयव्यतिरेकविकलतया विवक्षितमुपपत्तिमात्रं कारणम्, एवं सर्वत्र कारणभावना कार्येत्यलं प्रसङ्गेन, प्रकृतमेव सूत्रमनुसियते, 'ततः' प्रेरणाऽनन्तरं 'नमिः' नमिनामा राजर्षिः 'देवेन्द्रं' शक्रम् 'इदं' वक्ष्यमाणम् 'अब्रवीत्' उक्तवानिति सूत्रार्थः ॥ किं तदुक्तवानित्याह—

१ कुत्रापि पञ्चावयवं दशधा वा सर्वथा न पतिपिद्धम् । न च पुनः सर्व भण्यते हन्दि सविचारमाख्यातम् ॥ १ ॥ जिनवचनं सिद्धमेव भण्यते कुत्रचिदुदाहरणम् । आसाद्य तु श्रोतारं हेतुरपि कुत्रचिद्वक्तव्यः ॥ २ ॥ २ हेतुरनुगमव्यतिरेकलक्षणः साध्यवस्तुपर्यायः । आहरणं दृष्टान्तः कारणमुपपत्तिमात्रं तु ॥ १ ॥

हलकेन–वहलकलकलात्मकेन सङ्कुला –व्याकुला कोलाहलकसङ्कुला 'श्रूयन्ते' इत्याकर्ण्यन्ते 'शब्दा' ध्वनय इति सम्बन्ध , ते च कदाचिद्वन्दिवृन्दोदीरिता अपि स्यु तन्निराकरणायाह—दारयन्ति जनमनांसीति दारुणा –विलपिताऽऽक्रन्दितादय , क्व पुनस्ते ?–'प्रासादेषु' सप्तभूमादिषु 'गृहेषु' सामान्यवेश्मसु, यद्वा 'प्रासादो देवतानरेन्द्राणा'-मितिवचनात् प्रासादेषु देवतानरेन्द्रसम्बन्धिध्यास्पदेषु 'गृहेषु' तदितरेषु चशब्दात्त्रिकचतुष्कचत्वरादिषु चेति सूत्रार्थ ॥ ततश्च—

एयमट्ठ निसामित्ता, हेउकारणचोइओ । तत्तो णमी रायरिसी, देविंद इणमब्बवी ॥ ९ ॥

व्याख्या—'एनम्' अनन्तरोक्तम् 'अर्थं' इत्युपचारादर्थाभिधायिन ध्वनिं 'निशम्य' आकर्ण्य हिनोति–गमयति विवक्षितमर्थमिति हेतु , स च पञ्चावयववाक्यरूप , कारण च–अन्यथाऽनुपपत्तिमात्र ताभ्या चोदित –प्रेरित हेतुकारणचोदित , कोलाहलकसङ्कुला दारुणा शब्दा श्रूयन्त इत्यनेन हि उभयमेतत् सूचित, तथाहि–अनुचितमिद भवतोऽभिनिष्क्रमणमिति प्रतिज्ञा, आक्रन्दादिदारुणशब्दहेतुत्वादिति हेतु , प्राणव्यपरोपणादिवदिति दृष्टान्त , यद्यदाक्रन्दादिदारुणशब्दहेतुस्तत्तद्धर्मार्थिनोऽनुचित, यथा प्राणव्यपरोपणादि, तथा चेद भवतोऽभिनिष्क्रमणमित्युपनय , तस्मादाक्रन्दादिदारुणशब्दादिहेतुत्वादनुचित भवतोऽभिनिष्क्रमणमिति निगमनमिति पञ्चावयव वाक्यमिह हेतु , शेषावयवविवक्षाविरहित त्वाक्रन्दादिदारुणशब्दहेतुत्व भवदभिनिष्क्रमणानुचितत्व विनाऽनुपपन्न-

प्रायम्, आत्मा च वृक्षकल्पः, तत्त्वतो हि नियतकालमेव सहावस्थितत्वेन उत्तरकालं च स्वस्वगतिगामितया द्रुमाश्रितखगोपमा एवामी स्वजनादयः, उक्तं हि—"यद्वद् द्रुमे महति पक्षिगणा विचित्राः, कृत्वाऽऽश्रयं हि निशि यान्ति पुनः प्रभाते । तद्वज्जगत्यसकृदेव कुटुम्बजीवाः, सर्वे समेत्य पुनरेव दिशो भजन्ते ॥ १ ॥" इति, ततश्चाऽऽक्रन्दादिदारुणशब्दहेतुत्वं हेतुत्वेनाभिधीयमानमसिद्धम्, एते हि स्वजनादयो वातेर्यमाणद्रुमविश्लिष्यत्खगा इव स्वस्वप्रयोजनहानिमेवाऽऽशङ्कमानाः क्रन्दन्ति, आह च—"आत्मार्थं सीदमानं स्वजनपरिजनो रौति हाहारवार्तो,—भार्या चात्मोपभोगं गृहविभवसुखं स्वं च यस्याश्च कार्यम् । क्रन्दत्यन्योऽन्यमन्यस्त्विह हि बहुजनो लोकयात्रानिमित्तं, यो वाऽन्यस्तत्र किञ्चिन्मृगयति हि गुणं रोदितीष्टः स तस्मै ॥ १ ॥" एवं चाऽऽक्रन्दादिदारुणशब्दानामभिनिष्क्रमणहेतुकत्वमसिद्धं, स्वप्रयोजनहेतुकत्वात् तेषां, तथा च भवदुक्ते हेतुकारणे असिद्धे एवेत्युक्तं भवतीति सूत्रार्थः ॥ ततश्च—

एयमट्ठं निसामित्ता, हेउकारणचोइओ । ततो णमिं रायरिसिं, देविंदो इणमब्बवी ॥ ११ ॥

व्याख्या—एनमर्थं निशम्य हेतुकारणयोः—अनन्तरसूत्रसूचितयोश्चोदितः—असिद्धोऽयं भवदभिहितो हेतुः कारणं चेत्यनुपपत्त्या प्रेरितः हेतुकारणचोदितः, ततो नमिं राजर्षिं देवेन्द्रः 'इदं' वक्ष्यमाणम् अब्रवीत् इति सूत्रार्थः ॥ किं तदित्याह—

मिहिलाए चेइए वच्छे, सीतच्छाए मणोरमे । पत्तपुप्फफलोवेते, बहूण बहुगुणे सता ॥ १० ॥

व्याख्या—'मिथिलायां' पुरि चयन चिति —इह प्रस्तावात् पत्रपुष्पाद्युपचय, तत्र साधुरिति तत प्रज्ञादेराकृतिगणत्वात् स्वार्थिकेऽणि चैत्यम्—उद्यान तस्मिन्, 'वच्छे'त्ति सूत्रत्वाद्विन्दुलोपे वृक्षे शीता—शीतला छाया यस्य तच्छीतच्छाय तस्मिन्, मन —चित्त रमते—धृतिमाप्नोति यस्मिन् त मनोरम—मनोरमाभिधान तस्मिन्, पत्रपुष्पफलानि प्रतीतानि तैरुपेत—युक्त पत्रपुष्पफलोपेत तस्मिन्, 'बहूना' प्रक्रमात् खगादीना, बहवो गुणा यस्मात्तत् तथा तस्मिन्, कोऽर्थ ?—फलादिभि प्रचुरोपकारकारिणि 'सदा' सर्वकालमिति सूत्रार्थ ॥ तत्र किमित्याह—

वाएण हीरमाणम्मि, चेइयम्मि मणोरमे । दुहिया असरणा अत्ता, एए कंदति भो ! खगा ॥ १० ॥

व्याख्या—'वातेन' वायुना 'ह्रियमाणे' इतस्तत क्षिप्यमाणे, वातश्च तदा शक्रेणैव कृत इति सम्प्रदाय, चितिरिहेष्टकादिचय, तत्र साधु —योग्यमित्यः प्राग्वत्, स एव चैत्यमस्मिन्, किमुक्त भवति ?—अधोबद्धपीठिके उपरि चोच्छ्रितपताके 'मनोरमे' मनोऽभिरतिहेतौ, वृक्ष इति शेष, दु ख सजात येषा ते दु खिता 'अत्ताणा' त्राणरहिता अत एव 'आर्ता' पीडिता 'एते' प्रत्यक्षा 'क्रन्दति' आक्रन्दशब्द कुर्वंति 'भो' इत्यामन्त्रणे 'खगा' पक्षिण । इह च किमत्र मिथिलाया दारुणा शब्दा श्रूयते ? इति यत्स्वजनजनाक्रन्दनमुक्त तत् खगक्रन्दा-

१ गाथाद्वयमि[illegible]

प्रागुक्तहेतोरसिद्धत्वमुक्तम्, तत्त्वतो ज्ञानादिव्यतिरिक्तस्य सर्वस्यास्वकीयत्वादित्यादिचर्चः प्राग्वदिति सूत्रार्थः ॥ एतदेव च भावयितुमाह—

चत्तपुत्तकलत्तस्स, निव्वावारस्स भिक्खुणो। पियं न विज्जई किंचि, अप्पियंपि न विज्जइ ॥ १५ ॥
बहुं खु मुणिणो भद्दं, अणगारस्स भिक्खुणो। सव्वतो विप्पमुक्कस्स, एगंतमणुपस्सओ ॥ १६ ॥

व्याख्या—त्यक्ताः—परिहृताः पुत्राश्च—सुताः कलत्राणि च—दारा येन स तथा तस्य, अत एव 'निर्व्यापारस्य' परिहृतकृपिपाशुपाल्यादिक्रियस्य 'भिक्षोः' उक्तरूपस्य 'प्रियम्' इष्टं 'न विद्यते' नास्ति 'किञ्चिद्' अल्पमपि, 'अप्रियमपि' अनिष्टमपि 'न विद्यते' नास्ति, प्रियाप्रियविभागास्तित्वे हि सति पुत्रकलत्रत्यागं न कुर्यादेव, तयोरेवातिप्रतिबन्धविपयत्वादिति भावः, एतेन यदुक्तं—नास्ति किञ्चनेति तत्समर्थितं, तत् स्वकीयत्वं हि पुत्राद्यत्यागतोऽभिष्वङ्गतः स्यात् स च निपिद्ध इति, एवमपि कथं सुखेन वसनं जीवनं वेत्याह—'बहु' विपुलं 'खुः' अवधारणे, बह्वेव 'मुनेः' तपस्विनः 'भद्रं' कल्याणं सुखं वा 'अनगारस्य' 'भिक्षोः' इति च प्राग्वत्, 'सर्वतः' बाह्यादभ्यन्तराच्च, यद्वा-स्वजनात् परिजनाच्च 'विप्रमुक्तस्य' इति पूर्ववत्, 'एकान्तम्' 'एकोऽह'मित्याद्युक्तरूपैकत्वभावनात्मकम् 'अनुपश्यतः' पर्यालोचयत इति सूत्रद्वयार्थः ॥ पुनरपि 'एय' सूत्रं प्राग्वत् (१७)—

पागारं कारइत्ता णं, गोपुरट्टालगाणि य। उस्सूलए सयग्घी य, ततो गच्छसि खत्तिया! ॥ १८ ॥

एस अग्गी अ वाओ अ, एय डज्झति मदिर । भगव ! अतेउरतेण, कीस ण नावपिक्खह ॥ १२ ॥

व्याख्या—'एष' इति प्रत्यक्षोपलभ्यमान 'अग्निश्च' वैश्वानर 'वातश्च' पवनस्तथा 'एतदि'ति प्रत्यक्ष 'दह्यते' भस्मसात् क्रियते, प्रक्रमाद्वातेरितेनाग्निनैव, 'मन्दिर' वेश्म, भवत्सम्बन्धीति शेप , भगवनिति पूर्ववद्, 'अन्तेउरतेण'ति अन्त पुराभिमुख 'कीस'त्ति कस्मात् ? 'णम्' इति वाक्यालङ्कारे 'नावप्रेक्षसे' नावलोकसे । इह च यद्यदात्मन स्व तत्तद्रक्षणीय, यथा ज्ञानादि, स्व चेद् भवतोऽन्त पुरमित्यादिहेतुकारणभावना प्राग्वदित्ति सूत्रार्थ ॥ ततश्च 'एय' सूत्र ( १३ ) प्राग्वत् ॥ किमब्रवीत् ? इत्याह—

सुह वसामो जीवामो, जेसि मो नत्थि किंचण । मिहिलाए डज्झमाणीए, न मे डज्झइ किंचण ॥ १४ ॥

व्याख्या—'सुख' यथा भवत्येव 'वसाम ' तिष्ठाम 'जीवाम ' प्राणान् धारयाम , येपा 'मो' इत्यस्माकं 'नास्ति' न विद्यते 'किञ्चन' वस्तुजात, यत —'एकोऽह न च मे कश्चित्, स्वपरो वाऽपि विद्यते । यदेको जायते जन्तुर्म्रियतेऽप्येक एव हि ॥ १ ॥'' इति न किञ्चिदन्त पुरादि मत्सत्क, यतश्चैवमतो 'मिथिलायाम्' अस्या पुरि दह्यमानाया न मे दह्यते 'किञ्चन' स्वल्पमपि, मिथिलाग्रहण तु न केवलम त पुराद्येव न मत्सम्बन्धि किन्त्वन्यदपि स्वजनजनादि सम्वकर्मफलभुजो हि ज तव तथा तथाऽस्मिन् भ्राम्यन्तीति किमत्र कस्य स्व पर चेति ख्यापनार्थं । ततश्चानेन

वन्धिकोपोपरोधितया 'प्राकारं' शालं, कृत्वेति सम्वन्धः, उपलक्षणं चैषां मानादिनिरोधिनां मार्दवादीनां, तिसृभिः—अट्टालकोचूलकशतघ्नीसंस्थानीयाभिर्मनोगुप्त्यादिभिर्गुप्तिभिः गुप्तं त्रिगुप्तं, मयूरव्यंसकादित्वात् समासः, प्राकारस्य विशेषणं, अत एव दुःखेन प्रधृष्यते—परैरभिभूयत इति दुष्प्रधर्षः स एव दुष्प्रधर्षकस्तं, पठन्ति च—'खंतिं निउणं पागारं तिगुत्तिदुप्पधंसयं'ति, स्पष्टं । इत्थं यदुक्तं 'प्राकारादीन् कारयित्वे'ति तत्प्रतिवचनमुक्तं, सम्प्रति तु प्राकाराट्टालकेष्ववश्यं योद्धव्यं, तच्च सत्सु प्रहरणादिषु प्रतिविधेये च वैरिणि सम्भवत्यत आह—'धनुः' कोदण्डं 'पराक्रमं' जीववीर्योल्लासरूपमुत्साहं कृत्वा 'जीवां च' प्रत्यञ्चां च 'ईर्याम्' ईर्यासमितिमुपलक्षणत्वाच्छेपसमितीश्च 'सदा' सर्वकालं, तद्विरहितस्य जीववीर्यस्याप्यकिञ्चित्करत्वात्, 'धृतिं च' धर्माभिरतिरूपां 'केतनं' शृङ्गमयधनुर्मध्ये काष्ठमयमुष्टिकात्मकं, ननु तदुपरि स्नायुना निवध्यते इदं तु केन वन्धनीयमित्याह—'सत्येन' मनःसत्यादिना 'पलिमंथए'त्ति वध्नीयात्, ततः किमित्याह—'तपः' षड्विधमान्तरं परिगृह्यते, तदेव कर्म प्रत्यभिभेदितया 'नाराचः' अयोमयो वाणस्तद्युक्तेन प्रक्रमात् धनुषा, 'भित्त्वा' विदार्य कर्म—ज्ञानावरणादि कञ्चुक इव कर्मकञ्चुकस्तं, इह कर्मकञ्चुकग्रहणेनैवात्मैवोद्धतो वैरीत्युक्तं भवति, वक्ष्यति च—"अप्पा मित्तममित्तं च, दुप्पट्ठियसुपट्ठिय'न्ति, कर्मणस्तु कञ्चुकत्वं तद्गतमिथ्यात्वादिप्रकृत्युदयवर्तिनः श्रद्धानगरमुपरुन्धत आत्मनो दुर्निवारत्वात्, 'मुनिः' प्राग्वत्, कर्मभेदे जेयस्य जितत्वात् विगतः सङ्ग्रामो यस्य यस्माद्वेति विगतसङ्ग्रामः—उपरतायाधनः सन्, भवन्त्यस्मिन् शारीरमानसानि दुःखानीति भवः—संसारस्तस्मात् परिमु-

व्याख्या—प्रकर्षेण मर्यादया च कुर्वन्ति तमिति प्राकारस्त—धूलीष्टकादिविरचित 'कारयित्वा' विधाप्य 'गोपुराट्टालकानि च' तत्र गोभि पूर्यन्त इति गोपुराणि—प्रतोलीद्वाराणि, गोपुरग्रहणमर्गलाकपाटोपलक्षणम्, अट्टालकानि-प्राकारकोष्ठकोपरिवर्तीनि आयोधनस्थानानि 'उस्सूलय'त्ति खातिका परबलपातार्थमुपरिच्छादितगर्ता वा 'सयग्घी य'त्ति शत घ्नन्तीति शतघ्न्य, ताश्च यन्त्रविशेषरूपा, 'तत' एव सकल निराकुलीकृत्य 'गच्छसी'ति तिङ्व्यत्ययाद्गच्छ, क्षतात्त्रायत इति क्षत्रियस्तत्सम्बोधन हे क्षत्रिय !, हेतूपलक्षण चेद, स चाय—य क्षत्रिय स पुररक्षाप्रत्यनिहित, यथोदितोदयादि, क्षत्रियश्च भवान्, शेष प्राग्वदिति सूत्रार्थ ॥ तत 'एय' ( १९ ) सूत्र प्राग्वत् ।—

सद्ध णगरिं किच्चा, तवसवरमग्गल । खति निउणपागार, तिगुत्त दुप्पधसय ॥ २० ॥

धणु परक्कम किच्चा, जीव च ईरिय सदा । धिइ च केयण किच्चा, सच्चेण पलिमथए ॥ २१ ॥

तवनारायजुत्तेण, भेत्तूण कम्मकचुअ । मुणी विगयसगामो, भवाओ परिमुच्चति ॥ २२ ॥

व्याख्या—'श्रद्धा' तत्त्वरुचिरूपामशेषगुणाधारतया 'नगरीं पुरीं 'कृत्वा' हृदि विधाय, अनेन च प्रशमसवेगादीनि गोपुराणि कृत्वेत्युपलक्ष्यते, अर्गलाकपाट तर्हि किमित्याह—तप —अनशनादि बाह्य तत्प्रधान सवर —आश्रवनिरोधलक्षणस्तप सवरस्त, मिथ्यात्वादिदुष्टनिवारकत्वेन अर्गला—परिघस्तत्प्रधान कपाटमप्यर्गलेत्युक्त, ततोऽर्गलाम्—अर्गलाकपाट कृत्वेति सम्बन्ध, प्राकार क इत्याह—'क्षान्ति' क्षमा निपुणमिव निपुण—शत्रुरक्षण प्रति श्रद्धाविरोध्यनन्तानु-

न संशयितस्तथापि किमिहैव गृहं न कुरुषे ? अत आह—'यत्रैव' विवक्षितप्रदेशे 'गन्तुं' यातुम् 'इच्छेत्' अभिलषेत् 'तत्थ'त्ति व्यवच्छेदफलत्वाद्वाक्यस्य तत्रैव—जिगमिषितप्रदेशे 'कुर्वीत' विदधीत स्वस्य—आत्मन आश्रयो—वेश्म स्वाश्रयस्तं, यद्वा शाश्वतं—नित्यं, प्रक्रमाद्गृहमेव, ततोऽयमर्थः—इदं तावदिहावस्थानं मार्गावस्थानप्रायमेव, यत्र तु जिगमिषितमस्माभिस्तत् मुक्तिपदं, तदाश्रयविधाने च प्रवृत्ता एव वयं, ततस्तत्करणे प्रवृत्तत्वात्कथं प्रेक्षावत्त्वक्षतिः ?, तथा च यः प्रेक्षावानित्याद्यपि तत्त्वतः सिद्धसाधनतयैवावस्थितमिति सूत्रार्थः ॥ ततः पुनरपि 'एय' ( २७ ) सूत्रं प्राग्वत् ।—

आमोसे लोमहारे य, गंठिभेए य तक्करे । णगरस्स खेमं काऊणं, ततो गच्छसि खत्तिया ! ॥ २८ ॥

व्याख्या—आ–समन्तात् मुष्णन्ति–स्तैन्यं कुर्वन्तीत्यामोषास्तान्, लोमानि–रोमाणि हरन्ति–अपनयन्ति प्राणिनां ये ते लोमहाराः, किमुक्तं भवति ?–अतिनिस्त्रिंशतया आत्मविघाताशङ्कया च प्राणान् विहत्यैव ततः सर्वस्वमपहरन्ति, तथा च वृद्धाः–लोमहाराः प्राणहारा इति, तांश्च, ग्रन्थिं–द्रव्यसम्बन्धिनं भिन्दन्ति—घुर्घुरकद्विकर्तिकादिना विदारयन्तीति ग्रन्थिभेदास्तान्, चशब्दो भिन्नक्रमः, ततस्तदेव कुर्वन्तीति तस्कराः—सर्वकालं चौर्यकारिणस्तांश्च, यत आहुर्वैयाकरणाः—'तद्बृहतोः करपत्योश्चौरदेवतयोः सुट् तलोपश्च' ( ६-१-१५७ वार्त्तिके ) इह चोत्साद्येति गम्यते 'प्रविश्य पिण्डी' मित्युक्तौ भक्षयेतिवत्, यद्वा सप्तम्येवेयं वह्वर्थे चैकवचनं, ततश्चामोषादिषूपताप-

च्यते, एतेन च यदुक्त–'प्राकार कारयित्वे'त्यादि, तत्सिद्धसाधनम्, इत्थ श्रद्धानगररक्षणाभिधानात् भवतश्च तत्त्वत-स्तदविज्ञतेति चोक्त भवति, न च भवदभिमतप्राकारादिकरणे सकलशारीरमानसक्लेशवियुक्तिलक्षणा मुक्तिरवाप्यते, इतस्तु तदवाप्तिरपीति सूत्रत्रयार्थ ॥ एव च तेनोक्ते 'एय' २३ सूत्र प्राग्वत् ।—

पासाए कारइत्ता ण, वद्धमाणगिहाणि य । वालग्गपोइयाओ य, तओ गच्छसि खत्तिया ! ॥ २४ ॥

व्याख्या—प्रसीदन्ति नृणा नयनमनासि येषु ते प्रासादास्तान् उक्तरूपान् 'वर्द्धमानगृहाणि च' अनेकधा वास्तुविद्याऽभिहितानि 'वालग्गपोइयातो य'त्ति देशीपद वलभीवाचक, ततो वलभीश्च कारयित्वा, अन्ये त्वाकाशतडागमध्यस्थित क्षुल्लकप्रासादमेव 'वालग्गपोइया य'त्ति देशीपदाभिधेयमाहु, ततस्ताश्च क्रीडास्थानभूता कारयित्वा, ततोऽनन्तर गच्छ क्षत्रिय ! । एतेन च य प्रेक्षावान् स सति सामर्थ्ये प्रासादादि कारयिता यथा ब्रह्मदत्तादि, प्रेक्षावाश्च सति सामर्थ्ये भवान्, इत्यादिहेतुकारणयो सूचनमकारीति सूत्रार्थ ॥ एव च शक्रेणोक्ते 'एय' २५ सूत्र प्राग्वत् ।—

ससय खलु सो कुणइ, जो मग्गे कुणई घर । जत्थेव गतुमिच्छेज्जा, तत्थ कुव्विज्ज सासय ॥ २६ ॥

व्याख्या—सशीति सशय –इदमित्थ भविष्यति नवेत्युभयाशावलम्बन प्रत्ययस्त, 'खलु' एवकारार्थे, तत सशयमेव स कुरुते–यथा मम कदाचिद्गमन भविष्यतीति, यो मार्गे कुरुते गृह, गमननिश्चये तत्करणायोगाद्, अह तु न सशयित इत्याशय, सम्यग्दर्शनादीना मुक्ति प्रत्यवन्ध्यहेतुत्वेन मया निश्चितत्वाद्वाप्तत्वाच्च, यदि नाम

जे केइ पत्थिवा तुब्भं, नानमंति नराहिवा ! । वसे ते ठावइत्ता णं, तओ गच्छसि खत्तिया ! ॥ ३२ ॥

व्याख्या—ये केचित् इति सामस्त्योपदर्शकं 'पार्थिवाः' भूपालाः, 'तुब्भं'ति तुभ्यं 'नानमन्ति' न मर्यादया प्रह्वीभवन्ति, तुभ्यमिति च नमतियोगेऽपि चतुर्थीदर्शनात्, 'मात्रे पित्रे च सवित्रे च नमामी'त्यादिवददुष्टमेव, पठ्यते च—'तुब्भं'ति, तत्र च तवेति शेषविवक्षया षष्ठी, 'नराहिवा' इत्यत्र अकारो 'ह्रस्वदीर्घौ मिथः' इतिलक्षणात्, ततश्च हे 'नराधिप !' नृपते ! 'वशे' इत्यात्मायत्तौ 'तानि'ति अनानमत्पार्थिवान् 'स्थापयित्वा' निवेश्य कृत्वेतियावत्, ततो गच्छ क्षत्रिय ! । इहापि यो नृपतिः सोऽनमत्पार्थिवनमयिता, यथा भरतादिः, इत्यादिहेतुकारणे अर्थतः आक्षिप्ते इति सूत्रार्थः ॥ एवं तु सुरपतिनोक्ते 'एय' ३३ सूत्रं प्राग्वत् ।—

जो सहस्सं सहस्साणं, संगामे दुज्जए जिणे । एगं जिणेज्ज अप्पाणं, एस से परमो जओ ॥ ३४ ॥
अप्पाणमेव जुज्झाहि, किं ते जुज्झेण वज्झओ ? । अप्पाणमेव अप्पाणं, जिणित्ता सुहमेहति ॥ ३५ ॥
पंचिंदियाणि कोहं, माणं मायं तहेव लोहं च । दुज्जयं चेव अप्पाणं, सव्वमप्पे जिए जितं ॥ ३६ ॥

व्याख्या—'य' इत्यनुद्दिष्टनिर्देशे 'सहस्सं' दशशतात्मकं सहस्राणां प्रक्रमात् सुभटसम्बन्धिनां 'सङ्ग्रामे' युद्धे 'दुर्जये' दुरापपरपरिभवे 'जयेद्' 'अभिभवेत्, सम्भावने लिङ्, 'एकम्' अद्वितीयं 'जयेत्' यदि कथञ्चिज्जीववीर्योल्लासतोऽभिभवेत्, कम् ?—'आत्मानं' स्वं, दुराचारप्रवृत्तमिति गम्यते, 'एषः' अनन्तरोक्तः 'से' इति तस्य जेतुः सुभटदश-

कारिषु सत्सु 'नगरस्य' पुरस्य 'क्षेम' सुस्थ 'कृत्वा' विधाय 'तत' तदनन्तर गच्छ क्षत्रिय!, एतेनापि य सधर्मा नृपति स इहाधर्म्मकारिनिग्रहकृत्, यथा भरतादि, सधर्म्मनृपतिश्च भवानित्यादिहेतुकारणसूचना कृतैवेति सूत्रार्थ ॥ इत्थ शक्रोक्तौ 'एय' २९ सूत्र प्राग्वत् ।—

असइ तु मणुस्सेहिं, मिच्छादडो पउजइ । अकारिणोऽत्थ यज्झति, मुचई कारओ जणो ॥ ३० ॥

व्याख्या—'असकृद्' अनेकधा, 'तु' एवकारार्थः, ततश्चासकृदेव 'मनुष्यै' मनुजै 'मिथ्या' व्यलीक, किमुक्त भवति?—अनपराधिष्वज्ञानाहङ्कारादिहेतुभिरपराधिष्विव दण्डनं दण्ड —देशत्यागशरीरनिग्रहादि 'प्रयुज्यते' व्यापार्यते, कथमिदमित्याह—'अकारिण' आमोपाद्यविधायिन 'अत्र' इत्यस्मिन् प्रत्यक्षत उपलभ्यमाने मनुष्यलोके 'बध्यन्ते' निगडादिभिर्नियन्त्र्यन्ते 'मुच्यते' त्यज्यते 'कारक' विधायक, अकृतत्वादामोषणादीना, 'जन' लोक, तदनेन यदुक्त प्राग्—'आमोषकाद्युत्सादनेन नगरस्य क्षेम कृत्वा गच्छेति, तत्र तेषा ज्ञातुमशक्यतया क्षेमकरणस्याप्यशक्यत्वमुक्त, यत्तु 'य सधर्मेत्यादि' सूचित, तत्रापरिज्ञानतोऽनपराधिनामपि दण्डमादधता सधर्मनृपतित्वमपि तावचिन्त्यमित्यसिद्धता हेतोरिति सूत्रार्थ ॥ 'एय' ३१ सूत्र प्राग्वत्, नवरमियता स्वजनान्त पुरपुरादिप्रासादनृपतिधर्मविषयः किमस्याभिष्वङ्गोऽस्ति? नेति वेति विमृश्य सम्प्रति द्वेषाभाव विवेक्तुमिच्छुर्विजिगीषुतामूलत्वात् द्वेषस्य तामेव परीक्षितुकाम शक्र इदमुक्तवान्—

ततश्च–यस्माद् 'आत्मैव' जीव एव दुर्जयः ततः सर्वमिन्द्रियाद्यात्मनि जिते जितम्, अनेन चेन्द्रियादीनामेव दुःखहेतुत्वात्तज्जयतः सुखप्राप्तिः समर्थिता भवति । एवं च फलोपदर्शनद्वारेणैवंविधैव विजिगीपुता श्रेयसीत्याचष्टे, ततश्च यो नृपतिरित्याद्यपि तत्त्वतो विजिगीपुत्वदर्शनात् सिद्धसाधनतया प्रत्युक्तमिति सूत्रार्थः ॥ भूयोऽपि–'एय' ३७ सूत्रं प्राग्वत् । नवरमनन्तरपरीक्षातो द्वेषोऽप्यनेन परिहृत इति निश्चित्य जिनप्रणीतधर्मं प्रति स्थैर्यं परीक्षितुकामः शक्र इदमवोचत्—

जइत्ता विउले जन्ने, भोइत्ता समणमाहणे । दच्चा भोच्चा य जट्ठा य, ततो गच्छसि खत्तिया ! ॥ ३९ ॥

व्याख्या—'जइत्त'त्ति याजयित्वा 'विपुलान्' विस्तीर्णान् 'यज्ञान्' यागान् 'भोजयित्वा' अभ्यवहार्य श्रमणाश्च–निर्ग्रन्थादयो ब्राह्मणाश्च–द्विजाः श्रमणब्राह्मणास्तान्, 'दत्त्वा' द्विजादिभ्यो गोभूमिसुवर्णादीन्, भुक्त्वा च मनोज्ञशब्दादीन् इष्ट्वा च राजर्षित्वावाप्तौ स्वयं यागान् ततो गच्छ क्षत्रिय !, अनेन यद्यत्प्राणिप्रीतिकरं तत्तद्धर्माय, यथा हिंसोपरमादि, प्राणिप्रीतिकराणि चामूनि यागादीनीत्यादिहेतुकारणे सूचिते एवेति सूत्रार्थः ॥ शक्रवचनानन्तरम् 'एय' ३९ सूत्रं प्राग्वत् ।—

जो सहस्सं सहस्साणं मासे मासे गवं दए । तस्सावि संजमो सेओ, अदितस्सवि किंचणं ॥ ४० ॥

व्याख्या—यः 'सहस्रं सहस्राणां' दशलक्षात्मकं मासे मासे 'गवां' प्रतीतानां 'दए'त्ति दद्यात्, 'तस्यापि' एवं-

शतसहस्रजयात् 'परम' प्रकृष्ट 'जय' परेषामभिभव, तदनेनाऽऽत्मन एवातिदुर्जयत्वमुक्तं, तथा च-'अप्पाणमेव'-त्ति तृतीयार्थे द्वितीया, ततश्चाऽऽत्मनैव सह 'युध्यस्व' सङ्ग्राम कुरु, यद्वा युधेरन्तर्भावितण्यर्थत्वात् युध्यस्वेति योधयस्व, कम्?-आत्मान, इहाप्यात्मनैव सहेति शेषः, किं?, न किञ्चिदित्यर्थ, 'ते' तव 'युद्धेन' सङ्ग्रामेण, 'बाह्यत' इति बाह्य पार्थिवादिरूपाभिस, यद्वा बाह्यत इति तृतीयार्थे तसि, ततो बाह्येन युद्धेनेति सम्बध्यते, एव च 'अप्पाणमेव'त्ति आत्मनैवान्यव्यतिरिक्तेनाऽऽत्मान स्व 'जइत्त'त्ति जित्वा 'सुखम्' ऐकान्तिकात्यन्तिकमुक्तिसुखात्मकम् 'एधते' इत्यनेकार्थत्वाद्धातूना प्राप्नोति, अथवा 'सुहमेहए'त्ति शुभ-पुण्यमेधते-अन्तर्भावितण्यर्थत्वात् वर्द्धयति। कथमात्मन्येव जिते सुखावाप्तिरित्याह—'पञ्चेन्द्रियाणि' श्रोत्रादीनि 'क्रोध' कोप 'मान' अहङ्कार 'माया' निकृति तथैव 'लोभश्च' गार्ध्यलक्षण 'दुर्जय' दुरभिभव, 'च' समुच्चये, 'एव' इति पूरणे, अतति-सतत गच्छति तानि तान्यध्यवसायस्थानान्तराणीति व्युत्पत्ते आत्मा-मन, सर्वत्र च सूत्रत्वात् लोपा निर्देशः, 'सर्वम्' अशेषमिन्द्रियादि, उपलक्षणत्वात् मिथ्यात्वादि च, 'आत्मनि' जीवे 'जिते' अभिभूते 'जित'मिति अभिभूतमेव। ननु मनसि जिते जितान्येवेन्द्रियादीनीति किं पृथक् तज्जयाभिधानेन?, सत्य, तथापि प्रत्येक दुर्जयत्वख्यापनाय पृथगुपन्यास इत्यदोष, यद्वा-'दुज्जय चेव अप्पाण'ति चकारो हेत्वर्थे, 'एव' अवधारणे भिन्नक्रमश्च आत्मशब्दादनन्तर द्रष्टव्य,

---

१ नपुंसकत्वेनार्थे

व्याख्या—'घोरः' अत्यन्तदुरनुचरः, स चासावाश्रमश्च आङिति—स्वपरप्रयोजनाभिव्याप्त्या श्राम्यन्ति—खेदमनुभवन्त्यस्मिन्नितिकृत्वा घोराश्रमो—गार्हस्थ्यं, तस्यैवाल्पसत्त्वैर्दुष्करत्वात्, यत आहुः—"गृहाश्रमसमो धर्मो, न भूतो न भविष्यति । पालयन्ति नराः शूराः, क्लीबाः पाखण्डमाश्रिताः ॥ १ ॥" तं 'त्यक्त्वा' अपहाय 'जहित्ता णं'ति क्वचित् पाठः, तत्र च हित्वा—'अन्यत्' एतद्व्यतिरिक्तं कृषिपाशुपाल्यादि अशक्तकातरजनातिनिन्दितं 'प्रार्थयसे' अभिलपसि, 'आश्रमं' प्रव्रज्यालक्षणं, नेदं क्लीवसत्त्वानुचरितं भवादृशानामुचितमित्यभिप्रायः । तर्हि किमुचितमित्याह—'इह' अस्मिन्नेव गृहाश्रमे, स्थित इति गम्यते, पोषं—धर्मपुष्टिं धत्त इति पोषधः—अष्टम्यादितिथिषु व्रतविशेषः, तत्र रतः—आसक्तः पोषधरतः 'भवाहि'त्ति भव, अणुव्रताद्युपलक्षणमेतद्, अस्यैव चोपादानं पोषधदिनेष्ववश्यंभावतस्तपोऽनुष्ठानख्यापकं, यत आह आससेनः—"सर्वेष्वपि तपोयोगः, प्रशस्तः कालपर्वसु । अष्टम्यां पञ्चदश्यां च, नियतं पोषधं वसेद् ॥ १ ॥" इति 'मनुजाधिप !' नृपते ! । अत्र च घोरपदेन हेतुराक्षिप्तः, तथाहि—यद्यद् घोरं तत्तद् धर्मार्थिनाऽनुष्ठेयं, यथाऽनशनादि, तथा चायं गृहाश्रमः, शेषमेतदनुसारतोऽभ्यूह्यमिति सूत्रार्थः ॥ ततश्च—'एय' सूत्रं ॥ ४३ ॥ प्राग्वत् ।—

मासे मासे उ जो बालो, कुसग्गेणं तु भुंजइ । न सो सुक्खायधम्मस्स, कलं अग्घइ सोलसिं ॥ ४४ ॥

व्याख्या—'मासे मासे' इति वीप्सायां द्विवचनं, 'तुः' इहोत्तरत्र चैवकारार्थः, ततश्च मासे मास एव, न त्वेकस्मि-

विधस्य दातुर्यदि कथञ्चिच्चारित्रमोहनीयक्षयोपशमेन 'सयम ' आश्रवादिविरमणात्मक स्यात् तदा स एव 'श्रेयान्'
अतिशयप्रशस्य , कथभूतस्यापि ?–'अददतोऽपि' अयच्छतोऽपि 'किञ्चन' स्वल्पमपि वस्तु, यद्वा 'तस्सावि'त्ति
तस्मादप्युक्तरूपाद्दातुरवधित्वेन विवक्षितात्, सयच्छति–प्राणिहिंसादिभ्य सम्यगुपरमतीति सर्वधातूना पचादिषु
दर्शनादिति सयम –सयमवान्, साधुरित्यर्थ , 'श्रेयान्' प्रशस्यतर , अथवा तस्यापि दातु प्रक्रमात् गोदानधर्मात्
'सयम ' उक्तरूप श्रेयान्, शेष पूर्ववत्, गोदान चेह यागाद्युपलक्षणम्, अतिप्रभूतजनाचरितमित्युपात्तम्, एव च
सयमस्य प्रशस्यतरत्वमभिदधता यागादीना सावद्यत्वमर्थादावेदित, तथा च यज्ञप्रणेतृभिरुक्तम्–"षट् शतानि
नियुज्यन्ते, पशूना मध्यमेऽहनि । अश्वमेधस्य वचनान्न्यूनानि पशुभिस्त्रिभि ॥ १ ॥" इयत्पशुवधे च कथमसाव-
द्यता नाम ?, तथा दानान्यप्यशनादिविषयाणि धर्मोपकरणगोचराणि च धर्माय वर्ण्यन्ते, यत आह–"अशनादीनि
दानानि, धर्मोपकरणानि च । साधुभ्य साधुयोग्यानि, देयानि विधिना बुधै ॥ १ ॥ " शेषाणि तु सुवर्णगोभू-
म्यादीनि प्राण्युपमर्दहेतुतया सावद्यान्येव, भोगाना तु सावद्यत्व सुप्रसिद्ध । तथा च प्राणिप्रीतिकरत्वादित्यसिद्धो
हेतुः, प्रयोगश्च–यत्सावद्य न तत् प्राणिप्रीतिकर, यथा हिंसादि, सावद्यानि च यागादीनि इति सूत्रार्थ ॥ 'एयमट्ठ'
४१ सूत्र प्राग्वत् । नवरमित्थ जिनधर्मस्थैर्यमवधार्य प्रव्रज्या प्रति दृढोऽयमुत नेति परीक्षणार्थं शक्र इदमवादीत्—

घोरासम चइत्ता ण, अन्न पत्थेसि आसम । इहेव पोसहरओ, भवाहि मणुयाहिवा ! ॥ ४२ ॥

मणयश्च–इन्द्रनीलादयो मुक्ताश्च–मौक्तिकानि मणिमुक्तं, तथा 'कास्यं' कांस्यभाजनादि 'दूष्यं' वस्त्राणि, 'चः' स्वगतानेकभेदसंसूचकः, 'वाहनं' रथाश्वादि, पठन्ति च–'सवाहणं'ति सह वाहनैर्वर्तत इति सवाहनं हिरण्यादीति सम्बन्धः, 'कोषं' भाण्डागारं चर्मलताद्यनेकवस्तुरूपं 'वड्ढावइत्ता णं'ति वृद्धिं प्रापय्य ततः समस्तवस्तुविषयेच्छापरिपूर्त्तौ गच्छ क्षत्रिय !, अयमाशयः–यः साकाङ्क्षो नासौ धर्मानुष्ठानयोग्यो भवति, यथा मम्मणवणिक्, साकाङ्क्षश्च भवान्, आकाङ्क्षणीयहिरण्यादिवस्त्वपरिपूर्त्तेः, तथाविधद्रमकवदिति । शेषं प्राग्वदिति सूत्रार्थः ॥ ततः 'एयं' ४७ सूत्रं प्राग्वत् ।—

सुवण्ण रूप्पस्स य पव्वया भवे, सिया हु केलाससमा असंखया ।
नरस्स लुद्धस्स न तेहि किंचि, इच्छा हु आगाससमा अणंतया ॥ ४८ ॥
पुढवी साली जवा चेव, हिरण्णं पसुभिस्सह । पडिपुन्नं नालमेगस्स, इइ विज्जा तवं चरे ॥ ४९ ॥

व्याख्या—सुवर्णं च रूप्यं च सुवर्णरूप्यमिति समाहारस्तस्य, 'तुः' पूरणे, यद्वाऽऽर्षत्वाद्विभक्तिलोपः, तुशब्दः समुच्चये, ततः स्वर्णस्य रूप्यस्य च पर्वता इव पर्वताः–पर्वतप्रमाणाः राशयो 'भवन्ति' भवेयुः, पर्वतप्रमाणत्वेऽपि च लघुपर्वतप्रमाणा एव स्युरत आह–'सिया हु'त्ति स्यात्–कदाचित्, हुरवधारणे भिन्नक्रमश्च, ततः 'कैलाससमा' एव कैलासपर्वततुल्या एव, न त्वन्यलघुपर्वतप्रमाणाः, तेऽपि 'असङ्ख्यकाः' सङ्ख्याविरहिताः, न तु द्वित्रा एव, नरस्य लुब्धस्य, उपलक्षणत्वात् स्त्रियाः पण्डकस्य वा, न तैः कैलाशसमैरपि सुवर्णरूप्यपर्वतैः 'किञ्चिदपि' अल्पमपि परितोषोत्पादनं प्रति

न्नेव मासेऽर्धमासादौ वेति, 'य' कश्चिद् 'बाल' अविवेक 'कुशाग्रेणैव' तृणविशेषप्रान्तेन भुङ्क्ते, एतदुक्त भवति—यावत् कुशाग्रेऽवतिष्ठते तावदेवाभ्यवहरति नातोऽधिकम्, अथवा कुशाग्रेणेति जातावेकवचन, तृतीया तु ओदनेनासौ भुङ्क्त इत्यादिवत् साधकतमत्वेनाभ्यवह्रियमाणत्वेऽपि विवक्षितत्वात्, 'न' इति निषेधे 'स' इति य कुशाग्रैर्भुङ्क्ते स एवविधकष्टानुष्ठाय्यपि सुष्ठु–शोभन सर्वसावद्यविरतिरूपत्वादाङिति–अभिव्याप्त्या ख्यात –तीर्थकरादिभि कथित स्वाख्यात तथाविधो धर्मो यस्य सोऽय स्वाख्यातधर्मा तस्य, चारित्रिण इत्यर्थ, 'कला' भागम् 'अर्घति' अर्हति, 'षोडशीं' षोडशपूरणामित्युक्त भवति, किं पुनस्तुल्योऽधिको वा ?, षोडशांशसमोऽपि न भवति, ततो यदुक्तम्–'यद्यद् घोर तत्तद्धर्मार्थिनाऽनुष्ठेयमनशनादिवदि'ति, अत्र घोरत्वादित्यनैकान्तिको हेतु, घोरस्यापि स्वाख्यातधर्मस्यैव धर्मार्थिनाऽनुष्ठेयत्वाद्, अन्यस्य त्वात्मविघातादिवत्, अन्यथात्वात्, प्रयोगश्चात्र–यत् स्वाख्यातधर्मरूप न भवति घोरमपि न तद्धर्मार्थिनाऽनुष्ठेय, यथाऽऽत्मवधादि, तथा च गृहाश्रम, तद्रूपत्व चास्य सावद्यत्वाद्धिंसावदित्यल प्रसङ्गेन। शेष प्राग्वदिति सूत्रार्थ ॥ 'एय' ४५ सूत्र प्राग्वत्। नवर यतिधर्म दृढोऽयमिति निश्चित्य दुरन्तोऽयमभिष्वङ्ग इति तदभाव परीक्षितमपि पुन परीक्षितुमिदमिन्द्र उवाच—

हिरण्ण सुवण्ण मणिमोत्त, कस दूस च वाहण। कोस च वड्ढइत्ता ण, तओ गच्छसि खत्तिया ! ॥ ४६ ॥

व्याख्या—'हिरण्य' स्वर्ण 'सुवर्ण' शोभनवर्णं विशिष्टवर्णिकमित्यर्थ, यद्वा हिरण्य–घटितस्वर्णमितरत्तु सुवर्ण,

अच्छेरगमब्भुदए, भोए जहित्तु पत्थिवा !। असंते कामे पत्थेसि, संकप्पेण विहम्मसि ॥ ५१ ॥

व्याख्या—'अच्छेरगं'ति आश्चर्यं वर्तते, यत् त्वमेवंविधोऽपि 'अब्भुदए'त्ति अद्भुतकान् आश्चर्यरूपान् 'भोगान्' कामान् 'जहासि' त्यजसि, पठ्यते च—'चयसि'त्ति, 'पार्थिव !' पृथिवीपते !, पाठान्तरतश्च क्षत्रिय !, अथवा 'अब्भुयए'त्ति अभ्युदये, ततश्च यदभ्युदयेऽपि भोगांस्त्वं जहासि तदाश्चर्यं वर्तते, तथा तत्त्यागतश्च 'असतः' अविद्यमानान् कामान् 'प्रार्थयसे' अभिलपसि यत्तदप्याश्चर्यमिति सम्बन्धः, अथवाऽधिकस्तवात्र दोषः, 'सङ्कल्पेन' उत्तरोत्तराप्राप्तभोगाभिलापरूपेण विकल्पेन 'विहन्यसे' विविधं बाध्यसे, एवंविधसङ्कल्पस्यापर्यवसितत्वाद्, उक्तं हि—"अमीषां स्थूलसूक्ष्माणामिन्द्रियार्थविधायिनाम्। शक्रादयोऽपि नो तृप्तिं, विशेषाणामुपागताः ॥ १ ॥" यद्वा 'अच्छेरगमब्भुदए'त्ति मकारोऽलाक्षणिकः, ततश्च—आश्चर्याद्भुतयोरेकार्थत्वेऽप्युपादानमतिशयख्यापनार्थम्—अतिशयाद्भुतान् भोगान् जहासि पार्थिव ! असतश्च कामान् प्रार्थयसि यत्तत्सङ्कल्पेनैव उक्तरूपेण विहन्यसे—बाध्यसे, कथं ह्यन्यथा विवेकिनस्तवैतत् सम्भवेत्?। अनेन च यः सद्विवेको नासौ प्राप्तान् विषयानप्राप्ताकाङ्क्षया परिहरति, यथा ब्रह्मदत्तचक्रवर्त्यादिः, सद्विवेकश्च भवानित्यादिनीत्या हेतुकारणे सूचिते इति सूत्रार्थः ॥ तदनु 'एयं' ५२ सूत्रं प्राग्वत्।—

सल्लं कामा विसं कामा, कामा आसीविसोपमा। कामे पत्थेमाणा, अकामा जंति दुग्गइं ॥ ५३ ॥

व्याख्या—शलति—देहान्तश्चलतीति शल्यं—शरीरान्तःप्रविष्टं तोमरादि शल्यमिव शल्यं, के ते?—काम्यमानत्वात्

क्रियत इति शेप , पठ्यते च–'न तेण'ति अत्र च सूत्रत्वाद्वचनव्यत्यय , कुत पुनरिदमित्याह–'इच्छा' अभिलाप 'हु'-रिति यस्मादाकाशेन समा–तुल्या आकाशसमा 'अनन्तिका' अन्तरहिता, तथा चैतदनुवादी वाचक –"न तुष्टिरिह शताज्जन्तोर्न सहस्रान्न कोटित । न राज्यान्नैव देवत्वान्नेन्द्रत्वादपि विद्यते ॥१॥" किं सुवर्णरूप्ये केवले एव नेच्छा परिपूर्तये इत्याशङ्क्याह–'पृथ्वी' मही 'शालय ' लोहितशाल्यादय 'यवा ' प्रतीता , 'च ' शेपधान्यसमुच्चयार्थं , 'एव ' अवधारणे स च भिन्नक्रमो नेत्यस्यानन्तर योक्ष्यते, 'हिरण्य' सुवर्णं, ताम्राद्युपलक्षणमेतत् , 'पशुभि ' गवाश्वादिभि 'सह' सार्धं 'प्रतिपूर्णं' समस्त, पठन्ति च–'सव्व त'ति सर्वम्–अशेप, न तु कियदेव तत्—पृथिव्यादि 'न' इति नैव 'अल' समर्थं, प्रक्रमादिच्छापरिपूर्तये 'एकस्य' अद्वितीयस्य, जन्तोरिति गम्यते, 'इति' एतत् श्लोकद्वयोक्त 'विज्ज'त्ति सूत्रत्वाद् विदित्वा, यद्वा 'इती'त्यस्माद्धेतो 'विद्वान्' पण्डित 'तप ' द्वादशविध 'चरेत्' आसेवेत, तत एव नि स्पृहतयेच्छापरिपूर्तिसम्भवादितिभाव । अनेन च सन्तोप एव निराकाङ्क्षताया हेतु , न तु हिरण्यादिवर्धनमित्युक्त, तथा च हिरण्यादि वर्धयित्वेत्यत्र यदनुमानमुक्त, तत्र साकाङ्क्षत्वलक्षणो हेतुरसिद्ध , न चाकाङ्क्षणीयवस्त्वपरिपूर्तेस्तस्य सिद्धत्व, सन्तुष्टतया ममाऽऽकाङ्क्षणीयवस्तुन एवाभावादिति सूत्रार्थ ॥ भूयोऽपि 'एय' ५० सूत्र प्राग्वत् । नवरमविद्यमानविपयेषु विपयवाञ्छाविनिवृत्तोऽयमिति निश्चित्य सत्सु तेष्वभिष्वङ्गोऽस्ति उत न वेति विवेचयितुमिन्द्र उवाच—

तीति गम्यते, 'माय'त्ति सुब्व्यत्ययात् 'मायया' परवञ्चनात्मिकया गतेः—प्रस्तावात् सुगतेः प्रतिघातो—विनाशो गतिप्रतिघातो भवति, 'लोभाद्' गार्द्ध्यलक्षणात् 'दुहतो'त्ति द्विधा द्विप्रकारम्—ऐहिकं पारत्रिकं च भविष्यति अस्मादिति भयं—दुःखं, तदाशङ्कातः साध्वसं वा, कामेषु हि प्रार्थ्यमानेष्ववश्यंभावी क्रोधादिसम्भवः, स चेदृग् इति कथं न तत्प्रार्थनातो दुर्गतिगमनमित्यभिप्रायः। यद्वा—सर्वमपि यदिन्द्रेणोक्तं तत् कषायानुपातीति तद्विपाकानुवर्णनमिदमिति सूत्रार्थः॥ एवं बहुभिरप्युपायैस्तमिन्द्रः क्षोभयितुमशक्तः किमकरोदित्याह—

अवउज्झिऊण माहणरूवं विउरुव्विऊण इंदत्तं। वंदति अभित्थुणंतो इमाहि महुराहि वग्गूहिं ॥ ५५ ॥
अहो ते णिज्जिओ कोहो, अहो माणो पराइओ। अहो ते णिरक्किया माया, अहो लोभो वसीकओ ॥ ५६ ॥
अहो ते अज्जवं साहु, अहो ते साहु! मद्दवं। अहो ते उत्तमा खंती, अहो ते मुत्ति उत्तमा ॥ ५७ ॥

'अवउज्झिय'त्ति अपोह्य त्यक्त्वा 'ब्राह्मणरूपं' धिग्वर्णवेषं 'विउरुव्विऊणं'ति विकृत्य 'इन्द्रत्वम्' उत्तरवैक्रियरूपमिन्द्रस्वभावं 'वन्दते' अनेकार्थत्वात् प्रणमति 'अभिष्टुवन्' आभिमुख्येन स्तुतिं कुर्वन्, 'आभिः' अनन्तरं वक्ष्यमाणाभिः 'मधुराभिः' श्रुतिसुखाभिः 'वग्गूहिं'ति आर्षत्वाद्वाग्भिः—वाणीभिः, तद्यथा—'अहो' इति विस्मये 'ते' इति त्वया नितराम्—अतिशयेन जितः अभिभूतः निर्जितः 'क्रोधः' कोपः, यतस्त्वमनमत्पार्थिववशीकरणप्रेरणायामपि न क्षुभित इत्यभिप्रायः, तथा 'अहो' 'ते' त्वया 'मानः' अहमितिप्रत्ययहेतुः 'पराजितः' अभिभूतः, यस्त्वं मन्दिरं

कामा –मनोज्ञशब्दादय , यथा हि शल्यमन्तश्चलद्विविधबाधाविधायि तथैतेऽपि, तत्त्वत एषामपि सदा बाधाविधायित्वात्, तथा वेवेष्टि–व्याप्नोतीति विष–तालपुटादि, विषमिव विष कामा , यथैव हि तदुपभुज्यमान मधुरमित्यापातसुन्दरमिवाऽऽभाति, अथ च परिणतावतिदारुणमेवमेतेऽपि कामा ,तथा कामा आसो–दंष्ट्रास्तासु विषमस्येत्याशीविषस्तदुपमा , यथा ह्ययमज्ञैरवलोक्यमान स्फुरन्मणिफणाभूषित इति शोभन इव विभाव्यते, स्पर्शनादिभिरनुभूयमानश्च विनाशायैव भवति तथैतेऽपि कामा , किं च–कामान् 'प्रार्थयमाना' अभिलषन्तोऽपिशब्दस्य लुप्तनिर्दिष्टत्वात् प्रार्थयमाना अपि 'अकामा' इष्यमाणकामाभावात् 'यान्ति'गच्छन्ति 'दुर्गतिं' दुष्टा नरकादिगति, तदनेन न केवल शल्यादिवदनुभूयमाना एवामी दोषकारिण , किन्तु प्रार्थ्यमाना अपीत्युक्त भवति । तथा च–'य सद्विवेको नासौ प्राप्तमप्राप्तकाङ्क्षया' इत्यादौ सद्विवेकत्वमनैकान्तिको हेतु , न ह्ययमेकान्त यथा प्राप्तमप्राप्तार्थे न परिहियते, प्राप्तस्याप्यपायहेतो तदुच्छेदकाप्राप्त्यर्थं विवेकिभि परिहियमाणत्वाद् , अनभ्युपगतोपालम्भश्चाय, मुमुक्षूणा क्वचिदाकाङ्क्षाया एवासम्भवात्, उक्त हि–'मोक्षे भवे च सर्वत्र, नि स्पृहो मुनिसत्तम ' इति सूत्रार्थ ॥ कथ पुन कामान् प्रार्थयमाना दुर्गतिं यान्ति ?, अत आह—

अहे वयइ कोहेणं, माणेण अहमा गई । माया गइपडिग्घाओ, लोहाओ दुहओ भय ॥ ५४ ॥

व्याख्या—'अधो' नरकगतौ 'व्रजति' गच्छति 'क्रोधेन' कोपेन, 'मानेन' अहङ्कारेण 'अधमा' नीचा गति , भव-

एवं अभित्थुणंतो रायरिसिं उत्तमाएँ सद्धाए। पायाहिणं करेंतो पुणो पुणो वंदती सक्को ॥ ५९ ॥

व्याख्या—'एवम्' अमुनोक्तन्यायेन अभिष्टुवन् 'राजर्षिम्' उक्तरूपं, प्रक्रमान्नमिम्, 'उत्तमया' प्रधानया 'श्रद्धया' भक्त्या 'पायाहिण'न्ति प्रदक्षिणां 'कुर्वन्' विदधत् पुनः पुनः 'वन्दते' प्रणमति 'शक्रः' पुरन्दर इति सूत्रार्थः ॥ अनन्तरं च यत् कृतवांस्तदाह—

तो वंदिऊण पाए चक्कंकुसलक्खिए मुणिवरस्स। आगासेणुप्पतिओ ललियचवलकुंडलतिरीडी ॥ ६० ॥

व्याख्या—'ततः' तदनन्तरं, पाठान्तरतश्च 'स' इति शक्रो वन्दित्वा 'पादौ' चरणौ, चक्रं चाङ्कुशश्च प्रतीतावेव, तत्प्रधानानि लक्षणानि ययोस्तौ तथा, मुनिवरस्य नमिनाम्न इति प्रक्रमः, तत 'आकाशेन' नभसा उदिति—ऊर्ध्वं देवलोकाभिमुखं पतितो गत उत्पतितः, ललिते च ते सविलासतया चपले च चञ्चलतया ललितचपले तथाविधे कुण्डले कर्णाभरणे यस्यासौ ललितचपलकुण्डलः, स चासौ किरीटी च—मुकुटवान् ललितचपलकुण्डलकिरीटी इति सूत्रार्थः ॥ स एवंविधः स्वयमिन्द्रेणाभिष्टूयमानः किमुत्कर्षं मनसासवान् उत नेत्याह—

णमी णमेइ अप्पाणं, सक्खं सक्केण चोइओ। चइऊण गेहं वइदेही, सामण्णे पज्जुवट्ठिओ ॥ ६१ ॥



व्याख्या—नमिर्नमयति—भावतः प्रह्वीभवन्तमात्मानं स्वतत्त्वभावनया विशेषतः प्रगुणयति, न तूत्सिक्ततां नयति, तत्कालापेक्षया लट्, कथंभूतः सन् ?—'साक्षात्' प्रत्यक्षतामुपगम्य 'शक्रेण' इन्द्रेण 'चोइतो'त्ति प्रेरितः 'त्यक्त्वा'

दद्यते इत्याद्युक्तेऽपि कथ मयि जीवतीदमिति नाहङ्कृति कृतवानिति, तथा 'अहो ते णरकिय'त्ति प्राकृतत्वान्निराकृता-अपास्ता माया, यस्त्व पुररक्षाहेतुषु प्राकाराट्टालकोच्छूलकादिषु निकृतिहेतुकेष्वामोपकोच्छेदनादिषु च न मनो निहितवान्, तथा च अहो ते लोभो 'वशीकृत' इति नियन्त्रित , यस्त्व हिरण्यादि वर्द्धयित्वा गच्छेति सहेतुकमभिहितोऽपीच्छाया आकाशसमत्वमेवोदाहृतवान्, अत एव अहो 'ते' तव 'आजवम्' ऋजुत्व 'साधु' शोभनम्, अहो ते साधु 'मार्दव' मृदुत्वम्, अहो ते 'उत्तमा' प्रधाना 'क्षान्ति ' कोपोपशमलक्षणा, अहो ते 'मुक्ति ' निर्लोभता उत्तमा, व्यत्ययनिर्देशस्त्वनानुपूर्व्यपि प्ररूपणाऽङ्गमितिकृत्वेति सूत्रत्रयार्थ ॥ इत्थ गुणोपवर्णनद्वारेणाभिष्टुत्य सम्प्रति फलोपदर्शनद्वारेण स्तुवनाह—

इहऽसि उत्तमो भते !, पेच्चा होहिसि उत्तमो । लोगुत्तमुत्तम ठाण, सिद्धि गच्छसि नीरओ ॥ ५८ ॥

व्याख्या—'इह' अस्मिन् जन्मनि 'असि' भवसि 'उत्तम ' प्रधान , उत्तमगुणान्वितत्वात्, 'भते'त्ति पूज्याभिधानं 'प्रेत्य' परलोके भविष्यसि उत्तम , कथमित्याह—लोकस्य—चतुर्दशरज्ज्वात्मकस्य 'उत्तमम्' उपरिवर्ति लोकोत्तमम् 'उत्तम' देवलोकाद्यपेक्षया प्रधानम्, अथवा 'लोगोत्तममुत्तम'ति मकारोऽलाक्षणिक , ततो लोकस्य लोके वा उत्तमोत्तमम्—अतिशयप्रधान लोकोत्तमोत्तम, तिष्ठत्यस्मिन् नात पर गच्छतीति स्थान, किं तदित्याह—'सिद्धि' मुक्ति 'गच्छसि'त्ति सूत्रत्वाद्गमिष्यसि, निर्गतो रजस —कर्मण इति नीरजा इति सूत्रार्थ ॥ उपसहारमाह—

## अथ द्रुमपत्रकं दशममध्ययनम् ।

॥ व्याख्यातं नमिप्रव्रज्याख्यं नवममध्ययनम्, अधुना दशममध्ययनमारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तराध्ययने धर्मचरणं प्रति निष्कम्पत्वमुक्तं, तच्चानुशासनादेव प्रायो भवति, न च तदुपमां विना स्पष्टमिति प्रथमतः उपमाद्वारेणानुशासनाभिधायकमिदमध्ययनम्, अनेन सम्बन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयमुपदर्श्यते, यावन्नामनिष्पन्ननिक्षेपे द्रुमपत्रकमिति द्विपदं नाम, अतो द्रुमस्य पत्रस्य च निक्षेपमाह—

निक्खेवो उ दुमंमि चउविहो० ॥ २८० ॥ जाणग० ॥ २८१ ॥

दुमयाउनामगोयं वेयंतो भावओ दुमो होइ । एमेव य पत्तस्सवि निक्खेवो चउविहो होइ ॥ २८२ ॥

व्याख्या—'निक्षेपः' न्यासः 'तुः' पूरणे 'द्रुमे' द्रुमविषयः 'चतुर्विधः' नामादिः, द्विविधो भवति द्रव्ये आगमतो नोआगमतश्च, स त्रिविधः—ज्ञशरीरभव्यशरीरद्रुमस्तद्व्यतिरिक्तश्च, स पुनस्त्रिविधः—एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च, द्रुमायुर्नामगोत्रं वेदयन् भावतो द्रुमो भवति, एवमेव च पत्रस्यापि चतुर्विधो भवति निक्षेप इति गाथात्रयाक्षरार्थः ॥ भावार्थस्तु पूर्ववत्, अन्वर्थनामतामस्यादर्शयन्नाह—

दुमपत्तेणोवम्मं अहाठिईए उवक्कमेणं च । इत्थ कयं आइंमी तो तं दुमपत्तमज्झयणं ॥ २८३ ॥

सोऊण तं भगवओ गच्छइ तहि गोअमो पहिअकित्ती । आरुहइ तं नगवरं पडिमाओ वंदइ जिणाणं २९१
अह आगओ सपरिसो सविड्डीए तहिं तु वेसमणो। वंदित्तु चेइयाइं अह वंदइ गोअमं भयवं ॥२९२॥
अह पुंडरीअनायं कहेइ तहि गोयमो पहियकित्ती। दसमस्स य पारणए पव्वावेसीअ कोडिन्नं ॥२९३॥
तस्स य वेसमणस्सा परिसाए सुरवरो पयणुकम्मो। तं पुंडरीमनायं गोयमकहिअं निसामेइ ॥ २९४॥
घित्तूण पुंडरीअं वग्गुविमाणाओ सो चुओ संतो। तुंववणे धणगिरिस्सा अज्जसुनंदासुओ जाओ २९५
दिन्ने कोडिन्ने या सेवाले चेव होइ तइए य । इक्किक्कस्स य तेसिं परिवारो पंच पंच सया ॥ २९६ ॥
हेट्ठिल्लाण चउत्थं मज्झिल्लाणं तु होइ छट्ठं तु । अट्ठममुवरिल्लाणं आहारो तेसिमो होइ ॥ २९७ ॥
कंदाई सच्चित्तो हिट्ठिल्लाणं तु होइ आहारो । बीआणं अच्चित्तो तइआणं सुक्कसेवालो ॥ २९८ ॥
तं पासिऊण इड्ढिं गोयमरिसिणो तओ तिवग्गावि । अणगारा पव्वइआ सप्परिवारा विगयमोहा २९९
एगस्स खीरभोअणहेऊ नाणुप्पया मुणेयव्वा। एगस्स परिसादंसणेण एगस्सय य जिणंमि ॥ ३०० ॥
केवलिपरिसं तत्तो वच्चंता गोयमेण भणिआ य। इउ एह वंदह जिणं कयकिच्च जिणेण सो भणिओ ३०१

व्यारया—द्रुमो-वृक्ष तस्य पर्ण-पत्र तेनौपम्यम्-उपमा, प्रक्रमादायुष, केन पुनर्गुणेनौपम्यमित्याह-'यथास्थित्या' स्वकालपरिपाकत पातरूपया, तथा उपक्रमण-दीर्घकालभाविन्या स्थिते स्वल्पकालताऽऽपादनमुपक्रम, कोऽर्थ ?-पाकादारत एव वातादिनाऽवस्थितिविनाशन, तेन चात्राध्ययने 'कृतं' विहितम् 'आदौ' प्रथम यस्मात् तत द्रुमपत्रमित्यध्ययनमिदम्, उच्यते इति शेष इति गाथार्थ ॥ यथा चास्य समुत्थान तथा दर्शयस्त्रयोविंशतिसङ्ख्य गाथाकदम्बकमाह—

मगहापुरनयराओ वीरेण विसज्जण तु सीसाण । सालमहासालाण पिट्ठीचप च आगमण ॥ २८४ ॥
पव्वज्जा गागिलिस्स य नाणस्स य उप्पया उ तिण्हपि। आगमण चपपुरि वीरस्स अवद्ण तेसि ॥२८५॥
चपाइ पुण्णभद्दमि चेइए नायओ पहिअकित्ती । आमतेउ समणे कहेइ भयव महावीरो ॥ २८६ ॥
अट्ठविहकम्ममहणस्स तस्स पगईविसुद्धलेसस्स । अट्ठावए नगवरे निसीहिए निट्ठिअट्ठस्स ॥ २८७ ॥
उसभस्स भरहपिउणो तेलुक्कपयासनिग्गयजसस्स । जो आरोढु वदइ चरिमसरीरो अ सो साहू २८८
साहु सवासेइ अ असाहु न किर सवसावेई । अह सिद्धपव्वओ सो पासे वेअड्ढसिहरस्स ॥ २८९ ॥
चरिमसरीरो साहू आरुहइ नगवर न अन्नोत्ति। एय तु उदाहरण कासीअ तहि जिणवरिंदो ॥२९०॥

संवासयति, कोऽर्थः ?—रात्रिं दिवं चावस्थापयति, नोऽसाधुं संहरणादिनाऽऽनीतमपि 'किल' इति परोक्षासवाद-सूचकः, 'अथ' इत्युपन्यासे सिद्धोपलक्षितः पर्वतः सिद्धपर्वतः 'तास्थ्यात्तद्व्यपदेश' इति तदधिष्ठायकदेवताविशेष एवोक्तः, यद्वा तत्तीर्थानुभाव एवायं यदसाधोस्तत्रावस्थानमेव न सम्पद्यते, तथा च 'चरमशरीरः साधुः आरोहती'त्यत्र पदप्रचारेणेति गम्यते, 'उदाहरणं' कथनं 'कासीअ'त्ति अकार्षीद्, अनेन चैवंविधदेवप्रवादोत्थानकारणमुक्तं 'घेत्तूण पुंडरीयम्' इत्यादिना च प्रसङ्गागतं वैरस्वामिजन्मोक्तं, तथा 'तं पासिऊण इड्ढि'न्ति तामिति—प्रतीतामेव भगवति जङ्घाचारणरूपलब्धिरूपां, तथा 'तिवग्गावि'त्ति त्रयो वर्गा येषां ते त्रिवर्गाः, तेऽपि प्रक्रमाद्दिन्नकोण्डिन्यशैवलिनस्त्रयोऽपि, नैको द्वौ वेत्यपिशब्दार्थः,'अणगार'त्ति अविद्यमानगृहाः,ते च तापसादयोऽपि स्युरत आह—प्रकर्षेण व्रजिता—मिथ्यात्वादिभ्यो विनिर्गताः प्रव्रजिताः, तथा 'एगस्स खीरभोयणहेउ'त्ति क्षीरान्नभोजनमेव विशुद्धाध्यवसायविशेषोत्पत्तिनिबन्धनतया हेतुः—कारणं क्षीरभोजनहेतुः, मयूरव्यंसकादित्वात् समासः, तमाश्रित्येति शेषः, 'णाणुप्पय'त्ति ज्ञानस्योत्पादनमुत्पत् 'सम्पदादित्वात् क्विप्' (पा० ३–३–९४ )ज्ञानोत्पत्, तथा 'चिरसंसट्ठ'न्ति चिरं—प्रभूतकालं संसृष्टः—स्वस्वाम्यादिसम्बन्धेन सम्बन्धो यस्तं, 'चिरपरिचितः' सहवासनादिना स पूर्वो यस्तम्, उभयत्र विस्पष्टं पटुर्विस्पष्टपटुरितिवत् सह सुपेत्यत्र सुपेति योगविभागात् समासः, चिरमनुगतमभिप्रायानुवर्तिनमात्मानमिति शेषः, 'ममे'त्यात्मनिर्देशः, ततः प्रभूतमोहनीयाच्छादिततया न ते ज्ञानोत्पत्तिरित्यभिप्रायः 'देहस्य तु' शरीरस्य

सोऊण त अरहओ हियएण गोयमोऽवि चितेइ । नाण मे न उपज्जइ भणिओ य जिणेण सो ताहे ३०२
चिरससट्ठ चिरपरिचिअ चिरमणुगय च मे जाण । देहस्स य भेयमि य दुण्णिवि तुल्ला भविस्सामो ३०३
जह मन्ने एअमट्ठ अम्हे जाणामु खीणससारा । तह मन्ने एअमट्ठ विमाणवासीवि जाणति ॥ ३०४ ॥
जाणगपुच्छ पुच्छइ अरहा किर गोयमं पहिअकित्ती । कि देवाण वयण गिज्झ आतो जिणवराण ? ३०५
सोऊण त भगवओ मिच्छायारस्स सो उवट्ठाइ । तन्नीसाए भयव सीसाण देइ अणुसिट्ठि ॥ ३०६ ॥

व्याख्या—एतच्चाक्षरार्थं प्रति स्पष्टमेव, नवर मगधापुरनगर-राजगृह, तस्यैव तत्कालापेक्षया मगधासु प्रधानपुरत्वादविद्यमानकरत्वाच्च, तथा 'णायओ पहियकित्ति'त्ति नायक -सकलजगत्स्वामी ज्ञात एव वा ज्ञातक-उदारक्षत्रिय ,न्यायतो वा प्रथिता-सकलजगत्प्रत्याख्याता कीर्तिर्यस्य स तथा, प्रकृत्या—स्वभावेन विशुद्धा-अत्यन्तनिर्मला लेश्या शुक्ललेश्या यस्य स तथा, 'णिसीहिय'त्ति निषिध्यन्ते-निराक्रियन्ते अस्या कर्म्माणीति नैषेधिकी-निर्वाणभूमि , 'कृत्यल्युटोऽन्यत्रापि' ( पा-३-३-११३ ) इत्यपिग्रहणबलात् ल्युट्, निष्ठितार्थस्य-समाससकलकृत्यस्य यद्वा निषेधे-सकलकर्मनिराकरणलक्षणे भवा नैषेधिकी-मुक्तिगतिस्तया निष्ठितार्थो यस्तस्य ऋषभस्य-ऋषभनाम्न , स चान्योऽपि सम्भवति अत आह—भरतपितुरिति, 'वन्दते' स्तौति प्रक्रमान्नैषेधिकी प्रतिमा वा,तथा साधु 'स'मिति भृशं वासयति

गौतमनिश्रया 'अनुशिष्टिं' शिक्षाम्। एतद्भावार्थस्तु सम्प्रदायादवसेयः, स चायम्—[1]तेणं कालेणं तेणं समएणं पिट्ठीचंपा णाम णयरी, तत्थ सालो राया, महासालो जुवराया, तेसिं सालमहासालाणं भगिणी जसवती, तीसे पिढरो भत्तारो, जसवतीए अत्ततो पिढरपुत्तो गागलीणाम कुमारो। तत्थ वद्धमाणसामी समोसढो सुभूमिभागे उज्जाणे, सालो णिग्गतो, धम्मं सुच्चा भणति—जं णवरं महासालं रज्जे ठावेमि, सो अतिगतो, तेण आपुच्छितो महासालो भणति—अहंपि संसारभउव्विग्गो जहा तुब्भे इहं मेढीपमाणं तहा पव्वइयस्सवि, ताहे गागलिं कंपिल्लातो सद्दावेऊण पट्टो बद्धो अभिसित्तो य राया जातो। तस्स माया कंपिल्लपुरे णयरे दिण्णल्लिया पिढरस्स, तेण ततो सद्दावितो, सो पुण तेसिं दो सिबियातो कारेति, जाव ते पव्वतिया, सा भगिणी समणोवासिया जाता, तए णं ते समणा होंतगा, एक्कारस अंगाइं अहिज्जिया।

---

१ तस्मिन् काले तस्मिन् समये पृष्ठचम्पा नाम नगरी, तत्र शालो राजा, महाशालो युवराजः, तयोः शालमहाशालयोर्भगिनी यशस्वती, तस्याः पिठरो भर्त्ता, यशोमत्या आत्मजः पिठरपुत्रः गागलिनामा कुमारः। तत्र वर्धमानस्वामी समवसृतः सुभूमिभागे उद्याने, शालो निर्गतः, धर्मं श्रुत्वा भणति—यन्नवरं महाशालं राज्ये स्थापयामि, सोऽतिगतः, तेनापृष्टो महाशालो भणति—अहमपि संसारभयोद्विग्नो यथा यूयमत्र मेढीप्रमाणाः तथा प्रव्रजितस्यापि, तदा गागलिं काम्पील्यात् शब्दयित्वा पट्टो बद्धोऽभिषिक्तश्च राजा जातः। तस्य माता काम्पील्यपुरे नगरे दत्ता पिठराय, तेन सकः शब्दितः, स पुनस्तयोर्द्वे शिबिके कारयति, यावत्तौ प्रव्रजितौ, सा भगिनी श्रमणोपासिका जाता, ततस्तौ श्रमणौ जातौ, एकादशाङ्गानि अधीतवन्तौ।

[1]पंथं वच्चंताणं हरिसो जाओ–जधा संसारं उत्तारियाणि, एवं च तेसिं सुहेणं अज्झवसाणेणं केवलणाणं उप्पण्णं, इयरेसिंपि चिंता जाया-जहा एएहिं अम्हे रज्जे ठावियाणि संसारातो य मोइयाणि, एवं चिंतंताणं सुभेणं अज्झवसाणेणं तिण्हंपि केवलणाणं उप्पण्णं । एवं ताणि उप्पण्णणाणाणि चंपं गयाणि, सामिं पायाहिणं करेमाणाणि तित्थं पणमिऊण केवलिपरिसं पहावियाणि, गोयमसामीवि भगवं वंदिऊण तिक्खुत्तो पयाहिणीकाऊण पाएसु पडितो, उट्ठिओ भणति—कहिं वच्चह ?, एह तित्थयरं वंदह, ताधे सामी भणइ—मा गोयमा ! केवली आसाएहि, ताहे आउट्टो खामेति, संवेगं च गतो । तत्थ गोयमसामिस्स संका जाया–णाहं ण सिज्झिस्सामित्ति, एवं गोयमसामीवि चिंतेति । इओ य देवाण संलावो वट्टइ–जो अट्टावयं विलग्गति चेइयाणि य वंदति धरणिगोयरो सो

१ पन्थानं व्रजतोर्हर्षो जातः, यथा–संसारादुत्तारितानि, एवं च तयोः शुभेनाध्यवसायेन केवलज्ञानमुत्पन्नम् ,अन्येषामपि चिन्ता जाता —यथा एतैर्वयं राज्ये स्थापिताः संसाराच्च मोचिताः, एवं चिन्तयतां शुभेनाध्यवसायेन त्रयाणामपि केवलज्ञानमुत्पन्नम् । एवं ते उत्पन्नज्ञानाश्चम्पां गताः, स्वामिनं प्रदक्षिणां कुर्वन्तः तीर्थं प्रणम्य केवलिपर्षदं प्रधाविताः, गौतमस्वाम्यपि भगवन्तं वन्दित्वा त्रिकृत्वः प्रदक्षिणीकृत्य पादयोः पतितः, उत्थितो भणति–कुत्र व्रजथ ?, एत तीर्थकरं वन्दध्वम् , तदा स्वामी भणति–मा गौतम ! केवलिन आशातय, तदाऽऽवृत्तः क्षमयति, संवेगं च गतः । तत्र गौतमस्वामिनः शङ्का जाता–नाहं न सेत्स्यामि इति, एवं गौतमस्वाम्यपि चिन्तयति । इतश्च देवानां संलापो वर्तते–योऽष्टापदं विलगति चैत्यानि च वन्दते धरणिगोचरः स

तंते ण समणे भगव महावीरे वहिया जणवयविहारं विहरति । तेण कालेण तेण समएण रायगिह णाम णयर, तत्थ सामी समोसढो, ताहे सामी पुणोऽवि णिग्गतो चप पहावितो, ताहे सालमहासाला सामिं आपुच्छति–अम्हे पिट्ठीचप वच्चामो जदि णाम ताण कोवि वुज्झेज्जा, सम्मत्त वा लभेज्जा, सामीवि जाणति–जहा ताणि सबुज्झिहिंति, ताहे सामिणा गोयमसामी से विइज्जओ दिण्णो, गोयमसामी पिट्ठीचप गतो, तत्थ समोसरण, गागली पिढरो जसवती य णिग्गयाणि, भगव धम्म कहेइ, ताणि धम्म सोऊण सविग्गाणि, ताधे गागली भणति–जं णवर अम्मापियरो आपुच्छामि, जेट्ठपुत्त च रज्जे ठवेमि, ताणि आपुच्छियाणि भणति–जइ तुमं ससारभउविग्गो अम्हेवि, ताधे सो पुत्त रज्जे ठावित्ता अम्मापितीहि सम पवइतो, गोयमसामी ताणि घेत्तूण चप वच्चइ । तेसिं सालमहासालाण

१ तत श्रमणो भगवान् महावीरो बहिर्जनपदविहार विहरति । तस्मिन् काले तस्मिन् समये राजगृह नाम नगर, तत्र स्वामी समवसृत , तदा स्वामी पुनरपि निर्गतश्चम्पा प्रधावित , तदा शालमहाशालौ स्वामिनमापृच्छताम्–आवा पृष्ठचम्पा व्रजाव यदि नाम कोऽपि तेपा बुध्येत, सम्यक्त्व वा लभेत, स्वाम्यपि जानाति–यथा ते सभोत्स्यन्ते, तदा स्वामिना गौतमस्वामी तयोर्द्वितीयको दत्त , गौतमस्वामी पृष्ठचम्पा गत , तत्र समवसरण, गागली पिठरो यशोमती च निर्गता , भगवान् धर्म कथयति, ते धर्म श्रुत्वा सविग्ना , तदा गागलिर्भणति–यन्नवर मातापितरावापृच्छामि, ज्येष्ठ पुत्र च राज्ये स्थापयामि, तावापृष्टौ भणत –यदि त्व ससारभयोद्विग्न आवामपि, तदा स पुत्र राज्ये स्थापयित्वा मातापितृभ्या सम प्रव्रजित , गौतमस्वामी तान् गृहीत्वा चम्पा व्रजति । तयोः शालमहाशालयोः

ओरालसरीरे हुयवहतडियतरुणरविकिरणसरिसए तेएणं,ते तं इंतं पेच्छेत्ता ते एवं भणंति–एस किर एत्थ थुल्लतो समणो विलग्गिहिति ?, जं अम्हे महातवस्सी सुक्का भुक्खा न तरामोत्ति विलग्गिउं, भगवं च गोयमे जंघाचारणलद्धीए लूयातंतुपुडगंपि णीसाए उप्पयति, जाव ते पलोयंति–एस आगओत्ति, एसो अदंसणं गतोत्ति, ताहे ते विम्हिया जाया पसंसंति, अच्छंति य पलोयंता, जति ओयरति तो एयस्स वयं सीसा, एवं ते पडिच्छंता अच्छंति। सामीवि चेइयाणि वंदित्ता उत्तरपुरच्छिमे दिसिभागे पुढविसिलापट्टए तुयट्टो असोगवरपायवस्स अहे तं रयणिं वासाए उवागतो। इओ य सक्कस्स लोगपालो वेसमणो, सोवि अट्ठावयचेइयवंदतो एति, सो चेइयाणि वंदित्ता गोयमसामिं वंदति, ताहे सो धम्मं कहेति, भगवं अणगारगुणे परिकहिउं पवत्तो, अंताहारा पंताहारा एवं वण्णेति,

१ उदारशरीरः हुतवहतडित्तरुणरविकिरणसदृशेन तेजसा, ते तमायान्तं प्रेक्ष्य ते एवं भणन्ति—एष किलात्र स्थूरः श्रमणो विलगिष्यति ?, यं वयं महातपस्विनः शुष्का बुभुक्षिता न शक्नुमो विलगितुं, भगवांश्च गौतमो जङ्घाचारणलब्ध्या लूतातन्तुपुटकस्यापि निश्रयोत्पतति, यावत्ते प्रलोकयन्ति–एष आगत एषोऽदर्शनं गत इति, तदा ते विस्मिता जाताः प्रशंसन्ति, तिष्ठन्ति च प्रलोकयन्तः, यदि अवतरति तदा एतस्य वयं शिष्याः, एवं ते प्रतीच्छन्तः तिष्ठन्ति। स्वाम्यपि चैत्यानि वन्दित्वोत्तरपौरस्त्ये दिग्भागे पृथ्वीशिलापट्टके त्वग्वर्त्तितः अशोकवरपादपस्याधस्तां रजनीं वासार्थमुपागतः। इतश्च शक्रस्य लोकपालो वैश्रमणः, सोऽपि अष्टापद चैत्यवन्दक एति, स चैत्यानि वन्दित्वा गौतमस्वामिनं वन्दते, तदा स धर्मं कथयति, भगवान् अनगारगुणान् परिकथयितुं प्रवृत्तः, अन्ताहाराः प्रान्ताहारा एवं वर्णयति,

तेणं भवग्गहणेण सिज्झइ, ताधे सामी तस्स चित्त जाणति तावसाण य सबोहणय, एयस्सवि थिरता भविस्सतित्ति दोवि कयाणि भविस्सति, एयस्सवि पच्चतो तेवि सबुज्झिस्सति'त्ति, सोऽवि सामिं आपुच्छइ, अट्ठावय जामित्ति, तत्थ भगवया भणिय—वच्च अट्ठापय चेइयाण वदतो, तए ण भगव हट्ठतुट्ठो वदित्ता स गतो, तत्थ य अट्ठावए जणवाय सोऊण तिण्णि तावसा पचपचसयपरिवारा पत्तेय अट्ठावयं विलग्गामोत्ति तत्थ किलिस्सति, कोडिनो दिनो सेवाली, जो कोडिन्नो सो चउत्थ २ काऊण पच्छा मूलकदाणि आहारेति सचित्ताणि, सो पढम मेहल विलग्गो, दिण्णो छट्ठ छट्ठेण काऊण परिसडिय पडुपत्ताणि आहारेइ, सो वीय मेहल विलग्गो, सेवाली अट्ठम २ काऊण जो सेवालो सय मइल्लतो त आहारेइ, सो तइय मेहल विलग्गो, एव तेवि ताव किलिस्सति । भयवं च गोयमे

१ तेन भवग्रहणेन सिध्यति, तदा स्वामी तस्य चित्त जानाति तापसाना च सबोधन, एतस्यापि स्थिरता भविष्यतीति द्वे अपि कृते भविष्यत, एतस्यापि प्रत्यय तेऽपि सभोत्स्यन्ते इति, सोऽपि स्वामिनमापृच्छति—अष्टापद यामीति, तत्र भगवता भणित—व्रजाष्टापद चैत्यानि वन्दस्व, ततो भगवान् हृष्टतुष्टो वन्दित्वा स गत, तत्र चाष्टापदे जनवाद श्रुत्वा त्रयस्तापसा पञ्चपञ्चशतपरिवारा प्रत्येकमष्टापद विलगाम इति तत्र क्लिश्यन्ति—कौडिन्यो दत्त शैवाल, य कौडिन्य स चतुर्थ चतुर्थेन कृत्वा पश्चा मूलकन्दानाहारयति सचित्तान्, स प्रथमा मेखला विलग्न, दत्त षष्ठ षष्ठेन कृत्वा परिशटितपाण्डुपत्राणि आहारयति, स द्वितीया मेखला विलग्न, शैवालोऽष्टमाष्टमेन कृत्वा य शैवाल स्वय मलीनितसमाहारयति, स तृतीया मेखला विलग्न, एव तेऽपि तावत्क्लिश्यन्ति । भगवांश्च गौतम

वहूहिं छट्टट्ठमहातवोवहाणेहिं वहूणि वासाणि सामण्णं पालिऊणं मासियाए संलेहणाए सट्ठिं भत्ताइं झोसित्ता जाव सिद्धे। अन्नया य ते थेरा पुव्वाणुपुव्विं जाव पुंडरिगिणीए समोसढा, परिसा णिग्गया, तए णं से पुंडरीए राया कण्डरीएणं जुवरण्णा सद्धिं इमीसे कहाए लद्धट्ठे समाणे हट्ठे जाव गए, धम्मकहा, जाव से पुंडरीए सावगधम्मं पडिवण्णे, जाव पडिगए सावए जाए। तए णं से कंडरीए जुवराया थेराणं धम्मं सोच्चा हट्ठे जाव जहेदं तुज्झे वदह, जं नवरं देवाणुप्पिया! पुंडरीयं रायं आपुच्छामि, तए णं जाव पव्वयामि, अहासुहं पव्वयह। तते णं से कंडरीए जाव थेरे णमंसति २ थेराणं अंतितातो पडिनिक्खमति २ त्ता तमेव चाउघंटं आसरहं दुरूहति, जाव पच्चोरुहति, जेणेव पुंडरीए राया तेणेव उवागच्छति, करयल जाव पुंडरीयं रायं एवं वयासी—एवं खलु मए देवाणुप्पिया!

१ वहुभिः षष्ठाष्टममहातपउपधानैर्बहूनि वर्षाणि श्रामण्यं पालयित्वा मासिक्या संलेखनया षष्टिं भक्तान् जोषयित्वा यावत्सिद्धः। अन्यदा च ते स्थविराः पूर्वानुपूर्व्या यावत्पुण्डरीकिण्यां समवसृताः, पर्षन्निर्गता, ततः स पुण्डरीको राजा कण्डरीकेन युवराजेन सार्धं अस्याः कथाया लब्धार्थः सन् हृष्टो यावद्गतः, धर्मकथा, यावत्स पुण्डरीकः श्रावकधर्मं प्रतिपन्नः, यावत् प्रतिगतः श्रावको जातः। ततः स कण्डरीको युवराजः स्थविरेभ्यो धर्मं श्रुत्वा हृष्टः यावत् यथैतत् यूयं वदथ, यन्नवरं देवानुप्रियाः! पुण्डरीकं राजानमापृच्छामि, ततो यावत्प्रव्रजामि, यथासुखं प्रव्रज। ततः स कण्डरीको यावत्स्थविरान् प्रणमति २ स्थविराणामन्तिकात् प्रतिनिष्क्रामति २ तमेव चातुर्घण्टमश्वरथमारोहति यावत्प्रत्यवतरति, यत्रैव पुण्डरीको राजा तत्रैवोपागच्छति, करतल यावत् पुण्डरीकं राजानमेवमवादीत्—एवं खलु मया देवानुप्रियाः!

वेसमणो चिंतेति–एस भगव एरिसे साहुगुणे वण्णेइ, अप्पणो य से इमा सरीरसुकुमारया जारिसा देवाणवि णत्थि, भगव तस्स आकूत नाउ पुंडरीय नाम अज्झयणं पण्णवेइ, जहा–पुक्खलावतीविजए पुंडरिगिणीए णगरीए णलिणिगुम्म उज्जाण, तत्थ ण महापउमे नाम राया होत्था, पउमावती देवी, ताणं दो पुत्ता–पुंडरीए कंडरीए य, सुकुमारा जाव पडिरूवा, पुंडरीए जुवराया होत्था। तेण कालेण तेण समएण थेरा भगवतो जाव णलिणिगुम्मे उज्जाणे समोसढा, महापउमे णिग्गए, धम्म सोचा भणति–ज नवर देवाणुप्पिया! पुंडरीय कुमार रज्जे ठवेमि, अहासुह मा पडिबध करेहि, एव जाव पुंडरीए राया जाए जाव विहरइ। तते ण से कंडरीए कुमारे जुवराया जाए। तए ण से महापउमे राया पुंडरीय राय आपुच्छति–तए ण से पुंडरीए सिविय णीणेइ, जाव पव्वतिते, णवर चोद्दसपुव्वाइं अहिज्जति,

१ वैश्रमणश्चिन्तयति—एप भगवान् ईदृशान् साधुगुणान् वर्णयति, आत्मनश्चास्यैषा शरीरसुकुमारता यादृशी देवानामपि नास्ति, भगवान् तस्याकूत ज्ञात्वा पुण्डरीकनामाध्ययन प्रज्ञापयति, यथा—पुष्कलावतीविजये पुण्डरीकिण्या नगर्यां नलिनीगुल्ममुद्यान, तत्र महापद्मो नाम राजाऽभवत्, पद्मावती देवी, तयोर्द्वा पुत्रौ—पुण्डरीक कण्डरीकश्च, सुकुमालौ यावत्प्रतिरूपौ, पुण्डरीको युवराजोऽभवत्। तस्मिन् काले तस्मिन् समये स्थविरा भगवन्तो यावन्नलिनीगुल्म उद्याने समवसृता, महापद्मो निर्गत, धर्म श्रुत्वा भणति—यन्नवर देवानुप्रिया! पुण्डरीक कुमार राज्ये स्थापयामि, यथासुख मा प्रतिबन्ध कार्षी, एव यावत्पुण्डरीको राजा जात यावद्विहरति। तत स कण्डरीक कुमारो युवराजो जात। तत स महापद्मो राजा पुण्डरीक राजानमापृच्छति—तत स पुण्डरीक शिविकामानयति, यावत्प्रव्रजित, नवर चतुर्दश पूर्वाण्यध्येति,

पण्णवणाहि य पण्णवेमाणे २ एवं वयासी–एवं खलु जाया ! णिग्गंथे पावयणे सच्चे अणुत्तरे केवलिए एवं जहा पडिक्कमणे जाव सव्वदुक्खाण अंतं करेति, किंतु अहीव एगंतदिट्ठीए खुरो इव एगंतधाराए लोहमया वा जवा चावेयव्वा वालुयाकवले इव निस्साए गंगा वा महानई पडिसोयगमणाए महासमुद्दे इव भुयाहिं दुरुत्तरेहिं तिक्खं चंकमियव्वं गरुयं लंघियव्वं असिधारं च तवं चरियव्वं, णो य खलु कप्पई जाता ! समणाणं णिग्गंथाणं पाणाइवाए वा जाव मिच्छादंसणसल्लेति वा १८ आहाकम्मेति वा उद्देसेति वा मिस्सजाए वा अज्झोयरए पूइए कीए पामिच्चे अच्छेज्जे अणिसिट्ठे अभिहडे वा ठइयए वा कंतारभत्तए इ वा दुब्भिक्खभत्ते इ वा गिलाणभत्ते इ वा पाहुणगभत्तेत्ति वा सिज्जातरपिंडे इ वा रायपिंडे इ वा मूलभोयणे इ वा कन्दभोयणे इ वा फलभोयणे इ वा वीयभोयणे इ वा हरियभोयणे इ वा भोत्तए वा

१ प्रज्ञापनाभिश्च प्रज्ञापयन् २ एवमवादीत्–एवं खलु जात ! निर्ग्रन्थे प्रवचने सत्येऽनुत्तरे कैवलिके एवं यथा प्रतिक्रमणे यावत्सर्वदुःखानामन्तं करोति, किन्त्वहिरिवैकान्तदृष्टया क्षुरप्र इवैकान्तधारया लोहमया वा यवाश्चर्वितव्या वालुकाकवला इव निरास्वादः गङ्गामहानदीव प्रतिश्रोतोगमनाय महासमुद्र इव भुजाभ्यां दुरुत्तरः तीक्ष्णं चङ्क्रमितव्यं गुरुकं लङ्घितव्यमसिधारं च तपः चरितव्य, नो च खलु कल्पते जात ! श्रमणानां निर्ग्रन्थानां प्राणातिपातो वा यावन्मिथ्यादर्शनशल्यमिति वा आधाकर्मिकमिति वा औद्देशिकमिति वा मिश्रजातमिति वा अध्यवपूरकमिति वा पूति क्रीतं प्रामित्यमाच्छेद्यमनिःसृष्टमभ्याहृतं वा स्थापितं वा कान्तारभक्तं वा दुर्भिक्षभक्तं वा ग्लानभक्तं वा प्राघूर्णकभक्तं वा शय्यातरपिण्डो वा राजपिण्डो वा मूलभोजनं वा कन्दभोजनं वा फलभोजनं वा बीजभोजनं वा हरितभोजनं वा भोक्तुं वा

थेराण अतिए जाव धम्मे णिसते, से य धम्मे इच्छिए पडिच्छिए अभिरुइए, तए ण अह देवाणुप्पिया ! ससारभउव्विग्गे भीए जम्मणमरणाण इच्छामि ण तुज्झेहि अणुण्णाए समाणे थेराण अतिए जाव पव्वतित्तएत्ति । तए ण से पुडरीए राया एव वयासी–मा ण तुम देवाणुप्पिया ! इयाणि थेराण अतिए जाव पव्वयाहि, अहण्ण तुम महया २ रायाभिसेएण अभिसिंचिस्सामि, तए ण से कडरीए पुडरियस्स रण्णो एयमट्ठ णो आढाति णो परिजाणति तुसिणीए सचिट्ठइ, तए ण से कडरीए पुडरीय दोच्चपि तच्चपि एव वयासी–इच्छामि ण देवाणुप्पिया ! जाव पव्वइत्तएत्ति । तए ण से पुडरिए राया कडरीय कुमार जाहे णो सचाएइ विसयाणुलोमाहिं बहूहिं आघवणाहि य पण्णवणाहि य सण्णवणाहि य विण्णवणाहि य आघवित्तए वा ४ ताहे विसयपडिकूलाहि सजमभउव्वेगकरीहिं

१ स्थविराणामन्तिके यावत् धर्मो निशमित , स च धर्म ईप्सित प्रतीप्सितोऽभिरुचित ,ततोऽह देवानुप्रिया ! ससारभयोद्विग्न भीतो जन्म(जरा)मरणेभ्य इच्छामि युष्माभिरनुज्ञात: सन् स्थविराणामन्तिके यावत्प्रव्रजितुमिति । तत स पुण्डरीको राजैवमवादीत्–मा त्व देवानुप्रिय ! इदानीं स्थविराणामन्तिके यावत्प्रव्रज, अह पुनस्त्वा महता २ राज्याभिषेकेणाभिषेक्ष्यामि, तत स कण्डरीक: पुण्डरीकस्य राज्ञ एतमर्थं नाद्रियते न परिजानाति, तूष्णीक सतिष्ठते, तत स कण्डरीक पुण्डरीक राजान द्विस्त्रिरपि एवमवादीत्–इच्छामि देवानुप्रिया ! यावत्प्रव्रजितुमिति । तत स पुण्डरीको राजा कण्डरीक कुमार यदा न शक्नोति विषयानुलोमाभिश्च बहुभिराख्यापनाभिश्च प्रज्ञापनाभिश्च सज्ञपनाभिश्च विज्ञपनाभिश्चाख्यातु वा ४ तदा विषयप्रतिकूलाभि: सयमभयोद्वेगकरीभि

वहूहिं आघवणाहि य ४ आघवित्तए वा ४ ताधे अकामए चेव णिक्खमणं अणुमण्णित्था। तए णं से पुंडरीए कोडुंबियपुरिसे सद्दावेइ २ एवं वयासी—जहा महामइग्घं महारिहं णिक्खमणमहिमं करेह, जाव पव्वतितो। तओ सामाइयमाइयाइं एक्कारस अंगाइं अहिज्जियाइं, वहूहिं चउत्थच्छट्टट्ठमाईहिं तवोवहाणेहिं जाव विहरइ। अन्नया तस्स कंडरीयस्स अंतेहि य पंतेहि य जाव रोगायंके पाउब्भूए जाव दाहवक्कंतीए यावि विहरति। तते णं ते थेरा भगवंतो अन्नया कयाइं पुव्वाणुपुव्विं चरमाणा गामाणुगामं विहरमाणा पुंडरिगिणीए नलिणिवणे समोसढा, तए णं से पुंडरीए राया इमीसे कहाए लद्धट्ठे समाणे जाव पज्जुवासइ, पत्थुया धम्मकहा भगवया, तते णं से पुंडरीए राया धम्मं सोच्चा जेणेव कंडरीए अणगारे तेणेव उवागच्छइ २ त्ता कंडरीयं वंदइ नमंसइ २ कंडरीयस्स सरीरं सवावाहं सरुयं पासति २

---

१ बहुभिराख्यापनाभि ४ आख्यातुं वा ४ तदा अकाम एव निष्क्रमणमन्वमंस्त। ततः स पुण्डरीकः कौटुम्बिकपुरुषान् शब्दयति २ एवमवादीत्—यथा महामहार्घ्यं महार्हं निष्क्रमणमहिमानं कुरुत, यावत्प्रव्रजितः। ततः सामायिकादीन्येकादशाङ्गान्यधीतानि, वहुभिश्चतुर्थषष्ठाष्टमादिभिः तपउपधानैर्यावद्विचरति। अन्यदा तस्य कण्डरीकस्य अन्तैश्च प्रान्तैश्च यावत् रोगातङ्काः प्रादुर्भूता यावद् दाहव्युत्क्रान्तिश्चापि विहरति। ततस्ते स्थविरा भगवन्तोऽन्यदा कदाचित् पूर्वानुपूर्वं चरन्तो ग्रामानुग्रामं विहरन्तः पुण्डरीकिण्यां नलिनीवने समवसृताः, ततः सः पुण्डरीको राजा अस्याः कथाया लब्धार्थः सन् यावत् पर्युपास्ते, प्रस्तुता धर्मकथा भगवता, ततः स पुण्डरीको राजा धर्मं श्रुत्वा यत्रैव कण्डरीकोऽनगारस्तत्रैवोपागच्छति २ कण्डरीकं वन्दते प्रणमति २ कण्डरीकस्य शरीरं सव्यावाधं सरुजं पश्यति २

पायए वा, तुम च ण जाया! सुहसमुचिते णाल सीत नाल उण्ह नाल खुहा णाल पिवासा नाल चोरा नाल वाला णाल दसा णाल मसगा णाल वात्तियपित्तियसिंभियसन्निवाइयविविहे रोगायके उच्चावए वा गामकटते वा बावीस परीसहोवसग्गे उदिण्णे सम्म अहियासित्तएत्ति, त नो खलु जाता! अम्हे इच्छामो तुज्झ खणमवि विप्पओग, त अच्छाही ताव जाया! अणुभवाहि रज्जसिरि, पच्छा पव्वहिसि। तए ण से कडरीए एव वयासी–तहेव ण देवाणुप्पिया! जण्ण तुज्झे वयह, किं पुण देवाणुप्पिया! निग्गथे पावयणे कीवाण कायराण कापुरिसाण इहलोयपडिबद्धाण परलोगपरमुहाण विसयतिसियाण दुरणुचरे पागयजणस्स, धीरस्स निच्छियस्स ववसियस्स णो खलु इत्थ किंचि दुक्करकरणाए, त इच्छामि ण देवाणुप्पिया! जाव पव्वतित्तएत्ति। तए ण त कडरीय पुडरीए राया जाहे णो सचाएति

---

१ पातु वा, त्व च जात! सुखसमुचित नाल शीत नालमुष्ण नाल क्षुत् नाल पिपासा नाल चौरा नाल व्याला नाल दशा नाल मशका नाल वातिकपैत्तिकश्लैष्मिकसान्निपातिकान् विविधान् रोगातङ्कान् उच्चावचान् वा ग्रामकण्टकान् वा द्वाविंशतिं परीषहोपसर्गान् उदीर्णान् सम्यगध्यासितुमिति, तन्न खलु जात! वयमिच्छामस्तव क्षणमपि विप्रयोग, तत्तिष्ठ तावज्जात! अनुभव राज्यश्रिय पश्चात् प्रव्रजे। तत स कण्डरीक एवमवादीत्—तथैव देवानुप्रिया! यद्यूय वदथ, किं पुनर्देवानुप्रिया! निर्ग्रन्थ प्रावचन क्लीवाना कातराणा कापुरुषाणामिहलोकप्रतिबद्धाना परलोकपराङ्मुखाना विषयतृषिताना दुरनुचर प्राकृतजनस्य, धीरस्य निश्चितस्य व्यवसितस्य न खलु अत्र किञ्चित् दुष्कर कर्त्तु, तदिच्छामि देवानुप्रिया! यावत् प्रव्रजितुमिति। ततस्त कण्डरीक पुण्डरीको राजा यदा न शक्नोति

[1]करेति २ वंदति २ एवं वयासी–धण्णेऽसि णं तुमं देवाणुप्पिया ! एवं सपुण्णोऽसि णं कयत्थे कयलक्खणे सुलद्धे णं तव देवाणुप्पिया ! माणुस्सए जम्मे जीवियफले, जण्णं तुमं रज्जं च जाव अंतेउरं च विच्छड्डइत्ता जाव पव्वइए, अहण्णं अहण्णे अकयपुण्णे जाव माणुस्सए भवे अणेगजाइजरामरणरोगसोगसारीरमाणसपकामदुक्खवेयणावसणसयउवद्दवाभिभूए अधुवे अणीइए असासए संज्झब्भरागसरिसे जलवुब्बुयसमाणे कुसग्गजलविंदुसन्निहे सुमिणगदंसणोवमे विज्जुलयाचंचले अणिच्चे सडणपडणविद्धंसणधम्मके पुव्विं वा पच्छा वा अवस्सं विप्पजहियव्वइत्ति, तहा माणुस्सयं सरीरगंपि दुक्खाययणं विविहवाहिसयसन्निकेयं अट्ठियकट्ठुट्ठियं सिराण्हारुजालओणद्धसंविणद्धं मट्टियभंडं व दुब्बलं असुइसंकिलिट्ठं अणिट्ठंपि य सव्वकालं संठप्पयं जराघुणियं जज्जरघरं व सडणपडणविद्धंसणधम्मयं पुव्विं वा

१ करोति २ वन्दते २ एवमवादीत्–धन्योऽसि त्वं देवानुप्रिय ! एवं सपुण्योऽसि कृतार्थः कृतलक्षणः सुलब्धं तव देवानुप्रिय ! मानुष्यं जन्म जीवितफलं, यत्त्वं राज्यं च यावदन्तःपुरं च विच्छर्द्य यावत्प्रव्रजितः, अहमधन्योऽकृतपुण्यो यावन्मानुष्यो भवः अनेकजातिजरामरणरोगशोकशारीरमानसिकप्रकामदुःखवेदनाव्यसनशतोपद्रवाभिभूतोऽध्रुवोऽनैत्यिकोऽशाश्वतः सन्ध्याभ्ररागसदृशः जलबुद्बुदसमानः कुशाग्रजलविन्दुसन्निभः स्वप्नदर्शनोपमो विद्युल्लताचञ्चलोऽनित्यः शटनपतनविध्वंसनधर्मकः पूर्वं वा पश्चाद्वाऽवश्यं विप्रहातव्य इति, तथा मानुष्यकं शरीरमपि दुःखायतनं विविधव्याधिशतसन्निकेतमस्थिकाष्ठोत्थितं सिरास्नायुजालावनद्धसंविनद्धं मृत्तिकाभाण्डवद्दुर्बलमशुचिसंक्लिष्टमनिष्टमपि च सर्वकालं संस्थाप्यं जराघूर्णितं जर्जरगृहवत् शटनपतनविध्वंसनधर्मकं पूर्वं वा

जेणेव थेरा तेणेव उवागच्छइ, थेरे वदति २ एवं वयासी—अहं णं भंते! कंडरीयस्स अणगारस्स अहापवत्तेहिं तेगिच्छिएहिं फासुयएसणिज्जेहिं अहापवत्तेहिं ओसहभेसज्जभत्तपाणेहिं तिगिच्छं आउटामि, तुज्झे णं भंते! मम जाणसालासु समोसरह, तते णं थेरा पुंडरीयस्स रण्णो एयमट्ठं पडिसुणेंति २ जाव जाणसालासु विहरति। तए णं से पुंडरीए कंडरीयस्स तिगिच्छं आउट्टेइ, तए णं तं मणुन्नं असणं ४ आहारेतस्स समाणस्स से रोगायंके खिप्पामेव उवसंते हट्ठे जाव आरोगे बलियसरीरे, तओ रोगायंकाओ मुक्केऽवि समाणे तंसि मणुण्णंसि असणे ४ मुच्छिए जाव अज्झोववण्णे विविहे य पाणगंसि, णो संचाएति बहिया अब्भुज्जएण विहारेण विहरित्तएत्ति। तते णं से पुंडरीए इमीसे कहाए लद्धट्ठे समाणे जेणेव कंडरीए तेणेव उवागच्छति २ कंडरीयं तिक्खुत्तो आयाहिणं पयाहिणं

१ यत्रैव स्थविरास्तत्रैवोपागच्छति, स्थविरान् वन्दते २ एवमवादीत्—अहं भदन्ता! कण्डरीकस्यानगारस्य यथाप्रवृत्तैश्चिकित्सितैः प्रासुकैषणीयैर्यथाप्रवृत्तैरौषधभैषज्यभक्तपानैश्चिकित्सां कारयामि, यूयं भदन्ता! मम यानशालासु समवसरत, ततः स्थविराः पुण्डरीकस्य राज्ञ एतमर्थं प्रतिशृण्वन्ति २ यावद्यानशालासु विचरन्ति। ततः स पुण्डरीकः कण्डरीकस्य चिकित्सां कारयति, ततस्तत् मनोज्ञमशनं ४ माहारयतः सतः तस्य रोगातङ्कः क्षिप्रमेवोपशान्तो हृष्टो जातः अरोगो बलिकशरीरः, ततो रोगातङ्कात् मुक्तोऽपि सन् तस्मिन् मनोज्ञेऽशने ४ मूर्छितो यावदभ्युपपन्नः विविधे च पानके, न शक्नोति बहिरभ्युद्यतेन विहारेण विहर्तुमिति। ततः स पुण्डरीकोऽस्याः कथाया लब्धार्थः सन् यत्रैव कण्डरीकस्तत्रैवोपागच्छति २ कण्डरीकं त्रिकृत्व आदक्षिणप्रदक्षिणं

णो संचाएमि जाव पव्वयित्तए, तं धण्णेऽसि णं तुमं जाव सुलद्धे णं मणुयजम्मे, जं णं पवइए। तते णं से कंडरीए पुंडरीएणं एवं वुत्ते तुसिणीए संचिट्ठति, ततेणं से पुंडरीए दोचंपि तचंपि एवं वयासी—धण्णेऽसि तुमं अहं अहण्णे। तएणं से दोचंपि तचंपि एवं वुत्ते समाणे अकामए अवसंवसे लज्जाए य गारवेण य पुंडरीयरायं आपुच्छइ, थेरेहिं सद्धिं बहिया जणवयविहारं विहरई। तए णं से कंडरीए थेरेहिं सद्धिं किंचि कालं उग्गं उग्गेणं विहरित्ता तओ पच्छा समणत्तणनिव्विण्णे समणत्तणणिब्भत्थिए समणगुणमुक्कजोगे थेराणं अंतियातो सणियं २ पच्चोसक्कई, जेणेव पुंडरगिणी णयरी जेणेव पुंडरीयस्स रण्णो भवणे जेणेव असोगवणिया जेणेव असोगवरपायवे जेणेव पुढविसिलावट्टए तेणेव उवागच्छति २ जाव सिलापट्टयं दुरुहइ २ ओहयमणसंकप्पे जाव झियायति। तए णं

१ न शक्नोमि यावत्प्रव्रजितुम्, तद्धन्योऽसि त्व यावत् सुलब्धं मानुपं जन्म यत्प्रव्रजितः। ततः स कण्डरीकः पुण्डरीकेणैवमुक्तः तूष्णीकः संतिष्ठते, ततः स पुण्डरीकः द्विस्त्रिरपि एवमवादीत्—धन्योऽसि त्वमहमधन्यः। ततः स द्विस्त्रिरप्येवमुक्तः सन्नकामोऽवशवशो लज्जया च गौरवेण च पुण्डरीकं राजानमापृच्छति, स्थविरैः सार्धं बहिर्जनपदविहारं विहरति। ततः स कण्डरीकः स्थविरैः सार्धं कञ्चित्कालमुग्रमुग्रेण विहृत्य ततः पश्चात् श्रामण्यनिर्विण्णः श्रामण्यनिर्भर्त्सितः मुक्तश्रमणगुणयोगः स्थविराणामन्तिकात् शनैः २ प्रत्यवष्वष्कति, यत्रैव पुण्डरीकिणी नगरी यत्रैव पुण्डरीकस्य राज्ञो भवनं यत्रैवाशोकवनिका यत्रैवाशोकवरपादपो यत्रैव पृथ्वीशिलापट्टकस्तत्रैवोपागच्छति २ यावच्छिलापट्टकमारोहति २ अपहृतमनःसंकल्पो यावद्ध्यायति। ततः

पच्छा वा अवस्सविप्पजहियव्व, कामभोगावि य ण माणुस्सगा असुई असासया वतासवा एव पित्ता० खेला० सुक्का० सोणियासवा उच्चारपासवणखेलसिंघाणवतपित्तसुक्कसोणियसमुब्भवा अमणुण्णदु[रु]रूयमुत्तपूतिपुरीसपुण्णा मयगंधुस्सासअसुभणिस्सासउव्वेयणगा बीभच्छा अप्पकालिया लहुस्सगा कलमलाहिया सुदुक्खा बहुजणसाहरणा परिकिलेसकिच्छदुक्खसज्झा अबुहजणणिसेविया सदा साहुगरहणिज्जा अणंतसंसारवद्धणा कडुगफलविवागा चुडुलिव्व अमुच्चमाणा दुक्खाणुबंधिणो सिद्धिगमणविग्घा पुव्विं वा पच्छा वा अवस्स विप्पजहियव्वा भवंति, जेऽवि य ण रज्जे हिरण्णे सुवण्णे य जाव सावइज्जे सेऽवि य ण अग्गिसाहिए चोरसाहिए रायसाहिए दाइयसाहिए अधुवे अणितीए असासए पुव्विं वा पच्छा वा अवस्सविप्पजहियव्वे भविस्सतित्ति, एवविहम्मि रज्जे जाव अंतेउरे य माणुस्सएसु य कामभोगेसु मुच्छिए४

---

१ पश्चाद्वाऽवश्य विप्रहातव्यम्, कामभोगा अपि च मानुष्यका अशुचयोऽशाश्वता वान्तास्रवा एव पित्ता० श्लेष्मा० शुक्रा० शोणितास्रवा उच्चारप्रस्रवणश्लेष्मसिङ्घानवान्तपित्तशुक्रशोणितसमुद्भवा अमनोज्ञपूयमूत्रपूतिपुरीषपूर्णा मृतगन्धोच्छ्वासाशुभनिःश्वासोद्वेजका बीभत्सा अल्पकालीना लघुस्वका कश्मलाधिका सुदुःखा बहुजनसाधारणा परिक्लेशकृच्छ्रदुःखसाध्या अबुधजननिषेविता सदा साधुगर्हणीया अनन्तसंसारवर्धना कटुकफलविपाका चुडलीव अमुच्यमाना दुःखानुबन्धिन सिद्धिगमनविघ्ना पूर्वं वा पश्चाद्वाऽवश्य विप्रहातव्या भवन्ति, यदपि च राज्य हिरण्य सुवर्णं च यावत्स्वापतेय तदपि चाग्निस्वाधीन चौरस्वाधीन राजस्वाधीन दायादस्वाधीनमध्रुवमनित्यमशाश्वत पूर्वं वा पश्चाद्वाऽवश्य विप्रहातव्य भविष्यतीति, एवविधे राज्ये यावदन्तःपुरे च मानुष्यकेषु च कामभोगेषु मूर्च्छितो ४

अज्झोववण्णे अट्टदुहट्टवसट्टे अकामए कालं किच्चा सत्तमीपुढवीए तेत्तीससागरोवमट्ठिईए जाए । पुंडरीएऽवि य णं थेरे पप्प तेसिं अंतिते दोचंपि चाउज्जामे धम्मे पडिवज्जति, अट्ठमखमणपारणगंसि अदीणे जाव आहारेई, तेण य कालाईकंतसीयललुक्खअरसविरसेणं अपरिणतेण वेयणा दुरहियासा जाया, तए णं से अधारणिज्जमितिकट्टु करयलपरिग्गहियं जाव अंजलिं कट्टु णमोऽत्थु णं अरहंताणं भगवंताणं जाव संपत्ताणं नमोऽत्थु णं थेराणं भगवंताणं मम धम्मायरियाणं धम्मोवएसयाणं पुव्विंपि य णं मए थेराणं अंतिते सव्वे पाणाइवाए पच्चक्खाए जावज्जीवाए जाव सव्वे अकरणिज्जे जोगे पच्चक्खाए, इयाणिंपि तेसिं चेव णं भगवंताणं अंतिते जाव सव्वं पाणातिवायं जाव सव्वं अकरणिज्जं जोगं पच्चक्खामि, जंपि य मे इमं सरीरगं जाव एयंपि चरिमेहिं ऊसासनीसासेहिं वोसिरामित्ति, एवं आलोइयपडिक्कंते

१० दध्युपपन्नः आर्त्तदुःखार्त्तवशार्त्तः अकामः कालं कृत्वा सप्तमीं पृथ्वीं त्रयस्त्रिंशत्सागरोपमस्थितिकां गतः । पुण्डरीकोऽपि च स्थविरान् प्राप्य तेषामन्तिके द्विरपि चातुर्यामं धर्मं प्रतिपद्यते, अष्टमक्षपणपारणे अदीनो यावदाहारयति, तेन च कालातिक्रान्तशीतलरुक्षारसविरसेन अपरिणतेन वेदना दुरध्यासा जाता, ततः सोऽधारणीयमितिकृत्वा करतलपरिगृहीतं यावदञ्जलिं कृत्वा नमोऽस्तु अर्हद्भ्यः भगवद्भ्यो यावत्संप्राप्तेभ्यो नमोऽस्तु स्थविरेभ्यो भगवद्भ्यो मम धर्माचार्येभ्यो धर्मोपदेशकेभ्यः, पूर्वमपि मया स्थविराणामन्तिके सर्वः प्राणातिपातः प्रत्याख्यातो यावज्जीवतया यावत्सर्वोऽकरणीयो योगः प्रत्याख्यातः, इदानीमपि तेषामेव भगवतामन्तिके यावत्सर्वं प्राणातिपातं यावत्सर्वमकरणीयं योगं प्रत्याख्यामि, यदपि च मे इदं शरीरमेतदपि यावत् चरमैरुच्छ्वासनिःश्वासैर्व्युत्सृजामीति, एवमालोचितप्रतिक्रान्तः

पुंडरीयस्स अम्मधाई तत्थागच्छति, जाव त तहा पासति २पुंडरीयस्स साहति, सेऽवि य णं अतेउरपरिवालसंपरिवुडे तत्थागच्छति २ तिक्खुत्तो आयाहिणपयाहिण जाव धण्णेऽसि ण सच जाव तुसिणीए, तए ण पुडरीए एव वया सी-अट्ठो भते ! भोगेहि?, हत अट्ठो, तए ण कोडुंवियपुरिसे सद्दावेइ २ कलिकलुसेणेवाभिसित्तो रायाभिसेएण जाव रज्जं पसासेमाणे विहरति। तए ण से पुंडरीए सयमेव पचमुट्ठिय लोय करेइ २ चाउज्जाम धम्म पडिवज्जइ २ कडरीयस्स आयारभडग सवसुहसमुदयपिव गिण्हति २ इम अभिग्गह गिण्हति-कप्पति मे थेराण अतिते धम्म पडिवज्जेत्ता पच्छा आहार आहारित्तएत्तिकट्टु थेराभिमुहे णिग्गए। कडरीयस्स उ त पणीयं पाणभोयण आहारियस्स णो सम्म परिणय, वेयणा पाउब्भूया उज्जला विउला जाव दुरहियासा, तए ण से रज्जे य जाव अतेउरे य मुच्छिए जाव

१ पुण्डरीकस्य धात्री तत्रागच्छति, यावत्त तथा पश्यति २ पुण्डरीकाय कथयति, सोऽपि च अन्त पुरपरिवारसपरिवृतस्तत्रागच्छति २ त्रिकृत्व आदक्षिणप्रदक्षिण यावद्धन्योऽसि सर्व यावत्तूष्णीक , तत पुण्डरीक एवमवादीत्—अर्थो भदन्त ! भोगै ?, हन्तार्थ , तत कौटुम्बिकपुरुषान् शब्दयति २ कलिकलुषेणाभिषिक्तो राजाभिषेकेण यावद्राज्य प्रशासयन विहरति। ततः स पुण्डरीक स्वयमेव पञ्चमौष्टिक लोच करोति २ चातुर्याम धर्म प्रतिपद्यते २ कण्डरीकस्याचारभाण्ड सर्वसुखसमुदायमिव गृह्णाति २ इममभिग्रह गृह्णाति—कल्पते मम स्थविराणामन्तिके धर्म प्रतिपद्य पश्चादाहारमाहारयितुमितिकृत्वा स्थविराभिमुखो निर्गत । कण्डरीकस्य तु तत्प्रणीत पानभोजनमाहारितस्य न सम्यक् परिणत, वेदना प्रादुर्भूता उज्ज्वला विपुला यावद्दुरध्यास्या, तत स राज्ये च यावदन्त पुरे च मूर्च्छितो याव-

ते भंणति–तुब्भवि अन्नो आयरिओ ?, ताहे सामी भगवओ गुणथवणं करेइ, ते पव्वइया, देवयाए लिंगाणि उवणीयाणि, ताहे ते भगवया सद्धिं वचंति, भिक्खावेला य जाया, भगवं भणति–किं आणिज्जउ ?, ते भणंति—पायसो, भगवं च सव्वलद्धिसंपुण्णो पडिग्गहगं महुसंजुत्तस्स पायसस्स भरित्ता आगतो, ताहे भणति—परिवाडीए ठाह, ते ठिया, भगवं च अक्खीणमहाणसितो, ते धाया, ते सुट्ठुयरं आउट्टा, ताहे सयमाहारेति, ताधे पुणरवि पट्ठविया। तेसिं च सेवालभक्खगाणं जेमंताणं चेव केवलणाणं उप्पण्णं, दिण्णस्स वग्गे छत्ताइच्छत्तं पेच्छंताणं, कोडिन्नस्स वग्गे सामिं दट्ठूण उप्पण्णं। गोयमसामी पुरओ पकड्ढमाणो सामिं पयाहिणीकरेति, तेवि केवलिपरिसं पहाविया, गोयमसामी भणइ–एध सामिं वंदह, सामी भणइ–गोयमा! मा केवली आसाएहि, गोयमसामी आउट्टो मिच्छादुक्कडं करेति।

१ ते भणन्ति—युष्माकमप्यन्य आचार्यः ?, तदा स्वामी भगवतो गुणस्तवनं करोति, ते प्रव्रजिताः, देवतया लिङ्गान्युपनीतानि, तदा ते भगवता सार्धं व्रजन्ति, भिक्षावेला च जाता, भगवान् भणति–किमानीयताम् ?, ते भणन्ति–पायसः, भगवांश्च सर्वलब्धिसंपूर्णः प्रतिग्रहं मधुसंयुक्तस्य पायसस्य भृत्वाऽऽगतः, तदा भणति–परिपाट्या तिष्ठत, ते स्थिताः, भगवांश्चाक्षीणमहानसिकः, ते ध्राताः, ते सुष्ठु आवर्जिताः, तदा स्वयमाहारयति, तदा पुनरपि प्रस्थापिताः तेषामथ शैवालभक्षकाणां जिमतामेव केवलज्ञानमुत्पन्नं, दत्तस्य वर्गे छत्रातिच्छत्रं पश्यतां, कौडिन्यस्य वर्गे स्वामिनं दृष्ट्वोत्पन्नम्। गौतमस्वामी पुरतः प्रकर्षन् स्वामिनं प्रदक्षिणीकरोति, तेऽपि केवलिपर्षदं प्रधाविताः, गौतमस्वामी भणति–एत स्वामिनं वन्दध्वं, स्वामी भणति—गौतम! मा केवलिन आशातय, गौतमस्वामी आवृत्तो मिथ्यादुष्कृतं करोति।

समाहिपत्ते कालमासे काल किचा सवट्ठसिद्धे तेत्तीससागरोवमाऊ देवे जाए, तओ चइत्ता महाविदेहे सिज्झिहित्ति । ता मा तुम दुब्बलत्त वलियत्त वा गिण्हाहि, जधा सो कडरीओ तेण दोब्बलेण अट्टदुहट्टवसट्टो सत्तमीए उववण्णो, पुडरीतो पडिपुण्णगलकवोलो सवट्ठसिद्धे उववण्णो, एव देवाणुप्पिया ! वलितो दुब्बलो वा अकारण, इत्थ झाणणिग्गहो कायवो, झाणणिग्गहो परम पमाण । तत्थ वेसमणो अहो भगवया आकूय नायति एत्थ अतीव संवेगमावण्णोत्ति वदित्ता पडिगतो । तत्थ वेसमणस्स एगो सामाणितो देवो, तेण त पुडरीयज्झयण ओगाहिय पचसयाणि समत्त च पडिवण्णोत्ति, केई भणति–जभगो सो। ताहे भगव कल्ल चेइयाणि वदित्ता पच्चोरुहति,ते तावसा भणति–तुज्झे अम्हाण आयरिया अम्हे तुब्भ सीसा, सामी भणति–तुज्झ अम्ह च तिलोयगुरू आयरिया,

१ प्राप्तसमाधि कालमासे काल कृत्वा सर्वार्थसिद्धे त्रयस्त्रिंशत्सागरोपमायुर्देवो जात, ततश्च्युत्वा महाविदेहेषु सेत्स्यतीति । त मा त्व दुर्बलत्व बलित्व वा गृहाण, यथा स कण्डरीकस्तेन दौर्बल्येन आर्त्तदु खार्त्तवशार्त्त सप्तम्यामुत्पन्न, पुण्डरीक परिपूर्णगलकपोल सर्वार्थसिद्धे उत्पन्न, एव देवानुप्रिय ! बली दुर्बलो वाऽकारणमत्र ध्याननिग्रह कर्त्तव्य, ध्याननिग्रह परम प्रमाण । तत्र वैश्रवणोऽहो भगवताऽऽकूत ज्ञातमिति अत्रातीव सवेगमापन्न इति वन्दित्वा प्रतिगत । तत्र वैश्रमणस्यैक सामानिको देवस्तेन तत्पुण्डरीकमध्ययनमवगाहित पञ्चशतानि (शतवारा) सम्यक्त्व च प्रतिपन्न इति, केचिद्भणन्ति—जृम्भक स । तदा भगवान् प्रभाते चैत्यानि वन्दित्वा प्रत्यवतरति, ते तापसा भणन्ति—यूयमस्माकमाचार्या वय युष्माक शिष्या, स्वामी भणति—युष्माकमस्माक च त्रिलोकगुरव आचार्या,

सो देवो उववण्णो, ताधे भणति धणगिरी—एस ते गब्भो विइज्जिओ होहिइ, सो सीहगिरिस्स पासे पव्वतितो, इमोवि णवण्हं मासाणं दारतो जातो ॥ इत्यादि भगवद्वैरिस्वामिकथा आवश्यकचूर्णितोऽवसेया इत्युक्तो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपावसरः, स च सूत्रे सतीत्यतः सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

दुमपत्तए पंडुयए जहा, निवडइ राइगणाण अच्चए । एवं मणुयाण जीवियं, समयं गोयम ! मा पमायए ॥१॥

व्याख्या—द्रुमो—वृक्षस्तस्य पत्रं—पलाशं तदेव तथाविधावस्थां प्राप्यानुकम्पितं द्रुमपत्रकं 'पंडुयए'त्ति आर्षत्वात् पाण्डुरकं कालपरिणामतस्तथाविधरोगादेर्वा प्राप्तवलक्षभावं, येन प्रकारेण यथा, 'निपतति' शिथिलवृन्तवन्धनत्वाद् भ्रश्यति, प्रक्रमात् द्रुमत एव, रात्रिगणानां दिनगणाविनाभावित्वादुपलक्षणत्वाद्वा रात्रिन्दिवससमूहानाम् 'अत्यये' अतिक्रमे, 'एवम्' इत्येवंप्रकारं 'मनुष्याणां' मनुजानां, शेषजीवोपलक्षणं चैतत्, 'जीवितं' आयुः, तदपि हि रात्रिन्दिवगणानामतिक्रमे यथास्थित्या स्थितिखण्डकापहारात्मकेनाध्यवसायादिना जनितेनोपक्रमणेन वा जीवप्रदेशेभ्यो भ्रश्यतीत्येवमुच्यते, यतश्चैवमतोऽत्यन्तनिरुद्धः कालः समयस्तम्, अपिशब्दस्य गम्यमानत्वात्समयसंख्यास्तामावलिकादि, 'गौतम' इति गौतमसगोत्रस्येन्द्रभूतेरामन्त्रणं 'मा प्रमादीः' मा प्रमादं कृथाः, शेषशिष्योपलक्ष-

१ स देव उत्पन्नः, तदा भणति धनगिरिः—एष तव गर्भो द्वितीयको भविष्यति, स सिंहगिरेः पार्श्वे प्रव्रजितः । अयमपि नवसु मासेषु दारको जातः,

तओ गोयमसामिस्स सुहुयरं अधिती जाया, ताधे सामी गोयम भणति—किं देवाणं वयण गिज्झ ? आतो जिणाण ?, गोयमो भणति—जिणवराण, तो कीस अधितिं करेसि ?, ताधे सामी चत्तारि कडे पण्णवेइ, तंजहा—सुवकडे विदलकडे चम्मकडे कंबलकडे, एव सामीवि गोयमसामीतो कंबलकडसमाणो, किं च—चिरसंसट्ठोऽसि मे गोयमा ! जाव अविसेसमणाणत्ता भविस्सामो, ताधे सामी दुमपत्तय नाम अज्झयण पण्णवेइ । देवो वेसमणसामाणितो ततो चइत्ता ण तुंबवणसन्निवेसे धणगिरीणाम गाधावई, सो य पव्वतिउकामो, तस्स य मायापियरो वारेंति, पच्छा सो जत्थ २ वरेंति तत्थ २ विप्परिणामेति जहा अहं पव्वइउकामो, तस्स य तयणुरूवस्स गाहावतिस्स धूया सुणदा णाम, सा भणइ—मम देह, ताधि सा दिण्णा, तीसे य भाया अज्जसमितो णाम पुव्वपव्वतितो, तीसे य सुणदाए कुच्छिसि

---

१ ततो गौतमस्वामिन सुष्ठुतराऽधृतिर्जाता, तदा स्वामी गौतम भणति—किं देवाना वचन ग्राह्यमुत जिनानाम् ?, गौतमो भणति—जिनवराणा, तदा कुतोऽधृतिं करोषि ?, तदा स्वामी चतुर कटान् प्रज्ञापयति, तद्यथा—शुम्बकटो विदलकटश्चर्मकट कम्बलकट , एव स्वाम्यपि गौतमस्वामिनमाश्रित्य कम्बलकटसमान , किं च—चिरसंसृष्टोऽसि मम गौतम ! यावत् अविशेषौ अनानात्वौ भविष्याव , तदा स्वामी द्रुमपत्रीयमध्ययन प्रज्ञापयति । देवो वैश्रमणसामानिकस्ततश्च्युत्वा तुम्बवनसंनिवेशे धनगिरिर्नाम गाथापति , स च प्रव्रजितुकाम , तस्य च मातापितरौ वारयत , पश्चात्तौ यत्र यत्र वरयत तत्र तत्र विपरिणमयति यथा अह प्रव्रजितुकाम , तस्य च तदनुरूपस्य गाथापतेर्दुहिता सुनन्दा नाम, सा भणति—मा दत्त, तदा सा दत्ता, तस्याश्च भ्राता आर्यसमितो नाम पूर्वप्रव्रजित , तस्याश्च सुनन्दाया कुक्षौ

र्णविच्छायतयोपहास्यानि, एवं यूयमपि भावीनीति, 'अप्पाहेइ'त्ति उक्तन्यायेनोपदिशति पितेव पुत्रस्य 'पतत्' भ्रश्यत् 'पाण्डुरपत्रं' जीर्णपत्रं 'किसलयानाम्' अभिनवपत्राणां। ननु किमेवं पत्रकिसलयानामुल्लापः सम्भवति ? येनेदमुच्यते, अत आह–'नैवास्ति' नैव विद्यते, नैव भविष्यति उपलक्षणत्वात् नैन भूतः, कोऽसौ ?–'उल्लापः' वचनं, केषां ?–'किशलयपाण्डुपत्राणाम्' उक्तरूपाणां, आर्षत्वाच्च यलोपः, तदिह किमेवमुक्तमित्याह—'उपमा' उपमितिः, खलु एवकारार्थत्वात्, ततः उपमैव, 'एषा' अनन्तरोक्ता 'कृता' विहिता 'भवियजणविबोहणट्ठाए'त्ति प्रतीतमेव। यथेह किशलयानि पाण्डुपत्रेणानुशिष्यन्ते तथाऽन्योऽपि यौवनगर्वितोऽनुशासनीयः, तथा चैतदनुवादिना वाचकेनावाचि–'परिभवसि किमिति लोकं जरसा परिजर्जरीकृतशरीरम्। अचिरात् त्वमपि भविष्यसि यौवनगर्वं किमुद्वहसि ? ॥ १ ॥" तदेवं जीवितयौवनयोरनित्यत्वमवगम्य न प्रमादो विधेय इति गाथात्रयार्थयुक्तसूत्रगर्भार्थः ॥ पुनरायुषोऽनित्यत्वं ख्यापयितुमाह—

कुसग्गे जह ओसबिंदुए, थोवं चिट्ठति लंबमाणए। एवं मणुयाण जीवियं, समयं० ॥ २ ॥

व्याख्या—कुशो–दर्भसदृशस्तृणविशेषः, तनुतरत्वाच्च तस्योपादानं, तस्याग्रं–प्रान्तस्तस्मिन्, 'यथा' इत्युपमाप्रदर्शकः, अवश्यायः–शरत्कालभावी श्लक्ष्णवर्षस्तस्य बिन्दुरेव बिन्दुकः अवश्यायबिन्दुकः, 'स्तोकम्' अल्पकालमिति गम्यते, 'तिष्ठति' आस्ते, 'लम्बमानकः' मनाग् निपतद्, बद्धास्पदो हि कदाचित् कालान्तरमपि क्षमेतेत्येवं विशे- ॥३३४॥

ण च गौतमग्रहणम्, उक्त हि निर्युक्तिकृता—'तण्णिस्साए भगव सीसाण देइ अणुसट्ठिं,' अत्र च पाण्डुरकपदाक्षिप्त यौवनस्याप्यनित्यत्वमाविर्भिक्षीर्षुराह निर्युक्तिकृत्—

परियट्टियलावण्ण चलतसधि मुयतविंटाग । पत्त च वसणपत्त कालप्पत्त भणइ गाह ॥ ३०७ ॥
जह तुब्भे तह अम्हे तुब्भेवि अ होहिहा जहा अम्हे । अप्पाहेइ पडत पडुरवत्त किसलयाण ॥३०८॥
नवि अत्थि नवि अ होही उल्लावो किसलपडुपत्ताण । उवमा खलु एस कया भवियजणविबोहणट्ठाए

व्याख्या—परिवर्तित–कालपरिणत्याऽन्यथाकृत लावण्यम्–अभिरामगुणात्मकमस्येति परिवर्तितलावण्य, यतो न तस्य प्रागिव सौकुमार्यादि विद्यते, तथा चलन्त –शिथिलीभवन्त सन्धयो—यस्मिस्तत्तथा, अत एव 'मुयत–वेंटाग'ति मुञ्चत्–त्यजत् सामर्थ्याद् वृक्ष वृन्तक–पत्रबन्धन यस्य तत् मुञ्चद्वृन्तक, वृन्तस्य वृक्षमोचने पत्रस्य पतनमेव भवतीति पतदित्युक्त भवति, 'पत्र' (च) पर्ण, व्यसनम्–आपद् प्राप्त व्यसनप्राप्त तथा काल –प्रक्रमात् पतनप्रस्तावस्त प्राप्त–गत कालप्राप्त 'भणति' अभिधत्ते, गीयत इति गाथा ता–छन्दोविशेषरूपा ॥ तामेवाह—'यथा' इति सादृश्ये, ततो यथा यूय सम्प्रति किशलयभावमनुभवथ स्निग्धादिगुणैर्गर्वमुद्वहथ अस्मानुपहसथ, तथा वयमप्यतीतदशाया, तथा यूयमपि च भविष्यथ यथा वयमिति, जीर्णभावे हि यथा वयमिदानी विव-

'भवो' जन्म 'चिरकालेनापि' प्रभूतकालेनापि, आस्तामल्पकालेनेत्यपिशब्दार्थः, 'सर्वप्राणिनां' सर्वेषामपि जीवाना, न तु मुक्तिगमनं प्रति भव्यानामिव केपाञ्चित् मनुजभवावाप्तिं प्रति सुलभत्वविशेषोऽस्ति, किमेवमत आह— 'गाढा' विनाशयितुमशक्यतया दृढाः 'च' इति यस्मात्, 'विपाककम्मुणो'त्ति विपाकाः—उदयाः कर्मणां—मनुष्यगतिविघातिप्रकृतिरूपाणां, यत एवमतः समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः॥ कथं पुनर्मनुजत्वं दुर्लभं, यद्वा यदुक्तं 'सर्वप्राणिनां दुर्लभं मनुजत्व'मिति, तत्र एकेन्द्रियादिप्राणिनां तद्दुर्लभत्वं दर्शयितुकामः कायस्थितिमाह—

पुढवीकायमइगओ उक्कोसं जीवो य संवसे। कालं संखातीयं समयं गोयम ! मा पमायए ॥ ५ ॥

आउक्कायम० ॥ ६ ॥ तेउक्काय० ॥ ७ ॥ वाउक्काय० ॥८॥ वणस्सइकाय० उक्कोसं०। कालमणंतदुरंतं समयं०९
बेइंदियकाय० उक्को०। कालं संखिज्जसण्णियं समयं० ॥१०॥ तेइंदिय०॥ ११ ॥ चउरिंदिय० ॥ १२ ॥ पंचिंदियकायमइगओ उक्कोसं०। सत्तट्ठभवग्गहणे समयं० ॥ १३॥ देवे णरए य गओ, उक्कोसं०। एक्केक्कभवग्गहणे, समयं० ॥ १४ ॥

व्याख्या—पृथ्वी—कठिनरूपा सैव कायः—शरीरं पृथ्वीकायस्तमतिशयेन मृत्वा २ तदुत्पत्तिलक्षणेन गतः—प्राप्तः अतिगतः, 'उक्कोसं'ति उत्कर्षतो 'जीवः' प्राणी 'तुः' पूरणे 'संवसेत्' तद्रूपतयैवावतिष्ठेत 'कालं' सङ्ख्यातीतं, असङ्ख्यमित्यर्थः, यत एवमतः समयमपि गौतम! मा प्रमादीरिति। एवमप्कायतेजस्कायवायुकायसूत्रत्रयमपि व्याख्येयं,

प्यते, 'एवम्' इत्युक्तसदृश 'मनुजाना' मनुष्याणा, मनुजग्रहण च प्राग्वत्, 'जीविय'ति जीवित, यत एव तत समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थ ॥ अमुमेवार्थमुपसहरन्नुपदेशमाह—

इइ इत्तरियम्मि आउए, जीवितए बहुपच्चवायए । विहुणाहि रय पुराकड, समय० ॥ ३ ॥

व्याख्या—'इति' इत्युक्तन्यायेन 'इत्वरे' अयनशीले, कोऽर्थ ?—स्वल्पकालभाविनि, एति—उपक्रमहेतुभि अनपवर्त्यतया यथास्थित्यैवानुभवनीयता गच्छतीति आयु, तस्मिन्नेव निरुपक्रममेव तस्मिन्, तथाऽनुकम्पित जीवित जीवितक चशब्दस्य गम्यमानत्वात् तस्मिंश्च, अर्थात् सोपक्रमायुषि, बहव –प्रभूता प्रत्यपाया—उपघातहेतवोऽध्यवसाननिमित्तादयो यस्मिंस्तत्तथा, अनेन चानुरूप्यताहेतुराविष्कृत, एव चोक्तरूपद्रुमपत्रोदाहरणत कुशाग्रजलबिन्दूदाहरणतश्च मनुजायुर्निरुपक्रम सोपक्रम चेत्वरम्, अतोऽस्यानित्यता मत्वा 'विधुनीहि' जीवात् पृथक् कुरु 'रज' कर्म 'पुरेकडति' पुरा—पूर्व तत्कालापेक्षया कृत—विहित, तद्विधुवनोपायमाह—समयमपि गौतम ! मा प्रमादी, पठन्ति च—एव मणुयाण जीविए एत्तिरिए बहुपच्चवायए'त्ति सुगममेवेति सूत्रार्थ ॥ स्यात्—पुनर्मनुष्यभवावाप्तावुद्यस्याम इत्याह—

दुलहे खलु माणुसे भवे, चिरकालेणवि सव्वपाणिणं । गाढा य विवाग कम्मुणो, समय० ॥ ४ ॥

व्याख्या—'दुर्लभो' दुरवाप, 'खलु' विशेषणे, अकृतसुकृतानामिति विशेष द्योतयति, 'मानुषो' मनुष्यसम्बन्धी

कभवग्रहणमपि संवसति, अतो जीवः संवसेत् अतः समयमपि गौतम ! मा प्रमादीरिति सूत्रदशकार्थः ॥ उक्तमेवार्थमुपसंहर्तुमाह—

एवं भवसंसारे संसरति सुभासुभेहिं कम्मेहिं । जीवो पमायबहुलो, समयं० ॥ १५ ॥

व्याख्या—'एवम्' उक्तप्रकारेण पृथिव्यादिकायस्थितिलक्षणेन भवा एव—तिर्यगादिजन्मात्मकाः संस्रियमाणत्वात् संसारो भवसंसारस्तस्मिन्, 'संसरन्ति'-पर्यटन्ति शुभानि च-शुभप्रकृत्यात्मकानि अशुभानि च-अशुभप्रकृतिरूपाणि शुभाशुभानि तैः 'कर्मभिः' पृथ्वीकायादिभवनिबन्धनैः 'जीवः' प्राणी प्रमादैर्बहुलो—व्याप्तः प्रमादबहुलः, यद्वा बहून्—भेदान् लातीति बहुलो मद्याद्यनेकभेदतः प्रमादो—धर्मं प्रत्यनुद्यमात्मको यस्य स बहुलप्रमादः, सूत्रे च व्यत्ययनिर्देशः प्राग्वत्, इह चायमाशयः—यतोऽयं जीवः प्रमादबहुलः सन् शुभाशुभानि कर्माण्युपचिनोति, उपचित्य च तदनुरूपासु गतिष्वाजवंजवीभावमुपगम्य भ्राम्यति, ततो दुर्लभत्वात् पुनर्मानुषत्वस्य प्रमादमूलत्वाच्च सकलानर्थपरम्परायाः समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ एवं मनुजभवदुर्लभत्वमुक्तम्, इदानीं तदवाप्तावप्युत्तरोत्तरगुणावाप्तिरतिदुरापैवेत्याह—

लद्धूणऽवि माणुसत्तणं, आयरित्तणं पुणरावि दुल्लभं । बहवे दसुया मिलेक्खुया, समयं० ॥ १६ ॥
लद्धूणऽवि आरियत्तणं, अहीणपंचिंदियया हु दुल्लहा । विगलिंदियता हु दीसइ, समयं० ॥ १७ ॥
अहीणपंचिंदियत्तंपि से लहे, उत्तमधम्मसुती हु दुल्लहा । मिच्छत्तनिसेवए जणे, समयं० ॥ १८ ॥

तथा वनस्पतिसूत्र च, नवरं कालमनन्तमिति, अनन्तकायिकापेक्षमेतत्, प्रत्येकवनस्पतीना कायस्थितेरसङ्ख्यातत्वात्, तथा दुष्टोऽन्तोऽस्येति दुरन्तस्तम्, इदमपि साधारणापेक्षयैव, ते ह्यत्यन्तात्पबोधतया तत उद्धृता अपि न प्रायो विशिष्ट मानुषादिभवमाप्नुवन्ति। इह च 'काल सङ्ख्यातीत'मिति विशेपानभिधानेऽप्यसङ्ख्योत्सर्पिण्यवसर्पिणीमानम्, 'अनन्त' मिति चानन्तोत्सर्पिण्यवसर्पिणीप्रमाणमित्यवग तव्य, यत आगम –"अस्सखोसप्पिणिउस्सप्पिणीउ एगेदियाण उ चउण्ह। ता चेव ऊ अणता वणस्सतीए उ बोद्धघा ॥ १ ॥" तथा द्वे—द्विसङ्ख्ये इन्द्रिये—स्पर्शनरसनाख्ये येषा ते द्वीन्द्रिया —कृम्यादय ,तत्कायमतिगत उत्कर्षतो जीवस्तु सवसेत् काल सङ्ख्येयसञ्ज्ञित–सङ्ख्यातवर्षसहस्रात्मकम्, अत समयमपि गौतम! मा प्रमादी ॥ एव त्रीन्द्रियचतुरिन्द्रियसूत्रे अपि भावनीये ॥ तथा पञ्च इन्द्रियाणि—स्पर्शनादीनि येषा ते तथा, ते चोत्तरत्र देवनारकयोरभिधानात् मनुष्यत्वस्य दुर्लभत्वेन प्रक्रान्तत्वात्तिर्यञ्च एव गृह्यन्ते, तत्कायमतिगत , तत्कायोत्पन्न इत्यर्थ , उत्कर्षतो जीवस्तु सवसेत् सप्त वा अष्ट वा सप्ताष्टानि तानि च तानि भवग्रहणानि च—जन्मोपादानानि सप्ताष्टभवग्रहणानि यत अत समयमपि गौतम! मा प्रमादी । तथा देवान्नैरयिकाश्च अतिगत उत्कर्षतो जीवस्तु सवसेत् एकैकभवग्रहण, तत परमवश्य नरेषु तिर्यक्षु वोत्पादात्। यद्वा 'उक्कोसति' उत्कृष्यते तदन्येभ्य इत्युत्कर्षस्तमुत्कृष्टं काल–त्रयस्त्रिंशत्सागरोपममानम्, 'एगेगभवग्गहण'ति अपेगम्यमानत्वादेकै-

किमिति?—यतः-कुत्सितानि च तानि तीर्थानि कुतीर्थानि च-शाक्यौलूक्यादिप्ररूपितानि तानि विद्यन्ते येपामनुष्ठेयतया स्वीकृतत्वात्ते कुतीर्थिनस्तान्नितरां सेवते यः स कुतीर्थिनिपेवको जनो—लोकः, कुतीर्थिनो हि यशःसत्काराद्येपिणो यदेव प्राणिप्रियं विपयादि तदेवोपदिशन्ति, तत्तीर्थकृतामप्येवंविधत्वात्, उक्तं हि—"सत्कारयशोलाभार्थिभिश्च मूढैरिहान्यतीर्थकरैः। अवसादितं जगदिदं प्रियाण्यपथ्यान्युपदिशद्भिः ॥१॥" इति सुकरैव तेपां सेवा, तत्सेविनां च कुत उत्तमधर्मश्रुतिः?, पठ्यते च—'कुतित्थिणिसेवए जणे'त्ति स्पष्टः, एवं च तद्दुर्लभत्वमवधार्य समयमपि गौतम ! मा प्रमादीः। किंच—लब्ध्वाऽपि उत्तमधर्मविपयत्वादुत्तमा तां 'श्रुतिम्' उक्तिरूपां 'श्रद्धानं' तत्त्वरुचिरूपं 'पुणरावि'त्ति पुनरपि 'दुर्लभं' दुरापम्, इहैव हेतुमाह—मिथ्याभावो मिथ्यात्वम्—अतत्त्वेऽपि तत्त्वप्रत्ययरूपं तं निपेवते यः स मिथ्यात्वनिपेवको जनो—लोकः, अनादिभवाभ्यस्ततया गुरुकर्मतया च तत्रैव प्रायः प्रवृत्तेः, यत एवमतः समयमपि गौतम ? मा प्रमादीः। अन्यच्च—'धर्मं' प्रक्रमात् सर्वज्ञप्रणीतम् 'अपिः' भिन्नक्रमः 'तुः' वाक्यालङ्कारे, ततः 'श्रद्दधतोऽपि' कर्तुमभिलपन्तोऽपि दुर्लभकाः कायेन—शरीरेण, उपलक्षणत्वान्मनसा वाचा च, 'स्पर्शका' अनुष्ठातारः, कारणमाह—'इह' अस्मिन् जगति 'कामगुणेपु' शब्दादिपु 'मूर्च्छिता' मूढाः, गृद्धिमन्त इत्यर्थः, जन्तव इति शेपः, प्रायेण ह्यपथ्येष्वेव विपयेष्वभिष्वङ्गः प्राणिनां, यत उक्तम्—"प्रायेण हि यदपथ्यं तदेव चातुरजनप्रियं भवति। विपयातुरस्य जगतस्तथाऽनुकूलाः प्रिया विपयाः ॥ १ ॥" पाठान्तरतः कामगुणैर्मूर्च्छिता इव मूर्च्छिताः, विलुप्तधर्म-

लद्धूणवि उत्तम सुइ, सद्दहणा पुणरावि दुल्लहा । मिच्छत्त० समय० ॥ १९ ॥

धम्मपि हु सद्दहतया, दुल्लभया काएण फासया । इह कामगुणेहिं मुच्छिया, समय० ॥ २० ॥

व्याख्या—'लब्ध्वाऽपि' प्राप्यापि 'मानुषत्व' इद तावदतिदुर्लभमेव कथञ्चित्तु लब्ध्वाऽपीत्यपिशब्दार्थ, 'आर्यत्व' मगधाद्यार्यदेशोत्पत्तिलक्षण 'पुनरपि' भूयोऽपि, आकारस्त्वलाक्षणिक, 'दुर्लभ' दुरवाप, किमिति ?, अत आह-बहव -प्रभूता दस्यवो-देशप्रत्य तवासिनश्चौरा 'मिलेक्खु य'त्ति म्लेच्छा-अव्यक्तवाचो, न यदुक्तमार्यैरवधार्यते, ते च शकयवनशबरादिदेशोद्भवा, येष्ववाप्यापि मनुजत्व जन्तुरुत्पद्यते, एते च सर्वेऽपि धर्माधर्मगम्यागम्यभक्ष्याभक्ष्यादिसफलार्यव्यवहारबहिष्कृतास्तिर्यक्प्राया एवेति समयमपि गोतम ! मा प्रमादी । इत्यमार्यदेशोत्पत्तिरूपमार्यत्वमतिदुर्लभ, तथाविधमपि लब्ध्वाऽपि 'आर्यत्वम्' उक्तरूपम्, अहीनानि-अविकलानि पञ्चेन्द्रियाणि-स्पर्शनादीनि यस्य स तथा तद्भावोऽहीनपञ्चेन्द्रियता 'हु' अवधारणे भिन्नक्रमश्च, दुर्लभा एव, यद्वा हु पुनरर्थे, अहीनपञ्चेन्द्रियता पुनर्दुर्लभा, इहैव हेतुमाह-विकलानि-रोगादिभिरुपहतानीन्द्रियाणि येषा तद्भावो विकलेन्द्रियता, हुरिति निपातोऽनेकार्थतया च बाहुल्यसूचक, ततश्च यतो बाहुल्येन विकलेन्द्रियता दृश्यते ततो दुर्लभैवाहीनपञ्चेन्द्रियता, तथा च समयमपि गौतम ! मा प्रमादी । तथा कथञ्चिदहीनपञ्चेन्द्रियतामप्युक्तन्यायतोऽतिदुर्लभामपि 'स' इति जन्तु 'लभेत' प्राप्नुयात्, तथाऽप्युत्तम -प्रधानो यो धर्मस्तस्य 'श्रुति' आकर्णनात्मिका या सा तथा, 'हु' अवधारणे भिन्नक्रमश्च, ततो दुर्लभैव,

मजत्वाच्च, तथोपदेशाधिकारादुपदेशस्य च श्रोत्रग्राह्यत्वात्। तथा च 'सर्वबल'मिति सर्वेषां—करचरणाद्यवयवानां स्वस्वव्यापारसामर्थ्यं, यद्वा सर्वेषां—मनोवाक्कायानां ध्यानाध्ययनचङ्क्रमणादिचेष्टाविषया शक्तिरिति सूत्रषट्कार्थः ॥ जरातः शरीराशक्तिरुक्ता, सम्प्रति रोगतस्तामाह—

अरई गंडं विसूईया, आयंका विविहा फुसंति ते। विहडइ विद्धंसइ ते सरीरयं, समयं० ॥ २७ ॥

व्याख्या—'अरतिः' वातादिजनितश्चित्तोद्वेगः 'गण्डं' गडु, विध्यतीव शरीरं सूचिभिरिति विसूचिका—अजीर्णविशेषः, आङिति सर्वात्मप्रदेशाभिव्याप्त्या तङ्कयन्ति—कृच्छ्रजीवितमात्मानं कुर्वन्तीत्यातङ्काः—सद्योघातिनो रोगविशेषाः 'विविधाः' अनेकप्रकाराः 'स्पृशन्ति' परामृशन्ति 'ते' तव, शरीरकमिति गम्यते, ततश्च 'विपतति' विशेषेण बलापचयादपैति 'विध्वस्यते' जीवविप्रमुक्तं च विशेषेणाधःपतति ते शरीरकम्, अतः समयमपि गौतम! मा प्रमादीः, सर्वत्र च वर्तमाननिर्देशः प्राग्वत्। केशपाण्डुरत्वादिकं यद्यपि गौतमे न सम्भवति तथापि तन्निश्रया शेषशिष्यप्रतिबोधनार्थत्वाददुष्टमिति सूत्रार्थः ॥ यथा चाप्रमादो विधेयस्तथा चाह—

वुच्छिंद सिणेहमप्पणो, कुमुयं सारइयं व पाणियं। से सव्वसिणेहवज्जिए, समयं० ॥ २८ ॥

व्याख्या—'वोच्छिंद'त्ति विविधैः प्रकारैरुत्—प्राबल्येन छिन्द्धि—अपनय व्युच्छिन्द्धि, कम्?—'स्नेहम्' अभिष्वङ्गं, कस्य सम्बन्धिनम्?—आत्मनः, किमिव?—'कुमुदमिव' चन्द्रोद्योतविकाश्युत्पलमिव 'सारइयं व'त्ति सूत्रत्वाच्छरदि भवं

विषयचैतन्यत्वात्, यतश्चैवमतो दुरापामिमामविकलां धर्मसामग्रीमवाप्य समयमपि गौतम ! मा प्रमादीरिति सूत्रपञ्चकार्थः ॥ अन्यच्च सति शरीरे तत्सामर्थ्ये च सति धर्मस्पर्शनेति तदनित्यताऽभिधानद्वारेणाप्रमादोपदेशमाह—

परिजूरइ ते सरीरयं, केसा पंडुरगा (य) भवंति ते। से सोयबले य हायइ, समयं० ॥ २१ ॥

परि० चक्खुबले० ॥ २२ ॥० घाणबले० ॥२३॥० रसणबले० ॥२४॥० फासबले० ॥ २५ ॥० सव्वबले० ॥२६॥

व्याख्या—'परिजीर्यति' सर्वप्रकारां वयोहानिमनुभवति 'ते' तव शरीरमेव जरादिभिरभिभूयमानतयाऽनुकम्पनीयमिति शरीरकं, यद्वा 'परिजूरइ'त्ति 'निन्देर्जूरः' इति प्राकृतलक्षणात् परिनिन्दतीवाऽऽत्मानमिति गम्यते, यथा—धिग्मां कीदृशं जातमिति, किमिति ?—यतः 'केशाः' शिरसिजाः, उपलक्षणत्वात् लोमानि च पाण्डुरा एव पाण्डुरकाः भवन्ति, पूर्वं जननयनहारिणोऽत्यन्तकृष्णाः सम्प्रति शुक्लतां भजन्ते 'ते' तव, पुनस्तेशब्दोपादानं भिन्नवाक्यत्वात् उपदेशाधिकारत्वाच्चादुष्टम्, एवमुत्तरत्रापि, तथा 'से' इति तत् यत् पूर्वमासीत् श्रोत्रयोः—कर्णयोर्बलं—दूरादिशब्दश्रवणसामर्थ्यं श्रोत्रबलं, 'च' समुच्चये, 'हीयते' जरातः क्षयमुपैति, यद्वा—शरीरजीर्णताऽवस्थाभाव्येतद्द्वयमपि योज्यं, यथा—परिजीर्यते शरीरकं तथा च सति केशाः पाण्डुरकाः भवन्ति 'से' इत्यथ श्रोत्रबलं हीयते यतः ततः शरीरस्य तत्सामर्थ्यस्य चास्थिरत्वात् समयमपि गौतम ! मा प्रमादीः । एवं सूत्रपञ्चकमपि नेयं । नवरमिह प्रथमतः श्रोत्रोपादानं प्रधानत्वात्, प्रधानत्वं च तस्मिन् सति शेषेन्द्रियाणामवश्यं भावात् पटुतरक्षयोपश-

करणं धनौघसञ्चयस्तं च, मा 'तदिति' मित्रादिकं, द्वितीयं, पुनर्ग्रहणार्थमिति गम्यते, 'गवेषय' अन्वेषय, तत्परित्यागात् श्रामण्यमङ्गीकृत्य पुनस्तदभिष्वङ्गवान् मा भूः, त्यक्तं हि तद्वान्तोपमं तदभिष्वङ्गश्च वान्ताऽऽपानप्राय इत्यभिप्रायः, किन्तु समयमपि गौतम! मा प्रमादीरिति सूत्रार्थः॥ इत्थं प्रतिबन्धनिराकरणार्थमभिधाय दर्शनविशुद्ध्यर्थमिदमाह—

ण हु जिणे अज्ज दीसइ, बहुमए दीसइ मग्गदेसिए। संपइ नेआउए पहे, समयं० ॥ ३१ ॥

व्याख्या—'न हु' नैव 'जिनः' तीर्थकृद् 'अद्य' अस्मिन् काले 'दृश्यते' अवलोक्यते, यद्यपीति गम्यते, तथापि 'बहुमए'त्ति पन्थाः, स च द्रव्यतो नगरादिमार्गः, भावतस्तु सातिशयश्रुतज्ञानदर्शनचारित्रात्मको मुक्तिमार्गः, तत्रेह भावमार्गः परिगृह्यते, 'दृश्यते' उपलभ्यते 'मग्गदेसिय'त्ति भावप्रधानत्वान्निर्देशस्य मार्गत्वेन अर्थान्मुक्तेर्देशितो—जिनैः कथितो मार्गदेशितः, अयमाशयः—यद्यपि सम्प्रति जिनो न दृश्यते तदुपदिष्टस्तु मार्गो दृश्यते, न चैवंविधोऽयमतीन्द्रियार्थदर्शिनं जिनं विना सम्भवति इत्यसन्दिग्धचेतसो भाविनोऽपि भव्या न प्रमादं विधास्यन्तीति, अतः 'सम्प्रति' इदानीं सत्यपि मयीति भावः, 'नैयायिके' निश्चितमुक्त्याख्यलाभप्रयोजने 'पथि' मार्गे समयमपि गौतम! केवलानुत्पत्तितः संशयविधानेन मा प्रमादीः, यद्वा—त्रिकालविषयत्वात् सूत्रस्य भाविभव्योपदेशकमप्येतत्, ततोऽयमर्थः—यथाऽऽद्यमार्गोपदेशकं नगरं चापश्यन्तोऽपि पन्थानमवलोकयन्तस्तस्याविच्छिन्नोपदेशतस्तत्प्रापकत्वं निश्चिन्वन्ति तथा यद्यप्यद्य जिन उपलक्षणत्वान्मोक्षश्च नैव दृश्यते तथाऽपि तद्देशितः

शारद, चेत्युपमार्थो भिन्नक्रमश्च प्राग् योजित 'पानीय' जल, यथा तत् प्रथम जलमग्नमपि जलमपहाय वर्तते तथा त्वमपि चिरसंसृष्टचिरपरिचितत्वादिभिर्मद्विषयस्नेहवशगोऽपि तमपनय, अपनीय च 'से' इत्यथानन्तर सर्वस्नेहवर्जित सन् समयमपि गौतम! मा प्रमादी । इह च जलमपहायैतावति सिद्धे यच्छारदशब्दोपादान तच्छारदजलस्येव स्नेहस्याप्यतिमनोरमत्वख्यापनार्थमिति सूत्रार्थ ॥ किञ्च—

चिच्चा ण धण च भारिय, पव्वइओ हि सि अणगारिय । मा वत पुणोवि आविए, समय० ॥ २९ ॥

व्याख्या—'त्यक्त्वा' परिहृत्य 'ण' इति वाक्यालङ्कारे 'धन' चतुष्पदादि चशब्दो भिन्नक्रम, ततो 'भार्या च' कलत्र च 'प्रव्रजित' गृहान्निष्क्रान्त 'हि' इति यस्मात् 'सी'ति सूत्रत्वेनाकारलोपात् 'असि' भवसि 'अणगारिय'ति अनगारेषु—भावभिक्षुषु भवमानगारिकमनुष्ठान, चस्य गम्यमानत्वात् तच प्रतिपन्नवानसीति शेष, यद्वा प्रव्रजित—प्रतिपन्न 'अणगारिय'ति अनगारिताम्, अतो 'मा' इति निषेधे, 'वान्तम्' उद्गीर्ण 'पुणोवि'त्ति पुनरपि 'आविए'त्ति आपिब, किन्तु समयमपि गौतम! मा प्रमादीरिति सूत्रार्थ ॥ कथ च वान्ताऽऽपान न भवतीत्याह—

अवउज्झिय मित्तबन्धव, विउल चेव धणोहसञ्चय । मा त बिइय गवेसए, समय० ॥ ३० ॥

व्याख्या—'अपोह्य' त्यक्त्वा, मित्राणि च—सुहृदो बान्धवाश्च—स्वजना इति समाहारे मित्रबान्धव, 'विपुल' विस्तीर्ण 'च' समुच्चये भिन्नक्रमश्च 'एव' इति पूरणे, ततो धन—कनकादिद्रव्य, तस्यौघ—समूहस्तस्य सञ्चयो—राशी-

व्याख्या—'अबलः' अविद्यमानशरीरसामर्थ्यः 'यथा' इत्यौपम्ये भारं वहतीति भारवाहकः 'मा' निषेधे 'मग्गे' त्ति मार्गे 'विसमे'त्ति विषमं मन्दसत्त्वैरतिदुस्तरम् 'अवगाहिय'त्ति अवगाह्य प्रविश्य, त्यक्ताङ्गीकृतभारः सन्निति गम्यते, 'पश्चात्' तत्कालानन्तरं 'पश्चादनुतापकः' पश्चात्तापकृत्, भूरिति शेषः, इदमुक्तं भवति—यथा कश्चिद्देशान्तरगतो बहुभिरुपायैः स्वर्णादिकमुपार्ज्य स्वगृहाभिमुखमागच्छन्नतिभीरुतयाऽन्यवस्त्वन्तर्हितं स्वर्णादिकं स्वशिरस्यारोप्य कतिचिद्दिनानि सम्यगुद्वहति, अनन्तरं च क्वचिदुपलादिसङ्कुले पथि अहो ! अहमनेन भारेणाऽऽक्रान्त इति तमुत्सृज्य स्वगृहमागतः अत्यन्तनिर्धनतयाऽनुतप्यते—किं मया मन्दभाग्येन तत्परित्यक्तमिति ?, एवं त्वमपि प्रमादपरतया त्यक्तसंयमभारः सन्नेवंविधो मा भूः, किन्तु समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ वहिदमद्यापि निस्तरणीयमल्पं च निस्तीर्णमित्यभिसन्धिनोत्साहभङ्गोऽपि स्यादिति तदपनोदायाह—

तिण्णो हु सि अण्णवं महं, किं पुण चिट्ठसि तीरमागओ ?। अभितुर पारं गमित्तए, समयं० ॥ ३४ ॥

व्याख्या—'तिण्णो हु सि'त्ति तीर्ण एवासि, अर्णवमिवार्णवं 'महं'ति महान्तं गुरुं, किमिति प्रश्ने पुनरिति वाक्योपन्यासे, ततः किं पुनस्तिष्ठसि ?, 'तीरं' पारम् 'आगतः' प्राप्तः, किमुक्तं भवति ?—भव उत्कृष्टस्थितीनि वा कर्माणि भावतोऽर्णव इत्युच्यते, स च द्विविधोऽपि त्वयोत्तीर्णप्राय एव इति केन हेतुना तीरप्राप्तोऽप्यौदासीन्यं भजसे ?, नैवेदं तवोचितमित्याशयः। किन्तु 'अभितुर'त्ति अभि—आभिमुख्येन त्वरस्व-शीघ्रो भव, 'पारं' परतीरं भावतो मुक्तिपदं 'गमि-

पन्था–मार्ग्यमाणत्वात् मार्गो–मोक्षस्तस्य 'देसिय'त्ति सूत्रत्वादेशको मार्गदेशको दृश्यते, ततस्तस्यापि तत्प्रापकत्वं मामपश्यद्भिरपि भाविभव्यैर्निश्चेतव्य, यतश्चैन भाविभव्यानामुपदिश्यते अत सम्प्रतीत्यादि प्राग्वत्, द्विविधाऽपि तावदित्थ व्याख्या सूचकत्वात् सूत्रस्येति गाथार्थं ॥ अत्रैवार्थे पुनरुपदिशन्नाह—

अवसोहिय कंटगापह, ओइन्नोऽसि पह महालय। गच्छसि मग्ग विसोहिया, समय० ॥ ३२ ॥

व्याख्या—'अवसोहिय'त्ति अवशोध्य–अपसार्य पृथक्कृत्य परिहृत्येतियावत्, कम् ?–'कंटयापह'ति आकारोऽलाक्षणिक, कण्टकाश्च द्रव्यतो बब्बूलकण्टकादय भावतस्तु चरकादिकुश्रुतयस्तैराकुल पन्था कण्टकपथस्त, ततश्च 'अवतीर्णोऽसि' अनुप्रविष्टो भवसि 'पह'ति पन्थान 'महालय'ति महान्त महता वाऽऽलय–आश्रयो महालय, स च द्रव्यतो राजमार्ग भावतस्तु महद्भिस्तीर्थङ्करादिभिरप्याश्रित सम्यग्दर्शनादिमुक्तिमार्गस्त, कश्चिदवतीर्णोऽपि मार्ग न गच्छेत् अत आह–'गच्छसि'–यासि मार्ग, न पुनरवस्थित एवासि, सम्यग्दर्शनाद्यनुपालनेन मुक्तिमार्गगमनप्रवृत्तत्वाद्भवत, तत्राप्यनिश्चयेऽपायप्राप्तिरेव स्यात् इत्याह–'विशोध्य' इति विनिश्चित्य, तदेव प्रवृत्त सन् समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थ ॥ एव च पूर्वेण दर्शनविशुद्धिमनेन च मार्गप्रतिपत्तिमभिधाय तत्प्रतिपत्तावपि कस्यचिदनुतापसम्भव इति तन्निराचिकीर्षयाऽऽह—

अबले जह भारवाहए, मा मग्गे विसमेऽवगाहिया। पच्छा पच्छाणुतावए, समय० ॥ ३३ ॥

वस्व, संयममिति शेषः, 'गाम'त्ति सुपो लोपात् ग्रामे 'गतः' स्थितो नगरे वा, उपलक्षणत्वादरण्यादिषु वा, किमुक्तं भवति ?–सर्वस्मिन्ननभिष्वङ्गवान्, सम्यग् यतः–पापस्थानेभ्य उपरतः संयतः, शाम्यन्त्यस्यां सर्वदुरितानीति शान्तिः–निर्वाणं तस्या मार्गः–पन्थाः, यद्वा शान्तिः–उपशमः सैव मुक्तिहेतुतया मार्गः शान्तिमार्गो, दशविधधर्मोपलक्षणं शान्तिग्रहणं, चशब्दो भिन्नक्रमः, ततो बृंहयेश्च–भव्यजनप्ररूपणया वृद्धिं नयेः, ततः समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ इत्थं भगवदभिहितमिदमाकर्ण्य गौतमो यत् कृतवांस्तदाह—

बुद्धस्स निसम्म भासियं, सुकहियमट्ठपदोवसोहियं ।
रागं दोसं च छिंदिया, सिद्धिगइं गए गोयमे ॥ ३७ ॥ त्तिबेमि ॥

व्याख्या—'बुद्धस्स' केवलालोकावलोकितसमस्तवस्तुतत्त्वस्य प्रक्रमाच्छ्रीमन्महावीरस्य 'निशम्य' आकर्ण्य 'भाषितम्' उक्तं, सुष्ठु–शोभनेन नयानुगतत्वादिना प्रकारेण कथितं—प्रबन्धेन प्रतिपादितं सुकथितम्, अत एवार्थप्रधानानि पदानि अर्थपदानि तैरुपशोभितं–जातशोभमर्थपदोपशोभितं 'रागं' विषयाद्यभिष्वङ्गं 'द्वेषम्' अपकारिण्यप्रीतिलक्षणं 'चः' समुच्चये 'छित्त्वा' अपनीय 'सिद्धिगतिं' मुक्तिगतिं 'गतः' प्राप्तः 'गौतमः' इन्द्रभूतिनामा भगवत्प्रथमगणधर इति सूत्रार्थः ॥ 'इतिः' परिसमाप्तौ 'ब्रवीमि' इति पूर्ववत्, इत्युक्तोऽनुगमः, सम्प्रति नयाः, ते च पूर्ववदिति श्रीशान्त्याचार्यविरचितायां शिष्यहितायामुत्तराध्ययनटीकायां दशममध्ययनं समाप्तं ॥

त्तए'त्ति गन्तुम्, अतश्च समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थः ॥ अथापि स्यात्–मम पारप्राप्तियोग्यतैव न समस्ति, अत आह–अथवा शेषशिष्यापेक्षया किमस्याप्रमादस्य फलम्? यत्पुन पुनरयमुपदिश्यते इत्याह—

अकलेवरसेणिमूसिया, सिद्धिं गोयम ! लोय ( य ) गच्छसि । खेम च सिव अणुत्तर, समय० ॥ ३५ ॥

व्याख्या—कलेवर–शरीरम् अविद्यमान कडेवरमेषामकडेवरा –सिद्धास्तेषा श्रेणिरिव श्रेणिर्ययोत्तरोत्तरशुभपरिणामप्राप्तिरूपया ते सिद्धिपदमारोहन्ति(ता), क्षपकश्रेणिमित्यर्थ । यद्वा कडेवराणि–एकेन्द्रियशरीराणि तन्मयत्वेन तेषा श्रेणि कडेवरश्रेणि –वशादिविरचिता प्रासादादिष्वारोहणहेतु , तथा च या न सा अकडेवरश्रेणि –अनन्तरोक्तरूपैव ताम् 'उस्सिय'त्ति उत्सृता, गमिष्यसीति सम्बन्ध , यद्वा 'उस्सिय'त्ति उच्छ्रयेणोच्छ्रित्य–उत्तरोत्तरसयमस्थानावाप्त्या तामुच्छ्रितामिव कृत्वा 'सिद्धिम्' इति सिद्धिनामान 'गोयम ! लोय गच्छसि' त्ति प्राग्वल्लोक गमिष्यसि, सशयव्यवच्छेदफलत्वाचास्य गमिष्यस्येव, 'क्षेम' परचक्राद्युपद्रवरहितं 'च ' समुच्चये भिन्नक्रमश्च, 'शिवमनुत्तर' च तत्र शिवमशेषदुरितोपशमेन अनुत्तर नास्योत्तरमन्यत् प्रधानमस्तीत्यनुत्तर, सर्वोत्कृष्टमित्यर्थ., यतश्चैव तत समयमपि गौतम ! मा प्रमादीरिति सूत्रार्थ ॥ ३६ ॥ सम्प्रति निगमयन्नुपदेशसर्वस्वमाह—

बुद्धे परिणिव्वुए चरे, गाम गए नगरे व सजए । सतिमग्ग च बूहए, समय० ॥ ३६ ॥

व्याख्या—'बुद्ध ' अवगतहेयादिविभाग 'परिनिर्वृत.' कषायाद्युपशमत समन्तात् शीतीभूत 'चरेः' आसे-

भावबहुएण बहुगा चउदस पुव्वा अणंतगमजुत्ता। भावे खओवसमिए खइयंमि य केवलं नाणं ॥ ३११ ॥

व्याख्या—'भावबहुगेणं'ति प्राग्वत् भावबहुत्वेन 'बहुग'त्ति बहुकानि 'चतुर्देश' चतुर्दशसङ्ख्यानि 'पुव्व'त्ति पूर्वाण्युत्पादपूर्वादीनि 'अणंतगमजुत्त'त्ति अनन्ता—अपर्यवसिता गम्यते वस्तुस्वरूपमेभिरिति गमा—वस्तुपरिच्छेदप्रकाराः नामादयस्तैर्युक्तानि—अन्वितान्यनन्तगमयुक्तानि, पर्यायाद्युपलक्षणं च गमग्रहणम्, उक्तं हि—"[1]अणंता गमा अणंता पज्जवा अणंता हेतू' इत्यादि, अनेनैतदात्मकत्वात् पूर्वाणां तेषामप्यानन्त्यमुक्तं, क पुनरमूनि भावे वर्तन्ते येन भावबहून्युच्यन्ते इत्याह—'भाव' इत्यात्मपर्याये क्षायोपशमिके चतुर्दश पूर्वाणि वर्तन्ते इति प्रक्रमः, आह—किं न क्षायिके भावे किञ्चिज्ज्ञानबहु ?, अस्तीत्याह—'क्षायिके च' कर्मक्षयादुत्पन्ने पुनः केवलज्ञानम्, अनन्तपर्यायत्वात्, तदपि भावबहुकमिति गाथार्थः ॥ उक्तं बहु, सम्प्रति सूत्रं श्रुतं वाऽऽह—

दव्वसुय पोंडयाइ अहवा लिहियं तु पुत्थयाईसुं । भावसुयं पुण दुविहं सम्मसुयं चेव मिच्छसुयं ३१२

व्याख्या—'दव्वसुय'त्ति अनुस्वारलोपात् द्रव्यसूत्रं द्रव्यश्रुतं च, तत्राऽऽद्यं पुण्डजादि, द्वितीयमाह—'अथवा' इति पक्षान्तरसूचकः, ततो द्रव्यश्रुतं 'लिखितम्' अक्षररूपतया न्यस्तं पुस्तकादिषु, तुशब्दाद् भाष्यमाणं वा द्रव्यश्रुतमुच्यते,

[1] अनन्ता गमा अनन्ताः पर्यवा अनन्ता हेतवः ।

## अथ बहुश्रुतपूजाख्यमेकादशमध्ययनम् ।

उक्त दशममध्ययन, साम्प्रतमेकादशमारभ्यते, अस्य चायमभिसम्बन्ध —इहानन्तराध्ययनेऽप्रमादार्थमनुशासनमुक्त, तच्च विवेकिनैव भावयितु शक्य, विवेकश्च बहुश्रुतपूजात उपजायत इति बहुश्रुतपूजोच्यते इत्यनेन सम्बन्धेनाऽऽयातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि प्ररूपयितव्यानि, यावन्नामनिष्पन्ने निक्षेपे 'बहुसूत्रपूजा बहुश्रुतपूजे'ति वा नाम, अतस्तन्निक्षेपप्रतिपिपादयिषयेदमाह निर्युक्तिकृत्—

बहु सुए पूजाए य तिण्हपि चउक्कओ य निक्खेवो । दव्वबहुगेण बहुगा जीवा तह पुग्गला चेव ॥३१०॥

व्याख्या—'बहु'त्ति बहो 'सुए'त्ति शतमुपत्वात् प्राकृतस्य सूत्रस्य श्रुतस्य वा 'पुयाए य'त्ति पूजायाश्च 'त्रयाणामपि' अमीषा पदाना 'चतुष्कस्तु' चतुष्परिमाण एव 'निक्षेप' न्यास, स च नामादि, तत्र नामस्थापने क्षुण्णे, द्रव्यतस्तु बहभिधातुमाह—'दव्वबहुएग'त्ति आर्षत्वात् द्रव्यतो बहुत्व द्रव्यबहुत्व तेन 'बहुका' प्रभूता 'जीवा' उपयोगलक्षणा, तथा 'पुद्गला' स्पर्शादिलक्षणा, चशब्द पुद्गलाना जीवापेक्षया बहुतरत्व ख्यापयति, ते ह्येकैकस्मिन् ससारिजीवप्रदेशेऽनन्तानन्ता एव सन्ति, 'एव' अवधारणे, जीवपुद्गला एव द्रव्यबहव, तत्र धर्माधर्माऽऽकाशानामेकद्रव्यत्वात् कालस्यापि तत्त्वत समयरूपत्वेन बहुत्वाभावादिति गाथार्थ ॥

ईसरतलवरमाडंबिआण सिवइंदखंदविण्हूणं । जा किर कीरइ पूआ सा पूआ दव्वओ होइ ॥ ३१५ ॥

व्याख्या—ईश्वरश्च–द्रव्यपतिः तलवरश्च–प्रभुस्थानीयो नगरादिचिन्तकः मडम्बं–जलदुर्गं तस्मिन् भवो माडम्बिकः–तद्भोक्ता स च ईश्वरतलवरमाडम्बिकास्तेषां, तथा शिवश्च–शम्भुः इन्द्रश्च–पुरन्दरः स्कन्दश्च–स्वामिकार्तिकेयः विष्णुश्च–वासुदेवः शिवेन्द्रस्कन्दविष्णवस्तेषां, या किल क्रियते पूजा सा पूजा 'द्रव्यतः' द्रव्यनिक्षेपमाश्रित्य भवति, द्रव्यपूजेति योऽर्थः, किलशब्दस्त्विहापारमार्थिकत्वख्यापकः, द्रव्यतोऽपि हि भावपूजाहेतुरेव पूजोच्यते, इयं तु द्रव्यार्थमप्रधाना वा पूजेति द्रव्यपूजा, अतोऽपारमार्थिक्येव, एतदभिधानं तु द्रव्यशब्दस्यानेकार्थत्वसूचकमिति गाथार्थः ॥ भावपूजामाह—

तित्थयरकेवलीणं सिद्धायरिआण सव्वसाहूणं । जा किर कीरइ पूआ सा पूआ भावओ होइ ॥ ३१६ ॥

व्याख्या—तीर्थङ्कराश्च–अर्हन्तः केवलिनश्च–सामान्येनैवोत्पन्नकेवलाः तीर्थकरकेवलिनस्तेषां, 'सिद्धाचार्याणां' प्रतीतानां, तथा सर्वसाधूनां, का ?–या किल 'क्रियते' विधीयते पूजा सा पूजा 'भावतः' भावनिक्षेपमाश्रित्य भवति, किलशब्दः परोक्षाप्तवादसूचकः, तीर्थङ्करादिपूजा हि सर्वाऽपि क्षायोपशमिकादिभाववर्तिन एव भवतीति भावपूजैव, यत्तु पुष्पादिपूजाया द्रव्यस्तवत्वमुक्तं तद् द्रव्यैः–पुष्पादिभिः स्तव इति व्युत्पत्तिमाश्रित्य सम्पूर्णभावस्तवकारणत्वेन वेति गाथार्थः ॥ सम्प्रति प्रस्तुतोपयोग्याह—

भावश्रुत पुन 'द्विविध' द्विभेद 'सम्यक्श्रुत चैव' इति प्राग्वत् ततो मिथ्याश्रुत चेति गाथार्थ ॥ एतत्सरूपमाह—

भवसिद्धिया उ जीवा सम्मद्दिट्ठी उ ज अहिज्जति । त सम्मसुएण सुय कम्मट्ठविहस्स सोहिकर ३१३

मिच्छदिट्ठी जीवा अभवसिद्धी य ज अहिज्जति । त मिच्छसुएण सुय कम्मादाण च त भणिय ॥ ३१४ ॥

व्याख्या—भवे भव्या वा सिद्धिरेषामिति भवसिद्धिका भव्यसिद्धिका वा, 'तु' अवधारणे, एत एव 'जीवा' प्राणिन , तेऽपि 'सम्मद्दिट्ठी उ'त्ति सम्यग्दृष्टय एव 'यत्' इति श्रुतम् 'अधीयते' पठन्ति 'त सम्मसुएण'त्ति सम्यक्श्रुतशब्देन 'श्रुतम्' इति प्रक्रमाद् भावश्रुतम्, उच्यते इति शेष । आह—भाष्यमाणत्वेनास्य कथ न द्रव्यश्रुतत्वम् ?, उच्यते, अनेनैतज्जनित उपयोग एवोपलक्षित इति न दोष , एवमन्यत्रापि भावनीय । तन्माहात्म्यमाह—'कम्मट्ठविहस्स'त्ति अष्टविधकर्मण 'शुद्धिकरम्' अपनयनकर्तृ ॥ मिथ्याश्रुतमाह—मिथ्यादृष्टयो जीवा , भव्या इति गम्यते, 'अभव्यसिद्धयश्च' अभव्या यदधीयते तत् 'मिथ्याश्रुतेन' मिथ्याश्रुतशब्देन 'श्रुतम्' इतीहापि भावश्रुत भणितमिति सम्बन्ध , कर्म्म—ज्ञानावरणादि आदीयते—स्वीक्रियतेऽनेन जन्तुभिरिति कम्मादान—कर्मोपादानहेतु , 'च' समुच्चये, 'तत्' श्रुत 'भणितम्' उक्तमिति गाथाद्वयार्थ ॥ इदानी पूजा, साऽपि नामादिभेदतश्चतुर्धैव, तत्राऽऽद्ये सुगमे, द्रव्यपूजामाह—

प्रक्रान्ता, सा च बहुश्रुतस्वरूपपरिज्ञान एव कर्तुं शक्या, बहुश्रुतस्वरूपं च तद्विपर्ययपरिज्ञाने तद्विविक्तं सुखेनैव ज्ञायत इत्यबहुश्रुतस्वरूपमाह—

जे यावि होइ निव्विज्जे, थद्धे लुद्धे अनिग्गहे । अभिक्खणं उल्लवई, अविणीए अबहुस्सुए ॥ २ ॥

व्याख्या—'जे यावि'त्ति यः कश्चित्, चापिशब्दौ भिन्नक्रमावुत्तरत्र योक्ष्येते, 'भवति' जायते निर्गतो विद्यायाः—सम्यक्शास्त्रावगमरूपायाः निर्विद्यः, अपिशब्दसम्बन्धात् सविद्योऽपि, यः 'स्तब्धः' अहङ्कारी 'लुब्धः' रसादिगृद्धिमान्, न विद्यते इन्द्रियनिग्रहः—इन्द्रियनियमनात्मकोऽस्येति अनिग्रहः 'अभीक्ष्णं' पुनः पुनः उत्—प्राबल्येनासम्बद्धभाषितादिरूपेण लपति—वक्ति उल्लपति 'अविनीतश्च' विनयविरहितः 'अबहुस्सुए'त्ति यत्तदोर्नित्याभिसम्बन्धात् सोऽबहुश्रुतः, उच्यते इति शेषः, सविद्यस्याप्यबहुश्रुतत्वं बाहुश्रुत्यफलाभावादिति भावनीयम्, एतद्विपरीतस्त्वर्थाद् बहुश्रुत इति सूत्रार्थः ॥ कुतः पुनरीदृशमबहुश्रुतत्वं बहुश्रुतत्वं वा लभ्यत इत्याह—

अह पंचहिं ठाणेहिं, जेहिं सिक्खा ण लब्भइ । थंभा कोहा पमाएणं, रोगेणालस्सेण य ॥ ३ ॥

अह अट्ठहिं ठाणेहिं, सिक्खासीलेत्ति वुच्चइ । अहस्सिरे सयादंते, न य मम्ममुयाहरे ॥ ४ ॥

नासीले ण विसीले, ण सिया अइलोलुए । अकोहणे सच्चरए, सिक्खासीलेत्ति वुच्चइ ॥ ५ ॥

'अथ' इत्युपन्यासार्थः 'पञ्चभिः' पञ्चसङ्ख्यैः तिष्ठन्त्येषु कर्मवशगा जन्तव इति स्थानानि तैः, 'यैः' इति वक्ष्य-

जे किर चउदसपुव्वी सव्वक्खरसन्निवाइणो निउणा। जा तेसि पूया खलु सा भावे ताइ अहिगारो ३१७

व्याख्या—'ये' प्राग्वत् 'किल' इति वाक्यालङ्कारे 'चतुर्दशपूर्विण' चतुर्दशपूर्वधरा सर्वाणि—समस्तानि या-न्यक्षराणि—अकारादीनि तेषा सन्निपातन—तत्तदर्थाभिधायकतया साङ्गत्येन घटनाकरण सर्वाक्षरसन्निपात स विद्यते अधिगमविषयतया येषा तेऽमी सर्वाक्षरसन्निपातिन 'निपुणा' कुशला, या 'तेषा' चतुर्दशपूर्विणा 'पूजा' उचितप्रतिपत्तिरूपा, उपलक्षण चेय शेषबहुश्रुतपूजाया, प्राधान्याचासा एवोपादान, 'खलु' निश्चित, सा 'भावे' भावविषया, 'तया' बहुश्रुतपूजालक्षणया भावपूजया इह 'अधिकार' प्रकृतमिति गाथार्थ ॥ इत्युक्तो नामनिष्पन्न-निक्षेप, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

सजोगा विप्पमुक्कस्स, अणगारस्स भिक्खुणो। आयार पाउक्करिस्सामि, आणुपुव्विं सुणेह मे ॥ १ ॥

व्याख्या—सयोगाद्विप्रमुक्तस्यानगारस्य भिक्षो आचरणमाचार —उचितक्रिया विनय इतियावत्, तथा च वृद्धा — 'आयारोत्ति वा विणओत्ति वा एगट्ठ'त्ति स चेह बहुश्रुतपूजात्मक एव गृह्यते, तस्या एवात्राधिकृतत्वात्, तं 'प्रादुष्करिष्यामि' प्रकटयिष्यामि आनुपूर्व्या, शृणुत 'मे' मम कथयत इति शेष इति सूत्रार्थ ॥ इह च बहुश्रुतपूजा

१ आयार इति वा विनय इति वा एकार्थौ।

किञ्च—अवहुश्रुतत्वे वहुश्रुतत्वे वाऽविनयो विनयश्च मूलकारणं, तत्त्वत उक्तहेतूनामप्यनयोरेवान्तर्भावात्, न च अविनीतविनीतयोः स्वरूपमविज्ञाय तौ ज्ञातुं शक्याविति यैः स्थानैरविनीत उच्यते यैश्च विनीतस्तान्यभिधातुमाह—

अह चोद्दसहिं ठाणेहिं, वट्टमाणो उ संजए । अविणीए वुच्चती सो उ, णिव्वाणं च ण गच्छइ ॥ ६ ॥
अभिक्खणं कोही भवइ, पबंधं च पकुव्वइ । मित्तिज्जमाणो वमति, सुयं लद्धूण मज्जइ ॥ ७ ॥
अवि पावपरिक्खेवी, अवि मित्तेसु कुप्पति । सुप्पियस्सावि मित्तस्स, रहे भासइ पावगं ॥ ८ ॥
पइण्णवाई दुहिले, थद्धे लुद्धे अनिग्गहे । असंविभागी अचियत्ते, अविणीएत्ति वुच्चइ ॥ ९ ॥
अह पन्नरसहिं ठाणेहिं, सुविणीएत्ति वुच्चइ । नीयावित्ती अचवले, अमाई अकुऊहले ॥ १० ॥
अप्पं च अहिक्खिवति, पबंधं च ण कुव्वइ । मित्तिज्जमाणो भजति, सुयं लद्धुं न मज्जति ॥ ११ ॥
न य पावपरिक्खेवी, न य मित्तेसु कुप्पति । अप्पियस्सावि मित्तस्स, रहे कल्लाण भासइ ॥ १२ ॥
कलहडमरवज्जए, बुद्धे (अ) अभिआइए । हिरिमं पडिसंलीणो, सुविणीएत्ति वुच्चइ ॥ १३ ॥

व्याख्या—'अथ' इति प्राग्वत्, चतुर्भिरधिका दश चतुर्दश तेषु चतुर्दशसङ्ख्येषु स्थानेषु, सूत्रे तु सुब्व्यत्ययेन सप्तम्यर्थे तृतीया, 'वर्तमानः' तिष्ठन् 'तुः' पूरणे 'संयतः' तपस्वी, अविनीत उच्यते, 'स तु' इत्यविनीतः पुनः, किमित्याह—'निर्वाणं च' मोक्षं, चशब्दादिहैव ज्ञानादींश्च 'न गच्छति' न प्राप्नोति ॥ कानि पुनश्चतुर्दश स्थानानी-

माणैर्हेतुभि –शिक्षण क्षिक्षा–ग्रहणासेवनात्मिका 'न लभ्यते' नावाप्यते, तैरीदृशमबहुश्रुतत्वमवाप्यत इति शेष, कै पुन सा न लभ्यते ? इत्याह–'स्तम्भात्' मानात् 'क्रोधात्' कोपात् 'प्रमादेन' मद्यविषयादिना 'रोगेण' गलत्कुष्ठादिना 'आलस्येन' अनुत्साहात्मना, शिक्षा न लभ्यत इति प्रक्रम, च समस्ताना व्यस्ताना च हेतुत्वमेषा द्योतयति ॥ इत्थमबहुश्रुतत्वहेतूनभिधाय बहुश्रुतत्वहेतूनाह–अथाष्टभि स्थानै शिक्षाया शील–स्वभावो यस्य शिक्षा वा शीलयति–अभ्यस्यतीति शिक्षाशील –द्विविधशिक्षाभ्यासकृद्, इतिशब्द स्वरूपपरामर्शक, उच्यते तीर्थकृद्गणधरादिभिरिति गम्यते, तान्येवाह–'अहस्सिरे'त्ति "तृन इर" इति प्राकृतलक्षणादहसनशील अहसिता–न सहेतुकमहेतुक वा हसन्नेवास्ते,'सदा' सर्वकाल 'दान्त 'इन्द्रियनोइन्द्रियदमवान्,'न च' नैव 'मर्म'परापभ्राजनाकारि कुत्सित जात्यादि 'उदाहरेत्' उद्घट्टयेत्। 'न' नैव 'अशील' अविद्यमानशील, सर्वथा विनष्टचारित्रधर्म इत्यर्थ, न 'विशील' विरूपशील, अतीचारकलुषितव्रत इतियावत्, 'न स्यात्' न भवेद्, इह पूर्वत्र च सम्भावने लिङ्, 'अतिलोलुप' अतीव रसलम्पट, 'अक्रोधन' अपराधिन्यनपराधिनि वा न कथञ्चित् क्रुध्यति, सत्यम्–अवितथभाषण तस्मिन् रत –आसक्त सत्यरत इति, निगमयितुमाह–शिक्षाशील 'इति' इत्यनन्तरोक्तगुणभाग् उच्यते, स च बहुश्रुत एव भवतीति भाव । इह च स्थानप्रक्रमेऽप्येवमभिधान धर्मधर्मिणो कथञ्चिदनन्यत्वख्यापनार्थ, विशेषाभिधायित्वाच्च क्वचित् केषाञ्चिदन्तर्भावसम्भवेऽपि पृथगुपादान, परिहारद्वयमपीदमुत्तरत्रापि भावनीयमिति सूत्रत्रयार्थ ॥

सेवकोऽयमित्यादिकमनाचारमेवाविष्करोति । तथा प्रकीर्णम्—इतस्ततो विक्षिप्तम्, असम्बद्धमित्यर्थः, वदति—जल्पतीत्येवंशीलः प्रकीर्णवादी, वस्तुतत्त्वविचारेऽपि यत्किञ्चनवादीत्यर्थः, अथवा—यः पात्रमिदमपात्रमिदमिति वाऽपरीक्ष्यैव कथञ्चिदधिगतं श्रुतरहस्यं वदतीत्येवंशीलः प्रकीर्णवादी इति, प्रतिज्ञया वा—इदमित्थमेव इत्येकान्ताभ्युपगमरूपया वदनशीलः प्रतिज्ञावादी, तथा 'दुहिल'त्ति द्रोहणशीलो—द्रोग्धा, न मित्रमप्यनभिद्रुह्यास्ते, तथा 'स्तब्धः' तपस्व्यहमित्याद्यहङ्कृतिमान्, तथा 'लुब्धः' अन्नादिष्वभिकाङ्क्षावान्, तथा 'अनिग्रहः' प्राग्वत्, तथाऽसंविभजनशीलः असंविभागी, नाऽऽहारादिकमवाप्यातिगर्द्धनोऽन्यस्मै स्वल्पमपि यच्छति, किन्त्वात्मानमेव पोषयति, तथा 'अचियत्ते'त्ति अप्रीतिकरः—दृश्यमानः सम्भाष्यमाणो वा सर्वस्याप्रीतिमेवोत्पादयति, एवंविधदोषान्वितः अविनीत उच्यते इति निगमनम् । इत्थमविनीतस्थानान्यभिधाय विनीतस्थानान्याह—अथ पञ्चदशभिः स्थानैः सुष्ठु—शोभनो विनीतो—विनयान्वितः सुविनीत इत्युच्यते, तान्येवाह—'नीयावित्ति'त्ति नीचम्—अनुद्धतं यथा भवत्येवं नीचेषु वा शय्यादिषु वर्तेत इत्येवंशीलो नीचवर्ती—गुरुषु न्यग्वृत्तिमान्, यथाऽऽह—"नीयं सेज्जं गइं ठाणं, णियं च आसणाणि य । णियं च पाय वंदेज्जा, णीयं कुज्जा य अंजलिं ॥१॥" 'अचपलः' नाऽऽरब्धकार्यं प्रत्यस्थिरः, अथवाऽचपलो—गतिस्थानभाषाभावभेदतश्चतुर्धा, तत्र—गतिचपलः—द्रुतचारी, स्थानचपलः—तिष्ठन्नपि चलन्नेवास्ते

१ नीचां शय्यां गतिं स्थानं नीचानि चासनानि च । नीचं पादौ वन्देत नीचं च कुर्याच्चाञ्जलिम् ॥ १ ॥

त्याह–'अभीक्ष्ण' पुन पुन , यद्वा–क्षण क्षणमभि अभिक्षणम्–अनवरत 'क्रोधी' क्रोधन भवति, सनिमित्तमनिमित्त वा कुप्यन्नेवास्ते, 'प्रबन्ध च' प्रकृतत्वात् कोपस्यैवाविच्छेदात्मक 'पकुव्वइ'त्ति प्रकर्षेण कुरुते, कुपित सन् सान्त्वनैरनेकैरपि नोपशाम्यति, विकथादिषु वाऽविच्छेदेन प्रवर्तन प्रबन्धस्त च प्रकुरुते, तथा 'मेत्तिज्जमाणो'त्ति मित्रीय्यमाणोऽपि मित्र ममायमस्त्वितीष्यमाणोऽपि अपिशब्दस्य लुप्तनिर्दिष्टत्वात् 'वमति' त्यजति, प्रस्तावान्मित्रयितार मैत्रीं वा, किमुक्त भवति ?–यदि कश्चिद्धार्मिकतया वक्ति–यथा त्व न वेत्सीत्यह तव पात्र लेपयामि, ततोऽसौ प्रत्युपकारभीरुतया प्रतिवक्ति—ममालमेतेन, कृतमपि वा कृतघ्नतया न मन्यत इति वमतीत्युच्यते, तथा 'सुय'ति अपेर्गम्यमानत्वात् श्रुतमपि–आगममपि 'लब्ध्वा' प्राप्य 'माद्यति' दर्पं याति, किमुक्त भवति ?—श्रुत हि मदापहारहेतु , स तु तेनापि दृप्यति । तथा 'अपि ' सम्भावनाया, सम्भाव्यत एतत्, यथाऽसौ पापै –कथञ्चित् समित्यादिषु स्खलितलक्षणै परिक्षिपति–तिरस्कुरुत इत्येवशील पापपरिक्षेपी, आचार्यादीनामिति गम्यते, तथा 'अपि ' भिन्नक्रम , तत 'मित्रेभ्योऽपि' सुहृद्भ्योऽप्यास्तामन्येभ्य 'कुप्यति' क्रुध्यति, सूत्रे तु चतुर्थ्यर्थे सप्तमी, "क्रुधिद्रुहेर्ष्याऽसूयार्थाना य प्रति कोप" ( पा० १–४–३७ ) इत्यनेनेह चतुर्थीविधानात्, तथा 'सुप्रियस्यापि' अतिवल्लभस्यापि मित्रस्य 'रहसि' एकान्ते 'भाषते' वक्ति पापमेव पापक, किमुक्त भवति ?–अग्रत प्रिय वक्ति पृष्ठतस्तु प्रति-

१ मादृशानुकरणमेतत्, मित्रस्येव मित्रीया ता क्रियमाण इति वा ।

न प्रकृतसङ्ख्याविरोधः, 'अभिजातिए'त्ति अभिजातिः—कुलीनता ता गच्छति—उत्क्षिप्तभारनिर्वाहणादिनेत्यभिजातिगः, ह्रीः—लज्जा सा विद्यतेऽस्य ह्रीमान्, कथञ्चित् कलुषाध्यवसायतायामप्यकार्यमाचरन् लज्जते, 'प्रतिसंलीनः' गुरुसकाशेऽन्यत्र वा कार्यं विना न यतस्ततश्चेष्टते, प्रस्तुतमुपसंहरन्नाह—'सुविनीतः' सुविनीतशब्दवाच्यः 'इति' इत्येवंविधगुणान्वितः उच्यते, इति सूत्राष्टकार्थः ॥ यश्चैवं विनीतः स कीदृक् स्यादित्याह—

वसे गुरुकुले निच्चं, जोगवं उवहाणवं। पियंकरे पियंवाई, से सिक्खं लद्धुमरिहति ॥ १४ ॥

व्याख्या—'वसेत्' आसीत क?—गुरूणाम्—आचार्यादीनां कुलम्—अन्वयो गच्छ इत्यर्थः गुरुकुलं तत्र, तदाज्ञोपलक्षणं च कुलग्रहणं, 'नित्यं' सदा, किमुक्तं भवति?—यावज्जीवमपि गुर्वाज्ञायामेव तिष्ठेत्, उक्तं हि—"णाणस्स होइ भागी"[1] इत्यादि, योजनं योगो—व्यापारः, स चेह प्रक्रमाद्धर्मगत एव तद्वान्, अतिशायने मतुप्, यद्वा योगः—समाधिः सोऽस्यास्तीति योगवान्, प्रशंसायां मतुप्, उपधानम्—अङ्गानङ्गाध्ययनादौ यथायोगमाचाम्लादितपोविशेषस्तद्वान्, यद्यस्योपधानमुक्तं न तत् कृच्छ्रभीरुतयोत्सृज्यान्यथा वाऽधीते शृणोति वा, प्रियम्—अनुकूलं करोतीति प्रियङ्करः, कथञ्चित् केनचिदपकृतोऽपि न तत्प्रतिकूलमाचरति, किन्तु ममैव कर्मणामयं दोष इत्यवधारयन्नप्रियकारिण्यपि प्रियमेव चेष्टते, अत एव च 'पियंवाई'त्ति केनचिदप्रियमुक्तोऽपि प्रियमेव वदतीत्येवंशीलः प्रियवादी, यद्वा—'प्रियङ्करः'

१ ज्ञानस्य भवति भागी। ( थिरयरओ दंसणे चरित्ते य। धण्णा आवकहाए गुरुकुलवासं न मुंचंति ॥ १ ॥)

हस्तादिभि भापाचपल –असदसभ्यासमीक्ष्यादेशकालप्रलापिभेदाच्चतुर्द्धा, तत्र असद्–अविद्यमानमसभ्य–खरपरुषा-
दि असमीक्ष्य–अनालोच्य प्रलप तीत्येवशीला असदसभ्यासमीक्ष्यप्रलापिनस्त्रय , अदेशकालप्रलापी चतुर्थ अतीते
कार्ये यो वक्ति–यदिद तत्र देशे काले वाऽकरिष्यत् तत सुन्दरमभविष्यद्, भावचपल सूत्रेऽर्थे वाऽसमाप्त एव
योऽन्यद् गृह्णाति, 'अमायी' न मनोज्ञमाहारादिकमवाप्य गुर्वादिवञ्चक , 'अकुतूहल ' न कुहुकेन्द्रजालाद्यवलोकन-
पर , 'अल्प च' इति स्तोकमेव 'अधिक्षिपति' तिरस्कुरुते, किमुक्त भवति ?–नाधिक्षिपत्येव तावदसौ कञ्चन, अधि-
क्षिपन् वा कञ्चन कङ्कडुकरूप धर्मं प्रति प्रेरयनल्पमेवाधिक्षिपति, अभाववचनो वाऽल्पशब्द , तथा च वृद्धा —
"अल्पशब्दो हि स्तोकेऽभावे च", ततो नैव कञ्चनाधिक्षिपति, 'प्रबन्ध' चोक्तरूप न करोति, 'मित्रीय्यमाण '
उक्तन्यायेन 'भजते' मित्रीयितारमुपकुरुते, न तु प्रत्युपकार प्रत्यसमर्थ कृतघ्नो वा, श्रुत लब्ध्वा न माद्यति, किन्तु
मददोपपरिज्ञानत सुतरामवनमति, 'न च' नैव 'पापपरिक्षेपी' उक्तरूप , न च मित्रेभ्य कृतज्ञतया कथञ्चिदप-
राघेऽपि कुप्यति, अप्रियस्यापि मित्रस्य रहसि 'कल्लाण'त्ति कल्याण भापते, इदमुक्त भवति–मित्रमिति य प्रति-
पन्न स यद्यप्यपकृतिशतानि विधत्ते तथाऽप्येकमपि सुकृतमनुस्मरन् न रहस्यपि तद्दोपमुदीरयति, तथा चाह—
"एकसुकृतेन दुष्कृतशतानि ये नाशयन्ति ते धन्या । न त्वेकदोपजनितो येपा कोप च कृतघ्न ॥ १ ॥" इति,
कलहश्च–वाचिको विग्रह डमर च–प्राणिघातादिभिस्तद्वर्जको, 'बुद्धो' बुद्धिमान्, एतच्च सर्वत्रानुगम्यत एवेति

न्ते, अन्यत्र त्वन्यथाभूतभाजनस्थपयोवदन्यथाऽपि स्युः, वृद्धास्तु व्याचक्षते—'यथे' त्यौपम्ये, 'संखंमि' संखभायणे 'पयं' खीरं 'निहितं' ठवितं न्यस्तमित्यर्थः, 'दुहतो' उभयतो संखो खीरं च, अहवा ठवंतओ खीरं च, संखे ण परिस्सवति ण य अंबीभवति, 'विरायति' सोभति, 'एव'मुपसंहारे अणुमाणे वा 'बहुसुओ' सुत्तत्थविसारतो, जानक इत्यर्थः, 'तस्स' एवं भिक्खुभायणे दिंतस्स धम्मो भवति कित्ती जसो तथा सुयमाराधियं भवति, अपत्ते दिंतस्स असुयमेव भवति, अहवा इहलोए परलोए य सोहइ पत्तदाई, अहवा एवंगुणजाइए भिक्खू बहुस्सुए भवति, धम्मो कित्ती जसो य हवइ, सुयं से ( सुयमाराहियं ) हवइ, अहवा इहलोए परलोए य विरायइ, अहवा सीलेण य सुएण य" इति सूत्रार्थः ॥ पुनर्बहुश्रुतस्तवमाह—

जहा से कंबोयाणं, आइन्ने कंथए सिया। आसे जवेण पवरे, एवं हवइ बहुस्सुए ॥ १६ ॥

व्याख्या—'यथा' येन प्रकारेण 'स' इति प्रतीतः 'काम्बोजानां' कम्बोजदेशोद्भवानां प्रक्रमादश्वानां, निर्द्धारणे षष्ठी, 'आकीर्णः' व्याप्तः, शीलादिगुणैरिति गम्यते, 'कन्थकः' प्रधानोऽश्वो, यः किल दृपच्छकलभृतकुतुपनिपतनध्वनेर्न सन्त्रसति, 'स्यात्' भवेत् 'अश्वः' तुरङ्गमः 'जवेन' वेगेन 'प्रवरः' प्रधानः 'एवम्' इत्युपनये तत ईदृशो भवति बहुश्रुतः, जिनधर्मप्रपन्ना हि व्रतिनः काम्बोजा इवाश्वेषु जातिजवादिभिर्गुणैरन्यधार्मिकापेक्षया श्रुतशीलादिभिर्वरा एव, अयं त्वाकीर्णकन्थकाश्ववत् तेष्वपि प्रवर इति सूत्रार्थः ॥ १६ ॥ किञ्च—

आचार्यादेरभिमताहारादिभिरनुकूलकारी, एव 'प्रियवाद्यपि' आचार्याभिप्रायानुवर्तितयैव वक्ता, तथा चास्य को गुण इत्याह—'स' एवगुणविशिष्ट 'शिक्षा' शास्त्रार्थग्रहणादिरूपा 'लब्धुम्' अवाप्तुम् 'अर्हति' योग्यो भवतीति, अनेनैव अविनीतस्त्वेतद्विपरीत शिक्षा लब्धु नार्हतीत्यर्थादुक्त भवति, तथा च य शिक्षा लभते स बहुश्रुत इतर स्त्वबहुश्रुत इति भाव इति सूत्रार्थ ॥ एव च सविपक्ष बहुश्रुत प्रपञ्चतोऽभिधाय प्रतिज्ञात तत्प्रतिपत्तिरूपमाचार तस्यैव सनद्वारेणाह—

जहा-सखमि पय निहिय, दुहओवि विरायइ। एव बहुस्सुए भिक्खू, धम्मो कित्ती तहा सुय ॥ १५ ॥

व्याख्या—'यथा' इति दृष्टान्तोपन्यासे 'शङ्खे' जलजे 'पयो' दुग्ध 'निहित' न्यस्त 'दुहओवि'त्ति द्वाभ्या प्रकाराभ्या द्विधा, न शुद्धतादिना स्वसम्बन्धिगुणलक्षणेनैकेनैव प्रकारेण, किन्तु स्वसम्बन्ध्याश्रयसम्बन्धिगुणद्वयलक्षणेन प्रकारद्वयेनापीत्यपिशब्दार्थ, 'विराजते' शोभते, तत्र हि न तत् कलुषीभवति, न चाम्लता भजते, नापि च परिस्रवति, 'एवम्' अनेन प्रकारेण बहुश्रुते 'भिक्खु'त्ति आर्षत्वाद् भिक्षौ—तपस्विनि, 'धर्म' यतिधर्म 'कीर्ति' श्लाघा 'तथा' इति धर्मकीर्तिवत् 'श्रुतम्' आगमो, विराजत इति सम्बन्ध, किमुक्त भवति?—यद्यपि धर्मकीर्तिश्रुतानि निरुपलेपतादिगुणेन स्वय शोभाभाञ्जि तथापि मिथ्यात्वादिकालुष्यविगमतो निर्मलतादिगुणेन शङ्ख इव पयो बहुश्रुते स्थितान्याश्रयगुणेन विशेषत शोभन्ते, तान्यपि हि न तत्र मालिन्यम् अन्यथाभाव हानिं वा कदाचन प्रतिपद्य-

त्तिक्यादिबुद्धिभिर्विद्याभिश्च विविधाभिर्वृतः षष्टिहायनतया चात्यन्तस्थिरमतिः, अत एव च बलवत्त्वेनाप्रतिहतो भवति, दर्शनोपहन्तृभिर्बहुभिरपि न प्रतिहन्तुं शक्यत इति सूत्रार्थः ॥ अन्यच्च—

जहा से तिक्खसिंगे, जायक्खंधे विरायइ । वसभे जूहाहिवती, एवं भवति बहुस्सुए ॥ १९ ॥

व्याख्या—यथा स तीक्ष्णे–निशिताग्रे शृङ्गे–विषाणे यस्य स तथा, जातः–अत्यन्तोपचितीभूतः स्कन्धः–प्रतीत एवास्येति जातस्कन्धः, समस्ताङ्गोपाङ्गोपचितत्वोपलक्षणं चैतत्, तदुपचये हि शेषाङ्गान्युपचितान्येवास्य भवन्ति, 'विराजते' विशेषेण राजते–शोभते 'वृषभः' प्रतीतो, यूथस्य–गवां समूहस्याधिपतिः–स्वामी यूथाधिपतिः सन्, एवं भवति बहुश्रुतः, सोऽपि हि परपक्षभेत्तृतया तीक्ष्णाभ्यां स्वशास्त्रपरशास्त्राभ्यां शृङ्गाभ्यामिवोपलक्षितः गच्छगुरुकार्यधुराधरणधौरेयतया च जातस्कन्ध इव जातस्कन्धः, अत एव च यूथस्य—साध्वादिसमूहस्याधिपतिः–आचार्यपदवीं गतः सन् विराजते इति सूत्रार्थः ॥ अन्यच्च—

जहा से तिक्खदाढे, ओदग्गे दुप्पहंसए । सीहे मियाण पवरे, एवं भवइ बहुस्सुए ॥ २० ॥

व्याख्या—यथा स तीक्ष्णाः–निशिता दंष्ट्राः–प्रतीता एव यस्य स तीक्ष्णदंष्ट्रः, 'उदग्रः' उत्कट उदग्रवयःस्थितत्वेन वा उदग्रः, अत एव 'दुप्पहंसए'त्ति दुष्प्रधर्ष एव दुष्प्रधर्षकः—अन्यैर्दुरभिभवः 'सिंहः' केशरी 'मृगाणाम्' आरण्यप्राणिनां 'प्रवरः' प्रधानो भवति, एवं भवति बहुश्रुतः, अयमपि हि परपक्षभेत्तृतया तीक्ष्णदंष्ट्राभिरिव नैगमादि-

जहाइन्नसमारूढे, सूरे दढपरक्कमे। उभओ नंदिघोसेण, एव हवइ बहुस्सुए ॥ १७ ॥

व्याख्या—यथा आकीर्ण–जात्यादिगुणोपेत तुरङ्गम सम्यगारुढ –अध्यासित आकीर्णसमारूढ , सोऽपि कदाचित् कातर एव स्यादत आह–'शूर ' चारभट दृढ –गाढ पराक्रम –शरीरसामर्थ्यात्मको यस्य स तथा, 'उभउ'त्ति उभयता वामतो दक्षिणतश्च यद्वाऽग्रत पृष्ठतश्च 'नन्दीघोषेण' द्वादशतूर्यनिनादात्मकेन, यद्वा आशीर्वचनानि नान्दी जीयास्त्वमित्यादीनि तद्घोषेण बन्दिकोलाहलात्मकेन, लक्षणे तृतीया, एव भवति बहुश्रुत , किमुक्त भवति ?–यथैवंविध शूरो न केनचिदभिभूयते न चान्यस्तदाश्रित , तथाऽयमपि जिनप्रवचनतुरङ्गाश्रितो दृप्यत्परवादिदर्शनेऽपि चात्रस्त तद्विजय च प्रति समर्थ उभयतश्च दिनरजन्यो स्वाध्यायघोषरूपेण स्वपक्षपरपक्षयोर्वा चिर जीवत्यसौ येनानेन प्रवचनमुद्दीपितमित्याद्याशीर्वचनात्मकेन नान्दीघोषेणोपलक्षित परतीर्थिभिरतीव मदावलिप्तैरपि नाभिभवितुं शक्यः, न चात्र प्रतपत्येतदाश्रितोऽन्योऽपि कथञ्चिज्जीयत इति सूत्रार्थ ॥ तथा—

जहा करेणुपरिकिण्णे, कुंजरे सट्ठिहायणे। बलवते अप्पडिहए, एव भवइ बहुस्सुए ॥ १८ ॥

व्याख्या—'यथा' करेणुकाभि —हस्तिनीभि परिकीर्ण –परिवृतो य स तथा, न पुनरेकाक्येव 'कुंजर ' हस्ती षष्टिहायनान्यस्येति षष्टिहायन –षष्टिवर्षप्रमाण , तस्य हि एतावत्काल यावत् प्रतिवर्ष बलोपचय ततस्तदपचय इत्येवमुक्तम्, अत एव च 'बलवते'त्ति बल—शरीरसामर्थ्यमस्यास्तीति बलवान् सन् अप्रतिहतो भवति, कोऽर्थ ?–नान्यैर्मदमुखैरपि मतङ्गजै पराङ्मुखीक्रियते, एव भवति बहुश्रुत , सोऽपि हि करेणुभिरिव परप्रसरनिरोधिनीभिरौत्प-

तेषामधिपतिः चतुर्दशरत्नाधिपतिः, 'एवं भवति बहुश्रुतः' सोऽपि ह्यासमुद्रमहीमण्डलख्यातकीर्तिः तिसृषु दिक्ष्वन्यत्र च बन्दीभूतविद्याधरवृन्द इति दिक्चतुष्टयव्यापिकीर्तितया चतुरन्त उच्यते, चतुर्भिर्वा दानादिधर्म्मैरन्तः—कर्मवैरिविनाशोऽस्येति चतुरन्तः, ऋद्धयश्चामर्पौषध्यादयश्चक्रवर्तिनमपि योधयेदित्येवंविधपुलाकलब्ध्यादयश्च महत्य एवास्य भवन्ति, सन्ति चास्यापि चतुर्दशरत्नोपमानि सकलातिशयनिधानानि पूर्वाणीति कथं न चक्रवर्तितुल्यताऽस्येति सूत्रार्थः ॥ अन्यच्च—

जहा से सहस्सक्खे, वज्जपाणी पुरंदरे । सक्के देवाहिवई, एवं हवइ बहुस्सुए ॥ २३ ॥

व्याख्या—यथा स सहस्रमक्षीण्यस्येति सहस्राक्षः—सहस्रलोचनः, अत्र च सम्प्रदायः—'सहस्सक्खत्ति पंच मंतिसया देवाणं तस्स, तेसिं सहस्सं अच्छीणं, तेसिं नीईए विक्कमति, अहवा जं सहस्सेणं अच्छीणं दीसति तं सो दोहिं अच्छीहिं अब्भहियगरागं पेच्छती'ति । वज्रं—वज्राभिधानमायुधं पाणावस्येति वज्रपाणिः, लोकोक्त्या च पूर्दारणात् पुरन्दरः, क ईदृगित्याह—शक्रो 'देवाधिपतिः' देवानां स्वामी, एवं भवति बहुश्रुतः, सोऽपि हि श्रुतज्ञानेनाशेषातिशयरत्ननिधानतुल्येन लोचनसहस्रेणेव जानीते, यश्चैवं तस्यैवंविधत्वोपलक्षणं, वज्रमपि लक्षणं पाणौ सम्भ-

१ पञ्च मन्त्रिशतानि देवानां तस्य, तेषां सहस्रमक्ष्णां, तेषां नीतौ विक्रमते, अथवा यत्सहस्रेणाक्ष्णां दृश्यते तत् स द्वाभ्यामक्षिभ्यामभ्यधिकतरं प्रेक्षते इति ।

नये प्रतिभादिगुणोदग्रतया च दुरभिभव इत्यन्यतीर्थाना मृगस्थानीयाना प्रवर एवेति सूत्रार्थ ॥ अपर च—

जहा से वासुदेवे, सखचक्कगदाधरे। अप्पडिहयबले जोहे, एव भवइ बहुस्सुए ॥ २१ ॥

व्याख्या—यथा स 'वासुदेव' विष्णु, शङ्खश्च—पाञ्चजन्य चक्र च—सुदर्शन गदा च—कौमोदकी शङ्खचक्रगदास्ता-धारयति—वहतीति शङ्खचक्रगदाधर, अप्रतिहतम्—अन्यै स्खलयितुमशक्य बल—सामर्थ्यमस्येत्यप्रतिहतबल, किमुक्तं भवति ?—एक सहजसामर्थ्यवानन्यच तथाविधायोधान्वित इति, युध्यतीति योध —सुभटो भवति, एव भवति बहुश्रुत, सोऽपि ह्येक स्वाभाविकप्रतिभाप्रागल्भ्यवान् अपर शङ्खचक्रगदाभिरिव सम्यग्दर्शनज्ञानचारित्रैरुपेत इति, योध इव योध कर्मवैरिपराभव प्रतीति सूत्रार्थ ॥ अपर—

जहा से चाउरते, चक्कवट्टी महिड्ढिए। चोद्दसरयणाहिवई, एव हवइ बहुस्सुए ॥ २२ ॥

व्याख्या—यथा स चतसृष्वपि दिक्ष्वन्त —पर्यन्त एकत्र हिमवानन्यत्र च दिक्त्रये समुद्र स्वसम्बन्धितयाऽस्येति चतुरन्त, चतुर्भिर्वा—हयगजरथनरात्मकैरन्त —शत्रुविनाशात्मको यस्य स तथा, 'चक्रवर्ती' षट्खण्डभरताधिप, महती ऋद्धि —समृद्धिरस्येति महर्द्धिक —दिव्यानुकारिलक्ष्मीक, चतुर्दश च तानि रत्नानि च चतुर्दशरत्नानि, तानि चामूनि—'सेणावइ गाहावइ पुरोहिय गय तुरग वड्ढइग इत्थी। चक्क छत्त चम्म मणि कागिणी खग्ग दडो य ॥१॥'

१ सेनापतिः गाथापति पुरोहितो गजस्तुरङ्गो वर्धकि स्त्री। चक्र छत्र चर्म मणि काकिणी खड्गो दण्डश्च ॥ १ ॥

समस्तकलोपेतः, स चेद्दृक् कदा भवति ? अत आह–पौर्णमास्याम् । इह च चन्द्र इत्युक्ते मा भून्नामचन्द्रादावपि सम्प्रत्ययः इत्युडुपतिग्रहणं, उडुपतिरपि च कश्चिदेकाक्येव भवति मृगपतिवत् अत उक्तं नक्षत्रपरिवारितः, सोऽप्यपरिपूर्णोऽपि द्वितीयादिषु सम्भवतीति परिपूर्णः पौर्णमास्यामित्युक्तं, एवं भवति बहुश्रुतः, असावपि हि नक्षत्राणामिवानेकसाधूनामधिपतिः तथा तत्परिवारितः सकलकलोपेतत्वेन प्रतिपूर्णश्च भवतीति सूत्रार्थः ॥ अपरं च–

जहा से सामाइयाणं, कोट्ठागारे सुरक्खिए । नाणाधण्णपडिपुण्णे, एवं हवइ बहुस्सुए ॥ २६ ॥

व्याख्या—यथा स 'सामाइयाणं'ति समाजः–समूहस्तं समवयन्ति सामाजिकाः–समूहवृत्तयो लोकास्तेषां, पठन्ति च–'सामाइयंगाणं'ति तत्र च श्यामा–अतसी तदादीनि च तानि अङ्गानि च उपभोगाङ्गतया श्यामाद्यङ्गानि धान्यानि तेषां 'कोट्ठागारे'त्ति कोष्ठा–धान्यपल्यास्तेषामगारं–तदाधारभूतं गृहम्, उपलक्षणत्वादन्यदपि प्रभूतधान्यस्थानं, यत्र प्रदीपनकादिभयात् धान्यकोष्ठाः क्रियन्ते तत् कोष्ठागारमुच्यते, यदिवा कोष्ठान् आ–समन्तात् कुर्वते तस्मिन्निति कोष्ठाकारः, "अकर्तरि च कारके सञ्ज्ञायां" ( पा० ३-३-१९ )मिति घञ्, तथा सुष्ठु–प्राहरिकपुरुषादिव्यापारणद्वारेण रक्षितः–पालितो दस्युमूषिकादिभ्यः सुरक्षितः, स च कदाचित् प्रतिनियतधान्यविषयोऽप्रतिपूर्णश्च स्यात् अत आह—नाना–अनेकप्रकाराणि धान्यानि–शालिमुद्गादीनि तैः प्रतिपूर्णो–भृतः नानाधान्यप्रतिपूर्णः, आद्यपक्षे तु विशेषणे नपुंसकलिङ्गतया नेये, एवं भवति बहुश्रुतः, असावपि सामाजिकलोकाना-

वतीति वज्रपाणि , पूश्च शरीरमप्युच्यते, तद्विकृष्टतपोऽनुष्ठानतो दारयतीव दारयतीति पुरन्दर , शक्रवत् देवैरपि धर्मेऽस्य तनिश्चलतया पूज्यत इति तत्पतिरप्युच्यते, तथा चाह—"देवावि त नमंसति, जस्स धम्मे सया मणो"[1]त्ति सूत्रार्थ ॥ अपि च—

जहा से तिमिरविद्धसे, उत्तिट्ठति दिवागरे। जलते इव तेण्ण, एव भवइ बहुस्सुए॥ २४॥

व्याख्या—यथा स तिमिरम्—अन्धकार विध्वसयति—अपनयति तिमिरविध्वस , 'उत्तिष्ठन्' उद्गच्छन् 'दिवाकर' सूर्य , स हि ऊर्ध्वं नभोभागमाक्रामनतितेजस्विता भजते अयतरस्तु न तथैव विशिष्यते, यद्वा उत्थानं—प्रथम-मुद्गमन त त चाय न तीव्र इति तीव्रत्वाभावख्यापकमेतत्, अन्यदा हि तीव्रोऽयमिति न सम्यग् दृष्टान्त स्यात्, 'ज्वलन्निव' ज्वाला मुञ्चन्निव 'तेजसा' महसा, एव भवति बहुश्रुत , सोऽपि ह्यज्ञानरूपतिमिरापहारक सयमस्थानेषु विशुद्धविशुद्धतराध्यवसायत उपसर्पंस्तपस्तेजसा च ज्वलन्निव भवतीति सूत्रार्थ ॥ अन्यच्च—

जहा से उडुवई चदे, नक्खत्तपरिवारिए। पडिपुण्णे पुण्णिमासीए, एव भवइ बहुस्सुए॥ २५॥

व्याख्या—यथा स उडूना—नक्षत्राणा पति—प्रभु उडुपति , क इत्याह—'चन्द्र' शशी, 'नक्षत्रै' अश्विन्यादिभि , उपलक्षणत्वाद्ग्रहैस्ताराभिश्च परिवार—परिकर सञ्जातोऽस्येति परिवारित नक्षत्रपरिवारित 'प्रतिपूर्ण'

---

१ देवा अपि त नमस्यन्ति यस्य धर्मे सदा मन ।

सलिला–नदी, सागरं–समुद्रं गच्छतीति सागरङ्गमा–समुद्रपातिनीत्यर्थः, न तु क्षुद्रनदीवदपान्तराल एव विशीर्यते, 'शीता' शीतानाम्नी, नीलवान्–मेरोरुत्तरस्यां दिशि वर्षधरपर्वतस्ततः प्रभवति पाठान्तरतः प्रवहति वा नीलवत्प्रभवा नीलवत्प्रवहा वा, 'एवं' शीतानदीवद्भवति बहुश्रुतः, असावपि हि सरितामिवान्यसाधूनामशेषश्रुतज्ञानिनां वा मध्ये प्रधानो विमलजलकल्पश्रुतज्ञानान्वितश्च, तथा सागरमिव मुक्तिमेवासौ गच्छति, तदुचितानुष्ठान एवास्य प्रवृत्तत्वात्, न ह्यन्यदर्शनिनामिव देवादिभव एवास्य विवेकिनो वाञ्छा, तथा च कथमस्य तेषामिव प्रायोऽपान्तरालावस्थानं ?, नीलवत्तुल्याच्च उच्छ्रितोच्छ्रितमहाकुलादेवास्य प्रसूतिः, कथमिवान्यथैवंविधयोग्यतासम्भव इति सूत्रार्थः ॥ किञ्च—

जहा से नगाण पवरे, सुमहं मंदरे गिरी । नाणोसहीपज्जलिए, एवं हवइ बहुस्सुए ॥ २९ ॥

व्याख्या—यथा स 'नगानां' पर्वतानां मध्ये 'प्रवरः' अतिप्रधानः 'सुमहान्' अतिशयगुरुरत्युच्च इतियावत्, 'मन्दरः' मन्दराभिधानः, कः पुनरसौ ? इत्याह–गिरिः, किमुक्तं भवति ?–मेरुपर्वतः, 'नानौषधिभिः' अनेकविधविशिष्टमाहात्म्यवनस्पतिविशेषरूपाभिः प्रकर्षेण ज्वलितो–दीप्तः नानौषधिप्रज्वलितः, ता ह्यतिशायिन्यः प्रज्वलन्त्य एवासत इति तद्योगादसावपि प्रज्वलित इत्युक्तः, यद्वा–प्रज्वलिता नानौषधयोऽस्मिन्निति प्रज्वलितनानौषधिः, प्रज्वलितशब्दस्य तु परनिपातः प्राग्वत्, 'एवम्' इति मन्दरवत् भवति बहुश्रुतः, श्रुतमाहात्म्येन ह्यसावत्यन्त-

मिव गच्छवासिनामुपयोगिभिर्नानाधान्यैरिवाङ्गोपाङ्गप्रकीर्णकादिभेदै श्रुतज्ञानविशेषै प्रतिपूर्ण एव भवति, सुरक्षितश्च प्रवचनाधारतया, यत उक्तम्—"जेणं कुल आयत्त त पुरिस आयरेण रक्खेह" इत्यादीति सूत्रार्थ ॥

अपि च—

जहा सा दुमाण पवरा, जबूनाम सुदसणा। अणाढियस्स देवस्स, एव हवइ बहुस्सुए ॥ २७ ॥

व्याख्या—यथा सा द्रुमाणा मध्ये प्रवरा–प्रधाना जम्बू नाम्ना–अभिधानेन सुदर्शना नाम सुदर्शना, न हि यथेयममृतोपमफला देवाद्याश्रयश्च तथाऽन्य कश्चिद् द्रुमोऽस्ति, द्रुमत्व फलव्यवहारश्चास्यास्तत्प्रतिरूपतयैव, वस्तुत पार्थिवत्वेनोक्तत्वात्, वज्रवैडूर्यादिमयानि हि तन्मूलादीनि तत्र तत्रोक्तानि, सा च कस्येत्याह–'अनाढतस्य' अनाढतनाम्नो 'देवस्य' जम्बूद्वीपाधिपतेर्व्यन्तरसुरस्य आश्रयत्वेन सम्बन्धिनी, एव भवति बहुश्रुत, सोऽपि ह्यमृतोपमफलकल्पश्रुतान्वितो देवादीनामपि च पूज्यतयाऽभिगमनीय शेषद्रुमोपमसाधुषु च प्रधान इति सूत्रार्थ. ॥

अन्यच—

जहा सा नईण पवरा, सलिला सागरगमा। सीया नीलवतपवहा, एव हवइ बहुस्सुए ॥ २८ ॥

व्याख्या—यथा सा 'नदीना' सरिता 'प्रवरा'प्रधाना सलिल–जलमस्यामस्तीति, अर्शआदेराकृतिगणत्वादचि

---

१ यस्मिन् कुल स्वाधीन त पुरुषमादरेण रक्ष

इत्याह—'सुयस्स पुण्णा विउलस्स'त्ति—सुब्व्यत्ययाच्छ्रुतेन—आगमेन पुर्णाः—परिपूर्णा विपुलेन—अङ्गानङ्गादिभेदतो विस्तीर्णेन तायिनः त्रायिणो वा, एवंविधाश्च बहुश्रुता एव, तानेव फलतो विशेषयितुमाह—'क्षपयित्वा' विनाश्य 'कर्म्म' ज्ञानावरणादि, गम्यत इति गतिस्ताम् 'उत्तमां' प्रधानां, मुक्तिमितियावत्, 'गताः' प्राप्ताः, उपलक्षणत्वाद्गच्छन्ति गमिष्यन्ति च । इह चैकवचनप्रक्रमेऽपि बहुवचननिर्देशः, पूज्यताख्यापनार्थं व्याप्तिप्रदर्शनार्थं चेति सूत्रार्थः ॥ इत्थं बहुश्रुतस्य गुणवर्णनात्मिकां पूजामभिधाय शिष्योपदेशमाह—

तम्हा सुयमहिट्ठेज्जा, उत्तमट्ठगवेसए । जेणऽप्पाणं परं चेव, सिद्धिं संपाउणिज्जासि ॥ ३२ ॥ त्तिबेमि ॥

व्याख्या—यस्मादमी मुक्तिगमनावसाना बहुश्रुतगुणाः तस्मात् 'श्रुतम्' आगमम् 'अधितिष्ठेत्' अध्ययनश्रवणचिन्तनादिनाऽऽश्रयेत्, उत्तमः—प्रधानोऽर्थः—प्रयोजनम्—उत्तमार्थः, स च मोक्ष एव तं 'गवेषयति' अन्वेषयतीति उत्तमार्थगवेषकः, येन किं स्यादित्याह—'येन' श्रुताश्रयणेन 'आत्मानं' स्वं 'परं' चान्यं तपस्व्यादिकं 'एवः' अवधारणे भिन्नक्रमश्च सम्प्रापयेदित्यस्यानन्तरं द्रष्टव्यः, ततः 'सिद्धिं' मुक्तिगतिं 'संपाउणिज्जासि'त्ति सम्यक् प्रापयेदेव, नेह कश्चित् सन्देह इति सूत्रार्थः । 'इतिः' परिसमाप्तौ 'ब्रवीमि' इति पूर्ववत्, उक्तोऽनुगमः, सम्प्रति नयास्तेऽपि पूर्ववदेव ॥ इति श्रीशान्त्याचार्यविरचितायां शिष्यहितायामुत्तराध्ययनटीकायामेकादशमध्ययनं समाप्तम् ॥

भिर इति शेषगिरिरत्नाकरभिरामाप्यपेक्षया प्रवर एव भवति, तथाऽयमपकारेऽपि प्रकाशनशालिनिता आमर्षौ-षध्यादयनन्यातिप्रतीता एवेति सूत्रार्थ ॥ किं बहुना ?—

जहा से सयंभूरमणे, उदही अक्खओदए। नाणारयणपडिपुण्णे, एवं हवइ बहुस्सुए ॥ ३० ॥

व्याख्या—यथा स 'स्वयम्भूरमण' स्वयम्भूरमणाभिधान 'उदधि' समुद्र अक्षयम्—अविनाश्युदक—जल यस्मिन् स तथा, नानारत्नै—नानाप्रकारैर्मरकतादिभि प्रतिपूर्णो—भृत नानारत्नप्रतिपूर्ण, एव भवति बहुश्रुत, अयमपि अक्षयसम्यग्ज्ञानोदको नानाऽतिशयरत्नवाश्च भवति, यदिवाऽक्षत उदय—प्रादुर्भावो यस्य सोऽक्षतोदय इति सूत्रार्थ ॥ साम्प्रतमुक्तगुणानुवादत फलोपदर्शनतश्च तस्यैव माहात्म्यमाह—

समुद्दगंभीरसमा दुरासया, अचक्किया केणइ दुप्पहंसया।
सुयस्स पुण्णा विउलस्स ताइणो, खवित्तु कम्मं गइमुत्तमं गया ॥ ३१ ॥

व्याख्या—'समुद्दगंभीरसम'त्ति आर्षत्वाद्गाम्भीर्येण—अलब्धमध्यात्मकेन गुणेन समा गाम्भीर्यसमा समुद्रस्य गाम्भीर्यसमा समुद्रगाम्भीर्यसमा, 'दुरासय'त्ति दु खेनाश्रीयन्ते—अभिभवबुद्ध्याऽऽश्रीयन्ते वा—जेतु सम्भाव्यन्ते केनापीति दुराश्रया दुरासदा वा, तत एव 'अचक्किय'त्ति अचकिता—अत्रासिता, 'केनचिदि'ति परीषहादिना परप्रवादिना वा, तथा दु खेन प्रधृष्यन्ते—पराभूयन्ते केनापीति दुष्प्रधर्षा एव दुष्प्रधर्षका, क एवंविधा ?

महुराए संखो खलु पुरोहिअसुओ अ गयउरे आसी । दट्ठूण पाडिहेरं हुयवहरत्थाइ निक्खंतो ॥३२२॥
हरिएसा चंडाला सोवाग मयंग बाहिरा पाणा । साणधणा य मयासा सुसाणवित्ती य नीया य ३२३
जम्मं मयंगतीरे वाणारसिगंडितिंदुगवणं च । कोसलिएसु सुभद्दा इसिवंता जन्नवाडंमि ॥ ३२४ ॥
बलकुट्टे बलकोट्टो गोरी गंधारि सुविणगवसंतो । नामनिरुत्ती छणसप्प संभवो दुंदुहे बीओ ॥३२५॥
भद्दएणेव होअव्वं पावइ भद्दाणि भद्दओ । सविसो हम्मए सप्पो, भेरुंडो तत्थ मुच्चइ ॥ ३२६ ॥
इत्थीण कहित्थ वट्टई, जणवयरायकहित्थ वट्टई। पडिगच्छह रम्म तिंदुअं, अइसहसा बहुमुंडिए जणे ॥

एतदक्षरार्थः सुगम एव, णवरं 'अंतियं तु' इति अन्तिके—समीपे, 'तुः' पूरणे, 'पाडिहेरं'ति प्रतिहारो—दौवारिकस्तद्वत्सदा सन्निहितवृत्तिर्देवताविशेषोऽपि प्रतिहारस्तस्य कर्म्म प्रातिहार्यं, तच्चेह हुतवहरथ्यायाः शीतलत्वं, तथा हरिकेशाश्चाण्डालाः श्वपाकाः मातङ्गा बाह्याः पाणाः श्वधनाश्च मृताशाः श्मशानवृत्तयश्च नीचाश्चेत्येकार्थिकाः, तथा 'मयङ्गतीरे'त्ति मृतेव मृता विवक्षितभूदेशे तत्कालाप्रवाहिणी सा चासौ गङ्गा च मृतगङ्गा तस्यास्तीरं तस्मिन् ऋपिवान्ता—ऋपित्यक्ता, तथा भद्र एव भद्रको यो न कस्यचिदशुभे प्रवर्त्तते, भद्राणि—कल्याणानि, तथा स्त्रीणां कथा तासां नेपथ्याभरणभाषादिविषया 'अत्र' अस्मिन् यत्याश्रमे प्रवर्त्तते, 'जणवयरायकह'त्ति जनपदकथा मालवकादि-

## अथ द्वादश हरिकेशीयमध्ययनम् ।

व्याख्यातमेकादशमध्ययनमधुना द्वादशमारभ्यते,अस्य चायमभिसम्बन्धः—अनन्तराध्ययने बहुश्रुतपूजोक्ता,इह तु बहुश्रुतेनापि तपसि यत्नो विधेय इति ख्यापनार्थं तपःसमृद्धिरुपवर्ण्यते इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चतुरनुयोगद्वारचर्चा प्राग्वत् तावद्यावन्नामनिष्पन्ननिक्षेपेऽस्य हरिकेशीयमिति नाम, अतो हरिकेशनिक्षेपमाह निर्युक्तिकृत्—

नाम ठवणादविए० ॥ ३१८ ॥ जाणयसरीरभविए० ॥ ३१९ ॥

हरिएसनामगोअं वेअंतो भावओ अ हरिएसो । तत्तो समुट्ठियमिणं हरिएसिज्जंति अज्झयणं ॥३२०॥

हरिकेशे निक्षेपश्चतुर्विधो नामादिः, तत्र नामस्थापने क्षुण्णे, द्विविधो भवति 'द्रव्ये' द्रव्यविषयः—आगमनोआगमतश्च,तत्र आगमतो ज्ञाताऽनुपयुक्तो, नोआगमतश्च स त्रिविधो—ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तश्च, स पुनः त्रिविधः—एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च, हरिकेशनामगोत्रं वेदयन् भावतस्तु हरिकेश उच्यते, ततोऽभिधेयभूतात् समुत्थितमिदं हरिकेशीयं इत्यध्ययनमुच्यते इति शेषः, इति गाथात्रयार्थः ॥ सम्प्रति हरिकेशवक्तव्यतामाह निर्युक्तिकृत्

पुव्वभवे संखस्स उ जुवरन्नो अंतिअं तु पव्वज्जा । जाईमयं तु काउं हरिएसकुलंमि आयाओ ॥ ३२१ ॥

आसंकाए उइण्णो तं रत्थं, जाव सा तस्स तवप्पभावेणं सीतीभूया, आउट्टो-अहो इमो महातवस्सी मए आसादितो, उज्जाणट्ठियं गन्तुं भणति-भगवं! मए पावकम्मं कयं, कहं वा तस्स मुंचेज्जामि ?, तेण भण्णति—पव्वयह, पव्वइतो, जातिमयं रूवमयं च काउं मओ, देवलोगगमणं, चुओ संतो मयगंगाए तीरे वलकोट्टा नाम हरिएसा, तेसिं अहिवई वलकोट्टो नाम, तस्स दुवे भारियाओ-गोरी गंधारी य, गोरीए कुच्छिंसि उववण्णो, सुमिणदंसणं, वसंतमासं पेच्छति, तत्थ कुसुमियं चूयपायवं पेच्छइ, सुमिणपाढयाणं कहियं, तेहिं भण्णति-महप्पा ते पुत्तो भविस्सति, समएण पसूया, दारगो जाओ कालो विरूओ पुव्वभवजाइरूवमयदोसेणं, वलकोट्टेसु जाउत्ति वलो से नामं कयं, भंडणसीलो असहणो। अण्णया ते छणेण समागया भुंजंति सुरं च पिबंति, सोऽवि अप्पियणियं

१ आशङ्कयाऽवतीर्णस्तां रथ्यां, यावत्सा तस्य तपःप्रभावेण शीतीभूता, आवृत्तः-अहो अयं महातपस्वी मया आशातितः, उद्यानस्थितं गत्वा भणति—भगवन्! मया पापकर्म कृतं, कथं वा तस्मात् मुच्येय ?, तेन भण्यते-प्रव्रज, प्रव्रजितः, जातिमदं रूपमदं च कृत्वा मृतो, देवलोकगमनं, च्युतः सन् मृतगङ्गायास्तीरे वलकोट्टा नाम हरिकेशाः, तेषामधिपतिर्वलकोट्टो नाम, तस्य द्वे भार्ये-गौरी गान्धारी च, गौर्याः कुक्षौ उत्पन्नः, स्वप्नदर्शनं, वसन्तमासं प्रेक्षते, तत्र कुसुमितं चूतपादपं पश्यति, स्वप्नपाठकेभ्यः कथितं, तैर्भण्यते—महात्मा ते पुत्रो भविष्यति, समये प्रसूता, दारको जातः-कालो विरूपः पूर्वभवजातिरूपमददोषेण, वलकोट्टेषु जात इति वलस्तस्य नाम कृतं, भण्डनशीलोऽसहनः। अन्यदा ते क्षणे समागता भुञ्जते सुरां च पिबन्ति, सोऽप्यप्रीतिकं

देशप्रशसानिन्दात्मिका राजकथा च राज्ञा शौर्यादिगुणवर्णनादिरूपा, 'पडिगच्छह'त्ति तिङ्व्यत्ययात् प्रतिगच्छामो–निवर्त्तावहे, 'अयी'त्यामन्त्रणे 'सहसे'त्यपर्यालोच्य, कोऽर्थ ?–अपरीक्षितयोग्यताविशेपो, 'बहुमुंण्डितो जनो' मुण्डमात्रेणैव गृहीतदीक्ष प्रायो जनो, गृहीतभावदीक्षस्तु स्वल्प एवेति भाव ॥ तथेहाद्यगाथाया एव पादद्वय द्वितीयगाथया स्पष्टीकृत, ततस्तृतीयपाद स्पष्ट एवेति, शेपगाथाभिश्चतुर्थपादस्य पर्यायदर्शनतस्तत्सूचितार्थाभिधानतथाभिव्यञ्जन । भावार्थस्तु कथानकादवसेय , तत्र च सम्प्रदाय –महुराए नयरीए सखो नाम जुवराया, सो धम्म सोउ पव्वतितो, विहरतो य गयउर गओ । तहि च भिक्ख हिंडतो एग रत्थ पत्तो, सा य किर अतीव उण्हा मुम्मुरसमा, उण्हकाले ण सक्कति कोऽवि वोलेउ, जो तत्थ अजाणतो उप्फदति सो विणस्सति, तीसे पुण णाम चेव हुयवहरत्था, तेण साहुणा पुरोहियपुत्तो पुच्छितो–एसा रत्था निव्वहति ?, सो पुरोहियस्स पुत्तो चितेति–एस डज्झउत्ति निव्वहति इइ वुत्त, सो पट्ठिओ, इयरो य अलिदट्ठिओ पेच्छति अतुरियाए गईए वच्चत त, सो

१ मथुराया नगर्यां शङ्खो नाम युवराज , स धर्म श्रुत्वा प्रव्रजित , विहरश्च गजपुर गत । तत्र च भिक्षा हिण्डमान एका रथ्या प्राप्त , सा च किलातीवोष्णा मुर्मुरसमा, उष्णकाले न शक्नोति कोऽपि व्यतिक्रमितु, यस्तत्राजानान उत्स्पन्दते स विनश्यति, तस्या पुनर्नामैव हुतवहरथ्या, तेन साधुना पुरोहितपुत्र पृष्ट –एषा रथ्या निर्वहति ?, स पुरोहितस्य पुत्रश्चिन्तयति–एष दह्यतामिति निर्वहतीति उक्त, स प्रस्थित , इतरश्चालिन्दकस्थित प्रेक्षते अत्वरितया गत्या व्रजन्त त, स

साहू ठिया, एहि पासामो, ते गया, तेऽवि समावत्तीए साहुणो विकहमाणा अच्छंति, ततो सो जक्खो इमं भणति—'इत्थीण कहऽत्थ वट्टइ, जणवयरायकहत्थ वट्टई । पडिगच्छह रम्म तेंदुगं, अइसहसा बहुमुंडिए जणे ॥ १ ॥' अह अण्णया जक्खाययणं कोसलियरायधूया भद्दा नाम पुप्फधूवमादी गहाय अचिरं निग्गया पयाहिणं करेमाणा तं दट्ठूण कालं विगरालं छित्तिकाऊण णिट्ठुहति, जक्खेण रुट्ठेण अण्णइट्ठा कया, णीया नीयघरं, आवेसिया भणति ते–णवरं मुंचामि जइ णं तस्सेव देह, तं च साहति—जहा एईए सो साहू ओदूढो, रण्णावि जीवउत्तिकाऊण दिण्णा, महत्तरियाहिं समं तत्थाणीया, रत्तिं ताहिं भण्णति—वच्च पतिसगासंति, पविट्ठा जक्खाययणं, सो पडिमं ठिओ णेच्छति, ताहे जक्खोवि इसिसरीरं छाइऊण दिव्वरूवं दंसेति, पुणो मुणिरूवं, एवं सव्वरत्तिं वेलंबिया, पभाए णेच्छएत्ति

१ साधवः स्थिताः, यावः पश्यावः, तौ गतौ, तेऽपि भवितव्यतया साधवः विकथयन्तस्तिष्ठन्ति, ततः स यक्ष इदं भणति—स्त्रीणां कथाऽत्र वर्त्तते, जनपदराजकथाऽत्र वर्त्तते । प्रतिगच्छावो रम्यतेन्दुकं, अतिसहसा बहुमुण्डितो जनः ॥ १ ॥ अथान्यदा यक्षायतनं कौशलिकराजदुहिता भद्रानाम पुष्पधूपादि गृहीत्वाऽर्चयितुं निर्गता प्रदक्षिणां कुर्वती तं दृष्ट्वा कृष्णविकरालं थूत्कृत्य निष्ठीवति, यक्षेण रुष्टेनान्याविष्टा कृता, नीता निजगृहं, आविष्टा भणति तान्—परं मुञ्चामि यद्येनां तस्मायेव दत्त, तच्च कथयति—यथैतया स साधुराशातितः (:थूत्कृतः), राज्ञाऽपि जीवत्वितिकृत्वा दत्ता, महत्तराभिः समं तत्रानीता, रात्रौ ताभिर्भण्यते–व्रज पतिसकाशमिति, प्रविष्टा यक्षायतनं,स प्रतिमां स्थितो नेच्छति,तदा यक्षोऽपि ऋषिशरीरं छादयित्वा दिव्यरूपं दर्शयति, पुनर्मुनिरूपं,एवं सर्वा रात्रिं विडम्बिता,प्रभाते नेच्छतीति

करेइत्ति निच्छूढो अच्छति समतओ पलोएंतो, जाव अही आगतो, उट्ठिया सहसा सवे, सो अही गेहि मारिओ, अण्णमुहुत्तस्स भेरुडसप्पो आगतो, भेरुडो नाम दिव्वगो, भीया पुणो उट्ठिया, णाए दिव्वगोत्तिकाऊण मुक्को, बलस्स चिंता जाया—अहो सदोसेण जीवा किलेसभागिणो भवंति, तम्हा—'भद्दएणेव होयव्व, पावति भद्दाणि भद्दओ। सविसो हम्मती सप्पो, भेरुडो तत्थ मुच्चति ॥१॥" एव चिंतेंतो संबुद्धो पव्वतिओ। विहरंतो वाणारसिं गओ, उज्जाणं तेंदुयवणं, तेंदुगं नाम जक्खायतणं, तत्थ गंडीतेंदुगो नाम जक्खो परिवसति, सो तत्थ अणुण्णवेउं ठितो, जक्खो उवसंतो, अण्णो जक्खो अण्णंमि वणे वसति, तत्थवि अण्णे बहू साहूणो ठिया, सो य गंडीजक्खं पुच्छति—ण दीससि ?, पुणाइ तेण भणियं—साहु पज्जुवासामि, तत्थ य तेंदुएण दिट्ठो, सोऽवि उवसंतो, सो भणति—ममवि उज्जाणे बहवे

१ करोतीति निष्काशितस्तिष्ठति समन्ततः प्रलोकयन्, यावदहिरागतः, उत्थिताः सहसा सर्वे, सोऽहिस्तैर्मारितः, अन्यस्मिन्मुहूर्ते भेरुण्डसर्प आगतः, भेरुण्डो नाम दिव्यकः, भीताः पुनरुत्थिताः, ज्ञाते दिव्यक इतिकृत्वा मुक्तः, बलस्य चिन्ता जाता—अहो स्वदोषेण जीवाः क्लेशभागिनो भवन्ति, तस्मात्—भद्रकेनैव भाव्यं, प्राप्नोति भद्राणि भद्रकः। सविषो हन्यते सर्पो, भेरुण्डस्तत्र मुच्यते ॥ १ ॥ एवं चिन्तयन् संबुद्धः प्रव्रजितः। विहरन् वाणारसीं गतः, उद्यानं तिन्दुकवनं, तिन्दुकं नाम यक्षायतनं, तत्र गण्डीतिन्दुको नाम यक्षः परिवसति, स तत्रानुज्ञाप्य स्थितः, यक्ष उपशान्तः, अन्यो यक्षोऽन्यत्र वने वसति, तत्राप्यन्ये बहवः साधवः स्थिताः, स च गण्डीयक्षं पृच्छति—न दृश्यसे ?, पुनस्तेन भणितं— साधुं पर्युपासे, तत्र च तिन्दुकेन दर्शितः, सोऽप्युपशान्तः, स भणति—ममाप्युद्याने बहवः

'भिक्खू'त्ति भिनत्ति–यथाप्रतिज्ञातेनानुष्ठानेन क्षुधमष्टविधं वा कर्म्मेति भिक्षुः, अत एव जितानि–वशीकृतानीन्द्रियाणि–स्पर्शनादीन्यनेनेति जितेन्द्रिय इति सूत्रार्थः ॥ तथा

इरिएसणभासाए, उच्चारसमिईसु य । जओ आयाणणिक्खिवे, संजओ सुसमाहिओ ॥ २ ॥

ईरणमीर्या एष्यत इत्येषणा अनयोर्द्वन्द्वस्ततस्ताभ्यां सहिता भाष्यत इति भाषा ईर्यैषणाभाषेति मध्यपदलोपी समासः, तस्यां, तथा उच्चारं–पुरीषपरिष्ठापनमपीहोच्चार उक्तः, प्रश्रवणपरिष्ठापनोपलक्षणं चैतत्, तद्विषया समितिः–सम्यग्गमनं, तत्र सम्यक्प्रवर्त्तनमितियावत्, उच्चारसमितिः, तस्यां च, यतत इति यतो–यतवान्, तथा आदानं च–ग्रहणं पीठफलकादेर्निक्षेपश्च–स्थापनं तस्यैव आदाननिक्षेपं, तत इहापि चकारानुवृत्तेस्तस्मिंश्च, इह च 'उच्चारसमिएसु'त्ति एकत्वेऽपि बहुवचनं सूत्रत्वात्, समितिशब्दश्च मध्यव्यवस्थितो डमरुकमणिरिवाद्यन्तयोरपि सम्बध्यते, ततश्च ईर्यासमितावेषणासमितौ भाषासमितावादाननिक्षेपसमिताविति योज्यं, यद्वा ईर्यैषणाभाषोच्चारसमितिष्वित्येकमेव पदं, 'भासाए' इति च एकारोऽलाक्षणिकः, स चैवं कीदृगित्याह—संयतः–संयमान्वितः सुसमाहितः—सुष्ठुसमाधिमानिति सूत्रार्थः ॥ तथा—

मणगुत्तो वयगुत्तो, कायगुत्तो जिइंदिओ । भिक्खट्ठा बंभइज्जंमि, जन्नवाडमुवट्ठिओ ॥ ३ ॥

मनोगुप्त्या–मनोनियन्त्रणात्मिकया गुप्तः–संवृतो मनोगुप्तो, मध्यपदलोपी समासः, मनो गुप्तमस्येति वा मनोगुप्तः,

केऊण पविसंती सघर पुरोहिएण राया भणिओ—एसा रिसिभज्जा वभणाण कप्पइत्ति, दिण्णा तस्सेव। सो य जण्णे दिक्खिज्जिउकामो सा अण्णेण लद्धा, सावि जण्णपत्तित्तिकाऊण दिक्खिया। इत्युक्त सम्प्रदायोऽवसितश्च नामनिष्पन्ननिक्षेप, सम्प्रति सूत्रालापकनिष्पन्नस्यावसर, च सूत्रे सति सम्भवत्यत सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

सोवागकुलसम्भूओ, गुणुत्तरधरो मुणी। हरिएस वलो नाम, आसि भिक्खू जिइंदिओ ॥ १ ॥

श्वपाका—चाण्डालास्तेषा कुलम्—अन्वयस्तस्मिन् सम्भूत—समुत्पन्न श्वपाककुलसम्भूत, तत्किं तत्कुलोत्पत्त्यनुरूप एवायमुत नेत्याह—गुणेपूत्तरा—प्रधाना गुणोत्तरा—ज्ञानादय तान् धारयति गुणोत्तरधर, पठन्ति च—'अणुत्तरधरे'त्ति, तत्र न विद्यते उत्तरम्—अन्यत्प्रधानमेषामित्यनुत्तरा, ते च प्रक्रमात्प्रकर्षप्राप्ता ज्ञानादय एव गुणास्तान् धारयत्यनुत्तरधरो, यद्वा अनुत्तरान् गुणान् धारयतीत्यनुत्तरधर इति मयूरव्यसकादिषु द्रष्टव्यो, मुणति—प्रतिजानीते सर्वविरतिमिति मुणि, श्वपाककुलोत्पन्नोऽपि कदाचित्सवासादिनाऽन्यथैव प्रतीत स्यादत आह—हरिकेश सर्वत्र हरिकेशतयैव प्रतीतो वलो नाम—बलाभिधान आसीद्—अभूत्, तस्य च मुनित्व प्रतिज्ञामात्रेणापि स्यादत आह—

---

१ कृत्वा प्रविशन्ती स्वगृह पुरोहितेन राजा भणित—एषा ऋषिभार्या ब्राह्मणाना कल्पते इति, दत्ता तस्मायेव। स च यज्ञे दीक्षयितुकाम साऽन्ये(ने)न लब्धा, साऽपि यज्ञपत्नीतिकृत्वा दीक्षिता।

कयरे आगच्छई दित्तरूवे ?, काले विकराले फुक्कनासे ।
ओमचेलए पंसुपिसायभूए, संकरदूसं परिहरिय कंठे ॥ ६ ॥

जातिमदो–जातिदर्पो यदुत ब्राह्मणा वयमिति तेन प्रतिस्तब्धाः पाठान्तरतः प्रतिबद्धा वा ये ते तथा, 'हिंसकाः' प्राण्युपमर्द्दकारिणः 'अजितेन्द्रिया' न वशीकृतस्पर्शनादयोऽत एवाब्रह्म–मैथुनं तच्चरितुं–आसेवितुं शीलं धर्म्मो वा येषां तेऽमी अब्रह्मचारिणो, वर्ण्यते हि तन्मते मैथुनमपि–'धर्म्मार्थं पुत्रकामस्य, स्वदारेष्वधिकारिणः । ऋतुकाले विधानेन, तत्र दोषो न विद्यते ॥ १ ॥' तथा 'अपुत्रस्य गतिर्नास्ती'त्यादि, अत एव बाला इव बालक्रीडितानुकारिष्वग्निहोत्रादिषु तत्प्रवृत्तेः, उक्तं हि केनचिद्–"अग्निहोत्रादिकं कर्म, बालक्रीडेति लक्ष्यते" ईदृशास्ते किमित्याह–'इदं' वक्ष्यमाणलक्षणं 'वचनं' वचः 'अब्बवि'त्ति आर्षत्वाद्वचनव्यत्ययेन अब्रुवन्—उक्तवन्तः । किं तदित्याह–'कयरे'त्ति कतरः, एकारस्तु प्राकृतत्वात्, तथा च तल्लक्षणं–'ए होति अयारंते' इत्यादि, एवमन्यत्रापि, आगच्छति –आयाति, पठ्यते च–'को रे आगच्छइ'त्ति, ते ह्यन्योऽन्यमाहुः–कोऽयमीदृक् 'रे' इति लघोरामन्त्रणं साक्षेपवचनेषु च दृश्यते, 'दित्तरूवे'त्ति दीप्तं रूपमस्येति दीप्तरूपः, दीप्तवचनं त्वतिबीभत्सोपलक्षकम्, अत्यन्तदाहिषु स्फोटकेषु शीतलकव्यपदेशवत्, विकृततया वा दुर्दर्शमिति दीप्तमिव दीप्तमुच्यते, कालो वर्णतो विकरालो दन्तुरतादिना भयानकः पिशाचवत् स एव विकरालकः, 'फोक'त्ति देशीपदं, ततश्च फोका–अग्रे स्थूलोन्नता च नासाऽस्येति फोक-

आहिताग्न्यादित्वाच गुप्तशब्दस्य परनिपात , एव वाग्गुप्तो–निरुद्धवाक्प्रसर , कायगुप्त असत्कायक्रियाविकलो, जितेन्द्रिय प्राग्वत्, पुनरुपादानमस्य कादाचित्कत्वनिराकरणार्थमतिशयख्यापनार्थं वा, 'भिक्षार्थं' भिक्षानिमित्त, न तु निष्प्रयोजनमेव, निष्प्रयोजनगमनस्यागमे निषिद्धत्वात्, 'बम्भइज्जमि'त्ति ब्रह्मणा–ब्राह्मणानामिज्या–यजन यस्मिन् सोऽय ब्रह्मेज्यस्तस्मिन्, 'जण्णवाड'त्ति यज्ञवाटे यज्ञपाटे वा 'उपस्थित' प्राप्त इति सूत्रार्थ ॥ त च तत्राऽऽयान्तमवलोक्य तत्रत्यलोका यदकुर्वंस्तदाह—

त पासिऊणमिज्जत, तवेण परिसोसिय । पतोवहिउवगरण, उवहसति अणारिया ॥ ४ ॥

'त'मिति चलनामान मुनि 'पासिऊण'त्ति दृष्ट्वा–निरीक्ष्य 'एज्जत'न्ति आयान्तमागच्छन्त तपसा—षष्ठाष्टमादिरूपेण परि–समन्ताच्छोषितम्–अपचितीकृतमासशोणितं कृशीकृतमितियावत् परिशोषित, तथा प्रान्त–जीर्णमलिनत्वादिभिरसारमुपधि –वर्षाकल्पादि स एव च उपकरण–धर्म्मशरीरोपष्टम्भहेतुरस्येति प्रान्तोपध्युपकरणस्त, यद्वोपधि [redacted] एवोपकरणम्–औपग्रहिक, द्वन्द्वगर्भश्च बहुव्रीहि , 'उवहसति'त्ति उपहसन्ति आर्या –उक्तनिरुक्ता न तथा अनार्या , यद्वा अनार्या—म्लेच्छा , ततश्च साधुनिन्दादिना अनार्या इव अनार्या इति सूत्रार्थ ॥ कथ पुनरनार्या ?, कथ चोपहसितवन्तस्ते ? इत्याह—

जाइमय पडिथद्धा, हिंसगा अजिइंदिया । अबभचारिणो बाला, इमं वयणमब्बवी ॥ ५ ॥

वर्त्तते, ततोऽयमर्थः—असद्दृष्टिपथादपसर, तथा किमिह स्थितोऽसि त्वं ?, नैवेह त्वया स्थातव्यमिति भाव इति सूत्रार्थः ॥ एवमधिक्षिप्तेऽपि तस्मिन् मुनौ प्रशमपरतया किञ्चिदप्यजल्पति तत्सान्निध्यकारी गण्डीतिन्दुकयक्षो यद-चेष्टत तदाह—

जक्खो तहिं तिंदुयरुक्खवासी, अणुकंपओ तस्स महामुणिस्स ।
पच्छायइत्ता नियगं सरीरं, इमाइं वयणाइं उदाहरित्था ॥ ८ ॥

यक्षो—व्यन्तरविशेषः, तस्मिन् अवसर इति गम्यते, तिन्दुको नाम वृक्षस्तद्वासी, तथा च सम्प्रदायः—तस्स तिंदुगवणस्स मज्झे महंतो तिंदुगरुक्खो, तहिं सो वसति, तस्सेव हेट्ठा चेइयं, जत्थ सो साहू चिट्ठति । 'अणुकंपउ'त्ति अनुशब्दोऽनुरूपार्थे ततश्चानुरूपं कम्पते—चेष्टत इत्यनुकम्पकः—अनुरूपक्रियाप्रवृत्तिः, कस्येत्याह—'तस्य' हरिकेशवलस्य 'महामुनेः' प्रशस्ततपस्विनः 'प्रच्छाद्य' प्रकर्षेणावृत्य निजकम्—आत्मीयं शरीरं, कोऽभिप्रायः ?—तप-स्विशरीर एवाविश्य स्वयमनुपलक्ष्यः सन्निमानि—वक्ष्यमाणानि 'वचनानि' वचांसि 'उदाहरित्थ'त्ति उदाहार्षीदुदा-हृतवानित्यर्थः, इति सूत्रार्थः ॥ कानि पुनस्तानि ?, इत्याह—

समणो अहं संजओ बंभयारी, विरओ धणपयणपरिग्गहाओ ।
परप्पवित्तस्स उ भिक्खकाले, अन्नस्स अट्ठा इहमागओमि ॥ ९ ॥

नास , अवमानि—असाराणि लघुत्वजीर्णत्वादिना चेलानि—वस्त्राण्यस्येत्यवमचेलक , पांशुना—रजसा पिशाचवद्भूतो—जात पांशुपिशाचभूत , गमकत्वात्समास , पिशाचो हि लौकिकाना दीर्घश्मश्रुनखरोमा पुनश्च पांशुभि समविध्वस्त इष्ट , तत सोऽपि निष्परिकर्म्मतया रजोदिग्धदेहतया चैवमुच्यते, 'सकरे'ति सङ्कर , स चेह प्रस्तावात्तृणभस्मगोमयाङ्गारादिमीलक उकुरुडिकेतियावत् तत्र दुष्य—वस्त्र सङ्करदुष्य, तत्र हि यदत्यन्तनिकृष्ट निरुपयोगि तल्लोकैरुत्सृज्यते, ततस्तत्प्रायमन्यदपि तथोक्त, यद्वा उज्झितधर्म्मकमेवासौ गृह्णातीत्येवमभिधान, 'परिहरिय'त्ति परिवृत्त्य, निक्षिप्येत्यर्थ , क्व ?—'कण्ठे' गले, स ह्यनिक्षिप्तोपकरण इति स्वमुपधिमुपादायैव भ्राम्यति, अत्र कण्ठैकपार्श्वे कण्ठशब्द इति कण्ठे परिवृत्त्येत्युच्यत इति सूत्रद्वयार्थ ॥ इत्थ दूरादागच्छन्नुक्त , सन्निकृष्ट चैन किमूचुरित्याह—

कयरे तुम इय अदसणिज्जे ?, काए व आसा इहमागओऽसि ? ।
ओमचेलगा पसुपिसायभूया, गच्छ क्खलाहि किमिह ठिओऽसि ? ॥ ७ ॥

कतरस्त्व, पाठान्तरश्च—को रे त्वम् , अधिक्षेपे रेशब्द 'इती' त्येवमदर्शनीयो—द्रष्टुमनर्ह , 'कया वा' किरूपया वा ?, 'आसा इहमागओऽसि'त्ति 'अचा सन्धिलोपौ बहुल'मितिवचनादेकारलोपो, मकारश्चागमिक , तत आशया—वाञ्छया 'इह' अस्मिन्यज्ञपट्टके आगत —प्राप्तोऽसि—भवसि, अवमचेलक पांसुपिशाचभूत इति च प्राग्वत् , पुनरनयोरुपादानमत्यन्ताधिक्षेपदर्शनार्थं, गच्छ—प्रव्रज, प्रक्रमादितो यज्ञवाटकात् , 'खलाहि'त्ति देशीपदमपसरेत्यस्यार्थे

जीवनं, आर्षत्वादिकारः, पठ्यते च–'जायणजीवणो'त्ति, इतिशब्दः स्वरूपपरामर्शकः, तत एवंस्वरूपं, यतश्चैवमतो मह्यमपि दद्ध्वमिति भावः, कदाचिदुत्कृष्टमेवासौ याचत इति तेषामाशयः स्यादत आह, अथवा जानीत मां याचनजीविनं–याचनेन जीवनशीलं, द्वितीयार्थे षष्ठी, पाठान्तरे तु प्रथमा, 'इती'त्यस्माद्धेतोः, किमित्याह–शेषावशेषम्–उद्धरितस्याप्युद्धरितम्, अन्तप्रान्तमित्यर्थः, लभतां–प्राप्नोतु, तपस्वी–यतिर्वराको वा भवदभिप्रायेण, अनेनात्मानं निर्दिशतीति सूत्रद्वयार्थः ॥ एवं यक्षेणोक्ते यज्ञवाटवासिनः प्राहुः—

उवक्खडं भोयण माहणाणं, अत्तट्ठियं सिद्धमिहेगपक्खं ।
न ऊ वयं एरिसमन्नपाणं, दाहामु तुज्झं किमिहं ठिओऽसि ? ॥ ११ ॥

'उपस्कृतं' लवणवेसवारादिसंस्कृतं 'भोयण'त्ति भोजनं माहनानां–ब्राह्मणानां आत्मनोऽर्थः आत्मार्थस्तस्मिन् भवमात्मार्थिकं, ब्राह्मणैरप्यात्मनैव भोज्यं न त्वन्यस्मै देयं, किमिति ?, यतः सिद्धं–निष्पन्नं 'इह' अस्मिन् यज्ञे एकः पक्षो–ब्राह्मणलक्षणो यस्य तदेकपक्षं, किमुक्तं भवति ?–यदस्मिन्नुपस्क्रियते न तद्ब्राह्मणव्यतिरिक्तायान्यस्मै दीयते, विशेषतस्तु शूद्राय, यत उक्तम्–"न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविः कृतम् । न चास्योपदिशेद् धर्मं, न चास्य व्रतमादिशेत् ॥ १ ॥" यतश्चैवमतो 'न तु' नैव वयमीदृशमुक्तरूपं अन्नं च–ओदनादि पानं च–द्राक्षापानाद्य-

वियरिज्जइ खज्जइ भुज्जई य, अन्न पभूय भवयाणमेय ।
जाणाहि मे जायणजीविणुत्ति, सेसावसेस लहओ तवस्सी ॥ १० ॥

श्रमणो–मुनि 'अह'मित्यात्मनिर्देश , किमभिधानत एवेत्याशङ्क्याह–सम्यग् यत सयत –असद्व्यापारेभ्य उपरत , अत एव च ब्रह्मचारी–ब्रह्मचर्यवान्, तथा विरतो निवृत्त , कुतो ?–धन च पचन च परिग्रहश्च धनपचनपरिग्रहमिति समाहार तस्मात्, तत्र धन चतुष्पदादि पचनमाहारनिष्पादन परिग्रहो द्रव्यादिषु मूर्च्छा, अत एव च परस्मै प्रवृत्त–परै स्वार्थं निष्पादितत्वेन परप्रवृत्त तस्य, तुरवधारणे, तत परप्रवृत्तस्यैव, न तु मदर्थं साधितस्येति भाव , 'भिक्षा-काले' भिक्षाप्रस्तावे, कदाचिदकालोऽय ब्रूयादित्येवमुक्त, 'अन्नस्य' अशनस्य 'अट्ठ'त्ति सूत्रत्वादर्थाय, भोजनार्थमिति भाव , 'इह' अस्मिन् यज्ञवाटके आगतोऽस्मि, अनेन यदुक्त–कतर त्व किमिहागतोऽसि ?, तत्प्रतिवचनमुक्तम्, एवमुक्ते च ते कदाचिदभिदध्यु –नेह किञ्चित् कस्मैचिद्दीयते न वा देयमस्त्यत आह–'वितीर्यते' दीयते दीनानाथा-दिभ्य खाद्यते खण्डखाद्यादि, भुज्यते च भक्तसूपादि, अद्यत इत्यत्र स सर्वमपि सामान्येनोच्यते, तदप्यल्पमेव स्यादत आह–'प्रभूत' बहु, प्रभूतमपि परकीयमेव स्यात्, अत आह–'भवता' युष्माकमेव सम्बन्धि 'एतदि'ति प्रत्यक्ष, तथा च 'जानीत' अवगच्छत 'मे'त्ति सूत्रत्वान्मा 'जायणजीविणो'त्ति याचनेन जीवन–प्राणधारणमस्येति याचन-

खित्ताणि अम्हं विइयाणि लोए, जहिं पकिन्ना विरुहंति पुण्णा ।
जे माहणा जाइविज्जोववेया, ताइं तु खित्ताइं सुपेसलाइं ॥ १३ ॥

'क्षेत्राणी'ति क्षेत्रोपमानि पात्राण्यस्माकं 'विदितानि' ज्ञातानि, वर्तन्त इति गम्यते, 'लोके' जगति 'जहिं'ति वचनव्यत्ययाद्येषु क्षेत्रेषु प्रकीर्णानीव प्रकीर्णानि—दत्तान्यशनादीनि 'विरोहन्ति' जन्मान्तरोपस्थानतः प्रादुर्भवन्ति 'पूर्णानि' समस्तानि, न तु तथाविधदोषसद्भावतः कानिचिदेव, स्यादेतद्—अहमपि तन्मध्यवर्त्त्येवेत्याशङ्क्याह—ये 'ब्राह्मणा' द्विजाः, तेऽपि न नामत एव, किन्तु जातिश्च—ब्राह्मणजातिरूपा विद्या च—चतुर्दशविद्यास्थानात्मिका ताभ्याम् 'उववेय'त्ति उपेता—अन्विता जातिविद्योपेताः, 'ताइं तु'त्ति तान्येव क्षेत्राणि 'सुपेसलाणि'त्ति सुपेशलं नाम शोभनं प्रीतिकरं वा इति वृद्धाः, ततश्च सुपेशलानि—शोभनानि प्रीतिकराणि वा, न तु भवादृशानि शूद्रजातीनि, शूद्रजातित्वादेव वेदादिविद्याबहिष्कृतानीति, यत उक्तम्—"सममश्रोत्रिये दानं, द्विगुणं ब्राह्मणब्रुवे । सहस्रगुणमाचार्ये, अनन्तं वेदपारगे ॥ १ ॥" इति सूत्रार्थः ॥ यक्ष उवाच—

कोहो अ माणो य वहो य जेसिं, मोसं अदत्तं च परिग्गहं च ।
ते माहणा जाइविज्जाविहीणा, ताइं तु खित्ताइं सुपावयाइं ॥ १४ ॥

'क्रोधश्च' रोषः 'मानश्च' गर्वः, चशब्दान्मायालोभौ च, 'वधश्च' प्राणिघातो 'येषा'मिति प्रक्रमाद्भवतां

नपान 'दाहामो'त्ति दास्याम 'तुज्झ'ति तुभ्य, किमिह स्थितोऽसि ?, नैवेहावस्थितावपि तव किञ्चिदिति भाव इति सूत्रार्थ ॥ यक्ष आह—

थलेसु बीयाइ वयंति कासया, तहेव निन्नेसु य आससाए ।
एयाइ सद्धाइ दलाह मज्झ, आराहए पुण्णमिणं खु खित्तं ॥ १२ ॥

'स्थलेषु' जलावस्थितिविरहितेषूच्चभूभागेषु 'बीजानि' गोधूमशाल्यादीनि 'वपन्ति' रोपयन्ति 'कासग'त्ति कर्षका कृपीवला, 'तथैव' यथोच्चस्थलेष्वेवमेव 'निम्नेषु च' नीचभूभागेषु च 'आससाए'त्ति आशसया–यद्यत्यन्तप्रवर्षण भावि तदा स्थलेषु फलावाप्तिरथ यथा तदा निम्नेष्वित्येवमभिलाषात्मिकया, एतयैवैतया–एतदुपमया, कोऽर्थ ?–उक्तरूपकर्षकाशसातुल्यया 'श्रद्धया' वाञ्छया 'दलाह'त्ति दद्ध्व मह्य, किमुक्त भवति ?–यद्यपि भवता निम्नोपमत्वबुद्धिरात्मनि मयि तु स्थलतुल्यताधी तथापि मह्यमपि दातुमुचितम्, अथ स्याद्–एव दत्तेऽपि न फलावाप्तिरित्याह–'आराहए पुण्णमिण खु'त्ति खुशब्दस्यावधारणार्थस्य भिन्नक्रमत्वादाराधयेदेव–सम्यक् तात्साधयेदेव, नात्रान्यथाभाव, 'पुण्य' शुभमिद–परिदृश्यमान क्षेत्रमिव क्षेत्र पुण्यशस्यप्ररोहहेतुतया, आत्मानमेव पात्रभूतमेवमाह, पठ्यते च—'आराहगा होहिम पुण्णखेत्त'त्ति आराधका–आवर्जका गम्यमानत्वात्पुण्यस्य भवत, अनेन दानफलमाह, कुत एतदित्याह–इद पुण्यक्षेत्र–पुण्यप्राप्तिहेतु क्षेत्र यत इति गम्यते, इति सूत्रार्थ ॥ यक्षवचनानन्तरं त इदमाहु.—

क्रोधाद्युपेतत्वेनातिशयपापहेतुत्वादिति सूत्रार्थः ॥ कदाचित्ते वदेयुः—वेदविद्याविदो वयमत एव च ब्राह्मणजातयस्तत्कथं जातिविद्याविहीना इत्युक्तवानसीत्याह—

तुब्भित्थ भो ! भारहरा गिराणं, अट्ठं न याणाह अहिज्ज वेए ।
उच्चावयाइं मुणिणो चरंति, ताइं तु खित्ताइं सुपेसलाइं ॥ १५ ॥

यूयमत्रेति—लोके 'भो' इत्यामन्त्रणे भारं धरन्तीति भारधराः, पाठान्तरतो वा—'भारवहा' वा, कासां ?—'गिरां' वाचां, प्रक्रमाद्वेदसम्बन्धिनीनाम्, इह च भारस्तासां भूयस्त्वमेव, किमिति भारधरा भारवहा वेति उच्यते, यतोऽर्थम्—अभिधेयं न जानीथ—नाववुध्यध्वे ?, 'अहिज्ज'त्ति अपेगम्यमानत्वादधीत्यापि 'वेदान्' ऋग्वेदादीन्, तथाहि—'आत्मा वा रे ज्ञातव्यो मन्तव्यो निदिध्यासितव्यः'' तथा "कर्म्मभिर्मृत्युमृषयो निषेदुः, प्रजावन्तो द्रविणमन्विच्छमानाः, अथापरं कर्म्मभ्योऽमृतत्वमानशुः,—परेण नाकं निहितं गुहायां, विभ्राजते यद्यतयो विशन्ति । वेदाहमेनं पुरुषं महान्तं, तमेव विदित्वा अमृतत्वमेति ॥ १ ॥ नान्यः पन्थाः अयनाये'त्यादिवचनानां यद्यर्थवेत्तारः स्युस्तत्किमित्थं यागादि कुर्वीरन् ?, ततस्तत्त्वतो वेदविद्याविदो भवन्तो न भवन्ति, तत्कथं जातिविद्यासम्पन्नत्वेन क्षेत्रभूताः स्युः ? । कानि तर्हि भवदभिप्रायेण क्षेत्राणीत्याह—'उच्चावयाइं'ति उच्चावचानि—उत्तमाधमानि मुनयश्चरन्ति—भिक्षानिमित्तं पर्यटन्ति गृहाणि, ये इति गम्यते, न तु भवन्त इव पचनाद्यारम्भप्रवृत्तयः, त एव परमार्थतो वेदार्थं विदन्ति, तत्रापि

ब्राह्मणाना 'मोस'ति मृषा—अलीकभाषण 'अदत्त'ति पदेऽपि पदैकदेशस्य दर्शनात्सत्यभामा सत्येतिवत् अदत्तादानमुक्त, चशब्दान्मैथुन, 'परिग्रहश्च' गोभूम्यादिस्वीकार , अस्तीति सर्वत्र गम्यते, 'ते' इति क्रोधाद्युपेता यूय ब्राह्मणा जातिविद्याभ्या विहीना—रहिता जातिविद्याविहीना , क्रियाकर्मविभागेन हि चातुर्वर्ण्यव्यवस्था, यत उक्तम्—"एकवर्णमिद सर्वं, पूर्वमासीद्युधिष्ठिर ! । क्रियाकर्मविभागेन, चातुर्वर्ण्यं व्यवस्थितम् ॥ १ ॥ ब्राह्मणो ब्रह्मचर्येण, यथा शिल्पेन शिल्पिक. । अन्यथा नाममात्र स्यादिन्द्रगोपककीटवत् ॥ २ ॥" न चैवविधक्रिया ब्रह्मचर्यात्मिका कोपाद्युपेतेषु तत्त्वत सम्भवत्यतो न तावज्जातिसम्भव , तथा विद्यापि सच्छास्त्रात्मिका, सच्छास्त्रेषु च सर्वेष्वहिंसादिपञ्चकमेव वाच्य, यत उक्तम्—"पञ्चैतानि पवित्राणि, सर्वेषा धर्मचारिणाम् । अहिंसा सत्यमस्तेय, त्यागो मैथुनवर्जनम् ॥ १॥" तद्युक्तत्व च तत्त्वज्ञानादेव भवति, ज्ञानस्य तु विरति फल रागाद्यभावश्च, यत उक्तम् —"तज्ज्ञानमेव न भवति यस्मिन्नुदिते विभाति रागगण । तमस कुतोऽस्ति ? शक्तिर्दिनकरकिरणाग्रत स्थातुम् ॥१॥" न चैवमब्रह्याद्यारम्भिषु कोपादिमत्सु च भवत्सु विरते रागाद्यभावस्य च सम्भवोऽस्ति, न च निश्चयनयमतेन फलरहित वस्तु सत्, तथा च निश्चयो यदेवार्थक्रियाकारि तदेव परमार्थसदित्याह, तत. स्थितमेतत्—'ताइ तु'त्ति तुरवधारणे भिन्नक्रमश्च, ततश्च तानि भवद्विदितानि ब्राह्मणलक्षणानि क्षेत्राणि सुपापकान्येव, न तु सुपेशलानि,

समिईहिं मज्झं सुसमाहियस्स, गुत्तीहि गुत्तस्स जिइंदियस्स।
जइ मे न दाहित्थ अहेसणिज्जं, किमज्ज जन्नाण लभित्थ लाभं ? ॥ १७ ॥

समितिभिः-ईर्यासमित्यादिभिर्मह्यं सुष्ठु समाहिताय-समाधिमते सुसमाहिताय गुप्तिभिः-मनोगुप्त्यादिभिर्गुप्ताय जितेन्द्रियायेति च प्राग्वत्, सर्वत्र च चतुर्थ्यर्थे षष्ठी, 'यदी'त्यभ्युपगमे 'मे' मह्यं 'मज्झं'तीत्यस्य व्यवहितत्वात् क्रिया प्रति पुनरुपादानमदुष्टमेव 'न दास्यथ' न वितरिष्यथ, 'अथे'त्युपन्यासे आनन्तर्ये वा, 'एषणीयम्' एषणाविशुद्धमन्नादिकं, किं न किञ्चिदित्यर्थः, 'अज्ज'त्ति अद्य ये यज्ञास्तेषामिदानीमारब्धयज्ञानां, यद्वा 'अज्ज'त्ति हे आर्या ! यज्ञानां 'लभित्थ'त्ति सूत्रत्वाल्लप्स्यध्वे-प्राप्स्यध्वं 'लाभं' पुण्यप्राप्तिरूपं, पात्रदानादेव हि विशिष्टपुण्यावाप्तिः, अन्यत्र तु तथाविधफलाभावेन दीयमानस्य हानिरेव, उक्तं हि-"दधिमधुघृतान्यपात्रे क्षिप्तानि यथाऽऽशु नाशमुपयान्ति। एवमपात्रे दत्तानि केवलं नाशमुपयान्ती ॥ १ ॥" ति सूत्रार्थः ॥ इत्थं तेनोक्ते यदध्यापकप्रधान आह तदुच्यते—

के इत्थ खत्ता उवजोइया वा, अज्झावया वा सह खंडिएहिं ?।
एयं खु दंडेण फलेण हंता, कंठंमि घित्तूण खलिज्ज जो णं ॥ १८ ॥

के 'अत्रे'त्येतस्मिन् स्थाने 'क्षत्राः' क्षत्रियजातयो वर्णसङ्करोत्पन्ना वा तत्कर्म्मनियुक्ताः 'उवजोइय'त्ति ज्योतिषः

भैक्षवृत्तेरेव समर्थितत्वात्, तथा च वेदानुवादिन –"चरेद् माधुकरीं वृत्तिमपि म्लेच्छकुलादपि। एकान्न नैव भुञ्जीत, वृहस्पतिसमादपि ॥ १ ॥" यदिवोच्चावचानि–विकृष्टाविकृष्टतया नानाविधानि, तपासीति गम्यते, उच्चव्रतानि वा शेषव्रतापेक्षया महाव्रतानि ये मुनयश्चरन्ति—आसेवन्ते, न तु यूयमिवाजितेन्द्रिया अशीला वा, तान्येव मुनिलक्ष-णानि क्षेत्राणि सुपेशलानीति प्राग्वदिति सूत्रार्थ ॥ इत्थमध्यापक यक्षेण निर्मुखीकृतमवलोक्य तच्छात्रा प्राहु —

अज्झावयाण पडिकूलभासी, पभाससे किन्नु सगासि अम्ह ?।
अवि एय विणस्सउ अन्नपाण, न य ण दाहामु तुम नियठा ! ॥ १६ ॥

अध्यापयन्ति–पाठयन्तीत्यध्यापका –उपाध्यायास्तेषा प्रतिकूल–प्रतिलोम भाषते वक्तीत्येवशील प्रतिकूलभाषी सन् प्रकर्षेण भाषसे–ब्रूषे प्रभाषसे, किमिति क्षेपे, नुरित्यक्षमाया, ततश्च धिग् भवन्त न वय क्षमामहे यदित्थ भवान् ब्रूते सकाशे–समीपे 'अम्ह'त्ति अस्माकम्, अपि सम्भावनाया, 'एतत्' परिदृश्यमान 'विनश्यतु' कथित-त्वादिना स्वरूपहानिमाप्नोतु 'अन्नपानम्' ओदनकाञ्जिकादि, 'न च' नैव 'ण'मिति वाक्यालङ्कारे 'दाहामु'त्ति दास्या-मस्तव हे निर्ग्रन्थ !–निष्किञ्चन !, गुरुप्रत्यनीको हि भवान्, अन्यथा तु कदाचिदनुकम्पया किञ्चिदन्तप्रान्तादि दद्यामोऽपीति भाव इति सूत्रार्थ ॥ यक्ष आह—

रण्णो तहिं कोसलियस्स धूया, भद्दत्ति नामेण अणिंदियंगी।
तं पासिया संजय हम्ममाणं, कुद्धे कुमारे परिनिव्ववेइ ॥ २० ॥

'राज्ञो' नृपतेस्तत्र—यज्ञवाटे कोशलायां भवः कौशलिकस्तस्य 'धूय'त्ति दुहिता भद्रेति 'नाम्ना'अभिधानेन 'अनिन्दिताङ्गी' कल्याणशरीरा 'तं' हरिकेशबलं 'पासिय'त्ति दृष्ट्वा 'सजय'त्ति संयतं तस्यामप्यवस्थायां हिंसादेः सम्यगुपरतं 'हन्यमानं' दण्डादिभिस्ताड्यमानं 'क्रुद्धान्' कोपवतः 'कुमारान्' उक्तरूपान् 'परिनिर्वापयति' कोपाग्निविध्यापनात् समन्तात् शीतीकरोति उपशमयतीतियावदिति सूत्रार्थः ॥ सा च तान् परिनिर्वापयन्ती तस्य माहात्म्यमतिनिःस्पृहतां चाह—

देवाभिओगेण निओइएणं, दिन्ना मु रण्णा मणसा न झाया।
नरिंददेविंदऽभिवंदिएणं, जेणामि वंता इसिणा स एसो ॥ २१ ॥
एसो हु सो उग्गतवो महप्पा, जिइंदिओ संजओ बंभयारी।
जो मे तया निच्छई दिज्जमाणी, पिउणा सयं कोसलिएण रण्णा ॥ २२ ॥
महाजसो एस महाणुभागो, घोरव्वओ घोरपरक्कमो य।
मा एयं हीलह अहीलणिज्जं, मा सव्वे तेएण भे निद्दहिज्जा ॥ २३ ॥

समीपे ये त उपज्योतिषस्त एवोपज्योतिष्का.—अग्निसमीपवर्त्तिनो महानसिका ऋत्विजो वा 'अध्यापका.' पाठका, ते वा उभयत्र वा विकल्पे 'सहे'ति युक्ता, कै ?—'खण्डिके' छात्रे, ये किमित्याह—'एन' श्रवणकं 'दण्डेन' वंशयष्ट्यादिना 'फलेन' बिल्वादिना 'हते'ति हत्वा—ताडयित्वा यद्वा 'दण्डेने'ति कूर्प्पराभिघातेन 'फलेन' च मुष्टिप्रहारेणेति वृद्धा, ततश्च 'कण्ठे' गले 'गृहीत्वा' उपादाय 'खलेज्ज'त्ति स्खलयेयु—निष्काशयेयु, 'यो'त्ति वचनव्यत्ययाद्ये इत्थमेतदभिघाते निष्काशने वा शक्ता, 'णमि'ति वाक्यालङ्कारे इति सूत्रार्थ ॥ अत्रान्तरे यदभूत्तदाह—

अज्झावयाण वयण सुणित्ता, उद्धाइया तत्थ बहू कुमारा ।
दडेहिं विलेहिं कसेहिं चेव, समागया त इसि तालयति ॥ १९ ॥

अध्यापकानाम्—उपाध्यायानाम्, एकत्वेऽपि पूज्यत्वाद्बहुवचन, 'वचनम्' उक्तरूप 'श्रुत्वा' आकर्ण्य 'उद्धाविता' वेगेन प्रसृता 'तत्र' यत्रासौ मुनिस्तिष्ठति 'बहव' प्रभूता 'कुमारा' द्वितीयवयोवर्त्तिनश्छात्रादय इति गम्यते, ते हि क्रीडनकपरा इत्यहो क्रीडनकमागतमिति रभसतो 'दण्डै' वंशयष्ट्यादिभिर्वेत्रै—जलजवंशात्मकै 'कशै' चर्मविकारै, च समुच्चये, एवेति पूरणे, 'समागता' सम्प्राप्ता मिलिता वा तमृषिं—मुनि 'ताडयन्ति' घ्नन्ति, सर्वत्र वर्त्तमाननिर्देश प्राग्वत् इति सूत्रार्थ ॥ अस्मिंश्चावसरे—

द्रसामर्थ्यो, यतोऽयमीदृक् ततः किमित्याह—'मा' इति निषेधे 'एनं' यतिं 'हीलयत' अवधूतं पश्यत 'अहीलनीयम्' अवज्ञातुमनुचितं, किमित्यत आह–मा सर्वान्–समस्तांस्तेजसा–तपोमाहात्म्येन 'भे' भवतो निर्धाक्षीद्—भस्मसात्कार्षीद्, अयं हि हीलितो यदि कदाचित्क्रुध्येत्तदा सर्वं भस्मसादेव कुर्यादिति भाव इति सूत्रत्रयार्थः ॥ अत्रान्तरे मा भूदेतस्या वचनं मृषेति यद्यक्षः कृतवांस्तदाह—

एयाइं तीसे वयणाइं सुच्चा, पत्तीइ भद्दाइ सुभासियाइं ।
इसिस्स वेयावडियट्ठयाए, जक्खा कुमारे विणिवारयंति ॥ २४ ॥
ते घोररूवा ठिअ अंतलिक्खे, असुरा तहिं तं जणं तालयंति ।
ते भिन्नदेहे रुहिरं वमंते, पासित्तु भद्दा इणमाहु भुज्जो ॥ २५ ॥

'एतानि' अनन्तरोक्तानि 'तस्याः' अनन्तरोक्तायाः 'वचनानि' भाषितानि 'श्रुत्वा' निशम्य 'पत्न्याः' यज्ञवाटकाधिपतेः सोमदेवपुरोहितस्य, तस्यैव वा मुनेरिति गम्यते, 'भद्रायाः' भद्राभिधानायाः 'सुभाषितानि' सूक्तानि वचनानीति योज्यते, ऋषेः–तस्यैव तपस्विनः 'वेयावडियट्ठयाए'त्ति सूत्रत्वाद्वैयावृत्त्यार्थमेतत् प्रत्यनीकनिवारणलक्षणे प्रयोजने व्यावृत्ता भवाम इत्येवमर्थं यक्षाः, यक्षपरिवारस्य बहुत्वात् बहुवचनं, कुमारान् प्रक्रमात्तानेवोपहन्तॄन् 'विनिपातयन्ति' विविधं नितरां पातयन्ति—भूमौ विलोलयन्ति, पठ्यते च–'विणिवारयंति'त्ति विशेषेणोपहतिं

देवस्य–अमरस्याभियोगो–बलात्कारो देवाभियोगस्तेन 'नियोजितेन' व्यापारितेन न त्वप्रियेतिकृत्वा 'दिन्न गु'त्ति दत्ताऽस्मि, अहं यक्षे इति गम्यते, दत्ता च केन ?–राज्ञा–प्रक्रमात्कौशलिकेन, तथापि 'मणसा'त्ति अपेर्गम्यमानत्वान्मनसाऽपि–चित्तेनापि 'न ध्याता' न चिन्तिता नाभिलषितेतियावत्, प्रक्रमादेतेन मुनिना, कीदृशेन ?–नरेन्द्राश्च–नृपतयो देवेन्द्राश्च–शक्रादयो नरेन्द्रदेवेन्द्रास्तैरभि–आभिमुख्येन वन्दित –स्तुतो नरेन्द्रदेवेन्द्राभिवन्दितस्तेन, अनभिध्याताऽपि नृपोपरोधत स्वीकृता स्यादत आह–येनास्म्यहं 'वान्ता' त्यक्ता 'ऋषिणा' मुनिना, स एष युष्माभिर्ये कदर्थयितुमारब्ध, ततो न कदर्थयितुमुचित इति भाव, पुनरिममेवार्थं समर्थयितुमाह–'एसो हु सो'त्ति, एष एव स न मनागप्यत्र सशय, उग्र—उत्कट दारुणं वा कर्म्मशत्रून् प्रति तप —अनशनाद्यस्येति उग्रतपा, अत एव महान्—प्रशस्यो विशिष्टवीर्योल्लासत आत्मा अस्येति महात्मा, जितेन्द्रिय सयतो (अ० ९०००) ब्रह्मचारी च प्राग्वत्, स इति क ? इत्याह–यो 'मि'त्ति मा 'तदा' तस्मिन् विवक्षितसमये 'नेच्छति' नाभिलषति 'दीयमाना' निसृज्यमाना, केन ?–'पित्रा' जनकेन 'स्वय' आत्मना, न तु प्रधानप्रेषणादिना, तेनापि कीदृशा ?–कौशलिकेन राज्ञा, न त्वितरजनसाधारणेन, तदनेन विभूतावपि नि स्पृहत्वमुक्त, पुनस्तन्माहात्म्यमाह—'महायसा' अपरिमितकीर्त्ति 'एष' प्रत्यक्षो मुनिर्महानुभाग —अतिशयाचिन्त्यशक्ति, पाठान्तरतो महानुभावो वा, तत्र चानुभाव —शापानुग्रहसामर्थ्यं, 'घोरव्रतो' धृतात्यन्तदुर्द्धरमहाव्रत 'घोरपराक्रमश्च' कषायादिजय प्रति रौ-

मान्, शापानुग्रहसमर्थ इत्यर्थः, यद्वा आसीविष इव आसीविषः, यथा हि तमत्यन्तमवजानानो मृत्युमेवाप्नोति, एवमेनमपि मुनिमवमन्यमानानामवश्यं भावि मरणमित्याशयः, कुतः पुनरयमेवंविधो ?, यतः–उग्रतपाः प्राग्वत्, 'महेसि'त्ति महान्—बृहन् शेषस्वर्गाद्यपेक्षया मोक्षस्तमिच्छति—अभिलषतीति महदेषी महर्षिर्वा, घोरव्रतो घोरपराक्रमश्च पूर्ववत्, यतश्चैवमतः 'अगणिं व'त्ति अग्निं–ज्वलनं, वाशब्द इवार्थो भिन्नक्रमश्च, ततः 'पक्खंद'त्ति प्रस्कन्दथेव–आक्रामथेव, केव ?–'पतंगसेण'त्ति उपमार्थस्य गम्यमानत्वात्पतङ्गानां–शलभानां सेनेव सेना–महती सन्ततिः पतङ्गसेना तद्वत्, यथा हि असौ तत्र निपतन्त्याशु घातमाप्नोत्येवं भवन्तोऽपीति भावः, ये यूयमनुकम्पितं भिक्षुं भिक्षुकं 'भक्तकाले' भोजनसमये, तत्र दीनादेरवश्यं देयमिति शिष्टसमयो यूयं तु न केवलं न यच्छत किन्तु तत्रापि 'वधह'त्ति विध्यथ–ताडयथ, अयमाशयो—यतोऽयमासीविषादिविशेषणान्वितो मुनिरतो गिरिनखखननादिप्रायमेव यदेनं भक्तकालेऽपि भक्तार्थिनमित्थं विध्यथ। अथ स्वकृत्योपदेशमाह–'शीर्षेण' शिरसा 'एनं' मुनिं 'शरणार्थं' रक्षणार्थमाश्रयमुपेत–अभ्युपगच्छत, किमुक्तं भवति ?–शिरःप्रणामपूर्वकमयमेवास्माकं शरणमिति प्रपद्यध्वं, 'समागताः' सम्मिलिताः 'सर्वजनेन' समस्तलोकेन, सहार्थे तृतीया, 'यूयं' भवन्तो, यदीच्छत—अभिलषत 'जीवितं' प्राणधारणात्मकं धनं वा द्रव्यं, न तस्मिन् कुपिते जीवितव्यादिरक्षाक्षममन्यच्छरणमस्ति, किमित्येवमत आह—'लोकमपि' भुवनमप्येष कुपितः—क्रुद्धो 'दहेद्' भस्मसात्कुर्यात्, तथा च वाचकः—"कल्पान्तोग्रानलवत्प्रज्वलनं

कुर्वतो निराकुर्वन्ति, तथा 'ते' इति यक्षा 'घोररूपा' रौद्राकारधारिण 'ठिय'त्ति स्थिता 'अन्तरिक्षे' आकाशे 'असुरा' आसुरभावान्वितत्वात् त एव यक्षा 'तस्मिन्' यज्ञवाटे 'तम्' उपसर्गकारिण 'जन' छात्रलोक 'ताडयन्ति' घ्नन्ति, ततस्तान् कुमारान् भिन्ना–विदारिता प्रक्रमाद्यक्षप्रहारैर्देहा –शरीराणि येषा ते भिन्नदेहास्तान् रुधिर–शोणितं वमत –उद्गिरत 'पासित्त'त्ति दृष्ट्वा 'भद्रा' सैव कौशलिकराजदुहिता 'इद' वक्ष्यमाण 'आहु'त्ति वचनव्यत्ययेनाह– ब्रूते 'भूयः' पुनरिति सूत्रद्वयार्थ ॥ किं तदित्याह—

गिरिं नहेहिं खणह, अय दंतेहिं खायह। जायतेय पाएहि हणह जे भिक्खु अवमन्नह ॥ २६ ॥

आसीविसो उग्गतवो महेसी, घोरव्वओ घोरपरक्कमो य। अगणिं व पक्खद पयगसेणा, जे भिक्खु भत्तकाले वहेह

सीसेण एय सरण उवेह, समागया सव्वजणेण तुम्हे।

जइ इच्छह जीविय वा धण वा, लोगपि एसो कुविओ डहिज्जा ॥ २८ ॥

'गिरिं' पर्वत 'नखै' कररुहै 'खनथ' विदारयथ, इह च मुख्यखननक्रियाद्यसम्भवादिवशब्दमन्तरेणाप्युपमार्थो गम्यते, ततश्च खनथेव खनथ, 'अयो' लोह 'दन्तैः' दशनै खादथेव खादथ, जाततेजसम्–अग्नि पादै –चरणैर्हथेव हथ, ताडयथेत्यर्थ, ये वय किं कुर्मः इत्याह–ये यूय भिक्षुं प्रक्रमादेन 'अवमन्नह'त्ति अवमन्यध्वे—अवधीरयथ, अनर्थफलत्वात् भिक्ष्वपमानस्येति भाव, कथमिदमित्याह—आस्यो–दंष्ट्रास्तासु विषमस्येत्यासीविष–आसीविषलब्धि-

च–नयनानि जिह्मनेत्राणि येषां ते तथा तान्, 'तानि'त्युक्तरूपान् 'दृष्ट्वा' अवलोक्य 'खंडिय'त्ति आर्षत्वात्सुपो लुकि खण्डिकान्–छात्रान् काष्ठभूतान्–अत्यन्तनिश्चेष्टतया काष्ठोपमान् विगतमिव विगतं मनः–चित्तमस्येति विमनाः, विषण्णः–कथममी प्रवणीभविष्यन्तीति चिन्तया व्याकुलितः 'अथे'ति दर्शनानन्तरं 'ब्राह्मणो'द्विजातिः 'स' इति सोमदेवनामा 'ऋषिं' तमेव हरिकेशबलनामानं मुनिं 'प्रसादयति' प्रसत्तिं ग्राहयति, सह भार्यया—पत्न्या तयैव भद्राभिधानया वर्त्तते इति सभार्यांकः, कथमित्याह–हीलां च—अवज्ञां निन्दां च—दोषोद्घट्टनं 'खमाह'त्ति क्षमस्व सहस्व 'भंतेति' सूत्रद्वयार्थः ॥ पुनः स प्रसादनामेवाह—

वालेहिँ मूढेहिँ अयाणएहिं, जं हीलिया तस्स खमाह भंते !।
महप्पसाया इसिणो हवंति, न हु मुणी कोवपरा हवंति ॥ ३१ ॥

वालैः—शिशुभिर्मूढैः–कषायमोहनीयोदयाद्विचित्तता गतैः अत एव चाज्ञैः–हिताहितविवेकविकलैः 'यदि'त्युपप्रदर्शने 'हीलिताः' अवज्ञाताः 'तस्स'त्ति सूत्रत्वात् तत् 'खमाह'त्ति क्षमध्वं भदन्त !, अनेनैतदाह—यतोऽमी शिशवो मूढा अज्ञानाश्च तत्किमेषामुपरि कोपेन ?, यतोऽनुकम्पनीया एवामी, उक्तं च केनचिद्–"आत्मद्रुहममर्यादं, मूढमुज्झितसत्पथम् । सुतरामनुकम्पेत, नरकार्चिष्मदिन्धनम् ॥ १ ॥" किं च–महान् प्रसादः–चित्तप्रसत्तिरूपो येषां ते

तेजसैकतस्तेषाम् ॥१॥" तथा लौकिका अप्याहु—"न तत् दूर यदश्वेषु, यवाग्नौ यच मारुते। विषे च रुधिरग्रासे, साधौ च कृतनिश्चये ॥ १ ॥" इति सूत्रत्रयार्थं ॥ सम्प्रति तत्पतिस्तान् यादृशान् ददर्श दृष्ट्वा च यदचेष्टत तदाह—

अयहेडियपिट्ठिसउत्तमंगे, पसारियाबाहुअकम्मचिट्ठे।
निब्भेरियच्छे रुहिरं वमंते, उड्ढमुहे निग्गयजीहनित्ते ॥ २९ ॥
ते पासिया खंडिय कट्ठभूए, विमणो विसन्नो अह माहणो सो।
इसिं पसाएइ सभारियाओ, हीलं च निंदं च खमाह भंते! ॥ ३० ॥

'अवे'त्यधो 'हेडिय'त्ति हेठितानि—बाधितानि, किमुक्तं भवति?—अधोनामितानि, पठन्ति च 'आवडिए'त्ति तत्र सूत्रत्वादवकोटितानि—अधस्तादामोटितानि 'पट्ठि'त्ति पृष्ठं यावत् तदभिमुखं वा सन्ति—शोभनान्युत्तमाङ्गानि येषां ते अवहेठितपृष्ठसदुत्तमाङ्गा अवकोटितपृष्ठसदुत्तमाङ्गो वा, प्राग्वन्मध्यपदलोपी समासस्तान्, 'पसारियाबाहु-अकम्मचिट्ठे'त्ति प्रसारिता—विरलीकृता बाहवो—भुजा यैर्येषां वा ते तथा ततस्ते च ते अकर्मचेष्टाश्च—अविद्यमान-कर्म्महेतुव्यापारतया प्रसारितबाहुकर्म्मचेष्टास्तान्, यद्वा क्रियन्त इति कर्म्माणि—अग्नौ समित्प्रक्षेपणादीनि तद्वि-षया चेष्टा कर्मचेष्टेह गृह्यते, 'निब्भेरिय'त्ति प्रसारिता—न्यक्षीणि—लोचनानि येषां ते तथोक्तास्तान्, रुधिरं वमद्—उद्गिरत् 'उड्ढमुह'त्ति ऊर्ध्वमुखान्—उन्मुखीभूतवक्त्रान्, अत एव निर्गतानि—निःसृतानि जिह्वाश्च प्रतीता नेत्राणि

अत्थं च धम्मं च वियाणमाणा, तुब्भे नवि कुप्पह भूइपन्ना ।
तुब्भं तु पाए सरणं उवेमो, समागया सव्वजणेण अम्हे ॥ ३३ ॥

अर्यत इत्यर्थो—ज्ञेयत्वात्सर्वमेव वस्तु, इह तु प्रक्रमाच्छुभाशुभकर्म्मविभागो रागद्वेषविपाको वा परिगृह्यते, यद्वा अर्थः—अभिधेयः स चार्थाच्छास्त्राणामेव तं, चशब्दस्तद्गतानेकभेदसंसूचकः, धर्मः—सदाचारो दशविधो वा यतिधर्म्मस्तं च 'वियाणमाणे'त्ति विशेषेण विविधं वा जानन्तः—आगच्छन्तो यूयं 'नापि' नैव कुप्यथ—क्रोधं कुरुध्वं, भूतिप्रज्ञा इति, भूतिर्मङ्गलं वृद्धी रक्षा चेति वृद्धाः, प्रज्ञायतेऽनया वस्तुतत्त्वमिति प्रज्ञा, ततश्च भूतिः—मङ्गलं सर्वमङ्गलोत्तमत्वेन वृद्धिर्वा वृद्धिविशिष्टत्वेन रक्षा वा प्राणिरक्षकत्वेन प्रज्ञा—बुद्धिरस्येति भूतिप्रज्ञः, अतश्च 'तुब्भं तु'त्ति तुशब्दस्यैवकारार्थत्वात् युष्माकमेव पादौ—चरणौ शरणमुपेमः—उपगच्छामः समागताः—मिलिताः, केन सह ?—सर्वजनेन, वयमिति सूत्रार्थः ॥ किं च—

अच्चेमु ते महाभागा!, न ते किंचन नाचिमो । भुंजाहि सालिमं कूरं, नाणावंजणसंजुयं ॥ ३४ ॥

'अर्चयामः' पूजयामस्ते—तव सम्बन्धि सर्वमपीति गम्यते, प्रविश पिण्डिमित्युक्ते यथा गृहमिति भक्षयेति च, महाभाग ! अतिशयाचिन्त्यशक्तियुक्तत्वेनेति, नैव 'ते' तव किञ्चिदिति चरणरेण्वादिकमपि नार्चयामो-न पूजयामो, अपि तु सर्वमर्चयामः, अस्य च पूर्वेणैव गतार्थत्वे पुनरभिधानमन्वयव्यतिरेकाभ्यामुक्तोऽर्थः सुखावगमो भवतीतिकृत्वा,

महाप्रसादा ऋषय –साधवो भवन्ति, व्यतिरेकमाह—'न हु'त्ति न पुनर्मुनयो–यतय 'कोपपरा' क्रोधवशगा भवन्ति, भिन्नवाक्यत्वाच्च मुनिग्रहणमदुष्टमेवेति सूत्रार्थ ॥ मुनिराह—

पुव्वि च इण्हि च अणागय च, मणप्पओसो न मे अत्थि कोई ।
जक्खा हु वेयावडिय करिंति, तम्हा हु एए निहया कुमारा ॥ ३२ ॥

'पुव्वि च'त्ति पूर्वं च पुरा इदानीं च–अस्मिन् काले 'अणागय चे'ति अनागते च भविष्यत्काले मन प्रद्वेष –चित्तानुशयलक्षणो न 'मे' ममास्तीत्युपलक्षणत्वादासीद्भविष्यति च, 'कोऽपी'त्यल्पोऽपि, इह च भाविनि प्रमाणाभावेऽपि 'अनागत प्रत्याचक्ष' इति वचनादनागतस्यापि तस्य निषिद्धत्वाच्छ्रुतज्ञानबलत कालत्रयपरिज्ञानसम्भवाच्चैवमभिधान, पठन्ति च 'पुव्विं च पच्छा व तहेव मज्झे' तत्र च पूर्वं वा पश्चाद्वेति विहेठनकालापेक्ष तथैव मध्ये विहेठनकाल एव, न च कुमारावहेठनादिदर्शनात्प्रत्यक्षविरुद्धता शङ्कनीया, 'यक्षा' देवविशेषा 'हु'रिति यस्माद्वैयावृत्त्य–प्रत्यनीकप्रतिघातरूप 'कुर्वन्ति' विदधति, 'तम्ह'त्ति तस्मात् हुरवधारणे ततस्तस्मादेव हेतोरेते–पुरोवर्तिनो नितरा हता –ताडिता निहता कुमारा, न तु मम मन प्रद्वेषोऽत्र हेतुरिति भाव इति सूत्रार्थ ॥ सम्प्रति तद्गुणाकृष्टचेतस उपाध्यायप्रमुखा इदमाहु —

'तहियं'ति तस्मिन् मुनौ भक्तपानं प्रतीच्छति यज्ञवाटे वा गन्धः—आमोदस्तत्प्रधानमुदकं—जलं गन्धोदकं तच्च पुष्पाणि च—कुसुमानि तेषां वर्षं—वर्षणं गन्धोदकपुष्पवर्षं, सुरैरिति सम्बधात् कृतमिति गम्यते, दिव्या—श्रेष्ठा यदिवा दिवि—गगने भवा दिव्या, 'तहिं'ति तस्मिन्नेव नान्यत्र, अनेन कथमियतामेकत्र कल्याणानां मीलक इत्यन्यत्रैवान्यतरत्कल्याणान्तरं भविष्यतीत्याशङ्का निराकृता, वसु—द्रव्यं तस्य धारा—सततपातजनिता सन्ततिर्वसुधारा सा च 'वुट्ठे'ति पातिता, सुरैरित्यत्रापि सम्बध्यते, तथा प्रकर्षेण हताः—ताडिताः प्रहताः, के ते ?—'दुन्दुभयो' देवानकाः, उपलक्षणत्वाच्छेपातोद्यानि च, कैः ?—'सुरैः' देवैः, तथा तैरेव 'आकाशे' नभसि 'अहो' इति विस्मये, विस्मयनीयमिदं दानं, कोऽन्यः किलैवं शक्नोति दातुं ?, एवं दत्तं सुदत्तमिति च 'घुट्ठं' संशब्दितमिति सूत्रार्थः ॥ तेऽपि ब्राह्मणा विस्मितमनस इदमाहुः—

सक्खं खु दीसइ तवोविसेसो, न दीसई जाइविसेस कोई ।
सोवागपुत्तं हरिएससाहुं, जस्सेरिसा इड्ढि महाणुभागा ॥ ३७ ॥

'साक्षात्' प्रत्यक्षं 'खु'रिति निश्चितं अवधारणे वा ततः साक्षादेव 'दृश्यते' अवलोक्यते, कोऽसौ ?—तपो—लोकप्रसिद्धा व्रतमुपवासादिर्वा तस्य विशेपो—विशिष्टत्वं माहात्म्यमितियावत्तपोविशेपो, 'न' नैव दृश्यते 'जातिविशेपो' जातिमाहात्म्यलक्षणः 'कोऽपी'ति स्वल्पोऽपि, किमित्येवमत आह—यतः स्वपाकपुत्रः—चाण्डालसुतो हरि-

अथवा अर्ध्यामस्ते इति सुव्यत्ययात्त्वाम्, अनेन सततस्य पूज्यत्वमुक्त, उत्तरेण तु तत्स्वामित्वमपि पूज्यताहेतुरिति, तथा भुङ्क्ते गृहीत्वेति गम्यते 'शालिम'न्ति शालिमय, कोऽर्थ ?—शालिनिष्पन्न 'कूरम्' ओदन नानाव्यजनै —अनेकप्रकारैर्दध्यादिभि सयुत—सम्मिश्र नानाव्यअनसयुत, न त्वेकमेवेति सूत्रार्थ ॥ अन्यच्च—

इम च मे अत्थि पभूयमन्न, त भुजसू अम्ह अणुग्गहट्ठा ।
बाढति पडिच्छइ भत्तपाण, मासस्स ऊ पारणए महप्पा ॥ ३५ ॥

'इद च' प्रत्यक्षत एव परिदृश्यमान 'मे'ममास्ति—विद्यते 'प्रभूत'प्रचुरमन—मण्डकखण्डखाद्यादि समस्तमपि भोजन, यत्प्राक् पृथगोदनग्रहण तत्तस्य सर्वान्नप्रधानत्वख्यापनार्थ, तद्भुङ्क्ष्वास्माकमनुग्रहार्थ—वयमनुगृहीता भवाम इति हेतो, एव च तेनोक्ते मुनिराह—'बाढम्' एव कुर्म्म इतीत्येव ब्रुवाण इति शेष, 'प्रतीच्छति' द्रव्यादित शुद्धमिति गृह्णाति, भक्तपानमुक्तरूप, 'मासस्स उ'त्ति मासादेय, यद्वा अन्त इत्यध्याह्रियते, ततश्च मासस्यैवान्ते यत्पार्यते—पर्यन्त क्रियते गृहीतनियमस्यानेनेति पारण तदेव पारणक, भोजनमित्युक्त भवति, तस्मिन्—तन्निमित्त, 'निमित्तात्कर्म्मसयोगे सप्तमीति' ( पा० २—३—३६ वार्त्तिकम् ) सप्तमी, माहात्म्येति प्राग्वत् इति सूत्रार्थ ॥ तदा च तत्र यदभूत्तदाह—

तहिय गधोदयपुप्फवास, दिव्वा तहि वसुहारा य वुट्ठा ।
पहया दुदुहीओ सुरेहिं, आगासे अहोदाण च घुट्ठ ॥ ३६ ॥

कुसं च जूवं तणकट्ठमग्गिं, सायं च पायं उदयं फुसंता।
पाणाइं भूयाइं विहेडयंता, भुज्जोऽवि मंदा! पकरेह पावं ॥ ३९ ॥

'कुशं च' दर्भं च 'यूपं' प्रतीतमेव तृणं च–वीरणादि काष्ठं–समिदादि तृणकाष्ठम् अग्निं–प्रतीतं, सर्वत्र परिगृह्णन्त इति शेषः, 'सायं' सन्ध्यायां, चशब्दो भिन्नक्रमस्ततः 'पायं'ति प्रातश्च प्रभाते उदकं—जलं 'स्पृशन्त': आचमनादिषु परामृशन्तः 'पाणाइं'ति प्राणयोगात् प्राणिनो यद्वा प्रकर्षेणानन्तीति—श्वसन्तीति प्राणाः—द्वीन्द्रियादयः, सम्भवन्ति हि जले पूतरकादिरूपास्त इति, 'भूयाइं' इति भूतान्–तरून् 'भूताश्च तरवः स्मृता' इति वचनात्, पृथिव्याद्येकेन्द्रियोपलक्षणं चैतत् 'विहेडयंति'त्ति विहेठयन्तो—विशेषेण विविधं वा वाधमानाः विनाशयन्त इत्यर्थः, किमित्याह–'भूयोऽपि' पुनरपि, न केवलं पुरा किन्तु विशुद्धिकालेऽपि जलानलादिजीवोपमर्दतो 'मन्दाः' जडाः 'प्रकुरुथ' प्रकर्षेणोपचिनुथ यूयं, किं तत् ?–पापम्–अशुभकर्म्म, अयमाशयः–कुशला हि कर्म्ममलविलयात्मिकां तात्त्विकीमेव शुद्धिं मन्यन्ते, भवदभिमतयागस्नाने च यूपादिपरिग्रहजलस्पर्शाविनाभावित्वेन भूतोपमर्दहेतुतया प्रत्युत कर्म्ममलोपचयनिवन्धने एवेति नातः तत्सम्भव इति कथं तद्धेतुकशुद्धिमार्गणं सुदृष्टं ते वदेयुः ?, तथा च वाचकः–"शौचमाध्यात्मिकं त्यक्त्वा, भावशुद्ध्यात्मकं शुभम्। जलादिशौचं यत्रेष्टं, मूढविस्मापकं हि तदि ॥१॥" ति सूत्रार्थः ॥

इत्थं तद्वचनतः समुत्पन्नशङ्कास्ते यागं प्रति तावदेवं पप्रच्छुः—

केशश्चासौ मातङ्गत्वेन प्रसिद्धत्वात् साधुश्च यतित्वाद्धरिकेशसाधु , पठ्यते च–'सोवागपुत्त हरिएससाहु'न्ति, अत्र च पश्यतेति शेप , कदाचिदन्य एव कश्चिदत आह–यस्येदृशी–दृश्यमानरूपा ऋद्धि –देवसन्निधानात्मिका सम्पत् महानुभागा—सातिशयमाहात्म्या, जातिविशेपे हि सति सर्वोत्तमत्वाद्ब्राह्मणजातेस्तद्वतामस्माकमेव देवा वैयावृत्त्य कुर्युरिति भाव इति सूत्रार्थ ॥ साम्प्रत स एव मुनिस्तानुपशान्तमिथ्यात्वमोहनीयोदयानिव पश्यन्निदमाह—

कि माहणा ! जोइसमारभता, उदएण सोहि बहिया विमग्गहा ?।
ज मग्गहा बाहिरिय विसोहि, न त सुदिट्ठ कुसला वयति ॥ ३८ ॥

'कि'मिति क्षेपे, ततो न युक्तमिद, यत् 'माहना' ब्राह्मणा ! 'ज्योति ' अग्नि 'समारभमाणा ' प्रस्तावाद्यागकरणत प्रवर्त्तमाना , याग कुर्वन्त इत्यर्थ , 'उदकेन' जलेन 'सोहि'ति शुद्धि निर्म्मलता 'बहिय'त्ति बाह्या, कोऽर्थो ?—बाह्यहेतुका, याग हि समारभमाणैर्जलेन या शुद्धिर्मार्ग्यते तत्र यागस्नाने एव तत्त्वतो हेतुत्वेनेष्टे, ते च भवदभिमते बाह्ये एवेति 'विमार्गयथ' विशेषेणान्वेषयथ, किमेवमुपदिश्यत इत्याह—यद्यूय मार्गयथ बाह्या—बाह्यहेतुका विशुद्धिं, न तत् सुदृष्ट–सुष्ठु प्रेक्षित 'कुशला ' तत्त्वविचार प्रति निपुणा 'वदन्ति' प्रतिपादयन्तीति सूत्रार्थ ॥ यथा चैतत् सुदृष्ट न भवति तथा स्वत एवाह—

ऽनात्मिकां तत्सहचारित्वात्कोपलोभौ च, 'एतद्' अनन्तरोक्तं परिग्रहादि 'परिज्ञाय' ज्ञपरिज्ञया सर्वप्रकारं ज्ञात्वा प्रत्याख्यानपरिज्ञया च प्रत्याख्याय 'चरेज्ज दन्त'त्ति वचनव्यत्ययाच्चरेयुर्योगे प्रवर्त्तेरन्, भवन्त इति गम्यते, पठन्ति च–'चरन्ति दंत'त्ति अत्र च यत एवं दान्ताश्चरन्त्यतो भवद्भिरप्येवं चरितव्यमिति भाव इति सूत्रार्थः ॥ प्रथमप्रश्नप्रतिवचनमुक्तं, शेषप्रश्नप्रतिवचनमाह—

सुसंवुडा पंचहिँ संवरेहिं, इह जीवियं अणवकंखमाणो ।
वोसट्ठकाओ सुइचत्तदेहो, महाजयं जयई जन्नसिट्ठं ॥ ४२ ॥

सुष्ठु संवृतः—स्थगितसमस्ताश्रवद्वारः सुसंवृतः, कैः ?—पञ्चभिः—पञ्चसङ्ख्यैः संवरैः–प्राणातिपातविरत्यादिव्रतैः 'इहे' त्यस्मिन् मनुष्यजन्मनि, उपलक्षणत्वात्परत्र च 'जीवितं' प्रस्तावादसंयमजीवितम् 'अनवकाङ्क्षन्' अनिच्छन्, यद्वा अपेर्गम्यमानत्वाज्जीवितमपि–आयुरास्तामन्यद्धनादि, अनवकाङ्क्षन्, यत्र हि व्रतबाधा तत्रासौ जीवितमपि न गणयति, अत एव व्युत्सृष्टो–विविधैरुपायैर्विशेषेण वा परीषहोपसर्गसहिष्णुतालक्षणेनोत्सृष्टः–त्यक्तः कायः—शरीरमनेनेति व्युत्सृष्टकायः, शुचिः—अकलुषव्रतः स चासौ त्यक्तदेहश्च–अत्यन्तनिष्प्रतिकर्म्मतया शुचित्यक्तदेहो महान् जयः–कर्म्मशत्रुपराभवनलक्षणो यस्मिन् यज्ञश्रेष्ठेऽसौ महाजयस्तं, क्रियाविशेषणं वा महाजयं यथा भवत्येवं यजते यतिरिति गम्यते, ततो भवन्तोऽप्येवमेव यजन्तामिति भावः, तिङ्वचनव्यत्ययेन वा 'जयइ'त्ति यजतां, कमि-

कह चरे भिक्खु ! वय जयामो ?, पावाइ कम्माइ पणुल्लयामो ।
अक्खाहि णे सजय जक्खपूइआ, कह सुजट्ठ कुसला वयति ? ॥ ४० ॥

'कथ' केन प्रकारेण 'चरि'त्ति 'विभाषा कथमि लिङ्' च इति(पा०३ ३-१४३)लिङि वचनव्यत्यये वचनव्यत्ययाच्चरेमहि–यागार्थं प्रवर्त्तेमहि, हे भिक्षो !–मुने ! वयमित्यात्मनिर्देश , तथा 'यजामो' याग कुर्म्म , कथमिति योग ?, पापानि –अशुभानि कर्म्माणि पुरोपचिताविद्यारूपाणि 'पणुल्लयामो'त्ति प्रणुदाम प्रेरयामो, येनेति गम्यते, 'आख्याहि' कथय 'न ' अस्माक 'सयत ' पापस्थानेभ्य सम्यगुपरत 'यक्षपूजित' यक्षार्चित !, किमुक्त भवति ?–यो ह्यस्मद्विदित कर्म्मप्रणोदनोपायत्वेन याग स युष्माभिर्दूषित इति भवन्त एवापर यागमुपदिशन्तु, कदाचिदविशिष्टमेव यजनमुपदिशेदित्याशङ्कयाह–'कथ' केन प्रकारेण 'स्विष्ट' शोभन यजन 'कुशला' उक्तरूपा 'वदन्ति' प्रतिपादयन्ति, न त 'सुदिट्ठ कुसला वयति'त्ति कुशलमुखेनैव मुनिना दूषितमिति तैरपि तथैव पृष्टमिति सूत्रार्थ ॥ मुनिराह—

छज्जीवकाए असमारभता, मोस अदत्त च असेवमाणा ।
परिग्गह इत्थिउ माण माय, एय परिन्नाय चरति दता ॥ ४१ ॥

षड् जीवकायान्–पृथिव्यादीन् 'असमारभमाणा' अनुपमर्दयन्त 'मोस'ति मृषा अलीकभाषण 'अदत्त चे'त्यदत्तादान चानासेवमाना –अनाचर त परिग्रह–मूर्च्छा स्त्रियो–योषितो 'माण'त्ति मानम्–अहङ्कार माया–परव-

तवो जोई जीवो जोइठाणं, जोगा सुया सरीरं कारिसंगं ।
कम्म एहा संजमजोग संती, होमं हुणामी इसिणं पसत्थं ॥ ४४ ॥

'तपो' बाह्याभ्यन्तरभेदभिन्नं 'ज्योतिः' अग्निः, यथा हि ज्योतिरिन्धनानि भस्मीकरोत्येवं तपोऽपि भावेन्धनानि—कर्म्माणि, जीवो—जन्तुर्ज्योतिःस्थानं, तपोज्योतिषस्तदाश्रयत्वात्, युज्यन्ते—सम्बन्ध्यन्ते स्वकर्म्मणेति योगाः—मनोवाक्कायाः स्रुवः, ते हि शुभव्यापाराः स्नेहस्थानीयाः, तपोज्योतिषो ज्वलनहेतुभूताः तत्र संस्थाप्यन्त इति, शरीरं करीषाङ्गं, तेनैव हि तपोज्योतिरुद्दीप्यते, तद्भावभावित्वात्तस्य, 'कर्म' उक्तरूपं एधास्तस्यैव तपसा भस्मीभावनयनात्, 'संजमजोग'त्ति संयमयोगाः—संयमव्यापाराः शान्तिः सर्वप्राण्युपद्रवापहारित्वात्तेषां, तथा 'होम'न्ति होमेन जुहोति तपोज्योतिरिति गम्यते, ऋषीणां—मुनीनां सम्बन्धिना 'पसत्थं'ति प्रशस्तेन जीवोपघातरहितत्वेन विवेकिभिः श्लाघितेन सम्यक्चारित्रेणेति भावः, अनेन च कतरेण होमेन जुहोपि ज्योतिरिति प्रत्युक्तमिति सूत्रार्थः ॥ तदेतेन 'किं माहना जोइसमारहंता' इत्यादिना लोकप्रसिद्धयज्ञानां स्नानस्य च निषिद्धत्वाद्यज्ञस्वरूपं तैः पृष्टं कथितं च मुनिना ॥ इदानीं स्नानस्वरूपं पिपृच्छिषव इदमाहुः—

के ते हरए के य ते संतितित्थे ?, कहंसि ण्हाओ व रयं जहासि ? ।
आयक्ख णे संजय जक्खपूइया, ! इच्छामु नाउं भवओ सगासे ॥ ४५ ॥

स्राह–'जण्णसेट्ठं'ति प्राकृतत्वाच्छ्रेष्ठयज्ञ, श्रेष्ठवचनेन चैतद्यजन एव स्विष्ट कुशला वदन्ति, एप एव च कर्म्मप्रणोदनोपाय इत्युक्त भवतीति सूत्रार्थ ॥ यदीदृग्गुण श्रेष्ठयज्ञ यजते अतस्त्वमपीदृग्गुण एव, तथा च त यजमानस्य कान्युपकरणानि को वा यजनविधिरित्यभिप्रायेण त एवमाहु —

के ते जोई के व ते जोईठाणा ?, का ते सूया कि च ते कारिसग ? ।
एहा य ते कयरा सति भिक्खू !, कयरेण होमेण हुणासि जोइ ? ॥ ८३ ॥

किं, अयमर्थ –किरूप 'ते' तव 'ज्योति'रिति अग्नि 'के व ते जोइठाणे'त्ति कि वा ते–तव ज्योति स्थान यत्र ज्योतिर्निधीयते, का स्रुवो ?–घृतादिप्रक्षेपिका दर्व्य , 'कि च'त्ति कि वा करीप –प्रतीत स एवाङ्गम्–अग्न्युद्दीपनकारण करीपाङ्ग येनासौ सन्धुक्ष्यते, एधाश्च–समिधो यकाभिरग्नि प्रज्वाल्यते, 'ते' तव कतरा इति–का ? 'सति' त्ति चस्य गम्यमानत्वाच्छान्तिश्च–दुरितोपशमनहेतुरध्ययनपद्धति कतरेति प्रक्रमो, 'भिक्षु' इति भिक्षो ! कतरेण 'होमेन' हवनविधिना, समेन धावतीत्यादिवत् तृतीया, जुहोपि–आहुतिभि प्रीणयसि, कि ?–ज्योति –अग्निम्, पड्जीवनिकायसमारम्भनिपेधेन ह्यस्मदभिमतो होम तदुपकरणानि च पूर्व निपिद्धानीति कथं भवतो यजनसम्भव ? इति सूत्रार्थ ॥ मुनिराह—

"ब्रह्मचर्येण सत्येन, तपसा संयमेन च । मातङ्गर्षिर्गतः शुद्धिं, न शुद्धिस्तीर्थयात्रया ॥१॥" अथवा 'ब्रह्मे'ति ब्रह्मचर्यवन्तो मतुल्लोपादभेदोपचाराद्वा साधव उच्यन्ते, सुब्व्यत्ययाच्चैकवचनं, 'संति' विद्यन्ते तीर्थानि ममेति गम्यते, उक्तं हि-"साधूनां दर्शनं श्रेष्ठं, तीर्थभूता हि साधवः । तीर्थं पुनाति कालेन, सद्यः साधुसमागमः ॥ १ ॥" किं च-भवत्प्रतीततीर्थानि प्राण्युपमर्द्दहेतुतया प्रत्युत मलोपचयनिमित्तानीति कुतस्तेषां शुद्धिहेतुता ?, तथा चोक्तम्-"कुर्याद्वर्षसहस्रं तु, अहन्यहनि मज्जनम् । सागरेणापि कृत्स्नेन, वधको नैव शुद्ध्यति ॥ १ ॥" ह्रदशान्तितीर्थे एव विशिनष्टि-'अनाविले' मिथ्यात्वगुप्तिविराधनादिभिरकलुषे अनाविलत्वादेवात्मनो-जीवस्य प्रसन्ना-मनागप्यकलुषा पीताद्यन्यतरा लेश्या यस्मिंस्तदात्मप्रसन्नलेश्यं तस्मिन्, अथवा आप्ता-प्राणिनामिह परत्र च हिता प्राप्ता वा तैरेव प्रसन्नलेश्या-उक्तरूपा यस्मिंस्तदाप्तप्रसन्नलेश्यं तस्मिन्नेवंविधे धर्म्मह्रदे, ब्रह्माख्यशान्तितीर्थे च, यदा ब्रह्मशब्देन ब्रह्मचर्यवन्त उच्यन्ते तत्पक्षे वचनविपरिणामेन विशेषणद्वयं व्याख्येयं, 'जहिंसि' त्ति यत्रास्मि स्नात इव स्नातः-अत्यन्तशुद्धिभवनाद्विमलो-भावमलरहितोऽत एवाति(व)विशुद्धो-गतकलङ्कः, 'सुसीतीभूओ' त्ति सुशीतीभूतो रागाद्युत्पत्तिविरहतः सुष्ठु शैत्यं प्राप्तः, पठ्यते च-'सुसीलभूओ' त्ति सुष्ठु-शोभनं शीलं-समाधानं चारित्रं वा भूतः-प्राप्तः सुशीलभूतः 'प्रजहामि' प्रकर्षेण त्यजामि दूषयति—विशुद्धमप्यात्मानं विकृतिं नयतीति दोषः-कर्म्म तं, अनेनैतदाह—ममापि ह्रदतीर्थे एव शुद्धिस्थानं परमेवंविधे एवेति, निगमयितुमाह-'एतदि' त्यनन्तरमुक्तं 'स्नानं' रजोहीनं 'कुशलैः'

फस्ते–तव 'ह्रद ' नद ?, 'के च ते सतितित्थे'त्ति किं च ते–तव शान्त्यै–पापोपशमननिमित्त तीर्थं–पुण्यक्षेत्र शान्तितीर्थम्, अथवा 'कानि च' किंरूपाणि 'ते' तव 'सन्ति' विद्यन्ते 'तीर्थानि' ससारोदधितरणोपायभूतानि, लोकप्रसिद्धतीर्थानि हि त्वया निषिद्धानीति, तथा च 'कहिंसि ण्हाओ वे' ति वाशब्दस्य भिन्नक्रमत्वात्कस्मिन् वा स्नात — शुचिर्भूतो रज इव रज –कर्म्म जहासि–त्यजसि त्व ?, गम्भीराभिप्रायो हि भवास्तत् किमस्माकमिव भवतोऽपि ह्रदतीर्थ एव शुद्धिस्थानमन्यद्वेति न विद्म इति भाव , 'आचक्ष्व' व्यक्त वद सयत ! यक्षपूजित ! 'इच्छाम ' अभिलषामो 'ज्ञातुम्' अवगन्तु 'भवत ' तव 'सकाशे' समीपे इति सूत्रार्थ ॥ मुनिराह—

धम्मे हरए बम्भे सतितित्थे, अणाविले अत्तपसन्नलेसे ।
जहिं सि ण्हाओ विमलो विसुद्धो, सुसीइभूओ पजहामि दोस ॥ ४६ ॥
एय सिणाण कुसलेण दिट्ठ, महासिणाण इसिण पसत्थ ।
जहिं सि ण्हाया विमला विसुद्धा, महारिसी उत्तम ठाण पत्ति ॥ ४७ ॥ त्तिबेमि

इति हरिकेशीय बारसम अज्झयण सम्मत्त ॥ १२ ॥

'धर्म्म ' अहिंसाद्यात्मको ह्रद कर्म्मरजोऽपहन्तृत्वाद्ब्रह्मेति–ब्रह्मचर्य शान्तितीर्थ, तदासेवनेन हि सकलमलमूलं रागद्वेषाद्युन्मूलितावेव भवत , तदुन्मूलनाच्च न कदाचिन्मलस्य सम्भवोऽस्ति, सत्याद्युपलक्षण चैतत्, तथा चाह–

## अथ त्रयोदशाध्ययनम् ।

व्याख्यातं हरिकेशीयं नाम द्वादशमध्ययनम्, अधुना त्रयोदशममारभ्यते, अस्य चायमभिसंवन्धः—इहानन्तराध्ययने श्रुतवत्तपस्यपि यतो विधेय इति ख्यापयितुं तपःसमृद्धिरभिहिता, इह तु तत्प्राप्तावपि निदानं परिहर्त्तव्यमिति दर्शयितुं यथा तत् महापायहेतुस्तथा चित्रसंभूतोदाहरणेन निदर्श्यत इति, अनेन सम्वन्धेनायातस्यास्याध्ययनस्यानुयोगद्वारचतुष्टयचर्चा प्राग्वद्यावन्नामनिष्पन्ननिक्षेपे चित्रसंभूतीयमिति नाम, अतश्चित्रसंभूतनिक्षेपाभिधानायाह निर्युक्तिकृत्—

चित्ते संभूअंमि अ निक्खेवो चउक्कओ दुहा दव्वे । आगमनोआगमओ नोआगमओ अ सो तिविहो ॥३३०
जाणगसरीरभविए तव्वतिरित्ते य सो पुणो तिविहो । एगभविअ बद्धाऊ अभिमुहओ नामगोए य ॥३३१॥
चित्तेसंभूआउं वेअंतो भावओ अ नायव्वो । तत्तो समुट्ठिअमिणं अज्झयणं चित्तसंभूयं ॥ ३३२ ॥

गाथात्रयं स्पष्टमेव, नवरं 'चित्तेसंभूयाउं'ति एकारोऽलाक्षणिकः, 'ततः समुत्थित'मिति ताभ्यां—चित्रसम्भू-

प्रागुक्तरूपैर्दृष्ट-प्रेक्षितमिदमेव च महास्नान, न तु युष्मत्प्रतीतम्, अस्यैव सकलमलापहारित्वाद्, अत एव चेद ऋषीणां प्रशस्त—प्रशसास्पद, न तु जलस्नानवत्सदोषतया निन्द्यम्, अस्यैव फलमाह—'जहिसि'त्ति सुब्व्यत्ययाद्येन स्नाता विमला विशुद्धा इति च प्राग्वत् महर्षयो-महामुनय उत्तम स्थान-मुक्तिलक्षण 'प्रासा' गता इति सूत्रद्वयार्थ ॥ इति परिसमाप्तौ, ब्रवीमीति पूर्ववद्, गतोऽनुगम, सम्प्रति नयास्ते च प्राग्वदेव ॥ श्रीशान्त्याचार्यकृताया शिष्यहितायामुत्तराध्ययनटीकाया द्वादशमध्ययनं समाप्तमिति ॥ १२ ॥

॥ इति श्रीशान्त्याचार्यकृताया शिष्यहितायामुत्तराध्ययनटी० द्वादशमध्ययनं समाप्तम् ॥

प्रतिपाल्य च प्रव्रज्यामपगतमलकलङ्कोऽपवर्गमगमत् । अन्यदा च सागरचन्द्राचार्या वहुशिष्यपरिवृतास्तत्रागताः निर्गतश्च मुनिचन्द्रनृपतिस्तद्वन्दनाय, दृष्टाश्चानेन सूरयः, स्तुत्वा च तानुपविष्टस्तदन्तिके, श्रुतश्च तत्कथितो विशुद्धधर्मः, समुत्पन्नश्चास्य तत्करणाभिलापः, ततः स्वसुतं राज्ये निवेश्य प्रतिपन्नोऽसौ श्रामण्यं, गृहीता चानेन ग्रहणासेवनोभयलक्षणा शिक्षा, प्रवृत्ताश्चान्यदा सुसार्थेन सगच्छाः सागरचन्द्रसूरयोऽध्वानं, मुनिचन्द्रमुनिश्च तैः समं व्रजन् गुरुनियोगादेकाक्येव भक्तपाननिमित्तं क्वचित्प्रत्यन्तग्रामे प्राविशत्, प्रविष्टे चास्मिन् प्रवृत्तः सार्थो गन्तुं, प्रचलिताः सहानेन सूरयो, विस्मृतश्चायमेषां, प्रस्थितश्च क्षणान्तरेण गृहीतभक्तपानस्तदनुमार्गेण, पतितश्च मूढदिक्चक्रवालः सार्थगवेषणापरो, मार्गात्परिभ्रष्टो भ्रमदनेकशार्दूलजालां द्विपकदम्बकभज्यमानशालशल्लकीप्रभृतितरुनिकरामनर्वाक्पारतया च संसारानुकारिणीं विन्ध्याटवीं, तत्र चासौ परिभ्रमन् गिरिकन्दराण्यतिक्रामन्नतिनिम्नोन्नतभूभागान् पश्यन् भयानकानेकद्वीपितरक्षाच्छभल्लादिश्वापदान् उत्तीर्णस्तृतीयदिने, तदा च क्षुत्क्षामकुक्षिः शुष्कोष्ठकण्ठतालुरेकत्र वृक्षच्छायायां मूर्च्छावशनष्टचेष्टो दृष्टश्चतुर्भिर्गोपालदारकैः, उत्पन्ना अमीषामनुकम्पा, सिक्तस्त्वरितमागत्य गोरसोन्मिश्रदृतिजलेन, पायितोऽसौ तदेव, समाश्वस्तश्च नीतो गोकुलं, प्रतिजागरितश्च तत्कालोचितकृत्येन, प्रतिलाभितः प्रासुकान्नादिना, कथितस्तेषामनेन जिनप्रणीतधर्मः, गृहीतश्चायमेतैर्भावगर्भं, गतश्चासौ विवक्षितस्थानं, तं च मलदिग्धदेहमवलोक्य द्वयोः समजनि जुगुप्सा, तदनुकम्पातः सम्यक्त्वानुभावतश्च निर्वर्त्तितं

ताभ्यामभिधेयभूतामागतं, 'तेसु'ति च पाठे तयो 'समुत्थित'मिति मव चित्रसंभूतीय, 'वृद्धाच्छ' इति ( पा० ४-२-११४ ) छप्रत्यये वृद्धसञ्ज्ञा तु 'वा नामधेय यस्से'ति (वा नामधेयस्य वृद्धसञ्ज्ञा वक्तव्या । वार्त्तिक) वचनात् ॥ सम्प्रति काविमौ चित्रसभूतौ ? केन चानयोरत्राधिकार ? इत्याशङ्क्याह—

सागेए चडवर्डिसयस्स पुत्तो अ आसि मुणिचदो । सोऽवि अ सागरचदस्स अतिए पव्वए समणो ॥३३३॥
तण्हाछुहाकिलत समण दट्ठूण अडविनीहुत्त । पडिलाहणा य बोही पत्ता गोवालपुत्तेहि ॥ ३३४ ॥
तत्तो दुन्नि दुगछ काउ दासा दसन्नि आयाया। दुन्नि अ उसुआरपुरे अहिगारो बभदत्तेण ॥ ३३५ ॥

गाथात्रयमस्याप्यक्षरार्थ स्पष्ट एव, णवर 'पव्वए समणो'त्ति प्राव्राजीत् समान मनोऽस्येति समना –सर्वत्रारक्तद्विष्टचित्त सन्, यद्वा श्राम्यतीति श्रमण –तपस्वी सन्, निश्चयनयापेक्ष चैतत्, "णेरइए णेरइएसु उववज्जति"[1] इत्यादिवत्, तथा 'अडविणीहुत्त'ति अटवीनि सृतम्, अरण्यान्निष्क्रान्तमित्यर्थ । भावार्थस्तु कथानकगम्य, तच्चेदम्–अस्ति कोसलालङ्कारभूत साकेत नाम नगर, तत्र चाभूदधिगतजीवाजीवादितत्त्वश्चन्द्रावतसको नाम राजा, तस्य च धारिणी देवी, तदङ्गजो मुनिचन्द्र, स च राजाऽन्यदा समुत्पन्नसवेगस्तमेव सुत राज्येऽभिषिच्य प्रव्रज्यामशिश्रियत्,

१ नैरयिको नैरयिकेपूत्पद्यते

मानाच्युत्वेति शेषः, इति सूत्राक्षरार्थः ॥ भावार्थस्त्वयम्—स हि ब्रह्मदत्तः पूर्वजन्मनि वाराणस्यां संभूतनामा चण्डालश्चित्रश्च तज्ज्येष्ठ आसीत्, तत्र च नमुचिनामा ब्राह्मणो ममान्तःपुरमपधर्षितमनेनेत्युत्पन्नकोपेन राज्ञा समर्पितो मारणनिमित्तं मातङ्गाधिपस्य तत्पितुः, उक्तश्चायमेतेन—यदि मत्सुतौ सकलकलाकलापकुशलौ विधत्से ततोऽस्ति ते जीवितमन्यथा नेति, प्रारब्धं च तदर्थिनाऽनेन तद्गृह एवातिगुप्तस्थानस्थितेन तदध्यापनं, ग्राहितौ तौ व्याकरणवीणापुरःसराः सकला अपि कलाः, अन्यदा च शुश्रूषापरायां तन्मातरि मोहोदयादयमुपपतित्वमाजगाम, ज्ञातस्तज्जनकेन, इष्टश्च मारयितुं, ज्ञातं तत्ताभ्यां, ज्ञापितं चासौ, उपाध्यायोऽयमावयोस्ततो मा भूदस्यापदिति, तदवगमाच्च पलायितोऽसौ ततः स्थानात्, प्राप्तो हस्तिनागपुरं, कृतः सनत्कुमारचक्रवर्त्तिना मन्त्री । इतश्च तौ चित्रसंभूतौ सातिशयगीतकलाक्षिप्ततरुणीजनात्यासक्तिहेतुतया त्याजितस्पृश्यास्पृश्यविभागौ जनेन राज्ञे निवेदितौ, यथा—विनाशितं नगरमाभ्यां, निषिद्धस्तेन नगरस्यान्तस्तत्प्रचारः, कदाचिच्च तावतिकुतूहलतया कौमुदीमहविलोकनार्थमागतौ, दृष्टौ जनेन, कदर्थितावत्यर्थं, प्रवव्रजतुश्च तत एवोत्पन्नवैराग्यौ, जातौ विकृष्टतपोनिष्टप्तदेहौ, प्राप्ताश्चाभ्यां तेजोलेश्यादिलब्धयः, समापत्तितश्च गतौ हस्तिनागपुरं, प्रविष्टो मासक्षपणपारणके तत्र भिक्षार्थं संभूतयतिः, दृष्टश्च नमुचिना, जातोऽस्य चेतसि दुरध्यवसायो—मद्दुश्चरितमयं प्रकाशयिष्यतीति, निर्भर्त्सितो—धिग् मुण्ड चाण्डाल! क्व नगरस्यान्तःप्रविष्टोऽसि? इत्यादिनिष्ठुरवचोभिः, प्रहत इष्टकोपलशकलादिभिस्तत्परिजनेन, तदनु च समस्तलोकेन,

चतुर्भिरपि देवायु , जग्मुश्च देवलोक, ततश्च्युतौ चाकृतजुगुप्सौ तु कतिचिद्भवान्तरितौ द्वाविषुकारपुरे द्विजकुले जातौ, तद्वक्तव्यता च इषुकारीयनाम्न्यनन्तराध्ययनेऽभिधास्यते, यौ च द्वौ जुगुप्सकौ तौ दशार्णजनपदे ब्राह्मणकुले दासतयोत्पन्नौ, तयोश्च य इह ब्रह्मदत्तो भविष्यति तेनात्राधिकारो, निदानस्यैवात्र वक्तुमुपक्रान्तत्वात्तेनैव च तद्विधानाद्, द्वितीयस्य तु प्रसङ्गत एवाभिधीयमानत्वात्, इह च नामनिष्पन्ननिक्षेपे प्रस्तुते प्रसङ्गतोऽर्थाधिकारोऽप्युक्त इति गाथात्रयभावार्थ । उक्तो नामनिष्पन्ननिक्षेप , सम्प्रति सूत्रालापकनिष्पन्नस्यावसर इति सूत्रमुच्चारणीय, तच्चेदम्—

जाईपराजिओ खलु कासि नियाण तु हत्थिणपुरंमि ।
चुलणीइ बभदत्तो उववन्नो नलिण ( पउम ) गुम्माओ ॥ १ ॥

'जातिपराजित ' इति जात्या–प्रस्तावाच्चाण्डालाख्यया पराजित –अभिभूत , स हि वाराणस्यां हस्तिनागपुरे च वक्ष्यमाणन्यायतो नृपेण नमुचिनाम्ना च द्विजेन चाण्डाल इति नगरनिष्कासन यष्ट्यादिना पुरा जन्मन्यपमानित इत्येवमुक्त , यद्वा जातिभि –दासादिनीचस्थानोत्पत्तिभिरुपर्युपरिजाताभि पराजित इति–पराभव मन्यमानोऽहो ! अहमधन्यो यदित्थ नीचास्वेव जातिषु पुन पुनरुत्पन्न इति, 'खलु ' वाक्यालङ्कारे, स चैवंविध किमित्याह— 'कासि'त्ति अकार्षीत्, किमित्याह–'निदान' चक्रवर्त्तिपदावाप्तिर्मम भवेदित्येवमात्मक 'तु ' पूरणे, क्वेद कृतवान् ? इत्याह–'हत्थिणपुरंमि'त्ति हस्तिनागपुरे, चुलन्यां ब्रह्मदत्त 'उववण्णो'त्ति उत्पन्न 'पद्मगुल्मात्' इति नलिनगुल्मवि-

राया य तत्थ बंभो कडओ तइओ कणेरदत्तोत्ति। राया य पुप्फचूलो दीहो पुण होइ कोसलिओ ॥३३६॥
एए पंच वयंसा सव्वे सह दारदरिसिणो भोच्चा । संवच्छरं अणूणं वसंति इक्किक्करज्जंमि ॥ ३३७ ॥
राया य बंभदत्तो धणुओ सेणावई अ वरधणुओ । इंदसिरी इंदजसा इन्दुवसु चुलणिदेवीओ ॥ ३३८ ॥

राजा च तत्र पाञ्चालेषु काम्पिल्ये 'ब्रह्म'इति ब्रह्मनामा कासीजनपदाधिपः कटकस्तृतीयः कुरुषु गजपुराधिपतिः कणेरुदत्त इति राजा च अङ्गेषु चम्पास्वामी पुष्पचूलो यः किल ब्रह्मपत्न्याश्चुलिन्या भ्राता 'दीर्घ' इति दीर्घपृष्ठः पुनर्भवति कौशलिकः साकेतपुराधिपतिः। एतेऽनन्तरोक्ताः पञ्च वयस्याः 'सर्वे' समस्ताः सह दारान् पश्यन्तीत्येवंशीलाः सहदारदर्शिनः, किमुक्तं भवति ?—एककालकृतकलत्रस्वीकाराः समानवयस इतियावत् 'भोच्च'त्ति भूत्वा संवत्सरं वर्षम् 'अन्यूनं' परिपूर्णं 'वसन्ति' आसते, तत्कालापेक्षया वर्त्तमानता, 'एकैकराज्ये' एकैकसंबन्धिनि नृपतित्वे। एष तावद्गाथाद्वयार्थः, तृतीयगाथा तु तात्पर्यतो व्याख्यायते—ब्रह्मराजस्येन्द्रश्रीप्रमुखाश्चतस्रो देव्यः, तत्र च चुलन्याः पुत्रोऽजनि, धनुर्नाम्नः सेनापतेरपि तत्रैवाहनि सुतः समुदपादि, कृतानि द्वयोरपि मङ्गलकौतुकानि, दत्तानि च दीनानाथेभ्यो दानानि, विहितं च स्वसमये राजपुत्रस्य ब्रह्मदत्त इति नाम, इतरस्य तु वरधनुरिति, कालक्रमेण च जातौ कलाग्रहणोचितौ, ग्राहितौ सर्वा अपि कलाः, अस्मिंश्चान्तरे मरणपर्यवसान-

कुपितश्चासौ तेभ्य समस्तजनदहनक्षमामसह्यतेजोलेश्या मोक्तुमुपचक्रमे, तत्र च मुखविनिर्यद्बहलधूमपटलान्धकारितदिक्चक्रवाले व्याकुलित सान्त पुर सनत्कुमारचक्रवर्त्ती सकलो नगरलोकश्च समायातस्तत्पार्श्वं, तद्वृत्तान्तश्रवणतश्चित्रश्च, प्रारब्धस्तैरनेकधा सान्त्वनवचनैरुपशमयितु, तथाऽपि तत्रात्मानमस्मरत्यतिकोपवशगे भगवति मा भूदस्माकमकस्माद्भस्मीभवनमिति स्त्रीरत्नसहितो महीपतिस्त क्षमयाम्बभूव, यथा—भगवन्! क्षमितव्यमस्माकमिदमिति, अस्मिंश्चान्तरे स्त्रीरतकोमलालकस्पर्शसमुत्पन्नतदभिलापो विगलितानुशयश्चाण्डालजातिरेव ममैवमनेकधा कदर्थनाहेतुरिति चिन्तयश्चित्रयतिना निवार्यमाणोऽपि यदि ममास्य तपस फलमस्ति तदाऽन्यजन्मनि चक्रवर्त्तित्वमेव मम भूयाद् येनाहमप्येव ललितललनाविलासास्पदमुत्तमजातिश्च भवामीति निदानवशगोऽनशनं प्रपेदे। तत स तपोऽनुभावतो नलिनगुल्मविमाने वैमानिकत्वेनाजनि, ततश्च च्युतश्चुलन्या ब्रह्मदत्त समुत्पेदे। क? इत्याह—

कपिल्ले सम्भूओ।

'काम्पिल्य' इति पञ्चालमण्डलस्य तिलक इव काम्पिल्यनाम्नि नगरे 'सम्भूत' इति पूर्वजन्मनि सम्भूतनामा। अमु पादमतिक्रान्तसूत्रोत्तरपादद्वय चैतद्गदितार्थप्रसङ्गायातार्थान्तराभिधानद्वारत स्पृशन् सूत्रस्पर्शिकनिर्युक्तिमाह निर्युक्तिकृत्—

चितं कुर्मः, तेनालोचितं–यथैष दुरात्मा दूरस्थो न सुन्दर इति, उक्तश्च–यथैतत्त्वद्रहितमखिलमपि राज्यं विनश्यत्यत इहैव स्थितो जपहोमदानादिभिर्धर्ममुपचिनु, तेन चोक्तं–यदादिशन्ति भवन्तः, इत्युक्त्वा च गतः स्वगृहं, कारितं चानेन भागीरथ्यास्तटे स्वनिवासस्थानं, निरूपितं तत्र सत्रं, खानिता च तत्र प्रत्ययिकपुरुषैर्जतुगृहं यावत्सुरङ्गा, ज्ञापिताऽसौ वरधनोः, इतश्च गणितं तत्परिणयनलग्नं, निष्पन्नं च जतुगृहं, प्रेपिता च मत्रिवचनतोऽन्यैव कन्यका मातुलेन, समागतो लग्नदिनः, कृतं सर्वसमृद्ध्योपयमनं, शायितश्च रजन्यां जतुगृहे कुमारः, प्रदीपितं च तद्द्वार एव सुप्तजनायां रजन्यां, ज्ञातं चासन्नस्थितेन वरधनुना, उत्थापितः कुमारो, दृष्टं च सर्वतः प्रदीप्तमेतेन, उक्तश्च वरधनुः–मित्र! किमिदानीं क्रियतामिति, तेनोक्तं–मा भैषीः, यतः प्रतिविहितमत्र तातेन, अत्रान्तरे चागतं नागकुमारद्वयानुकारि भुवनमुद्भिद्य पुरुषद्वयम्, अभ्यधाच्च तत्–मा भैष्टाम्, आवां हि धनोर्गृहजातौ दासचेटकौ, तत्क्रियतां प्रसादो, निर्गम्यतां सुरङ्गामार्गेण, इत्युक्तौ च तौ गतौ सुरङ्गाद्वारं, दृष्टं च तत्र प्रधानमश्वद्वयम्, उक्तं च ताभ्यां चेटकाभ्याम्—एतावारुह्य देशान्तरापक्रमणेनात्मानं रक्षतां दीर्घपृष्ठाद्भवन्तौ यावत्कचिदवसरः शुभो भवति, ततस्तद्वचनमाकर्ण्य किं किमेतत्? इत्याकुलितचेतसो ब्रह्मदत्तस्य कथितः सर्वोऽपि वरधनुना चुलनीवृत्तान्तः, अभिहितं च–यथेदमेवेदानीं प्राप्तकालमिति, विनिर्गतौ च तत्प्रधानमश्वयुगलमारुह्येति तृतीयगाथातात्पर्यार्थः । एवं च प्राप्तावसरा ब्रह्मदत्तहिण्डी, ततस्तत्र ये कन्यालाभा ये च तत्पितरस्तदुपदर्शनाय गाथापञ्चकमाह—

तया जीवलोकस्य मृतो ब्रह्मराज , कृतमौर्द्धदेहिकम्, अतिक्रान्तेषु च कतिपयदिनेषु तद्वयस्यैरभिषिक्तो राज्ये ब्रह्मदत्त , पर्यालोचित च तै –यदेष नाद्यापि राज्यधुराधरणधौरेय इति पालयितुमुचित कतिचित्संवत्सराणि, निरोपितस्तैस्तत्र दीर्घपृष्ठ , गता स्वस्वदेशेषु कटकादय , जातश्च सर्वत्राप्रतिहतप्रवेशतया दीर्घपृष्ठस्य सह चुलन्या सम्बन्ध , ज्ञात चैतदन्त पुरपालिकया, न्यवेदि च तया धनुर्नाम सेनापतिमन्त्रिण सकलमपि तद्वृत्त, निरूपितस्तेन वरधनुर्यथा न कदाचित्कुमारस्त्वया मोक्तव्य इति, आरब्धश्चासौ तथैवानुष्ठातुम्, अन्यदा चाय विदितदीर्घपृष्ठचुलनीवृत्तान्त केनचिदुपायेनामू निवारयामीति विजातिशकुनिकसङ्ग्रहणकमानीय कुमारायोपनिन्ये, तच्चातिनियमितमादायान्त पुरस्यान्त किला यो ऽपि य एव दुष्टशील सोऽस्माभिरित्थ नियन्त्रणीय इति तौ स्वय स्वसहचरैश्च डिम्भैरुद्घोषयन्तौ प्रतिदिनमितश्चेतश्च भ्रमितुमारब्धौ, उपलब्ध च तत्ताभ्यामनुष्ठीयमान दीर्घपृष्ठेन, कुपितश्चासौ कुमाराय, भणिता च चुलनी–यथाऽयमुपायेन केनापि विनाश्यता यतो न विषकन्दल इवैष उपेक्षित क्षेमङ्करोऽस्माक भवितेति, प्रतिपन्न च तत्तया दुरन्ततया मोहोदयस्य, निरूपितश्च ताभ्यामुपाय –यथाऽसौ पुष्पचूलमातुलेन स्वदुहिता पुष्पचूला नाम पूर्वदत्तेति तामसौ परिणाय्यते, कार्यते चैतच्छयनाय जतुगृहम्, एतच्च तन्मन्त्रितमशेषमपि तथैवान्त पुररक्षिकया निवेदित धनो , तेनापि विनष्टमेतदिति पर्यालोच्य कुमारसंरक्षणाय प्रयत्न कर्तुमुपचक्रमे, तथाहि–पृष्टोऽसावनेन दीर्घपृष्ठो यथा वयमिदानीं वृद्धास्तत्किमिदानीमपरेण ?, युष्माभिरनुज्ञाता धर्ममेवैतत्कालो-

ञ्जा च दीपशिखा । तथा काम्पिल्यः पिता मलयवती दुहिता, तथा वनराजी नाम कन्या तज्जनकश्च सिन्धुदत्तः, तथा तस्यैवान्या सोमा च नाम कन्या, तथा सिन्धुसेनप्रद्युम्नसेनयोर्यथाक्रमं वानीरनाम्नी प्रतिकाभिधाना चेति, पठ्यते च 'प्रतिभा वे'ति, द्वे दुहितरौ । तथा हरिकेशा गोदत्ता करेणुदत्ता करेणुपदिका च, 'कुंजरकरेणुसेण'त्ति सेनाशब्दस्य प्रत्येकमभिसंबन्धात्कुञ्जरसेना करेणुसेना च, ऋषिवृद्धिः कुरुमती च देवी सकलान्तःपुरप्रधाना अष्टौ, कुरुमती च स्त्रीरत्नं, ब्रह्मदत्तेनावाप्तेति सर्वत्र शेषः, अनतिप्रसिद्धत्वाच्च तदेतज्जनकनाम्नामनभिधानमिति गाथापञ्चकार्थः ॥ अधुना येषु स्थानेषु अमी प्राप्तास्तान्यभिधातुमाह—

कंपिल्लं गिरितडगं चंपा हत्थिणपुरं च साएयं। समकडगं ओसाणं(नंदोसा)वंसीपासाय समकडगं ॥३४४॥
समकडगाओ अडवी तण्हा वडपायवंमि संकेओ । गहणं वरधणुअस्स य बंधणमक्कोसणं चेव ॥३४५॥
सो हम्मई अमच्चो देहि कुमारं कहिं तुमे नीओ ?। गुलियविरेगणपीओ कवडमओ छड्डिओ तेहिं ॥३४६॥
तं सोऊण कुमारो भीओ अह उप्पहं पलाइत्था । काऊण थेररूवं देवो वाहेसिअ कुमारं ॥ ३४७ ॥
वडपुरगबंभथलयं वडथलगं चेव होइ कोसंबी। वाणारसि रायगिहि गिरिपुर महुरा य अहिच्छत्ता॥३४८॥

चित्ते अ विज्जुमाला विज्जुमई चित्तसेणओ भद्दा । पथग नागजसा पुण कित्तिमई कित्तिसेणो य ॥३३९॥
देवी अ नागदत्ता जसवइ रयणवइ जक्खहरिलो य । वच्छी अ चारुदत्तो उसभो कच्चाइणी य सिला ३४०
धणदेवे वसुमित्ते सुदसणे दारुए य निअडिल्ले । पुत्थी पिंगल पोए सागरदत्ते अ दीवसिहा ॥३४१॥
कपिल्ले मलयवई वणराई सिंधुदत्त सोमा य । तह सिंधुसेण पज्जुन्नसेण वाणीर पइगा य ॥ ३४२ ॥
हरिएसा गोदत्ता कणेरुदत्ता कणेरुपइगा य । कुंजरकणेरुसेणा इसिवुड्ढी कुरुमई देवी ॥ ३४३ ॥

इद च सोपस्कारतया व्यारयायते–'चित्रश्च' चित्रनामा जनकस्तद्दुहितरौ विद्युन्माला विद्यु मती च, तथा चित्रसेनक पिता भद्रा च तद्दुहिता, तथा पन्थक पिता नागजसा कन्यका, पुन समुच्चये, तथा कीर्त्तिमती कन्या कीर्त्तिसेनश्च तत्पिता । तथा देवी च नागदत्ता यशोमती रत्नवती च, पिता च सर्वासामपि यक्षहरिल, 'च' समुच्चये, वच्छी च कन्या चारुदत्त पिता, तथा वृषभो जनक, कात्यायनसगोत्रा तत्सुता शिला नाम । तथा धनदेवो नाम वणिक् अपरश्च वसुमित्रोऽन्यश्च सुदर्शनो दारुकश्च 'निकृतिमान्' मायापर, चत्वारोऽमी कुक्कुटयुद्धव्यतिकरे मिलितास्तत्र च पुस्ती नाम कन्यका, तथा पिङ्गला नाम कन्या पोतश्च तत्पिता, सागरदत्तश्च वणिक् तद-

बाधते मां तृट्, तदुपाहर कुतोऽपि जलम्, अत्रान्तरे दृष्टोऽनेन निटकवर्त्ती वटपादपः, शायितस्तत्र शीतलच्छाये तत्पल्लवोपरचितश्रस्तरे ब्रह्मदत्तः, कृतश्च वरधनुना तेन सह सङ्केतः—यथा यदि मां कथञ्चिद्दीर्घप्रहितपुरुषाः प्राप्स्यन्ति ततोऽहमन्योक्त्याऽभिज्ञानं करिष्ये, तत इतस्त्वया पलायितव्यमिति, गतोऽसौ जलान्वेषणाय, दृष्टं चैकत्र पद्मिनीखण्डमण्डितं सरः, गृहीतं च पद्मिनीपत्रपुटके जलं, प्रवृत्तस्य च ब्रह्मदत्ताभिमुखमागन्तुं ग्रहणं तद्वटासन्नदेशे, कथञ्चिदुपलब्धतदपसरणवृत्तान्तैर्दीर्घपृष्ठप्रहितपुरुषैरतिरोपवद्भिर्वरधनोर्बन्धनं वल्लीवितानेन आक्रोशनं चैव दुष्टवचसा कृतं। अन्यच–स हन्यते मुष्टिप्रहारादिभिरमात्यो–वरधनुः, भण्यते च—यथा 'देही'ति ढौकय कुमारमरे! दुराचार! क्व पुनरसौ नीतस्त्वया राजपुत्र इति ?, अत्रान्तरे सङ्केतमनुसरता पठितमिदमनेन—'सहकारमञ्जरीमनुधावति मधुपो विमुच्य मधु मधुरम्। कमले कलयन् पश्चात्सङ्कोचकृतां स्वतनुबाधाम् ॥ १ ॥' 'गुलीयविरेयणपीतो'त्ति प्राकृतत्वात्पीतविरेचनगुलिकः, स हि तैर्ग्रहीतुमुपक्रान्तोऽन्यथाऽऽत्मनो विमुक्तिमनवगच्छन् पूर्वलब्धां विरेचनगुटिकां प्रथममेव पयसा पीतवान्, विरक्तश्च तया, जाताश्च मुखे फेनबुद्बुदाः, एवं च कपटेन मृतः कपटमृतो मृत इति 'छर्दितः' त्यक्तस्तैः। इतश्च तत्पठितं श्रुत्वा कुमारो 'भीतः' इति त्रस्तः 'अथ' अनन्तरम् 'उप्पहं'ति उत्पथेन 'पलायित्थ'त्ति पलायितवान्, तथा च तं पलायमानमवलोक्य कृत्वा स्थविररूपं देवः किमस्य सत्त्वमस्त्युत नेति परीक्षणार्थं 'वाहेसिअ'त्ति वाहितवान् व्यंसितवानित्यर्थः कुमारं। ततश्च परिभ्रमतो वटपुरकं

वणहत्थी अ कुमार जणयइ आहरण वसणगुणलुद्धो । वच्चतो अ पुराओ(वडपुरओ)अहिछत्त अतरा गामो
गहण नईकुडग गहणतरागाणि पुरिसहिअयाणि । देहाणि पुण्णपत्त पिअ खु णो दारओ जाओ ॥३५०॥
सुपइट्ठे कुसकुडिं भिकुडिवित्तासिअसि जिअसत्तू । महुराओ अहिछत्त वच्चतो अतरा लहइ ॥ ३५१ ॥
इदपुरे रुद्दपुरे सिवदत्त विसाहदत्त धूआओ । वडुअत्तणेण लहइ कन्नाओ दुन्नि रज्ज च ॥ ३५२ ॥
रायगिहमिहिलहत्थिणपुर च चपा तहेव सावत्थी । एसा उ नगरहिडी बोद्धव्वा बभदत्तस्स ॥ ३५३ ॥
रयणुप्पया य विजओ बोद्धव्वो दीहरोसमुक्खे य । सभरणनलिणिगुम्म जाईइ पगासण चेव ॥ ३५४ ॥

गाथा एकादश, आसामपि तथैव व्यारया, काम्पिल्य पुर यत्रास्य जन्म, ततोऽसौ गतो गिरितटक सन्निवेश तस्मायम्पा ततो हस्तिनागपुर चानन्तर च साकेत साकेतात्समकटक, ततश्च नन्दिनामक सनिवेशं, ततोऽवस्यानकं नाम स्थान, ततोऽपि चारण्य परिभ्रमन् वशीति–वशगहन तदुपलक्षितं प्रासाद वशीप्रासाद, ततोऽपि समकटक ॥ समकटकादटवीं, ता च पर्यटतो ब्रह्मदत्तस्य तृडतिशयत शुष्ककण्ठौष्ठतालुताऽजनि, ततस्तेनोक्तो वरधनु –भ्रात !

स्थितः पथि कुमारः प्रासं च मिथुनं, उक्तस्तत्पतिः—मदीयं कलत्रमिह गर्भशूलाभ्याहतमास्ते तद्विसर्जय क्षणमेकं स्वकीयपत्नीं, विसर्जिता चासौ तेनानुकम्पापरेण, दृष्टश्च तयाऽसौ, जातस्तस्यापि तदनुरागः, प्रवृत्तं च तयोर्मोहनकं, एवं च कियतीमपि वेलामतिक्रम्य विनिर्गताऽसौ कुडङ्गात्, उक्तं चात्मानं ख्यापयितुं कुमारं प्रति, यथा— गहनं नदीकुडङ्गं ततोऽपि गहनतराण्येव गहनतरकाणि पुरुषहृदयानि भवन्ति, अयं चानेन ध्वनितोऽर्थः—यथा वयं जानीमः स्त्रीहृदयान्यतिगहनानि भवचित्तेन च तान्यपि जितानीत्युक्त्वा पतिं प्रत्याययितुमाह—'देहाणि'न्ति देहीदानीं 'पूर्णपात्रम्' अक्षतभृतभाजनं प्रियं खलु 'नः' अस्माकं यद्दारको जात इति, ते (इति) वक्तव्ये यन्न इत्युक्तं तदैक्यं द्योतयितुं, इत्युक्त्वा च तया धूर्त्या गृहीतं ब्रह्मदत्तोत्तरीयं, गता च पत्यैव सह, ततश्च निर्गतोऽसौ कुडङ्गात्कृतपरिहासः प्रवृत्तो गन्तुं, प्राप्तः सुप्रतिष्ठं, तत्र च कुसकुण्डी नाम कन्या 'भिकुंडिवित्तासियंमि जियसत्तुं'ति आर्षत्वादुभयत्र सुव्व्यत्ययः, 'भिकुण्डिवित्रासिताद्' भिकुण्डिनामनृपतिनिष्काशितात् 'जितशत्रोः' जितशत्रुनामनृपतेः सकाशान्मथुरातोऽहिच्छत्रां व्रजन् 'अन्तरे' अन्तराले 'लभते' प्राप्नोति । तथेन्द्रपुरे शिवदत्तो नाम रुद्रपुरे च विशाखदत्ताभिधानस्तद्दुहितरौ 'वटुकत्वेन' दीर्घपृष्ठपुरुषभीत्या कृतब्राह्मणवेषेण लभते कन्ये द्वे राज्यं च । ततो राजगृहं मिथिलां हस्तिनागपुरं चम्पां तथैव श्रावस्तीम्, अभ्रमीदिति शेषः 'एषा तु' अनन्तरमुपदर्शिता नगरहिण्डिर्बोद्धव्या ब्रह्मदत्तस्येति ॥ एवं च भ्रमतोऽस्य मिलिताः कटककरेणुदत्तादयः पितृवयस्याः, गृहीताः कियन्तोऽपि

तस्माच्च नगरस्थलकं वटस्थलकं चैव भवति विश्रामविषय कौशाम्बी वाराणसी राजगृह गिरिपुर मथुरा अहिच्छत्रा च। ततोऽपि गच्छताऽरण्यानीं प्रविष्टेन दृष्टास्तापसा, प्रत्यभिज्ञातश्च तैर्ब्रह्मराजस्यास्मनिजकस्य सुत इति, धृतश्चातुर्मासीं, तत्र च तापसकुमारकैः सह क्रीडतैकस्मिन् दिनेऽवलोकितो वनहस्ती, समुत्पन्न च नृपसुतसुलभमस्य कुतूहल, प्रारब्धश्च विविधगजशिक्षाभिरमु खेदयितु, आरूढश्च निष्पन्दीकृत्य तत्पृष्ठ, प्रवृत्तश्चासौ कुमारापहरणाय, वीक्षितश्च कियदपि दूर गतेनैकस्तरु, लग्नश्च तदधो व्रजति हस्तिनि विटपैकदेशे कुमार, अपक्रान्ते च करिणि ततस्तरोरुत्तीर्य विमूढदिग्भागो भ्रमितुमारेभे, भ्राम्यंश्चारण्याद्विनिर्गत्य गतो वटपुर, वटपुराच्च प्रस्थितः श्रावस्तिं, गच्छंश्च प्राप्तस्तथाविधमेकमन्तरा ग्राम, उपविष्टश्च तन्निकटविटपिनि विश्रमितु, दृष्टश्चैकेन तत्रत्यश्रेष्ठिना, नीतश्च तेन स्व गृह, कृत चाभ्यागतकर्त्तव्य, परिणायितश्च नैमित्तिकादेशत स्वदुहितर, उपचरितश्च भुजगनिर्मोकसदृशैर्विविधवसनैर्लब्धेन्द्रनीलादिप्रधानमणिभि कटककेयूरकुण्डलादिभिश्चाभरणै, ततस्तद्गुणलुब्धमानस स्थितस्तत्रैव कियत्काल, जनयति तदा तद्दुहितरि कुमार। इतश्च प्राप्ता कृतान्तानुकारिणो दीर्घपृष्ठप्रहितपुरुषा, प्रारब्धाः समन्ततस्तमवलोकितु, उपलब्धतद्वृत्तान्तश्च नष्टस्तद्भयात्, प्रचलितश्च सुप्रतिष्ठपुराभिमुख गन्तु, तत्र च मिलितः कश्चिद्विट कार्पटिको, दृष्ट चाभिमुखमागच्छत् किञ्चित् तथाविध मिथुनक, दृष्ट्वा च तदङ्गना उदाररूपा कुमारमयमवोचत्—यदि युष्मत्प्रसादत कथञ्चिदेना कामयेय इति, ततस्तदुपरोधात्तेनोक्तं—प्रविश तर्हि वशीकुडङ्ग,

'धर्मं' यतिधर्मं क्षान्त्यादिकं 'श्रुत्वा' आकर्ण्य 'प्रव्रजितः' प्रव्रज्यां प्रतिपन्नवान् इति सूत्रभावार्थः ॥ ततः किमित्याह—

कंपिल्लंमि अ नयरे समागया दोऽवि चित्तसंभुया । सुहदुक्खफलविवागं कहिंति ते इक्कमिक्कस्स ॥ ३ ॥

काम्पिल्ये च नगरे—ब्रह्मदत्तोत्पत्तिस्थाने 'समागतौ' मिलितौ द्वावपि चित्रसंभूतौ जन्मान्तरनामतः 'सुखदुःखफलविपाकं' सुकृतदुष्कृतकर्मानुभवरूपं 'कहंति'त्ति कथयतः स्मेति शेषः, ततश्च कथितवन्तौ तौ चित्रजीवयति—ब्रह्मदत्तौ 'एक्कमेक्कस्स'त्ति एकैकस्य परस्परमितियावत् इति सूत्राक्षरार्थः ॥ भावार्थस्तु निर्युक्तिकृतोच्यते—

जाईइ पगास निवेयणं च जाईपयासणं चित्ते । चित्तस्स य आगमणं इड्ढिपरिच्चागसुत्तरथो ॥ ३५५ ॥

तदा हि ब्रह्मदत्तो जातिस्मरणोपलब्धस्वजातीनां 'दासा दसन्नये आसी' इत्यादिना सार्द्धश्लोकेन जनाय प्रकाशनं निवेदनं च—य इमं द्वितीयश्लोकं पूरयति तस्मै राज्यार्द्धमहं प्रयच्छामीति विहितवान्, ततस्तदर्थिना जनेनोद्घुष्यते, तद् ग्रामनगराकारादिषु पठ्यमानं चाकर्णितं कर्ण्योपकर्ण्या चित्रजीवयतिना, ततस्तथाविधज्ञानातिशयोपयोगतः स्वजातीरुपलभ्य जातोऽस्याभिप्रायो यथा—गत्वा तं जन्मान्तरनिजभ्रातरं संभूतजीवमवबोधयामीति, प्रस्थितस्ततः स्थानात्, प्राप्तः क्रमेण काम्पिल्यं, स्थितस्तद्बहिरुद्याने, श्रुतश्चारघट्टिकपरिपठ्यमानः सार्द्धश्लोकः, पूरितश्चानेन द्वितीयश्लोकः, अवधारितश्चारघट्टिकेन, धावितश्चासौ नृपसकाशं राज्यलोभेन, पठितं चैतेन तत्पुरतः,

प्रत्यन्तराजान , समुत्पन्न चक्ररत्न, प्रारब्धस्तदुपदर्शितमार्गेण दिग्विजय , प्राप्त काम्पिल्ये, निर्गतस्तदभिमुख दीर्घपृष्ठो, लक्ष्मनयोरायोधन, विनिपातितोऽसौ ब्रह्मदत्तेन, एव च वोढव्यस्तस्य दीर्घपृष्ठविपयरोपमोक्षश्च, अत्रान्तरे मिलिता परिणीतकन्यापितर , समुत्पन्नानि च यथाऽवसर शेपरत्नानि, साधित पट्खण्डमपि भरत, प्राप्ताश्च नवापि निधय , परिणत चक्रवर्त्तिपद, एव च सुकृतफलमुपभुञ्जतोऽतिक्रान्त कियानपि काल , अन्यदा चोपनीत देवतया मन्दारदाम, समुत्पन्न तद्दर्शनादस्य जातिस्मरण–अनुभूतानि मयैवविधकुसुमदामानि, अह हि नलिनगुल्मविमाने देवोऽभव ॥ इत्येकादशनिर्युक्तिगाथार्थ । इत्थ तावत्काम्पिल्ये सभूतश्चक्रवर्त्ती जात , चित्रस्य तु का वार्त्तेत्याह—

चित्तो पुण जाओ॑ पुरिमतालमि । सिट्ठिकुलमि विसाले धम्म सोऊण पव्वइओ ॥ २ ॥

पादत्रय, चित्र पुनर्जात पुरिमताले, स हि चित्रनामा महर्षि तत्र सभूतिनाम्नि भ्रातरि तथाऽनशनं प्रतिपन्नवत्यहो दुरतो मोहश्चित्रा कर्मपरिणतिश्चञ्चल चित्तमित्यादि विचिन्त्य चतुर्विधमप्याहारं प्रत्याख्यातवान्, मृत्वा च पण्डितमरणेन समुत्पन्नस्तत्रैव नलिनगुल्मनाम्नि विमाने, ततस्तत्र स्वस्थितिमनुपाल्योत्पन्न पुरिमतालपुरे, तत्रापि केत्याह–'श्रेष्ठिकुले' वणिक्प्रधानान्वये 'विशाले' विस्तीर्णे पुत्रपौत्रादिवृद्धिमति, प्राप्तवयाश्च तथाविधस्थविरसन्निधौ

दासा दसन्नये आसी, मिआ कालिंजरे नगे । हंसा मयंगतीराए, सोवागा कासिभूमिए ॥ ६ ॥
देवा य देवलोगंमि, आसि अम्हे महिड्ढिआ । इमा णो छट्ठिया जाई, अन्नमन्नेण जा विणा ॥ ७ ॥

चक्रवर्त्ती 'महर्द्धिकः' बृहद्विभूतिर्ब्रह्मदत्तो महायशाः 'भ्रातरं' जन्मान्तरसोदर्यं 'बहुमानेन' मानसप्रतिबन्धेन 'इदं' वक्ष्यमाणलक्षणं 'वचनं' वाक्यं 'अब्रवीद्' इत्युक्तवान्, यथा 'आसिमो'त्ति अभूवावां भ्रातरौ द्वावपि 'अन्योऽन्यं' परस्परं 'वसाणुग'त्ति वशम्–आयत्ततामनुगच्छन्तौ यौ तावन्योऽन्यवशानुगौ, तथा 'अन्योऽन्यमनुरक्तौ' अतीव स्नेहवन्तौ, तथा अन्योऽन्यहितैषिणौ' परस्परशुभाभिलाषिणौ, पुनः पुनरन्योऽन्यग्रहणं च तुल्यचित्ततातिशयख्यापनार्थं, मकारश्च सर्वत्रालाक्षणिकः । केषु पुनर्भवेष्वित्थमावामभूवेत्याह—दासौ 'दशार्णे' दशार्णदेशे 'आसि'त्ति अभूव, मृगौ 'कालिञ्जरे' कालिञ्जरनाम्नि नगे, हंसौ 'मृतगङ्गातीरे' उक्तरूपे, 'श्वपाकौ' चाण्डालौ 'कासिभूमिए'त्ति काशीभूम्यां काश्यभिधाने जनपदे, देवौ च देवलोके सौधर्माभिधानेऽभूव 'अम्हे'त्ति आवां महर्द्धिकौ न तु किल्बिषिकौ, 'इमा मे'त्ति 'इमा णो'त्ति वा उभयत्रेयमावयोः षष्ठेव षष्ठिका जातिः, कीदृशी येत्याह—'अन्नमन्नेणं'ति अन्योऽन्येन परस्परेण या विना, कोऽर्थः ?–परस्परसाहित्यरहिता, वियुक्तयोर्यकेति भाव इति सूत्रचतुष्टयार्थः ॥ इत्थं चक्रवर्त्तिनोक्ते मुनिराह—

कम्मा नियाणप्पगडा, तुमे राय ! विचिंतिगा । तेसिं फलविवागेणं, विप्पओगमुवागया ॥ ८ ॥

परिपूर्णं श्लोकद्वय, जातस्तदाकर्णनात्तस्य चित्तावेश , निरुद्धश्च तज्जनितमूर्च्छयाऽऽश्वासमार्गो, निमीलित लोचनयुगल, लुठित स आसनात्, निपतितो भुवि, किमेतत् किमेतदित्यादिनाऽऽकुलित सर्वोऽपि तत्परिच्छद , दृष्टश्च तेनारघट्टिक , ताडित पार्ष्णिप्रहारादिभि , आरटितमेतेन—न मयैतत्पूरित न मयेति, किन्त्वन्येनैव भिक्षुणैतत्कलिकन्दमूलेनेति, अत्रान्तरे लब्धा चेतना, प्राप्त च स्वास्थ्य चक्रवर्त्तिना, उक्त च—कासौ श्लोकपूरयिताऽऽस्त इति ?, कथितस्तद्व्यतिकरो यथा—केनचिद् भिक्षुणैतत्पूरित न त्वमुनेति, पृष्ट च पुनरनेन हर्षोत्फुल्लनयनयुगलेन—क तद्दर्शनासाविति, कथितमारघट्टिकेन—देव ! मदीयवाटिकाया, एतच्चाकर्ण्य प्रचलित सबलवाहन सकलान्त पुरसमन्वितश्च तद्दर्शनाय, प्राप्तस्तदुद्यान, दृष्टो मुनि , वन्दित सबहुमान, उपवेशितश्चैकासने, पप्रच्छतु परस्परमनामय, कथयामासतुश्च यथास्वमनुभूतसुखदु सफलविपाक, तत्कथनानन्तर च वर्णिता निजसमृद्धिश्चक्रवर्त्तिना, प्ररूपितस्तद्विपाकदर्शनतस्तत्परित्यागश्चिनयतिना, एतावानेव प्रस्तुताध्ययनसूत्रस्यार्थोऽभिधेय इति सूत्रनिर्युक्तिगाथयोर्भावार्थ । सम्प्रति यदुक्त—'सुखदु सफलविपाक तौ कथयामासतु'रिति, तत्र चक्रवर्त्ती यथा कथयामास तथा सबन्धपुरस्सरमाह—

चक्कवट्टी महिड्ढीओ, बंभदत्तो महायसो । भायर बहुमाणेण, इम वयणमब्बवी ॥ ४ ॥
आसिमो भायरा दोऽवि, अन्नमन्नवसाणुगा । अन्नमन्नमणूरत्ता, अन्नमन्नहिएसिणो ॥ ५ ॥

भिक्षुकत्वाद्भवतः, तथा च किमिति भवताऽपि मयैव सहोपार्जितानि शुभकर्माणि विफलानि जातानीत्याशय इति सूत्रार्थः ॥ मुनिराह—

सव्वं सुचिण्णं सफलं नराणं, कडाण कम्माण न मुक्खु अत्थि ।
अत्थेहि कामेहि अ उत्तमेहिं, आया ममं पुण्णफलोववेओ ॥ १० ॥
जाणाहि संभूय! महाणुभागं, महिड्डियं पुण्णफलोववेयं ।
चित्तंपि जाणाहि तहेव रायं!, इड्डी जुई तस्सवि अप्पभूआ ॥ ११ ॥
महत्थरूवा वयणप्पभूया, गाहाणुगीया नरसंघमज्झे ।
जं भिक्खुणो सीलगुणोववेया, इहऽज्जयंते समणोऽम्हि जाओ ॥ १२ ॥

'सर्वं' निरवशेषं 'सुचीर्णं' शोभनमनुष्ठितं, तपःप्रभृतीति गम्यते, चीर्णशब्दस्य 'सुचीर्णं प्रोषितव्रत'मित्यादिरूढितः साधुत्वं, सह फलेन वर्त्तत इति सफलं, नराणामिति, उपलक्षणत्वादशेषाणामपि प्राणिनां, किमिति ?, यतः कृतेभ्यः—अर्थादवश्यवेद्यतयोपरचितेभ्यः कर्मभ्यो न 'मोक्षः' मुक्तिरस्तीति ,ददति हि तानि निजफलमवश्यमिति भावः, प्राकृतत्वाच सुब्व्यत्ययः, स्यादेतत्–त्वयैव व्यभिचार इत्याह–'अर्थैः' द्रव्यैरर्थैर्वा–प्रार्थनीयैः, वस्तुभिरिति गम्यते, कामैश्च—मनोज्ञशब्दादिभिः 'उत्तमैः' प्रधानैः, लक्षणे तृतीया, तत एतदुपलक्षितः सन्नात्मा मम

'कर्माणि' ज्ञानावरणादीनि नितरा दीयन्ते—लूयन्ते दीयन्ते वा खण्ड्यन्ते तथाविधसानुबन्धफलाभावतस्तप – प्रभृतीन्यनेनेति निदान—साभिष्वङ्गप्रार्थनारूप तेन प्रकर्षेण कृतानि—विहितानि निदानप्रकृतानि, निदानवशनिबद्धानीति योऽर्थ , त्वया राजन् ! विचिन्तितानीति, तद्धेतुभूतार्त्तध्यानादिध्यानत कर्माण्यपि तथोच्यन्ते 'तेपाम्' एवंविधकर्मणा फल चासौ विपाकश्च—शुभाशुभजनकत्वलक्षण फलविपाकस्तेन, यद्वा कर्माणि—अनुष्ठानानि 'णियाणपयड'त्ति निदानेनैव शेपशुभानुष्ठानस्याच्छादितत्वात्प्राग्वत्प्रकटनिदानानि त्वया राजन् ! विचिन्तितानि कृतानीतियावत्, तेपा फल क्रमात्कर्म तद्विपाकेन 'विप्रयोग' विरह 'उपागतौ' प्रासौ, किमुक्त भवति ?—यत्तदा त्वयाऽसन्निवारितेनापि निदानमनुष्ठित तत्फलमेतद् यदावयोस्तथाभूतयोरपि वियोग इति सूत्रार्थ ॥ इत्थमवगतवियोगहेतुश्चक्री पुन प्रश्नयितुमाह—

सच्चसोअप्पगडा, कम्मा मए पुरा कडा। ते अज्ज परिभुंजामो, किं नु चित्तेवि से तहा ? ॥ ९ ॥

सत्य—मृपाभापापरिहाररूप शौचम्—अमायमनुष्ठान ताभ्या प्रकटानि—प्रख्यातानि कर्माणि—प्रक्रमाच्छुभानुष्ठानानि शुभप्रकृतिरूपाणि वा मया पुरा कृतानि, यानीति गम्यते, तानि 'अद्य' अस्मिन्नहनि, शेपतद्रूपकालोपलक्षण चैतत् 'परिभुंजामो'त्ति परिभुञ्जे—तद्विपाकोपनतस्त्रीरतादिपरिभोगद्वारेण वेदये, यथेति गम्यते, किमिति प्रश्ने, 'नु' इति वितर्के, 'चित्रोऽपि' चित्रनामाऽपि, कोऽर्थ ?—भवानपि 'से' इति तानि तथा परिभुङ्क्ते ?, नैव भुङ्क्ते,

इति ख्यापितं भवति । क्वेत्याह—नराणां—पुरुषाणां सङ्घः—समूहस्तन्मध्ये, गाथामेव पुनर्विशेषयितुमाह—'यां' गाथां 'भिक्षवः' मुनयः शीलं—चारित्रं तदेव गुणः, यद्वा गुणः पृथगेव ज्ञानं, ततः शीलगुणेन शीलगुणाभ्यां वा—चारित्रज्ञानाभ्यामुपेताः—युक्ताः शीलगुणोपेताः 'इह' अस्मिन् जगति 'अज्जयंते'त्ति अर्जयन्ति पठनश्रवणतदर्थानुष्ठानादिभिरावर्जयन्ति । यद्वा 'जं भिक्खुणो' इत्यत्र श्रुत्वेति शेषः, ततो यां श्रुत्वा 'जयंत'त्ति 'इह' अस्मिन् जिनप्रवचने 'यतन्ते' यत्नवन्तो भवन्ति, सोपस्कारत्वात्सा मयाऽप्याकर्णिता, ततः 'श्रमणः' तपस्वी अस्मि अहं जातो, न तु दुःखदग्धत्वादिति भावः, पठ्यते च—'सुमणो'त्ति सुमनाः शोभनमना इति सूत्रत्रयार्थः ॥ इत्थं मुनिनाऽभिहिते ब्रह्मदत्तः स्वसमृद्ध्या निमन्त्रयितुमाह—

उच्चोअए महुकके य बंभे, पवेइया आवसहा य रम्मा ।
इमं गिहं वित्तधणप्पभूयं, पसाहि पंचालगुणोववेयं ॥ १३ ॥
नट्टेहि गीएहि य वाइएहिं, नारीजणाहिं परिवारयंतो ।
भुंजाहि भोगाइं इमाइं भिक्खू!, मम रोअई पव्वज्जा हु दुक्खं ॥ १४ ॥

उच्चोदयो मधुः कर्कः, चशब्दान्मध्यो ब्रह्मा च पञ्च प्रधानाः प्रासादाः प्रवेदिताः, मम वर्द्धकिपुरःसरैः सुरैरुपनीता इत्यर्थः, 'आवसथाश्च' शेषभवनप्रकारा 'रम्याः' रमणीयाः, पाठान्तरतश्च आवसथाः अतिरम्याः—सुरम्या

पुण्यफलेन—शुभकर्मफलेनोपपेत —अन्वित स पुण्यफलोपपेत इति ॥ यथा त्व 'जानासि' अवधारयसि 'सभूत !' पूर्वजन्मनि सभूताभिधान ! 'महानुभाग' बृहन्माहात्म्य 'महर्द्धिक' सातिशयविभूतियुक्तम् अत एव पुण्यफलोपेत चित्रमपि 'जानीहि' अवबुध्यस्व 'तथैव' अविशिष्टमेव 'राजन् !' नृप !, किमित्येयमत आह—ऋद्धि —सम्पत् द्युति - दीप्तिस्तस्यापीति—जन्मान्तरनामतश्चित्राभिधानस्य, ममापीति भाव , चशब्दो यस्मादर्थे, ततो यस्मात्प्रभूता—बह्वी-त्यर्थ , यद्वाऽऽत्मा मम पुण्यफलोपेत इति, अनेन चित्र एवात्मान निर्दिशति, तथा जानीहि संभूत इत्यादौ आत्मेत्यनुवर्त्तते, अर्थवशाच्च विभक्तिपरिणाम , ततश्चैव योज्यते—हे सभूत ! यथा त्वमात्मान महानुभागादिविशेषणविशिष्ट जानासि तथा चित्रमपि जानीहि, चित्रनाम्नो ममापि गृहस्थभावे एवविधत्वादेवेति भाव , शेष प्राग्वत् ॥ यदि तवाप्येवविधा समृद्धिरासीत् तत्किमिति प्रव्रजित इत्याह—महान्—अपरिमितोऽनन्तद्रव्यपर्यायात्मकतयाऽर्थ —अभिधेय यस्य तन्महार्थ रूप—स्वरूप न तु चक्षुर्ग्राह्यो गुण , ततो महार्थ रूप यस्या सा तथा, महतो वाऽर्थान्—जीवादितत्त्वरूपान् रूपयति—दर्शयतीति महार्थरूपा, 'वयणप्पभूय'त्ति वचनेन अप्रभूता अल्पभूता वा—अल्पत्व प्राप्ता वचनाल्पभूता वचनात्प्रभूता वा स्तोकाक्षरेतियावत्, केयमीदृशीत्याह—गीयत इति गाथा, सा चेहार्थाद्धर्माभिधायिनी सूत्रपद्धति , अन्विति—तीर्थकृद्गणधरादिभ्य पश्चाद्गीता अनुगीता, कोऽर्थः ?—तीर्थकरादिभ्य श्रुत्वा प्रतिपादिता स्थविरैरिति शेष , अनुलोम वा गीताऽनुगीता, अनेन श्रोत्रनुकूलैव देशना क्रियत

तं पुव्वनेहेण कयाणुरागं, नराहिवं कामगुणेसु गिद्धं ।
धम्मस्सिओ तस्स हियाणुपेही, चित्तो इमं वयणमुदाहरित्था ॥ १५ ॥

'तं' ब्रह्मदत्तं 'पूर्वस्नेहेन' जन्मान्तरप्ररूढप्रणयेन 'कृतानुरागं' विहिताभिष्वङ्गं 'नराधिपं' राजानं 'कामगुणेषु' अभिलष्यमाणशब्दादिषु 'गृद्धम्' अभिकाङ्क्षान्वितं 'धर्माश्रितः' धर्मस्थितः 'तस्य' इति चक्रिणः हितं—पथ्यम् अनुप्रेक्षते—पर्यालोचयतीत्येवंशीलो हितानुप्रेक्षी—कथं नु नामास्य हितं स्यादिति विचिन्तनपरश्चित्रजीवयतिरिदं वाक्यं पाठान्तरतो वचनं वा 'उदाहरित्थ'त्ति 'उदाहृतवान्' उक्तवानिति सूत्रार्थः ॥ किं तदुदाहृतवानित्याह—

सव्वं विलवियं गीयं, सव्वं नट्टं विडंबणा । सव्वे आभरणा भारा, सव्वे कामा दुहावहा ॥ १६ ॥
बालाभिरामेसु दुहावहेसु, न तं सुहं कामगुणेसु रायं ! ।
विरत्तकामाण तवोधणाणं, जं भिक्खुणं सीलगुणे रयाणं ॥ १७ ॥

'सर्वम्' अशेषं विलपितमिव विलपितं निरर्थकतया रुदितयोनितया च, तत्र निरर्थकतया मत्तबालकगीतवत् रुदितयोनितया च विरहावस्थमृतप्रोषितभर्तृकागीतवत्, किमित्याह—'गीतं' गानं, तथा सर्वं 'नृत्यं' गात्रविक्षेपणरूपं विडम्बितमिव विडम्बितं, यथा हि यक्षाविष्टः पीतमद्यादिर्वा यतस्ततो हस्तपादादीन् विक्षिपति, एवं नृत्यन्नपीति, तथा सर्वाणि 'आभरणानि' मुकुटाङ्गदादीनि 'भाराः' तत्त्वतो भाररूपत्वात्तेषां, तथाविधवनिताभर्तृ-

या, एते तु यत्रैव चक्रिणे रोचते तत्रैव भवन्तीति वृद्धा , किञ्च–'इद' प्रत्यक्ष 'गृहम्' अवस्थितप्रासादरूप वित्त—प्रतीत तच्च तद्धन च–हिरण्यादि तेनोपेतं–युक्त वित्तधनोपेतं, पठन्ति च 'चित्तधणप्पभूयं'ति, तत्र प्रभूत—बहु चित्रम्—आश्चर्यमनेकप्रकारं वा धनमस्मिन्निति प्रभूतचित्रधन, सूत्रे तु प्रभूतशब्दस्य परनिपात प्राग्वत्, 'प्रसाधि' प्रतिपालय पञ्चाला नाम जनपदस्तस्मिन् गुणा–इन्द्रियोपकारिणो रूपादयस्तैरुपेत पञ्चालगुणोपेत, किमुक्त भवति ?–पञ्चालेषु यानि विशिष्टवस्तूनि तान्यस्मिन् गृहे सर्वाण्यपि सन्ति, तदा पञ्चालानामत्युदीर्णत्वात्पञ्चालग्रहणम्, अन्यथा हि भरतेऽपि यद्विशिष्टवस्तु तत् तद्गेह एव तदासीत् ॥ किं च 'णट्टेहिं'ति द्वात्रिंशत्पात्रोपलक्षितैर्नाट्यैर्नृत्यै॰र्वा—विविधाङ्गहारादिस्वरूपैर्गीतै —ग्रामस्वरमूर्च्छनालक्षणै , चस्य भिन्नक्रमत्वात्, 'वाइएहिं'ति वादित्रैश्च मृदङ्ग॰मुकुन्दादिभि 'नारीजनान्' स्त्रीजनान् 'परिवारयन्' परिवारीकुर्वन्, पठ्यते च–'पवियारियतो'त्ति प्रविचारयन् सेवमानो, 'भुञ्जाहि'त्ति भुङ्क्ष्व भोगानिमान्–परिदृश्यमानान्, सूत्रत्वात् सर्वत्र लिङ्गव्यत्यय , भिक्षो !, इह तु पदृज॰तुरङ्गमाद्यनभिधाय स्त्रीणामेवाभिधान तत् स्त्रीलोलुपत्वात्तस्य, तासामेव चाऽत्यन्ताक्षेपकत्वख्यापनार्थं, कदाचिच्चित्रो वदेदित्थमेव सुखमित्याह—मम 'रोचते' प्रतिभाति प्रव्रज्या, 'हु' अवधारणे भिन्नक्रमश्च, दु खमेव, न मनागपि सुख, दु खहेतुत्वादिति भाव इति सूत्रद्वयार्थ ॥ इत्थ चक्रिणोक्ते मुनि किं कृतवान् ? इत्याह—

'नरेन्द्र !' चक्रवर्त्तिन् ! जायन्तेऽस्यामिति जातिः 'अधमा' निकृष्टा 'नराणां' मनुष्याणा मध्ये 'श्वपाकजातिः' चाण्डालजातिः 'दुहतो'त्ति द्वयोरपि 'गतयोः' प्राप्तयोः, किमुक्तं भवति ?—यदाऽऽवां श्वपाकजातावुत्पन्नौ तदा सर्वजनगर्हिता जातिरासीत्, कदाचित्तामवाप्याप्यन्यत्रैवोपितौ स्यातामित्याह—यस्यां, वयं प्राग्वच्च बहुवचनं,'सर्वजनस्य' अशेपलोकस्य 'द्वेष्यौ' अप्रीतिकरौ 'वसीय'त्ति अवसाव–उपितौ, केपु ?—श्वपाकानां निवेशनानि–गृहाणि श्वपाकनिवेशनानि तेपु, कदाचित्तत्रापि विज्ञानविशेपादिनाऽहीलनीयावेव स्यातामित्याह–तस्यां च जातौ श्वपाकसम्बन्धिन्यां च, 'तुः' विशेपणे, ततश्च जात्यन्तरेभ्यः कुत्सितत्वं विशिनष्टि, पापैव पापिका तस्यां कुत्सितायां, पापहेतुभूतत्वेन वा पापिका तस्यां, प्रापिकायां वा नरकादिकुगतेरिति गम्यते, 'वुच्छे'ति उपितौ 'मु' इत्यावां, केपु ?—श्वपाकनिवेशनेपु, कीदृशौ ?—सर्वस्य लोकस्य 'जुगुप्सनीयौ' हीलनीयौ 'इह' इत्यस्मिन् जन्मनि 'तुः' पुनरर्थस्तत इह पुनः 'कर्माणि' शुभानुष्ठानानि 'पुरेकडाइं'ति पूर्वजन्मोपार्जितानि विशिष्टजात्यादिनिबन्धनानीति शेपः, तत उत्पन्नप्रत्ययैः पुनस्तदुपार्जन एव यत्नो विधेयो न तु विपयाभिष्वङ्गव्याकुलितमानसैरेव स्थेयमिति भाव इति ॥ यतश्चैवमतः 'सः' इति यः पुरा संभूतनामाऽनगार आसीद् 'इदानीम्' अस्मिन् काले 'सि'त्ति पूरणे यद्वा 'दाणिसिं'ति देशीयभापयेदानीं राजा महानुभागो महर्द्धिकः पुण्यफलोपेतश्च सन् दृष्टधर्मफलत्वेनाभिनिष्क्रामेति संबन्धः, अथवा सोपरकारत्वाद्यत् स एव त्वमिदानीं राजा महानुभागताद्यन्वित इह जातस्तत्कर्माणि पुराकृतानीति

कारितसुवर्णस्थगितशिलापुत्रकाभरणवत्, सर्वे 'कामा' शब्दादयो 'दु खावहा' मृगादीनामिवायतौ दु खावासिहेतुत्वात्, मत्सरेर्ष्याविषादादिभिश्चित्तव्याकुलत्वोत्पादकत्वान्नरकादिहेतुत्वाच्चेति। तथा बालाना—विवेकरहितानामभिरामा —चित्ताभिरतिहेतवो ये तेषु 'दु खावहेसु' उक्तन्यायेन दु खप्रापकेषु न तत्सुख 'कामगुणेसु' मनोज्ञशब्दादिषु, सेव्यमानेष्विति शेष, 'राजन्!' पृथ्वीपते! 'विरत्तकामाण'त्ति प्राग्वत्, कामविरक्ताना—विषयपराङ्मुखाना तप एव धन येषा ते तपोधनास्तेषा यत्सुखमिति सबन्ध, 'भिक्खूणा' यतीना शीलगुणयोर्वा सूत्रत्वाद् 'रताना' आसक्तानामिति सूत्रद्वयार्थ ॥ बालेत्यादिसूत्र चूर्णिकृता न व्याख्यात, क्वचित्तु दृश्यत इत्यस्माभिरुन्नीत ॥ सम्प्रति धर्मफलोपदर्शनपुर सरमुपदेशमाह—

नरिंद जाई अहमा नराण, सोवागजाई दुहओ गयाण।
जहिं वय सव्वजणस्स वेसा, वसीअ सोवागनिवेसणेसु ॥ १८ ॥
तीसे अ जाईइ उ पावियाए, वुच्छा मु सोवागनिवेसणेसु।
सव्वस्स लोगस्स दुगुछणिज्जा, इह तु कम्माइ पुरेकडाइ ॥ १९ ॥
सो दाणि सि राय! महाणुभागो महिड्ढिओ पुण्णफलोववेओ।
चइत्तु भोगाइ असासयाइ, आयाणहेउ अभिनिक्खमाहि ॥ २० ॥

शशिनृपतिवत्किं न मया तदैव सदनुष्ठानमनुष्ठितमिति खिद्यत एवाधर्मकारीति सूत्रार्थः ॥ स्यादेतत्–मृत्युमुखोपनीतस्य परत्र वा दुःखाभिहतस्य स्वजनादयस्त्राणाय भविष्यन्ति, ततो न शोचिष्यन्ते इत्याशङ्कयाह—

जहेह सीहो व मियं गहाय, मच्चू नरं नेइ हु अंतकाले ।
न तस्स माया व पिया व भाया, कालंमि तंमंसहरा भवंति ॥ २२ ॥
न तस्स दुक्खं विभयंति नायओ, न मित्तवग्गा न सुआ न बंधवा ।
इक्को सयं पचणुहोइ दुक्खं, कत्तारमेवं अणुजाइ कम्मं ॥ २३ ॥

'यथे'त्यौपम्ये 'इहे'ति लोके 'सिंहः' मृगपतिः, वेति पूरणे, यद्वा वाशब्दोऽयं विकल्पार्थे, ततो व्याघ्रादिर्वा 'मृगं' कुरङ्गं 'गृहीत्वा' उपादाय प्रक्रमात्स्वमुखं परलोकं वा नयतीति सम्बन्धः, एवं 'मृत्युः' कृतान्तः 'नरं' पुरुषं नयति 'हुः' अवधारणे, ततो नयत्येव, कदा ?–अन्तकाले जीवितव्यावसानसमये, किमुक्तं भवति ?–यथाऽसौ सिंहेन नीयमानो न तस्मै अलम्, एवमयमपि जन्तुर्मृत्युना, कदाचित्स्वजनस्तत्र साहाय्यं करिष्यत्यत आह–न तस्य–मृत्युना नीयमानस्य माता वा पिता वा 'भाय'त्ति वाशब्दस्येह गम्यमानत्वाद्भ्राता वा 'काले तस्मिन्' जीवितान्तरूपे अंशं–प्रक्रमाज्जीवितव्यभागं धारयन्ति–मृत्युना नीयमानं रक्षन्तीत्यंशधराः, यथा हि नृपादौ स्वजनसर्वस्वमपहरति स्वद्रविणदानतः स्वजनादिभिस्तद्रक्ष्यते नैवं स्वजीवितव्यांशदानतस्तज्जीवितं मृत्युना नीयमानम्, उक्तं

पूर्वेण संवन्ध', कोऽर्थ ?–पुराकृतकर्मविजृम्भितमेवैतत्, कथमन्यथा तथाभूतस्यैवंविधसमृद्ध्यवाप्तिरिति भाव, यतश्चैवमतोऽभिनिष्क्रामेति सवन्ध, किं कृत्वेत्याह–'त्यक्त्वा' अपहाय भुज्यन्त इति भोगा –द्रव्यनिचया कामा वा तान् 'अशाश्वतान्' अनित्यान् आदीयते–सद्विवेकैर्गृह्यत इत्यादान –चरित्रधर्मस्तद्धेतोरभिनिष्क्राम–आभिमुख्येन प्रव्रजितो भव, गृहस्थताया हि न सर्वविरतिरूपचारित्रसम्भव इति भाव', पठन्ति च–'आयाणमेवा अणुचिंतयाही'ति, स्पष्टमिति सूत्रत्रयार्थ ॥ क एवमकरणे दोष इत्याह—

इह जीविए राय ! असासयम्मि, धणियं तु पुण्णाइँ अकुव्वमाणो ।
से सोअई मच्चुमुहोवणीए, धम्मं अकाऊण परंमि लोगे ॥ २१ ॥

इह 'जीविते' मनुष्यसम्बन्धिन्यायुषि राजन् ! 'अशाश्वते' अस्थिरे 'धणियं तु'त्ति अतिशयेनैव न तु ध्वजपटप्रान्ताद्यन्यास्थिरवस्तुसाधारणतया 'पुण्यानि' पुण्यहेतुभूतानि शुभानुष्ठानान्यकुर्वाण 'स' इति पुण्यानुपार्जक: 'शोचते' दुःखार्त्त पश्चात्तापं विधत्ते, मृत्यु –आयु परिक्षयस्तस्य मुखमिव मुख मृत्युमुख–शिथिलीभवद्बन्धनावस्था तदुपनीतस्तथाविधकर्मभिरुपढौकितो मृत्युमुखोपनीत सन् 'धर्मं' शुभानुष्ठानम् 'अकृत्वा' अननुष्ठाय 'परंमि'त्ति चस्य गम्यमानत्वात् परस्मिश्च 'लोके' जन्मान्तररूपे, गत इति शेष, नरकादिषु दुस्सहासातवेदनार्दितशरीर

द्वितीयमस्येति कर्मात्सद्वितीयः 'अवशः' अस्वतन्त्रः प्रकर्षेण याति–प्राप्नोति प्रयाति, कं ?–'परम्' अन्यं 'भवं' जन्म 'सुंदर'त्ति विन्दुलोपात् 'सुन्दरं' स्वर्गादि 'पापकं वा' नरकादि, स्वकृतकर्मानुरूपमिति भावः ॥ तत्र किमन्यदर्शनिनामिव सशरीर एव भवान्तरं यात्युत अन्यथेति ?, उच्यते, औदारिकशरीरापेक्षयाऽशरीर एव, तर्हि तत्त्यक्त्वेत्यत्र का वार्त्तेत्याह–'तद्' इति यत्तेन त्यक्तम् 'एकम्' अद्वितीयं तद्द्वितीयस्य जन्तोरन्यत्र सङ्क्रमणात् तुच्छम्–असारमत एव कुत्सितं शरीरं शरीरकम्, अनयोरतु विशेपणसमासः, 'से' तस्य भवान्तरगतस्य संबन्धि चीयन्ते–मृतकदहनाय इन्धनानि अस्यामिति चितिः–काष्ठरचनात्मिका तस्यां गतं–स्थितं चितिगतं दग्ध्वा 'तुः' पूरणे 'पावकेन' अग्निना भार्या च पुत्रोऽपि च ज्ञातयश्च 'दातारम्' अभिलपितवस्तुसम्पादयितारमन्यम् 'अनुसङ्क्रामन्ति' उपसर्पन्ति, ते हि गृहमनेनावरुद्धमास्त इति तद्बहिर्निष्काश्य जनलज्जादिना च भस्मसात्कृत्य कृत्वा च लौकिककृत्यान्याक्रन्द्य च कतिचिद्दिनानि पुनः स्वार्थतत्परतया तथाविधमन्यमेवानुवर्त्तन्ते, न तु तत्प्रवृत्तिमपि पृच्छन्ति, आस्तां तदनुगमनमित्यभिप्राय इति सूत्रद्वयार्थः ॥ किञ्च–

उवणिज्जई जीवियमप्पमायं, वण्णं जरा हरइ नरस्स रायं ! ।
पंचालराया ! वयणं सुणाहि, मा कासि कम्माइं महालयाइं ॥ २६ ॥

'उपनीयते' ढौक्यते प्रक्रमान्मृत्यवे तथाविधकर्मभिः 'जीवितम्' आयुः 'अप्रमादं' प्रमादं विनैव, आवीचीमर-

हि—"न पिता भ्रातर पुत्रा, न भार्या न च बान्धवा । न शक्ता मरणात्त्रातु, शक्ता ससारसागरे ॥ १ ॥" इति, अथवाऽशो—दु खभागस्त हरन्ति—अपनयन्ति ये तेऽशहरा भवन्तीति, इदमेवाभिव्यनक्ति, आद्यव्याख्याने तु स्यादेतद्—जीवितारक्षणेऽपि दु खाशहारिणो भविष्यन्त्यत आह—न तस्य—मृत्युना नीयमानस्य तत्कालभाविना दु खेनात्यन्तपीडितस्य दु ख शारीरं मानस वा 'विभजन्ति' विभागीकुर्वन्ति 'ज्ञातय ' दूरवर्त्तिन स्वजना न 'मित्रवर्गा' सुहृत्समूहा न 'सुता ' पुत्रा न 'बान्धवा ' निकटवर्त्तिन स्वजना , किन्तु एक —अद्वितीय 'स्वयम्' आत्मना 'प्रत्यनुभवति' वेदयते 'दु ख' क्लेश, किमिति ?, यत 'कर्तारमेव' उपार्जयितारमेव 'अनुयाति' अनुगच्छति, किं तत् ?—कर्म, येन तत्कृत तस्यैव फलमुपनयतीति भाव इति सूत्रद्वयार्थ ॥ इत्थमशरणत्वभावनामभिधायैकत्वभावनामाह—

चिच्चा दुपय च चउप्पय च, खित्त गिह धणधन्न च सव्व ।
कम्मप्पबीओ अवसो पयाइ, पर भव सुदर पावग वा ॥ २४ ॥
त इक्कग तुच्छसरीरग से, चिईगय दहिउ पावगेण ।
भज्जा य पुत्तावि य नायओ अ, दायारमन्न अणुसकमति ॥ २५ ॥

'त्यक्त्वा' उत्सृज्य 'द्विपद च' भार्यादि 'चतुष्पद च' हस्त्यादि 'क्षेत्रम्' इक्षुक्षेत्रादि 'गृह' धवलगृहादि 'धण'त्ति धन—कनकादि 'धान्य' शाल्यादि, चशब्दाद् वस्त्रादि च, 'सर्व' निरवशेष, तत किमित्याह—कर्मैवात्मनो

जानामि योऽत्र सारो–यदिह मनुजजन्मनि प्रधानं चारित्रधर्मात्मकं, चस्य गम्यमानत्वात्, यच्च मे त्वं साधयसि, शेषं प्राग्वदिति सूत्रार्थः ॥ किञ्च—

हत्थिणपुरंमि चित्ता ! दट्ठूणं नरवइं महिड्ढियं । कामभोगेसु गिद्धेणं नियाणमसुभं कडं ॥ २८ ॥
तस्स मे अप्पडिकंतस्स, इमं एयारिसं फलं । जाणमाणोऽवि जं धम्मं, कामभोगेसु मुच्छिओ ॥ २९ ॥

हस्तिनागपुरे 'चित्ता' इति आकारोऽलाक्षणिकः, हे 'चित्र !' चित्रनामन् मुने ! दृष्ट्वा 'नरपतिं' सनत्कुमारनामानं चतुर्थचक्रवर्त्तिनं 'महर्द्धिकं' सातिशयसम्पदं 'कामभोगेषु' उक्तरूपेषु 'गृद्धेन' अभिकाङ्क्षावता 'निदानं' जन्मान्तरे भोगाशंसात्मकम् 'अशुभं' अशुभानुबन्धि 'कृतं' निवर्त्तितमिति ॥ कदाचित्तत्र कृतेऽपि ततः प्रतिक्रान्तः स्यादत आह– 'तस्स'त्ति सुब्व्यत्ययेन तस्मात् निदानात् 'मे' मम 'अप्रतिक्रान्तस्य' अप्रतिनिवृत्तस्य, तदा हि त्वया बहुधोच्यमानेऽपि न मच्चेतसः प्रत्यावृत्तिरभूदिति, 'इदमेतादृशम्' अनन्तरवक्ष्यमाणरूपं 'फलं' कार्यं, यत् कीदृगित्याह–'जाणमाणोऽवि'त्ति प्राकृतत्वात् 'जानन्नपि' अवबुध्यमानोऽपि यदहं 'धर्मं' श्रुतधर्मादिकं कामभोगेषु मूर्छितः–गृद्धः, तदेतत्कामभोगेषु मूर्छनं मम निदानकर्मणः फलम्, अन्यथा हि 'ज्ञानस्य फलं विरति'रिति कथं न जानतोऽपि धर्मानुष्ठानावासिः स्यादिति भाव इति सूत्रद्वयार्थः ॥ पुनर्निदानफलमेवोदाहरणतो दर्शयितुमाह—

पतो निरन्तरमित्यभिप्राय , सत्यपि च जीविते 'वर्ण' सुस्निग्धच्छायात्मक 'जरा' विश्रसा 'हरति' अपनयति 'नरस्य' मनुष्यस्य 'राजन् !' चक्रवर्त्तिन् !, यतश्चैवमत 'पञ्चालराज !' पञ्चमण्डलोद्भवनृपते ! 'वचनं' वाक्य 'शृणु' आकर्णय, किं तत् ?–मा कार्षी , कानि ?–'कर्माणि' असदारम्भरूपाणि 'महालयाणि'त्ति अतिशयमहान्ति, महान् वा लय –कर्मश्लेषो येपु तानि, उभयत्र पञ्चेन्द्रियव्यपरोपणकुणिमभक्षणादीनीति सूत्रार्थ ॥ एव मुनिनोक्ते नृपतिराह—

अहपि जाणामि जहेह साहू !, ज मे तुम साहसि वक्कमेय ।
भोगा इमे सगकरा भवति, जे दुज्जया अज्जो ! अम्हारिसेहि ॥ २७ ॥

अहमपि, न केवल भवानित्यपिशब्दार्थ , 'जानामि' अवबुध्ये, तथा इति शेष , 'यथा' येन प्रकारेण 'इह' अस्मिन् जगति साधो ! यत् 'मे' मम त्व 'साधयसि' कथयसि 'वाक्यम्' उपदेशरूप वच 'एतत्' यदनन्तरं भवतोक्त, तत् किं न विषयान् परित्यजस्यत आह–'भोगा ' शब्दादय 'इमे' प्रत्यक्षा 'सङ्गकरा ' प्रतिबन्धोत्पादका भवन्ति ये यत्तदोश्च नित्याभिसम्बन्धात्ते दु खेन जीयन्ते–अभिभूयन्ते इति दुर्जया दुस्त्यजा इतियावत् 'अज्जो'त्ति आर्य ! अस्मादृशै , गुरुकर्मभिर्जन्तुभिरिति गम्यते, पठ्यते च–'अहपि जाणामि जो एत्थ सारो' पादत्रयं तदेव, अहमपि

याति, कोऽसौ ?–कालः, कुत एतत् ?–यतस्त्वरन्ति रात्रयो, न चापि भोगाः पुरुषाणां 'नित्याः' शाश्वताः, अपेभिन्नक्रमत्वान्न केवलं जीवितमुक्तिनीतितो न नित्यं, किन्तु भोगा अपि, यत उपेत्य स्वप्रवृत्त्या न तु पुरुषाभिप्रायेण भोगाः पुरुषं 'त्यजन्ति' परिहरन्ति, कमिव क इवेत्याह–'द्रुमं' वृक्षं यथा क्षीणानि–विनष्टानि फलानि यस्यासौ क्षीणफलस्तं, 'वा' इत्यौपम्ये, उक्तं हि–"पिव मिव विव वा इवार्थे" भिन्नक्रमश्चायं, ततः 'पक्षीव' विहग इव, फलोपमानि हि पुण्यानि, ततस्तदपगमे क्षीणफलं वृक्षमिव पुरुषं पक्षिवद्भोगा विमुञ्चन्तीति सूत्रार्थः ॥ यत एवमतः–

जईऽसि भोगे चइउं असत्तो, अज्जाइं कम्माइं करेहि रायं !।
धम्मे ठिओ सव्वपयाणुकंपी, तं होहिसि देवो इओ विउव्वी ॥ ३२ ॥

यदि तावदसि त्वं भोगान् 'त्यक्तुम्' अपहातुम् 'अशक्तः' असमर्थः, पठ्यते च–'जइ तंसि भोगे चइतुं असत्ते'त्ति, यदि चैवं तावत्कर्त्तुं न शक्तस्ततः किमित्याह–'आर्याणि' हेयधर्मेभ्यः–अतिनिस्त्रिंशतादिभ्यो दूरयातानि शिष्टजनोचितानीतियावत् 'कर्माणि' अनुष्ठानानि कुरु राजन् ! 'धर्मे' प्रक्रमाद्गृहस्थधर्मे सम्यग्दृष्ट्यादिशिष्टाचरिताचारलक्षणे स्थितः सन् 'सर्वप्रजानुकम्पी' समस्तप्राणिदयापरः, ततः किं फलमित्याह–'ततः' इत्यार्यकर्मकरणाद् भविष्यसि 'देवः' वैमानिकः 'इतः' इत्यस्मान्मनुष्यभवादनन्तरं 'विउवि'त्ति वैक्रियशरीरवानित्यर्थ इति वृद्धाः, गृहस्थ-

नागो जहा पंकजलावसन्नो, दट्ठु थलं नाभिसमेइ तीरं।
एवं वयं कामगुणेसु गिद्धा, न भिक्खुणो मग्गमणुव्वयामो ॥ ३० ॥

'नाग' हस्ती 'यथे'ति दृष्टान्तोपदर्शकः पङ्कप्रधानं जलं पङ्कजलं यत्कलमुच्यते तत्रावसन्नो-निमग्नः पङ्कजलावसन्नः सन् 'दृष्ट्वा' अवलोक्य 'स्थलं' जलविकलभूतलं 'न' नैव 'अभिसमेति' प्राप्नोति 'तीरं' पारम्, अपगम्यमानत्वात्तीरमप्यास्तां स्थलमिति भावः, इत्येवंविधनागवत् वयमित्यात्मनिर्देशे 'कामगुणेषु' उक्तरूपेषु 'गृद्धा' मूर्च्छिता न 'भिक्षोः' साधोः 'मार्गं' पन्थानं सदाचारलक्षणम् 'अनुव्रजामः' अनुसरामः । अमी हि पङ्कजलोपमाः कामभोगाः, ततस्तत्परतन्त्रतया न तत्परित्यागतो निरपायतया स्थलमिव मुनिमार्गमवगच्छन्तोऽपि पङ्कजलावमग्नगजवद्वयमनुगन्तुं शक्नुमः इति सूत्रार्थः ॥ पुनरनित्यतादर्शनाय मुनिराह—

अच्चेइ कालो तूरंति राइओ, न यावि भोगा पुरिसाण निच्चा।
उविच्च भोगा पुरिसं चयंति, दुमं जहा खीणफलं व पक्खी ॥ ३१ ॥

'अत्येति' अतिक्रामति कालः यथाऽऽयुः कालः, किमित्येवमुच्यते ?, अत आह—'त्वरन्ति' शीघ्रं गच्छन्ति 'रात्रयः' रजन्यः, दिनोपलक्षणं चैतत्, ततोऽनेन जीवितव्यस्यानित्यत्वमुक्तम्, उक्तं हि—"क्षणयामदिवसमासच्छलेन गच्छन्ति जीवितदलानि । इति विद्वानपि कथमिह गच्छसि निद्रावशं रात्रौ ? ॥१॥" अथवा 'अत्येति' अतीव

पंचालरायाऽविय बंभदत्तो, साहुस्स तस्स वयणं अकाउं ।
अणुत्तरे भुंजिय कामभोगे, अणुत्तरे सो नरए पविट्ठो ॥ ३४ ॥

'पंचालराआऽविय'त्ति 'अपि' पुनरर्थः, 'चः' पूरणे, ततः पञ्चालराजः पुनर्ब्रह्मदत्तो—ब्रह्मदत्ताभिधानः 'साधोः' तपस्विनः 'तस्य' अनन्तरोक्तस्य 'वचनं' हितोपदेशदर्शकं वाक्यम् 'अकृत्वा' वज्रतन्दुलवद्गुरुकर्मतयाऽत्यन्तदुर्भेदत्वादननुष्ठाय 'अनुत्तरान्' सर्वोत्तमान् 'भुङ्क्त्वा' अनुपाल्य 'कामभोगान्' उक्तरूपान् 'अनुत्तरे' स्थित्यादिभिः सकलनरकज्येष्ठेऽप्रतिष्ठान इतियावत् 'स' ब्रह्मदत्तः 'नरके' प्रतीते 'प्रविष्टः' तदन्तरुत्पन्नः, तदनेन निदानस्य नरकपर्यवसानफलत्वमुपदर्शितं भवतीति सूत्रार्थः ॥ इह चास्य शेषवक्तव्यतासूचिका अपि निर्युक्तिगाथाः पञ्च दृश्यन्ते, तद्यथा—

इत्थीरयणपुरोहियभिज्जाणं वुग्गहो विणासंमि । सेणावइस्स भेओ वक्कमणं चेव पुत्ताणं ॥ ३५५ ॥
संगाम अत्थि भेओ मरणं पुण चूयपायवुज्जाणे । कडगस्स य निब्भेओ दंडो अ पुरोहियकुलस्स ३५६
जउघरपासायंमि अ दारे य सयंवरे अ थाले अ । तत्तो अ आसए हत्थिए अ तह कुंडए चेव ॥३५७॥
कुक्कुडरहतिलपत्ते सुदंसणो दारुए य नयणिल्ले । पत्तच्छिज्जसयंवर कलाउ तह आसणे चेव ॥ ३५८ ॥

धर्मस्यापि सम्यक्त्वदेशविरतिरूपस्य देवलोकफलत्वेनोक्तत्वादिति भाव इति सूत्रार्थ ॥ एवमुक्तोऽपि यदाऽसौ न किञ्चित्प्रतिपद्यते तदा तदविनेयतामवधार्य मुनिराह—

न तुज्झ भोगे चईऊण बुद्धी, गिद्धोऽसि आरभपरिग्गहेसु ।
मोह कओ इत्तिउ विप्पलावो, गच्छामि राय ! आमतिओऽसि ॥ ३३ ॥

'ने'ति प्रतिषेधे तव 'भोगान्' श दादीन्, उपलक्षणत्वादनार्यकर्माणि वा, 'चइऊण'त्ति त्यक्तु, यद्वा सोपस्कारत्वाद्भोगास्त्यक्त्वा धर्मो मया विधेय इति 'बुद्धि ' अवगति , किन्तु 'गृद्ध ' मूर्च्छित 'असि' भवसि, केषु ?– 'आरम्भपरिग्रहेषु' अवद्यहेतुषु व्यापारेषु चतुष्पदद्विपदादिस्वीकारेषु च, 'मोह'ति मोघ निष्फल यथा भवति एवं, सुब्व्यत्ययाद्वा मोघो–निष्फलो मोहेन वा–पूर्वजन्मनि मम भ्राताऽऽसीदिति स्नेहलक्षणेन 'कृत ' विहित एतावान् 'विप्रलाप ' विविधव्यर्थवचनोपन्यासात्मक , सम्प्रति तु 'गच्छामि' व्रजामि राजन् ! आमन्त्रित –सभापित , अनेकार्थत्वाद्धातूना पृष्टो वा 'असि' भवसि, अयमाशय –अनेकधा जीवितानित्यत्वादिदर्शनद्वारेणानुशिष्यमाणस्यापि ते न मनागपि विषयविरक्तिरित्यविनेयत्वादुपेक्षैव श्रेयस्करी, उक्त हि "मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु" ( तत्त्वा० अ० ७–सू०–६ ) इति सूत्रार्थ ॥ इत्यमुक्त्वा गते मुनौ ब्रह्मदत्तस्य यदभूत्तदाह—



## अथ चतुर्दशमिषुकारीयमध्ययनम्।

व्याख्यातं त्रयोदशमध्ययनं चित्रसम्भूतीयम्, अधुना चतुर्दशमारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तराध्ययने मुख्यतो निदानदोष उक्तः प्रसङ्गतो निर्निदानतागुणश्च, अत्र तु मुख्यतः स एवोच्यते इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य चानुयोगद्वारचतुष्टयचर्चः प्राग्वत्तावद्यावन्नामनिष्पन्ननिक्षेपे इषुकारीयमिति नाम, अत इषुकारनिक्षेपमभिधातुमाह निर्युक्तिकृत्—

उसुआरे निक्खेवो चउ० ॥ ३६० ॥ जाण० ॥ ३६१ ॥

उसुआरनामगोए वेयंतो भावओ अ उसुआरो। तत्तो समुट्ठियमिणं उसुआरिज्जंति अज्झयणं ॥३६२॥

गाथात्रयं स्पष्टमेव, नवरमिषुकाराभिलापेन नेयं, तथा यदिषुकारात्समुत्थितं तत्तस्मै प्रायो हितमेव भवतीति इषुकाराद्य हितमिषुकारीयमुच्यते, प्राधान्याच्च राज्ञा निर्देशः, अन्यथा षड्भ्योऽप्येतत्समुत्थानं तुल्यमेवेति॥ सम्प्रति कोऽयमिषुकार इति तद्वक्तव्यतामाह निर्युक्तिकृत्— ॥३९३॥

कचुयपज्जुण्णामे अ हत्था वणकुंजर कुरुमई अ । एए कन्नालभा चाहुवा धमदत्तस्स ॥ २५५ ॥

एतास्तु शिष्टसम्प्रदायाभावान्न विव्रियन्ते ॥ सम्प्रति प्रसङ्गत एव चित्रवक्तव्यतोच्यते—

चित्तोऽवि कामेहिं विरत्तकामो, उदत्तचारित्ततवो महेसी ।
अणुत्तर संजम पालइत्ता, अणुत्तर सिद्धिगइ गओ ॥ ३५॥ त्तिबेमि ॥

॥ चित्तसम्भूइज्ज समत्त ॥ १३ ॥

'चित्रोऽपि' जन्मान्तरनामतश्चित्राभिधानस्तपस्व्यपि, अत्रापि 'अपि' पुनरर्थे, ततश्चित्र पुनः 'कामेभ्य' अभिलषणीयशब्दादिभ्यो विरक्त —पराङ्मुखीभूत काम —अभिलाषोऽस्येति विरक्तकाम उदात्त—प्रधानं चारित्र च—सर्वविरतिरूप तपश्च—द्वादशविध यस्य स उदात्तचारित्रतपा , पाठान्तरत —उदग्रचारित्रतपा वा महेषी महर्षिर्वा, 'अनुत्तर' सर्वसयमस्थानोपरिवर्तिन 'सजम'त्ति सयमम्—आश्रवोपरमणादिक 'पालयित्वा' आसेव्य 'अनुत्तरा' सर्वलोकाकाशोपरिवर्त्तिनीमतिप्रधाना वा 'सिद्धिगतिं' मुक्तिनाम्नीं गतिं 'गत' प्राप्त इति सूत्रार्थ ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगम , सम्प्रति नयास्ते च पूर्ववत् । इत्याचार्यश्रीशान्तिसूरिकृताया शिष्यहिताया-मुत्तराध्ययनटीकाया चित्रसभूतीय त्रयोदशमध्ययन समाप्तमिति ॥ १३ ॥

आसामक्षरार्थः स्पष्ट एव, नवरं 'संघडिय'त्ति सम्यग् घटिताः–परस्परं स्नेहेन संबद्धा वयस्या इतियावत्, तेऽपि कदाचिद्विगलितान्तरप्रीतयोऽपि दाक्षिण्याज्जनलज्जादितस्तथा स्युरत आह–'संप्रीताः' सम्यगान्तरप्रीतिभाजः, तथा 'अन्योऽन्यमनुरक्ताः' अतिशयख्यापनफलत्वादत्यन्तस्नेहभाजः, अथवा 'संघडिय'त्ति देशीपदमव्युत्पन्नमेव मित्राभिधायि, प्रीतिर्बाह्या अनुरागस्तु भावतः प्रतिबन्धः, पठ्यते च–'घडियाउ'त्ति घटिता–मिलिताः, तथा 'भोगभोगे'त्ति भोक्तुं योग्या भोग्या ये भोगास्तान् भोग्यभोगान् भोगभोगान् वाऽतिशायिनो भोगान्, पाठान्तरतः कामभोगान् वा, 'णिग्गंथा पव्वए समण'त्ति निर्ग्रन्थाः–त्यक्तग्रन्थाः 'प्राव्रजन्' प्रव्रज्यां गृहीतवन्तः, ततश्च 'श्रमणाः' तपस्विनोऽभूवन्निति शेषः । 'दुयग्गावि'त्ति देशीपदं प्रक्रमाच्च द्वावपि दम्पती, तथा 'अन्तरायं' विघ्नं 'ण्हे'ति अनयोः, तथा 'णिंति'त्ति निर्यन्ति आधिक्येन गच्छन्ति, कं ?–'व्रजग्रामं' गोकुलप्रायग्रामं, प्रत्यन्तग्राममित्यर्थः,'गाहिंति अणं असब्भावं'ति ग्राहयतोऽसद्भावमसन्तम् असुन्दरं वाऽर्थं–साधुप्रेतत्वादिलक्षणं प्रेताः 'पिशाचाश्च' पिशाचनिकायोत्पन्नाः 'पौरुषादाश्च' प्रस्तावात्पुरुषसम्बन्धिमांसभक्षका राक्षसा इतियावत्, 'तेसिं'ति सूत्रत्वात् तान् 'अल्लियह'त्ति आलीयेताम्—आश्रयतां, किमित्यत आह—मा 'भे' भवन्तौ पुत्रौ विनश्येतामिति । अत्र चेषुकारमिति राज्यकालनाम्ना सीमन्धरश्चेति मौलिकनाम्नेति सम्भावयामः इति गाथैकादशकावयवार्थः ॥

पुव्वभवे सयडिआ सपीआ अन्नमन्नमणुरत्ता । भुत्तूण भोगभोए निग्गथा पव्वए समणा ॥ ३६३ ॥
काऊण य सामन्न पउमगुम्मे विमाणि उववन्ना । पलिओवमाइ चउरो ठिई उक्कोसिआ तेसि ॥३६४॥
तत्तो य चुआ सता कुरुजणवयपुरवरमि उसुआरे । छावि जणा उववन्ना चरिमसरीरा विगयमोहा ॥३६५॥
राया उसुयारो या कमलावइ देवि अग्गमहिसी से । भिगुनामे य पुरोहिय वासिट्ठा भारिआ तस्स ३६६
उसुआरपुरे नयरे उसुआरपुरोहिओ अ अणवच्चो । पुत्तस्स कए बहुसो परितप्पती दुअग्गावि ॥३६७॥
काऊण समणरूव तहिअ देवो पुरोहिअ भणइ । होहिति तुज्झ पुत्ता दुन्नि जणा देवलोगचुआ ॥३६८॥
तेहि अ पव्वइअव्व जहा य न करेह अतराय पहे । ते पव्वइआ सता बोहेहिती जण बहुअ ॥ ३६९ ॥
त वयण सोऊण नगराओ निति ते वयग्गामे । वड्ढति अ ते तहिअ गाहिति अ ण असब्भावं ३७०
एए समणा धुत्ता पेयपिसाया य पोरुसादा य । मा तेसि अल्लिअहा मा भे पुत्ता ! विणासिज्जा ॥३७१॥
दट्ठूण तहिं समणे जाइ पोराणिअ च सरिऊण । बोहितऽम्मापिअर उसुआर रायपुत्त च ॥ ३७२ ॥
सीमधरो य राया भिगू अ वासिट्ठ रायपत्ती य । बभणी दारगा चेव छप्पेए परिनिव्वुआ ॥ ३७३ ॥

अवच्चनिमित्तं, उवायणए देवयाणि पुच्छइ नेमित्तिए। ते दोऽवि पुव्वभवगोवा देवभवे वट्टमाणा ओहिणा जाणिउं जधा अम्हे एयस्स भिगुस्स पुरोहियस्स पुत्ता भविस्सामो, तओ समणरूवं काऊण उवगया भिगुसमीवं, भिगुणा सभारिएण वंदिया, सुहासणतथा य धम्मं कहेंति, तेहिं दोहिवि सावगवयाणि गहियाणि, पुरोहिएण भणति-भगवं! अम्हं अवच्चं होज्जत्ति?, साहूहिं भणति-भविस्संति दुवेऽवि दारगा, ते य डहरगा चेव पव्वइस्संति, तेसिं तुब्भेहिं वाघाओ ण कायव्वो पव्वयंताणं, ते सुबहुं जणं संबोहिस्संतित्ति भणिऊण पडिगया देवा, णातिचिरेण चइऊण य तस्स पुरोहियस्स भारियाए वासिट्ठीए दुवे उदरे पचायाया, ततो पुरोहितो सभारितो नगरविणिग्गतो पच्चंतगामे ठितो, तत्थेव सा माहिणी पसूया, दारगा जाया, तओ मा पव्वइस्संतित्ति काउं मायावित्तेहिं

१ अपत्यनिमित्तं, उपयाचयति देवताः पृच्छति नैमित्तिकान्। तौ द्वावपि पूर्वभवगोपौ देवभवे वर्त्तमानौ अवधिना ज्ञात्वा यथा आवामेतस्य भृगोः पुरोहितस्य पुत्रौ भविष्यावः, ततः श्रमणरूपं कृत्वोपगतौ भृगुसमीपं, भृगुना सभार्येण वन्दितौ, सुखासनस्थौ च धर्मं कथयतः, ताभ्यां द्वाभ्यामपि श्रावकव्रतानि गृहीतानि, पुरोहितेन भण्यते—भगवन्! आवयोरपत्यं भविष्यतीति?, साधुभ्यां भण्यते—भविष्यतो द्वावपि दारकौ, तौ च बालकावेव प्रव्रजिष्यतः, तयोर्युवाभ्यां व्याघातो न कर्त्तव्यः प्रव्रजतोः, तौ सुबहुं जनं संबोधयिष्यत इति भणित्वा प्रतिगतौ देवौ, नातिचिरेण च्युत्वा च तस्यैव पुरोहितस्य भार्याया वाशिष्ठ्या द्वौ उदरे प्रत्यायातौ, ततः पुरोहितः सभार्यो नगरविनिर्गतः प्रत्यन्तग्रामे स्थितः, तत्रैव सा ब्राह्मणी प्रसूता, दारकौ जातौ, ततो मा प्रव्राजिष्टामितिकृत्वा मातापितृभ्यां

भावार्थस्तु सम्प्रदायादवसेय , स चाय—जं ते दोन्नि गोवदारया साहुअणुकपयाए लद्धसमत्ता कालं काऊण देव-लोगे उववन्ना, ते तओ देवलोगाउ चइउ खिइपइट्ठियनयरे इब्भकुले दोवि भायरो जाया, तत्थ तेसिं अन्नेवि चत्तारि इब्भदारगा वयसिया जाया, तत्थवि भोगे भुजिउ तहारूवाण थेराण अतिते धम्म सोऊण पघइया, सुचिरकाल सयम अणुपालेऊण भत्त पचक्खाउ काल काऊण सोहम्मे कप्पे पउमगुम्मे विमाणे छावि जणा चउपलिओवमठि-तिया देवा उववण्णा, तत्थ जे ते गोववज्जा देवा ते चइऊण कुरुजणवए उसुयारपुरे नयरे एगो उसुयारो णाम राया जातो, बीओ तस्सेव महादेवी कमलावईनाम सवुत्ता, ततिओ तस्स चेव राइणो भिगुणाम पुरोहितो संवुत्तो, चउत्थो तस्स चेव पुरोहियस्स भारिया सवुत्ता वसिट्ठा गोत्तेण जसानाम। सो य भिगु अणवच्चो गाढ तप्पए

१ यौ तौ द्वौ गोपदारकौ साध्वनुकम्पया लब्धसम्यक्त्वौ काल कृत्वा देवलोके उत्पन्नौ, तौ ततो देवलोकाच्च्युत्वा क्षितिप्रतिष्ठिते नगरे इभ्यकुले द्वावपि भ्रातरौ जातौ, तत्र तयोरन्येऽपि चत्वार इभ्यदारका वयस्या जाता , तत्रापि भोगान् भुक्त्वा तथारूपाणा स्थवि राणामन्तिके धर्म श्रुत्वा प्रव्रजिता , सुचिरकाल सयममनुपाल्य भक्त प्रत्याख्याय काल कृत्वा सौधर्मे कल्पे पद्मगुल्मे विमाने षडपि जनाः चतुष्पल्योपमस्थितिका देवा उत्पन्ना , तत्र ये ते गोपवर्जा देवास्ते च्युत्वा कुरुजनपदे इषुकारपुरे नगरे एक इषुकारो नाम राजा जात , द्वितीयस्तस्यैव महादेवी कमलावती नाम सवृत्ता, तृतीयस्तस्यैव राज्ञो भृगुर्नाम पुरोहित सवृत्त , चतुर्थस्तस्यैव पुरोहितस्य भार्या सवृत्ता वाशिष्ठा गोत्रेण यशा नाम। स च भृगुरनपत्यो गाढ ताम्यति

ताणिवि पव्वइयाणि, एवं ताणि छावि केवलणाणं पाविऊण णिव्वाणमुवगयाणित्ति ॥ इह तु सूत्रोक्तस्याप्यर्थ-स्याभिधानं प्रसज्यत इत्यदोषः। उक्तो नामनिष्पन्नो निक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

देवा भवित्ताण पुरे भवंमी, केई चुया एगविमाणवासी।
पुरे पुराणे इसुयारनामे, खाए समिद्धे सुरलोगरम्मे ॥ १ ॥
सकम्मसेसेण पुराकएणं, कुलेसु उग्गे (सुदत्ते०) सु य ते पसूआ।
निव्विण्णसंसारभया जहाय, जिणिंदमग्गं सरणं पवन्ना ॥ २ ॥
पुमत्तमागम्म कुमार दोऽवि, पुरोहिओ तस्स जसा य पत्ती।
विसालकित्ती य तहेसुआरो, रायऽत्थ देवी कमलावई य ॥ ३ ॥

'देवाः' सुराः 'भूत्वा' उत्पद्य 'पुरे भवंमि'त्ति अनन्तरातीतजन्मनि 'केचित्' इत्यनिर्दिष्टनामानः 'च्युताः' भ्रष्टाः एकस्मिन् पद्मगुल्मनाम्नि विमाने वसन्तीत्येवंशीला एकविमानवासिनः 'पुरे' नगरे 'पुराणे' चिरन्तने इपुकारनाम्नि 'ख्याते' प्रथिते 'समृद्धे' ऋद्धिमत्यत एव 'सुरलोकरम्ये' देवलोकवद्रमणीये। ते च किं सर्वथोपभुक्तपुण्या एव तत-श्च्युता उतान्यथेत्याह—स्वम्—आत्मीयं कर्म—पुण्यप्रकृतिलक्षणं तस्य शेषम्—उद्धरितं स्वकर्मशेषस्तेन, लक्षणे तृतीया, 'पुराकृतेन' पूर्वजन्मान्तरोपार्जितेन 'कुलेषु' अन्वयेषु 'उदात्तेषु' उच्चेषु 'चः' पूरणे, 'ते' इति ये देवा भूत्वा

वुग्गाहिज्जति—जहा एए पव्वइयगा दिव्वरूवाइ घेत्तु मारति, पच्छा तेसिं मंस खायति, मा तुब्भे कयाइ एएसिं अल्लियसह । अन्नया ते तम्मि गामे रमता वाहिं निग्गया, इओ य अद्धाणपडिवण्णा साहू आगच्छति, ततो ते दारगा साहू दट्ठूण भयभीया पलायता एगम्मि वडपायवे आरूढा, साहूणो समावत्तीए गहियभत्तपाणा तम्मि चेव वडपायवहिट्ठे ठिया, मुहुत्त च वीसमिऊण भुजिउ पयत्ता, ते वडारूढा पासति साभावियं भत्तपाण, नत्थि मंसं, तओ चितिउ पयत्ता—कत्थ अम्हेहिं एयारिसाणि रूवाणि दिट्ठपुव्वाणिति ?, जाईं सभरिया, सबुद्धा, साहुणो वदिउ गया अम्मापिउसमीव, मायावित्त सबोहिऊण सह मायावित्ते पव्वया, देवी संबुद्धा, देवीए राया सबोहिओ,

१ व्युद्ग्राह्येते—यथैते प्रव्रजितका दिव्यरूपाणि गृहीत्वा मारयन्ति, पश्चात् तेषा मास खादन्ति, (तत्) मा यूय कदाचित् एतेषामाश्रयत । अन्यदा ते तस्मिन् ग्रामे रममाणौ बहिर्निर्गतौ, इतश्चाध्वप्रतिपन्ना साधव आगच्छन्ति, ततस्तौ दारकौ साधून् दृष्ट्वा भयभीतौ पलायमानौ एकस्मिन् वटवृक्षे आरूढौ, साधवो भवितव्यतया गृहीतभक्तपानास्तस्मिन्नेव वटपादपेऽधस्तात् स्थिता , मुहूर्त्तं च विश्रम्य भोक्तु प्रवृत्ता , तौ वटारूढौ पश्यत स्वाभाविक भक्तपान, नास्ति मासमिति ततश्चिन्तितु प्रवृत्तौ—क्वावाभ्यामीदृशानि रूपाणि दृष्टपूर्वाणीति ?, जाति स्मृता, सबुद्धौ, साधून् वन्दित्वा गतौ मातापितृसकाश, मातरपितर सबोध्य सह मातापितराभ्या प्रव्रजितौ, देवी सबुद्धा, देव्या राजा सबोधितः, तावपि प्रव्रजितौ, एव ते षडपि केवलज्ञान प्राप्य निर्वाणमुपगता इति ।

रामृत्युभयाभिभूतौ, पाठान्तरतश्च जातिजरामृत्युभयाभिभूते सत्यर्थात् संसारिजने वहिः संसाराद्विहारः—स्थानं बहिर्विहारः, स चार्थान्मोक्षस्तस्मिन्नभिनिविष्टं—बद्धाग्रहं चित्तम्—अन्तःकरणं ययोस्तौ, तथा संसारश्चक्रमिव चक्रं भ्रमणोपलक्षितत्वात्संसारचक्रं तस्य विमोक्षणार्थं—परित्यागनिमित्तं 'दृष्ट्वा' निरीक्ष्य साधूनिति शेषः, यद्वा 'दट्ठे'ति प्रेक्ष्य मुक्तिपरिपन्थिनोऽमी कामगुणा इति पर्यालोच्य 'तौ' अनन्तरोक्तौ 'कामगुणे'त्ति सुब्व्यत्ययात् 'कामगुणेभ्यः' शब्दादिभ्यो, विषयसप्तमी वा, 'विरक्तौ' पराङ्मुखीभूतौ प्रियौ—वल्लभौ तौ च तौ पुत्रावेव पुत्रकौ, द्वावपि नैक एव इत्यपिशब्दार्थः 'माहनस्स' ब्राह्मणस्य 'स्वकर्मशीलस्य' यजनयाजनादिस्वकीयानुष्ठाननिरतस्य 'पुरोहितस्य' शान्तिकर्तुः 'सरित्तु'त्ति स्मृत्वा 'पोराणिय'त्ति सूत्रत्वात्पुराणामेन पौराणिकीं—चिरन्तनीं 'तन्ने'ति सन्निवेशे कुमारभावे वा, वर्त्तमानाविति शेषः 'जातिं' जन्म तथा 'सुचिण्णं'ति सुचीर्णं सुचरितं वा निदानादिनाऽनुपहतत्वात् तपः—अनशनादिः, प्राकृतत्वाद्बिन्दुलोपः, संयमं च, तपःसंयममिति समाहारद्वन्द्वो वा, अत्र कामगुणविरक्तिरेव जिनेन्द्रमार्गप्रतिपत्तिरिति सूत्रद्वयार्थः ॥ ततस्तौ किमकार्ष्टाम्? इत्याह—

ते कामभोगेसु असज्जमाणा, माणुस्सएसुं जे यावि दिव्वा।
मुक्खाभिकंखी अभिजायसड्ढा, तायं उवागम्म इमं उदाहु ॥ ६ ॥

'तौ' पुरोहितपुत्रौ 'कामभोगेषु' उक्तरूपेषु 'असज्जमाण'त्ति असंसजन्तौ—सङ्गमकुर्वन्तौ 'माणुस्सएसु' मनुजसम्ब-

च्युता 'प्रसूता' उत्पना, 'निविण्ण'त्ति आर्पत्वात् 'निर्विण्णा' उद्विग्ना, कुत ?—ससारभयात्, 'जहाय'त्ति परित्यज्य, भोगादीनिति गम्यते, किमित्याह—'जिनेन्द्रमार्गं' तीर्थकृदुपदर्शित सम्यग्दर्शनज्ञानचारित्रात्मक मुक्तिपथ 'शरणम्' अपायरक्षाक्षममाश्रय 'प्रपन्ना' अभ्युपगता इत्यध्ययनार्थसूचनम्। कश्च किरूप सन् जिनेन्द्रमार्ग शरण प्रपन्न इत्याह—'पुस्त्व' पुरुषत्वम् 'आगम्य' गाप्य 'कुमार'त्ति 'कुमारौ' अकृतपाणिग्रहणौ द्वौ, 'अपि' पूरणे, सुलभबोधिकत्वेन प्राधान्यख्यापनार्थं चानयो पूर्वमुपादानम्, पुरोहितस्तृतीयस्तस्य जसा च नाम्ना पत्नी चतुर्थं, 'विशालकीर्त्तिश्च' विस्तीर्णयशाश्च तथेपुकारो नाम राजा पञ्चम, 'अत्र' एतस्मिन् भवे 'देवी' इति प्रधानपत्नी, प्रक्रमात्तस्यैव राज्ञ कमलावती नाम्ना पष्ठ इति सूत्रत्रयार्थ ॥ सम्प्रति यथैतेपु जिनेन्द्रमार्गप्रतिपत्ति कुमारयोर्जाता तथा दर्शयितुमाह—

जाईजरामच्चुभयाभिभूया, वहिविहाराभिणिविट्ठचित्ता।
ससारचक्कस्स विमुक्खणट्ठा, दट्ठूण ते कामगुणे विरत्ता ॥ ४ ॥
पियपुत्तगा दुन्निवि माहणस्स, सकम्मसीलस्स पुरोहियस्स।
सरित्तु पोराणिय तत्थ जाइ, तहा सुचिण्ण तव सजम च ॥ ५ ॥

जाति —जन्म जरा—विस्रसा मृत्यु —प्राणत्यागलक्षणस्तेभ्यो भय—साध्वस तेनाभिभूतौ—बाधितौ जातिज-

अह तायओ तत्थ मुणीण तेसिं, तवस्स वाघायकरं वयासी ।
इमं वयं वेयविओ वयंति, जहा न होई असुआण लोगो ॥ ८ ॥
अहिज्ज वेए परिविस्स विप्पे, पुत्ते परिट्ठप्प गिहंसि जाया ! ।
भुच्चा ण भोए सह इत्थियाहिं, आरण्णगा होह मुणी पसत्था ॥ ९ ॥

'अथ' अनन्तरं तायते-सन्तानं करोति पालयति च सर्वापद्भ्य इति तातः स एव तातकः 'तत्र' तस्मिन् संनिवेशेऽवसरे वा 'मुन्योः' भावतः प्रतिपन्नमुनिभावयोः 'तयोः' कुमारयोः 'तपसः' अनशनादेः उपलक्षणत्वाच्छेपसद्धर्मानुष्ठानस्य च 'व्याघातकरं' बाधाविधायि, वचनमिति शेषः, 'वयासि'त्ति अवादीत्, यदवादीत्तदाह-इमां वाचं वेदविदो 'वदन्ति' प्रतिपादयन्ति, यथा-'न भवति' न जायते 'असुतानाम्' अविद्यमानपुत्राणां 'लोकः' परलोकः, तं विना पिण्डप्रदानाद्यभावे गत्याद्यभावात्, तथा च वेदवचः-"अनपत्यस्य लोका न सन्ति", तथाऽन्यैरप्युक्तम्-"पुत्रेण जायते लोकः, इत्येपा वैदिकी श्रुतिः । अथ पुत्रस्य पुत्रेण, स्वर्गलोके महीयते ॥ १ ॥" तथा-"अपुत्रस्य गतिर्नास्ति, स्वर्गो नैव च नैव च । गृहिधर्ममनुष्ठाय, तेन स्वर्गं गमिष्यति ॥ १ ॥" 
यत एवं तस्माद् 'अधीत्य' पठित्वा 'वेदान्' ऋग्वेदादीन् 'परिवेष्य' भोजयित्वा 'विप्रान्' ब्राह्मणान्, तथा पुत्रान् 'प्रतिष्ठाप्य' कलाकलत्रग्रहणादिना गृहस्थधर्मे निवेश्य, कीदृशः पुत्रान् ?-गृहे जातान्, न तु गृहीतप्रतिपन्नका-

न्धिषु, ये चापि 'दिव्या ' देवसम्बन्धिन कामभोगास्तेषु चेति प्रक्रम , 'मोक्षाभिकाङ्क्षिणौ' मुक्त्यभिलाषिणौ 'अभिजातश्रद्धौ' उत्पन्नतत्त्वरुची 'तात' पितरमुपागम्य 'इद' वक्ष्यमाण 'उदाहु'त्ति उदाहरताम् । तयोर्हि साधुदर्शनानन्तर क्वास्माभिरित्थभूतानि रूपाणि पुराऽपि दृष्टानीति चिन्तयतोर्जातिस्मरणमुत्पन्न, ततो जातवैराग्यौ प्रव्रज्याभिमुखावात्मपुत्कलीकरणाय तयोश्च प्रतिबोधोत्पादनाय वक्ष्यमाणमुक्तवन्ताविति सूत्रार्थ ॥ यच्च तावुक्तवन्तौ तदाह—

असासय दट्ठु इम विहार, बहुअन्तराय न य दीहमाउ ।
तम्हा गिहसि न रइ लभामो, आमतयामो चरिसामु मोण ॥ ७ ॥

'अशाश्वतम्' अनित्य दृष्ट्वा 'इम' प्रत्यक्ष विहरण विहार, मनुष्यत्वेनावस्थानमित्यर्थ , भण्यते हि—"भोगभोगाइ भुजमाणे विहरति"त्ति, किमित्येवमत आह—बहव –प्रभूता अन्तराया –विघ्ना व्याध्यादयो यस्य तद्बहन्तराय, बहन्तरायमपि दीर्घत्वा(र्घाद्धा)वस्थायि स्यादित्याह—'न च' नैव 'दीर्घ' दीर्घकालस्थित्या 'आयु ' जीवित, सम्प्रति पल्योपमायुष्कताया अप्यभावात्, यत एव सर्वमनित्य तस्माद् 'गिहसि'न्ति 'गृहे' वेश्मनि न 'रति' धृतिं 'लभामो'त्ति लभावहे–प्राप्नुव , अतश्च 'आमन्त्रयावहे' पृच्छाव आवा यथा 'चरिष्याम ' आसेविष्यावहे 'मौन' मुनिभाव सयममिति सूत्रार्थ ॥ एव च ताभ्यामुक्ते—

खणमित्तसुक्खा बहुकालदुक्खा, पगामदुक्खा अणिगामसुक्खा ।
संसारमुक्खस्स विपक्खभूआ, खाणी अणत्थाण उ कामभोगा ॥ १३ ॥
परिव्वयंते अनियत्तकामे, अहो अ राओ परितप्पमाणे ।
अन्नप्पमत्ते धणमेसमाणे, पप्पुत्ति मच्चुं पुरिसो जरं च ॥ १४ ॥
इमं च मे अत्थि इमं च नत्थि, इमं च मे किच इमं अकिचं ।
तं एवमेवं लालप्पमाणं, हरा हरंतित्ति कहं पमाओ ? ॥ १५ ॥

सुतवियोगसम्भावनाजनितं मनोदुःखमिह शोकः स चाग्निरिव शोकाग्निस्तेन, आत्मनो गुणा आत्मगुणाः—कर्मक्षयोपशमादिसमुद्भूताः सम्यग्दर्शनादयस्त इन्धनमिवेन्धनं दाह्यतया यस्य स तथा तेन, अनादिकालसहचरितत्वेन रागादयो वाऽऽत्मगुणास्त इन्धनमुद्दीपकतया यस्य स तथा तेन, मोहो मूढताऽज्ञानमितियावत् सोऽनिल इव मोहानिलस्तस्मादधिकं—महानगरदाहादिभ्योऽप्यर्गलं प्रज्वलनं—प्रकर्षेण दीपनमस्येति अधिकप्रज्वलनः, यद्वा प्रज्वलनेनाधिक इतराग्न्यपेक्षया यस्तेन, पूर्वत्र प्राकृतत्वादधिकशब्दस्य परनिपातः, तथा समिति—समन्तात् तप्त इव तप्तः अनिर्वृतत्वेन भावः—अन्तःकरणमस्येति संतप्तभावस्तम्, अत एव च 'परितप्यमानं' समन्ताद्दह्यमानम्, अर्थात् शरीरे दाहस्यापि शोकावेशत उत्पत्तेः, लोलुप्यमानं तद्वियोगशङ्कावशोत्पन्नदुःखपरशुभिरतिशयेन हृदि छिद्य-

दीन्, पाठान्तरे च–पुत्रान् 'परिष्ठाप्य' स्वामित्वेन निवेश्य गृहे 'जाय'त्ति हे जातौ–पुत्रौ !, तथा 'भुक्त्वा' भुक्त्वा 'ण' इति वाक्यालङ्कारे 'भोगान्' शब्दादीन् सह 'स्त्रीभिं' नारीभिस्ततोऽरण्ये भवौ आरण्यौ, 'अरण्याण्णो वक्तव्य' (अरण्याण्ण । वार्त्तिक) इति णप्रत्यय, आरण्यावेव आरण्यकौ–आरण्यकव्रतधारिणौ 'होह'त्ति भवत–सम्पद्येथा युवा 'मुनी' तपस्विनौ 'प्रशस्तौ' श्लाघ्यौ, इत्थमेव ब्रह्मचर्याद्याश्रमव्यवस्थानात्, उक्त हि–"ब्रह्मचारी गृहस्थश्च, वानप्रस्थो यतिस्तथे"ति, इह च 'अधीत्य वेदानि'त्यनेन ब्रह्मचार्याश्रम उक्त परिवेष्येत्यादिना च गृहस्थाश्रम आरण्यकावित्यनेन च वानप्रस्थाश्रम मुनिग्रहणेन च यत्याश्रम इति सूत्रद्वयार्थ ॥ इत्थ तेनोक्ते कुमारकौ यद-कार्ष्टां तदाह—

सोअग्गिणा आयगुणिंधणेण, मोहानिला पज्जलणाहिएण ।
सतत्तभाव परितप्पमाण, लोलुप्पमाण बहुहा बहु च ॥ १० ॥
पुरोहिय त कमसोऽणुणत, निमतयत च सुए धणेण ।
जहक्कम कामगुणेहि चेव, कुमारगा ते पसमिक्ख वक्क ॥ ११ ॥
वेआ अधीआ न भवति ताण, भुत्ता दिया निति तम तमेण ।
जाया य पुत्ता न हवति ताण, को नाम ते अणुमन्निज्ज एय ? ॥ १२ ॥

रिभिरपि-"यदि पुत्राद्भवेत्स्वर्गो, दानधर्मो न विद्यते। मुषितस्तत्र लोकोऽयं, दानधर्मो निरर्थकः ॥१॥ बहुपुत्रा दुली गोधा, ताम्रचूडस्तथैव च। तेषां च प्रथमं स्वर्गः,पश्चाल्लोको गमिष्यति ॥२॥" यतश्चैवं ततः को नाम? न कश्चित्सम्भाव्यते यस्ते-तवानुमन्येत-शोभनमिदमित्यनुजानीयात्सविवेक इति गम्यते, 'एतद्' अनन्तरमुक्तं वेदाध्ययनादित्रितयमिति, भुक्त्वा भोगानिति च चतुर्थोपदेशप्रतिवचनमाह-क्षणमात्रं सौख्यं येषु ते तथा, बहुकालं नरकादिषु दुःखं शारीरं मानसं च येभ्यस्ते तथाविधाः, कदाचित्स्वल्पकालमपि सुखमतिशायि स्याद् दुःखं त्वन्यथेति स्वल्पकालमपि तद्बहुकालभाविनोऽपि दुःखस्योपहन्तृ स्यादत आह-प्रकामम्-अतिशयेन दुःखं येभ्यस्ते तथा, 'अनिकामसौख्याः' अप्रकृष्टसुखाः, ईदृशा अप्यायतौ शुभफलाः स्युरत आह-संसारान्मोक्षो-विश्लेषः संसारमोक्षो निर्वृत्तिरित्यर्थस्तस्य विपक्षभूताः-तत्प्रतिबन्धकतयाऽत्यन्तप्रतिकूलाः, किमित्येवंविधास्ते इत्याह-खनिरिव खानिः-आकरः 'अनर्थानाम्' इहपरलोकदुःखावाप्तिरूपाणां, तुशब्दोऽवधारणे भिन्नक्रमश्च ततः खनिरेव, के एवंविधाः?-'कामभोगाः' उक्तरूपाः, अनर्थखनित्वमेव स्पष्टयितुमाह-'परिव्रजन्' विषयसुखलाभार्थमितस्ततो भ्राम्यन् 'अनिवृत्तकामः' अनुपरतेच्छः सन् 'अहो य राओ'त्ति आर्षत्वाच्चस्य च भिन्नक्रमादहि रात्रौ च अहर्निशमितियावत् 'परितप्यमानः' तदवाप्त्यै समन्ताच्चिन्ताग्निना दह्यमानः, अन्ये-सुहृत्स्वजनादयः, अथवाऽन्नं-भोजनं तदर्थं प्रमत्तः-तत्कृत्यासक्तचेता अन्यप्रमत्तः अन्न-

मान, वृद्धास्तु व्याचक्षते–'लोलुप्यमाण'त्ति लालप्यमान–'भरणपोषणकुलसताणेसु य तुब्भे भविस्सह त्ति, 'बहुधा' अनेकप्रकार 'बहु' च प्रभूत यथा भवत्येव लोलुप्यमान लालप्यमान येति सम्बन्ध , 'पुरोहित' 'पुरोधस 'त'मिति प्रक्रान्त 'कमसो'त्ति क्रमेण–परिपाट्या 'अनुनयन्त' स्वाभिप्रायेण प्रज्ञापयन्त निमन्त्रयन्त च–तौ भोगैरुपच्छन्दयन्त 'सुतौ' पुत्रौ 'धनेन' द्रव्येण यथाक्रम प्रक्रमानतिक्रमेण 'कामगुणे' अभिलषणीयशब्दादिविषये , पाठान्तरत – कामगुणेषु वा, 'च ' समुच्चये 'एव' इति पूरणे, कुमारकौ तावनन्तरप्रक्रान्तौ 'प्रसमीक्ष्य' प्रकर्षेणाज्ञानाच्छादितगतिमालोच्य 'वाक्य' वचो वक्ष्यमाणमुक्तवन्ताविति गम्यते । किं तदित्याह 'वेदा ' ऋग्वेदादय 'अधीता ' पठिता न 'भवन्ति' जायन्ते 'त्राण' शरण, तदध्ययनमात्रतो दुर्गतिपतनरक्षणासिद्धे , उक्त हि तैरपि–"अकारणमधीयानो, ब्राह्मणस्तु युधिष्ठिर । दुष्कुलेनाप्यधीयन्ते, शील यस्य [illegible] रोचते ॥ १ ॥" तथा–"शिल्पमध्ययन नाम, वृत्त ब्राह्मणलक्षणम् । वृत्तस्थ ब्राह्मण प्राहुर्नेतरान् वेदजीवकान् ॥२॥" तथा 'भुज्ज'त्ति अन्तर्भावितण्यर्थत्वाद्भोजिता 'द्विजा ' ब्राह्मणा 'नयन्ति' प्रापयन्ति तमोरूपत्वात्तमो–नरकस्तत्तमसा–ज्ञानेन यद्वा तमसोऽपि यत्तमस्तस्मिन्–अतिरौद्रे रौरवादिनरके णमिति वाक्यालङ्कारे, ते हि भोजिता कुमार्गप्ररूपणपशुवधादावेव कर्मोपचयनिबन्धने असद्व्यापारे प्रवर्त्तन्त इत्यसत्प्रवर्त्तनतस्तद्भोजनस्य नरकगतिहेतुत्वमेव, अनेन च तेषा निस्सारकत्व दूरापास्तमित्यर्थादुक्त, तथा 'जाताश्च' उत्पन्ना 'पुत्रा ' सुता न भवन्ति 'त्राण' शरण नरकादिगतौ निपततामिति गम्यते, उक्त हि तन्मतानुसा-

धणेण किं धम्मधुराहिगारे ?, सयणेण वा कामगुणेहिं चेव ।
समणा भविस्सामु गुणोहधारी, बहिंविहारा अभिगम्म भिक्खं ॥ १७ ॥

'धनेन' द्रव्येण किं ?, न किञ्चिदित्यर्थः, धर्म एवातिसात्त्विकैरुह्यमानतया धूरिव धूर्धर्मधुरा तदधिकारे—तत्प्रस्तावे स्वजनेन वा कामगुणैश्चैव ?, तथा च वेदेऽप्युक्तं—"न प्रजया न धनेन त्यागेनैकेनामृतत्वमानशु"रित्यादि, ततः 'श्रमणौ' तपस्विनौ भविष्यावः, गुणौघं—सम्यग्दर्शनादिगुणसमूहं धारयत इत्येवंशीलौ गुणौघधारिणौ बहिः—ग्रामनगरादिभ्यो बहिर्वर्त्तित्वाद् द्रव्यतो भावतश्च क्वचिदप्रतिबद्धत्वाद् विहारः—विहरणं ययोस्तौ बहिर्विहारौ अप्रतिबद्धविहाराविति यावत् 'अभिगम्य' आश्रित्य 'भिक्षां' शुद्धोञ्छां तामेवाहारयन्ताविति भाव इति सूत्रार्थः ॥ आत्मास्तित्वमूलत्वात्सकलधर्मानुष्ठानस्य तन्निराकरणायाह पुरोहितः—

जहा य अग्गी अरणीउऽसंतो, खीरे घयं तिल्लमहा तिलेसु ।
एमेव जाया सरीरंमि सत्ता, संमुच्छई नासइ नावचिट्ठे ॥ १८ ॥

'यथे'त्यौपम्ये चशब्दोऽवधारणे, यथैव 'अग्निः' वैश्वानरः 'अरणिउ'त्ति अरणितः—अग्निमन्थनकाष्ठाद् 'असन्' अविद्यमान एव संमूर्छति, तथा क्षीरे घृतं तैलमथ तिलेषु, एवमेव 'हे जातौ' पुत्रौ ! 'सरीरंसि'त्ति शरीरे काये 'सत्त्वाः' प्राणिनः 'समुच्छंति'त्ति संमूर्छन्ति, पूर्वमसन्त एव शरीराकारपरिणतभूतसमुदायत उत्पद्यन्ते, तथा चाहुः—

प्रमत्तो वा 'धन' वित्त 'एसमाणे'त्ति 'एषयन्' विविधोपायैर्गवेषयमाण 'पप्पोत्ति' प्राप्नोति 'मृत्यु' प्राणत्याग, कोऽसौ ?–पुरुष 'जरा च' वयोहानिलक्षणाम् । किञ्च–इद च मेऽस्ति रजतरूप्यादि इद च नास्ति पद्मरागादि, इद च 'मे' मम 'कृत्य' कर्तव्य' गृहप्राकारादि, इदमकृत्यमारब्धमपि वणिज्यादि न कर्तुमुचित 'त'मिति पुरुष-मेवमेव–वृथैव 'लालप्यमानम्' अत्यर्थं व्यक्तवाचा वदन्त हरन्ति–अपनयन्त्यायुरिति हरा –दिनरजन्यादयो व्याधि-विशेषा वा 'हरन्ति' जन्मान्तर नयन्ति, उपसहर्त्तुमाह–'इती'त्यस्माद्धेतो 'कथ' केन प्रकारेण 'प्रमाद' अनुद्यम प्रक्रमाद्धर्मे कर्त्तुमुचित इति शेष ?, इति सूत्रपदार्थं ॥ सम्प्रति तौ धनादिभिर्लोभयितु पुरोहित प्राह—

धण पभूय सह इत्थियाहिं, सयणा तहा कामगुणा पगामा ।
तव कए तप्पइ जस्स लोगो, तं सव्व साहीणमिहेव तुज्झ ॥ १६ ॥

'धन' द्रव्य 'प्रभूत' प्रचुर 'सह स्त्रीभि' सम नारीभि 'स्वजना' पितृपितृव्यादय, तथा 'कामगुणा' शब्दा-दय 'पगाम'त्ति 'प्रकामा' अतिशायिन 'तप' कष्टानुष्ठान 'कृते' निमित्त 'तप्यते' अनुतिष्ठति 'यस्य' धनादे 'लोक' जनस्तत् 'सर्वम्' अशेष 'स्वाधीनम्' आत्मायत्तम् 'इहैव' अस्मिन्नेव गृहे 'तुज्झ'त्ति सूत्रत्वाद्युवयो, यद्यपि च तयो स्त्रियस्तदा न सन्ति तथाऽपि तदवाप्तियोग्यताऽस्तीति तासामभिधानमिति सूत्रार्थ ॥ तावाहतु —

प्रतिपत्तृषु न स्यात्, उक्तं हि—"अहं शृणोमि पश्यामि, जिघ्राम्यास्वादयामि च । चेतयाम्यध्यवस्यामि, बुध्यामीत्येवमस्ति सः ॥ १ ॥" वृद्धास्तु व्याचक्षते—अमूर्त्तत्वान्नोइन्द्रियग्राह्यो, नोइन्द्रियं च मनो, मनश्चात्मैव, अतः स्वप्रत्यक्ष एवायमात्मा, कस्मात् ?, उच्यते, त्रैकाल्यकार्यव्यपदेशात्, तद्यथा—कृतवानहं करोम्यहं करिष्याम्यहमुक्तवानहं ब्रवीम्यहं वक्ष्याम्यहं ज्ञातवानहं जानेऽहं ज्ञास्येऽहमिति योऽयं त्रिकालकार्यव्यपदेशहेतुरहंप्रत्ययो नायमानुमानिको न चागमिकः, किं तर्हि ?, प्रत्यक्षकृत एवायम्, अनेनैवात्मानं प्रतिपद्यस्व, नायमनात्मके घटादावुपलभ्यत इति, तथाऽमूर्त्तभावादपि च भवति नित्यः, तथाहि—यद्द्रव्यत्वे सत्यमूर्त्तं तन्नित्यं, यथा व्योम, अमूर्त्तश्चायं द्रव्यत्वे सत्यनेन विनाशानवस्थाने प्रत्युक्ते, न चैवममूर्त्तत्वादेव तस्य बन्धासम्भवः सम्भवे वा सर्वस्य सर्वदा तत्प्रसङ्ग इति वाच्यं, यतः 'अज्झत्थहेउं णियय्ऽस्स बंधो' अध्यात्मशब्देन आत्मस्था मिथ्यात्वादय इहोच्यन्ते, तत एव हेतुः—तन्निमित्तोऽपरस्यहेतुकृतत्वेऽतिप्रसङ्गादिदोषसम्भवान्नियतो—निश्चितो न संदिग्धो, जगद्वैचित्र्यान्यथानुपपत्तेः, 'अस्स' जन्तोर्बन्धः—कर्मभिः संश्लेषः, यथा ह्यमूर्तस्यापि व्योम्नो मूर्तैरपि घटादिभिः सम्बन्धः एवमस्याप्यमूर्तस्यापि मूर्तैरपि कर्मभिरसौ न विरुध्यते, तथा चाह—"अरूपं हि यथाऽऽकाशं, रूपिद्रव्यादिभाजनम् । तथा ह्यरूपी जीवो, रूपिकर्मादिभाजनम् ॥ १ ॥" इति, मिथ्यात्वादिहेतुत्वाच्च न सर्वस्य सर्वदा तत्प्रसङ्ग इत्यदोषः, एवं हि येषामेव मिथ्यात्वादितद्धेतुसम्भवस्तेषामेवासौ न तु तद्विरहितानां सिद्धानामपि, तथा संसारः—चतुर्गतिप-

"पृथिव्यपस्तेजोवायुरिति तत्त्वानि, एतेभ्यश्चैतन्य, मद्याङ्गेभ्यो मदशक्तिवत्", तथा 'नासइ'त्ति नश्यन्ति–अभ्रपटलवत्प्रलयमुपयान्ति 'णावचिट्ठे'त्ति न पुन अवतिष्ठन्ते–शरीरनाशे सति न क्षणमप्यवस्थितिभाजो भवन्ति, यद्वा शरीरे सत्यप्यमी सत्त्वा नश्यन्ति, नावतिष्ठन्ते, जलबुद्बुदवत्, उक्त हि–"जलबुद्बुदवज्जीवा " अत्र च प्रत्यक्षतोऽनुपलम्भ एव प्रमाण, न ह्यसौ शरीरे शरीरव्यतिरिक्तो वा भवान्तरप्राप्तौ प्रत्यक्षत उपलभ्यत इति नास्ति, शशविषाणवदिति भाव इति सूत्रार्थ ॥ कुमारकावाहतु —

नो इंदियग्गिज्झ अमुत्तभावा, अमुत्तभावा विय होइ निच्चो ।
अज्झत्थहेउ निययऽस्स बधो, ससारहेउ च वयति बध ॥ १९ ॥

'नो' इति प्रतिषेधे इन्द्रियै –श्रोत्रादिभिर्ग्राह्य –सवेद्य इन्द्रियग्राह्य , सत्त्व इति प्रक्रम , असत्त्वादेवायमिन्द्रियाग्राह्य इत्याशङ्क्याह–'अमूर्त्तभावात्' इन्द्रियग्राह्यरूपाद्यभावात्, अयमाशय –यदिन्द्रियग्राह्य सन्नोपलभ्यते तदसदिति निश्चीयते, यथा प्रदेशविशेषे घटो, यत्तु तद्ग्राह्यमेव न भवति न तस्यानुपलम्भेऽप्यभावनिश्चय , पिशाचादिवत्, तद्विषयानुपलम्भस्य सशयहेतुत्वात्, न च साधकबाधकप्रमाणाभावात् सशयविषयतैवास्त्विति वाच्य, तत्साधकस्यानुमानस्य सद्भावात्, तथाहि–अस्त्यात्मा अह पश्यामि जिघ्रामीत्याद्यनुगतप्रत्ययान्यथानुपपत्ते , आत्माभावे हीन्द्रियाण्येव द्रष्टॄणि स्यु , तेषु च परस्पर विभिन्नेष्वह पश्यामि जिघ्रामीत्यादिरनुगतोऽहमितिप्रत्ययोऽनेकेष्विव

आसक्तिं 'लभे'त्ति लभावहे, यथा हि वागुरया परिवेष्टितो मृगोऽमोघैश्च प्रहरणैर्व्याधेनाभ्याहतो न रतिं लभते, एवमावामपीति सूत्रार्थः ॥ भृगुराह—( ग्रन्थाग्रम् १०००० )

केण अब्भाहओ लोओ, केण वा परिवारिओ । का वा अमोहा वुत्ता ?, जाया ! चिंतावरो हुमि ॥ २२ ॥

केन व्याधतुल्येनाभ्याहतो लोकः ?, केन वा वागुरास्थानीयेन परिवारितः ?, का वा 'अमोघा' अमोघप्रहरणोपमा अभ्याहतिक्रियां प्रति करणतयोक्ता, ? 'जातौ !' पुत्रौ चिन्तापरः 'हुमि'त्ति भवामि, ततो ममावेद्यतामयमर्थ इति भाव इति सूत्रार्थः ॥ तावाहतुः—

मच्चुणाऽब्भाहओ लोओ, जराए परिवारिओ । अमोहा रयणी वुत्ता, एवं ताय ! वियाणह ॥ २३ ॥

'मृत्युना' कृतान्तेनाभ्याहतो लोकः, तस्य सर्वत्राप्रतिहतप्रसरत्वात्, जरया परिवारितः, तस्या एव तदभिघातयोग्यतापादनपटीयस्त्वात्, अमोघा 'रयणि'त्ति रजन्य उक्ताः, दिवसाविनाभावित्वात्तासां दिवसाश्च, तत्पतने ह्यवश्यंभावी जनस्याभिघातः, एवं तात ! 'विजानीत' अवगच्छतेति सूत्रार्थः ॥ किञ्च—

जा जा वच्चइ रयणी, न सा पडिनियत्तई । अहम्मं कुणमाणस्स, अहला जंति राइओ ॥ २४ ॥

जा जा वच्चइ रयणी, न सा पडिनियत्तई । धम्मं तु च कुणमाणस्स, सफला जंति राइओ ॥ २५ ॥



या या 'वचति' व्रजति 'रजनी' रात्रिरुपलक्षणत्वाद्दिनं च न सा 'प्रतिनिवर्त्तते' पुनरागच्छति, तदागमने हि

यैटनरूपस्तद्धेतु च–तत्कारण वदन्ति 'वन्धं' कर्मवन्धम्, एतेनामूर्तत्वाद्मोक्ष इच निष्क्रियत्वमपि निराकृतमिति सूत्रार्थ ॥ यत एवमस्त्यात्मा नित्योऽत एव च भवान्तरानुयायी तस्य च वन्धो वन्धादेव मोक्ष इत्यत —

जहा वयं धम्ममजाणमाणा, पाव पुरा कम्ममकासि मोहा ।
ओरुज्झमाणा परिरक्खयता, त णेव भुज्जोऽवि समायरामो ॥ २० ॥

'यथा' येन प्रकारेण वय 'धर्म' सम्यग्दर्शनादिकम् 'अजानाना' अनवबुध्यमाना 'पाव' पापहेतुं 'पुरा' पूर्वं 'कर्म' क्रियाम् 'अकासि'त्ति अकार्ष्म कृतवन्तः 'मोहात्' तत्त्वानवबोधात् 'अवरुध्यमाना' गृहान्निर्गममलभमाना 'परिरक्षमाणा' अनुजीविभिरनुपाल्यमाना 'तद्' इति पापकर्म 'नेव'त्ति नैव 'भूयोऽपि' पुनरपि 'समाचराम' अनुतिष्ठामो, यत सम्प्रत्युपलब्धमेवास्माभिर्वस्तुतत्त्वमिति भाव, सर्वत्र च 'अस्मदो द्वयोश्चे'ति (पा० १-२-५९) द्वित्वेऽपि बहुवचनमिति सूत्रार्थ ॥ अन्यच—

अब्भाहयमि लोगमि, सव्वओ परिवारिए । अमोहाहि पडतीहिं, गिहसि न रइ लभे ॥ २१ ॥

'अभ्याहते' आभिमुख्येन पीडिते 'लोके' जने 'सर्वत्र' सर्वासु दिक्षु 'परिवारिते' परिवेष्टिते 'अमोघाभिः' अवन्ध्याभि प्रहरणोपमाभिः 'पतन्तीभि' आगच्छन्तीभि. 'गिहसि'त्ति गृहे तस्य चोपलक्षणत्वाद् गृहवासे न 'रतिम्'

जस्सऽत्थि मच्चुणा सक्खं, जस्स वऽत्थि पलायणं। जो जाणइ न मरिस्सामि, सो हु कंखे सुए सिया ॥२७॥
अज्जेव धम्मं पडिवज्जयामो, जहिं पवन्ना न पुणब्भवामो।
अणागयं नेव य अत्थि किंची, सद्धाखमं नो विणइत्तु रागं ॥ २८ ॥

'यस्य' इत्यनिर्दिष्टस्वरूपस्य 'अस्ति' विद्यते 'मृत्युना' कृतान्तेन 'सख्यं' मित्रत्वं, यस्य चास्ति 'पलायनं' नशनं, मृत्योरिति प्रक्रमः, तथा 'जो जाणइ'त्ति यो जानीते यथाऽहं न मरिष्यामि, 'सो हु कंखे सुए सिय'त्ति स एव 'काङ्क्षति' प्रार्थयते 'श्वः' आगामिनि दिने स्यादिदमिति गम्यते। न च कस्यचिन्मृत्युना सह सख्यं ततो वा पलायनं तदभावज्ञानं वा अतोऽद्यैव 'धर्मं' प्रक्रमाद्यतिधर्मं 'पडिवज्जयामो'त्ति 'प्रतिपद्यामहे' अङ्गीकुर्महे, तमेव फलोपदर्शनद्वारेण विशिनष्टि—'जहिं'ति आर्षत्वाद्यं धर्मं 'प्रपन्नाः' आश्रिताः 'ण पुणब्भवामो'त्ति न पुनर्भविष्यामो—न पुनर्जन्मानुभविष्यामः, तन्निबन्धनभूतकर्मापगमात्, जरामरणाद्यभावोपलक्षणं चैतत्, किञ्च—'अनागतम्' अप्राप्तं नैव चास्ति किञ्चिदिति मनोरममपि विषयसौख्यादि अनादौ संसारे सर्वस्य प्राप्तपूर्वत्वात्ततो न तदर्थमपि गृहावस्थानं युक्तमिति भावः, यद्वा 'अनागतम्' आगतिविरहितं नैव चास्ति किंचित्, किन्तु सर्वमागतिमदेव जरामरणादिव्यसनजातं, ध्रुवभावित्वादस्य भवस्थानां, यद्वाऽनागतं यत्र मृत्योरागतिर्नास्ति तन्न किञ्चित्स्थानमस्ति, यतश्चैवमतः श्रद्धा—अभिलाषः क्षमं—युक्तमिहलोकपरलोकयोः श्रेयःप्राप्तिनिमित्तमनुष्ठानं कर्त्तुमिति शेषः, 'ण' इति नोऽ-

सर्वदा सैवैका जन्मरात्रि स्यात्ततो न द्वितीया मरणरात्रि कदाचित्प्रादुष्ष्यात्, ताश्चाधर्मं कुर्वतो जन्तोरिति गम्यते अफला यान्ति रात्रय, अधर्मनिबन्धन च गृहस्थतेत्यायुषोऽनित्यत्वादधर्मकरणे च तस्य निष्फलत्वात्तत्परित्याग एव श्रेयानिति भाव । इत्थ व्यतिरेकद्वारेण प्रव्रज्याप्रतिपत्तिहेतुमभिधाय तमेवान्वयमुखेनाह—'जा जे'त्यादि पूर्ववत्, नवर 'धम्म च' त्ति चशब्द पुनरर्थे धर्म पुन कुर्वत सफला धर्मलक्षणफलोपार्जनतो, न च व्रतप्रतिपत्तिं विना धर्म इत्यतो व्रत प्रतिपत्स्यावहे इत्यभिप्राय इति सूत्रद्वयार्थं ॥ इत्थ कुमारवचनादाविर्भूतसम्यक्त्वस्तद्वचन-मेव पुरस्कुर्वन् भृगुराह—

एगओ सवसित्ता ण, दुहओ समत्तसजुया । पच्छा जाया ! गमिस्सामो, भिक्खमाणा कुले कुले ॥२६॥

'एकत ' एकस्मिन् स्थाने 'समुष्य' सहैवासित्वा 'दुहतो' त्ति द्वय च द्वय च द्वये आवा युवा च, व्यक्त्यपेक्षया बहुवचन पुरुषप्राधान्याच्च पुंलिङ्गता, 'सम्यक्त्वसयुता ' सम्यक्त्वेन—तत्त्वरुचिलक्षणेन सयुता —सहिता , उपलक्षणत्वाद्देशविरत्या च 'पश्चाद्' यौवनावस्थोत्तरकाल, कोऽर्थ ?—पश्चिमे वयसि, 'जातौ' पुत्रौ ! 'गमिष्याम ' प्रजिष्यामो वय ग्रामनगरादिषु, मासकल्पादिक्रमेणेति शेष , अर्थाच्च प्रव्रज्या प्रतिपद्य, 'भिक्षमाणा ' याचमाना , पिण्डादिकमिति गम्यते, क्व ?—'कुले कुले' गृहे गृहे न त्वेकस्मिन्नेव वेश्मनि, किमुक्त भवति ?—अज्ञातोञ्छवृत्त्येति सूत्रार्थ. ॥ कुमारावाहतु —

उपलक्षणं चैतद् व्रतग्रहणस्य कालः—प्रस्तावो वर्त्तत इति शेषः । किमित्येवमत आह—'शाखाभिः' प्रतीताभिः 'वृक्षः' द्रुमः 'लभते' प्राप्नोति 'समाधिं' स्वास्थ्यं, 'छिन्नाभिः' द्विधाकृताभिः शाखाभिः 'तमेव' वृक्षं यस्ताभिः समाधिमासवान् 'खाणुं'ति स्थाणुं जनोऽप्युपदिशतीत्युपस्कारः, यथा हि तास्तस्य शोभासंरक्षणसहायकृत्यकरणादिना समाधिहेतवः एवं ममाप्येतौ सुतावतस्तद्विरहितोऽहमपि स्थाणुकल्प एवेति किं ममैवंविधस्य स्वपरयोः कश्चिदुपकारमपुष्णत एव गृहवासेनेत्यभिप्रायः । किञ्च—पक्षाभ्यां—पतत्राभ्यां विहीनो—विरहितः पक्षविहीनः, 'वा' दृष्टान्तान्तरसमुच्चये, यथा 'इह' अस्मिँल्लोके 'पक्षी' विहङ्गमः पलायितुमप्यशक्त इति मार्जारादिभिरभिभूयते । तथा भृत्याः—पदातयस्तद्विहीनो, वा प्राग्वत्, 'रणे' सङ्ग्रामे 'नरेन्द्रः' राजा शत्रुजनपराजयस्थानमेव जायते, तथा विपन्नः—विनष्टः सारो—हिरण्यरत्नादिरस्येति विपन्नसारो वणिक् सांयात्रिको, वेति प्राग्वत्, 'पोते' प्रवहणे भिन्न इति गम्यते नार्वाग् न च परत इत्युदधिमध्यवर्त्ती विषीदति, पुत्रप्रहीणोऽस्मि तथाऽहमपि, कोऽर्थः ?—पक्षभृत्यार्थसारभूताभ्यां सुताभ्यां विरहितोऽहमप्येवंविध एवेति सूत्रद्वयार्थः ॥ वाशिष्ठ्याह—

सुसंभिया कामगुणा इमे ते, संपिंडिया अग्गरसा पभूया ।

भुंजासु ता कामगुणे पगामं, पच्छा गमिस्सासु पहाणमग्गं ॥ ३१ ॥

सुष्ठु—अतिशयेन संभृताः—संस्कृताः सुसंभृताः, के ते ?—'कामगुणा' वेणुवीणाक्वणितकाकलीगीतादयः 'इमे'

स्नाक 'विनीय' अपसार्य, क ?–'राग' स्वजनाभिष्वङ्गलक्षण, तत्त्वतो हि क कस्य स्वजनो न वा स्वजन इति, उक्त च–"अय ण 'भते ! जीवे एगमेगस्स जीवस्स माइत्ताए (पियत्ताए) भाइत्ताए पुत्तत्ताए धूयत्ताए सुण्हत्ताए भज्जत्ताए सुहिसयणसंबंधसंथुयत्ताए उववण्णपुव्वे ?, हंता गोयमा !, असतिं अदुवा अणतखुत्तो"त्ति, इति सूत्रद्वयार्थ ॥ ततस्तयोर्वचनमाकर्ण्य पुरोहित उत्पन्नव्रतग्रहणपरिणामो ब्राह्मणी धर्मविघ्नकारिणीं मत्वेदमाह—

पहीणपुत्तस्स हु नत्थि वासो, वासिट्ठि ! भिक्खायरियाइ कालो ।
साहाहि रुक्खो लहई समाहिं, छिन्नाहिं साहाहि तमेव खाणुं ॥ २९ ॥
पखाविहूणो व जहेव पक्खी, भिच्चविहूणो व रणे नरिंदो ।
विपन्नसारो वणिओव्व पोए, पहीणपुत्तोमि तहा अहंपि ॥ ३० ॥

प्रहीणौ–प्रभ्रष्टौ पुत्रौ यस्मात्स प्रहीणपुत्र , अथवा प्राकृते पूर्वापरनिपातस्यातन्त्रत्वात्पुत्राभ्या प्रहीण –त्यक्त पुत्रप्रहीण. तस्य 'हु ' पूरणे 'नास्ति' न विद्यते 'वास ' अवस्थान, मम गृह इति गम्यते, वाशिष्ठि !–वशिष्ठगोत्रोद्भवे, गौरवख्यापनार्थं गोत्राभिधान, तच्च कथ नु नाम धर्माभिमुख्यमस्या स्यादिति, भिक्षाचर्याया –भिक्षाटनस्य,

१ अय भदन्त ! जीव एकैकस्य जीवस्य मातृतया ( पितृतया ) भ्रातृतया पुत्रतया दुहितृतया स्नुषातया भार्यातया सुहृत्स्वजनसम्बन्धसस्तुततया उत्पन्नपूर्व ?, हन्त गौतम ! असकृत् अथवाऽनन्तकृत्वः ।

तत्किं वयःस्थैर्याद्यर्थं दीक्षां प्रतिपद्यसे ?, उच्यते हि कैश्चित् दीक्षा वयःस्थैर्यादिविधायिनीत्याशङ्क्याह—'न' इति निषेधे जीवितम्-असंयमजीवितम्, उपलक्षणत्वाद्वयश्च तदर्थं 'प्रजहामि' प्रकर्षेण त्यजामि 'भोगान्' शब्दादीन्, किन्तु 'लाभम्' अभिमतवस्त्वाप्तिरूपम् 'अलाभं च' तदभावरूपं 'सुखम्' अभिलषणीयविषयसम्भोगजं, चस्य भिन्नक्रमत्वाद् 'दुःखं च' बाधात्मकं 'संचिक्खमाणो'त्ति समतया ईक्षमाणः—पश्यन्, किमुक्तं भवति ?-लाभालाभयोस्तथा सुखदुःखयोरुपलक्षणत्वाज्जीवितमरणादीनां च समतामेव भावयन् 'चरिष्यामि' आसेविष्ये, किं तत् ?- 'मौनं' मुनिभावं, ततो मुक्त्यर्थमेव मम दीक्षाप्रतिपत्तिरिति भाव इति सूत्रार्थः ॥ वाशिष्ट्याह-

मा हू तुमं सोदरियाण संभरे, जुन्नो व हंसो पडिसोयगामी।
भुंजाहि भोगाइं मए समाणं, दुक्खं खु भिक्खायरिया विहारो ॥ ३३ ॥

'मा' इति निषेधे 'हुः' इति वाक्यालङ्कारे त्वं सोदरे शयिताः सोदर्याः, 'सोदराद्य इति ( पा०४-४-१०९ ) यः प्रत्ययः, ते च समानकुक्षिभवा भ्रातरस्तेषाम्,उपलक्षणत्वाच्छेषस्वजनानां भोगानां च, 'संभरे'त्ति अस्मार्षीः, क इव ?- 'जुण्णो व हंसो'त्ति इवशब्दस्य भिन्नक्रमत्वात् 'जीर्णः' वयोहानिमुपगतो 'हंस इव' प्रधानपक्षीव प्रतिकूलं स्रोतः प्रतिस्रोतस्तद्गामी सन्, किमुक्तं भवति ?-यथाऽसौ नदीस्रोतस्यतिकष्टं प्रतिकूलगमनमारभ्यापि तत्राशक्तः पुनरनुस्रोत एवानुधावति, एवं भवानपि दुरनुचरं संयमभारं वोढुमसमर्थः पुनः सहोदरादीन् भोगान् वा स्मरिष्यति,

इति स्वगृहवर्त्तिन , तान् प्रत्यक्षतया निर्दिशति, 'ते' तव तथा 'सपिण्डिता ' सम्यक्पुञ्जीकृता 'अग्गरस'त्ति चशब्दस्य गम्यमानत्वादग्र्या रसाश्च—प्रधाना मधुरादयश्च प्रभूता —प्रचुरा , कामगुणान्तर्गतत्वेऽपि रसाना पृथगुपादानमतिगृद्धिहेतुत्वाच्छब्दादिष्वपि चैपामेव प्रवर्त्तकत्वात्, कामगुणविशेपण वा अग्र्या रसास्त एव शृङ्गारादयो वा येपु ते तथा, यद्वास्त्वाग्र –रसाना–सुखानामग्र रसाग्र ये कामगुणा , सूत्रे च प्राकृतत्वादग्रशब्दस्य पूर्वनिपातः, 'भुजामो'त्ति भुञ्जीमहि 'तत्' तस्मादमी सुसभृतादिविशेपणविशिष्टास्ते च स्वाधीना सन्ति, 'कामगुणान्' उक्तरूपान् 'प्रकामम्' अतिशयेन, ततो भुक्तभोगा 'पश्चाद्' इति वृद्धावस्थाया 'गमिष्याम ' प्रतिपत्स्यामहे 'प्रधानमार्गं' महापुरुपसेवित प्रव्रज्यारूप मुक्तिपथमिति सूत्रार्थ ॥ पुरोहित प्राह—

भुत्ता रसा भोइ! जहाइ णे वओ, न जीवियट्ठा पजहामि भोए।
लाभ अलाभ च सुह च दुक्ख, सचिक्खमाणो चरिसामि मोण ॥ ३२ ॥

'भुक्ता ' सेविता 'रसा ' मधुरादय , उपलक्षणत्वाच्छेपकामगुणाश्च, यद्वा रसा इह सामान्येनैवास्वाद्यमानत्वाद्भोगा भण्यन्ते 'होति'त्ति हे भवति !, आमन्त्रणवचनमेतत्, 'जहाति' त्यजति 'न ' इत्यस्मान् वय शरीरावस्थाकारकृतोच्यते, सा चेहाभिमतक्रियाकरणक्षमा गृह्यते, ततश्च यतो भुक्ता एवानेकशो भोगा वयश्चाभिमतक्रियाकरणक्षम जहाति, उपलक्षणत्वाज्जीवित च, ततो यावन्नैतत्त्यजति तावद्दीक्षा प्रतिपद्यामह इत्यभिप्राय,

गम्यते, 'रोहिताः' रोहितजातीयाः 'मत्स्या' मीनाश्चरन्तीति सम्बन्धः, 'यथे'ति दृष्टान्तोपदर्शने, यत्तदोश्च नित्यसम्बन्धात्तथेति गम्यते, ततस्तथा जालप्रायान् कामगुणान् 'प्रहाय' परित्यज्य, धुरि वहन्ति धौरेयास्तेषामिव शीलम्—उत्क्षिप्तभारवाहितालक्षणं स्वभावो येषां ते धौरेयशीलाः 'तपसा' अनशनादिना 'उदाराः' प्रधानाः 'धीराः' सत्त्ववन्तः हुरिति यस्माद् भिक्षाचर्यां 'चरन्ति' आसेवन्ते, व्रतग्रहणोपलक्षणमेतद्, अतोऽहमपीत्थं व्रतमेव ग्रहीष्ये इति भाव इति सूत्रद्वयार्थः ॥ इत्थं तत्प्रतिबोधिता ब्राह्मण्याह—

नहेव कुंचा समइक्कमंता, तयाणि जालाणि दलित्तु हंसा।
पलिंति पुत्ता य पई य मज्झं, तेऽहं कहं नाणुगमिस्समिक्का ? ॥ ३६ ॥

'नभसीव' आकाश इव 'क्रौञ्चाः' पक्षिविशेषाः 'समतिक्रामन्तः' तांस्तान् देशानुल्लङ्घयन्तः 'ततानि' विस्तीर्णानि 'जालानि' बन्धनविशेषरूपाण्यात्मनोऽनर्थहेतुन् 'दलयित्वा' भित्त्वा 'हंस'त्ति चशब्दस्य गम्यमानत्वाद्धंसाश्च 'पलिंति'त्ति परियन्ति—समन्ताद्गच्छन्ति 'पुत्रौ च' सुतौ 'पतिश्च' भर्त्ता मम सम्बन्धिनो, गम्यमानत्वादेतत् (नं)जालोपमविषयाभिष्वङ्गं भित्त्वा नभःकल्पे निरुपलेपतया संयमाध्वनि तानि तानि संयमस्थानानि अतिक्रामन्तस्तानहं कथं नानुगमिष्याम्येका सती ?, किन्त्वनुगमिष्याम्येव, एवंविधवयसां हि स्त्रीणां भर्त्ता वा पुत्रो वा गतिरिति, यदिवा जालानि भित्त्वेति हंसानामेव संबध्यते, समतिक्रामन्तः स्वातन्त्र्येण गच्छन्त इति तु क्रौञ्चानां, ततश्च क्रौञ्चोदा-

तदिदमेवास्तु, मुक्ष्व भोगान् मया 'समाण'ति सह 'दु ख'मिति दु खहेतु 'सु' इति खलु निश्चित 'भिक्षाचर्या' भिक्षाटन 'विहार' ग्रामादिष्वप्रतिबद्धविहारो, दीक्षोपलक्षण चैतदिति सूत्रार्थं ॥ पुरोहित आह—

जहा य भोई ! तणुय भुयगे, निम्मोअणिं हिच पलाइ मुत्तो ।
एमेए जाया पजहंति भोए, तेऽहं कहं नाणुगमिस्समिक्को ? ॥ ३४ ॥
छिंदित्तु जालं अबलं व रोहिया, मच्छा जहा कामगुणे पहाय ।
धोरेयसीला तवसा उदारा, धीरा हु भिक्खायरियं चरंति ॥ ३५ ॥

यथा हे भवति ! पठ्यते च—'भोगि'त्ति हे भोगिनि ! तनु —शरीर तत्र जाता तनुजा 'भुजङ्गम ' सर्प 'निर्मोचनीं' निर्मोक हित्वा 'पर्येति' समन्ताद्गच्छति 'मुक्त ' इति निरपेक्षोऽनभिष्वक्त इत्यर्थ , 'एमेए'त्ति एवमेतौ, पठ्यते च 'इमेति'त्ति अत्र च तथेति गम्यते, ततस्तथेमौ 'ते' तव 'जातौ' पुत्रौ 'पजहंति' प्रजहीत प्रकर्षेण त्यजतो भोगान्, तत किमित्याह—तौ भोगांस्त्यजन्तौ जातौ अह कथ न 'अनुगमिष्यामि' प्रव्रज्याग्रहणेनानुसरिष्यामि 'एक.' अद्वितीय ? । यदि तावदनयो कुमारकयोरपीयान् विवेको यन्निर्मोकवदत्यन्तसहचरितानपि भोगान् भुजङ्गवत्त्यजतस्तत्किमिति भुक्तभोगोऽप्यहमेतान त्यक्ष्यामि ?, किं वा ममासहायस्य गृहवासेनेति भाव । तथा 'छित्त्वा' द्विधाकृत्वा तीक्ष्णपुच्छादिना 'जालम्' आनायम् 'अबलमिव' जीर्णत्वादिना नि सारमिव, बलीयोऽपीति

नृप ! न स 'भवति प्रशंसितः' श्लाघितो विद्वद्भिरिति शेषः, स्यादेतत्–कथमहं वान्ताशीत्यत आह–ब्राह्मणेन 'परित्यक्तं' परिहृतं 'धनं' द्रव्यम् 'आदातुं' गृहीतुमिच्छसि, परिहृतधनं हि गृहीतोज्झितत्वाद्वान्तमिव तत्तदा-दातुमिच्छंस्त्वमपि वान्ताशीव, न चेदमुचितं भवादृशामित्यभिप्रायः। अथवा काक्वा नीयते—राजन् ! वान्ताशी यः स प्रशस्यो न भवत्यतो ब्राह्मणेन परित्यक्तं धनं त्वमादातुमिच्छसि नैवैतद्भवत उचितं, यतस्त्वमप्येवं वान्ता-शितयाऽश्लाघ्य एव भविष्यसीति काक्वर्थः ॥ किं ?–'सर्वं' निरवशेषं 'जगद्' भुवनं, भवेदिति सम्बन्धः, 'यदी'त्यस्या-यमर्थः–न संभवत्येवैतत्, कथञ्चित्सम्भवे वा 'तुह'न्ति तव सर्वं वाऽपि धनं–रजतरूप्यादिद्रव्यं भवेत् यदि तवे-तीहापि योज्यते, तदा सर्वमपि 'ते' तव 'अपर्याप्तम्' अशक्तम्, इच्छापरिपूर्त्तिं प्रतीति शेषः, आकाशसमत्वेन तस्या अपर्यवसितत्वात्, तथा नैव 'त्राणाय' जरामरणाद्यापदपनोदाय 'तदि'ति सर्वं जगद्धनं वा भवति ते, इह च पुनः पुनः सर्वशब्दस्य युष्मदश्चोपादानं भिन्नवाक्यत्वादपुनरुक्तमिति भावनीयं, पूर्वेण गर्हितत्वमनेन चानुपका-रितां पुरोहितधनाद्यग्रहणहेतुमादर्श्य सम्प्रत्यनित्यतां तद्धेतुमाह–'मरिष्यसि' प्राणांस्त्यक्ष्यसि 'राजन् !' नृप ! 'यदा तदा वा' यस्मिंस्तस्मिन् वा कालेऽवश्यमेव मर्त्तव्यं, 'जातस्य हि ध्रुवो मृत्यु'रिति, उक्तं हि—कश्चित्तावत्त्वया दृष्टः, श्रुतो वा शङ्कितोऽपि वा। क्षितौ वा यदिवा स्वर्गे, यो जातो न मरिष्यति ॥१॥" तत्रापि च कदाचिदभिल-षितवस्त्वादायैव मरिष्यतीत्यत आह–'मनोरमान्' चित्ताह्लादकान् 'कामगुणान्' उक्तरूपान् 'प्रहाय' प्रकर्षेण

हरणमजातकलत्रादिबन्धनसुतापेक्षं, हंसोदाहरण तु तद्विपरीतपत्यपेक्षमिति भावनीयमिति सूत्रार्थ ॥ इत्थ चतुर्णामप्येकवाक्यताया प्रव्रज्याप्रतिपत्तौ यदभूत्तदाह—

पुरोहिय त ससुय सदार, सुचाऽभिनिक्खम्म पहाय भोए ।
कुडुम्बसार विउलुत्तम त, राय अभिक्ख समुवाय देवी ॥ ३७ ॥
वतासी पुरिसो राय !, न सो होइ पसंसिओ । माहणेण परिचत्त, धण आदाउमिच्छसि ॥ ३८ ॥
सव्व जग जइ तुह, सव्व वावि धण भवे । सव्वपि ते अपज्जत्त, नेव ताणाय त [redacted] ॥ ३९ ॥
मरिहिसि राय ! जया तया वा, मणोरमे कामगुणे पहाय ।
इक्को हु धम्मो नरदेव ! ताण, न विज्जई अन्नमिहेह किंचि ॥ ४० ॥

'पुरोहित' पुरोधस 'तम्' इति भृगुनामान 'ससुत' पुत्रद्वयान्वित 'सदार' सपत्नीक 'श्रुत्वा' आकर्ण्य 'अभिनिष्क्रम्य' गृहान्निर्गत्य 'प्रहाय' प्रकर्षेण त्यक्त्वा 'भोगान्' शब्दादीन् प्रव्रजितमिति गम्यते, 'कुडुम्बसार' धनधान्यादि विपुल च—विस्तीर्णतया उत्तम च—प्रधानतया विपुलोत्तम 'तदि'ति यत्पुरोहितेन त्यक्त गृह्णन्तमिति शेष, 'राय'ति राजान नृपतिम् 'अभीक्ष्ण' पुन पुन 'समुवाच' सम्यगुक्तवती 'देवी' कमलावती नाम तदग्रमहिषी, किमुक्तवतीत्याह—वान्तम्—उद्गीर्णमशितु—भोक्तु शीलमस्येति वान्ताशी 'पुरुष ' पुमान्, य इति गम्यते, 'राजन् !'

नागुव्व बंधणं छित्ता, अप्पणो वसहिं वए। इति एत्थं महारायं !, उसुआरित्ति मे सुयं ॥ ४८ ॥

'ने'ति निषेधे, 'अह'मित्यात्मनिर्देशे 'रमे' इति रतिमवाप्नोमि 'पक्खिणि पंजरे व'त्ति वाशब्द औपम्ये भिन्नक्रमश्च ततः 'पक्षिणीव' शकुनिकेव सारिकादिः 'पञ्जरे' प्रतीत एव, किमुक्तं भवति ?—यथाऽसौ दुःखोत्पादिनि पञ्जरे न रतिं प्राप्नोति एवमहमपि जरामरणाद्युपद्रवविद्रुते भवपञ्जरे न रमे, अतश्छिन्नसन्ताना प्रक्रमाद् विनाशितस्नेहसन्ततिः सती, छिन्नशब्दस्य सूत्रे परनिपातः प्राग्वत्, 'चरिष्यामि' अनुष्ठास्यामि 'मौनं' मुनिभावम्, अविद्यमानं किञ्चनं—द्रव्यतो हिरण्यादि भावतः कपायादिरूपमस्या इत्यकिञ्चना, अत एव ऋजु—मायाविरहितं कृतम्—अनुष्ठितमस्या इति ऋजुकृता, कथं चैवंभूतेत्याह—निष्क्रान्ता आमिषाद्—गृद्धिहेतोरभिलपितविपयादेः निर्गतं वा आमिषमस्या इति निरामिपा, 'परिग्गहारंभणियत्तऽदोस'त्ति, प्राकृतत्वात् पूर्वापरनिपातोऽतन्त्रमिति, परिग्रहारम्भयोर्दोषाः—अभिष्वङ्गनिस्तृंशतादयस्तेभ्यो निवृत्ता—उपरता परिग्रहारम्भदोषनिवृत्ता, यद्वा परिग्रहारम्भनिवृत्ता अत एव चादोषा—विकृतिविरहिता, अनयोर्विशेपणसमासः। अपरं च 'दवाग्निना' दावानलेन यथा 'अरण्ये' वने 'दह्यमानेपु' भस्मसात्क्रियमाणेपु 'जन्तुपु' प्राणिपु 'अन्ये' अपरे 'सत्त्वाः' प्राणिनोऽविवेकिनः 'प्रमोदन्ते' प्रकर्पेण हृष्यन्ति, किमित्येवंविधास्ते इत्याह—रागद्वेपयोर्वशः—आयत्तता रागद्वेपवशस्तं गताः—प्राप्ताः। 'एवमेवं'ति विन्दोरलाक्षणिकत्वादेवमेव वयं 'मूढ'त्ति 'मूढानि' मोहवशगानि 'कामभोगेपु' उक्तरूपेपु 'मुच्छिय'त्ति मूर्छितानि गृद्धानि

त्यक्त्वा 'त्वम्' एकाक्येव मरिष्यसि, न किञ्चिदन्यत्त्वया सह यास्यतीत्यभिप्राय । तथा 'एक्को हु'त्ति एक एव— अद्वितीय 'धर्म एव' सम्यग्दर्शनादिरूप 'नरदेव!' नृप ! 'त्राण' शरणमापत्परिरक्षणे क्षम 'न विद्यते' नास्ति 'अन्यद्' अपरम् 'इहेहे'ति वीप्साभिधान सम्भ्रमख्यापनार्थं, 'किञ्चिदि'ति स्वजनधनादिक,यदिवा 'इहे'ति लोके 'इहे'-त्यस्मिन् मृत्यौ धर्म एवैकस्त्राण, मुक्तिहेतुत्वेन, नान्यत्किञ्चित्, तत स एवानुष्ठेय इति भाव, इति सूत्रचतुष्टयार्थ ॥
यतश्च धर्मादृते नान्यत्त्राणमत —

नाह रमे पक्खिणि पजरे वा, सताणछिन्ना चरिसामि मोण ।
अकिंचणा उज्जुकडा निरामिसा, परिग्गहारंभनियत्तऽदोसा ॥ ४१ ॥
दवग्गिणा जहा रण्णे, डज्झमाणेसु जतुसु । अन्ने सत्ता पमोयति, रागद्दोसवस गया ॥ ४२ ॥
एवमेव वय मूढा, कामभोगेसु मुच्छिया । डज्झमाण न बुज्झामो, रागद्दोसग्गिणा जग ॥ ४३ ॥
भोगे भुच्चा वमित्ता य, लहुभूयविहारिणो । आमोअमाणा गच्छति, दिया कामकमा इव ॥ ४४ ॥
इमे य बद्धा फदति, मम हत्थऽज्जमागया । वय च सत्ता कामेसु, भविस्सामो जहा इमे ॥ ४५ ॥
सामिस कुलल दिस्सा, वज्झमाण निरामिस । आमिस सव्वमुज्झित्ता, विहरिस्सामो निरामिसा ॥
गिद्धोवमे य नच्चा ण, कामे ससारवद्धणे । उरगो सुवण्णपासिव्व, सकमाणो तणु चरे ॥ ४७ ॥

य'त्ति 'ममे' त्यात्मनिर्देशे उपलक्षणत्वात्तव च 'हस्तं' करम्, आर्य ! अद्य वा 'आगताः' प्राप्ताः, कोऽर्थः ?–स्ववशाः, आत्मनोऽज्ञतां दर्शयितुमाह—'वयं च सत्त'त्ति वयं पुनः 'सक्तानि' संबद्धानि अभिष्वङ्गवन्तीत्यर्थः, अवहुत्वेऽप्यस्मदोर्द्वयोश्चेति ( पा०-१-२-५९ ) वहुवचनं, 'कामेषु' अभिलषणीयशब्दादिषु, एवंविधेष्वपि चामीष्वभिष्वङ्ग इति मोहविलसितमिति भावः, यद्वा 'इमे चे'ति चशब्दाद्वयं च स्पन्दामह इव स्पन्दामहे आयुषश्चञ्चलतया परलोकगमनाय, शेषं तथैव, यत एवमतो भविष्यामो यथेमे पुरोहितादयः, किमुक्तं भवति ?–यथाऽमीभिश्चञ्चलत्वमवलोक्यैते परित्यक्तास्तथा वयमपि त्यक्ष्याम इति । स्यादेतद्–अस्थिरत्वेऽपि सुखहेतुत्वात्किमित्यमी त्यज्यन्ते इत्याह—सहामिषेण—पिशितरूपेण वर्तत इति सामिषस्तं कुललमिह गृध्रं शकुनिकां वा 'दृष्ट्वा' अवलोक्य 'बाध्यमानं' पीड्यमानं पक्ष्यन्तरैरिति गम्यते, निरामिषम्—आमिषविरहितमन्यथाभूतं दृष्ट्वेति गम्यते, 'आमिषम्' अभिष्वङ्गहेतुं धनधान्यादि 'सर्वं' निरवशेषम् 'उज्झित्वा' त्यक्त्वा 'विहरिस्सामो'त्ति विहरिष्याम्यप्रतिबद्धविहारितया चरिष्यामीत्यर्थः, 'निरामिषा' परित्यक्ताभिष्वङ्गहेतुः । उक्तानुवादेनोपदेष्टुमाह—गृद्धेणोपमा येषां ते गृद्धोपमास्तानुक्तन्यायेन, 'तुः' समुच्चये भिन्नक्रमश्च योक्ष्यते, 'ज्ञात्वा' अवबुध्य, णमिति प्राग्वत्, कान् ?–प्रक्रमाद्विषयामिषवतो लोकान् 'कामांश्च' विषयांश्च 'संसारवर्द्धनान्' संसारवृद्धिहेतून् ज्ञात्वेति सम्बन्धः, अथवा कामयन्त इति कामा इति व्युत्पत्त्या कामयोगाद्वाऽत्यन्तगृद्धिख्यापनार्थं कामा विषयिण एवोक्ता अतस्तान् गृद्धोपमान् संसारवर्द्धनांश्च ज्ञात्वा किमित्याह—'उरगो

दह्यमानमिव दह्यमान न 'बुध्यामहे' नावगच्छामो रागद्वेषावग्निरिव रागद्वेषाग्निस्तेन, किं तत् ?—'जगत्' प्राणिस-मूह, यो हि सविवेको रागादिमाश्च न भवति स दावानलेन दह्यमानानन्यसत्त्वानवलोक्य अहमप्येवमनेन दहनीय इति तद्रक्षणोपायतत्पर एव भवति, न तु प्रमादवशग. सन् प्रमोदते, यस्त्वत्यन्तमज्ञो रागादिमाश्च स आयतिम-चिन्तयन् हृष्यति न तु तदुपशमनोपाये प्रवर्त्तते, ततो वयमपि भोगापरित्यागादेवंविधान्येवेति भाव । ये त्वेवं-विधा न भवन्ति ते किं कुर्वन्तीत्याह—'भोगान्' मनोज्ञशब्दादीन् 'भोच'त्ति 'भुक्त्वा' आसेव्य पुनरुत्तरकाल 'वान्त्वा च' अपहाय विपाकदारुणत्वाल्लघु –वायुस्तद्वद्भूत–भवनमेषा लघुभूता , कोऽर्थ ?—वायूपमा तथाविधाः सन्तो विहरन्तीत्येवंशीला लघुभूतविहारिण –अप्रतिबद्धविहारिण इत्यर्थ , यद्वा लघुभूत.–सयमस्तेन विहर्तुं शीलं येषा ते तथाविधा , आ—समन्तान्मोदमाना हृष्यन्त आमोदमाना , तथाविधानुष्ठानेनेति गम्यते, गच्छन्ति विव-क्षित स्थानमिति शेष , क इव ?—'दिया कामकमा इव'त्ति इवशब्दो भिन्नक्रमस्ततो द्विजा इव—पक्षिण इव काम.–अभिलाषस्तेन क्रामन्तीति कामक्रमा , यथा पक्षिण स्वेच्छया यत्र यत्रावभासते तत्र तत्रामोदमाना भ्राम्यन्ति एवमेतेऽप्यभिष्वङ्गस्य परतन्त्रताहेतोरभावाद्यत्र यत्र सयमयात्रानिर्वहण तत्र तत्र यान्तीत्याशय । पुनर्बहि-रास्था निराकुर्वन्त्याह–'इमे' इत्यनुभूयमानतया प्रत्यक्षा शब्दादय , 'च ' समुच्चये 'बद्धा ' नियन्त्रिता अनेकधोपायै रक्षिता इत्यर्थ , एते किमित्याह–स्पन्दन्त इव स्पन्दन्ते अस्थितिधर्मतया, ये कीदृश इत्याह–'मम हत्थऽज्जमाग-

वन्धौ 'निष्परिग्रहौ' क्वचिदविद्यमानस्वीकारौ 'सम्यग्' अविपरीतं 'धर्मं' श्रुतचारित्रात्मकं 'विज्ञाय' विशेषतोऽव-
बुद्ध्य 'चेच'त्ति त्यक्त्वा 'कामगुणान्' शब्दादीन् 'वरान्' प्रधानान् पूर्वविशेषणैर्गतार्थत्वेऽपि पुनरभिधानमति-
शयख्यापकं, 'तपः' अनशनादि 'प्रगृह्य' अभ्युपगम्य 'यथाख्यातं' येन प्रकारेण तीर्थकरादिभिः कथितं 'घोरम्'
अत्यन्तदुरनुचरं घोरकर्मा—वैरिणः प्रति रौद्रः पराक्रमो धर्मानुष्ठानविषयसामर्थ्यात्मको ययोस्तौ तथा देवीनृपौ
तथैव च कृतवन्ताविति शेष इति सूत्रद्वयार्थः ॥ सम्प्रति समस्तोपसंहारमाह—

एवं ते कमसो बुद्धा, सव्वे धम्मपरायणा । जम्ममच्चुभउव्विग्गा, दुक्खस्संतगवेसिणो ॥ ५२ ॥
सासणि विगयमोहाणं, पुव्विं भावणभाविया । अचिरेणेव कालेण, दुक्खस्संतमुवागया ॥ ५३ ॥
राया सह देवीए, माहणो उ पुरोहिओ । माहणी दारगा चेव, सव्वे ते परिनिव्वुडि ॥५४॥ त्तिबेमि ॥ १४ ॥

॥ उसुआरिज्जं चउद्दसमं ॥

'एवम्' अमुना प्रकारेण 'तानि' अनन्तरमुक्तरूपाणि षडपि 'क्रमशः' अभिहितपरिपाट्या 'बुद्धानि' अवगत-
तत्त्वानि 'सर्वाणि' अशेषाणि 'धर्मपरायणानि' धर्मैकनिष्ठानि, पठ्यते च—'धम्मपरंपर'त्ति परम्परया धर्मो येषां
तानि परम्पराधर्माणि, प्राकृतत्वाच्च परम्पराशब्दस्य परनिपातः, तथा हि—साधुदर्शनात्कुमारकयोः कुमारवच-
नात्तत्पित्रोस्तदवलोकनात्कमलावत्यास्ततोऽपि च राज्ञ इति परम्परयैव धर्मप्राप्तिः, जन्ममृत्युभयेभ्यः—उक्तरूपेभ्य

सुवण्णपासे व'त्ति इवशब्दस्य भिन्नक्रमत्वात् आर्पत्वाच 'उरग इव' भुजग इव 'सौपर्णेयपार्श्वे' गरुडसमीपे 'शङ्कमान' भयग्रस्तस्तन्वितिस्तोक मन्द यतनयेतियावत् 'चरे' क्रियासु प्रवर्त्तस्व, अस्यायमाशय —यथा सौपर्णेयोपमैर्विपयैर्न बाध्यसे तथा सयममासेवस्व, ततश्च किमित्याह—'णागोव' अर्द्ध स्पष्टम्, आशयश्चाय—यथा नाग बन्धनं वरत्रान्दुकादि 'छित्वा' द्विधा विधायात्मनो 'वसति' विन्ध्याटवी व्रजति, एव भवानपि कर्मबन्धनमुपहत्यात्मनो वसति—कर्मविगमत शुद्धो यत्रात्माऽवतिष्ठते सा च मुक्तिरेव ता व्रजे, अनेन दीक्षाया प्रसङ्गत फलमुक्तम् । एव चोपदिश्य निगमयितुमाह—'एतद्' यन्मयोक्त 'पथ्य' हित 'महाराज!' प्रशस्तभूपते ? 'इसुकार!' इसुकारनामन्!, एतच न मया स्वमनीषिकयैवोच्यते, किन्तु 'इति' इत्येतन्मया 'श्रुतम्' अवधारित साधुसकाशादिति गम्यत इति सूत्राष्टकार्थं ॥ एव च तद्वचनमाकर्ण्य प्रतिबुद्धो नृप, ततश्च यत्तौ द्वावपि चक्रतुस्तदाह—

चइत्ता विपुल रज्ज, कामभोगे अ दुच्चए। निव्विसया निरामिसा, निन्नेहा निप्परिग्गहा ॥ ५० ॥

सम्म धम्म वियाणित्ता, चिच्चा कामगुणे चरे। तव पगिज्झऽहक्खाय, घोर घोरपरक्कमा ! ॥ ५१ ॥

'त्यक्त्वा' प्रहाय 'विपुल' विस्तीर्ण 'राष्ट्र' मण्डल, पाठान्तरतो राज्य वा 'कामभोगांश्च' उक्तरूपान् 'दुस्त्यजान्' दुष्परिहारान् 'निर्विपयौ' शब्दादिविपयविरहितौ अत एव निरामिषौ, यद्वा विषयो—देशस्तद्विरहितौ राष्ट्रपरित्यागत कामभोगत्यागतश्च निरामिषौ—अभिष्वङ्गहेतुविरहितौ, कुत पुनरेवविधौ ?, यतो 'नि स्नेहौ' निष्प्रति-

## अथ पञ्चदशं सभिक्षुकमध्ययनम् ।

व्याख्यातं चतुर्दशमध्ययनं, सम्प्रति पञ्चदशमारभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तराध्ययने निर्निदानतागुण उक्तः, स च मुख्यतो भिक्षोरेव, भिक्षुश्च गुणत इति तद्गुणा अनेनोच्यन्त इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि पूर्ववद्व्यावर्ण्यानि तावद्यावन्नामनिष्पन्ननिक्षेपे सभिक्षुकमिति नाम, तत्र च सशब्दो भिक्षुशब्दश्च दशवैकालिक एव निक्षिप्तस्तथाऽपि स्थानाशून्यार्थं भिक्षुनिक्षेपमाह निर्युक्तिकृत्—

निक्खेवो भिक्खुंमी चउव्विहो० ॥ ३७४ ॥

जाणयसरीरभविए तव्वइरित्ते अ निण्हगाईसु । जो भिंदेइ खुहं खलु सो भिक्खू भावओ होइ ३७५

'निक्षेपः' न्यासः भिक्षौ विचार्ये चतुर्विधो नामस्थापनाद्रव्यभावभेदात्, तत्र नामस्थापने क्षुण्णे, द्विविधो भवति द्रव्ये विचार्ये आगमतो नोआगमतः, तत्रागमतो भिक्षुपदार्थज्ञस्तत्र चानुपयुक्तो, नोआगमतश्च स त्रिविधः–'जाणगसरीरभविए'त्ति ज्ञशरीरभव्यशरीरे तद्व्यतिरिक्तश्च, तत्राद्यौ सुगमावेव, तद्व्यतिरिक्तस्तु द्रव्यभिक्षुर्निह्नवादिषु, आदि-

एवोद्विग्नानि-त्रस्तानि जन्ममृत्युभयोद्विग्नानि 'दुःखस्य' असातस्यान्त —पर्यन्तस्तद्गवेषकाणि तदन्वेषकाणि सापेक्षत्वेऽपि समासो यथा देवदत्तस्य गुरुकुलमिति। पुनस्तद्वक्तव्यतामेवाह—'शासने' दर्शने विगतमोहानाम्–अर्हतां 'पूर्वे'-ष्विह पूर्वजन्मनि भावनया–अभ्यासरूपया भावितानि–वासितानि भावनाभावितानि, यद्वा भाविता भावना यैस्तानि भावितभावनानि, पूर्वोत्तरनिपातस्यातन्त्रत्वाद्, अत एवाचिरेणैव–स्वल्पेनैव कालेन 'दुःखस्यान्त' मोक्षम् 'उपागतानि' प्राप्तानि, सर्वत्र च प्राकृतत्वात्पुंल्लिङ्गनिर्देश । मन्दमतिस्मरणायाध्ययनार्थमुपसंहर्तुमाह–'राजा' इषुकार सह 'देव्या' कमलावत्या ब्राह्मणश्च पुरोहितो भृगुनामा ब्राह्मणी तत्पत्नी यशा दारकौ तत्पुत्रौ चैवेति पूर्ववत्सर्वाणि तानि 'परिनिर्वृतानि' कर्माम्बुपशमत शीतीभूतानि मुक्तिं गतानीतियावदिति सूत्रनयार्थ ॥ 'इति' परिसमाप्तौ ब्रवीमीति पूर्ववत्। उक्तोऽनुगम , सम्प्रति नयास्ते च पूर्ववत् ॥

इति श्रीशान्त्याचार्यकृतायामुत्तराध्ययनटीकायां शिष्यहिताया चतुर्दशमध्ययनं समाप्तमिति ॥

परिग्रहः, भवन्तीति सर्वापेक्षं बहुवचनम् । 'साधुः' तपस्वी 'कर्म' ज्ञानावरणादि 'अष्टविधम्' अष्टप्रकारं 'तपश्च' अनशनादि भावे विचार्ये भेत्ता भेत्तव्यं भेदनं च क्रमेण ज्ञातव्यम् । इत्थं 'जो भिंदई खुहं खलु' इति ग्रहणकवाक्यं गतं, भिनत्तीति व्याख्याय क्षुधं व्याख्यातुमाह—'रागद्वेषौ' उक्तरूपौ 'दण्डाः' मनोदण्डादयो 'योगाः' करणकारणानुमतिरूपाः, पठन्ति च—'रागद्दोसा छुहं दंडा' अत्र च 'छुहं'ति क्षुध्—बुभुक्षा उच्यते, तथा 'गौरवाणि च' ऋद्धिगौरवादीनि 'शल्यानि च' मायाशल्यादीनि 'विकथाः' स्त्रीकथादयः 'सञ्ज्ञाः' आहारसञ्ज्ञादयः, 'खुहं'ति एतद्भावभावित्वादष्टविधकर्मरूपायाः क्षुधः एतान्यपि क्षुदित्युच्यन्ते, प्राकृतत्वाच्च नपा निर्देशः, 'कषायाः' क्रोधादयः 'प्रमादाश्च' मद्यादयः क्षुदिति सम्बन्धनीयमिति गाथात्रयार्थः ॥ उपसंहर्तुमाह—

एयाइं तु खुहाइं जे खलु भिंदंति सुव्वया रिसओ । ते भिन्नकम्मगंठी उविंति अयरामरं ठाणं ३७९

'एतानि' रागादीनि 'खुहाइं'ति क्षुच्छब्दवाच्यानि ये खलु 'भिंदंति' विदारयन्ति, खलुशब्द एवकारार्थो भिन्दन्त्येवेति शोभनानि अनतिचारतया व्रतानि—प्राणातिपातविरत्यादीनि येषां ते सुव्रताः 'ऋषयः' मुनयः, ते किमित्याह—भिन्नः कर्मैवातिदुर्भेदतया ग्रन्थिः कर्मग्रन्थिर्यैस्ते तथाविधाः 'उपयान्ति' प्राप्नुवन्ति 'अजरामरं स्थानं' मुक्तिपदमिति गाथार्थः ॥ उक्तो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्— ॥४१३॥

शब्दातसरजस्कादिषु चान्यतरो विवक्षित इति गम्यते, द्रव्यत्व चास्य रागादिलक्षणक्षुद्भेत्तृत्वाभावात्, भावभिक्षुमाह—यो 'भिनत्ति' विदारयति क्षुध 'खलु' अवधारणे भिन्नक्रमश्च, तत स एव भिक्षुर्भावतो भवतीति गाथाद्वयार्थ ॥ इह च भिनत्तीत्युक्तमत कर्तृकरणकर्मभि प्रयोजन, सकर्मकत्वाद्भिदे, अत आह—

भेत्ता य भेअण वा नायव्व भिंदियव्वय चेव । इक्किकपि अ दुविह दव्वे भावे अ नायव्व ॥ ३७६ ॥
रहकारपरसुमाई दारुगमाई अ दव्वओ हुति। साहू कम्मऽट्ठविह तवो अ भावंमि नायव्वो ॥३७७॥
रागद्दोसा दडा जोगा तह गारवा य सल्ला य। विगहाओ सण्णाओ खुह कसाया पमाया य ॥३७८॥

भेत्ता च कर्त्ता यो भिनत्ति, भेदन करण येन भिनत्ति 'वा' समुच्चये 'ज्ञातव्य' बोद्धव्य भेत्तव्यमेव भेत्तव्यक कर्म यद्भिद्यते, 'च' समुच्चये, 'एव' इति पूरणे, 'एकैकमपि चे'ति भेत्ता भेदन भेत्तव्यक च 'द्विविध' द्विभेद द्रव्ये भावे च विचार्यमाणे 'ज्ञातव्यम्' अवगन्तव्य। तत्र द्रव्ये 'रहगारपरसुमाइ'त्ति आदिशब्दस्य प्रत्येकमभिसम्बन्धाद् रथकार —तक्षकस्तदादिर्द्रव्यतो भेत्ता, आदिशब्दादयस्कारादिपरिग्रह , परशु —कुठारस्तदादिर्द्रव्यतो भेदनम्, आदिशब्दाद् घनादयो गृह्यन्ते, 'दारुगमाई य'त्ति दारुक—काष्ठ तदादि च द्रव्यतो भेद्यम्, आदिशब्दाल्लोहादि-

क्खुत्ति' यत्तदोर्नित्याभिसम्बन्धाद् य एवंविधः स भिक्षुः, अनेन सिंहतयैव विहरणं भिक्षुत्वनिबन्धनमुक्तमिति सूत्रार्थः ॥ तच्च सिंहतया विहरणं यथा स्यात्तथा विशेषत आह—

राओवरयं चरिज्ज लाढे, विरए वेदवियाऽऽयरक्खिए ।
पन्ने अभिभूय सव्वदंसी, जे कम्हिवि न मुच्छिए स भिक्खू ॥ २ ॥

रागः—अभिष्वङ्गः उपरतो—निवृत्तो यस्मिंस्तद्रागोपरतं यथा भवत्येवं 'चरेद्' विहरेत्, क्तान्तस्य परनिपातः प्राग्वत्, अनेन मैथुननिवृत्तिरुक्ता, रागाविनाभावित्वान्मैथुनस्य, यद्वाऽऽवृत्तिन्यायेन 'रातोवरयं'ति रात्र्युपरतं 'चरेत्' भक्षयेदित्यनेनैव रात्रिभोजननिवृत्तिरप्युक्ता, 'लाढे'त्ति सदनुष्ठानतया प्रधानो विरतः—असंयमान्निवृत्तः, अनेन च संयमस्याक्षेपात्प्राणातिपातनिवृत्तिः सावद्यवचननिवृत्तिरूपत्वाद्वाक्संयमस्य मृषावादनिवृत्तिश्चाभिहिता वेदितव्या, वेद्यतेऽनेन तत्त्वमिति वेदः—सिद्धान्तस्तस्य वेदनं वित्तया आत्मा रक्षितो—दुर्गतिपतनात्त्रातोऽनेनेति वेदविदात्मरक्षितः, यद्वा वेदं वेत्तीति वेदवित्, तथा रक्षिता आयाः—सम्यग्दर्शनादिलाभा येनेति रक्षितायः, रक्षितशब्दस्य परनिपातः प्राग्वत्, 'प्राज्ञः' हेयोपादेयबुद्धिमान् 'अभिभूय' पराजित्य परीषहोपसर्गानिति गम्यते, 'सर्वं' समस्तं गम्यमानत्वात्प्राणिगणं पश्यति—आत्मवत्प्रेक्षत इत्येवंशीलः, अथवाऽभिभूय रागद्वेषौ सर्वं वस्तु समतया

मोण चरिस्सामि समिच धम्मं, सहिए उज्जुकडे नियाणछिन्ने।
संथव जहिज्ज अकामकामे, अन्नायएसी परिव्वए स भिक्खू ॥ १ ॥

मुने कर्म मौन तच सम्यक्चारित्र 'चरिस्सामो'त्ति सूत्रत्वात् चरिष्यामि—आसेविष्ये इत्यभिप्रायेणेत्युपस्कार, 'समेत्य' प्राप्य 'धर्म' श्रुतचारित्रभेद दीक्षामित्युक्त भवति, 'सहित' सम्यग्दर्शनादिभिरन्यसाधुभिर्वेति गम्यते, स्वस्मै हित सहितो वा सदनुष्ठानकरणत, कथैवम्?-ऋजु—सयमस्तत्प्रधान ऋजु वा—मायात्यागत कृतम्—अनुष्ठान यस्येति ऋजुकृत, ईदृक इत्याह—निदान—विषयाभिष्वङ्गात्मक, यद्वा 'निदान बन्धने' ततश्च करणे ल्युट्, निदान—प्राणातिपातादिकर्मबन्धकारण छिन्नम्—अपनीत येन स तथा, क्त तस्य परनिपात आग्यत्प्राकृतत्वात्, छिन्ननिदानो वा अप्रमत्तसयत इत्यर्थ, 'संस्तव' पूर्वसंस्तुतैर्मातादिभि पश्चात्संस्तुतैश्च श्वश्र्वादिभि परिचय 'जह्यात्' त्यजेत्, 'शकि च लिङ्' (शकि लिङ् च पा-३-३-१७२) इत्यनेन शक्यार्थे लिङ्, तत सस्तवं हातु शक्तो य इति, एव लिङर्थभावना सर्वत्र कार्या, तथा कामान्—इच्छाकाममदनकामभेदान् कामयते—प्रार्थयते य स कामकामो न तथा अकामकाम, यद्वाऽकामो—मोक्षस्तम् सकलाभिलापनिवृत्तेस्त कामयते य स तथा, अत एव अज्ञात—तपस्वितादिभिर्गुणैरनवगत एषयते—ग्रासादिक गवेषयतीत्येवशीलोऽज्ञातैषी 'परिव्रजेद्' अनियतविहारितया विहरेत् 'स भि-

ग्रमना न संप्रहृष्टः असंप्रहृष्टः—आक्रोशादिषु न प्रहर्षवान्, यथा कश्चिदाह—"कश्चित् पुमान् क्षिपति मां परिरूक्षवाक्यैः, श्रीमत्क्षमाभरणमेत्य मुदं व्रजामि" इत्यादि, प्रकृतोपसंहारमाह—यः 'कृत्स्नम्' उत्कृष्टादिभेदतः समस्तमाक्रोशवधम् 'अध्यास्ते' सहते समतयेति गम्यते, स भिक्षुरिति सूत्रार्थः ॥ किं च—

पंतं सयणासणं भइत्ता, सीउण्हं विविहं च दंसमसगं ।
अव्वग्गमणे असंपहिट्ठे, जो कसिणं अहिआसए स भिक्खू ॥ ४ ॥

'प्रान्तम्' अवमं शयनं च—संस्तारकादि आसनं च—पीठकादि शयनासनम् उपलक्षणत्वाद्भोजनाच्छादनादि च 'भुक्त्वा' सेवित्वा शीतं चोष्णं च शीतोष्णम्—उक्तरूपं, चस्य गम्यमानत्वात्तच्च सेवित्वा 'विविधं च' नानाप्रकारं दंशाश्च मशकाश्च दंशमशकं प्राग् व्याख्यातमेव प्राप्येति शेषो, मत्कुणाद्युपलक्षणं चैतत्, अव्यग्रमना असंप्रहृष्टो यः कृत्स्नमध्यास्ते स भिक्षुरिति प्राग्वत् । इह च प्रान्तं शयनासनं भुक्त्वेति अतिसात्त्विकतादर्शनार्थं, प्रान्तशयनादितायां हि सुदुःसहाः शीतादयः, अनेन शीतोष्णदंशमशकपरीषहसहनमुक्तमिति सूत्रार्थः ॥ अपरं च—

नो सक्कियमिच्छई न पूअं, नोवि य वंदणगं कुओ पसंसं ? ।
से संजए सुव्वए तवस्सी, सहिए आयगवेसए स भिक्खू ॥ ५ ॥

'नो' निषेधे 'सत्कृतं' सत्कारमभ्युत्थानानुगमादिरूपम् 'इच्छति' अभिलषति, प्राकृतत्वाच्च सूत्रे दीर्घनिर्देशः,

पश्यतीत्येवशील सर्वदर्शी, यदिवा सर्वं दशति–भक्षयतीत्येवशील सर्वदशी, उक्त हि–"पंडिग्गह सलिहित्ता ण, लेवमायाएँ सजए । दुग्गध वा सुगध वा, सव भुजे ण छड्डए ॥ १ ॥" अत एव य कस्मिंश्चित्सचित्तादिवस्तुनि न मूर्च्छित –प्रतिवद्ध , एतेन परिग्रहे निवृत्तेरभिधानमप्रतिवद्धश्च कथमदत्तमाददीत ? इत्यदत्तादाननिवृत्तेश्च, तथा च य एव मूलगुणान्वित स भिक्षुरित्युक्त भवतीति सूत्रार्थ ॥ अन्यच्च—

अक्कोसवह विदित्तु धीरे, मुणी चरे लाढे निचमायगुत्ते ।
अव्वग्गमणे असपहिट्ठे, जो कसिण अहिआसए स भिक्खू ॥ ३ ॥

आक्रोशनमाक्रोश –असभ्यालापो वधो–घातस्ताडन वा, अनयो समाहारद्वन्द्वे आक्रोशवध तद्विदित्वा स्वकृत-कर्मफलमेतदिति मत्वा 'धीर' अक्षोभ्य सम्यक् सोढेतियावत् 'मुनि' यति 'चरेत्' पर्यटेद् अनियतविहारतयेति गम्यते, ततश्चानेनाक्रोशवधचर्यापरीषहसहनमुक्त, 'लाढे'त्ति प्राग्वत्, 'नित्यम्' इति सदा 'आत्मा' शरीरम्, आत्म-शब्दस्य शरीरवचनस्यापि दर्शनात्, उक्त हि—"धर्मधृत्यभिधीद्धर्कत्वक्रतस्वस्वार्थदेहिषु । शीलानिलमनोयत्नै-कर्षीर्येष्वात्मन स्मृति ॥ १ ॥" इति, तेन गुप्त आत्मगुप्तो–न यतस्तत करणचरणादिविक्षेपकृत्, यद्वा गुप्तो—रक्षितोऽसयमस्थानेभ्य आत्मा येन स तथा, अव्यग्रम्–अनाकुलमसमञ्जसचिन्तोपरमतो मन —चित्तमस्येत्यव्य-

१ पतद्गृह सलिह्य लेपमात्रया सयत । दुर्गन्धि वा सुगन्ध वा सर्वं भुङ्क्ते न त्यजति ॥ १ ॥

क्तभोगतायां स्त्र्यादिविषयं कौतुकम्, उपलक्षणत्वाद्भुक्तभोगताया स्मृतिं च, 'उपैति' गच्छति स भिक्षुरिति सूत्रार्थः॥ इत्थं परीपहसहनेन भिक्षुत्वसमर्थनात् सिंहविहारित्वमुक्त्वा तदेव पिण्डविशुद्धिद्वारेणाह—

छिन्नं सरं भोमं अंतलिक्खं, सुविणं लक्खणं दंड वत्थुविज्जं ।
अंगविगारं सरस्सविजयं, जो विज्जाहिं न जीवई स भिक्खू ॥ ७ ॥

छेदनं छिन्नं वसनदशनदार्वादीनां, तद्विषयशुभाशुभनिरूपिका विद्याऽपि छिन्नमित्युक्ता, एवं सर्वत्र । "देवेसु उत्तमो लाभो" इत्यादि, तथा 'सरं'ति स्वरस्वरूपाभिधानं, "सज्जं रवइ मयूरो, कुकुडो रिसभं सरं । हंसो रवति गंधारं, मज्झिमं तु गवेलए ॥१॥" इत्यादि,तथा—"सज्जेण लहइ वित्तिं, कयं च न विणस्सई । गावो पुत्ता य मित्ता य, नारीणं होइ वल्लहो ॥ १ ॥ रिसहेण उ ईसरियं, सेणावच्चं धणाणि य ।" इत्यादि । तथा भूमिः—पृथ्वी भूमौ भवं भौमं—भूकम्पादिलक्षणं, यथा—"शब्देन महता भूमिर्यदा रसति कम्पते । सेनापतिरमात्यश्च, राजा राष्ट्रं च पीड्यते ॥ १ ॥" इत्यादि । तथा अन्तरिक्षम्—आकाशं तत्र भवम् आन्तरिक्षं—गन्धर्वनगरादिलक्षणं,यथा—"कपिलं शस्य-

१ देवेपूत्तमो लाभः ( कोणेपु ) २ षड्जं रौति मयूरः कुक्कुट ऋषभं स्वरम् । हंसो रौति गान्धारं मध्यमं तु गवेलकः ॥ १ ॥ ३ षड्जेन लभते वृत्तिं कृतं च न विनश्यति । गावः पुत्राश्च मित्राणि च नारीणां भवति वल्लभः ॥ १ ॥ ऋषभेण त्वैश्वर्यं सेनापतित्वं धनानि च ।

न 'पूजा' वस्त्रपात्रादिभि सपर्या, 'नो अपि च' इति नैव च 'वन्दनक' द्वादशावर्त्तादिरूप, कुत 'प्रशसा' निजगुणोत्कीर्त्तनरूपा ?, नैवेच्छतीत्यभिप्राय , 'स ' एवविध सम्यग् यतते सदनुष्ठान प्रतीति सयतोऽत एव च सुव्रत , सुव्रतत्वाच्च 'तपस्वी' प्रशस्यतपा , तथा च सहित सम्यग्ज्ञानक्रियाभ्या, यद्वा सह हितेन–आयतिपथ्येन अर्थादनुष्ठानेन वर्त्तत इति सहित , तत एव चात्मान–कर्मविगमाच्छुद्धस्वरूप गवेपयति–कथमयमित्थंभूतो भवेदित्यन्वेपयते य स आत्मगवेपक , यद्वा आय –सम्यग्दर्शनादिलाभ सूत्रत्वादायतो वा–मोक्षस्त गवेपयतीत्यायगवेपक आयतगवेपको वा य स भिक्षुरिति सूत्रार्थ ॥ अनेन सत्कारपुरस्कारपरीपहसहनमुक्त, सम्प्रति स्त्रीपरीपहसहनमाह—

जेण पुणो जहाइ जीविय, मोह वा कसिण नियच्छई ।
नरनारि पयहे सया तवस्सी, न य कोऊहल उवेइ स भिक्खू ॥ ६ ॥

येन हेतुना, पुन शब्दोऽस्य सर्वथा सयमघातित्वविशेपद्योतक , 'जहाति' त्यजति 'जीवित' सयमजीवितं 'मोह वा' मोहनीय वा कपायनोकपायादिरूप 'कृत्स्न' समस्त कृष्ण वा शुद्धाशयविनाशकतया 'नियच्छति' बध्नाति तदेवविध नरश्च नारी च नरनारि 'प्रजह्यात्' प्रकर्षेण त्यजेत् य 'सदा' सर्वकाल तपस्वी, न च 'कुतूहलम्' अमु-

शुभदः स्मृतः । विपरीतः प्रवेशे तु, स एवाभीष्टदायकः ॥ १ ॥" तथा—"दुर्गाखरत्रयं स्याज्ज्ञातव्यं शाकुनेन नैपुण्यात् । चिलिचिलिशब्दः सफलः सुसु मध्यश्चलचलो विफलः ॥ १ ॥" इत्यादि । ततो य एताभिर्विद्याभिर्न जीवति नैता एव जीविकाः शुभाशुभाः प्रकल्प्य प्राणान् धारयति स भिक्षुरिति सूत्रार्थः ॥ अनेन निमित्तलक्षणोत्पादनादोषपरिहार उक्तः, सम्प्रति मन्त्रादिरूपतद्दोषपरिहारायाह—

मंतं मूलं विविहं विज्जचिंतं, वमणविरेयणधूमनित्तसिणाणं ।
आउरे सरणं तिगिच्छियं च, तं परिन्नाय परिव्वए स भिक्खू ॥ ८ ॥

'मन्त्रम्' ॐकारादिस्वाहापर्यन्तो ह्रींकारादिवर्णविन्यासात्मकस्तं, 'मूलं' सहदेवीमूलिकाकल्पादि तत्तच्छास्त्रविहितं मूलकर्म वा 'विविधं' नानाप्रकारं 'वैद्यचिन्तां' वैद्यसम्बन्धिनीं नानाविधौषधपथ्यादिव्यापारात्मिकां, विविधामित्यत्रापि डमरुकमणिन्यायेन योज्यते, वमनम्—उद्गिरणं विरेचनं—कोष्ठशुद्धिरूपं धूमं—मनःशिलादिसम्बन्धि नेत्तंति—नेत्रशब्देन नेत्रसंस्कारकमिह समीराञ्जनादि परिगृह्यते, स्नानम्—अपत्यार्थं मन्त्रौषधिसंस्कृतजलाभिषेचनं, वमनादीनां च स्नानावसानानामिह कृतसमाहाराणां निर्देशः, 'आउरे सरणं'ति, सुब्व्यत्ययाद् 'आतुरस्य' रोगादिपीडितस्य 'शरणं' स्मरणं हा तात ! हा मातः ! इत्यादिरूपं 'चिकित्सितं च' आत्मनो रोगप्रतीकाररूपं 'तद्' इति

घाताय, मार्जिष्टे हरण गवाम् । अव्यक्तवर्णं कुरुते, चलक्षोभ न संशय ॥ १ ॥ गन्धर्वनगर स्निग्धं, समाकार सतोरणम् । सौम्या दिश समाश्रित्य, राज्ञस्तद्विजयङ्करम् ॥ २ ॥" इत्यादि । तथा 'स्वप्न' स्वप्नगत शुभाशुभकथन, यथा—"गायने रोदन ब्रूयान्नर्त्तने वधव धनम् । हसने शोचन ब्रूयात्पठने कलह तथा ॥ १ ॥" इत्यादि । तथा 'लक्षण' स्त्रीपुरुषयोर्यथा—"चक्खुसिणेहे सुहितो दन्तसिणेहे य भोयण मिट्ठ । तयणेहेण य सोक्ख णहणेहे होइ परमधण ॥ १ ॥" इत्यादि, गजादीना च यथायथ पालकाप्यादिविहितम् । तथा 'दड'त्ति 'दण्ड' यष्टिस्तत्स्वरूपकथनम्, "एकपर्व पससति, दुपर्वा कलहकारिय"त्ति, इत्यादि । तथा 'वास्तुविद्या' प्रासादादिलक्षणाभिधायिशास्त्रात्मिका "कुटिला भूमिजाश्चैव, वैनीका द्रव्यजास्तथा । लतिनो नागराश्चैव, प्रासादा क्षितिमण्डना ॥ १ ॥ सूक्ता पदविभागेन, कर्ममार्गेण सुन्दरा । फलावासिकरा लोके, भङ्गभेदयुता विभो ॥ २ ॥ अण्डकैस्तु विविक्तास्ते, निर्गमैश्चारुरूपकै । चित्रपत्रैर्विचित्रैश्च, विविधाऽऽकाररूपकै ॥ ३ ॥" इत्यादि । तथा 'अङ्गविकार॰' शिर -स्फुरणादिस्तच्छुभाशुभसूचक शास्त्रमप्यङ्गविकारो यथा 'दक्षिणाक्षिस्पन्दने प्रिय भविष्यती'त्यादि । तथा स्वर —पोदकीशिवादिरुतरूपस्तस्य विषय —तत्सम्बन्धी शुभाशुभनिरूपणाभ्यास , यथा—"गतिस्तारा स्वरो वाम , पोदक्या

१ चक्षु स्नेहेन सुखितो द तस्नेहेन च भोजनमिष्टम् । त्वक्स्नेहेन च सौख्य नखस्नेहेन भवति परमधनम् ॥ १ ॥ [*]पालकादिविहित प्र० । २ एकपर्वा प्रशसन्ति द्विपर्वा क्लेशकारिणी ।

‘गृहिणः’ गृहस्था ये ‘प्रव्रजितेन’ गृहीतदीक्षेण दृष्टा उपलक्षणत्वात्परिचिताश्च ‘अप्रव्रजितेन वा’ गृहस्थावस्थेन सह ‘संस्तुताः’ परिचिता भवेयुर्गृहिणो य इति सम्बन्धः ‘तेसिं’ति ‘तैः’ उभयावस्थयोः परिचितैर्गृहिभिः ‘इहलौकिकफलार्थं’ वस्त्रपात्रादिलाभनिमित्तं यः ‘संस्तवं’ परिचयं न करोति स भिक्षुरिति सूत्रार्थः ॥ तथा—

सयणासणपाणभोयणं, विविहं खाइमसाइमं परेसिं ।
अदए पडिसेहिए नियंठे, जे तत्थ ण पओसई स भिक्खू ॥ ११ ॥

‘शयनासनपानभोजन’मिति शयनादीनि प्रतीतानि ‘विविधम्’ अनेकप्रकारं ‘खादिमस्वादिम’मिति खादिमं-पिण्डखर्जूरादि स्वादिमम्—एलालवङ्गादि, उभयत्र समाहारः, ‘परेसिं’ति ‘परेभ्यः’ गृहस्थादिभ्यः ‘अदइ’त्ति अददद्भ्यः ‘प्रतिषिद्धः’ क्वचित् कारणान्तरे याचमानो निराकृतः सः ‘निर्ग्रन्थः’ मुक्तद्रव्यभावग्रन्थो यः ‘तत्र’ इत्यदाने ‘न प्रदुष्यति’ न प्रद्वेषं याति पुनर्दास्यतीत्यभिधायकक्षपकर्षिवत्स भिक्षुरिति सूत्रार्थः ॥ अनेन क्रोधपिण्डपरिहार उक्तः, उपलक्षणं चैतदशेषभिक्षादोषपरिहारस्य, इदानीं ग्रासैषणादोषपरिहारमाह—

जं किंचाहारपाणगं विविहं, खाइमसाइमं परेसिं लद्धुं ।
जो तं तिविहेण नाणुकंपे, मणवयकायसुसंवुडे जे स भिक्खू ॥ १२ ॥

‘यत् किञ्चित्’ अल्पमपि ‘आहारपानम्’ अशनपानीयं विविधं ‘खाइमसाइमं’ति चस्य गम्यमानत्वात् खादि-

यदनन्तरमुक्त 'परिज्ञाय'त्ति ज्ञपरिज्ञया परिज्ञाय प्रत्याख्यानपरिज्ञया च प्रत्याख्याय 'परिव्रजेत्' सर्वप्रकार संयमाध्वनि यायाद्य स भिक्षुरिति सूत्रार्थं ॥ अपर च—

खत्तियगणउग्गरायपुत्ता, माहणभोई य विविहा य सिप्पिणो ।
नो तेसिं वयइ सिलोगपूअं, तं परिन्नाय परिव्वए स भिक्खू ॥ ९ ॥

क्षत्रिया –हैहेयाद्यन्वयजा गणा –मल्लादिसमूहा उग्रा –आरक्षकादय राजपुत्रा –नृपसुता , एषा द्वन्द्व , 'माहनभोगिका ' तत्र माहना ब्राह्मणास्तथा भोगेन–विशिष्टनेपथ्यादिना चरन्ति भोगिका.—नृपतिमान्या प्रधानपुरुषा , 'विविधाश्च' नानाप्रकारा 'शिल्पिन ' स्थपतिप्रभृतय , पठन्ति च–'सिप्पिणोऽण्णे' तत्र चान्ये इति शिल्पिविशेषणमुभयत्र च य इति शेष , 'नो' नैव 'तेषां' क्षत्रियादीना 'वदति' प्रतिपादयति, के ?–'श्लोकपूजे' श्लोक–श्लाघा यथैते शोभना इति, पूजा च–यथैतान् पूजयतेति, उभयत्र पापानुमत्यादिमहादोषसम्भवात्, किंतु 'तदि'ति श्लोकपूजादिक द्विविधयाऽपि परिज्ञया परिज्ञाय परिव्रजेद्य स भिक्षुरिति सूत्रार्थ ॥ अनेन वनीपकत्वस्य परिहार उक्त , साम्प्रत संस्तवपरिहारमाह—

गिहिणो जे पव्वइएण दिट्ठा, अप्पव्वईएण व संथुया हविज्जा ।
तेसिं इहलोयफलट्ठयाए, जो संथवं न करेइ स भिक्खू ॥ १० ॥

सद्दा विविहा भवंति लोए, दिव्वा माणुसया तहा तिरिच्छा ।
भीमा भयभेरवा उराला, जो सुच्चा ण विहिज्जई स भिक्खू ॥ १४ ॥

'शब्दाः' ध्वनयः 'विविधाः' विमर्शप्रद्वेषादिना विधीयमानतया नानाप्रकाराः 'भवन्ति' जायन्ते 'लोके' जगति 'दिव्याः' देवसम्बन्धिनः 'मानुष्यकाः' मनुष्यसम्बन्धिनस्तथा 'तैरश्चाः' तिर्यक्सम्बन्धिनः 'भीमाः' रौद्राः भयेन भैरवाः—अत्यन्तसाध्वसोत्पादका भयभैरवाः 'उदाराः' महान्तो यः 'श्रुत्वा' आकर्ण्य प्रक्रमादुक्तविशेषणविशिष्टानेव शब्दान् 'न व्यथते' न विभेति धर्मध्यानतो न चलति वा स भिक्षुरिति सूत्रार्थः ॥ अनेनोपसर्गसहिष्णुत्वं सिंहविहारितायां निमित्तमुक्तं, सम्प्रति समस्तधर्माचारमूलं सम्यक्त्वस्थैर्यमाह—

वायं विविहं समिच लोए, सहिए खेयाणुगए अ कोवियप्पा ।
पन्ने अभिभूय सव्वदंसी, उवसंते अविहेडए स भिक्खू ॥ १५ ॥

'वादं' च स्वस्वदर्शनाभिप्रायवचनविज्ञानात्मकं 'विविधम्' अनेकप्रकारं, धर्मविषयेऽपि ह्यनेकधा विवदन्ते, यथोक्तं—

"सेतुकरणेऽपि धर्मो भवत्यसेतुकरणेऽपि किल धर्मः । गृहवासेऽपि च धर्मो वनेऽपि वसतां भवति धर्मः ॥ १ ॥

मुण्डस्य भवति धर्मस्तथा जटाभिः सवाससां धर्मः" इत्यादिरूपं 'समेत्य' ज्ञात्वा लोके सहितः स्वहितो वा प्राग्वत् खेदयत्यनेन कर्मेति खेदः—संयमस्तेनानुगतो—युक्तः खेदानुगतः 'चः' पूरणे कोविदः—लब्धशास्त्रपरमार्थ आत्मा-

मखादिम च उक्तरूप 'परेसि'ति 'परेभ्य' गृहस्थेभ्य 'लद्धु'ति 'लब्ध्वा' प्राप्य य 'तं'ति सुव्व्यत्ययात्तेनाहारादिना 'त्रिविधेन' मनोवाक्कायलक्षणेन प्रकारत्रयेण नानुकम्पते, कोऽर्थ ?—ग्लानबालादीन्नोपकुरुते न स भिक्षुरिति वाक्यशेष, यस्तु मनोवाक्कायै सुष्ठु सवृतो निरुद्धतथाविधाहाराद्यभिलाप सुसवृता वा मनोवाक्काया यस्येति सुसवृतमनोवाक्काय, तत एव ग्लानादीननुकम्पत इति गम्यते, स भिक्षु, यद्वा 'नानुकम्पते' इत्यत्र 'ना' पुरुषोऽनुकम्पते [ नानुरूपो न कम्पते ] मनोवाक्कायसुसवृत सन् स भिक्षुरिति सूत्रार्थ. ॥ अनेनार्थतो गृद्ध्यभावाभिधानादङ्गारदोषपरिहार उक्त, सम्प्रति धूमपरिहारमाह—

आयामग चेव जवोदण च, सीय सोवीरजवोदग च।
नो हीलए पिंड नीरस तु, पतकुलाणि परिव्वए स भिक्खू ॥ १३ ॥

आयाममेव आयामकम्—अवश्रावण चशब्द उत्तरापेक्षया समुच्चये स्वगतानेकभेदव्यापको वा, 'एव' इति प्राग्वत्, 'यवोदनं च' यवभक्त 'सीय ति शीत—शीतलमन्तप्रान्तोपलक्षण चैतत्, सोवीर—आचाम्ल यवोदक च—यवप्रक्षालन पानीय सोवीरयवोदक, तच 'नो हीलयेत्' धिगिद किमनेनामनोज्ञेनेति न निन्देत्, पिण्ड्यते—सङ्घात्यते, कोऽर्थ ?—गृहिभ्य उपलभ्य समील्यत इति पिण्डस्तमायामकाद्येव 'नीरस' विगतास्वाद 'तु' अप्यर्थस्ततो नीरसमपि, अत एव 'प्रान्तकुलानि' तुच्छाशयगृहाणि दरिद्रकुलानि वा य परिव्रजेत्स भिक्षुरिति सूत्रार्थ ॥ अन्यच—

## अथ षोडशं ब्रह्मचर्यसमाधिनामकम् ।

उक्त पञ्चदशमध्ययनम्, अधुना षोडशमारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तराध्ययने भिक्षुगुणा उक्ताः, ते च तत्त्वतो ब्रह्मचर्यव्यवस्थितस्य भवन्ति, तदपि च ब्रह्मगुप्तिपरिज्ञानत इति ता इहाभिधीयन्ते इत्यनेन सम्बन्धेनायातस्यास्याध्ययनस्य चतुरनुयोगद्वारचर्चा प्राग्वद्यावन्नामनिष्पन्ननिक्षेपे दशब्रह्मचर्यसमाधिस्थानमिति नाम, ततो दशादिपदानां पञ्चानां निक्षेपः कर्त्तव्यः, तत्र च नैककाद्यभावे दशसम्भव इत्येककनिक्षेपमाह निर्युक्तिकृत्—

णामंठवणादविए माउयपयसंगहेक्कए चेव । पज्जव भावे अ तहा सत्तेए इक्कगा हुंति ॥ ३७९ ॥

एतदर्थस्तु चतुरङ्गीयाध्ययन एव कथित इति न प्रतन्यते ॥ एतदनुसारतश्च द्व्यादिनिक्षेपः सुकर एवेति तमुपेक्ष्यैव दशनिक्षेपमाह—

दससु अ छक्को दव्वे नायव्वो दसपएसिओ खंधो । ओगाहणाठिईए नायव्वो पज्जवदुगे अ ॥ ३८० ॥

दशसु च निक्षेपव्येषु षट्को निक्षेप इति गम्यते, स च नामस्थापनाद्रव्यक्षेत्रकालभावभेदात्, तत्र नामस्था-

सेति कोविदात्मा, 'पण्णे अभिभूय सव्वदंसी उवसते'त्ति प्राग्वत्, 'अविहेठक' न कस्यचिद्विबाधको य. स भिक्षुरिति सूत्रार्थं ॥ तथा—

असिप्पजीवी अगिहे अमित्ते, जिइंदिओ सव्वओ विप्पमुक्के ।
अणुक्कसाई लहु अप्पभक्खी, चिचा गिहं एगचरे स भिक्खू ॥ १६ ॥ त्तिबेमि ॥

॥ सभिक्खूअज्झयण ॥ १५ ॥

शिल्पेन—चित्रपत्रच्छेदादिविज्ञानेन जीवितु शीलमस्येति शिल्पजीवी न तथाऽशिल्पजीवी 'अगृह' गृहविरहित तथा अविद्यमानानि मित्राणि—अभिष्वङ्गहेतवो वयस्या यस्यासावमित्र, जितानि—वशीकृतानि 'इन्द्रियाणि' श्रोत्रादीनि येन स तथा, 'सर्वत' बाह्यादभ्यन्तराच ग्रन्थादिति गम्यते, विविधै प्रकारै प्रकर्षेण मुक्तो विप्रमुक्त, तथा अणव—स्वल्पा सञ्ज्वलननामान इतियावत् कषाया—क्रोधादयो यस्येति सर्वधनादित्वादिनि प्रत्ययेऽणुकषायी, प्राकृतत्वात्सूत्रे ककारस्य द्वित्व, यद्वा उत्कषायी—प्रचलकषायी न तथाऽनुत्कषायी अल्पानि—स्तोकानि लघूनि—नि साराणि निष्पावादीनि भक्षयितु शीलमस्येति अल्पलघुभक्षी, सूत्रे तिङ्व्यत्यय प्राग्वत्, 'त्यक्त्वा' अपहाय गृह द्रव्यभावभेदभिन्नम्, एको—रागद्वेषविरहित तथाविधयोग्यताभावासावसहायो वा चरति—विहरत्येकचरो य स भिक्षु', अनेनैकाकिविहार उपलक्षित इति सूत्रार्थं ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववदेव, नया अपि पूर्ववदेव ॥

॥ इति श्री शान्त्याचार्यकृतायामुत्तराध्ययनटीकाया शिष्यहिताया पञ्चदशमध्ययन समाप्तमिति ॥ १५ ॥

प्पत्तीय दो कया उसभे। तिन्नि य सिप्पवणिए सावगधम्मंमि चत्तारि ॥ १ ॥" इत्यादिना निर्युक्तिकृताऽभिहिता, 'द्रव्ये वस्तिनिग्रहः' उपस्थनिरोधमात्रम् 'अज्ञानिनां' मिथ्यादृशां दशब्रह्मचर्यसमाधिस्थानावगमशून्याना 'मुणितव्यः' प्रतिज्ञातव्यो ब्रह्मेति प्रक्रमः, 'भावे उ'त्ति भावे पुनर्विचार्ये वस्तिनिग्रहो 'ज्ञातव्यः' अवगन्तव्यः, कस्य सम्बन्धीत्याह—'तस्य' इति ब्रह्मणो 'रक्षणार्थाय' रक्षणप्रयोजनाय 'स्थानानि' विविक्तशयनासनसेवनादीनि तानि 'वर्जयेत्' परिहरेद्यस्तस्येति प्रक्रमः, स च ज्ञान्येव, तानि कानीत्याह—यानि 'भणितानि' उक्तानि 'अध्ययने' इहैव प्रक्रान्त इति गाथाद्वयार्थः ॥ चरणनिक्षेपमाह—

चरणे छक्को दव्वे गइचरणं चेव भक्खणेचरणं। खित्ते काले जंमि उ भावे उ गुणाण आयरणं ॥३८३॥

चरणविषयः 'षट्कः' षट्परिमाण उक्तरूपो निक्षेपः, तत्र नामस्थापने गतार्थे, द्रव्ये गतिरूपं चरणं गतिचरणं ग्रामादिगमनात्मकमित्यर्थः, 'चः' समुच्चये भिन्नक्रमश्च 'एवे'ति पूरणे, 'भक्खणेचरणं'ति एकारोऽलाक्षणिकस्ततो भक्षणचरणं. चरणशब्दस्योभयार्थत्वात्, पठ्यते हि 'चर गतिभक्षणयोः' इति, तथा 'खेत्ते काले जंमि'त्ति यस्मिन् क्षेत्रे काले वा चरणं चर्यते व्यावर्ण्यते वा तत्क्षेत्रचरणं कालचरणं चेति प्रक्रमः, भावे तु 'गुणानां' मूलोत्तरगुणरूपाणाम् 'आचरणम्' आसेवनमिति गाथार्थः ॥ समाधिनिक्षेपमाह—

पने क्षुण्णे, 'दर्वे'त्ति द्रव्यविषयेषु दशसु विचार्यमाणेषु 'ज्ञातव्य' अवगन्तव्य दश प्रदेशा परिमाणमस्येति दशप्रदेशिक स्कन्धो दशोच्यते, दशपरमाणुद्रव्यनिष्पन्नत्वात्, तथा 'ओगाहणाट्ठिईए'त्ति स्कन्ध एवावगाहनाया चिन्त्यमान प्रक्रमाद्दशप्रदेशावगाढ क्षेत्रदशोच्यते, स्थितौ च दशसमयस्थितिक स एव कालदशोच्यते, उपलक्षण चैतत्सर्वं, यत आह चूर्णिकृत्—"द्रव्यदश दश सचित्तादीनि द्रव्याणि, क्षेत्रदश दशाकाशप्रदेशा, कालदश दश समया इति ज्ञातव्या," 'पज्जव'त्ति पर्याया दशसङ्ख्यत्वेन विवक्षिता भावदश [क्षये] (कथे) पर्याया इत्याह—'द्विके च' जीवाजीवरूपे 'च' पूरणे, तत्र जीवपर्याया विवक्षया कषायादय., अजीवपर्यायाश्च पुद्गलसम्बन्धिनो वर्णादय इति गाथार्थ ॥ इदानीं ब्रह्मनिक्षेपमाह—

बभमि(मी) उ चउक्क ठवणाबभमि बभणुप्पत्ती। दव्वमि वत्थिनिग्गहु अन्नाणीण मुणेयव्वो ॥ ३८१ ॥
भावे उ वत्थिनिग्गहु नायव्वो तस्स रक्खणट्ठाए। ठाणाणि ताणि वज्जिज्ज जाणि भणियाणि अज्झयणे ॥

'बभमि उ'त्ति ब्रह्मणि पुनर्विचार्ये 'चउक्क'ति चतुष्को नामस्थापनाद्रव्यभावभेदान्निक्षेप इति गम्यते, तत्र नामब्रह्म यस्य ब्रह्मेति नाम, स्थापनाब्रह्मणि ब्राह्मणोत्पत्तिर्वक्तव्या, यथाऽऽचारनाम्नि प्रथमाङ्गे "एका मणूसजाई रज्जु-

१ एका मनुष्यजाति रा योत्पत्तौ च द्वे कृते वृषभस्य। तिस्रश्च शिल्पवाणिज्ये श्रावकधर्मे चतस्र ॥ १ ॥

स्त्रीपण्डकादिदोषविकले यतिनिवासः, संयमस्थानं—शुभशुभतराध्यवसायविशेषा येषु संयमस्यावस्थितिः, प्रग्रहस्थानं यद्यस्यायुधस्य ग्रहणस्थानं, योधस्थानम्—आलीढप्रत्यालीढादि, अचलस्थानं यस्मिन्न मनागपि चलनसम्भवः, तच्च मुख्यतो मुक्तिरेव, गणनास्थानं यत्रैककादौ शीर्षप्रहेलिकावसाने गणनाऽवतिष्ठते, 'संघण'त्ति सन्धानस्थानं यत्र देशे त्रुटितमुक्तावल्यादेरेकत्वं विधीयते, 'भावस्थानम्' औदयिकादिभावानां यथास्वमवस्थानविषय इति गाथार्थः ॥ गतो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

सुअं मे आउसं! तेणं भगवया एवमक्खायं—इह खलु थेरेहिं भगवंतेहिं दसबंभचेरसमाहिठाणा पन्नत्ता, जे भिक्खू सुच्चा निसम्म संजमबहुले संवरबहुले समाहिबहुले गुत्ते गुत्तिंदिए गुत्तबंभयारी सया अप्पमत्ते विहरिज्जा ॥ १ ॥

श्रुतं मयाऽऽयुष्मंस्तेन भगवतैवम् 'आख्यातं' कथितं, कथमित्याह—सोपस्कारत्वात्सूत्रस्य यथेति गम्यते, ततो यथेह क्षेत्रे प्रवचने वा 'खलु' निश्चयेन स्थविरैः–गणधरैः 'भगवद्भिः' परमैश्वर्यादियुक्तैर्दशब्रह्मचर्यसमाधिस्थानानि 'प्रज्ञप्तानि' प्ररूपितानि, कोऽभिप्रायः ?–नैषामियं स्वमनीषिका, किन्तु भगवताऽप्येवमाख्यातं मया श्रुतं ततोऽत्र मा अनास्थां कृथाः, तान्येव विशिनष्टि—'ये' इति यानि ब्रह्मचर्यसमाधिस्थानानि भिक्षुः 'श्रुत्वा' आकर्ण्य शब्दतः 'निशम्य' अवधार्यार्थतः 'संजमबहुले'त्ति संयमम्–आश्रवविरमणादिकं बहु इति–बहुसङ्ख्यं यथास्यवमेवं

समाहीइ चउक्क द्व्व द्व्वेण जेण उ समाही । भावमि नाणदसणतवे चरित्ते अ नायव्व ॥ ३८४ ॥

समाधौ 'चउक्क'त्ति प्राग्वचतुष्को नामादिनिक्षेप , तत्र नामस्थापने प्रसिद्धे, 'द्रव्य'मिति द्रव्यसमाधि 'द्रव्येण' माधुर्यादिगुणान्वितेन 'येन' हेतुना 'तु' पूरणे 'समाधि' स्वास्थ्यमुपजायते तदेव समाधिहेतुत्वात्समाधिरिति । 'भावमि णाणदसणतवे चरित्ते अ'त्ति सूत्रत्वाद्भावे ज्ञानदर्शनतपांसि चरित्र च स्वस्वरूपाविरोधेनावस्थानात्समाधिर्ज्ञातव्य , यद्वा ज्ञान च दर्शन च तपश्चेति समाहार ततो ज्ञानदर्शनतपसि चरित्रे च, प्रक्रमाद्य समाधि'— अमीषामेव परस्परमविरोधेनावस्थान स भावसमाधिरिति ज्ञातव्यमिति गाथार्थः ॥ स्थाननिक्षेपमाह—

(१) (२) (३) (४) (५) (६) ( ) (८) (९) (१०) (११) (१२) (१३) (१४)

नामठवणादविए खित्तद्धा उड्ढउवरई वसही । सजमपग्गह जोहे अचलगणणसधणा भावे ॥ ३८५ ॥

सर्वत्र स्थानमिति योजनीय, नामस्थानमित्यादि, तत्र नामस्थान प्रतीत, स्थापनास्थानं तु यो यद्गुणोपेतो यस्मिन्नाचार्यादिपदे स्थाप्यते स एव तिष्ठत्यस्मिन् स्थान इति स्थापनास्थानमुच्यते, 'द्रव्यस्थानम्' आकाशम्, अत्र हि जीवादिद्रव्याणि तिष्ठन्तीति, क्षेत्रस्थानमप्याकाशमेव, यत क्षेत्रमाकाशं तच्चाकाश एव तिष्ठति, उक्त हि—'आकाश तु स्वप्रतिष्ठित'मिति, अद्धास्थानमर्द्धतृतीयद्वीपसमुद्ररूप समयक्षेत्र, तत्रैव समयावलिकाद्युपलक्षितस्याद्धाकालस्य स्थिते , 'ऊर्द्ध्वस्थान' यत्रोर्द्ध्व स्थीयते, तच्च कायोत्सर्ग , 'उपरतिस्थान' यत्र सर्वसावद्यविरतिरवाप्यते, 'वसतिस्थान' यत्र

कतराणीत्यादिप्रश्नसूत्रम् इमानीत्यादि निर्वचनसूत्रं च प्राग्वत्, तान्येवाह—'तं जहे'त्यादि, 'तद्यथे' त्युपन्यासे 'विविक्तानि' स्त्रीपशुपण्डकाकीर्णत्वविरहितानि, शय्यते येषु तानि शयनानि च—फलकसंस्तारकादीनि, आस्यते येषु तानि आसनानि च—पादपीठपुञ्छनादीनि शयनासनानि, उपलक्षणत्वात्स्थानानि च 'सेवेत' भजेत यः सः 'निर्ग्रन्थः' द्रव्यभावग्रन्थान्निष्क्रान्तो भवतीति शेषः । इत्थमन्वयेनाभिधायाव्युत्पन्नविनेयानुग्रहायामुमेवार्थं व्यतिरेकेणाह—'नो' नैव स्त्रियश्च—दिव्या मानुष्यो वा पशवश्च—अजैडकादयः पण्डकाश्च—नपुंसकानि स्त्रीपशुपण्डकास्तैः संसक्तानि—आकीर्णानि स्त्रीपशुपण्डकसंसक्तानि 'शयनासनानि' उक्तरूपाणि 'सेविता' उपभोक्ता भवति, 'तदि'त्यनन्तरोक्तं 'कथं' केनोपपत्तिप्रकारेण?, 'इति चेद्' एवं यदि मन्यसे, अत्रोच्यते—निर्ग्रन्थस्य खलु निश्चितं स्त्रीपशुपण्डकसंसक्तानि शयनासनानि 'सेवमानस्य' उपभुञ्जानस्य 'बंभयारिस्स'त्ति अपिशब्दस्य गम्यमानत्वाद् ब्रह्मचारिणोऽपि सतो ब्रह्मचर्ये 'शङ्का वा' किमेताः सेवे उत नेत्येवंरूपा, यदिवा इहान्येषामिति गम्यते, ततः शङ्का वाऽन्येषां—यथा किमसावेवंविधशयनासनसेवी ब्रह्मचार्युत नेति, 'काङ्क्षा' वा स्त्र्याद्यभिलापरूपा 'विचिकित्सा' वा धर्मं प्रति चित्तविप्लुतिः 'समुत्पद्यते' जायते, अथवा शङ्का स्त्र्यादिभिरत्यन्तापहृतचित्ततया विस्मृतसकलासोपदेशस्य "सत्यं वच्मि हितं वच्मि, सारं वच्मि पुनः पुनः । अस्मिन्नसारे संसारे, सारं सारङ्गलोचनाः ॥१॥" इत्यादिकुविकल्पान् विकल्पयतो मिथ्यात्वोदयतः कदाचिदेतत्परिहार एव न तीर्थकृद्भिरुक्तो भविष्यति, एतदासेवने वा यो दोष उक्तः स दोष एव न

लाति—गृह्णाति, कोऽभिप्राय ?—विशुद्धविशुद्धतर पुन पुन सयम करोतीति सयमवहुल, मयूरव्यसकादित्वात्समास, यदिवा वहुल—प्रभूत सयमोऽस्येति वहुलसयम, सूत्रे पूर्वापरनिपातस्यातन्त्रत्वात्, अत एव सवर—आश्रवद्वारनिरोध तद्बहुलो वहुलसवरो वा, तत एव समाधि–चित्तस्वास्थ्य तद्बहुलो वहुलसमाधिर्वा, 'गुप्त' मनोवाक्कायगुप्तिभि, गुप्तत्वादेव च गुप्तानि विपयप्रवृत्तितो रक्षितानि इन्द्रियाणि–श्रोत्रादीनि येन स तथा, तत एव गुप्तायगुप्तिसेवनात् 'ब्रह्मे'ति ब्रह्मचर्य चरितुम्–आसेवितु शीलमस्येति गुप्तब्रह्मचारी 'सदा' सर्वकालम् 'अप्रमत्तः' प्रमादविरहित 'विहरेत्' अप्रतिवद्धविहारितया चरेत् ॥ एतेन सयमवहुलत्वादि दशनह्मचर्यसमाधिस्थानफलमुक्तम्, एतदविनाभावित्वात्तस्येति सूत्रार्थ ॥

कयरे खलु थेरेहि भगवतेहि दसवभचेरसमाहिठाणा पन्नत्ता ?, इमे खलु ते जाव विहरिज्जा, तजहा—विवित्ताइ सयणासणाइ सेविज्जा से निग्गथे, नो इत्थीपसुपडगससत्ताइ सयणासणाइ सेवित्ता हवइ से निग्गथे, त कह इति चेदायरियाह—निग्गथस्स खलु इत्थिपसुपडगससत्ताइ सयणासणाइ सेवमाणस्स वभयारिस्स वभचेरे सका वा कखा वा वितिगिच्छा वा समुप्पज्जिज्जा, भेय वा लभिज्जा, उम्माय वा पाउणिज्जा, दीहकालिय वा रोगायक हविज्जा, केवलिपन्नत्ताओ धम्माओ वा भसिज्जा, तम्हा नो इत्थिपसुपडगससत्ताइ सयणासणाइ सेवित्ता हवइ से निग्गथे ॥ १ ॥

रचतुरा लाटी विदग्धप्रिया" इत्यादिका, अथवा जातिकुलरूपनेपथ्यभेदाच्चतुर्धा स्त्रीकथा, तत्र जातिर्ब्राह्मण्यादिः कुलम्—उग्रादि रूपं—महाराष्ट्रिकादि संस्थानं—नेपथ्यं—तत्तद्देशप्रसिद्धं, तां कथयिता भवति 'से निंग्गंथे'त्ति य एवंविधः स निर्ग्रन्थः । शेषं प्रश्नप्रतिवचनाभिधायि पूर्ववदिति सूत्रार्थः ॥ तृतीयमाह—

नो इत्थीहिं सद्धिं संनिसिज्जागए विहरित्ता हवइ से निग्गंथे, तं कहं इति चेदायरियाह—निग्गंथस्स खलु इत्थीहिं सद्धिं संनिसिज्जागयस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पजिज्जा भेयं वा लभिज्जा उम्मायं वा पाउणिज्जा दीहकालियं वा रोगायंकं हविज्जा केवलिपन्नत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे इत्थीहिं सद्धिं संनिसिज्जागए विहरइ ॥ ३ ॥

नो स्त्रीभिः 'सार्द्धं' सह सम्यग् निषीदन्ति—उपविशन्त्यस्यामिति संनिषद्या—पीठाद्यासनं तस्यां गतः—स्थितः संनिषद्यागतः सन् 'विहर्त्ता' अवस्थाता भवति, कोऽर्थः ?—स्त्रीभिः सहैकासने नोपविशेत्, उत्थितास्वपि हि तासु मुहूर्त्तं तत्र नोपवेष्टव्यमिति सम्प्रदायः, य एवंविधः स निर्ग्रन्थः, न त्वन्य इत्यभिप्रायः, शेषं प्रश्नप्रतिवचनाभिधायि पूर्ववदिति सूत्रार्थः ॥ चतुर्थमाह—

१ 'निग्गंथित्ति'यः स निग्रन्थो न त्वन्याभिप्रायस्तत्कथमित्यादिप्राग्वदिति सूत्रार्थः ।

भवतीत्येवरूप संशय उत्पद्यते, काङ्क्षा वा तत एव हेतो "प्रियादर्शनमेवास्तु, किमन्यैर्दर्शनान्तरै ?। प्राप्यते येन निर्वाण, सरागेणापि चेतसा ॥१॥" इत्याद्यभिधायकान्यान्यनीलपटादिदर्शनाग्रहरूपा, विचिकित्सा वा–धर्म प्रति-किमेतावत कष्टानुष्ठानस्य फलं भविष्यति न वा ? तद्वरमेतदासेवनमेवास्त्वित्येवरूपा, 'भेद' वा विनाश चारित्रस्येति गम्यते, 'लभेत' प्राप्नुयात्, 'उन्माद वा' कामग्रहात्मक प्राप्नुयात् स्त्रीविषयाभिलापातिरेकतस्तथाविधचित्तविप्लवस-भवात्, 'दीर्घकालिक वा' प्रभूतकालभावि रोगश्च—दाहज्वरादिरातङ्कश्च—आशुघाती शूलादि रोगातङ्क 'भवेत्' स्यात्, सभवति हि स्त्र्याद्यभिलापातिरेकतोऽरोचकत्व ततश्च ज्वरादीनि, केवलिप्रज्ञप्तात् 'धर्मात्' श्रुतचारित्ररूपात् समस्ताद् 'भ्रश्येत्' अध प्रतिपतेत्, कस्यचिदतिक्लिष्टकर्मोदयात्सर्वथा धर्मपरित्यागसम्भवात्, यत एव तस्मादित्या-दिनिगमनवाक्य प्रकटार्थमेवेति सूत्रार्थ ॥ उक्त प्रथम समाधिस्थान द्वितीयमाह—

नो इत्थीण कह कहित्ता हवइ से निग्गथे, त कहमिति चेदायरियाऽऽह—निग्गंथस्स खलु इत्थीण कह कहे-माणस्स बभयारिस्स बभचेरे सका वा कखा वा वितिगिच्छा वा समुप्पज्जिज्जा भेय वा लभिज्जा उम्माय वा पाउणिज्जा दीह्कालिय वा रोगायक हविज्जा केवलिपन्नत्ताओ वा धम्माओ भसिज्जा, तम्हा नो इत्थीण कह कहिज्जा ॥ २ ॥

नो स्त्रीणामेकाकिनीनामिति गम्यते, 'कथा' वाक्यप्रबन्धरूपा, यदिवा स्त्रीणा कथा,—"कर्णाटी सुरतोपचा-

बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा भेयं वा लभिज्जा उम्मायं वा पाउणिज्जा दीहकालियं वा रोगायंकं हविज्जा केवलिपन्नत्ताओ वा धम्माओ जाव भंसिज्जा, तम्हा खलु निग्गंथे नो इत्थीणं कुड्डंतरंसि वा जाव सुणेमाणे विहरिज्जा ॥ ५ ॥

नो स्त्रीणां कुड्यं—खटिकादिरचितं तेनान्तरं—व्यवधानं कुड्यान्तरं तस्मिन् वा, दूष्यं—वस्त्रं तदन्तरे वा, यवनिकान्तर इत्यर्थः, भित्तिः—पक्केष्टकादिरचिता तदन्तरे, वाशब्दः सर्वत्र विकल्पाभिधायी, स्थित्वेति शेषः, 'कूजितशब्दं वा' विविधविहगभापयाऽव्यक्तशब्दं सुरतसमयभाविनं 'रुदितशब्दं वा' रतिकलहादिकं मानिनीकृतं 'गीतशब्दं वा' पञ्चमादिहुङ्कृतिरूपं 'हसितशब्दं वा' कहकहादिकं 'स्तनितशब्दं वा' रतिसमयकृतं 'क्रन्दितशब्दं वा' प्रोषितभर्तृकादिकृताक्रन्दरूपं 'विलपितशब्दं वा' प्रलापरूपं श्रोता यो न भवति स निर्ग्रन्थः, शेपं स्पष्टमिति सूत्रार्थः ॥ पष्ठमाह—

नो निग्गंथे पुव्वरयं पुव्वकीलियं अणुसरित्ता हवइ, तं कहं इति चेदायरियाह—निग्गंथस्स खलु इत्थीणं पुव्वरयं पुव्वकीलियं अणुसरमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा भेयं वा लभिज्जा उम्मायं वा पाउणिज्जा दीहकालियं वा रोगायंकं हविज्जा केवलिपन्नत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे इत्थीणं पुव्वरयं पुव्वकीलियं अणुसरिज्जा ॥ ६ ॥

नो इत्थीण इंदियाइ मणोहराइ मणोरमाइ आलोइत्ता निज्झाइत्ता हवइ से निग्गंथे, त कह इति चेदा-वरियाऽऽह—निग्गथस्स खलु इत्थीण इंदियाइ मणोहराइ मणोरमाइ जाव निज्झाएमाणस्स बभचेरे सका वा कखा वा वितिगिच्छा वा समुप्पज्जिज्जा भेय वा लभिज्जा उम्माय वा पाउणिज्जा दीहकालिय वा रोगायक हविज्जा केवलिपन्नत्ताओ वा धम्माओ भसिज्जा, तम्हा खलु निग्गथे नो इत्थीण इंदियाइ निज्झाइ ॥ ४ ॥

नो स्त्रीणा 'इन्द्रियाणि' नयननासिकादीनि मन —चित्तं हरन्ति दृष्टमात्राण्यप्याक्षिपन्तीति मनोहराणि, तथा मनो रमयन्तीति दर्शनानन्तरमनुचिन्त्यमानान्याह्लादयन्तीति मनोरमाणि 'आलोकिता' समन्ताद्द्रष्टा 'निर्ध्याता' दर्शनानन्तरमतिशयेन चिन्तयिता, यथा–अहो ! सलवणत्व लोचनयो , ऋजुत्व नासावशस्येत्यादि, यद्वा 'आडी-पदर्थे' तत 'आलोकिता' ईषद्द्रष्टा 'निर्ध्याता' प्रबन्धेन निरीक्षिता भवति य स निर्ग्रन्थ , अन्यत्प्रतीतमेवेति सूत्रार्थ ॥ पञ्चममाह—

नो निग्गथे इत्थीण कुड्डुतरसि वा दूसतरसि वा भित्तिअतरसि वा कूइयसद्द वा रुइयसद्द वा गीयसद्द वा हसियसद्द वा थणियसद्द वा कंदियसद्द वा विलवियसद्द वा सुणित्ता हवइ से निग्गथे, त कह इति चेदा वरियाह—इत्थीण कुड्डतरसि वा दूसतरसि वा भित्तिअतरसि वा जाव विलवियसद्द वा सुणमाणस्स

लभिज्जा उम्मायं वा पाउणिज्जा दीहकालियं वा रोगायंकं हविज्जा केवलिपन्नत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे अइमायाए पाणभोयणं भुंजिज्जा ॥ ८ ॥

'नो' नैव 'अतिमात्रया' मात्रातिक्रमेण, तत्र मात्रा—परिमाणं, सा च पुरुषस्य द्वात्रिंशत्कवलाः स्त्रियाः पुनरष्टाविंशतिः, उक्तं हि—"[1]बत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ। पुरिसस्स महिलियाए अट्ठावीसं भवे कवला ॥ १ ॥" अतिक्रमस्तु तदाधिक्यसेवनं 'पानभोजनं' प्रतीतमेव 'आहारयिता' भोक्ता भवति यः स निर्ग्रन्थः, शेषं तथैवेति सूत्रार्थः ॥ नवममाह—

नो विभूसाणुवाई हवइ से निग्गंथे, तं कहं इति चेदायरियाह—विभूसावत्तिए विभूसियसरीरे इत्थिजणस्स अभिलस्सणिज्जे हवइ, तओ णं तस्स इत्थिजणेणं अभिलसिज्जमाणस्स बंभयारिस्स बंभचेरे संका वा कंखा वा वितिगिच्छा वा समुप्पज्जिज्जा भेयं वा लभिज्जा उम्मायं वा पाउणिज्जा दीहकालियं वा रोगायंकं हविज्जा केवलिपन्नत्ताओ वा धम्माओ भंसिज्जा, तम्हा खलु नो निग्गंथे विभूसाणुवाई सिया ॥ ९ ॥

'नो' नैव विभूषणं विभूषा—शरीरोपकरणादिषु स्नानधावनादिभिः संस्कारस्तदनुपाती, कोऽर्थः ?—तत्कर्त्ता भवति यः स निर्ग्रन्थः, तत्कथमिति चेदुच्यते—'विभूसावत्तिए'त्ति विभूषां वर्त्तयितुं—विधातुं शीलमस्येति विभूषा-

१ द्वात्रिंशत् किल कवला आहारः कुक्षिपूरको भणितः। पुरुषस्य महेलाया अष्टाविंशतिर्भवेयुः कवलाः ॥ १ ॥

नो निर्ग्रन्थ पूर्वस्मिन्–गृहावस्थालक्षणे काले रत–स्त्र्यादिभि सह विषयानुभवन पूर्वरत, 'पूर्वक्रीडित वा' स्त्र्यादिभिरेव पूर्वकालभावि दुरोदरादिरमणात्मक वाशब्दस्य गम्यमानत्वात्, 'अनुस्मर्त्ता' अनुचिन्तयिता भवति, शेष प्राग्वदिति सूत्रार्थ ॥ सप्तममाह—

नो पणीय आहार आहारित्ता हवइ से निग्गंथे, त कह इति चेदायरियाह—नि० पणीय पाणभोयण आहारेमाणस्स बंभयारिस्स बभचेरे सका वा कखा वा वितिगिच्छा वा समुप्पज्जिज्जा भेय वा लभिज्जा उम्माय वा पाउणिज्जा दीहकालिय वा रोगायक हविज्जा केवलिपन्नत्ताओ वा धम्माओ भसिज्जा, तम्हा खलु नो निग्गथे पणीय आहार आहारिज्जा ॥ ७ ॥

'नो' नैव 'प्रणीत' गलद्बिन्दु, उपलक्षणत्वादन्यमप्यत्यन्तधातूद्रेककारिणम् 'आहारम्' अशनादिकम् 'आहारयिता' भोक्ता भवति य स निर्ग्रन्थ , शेष व्याख्यातमेव, नवर 'प्रणीत पानभोजनम्' इति पानभोजनयोरेवोपादानम्, एतयोरेव मुख्यतया यतिभिराहार्यमाणत्वात्, अन्यथा खाद्यस्वाद्ये अप्येवविधे वर्जनीये एवेति सूत्रार्थ ॥ अष्टममाह—

नो अइमायाए पाणभोयण आहारित्ता हवइ से निग्गथे, त कह इति चेदायरियाह— अइमायाए पाणभोयण आहारेमाणस्स बभयारिस्स बभचेरे सका वा कखा वा वितिगिच्छा वा समुप्पज्जिज्जा भेय वा

धिस्थानं भवतीति निगमनम्॥ इह च प्रत्येकं स्त्र्यादिसंसक्तशयनादेः शङ्कादिदोषदर्शनं तदत्यन्तदुष्टतादर्शकं प्रत्येकमपायहेतुतां प्रति तुल्यबलत्वख्यापकं चेति सूत्रार्थः ॥

भवन्ति य इत्थ सिलोगा, तंजहा—

'भवन्ति' विद्यन्ते 'अत्रे'ति उक्त एवार्थे, किमुक्तं भवति ?—उक्तार्थाभिधायिनः 'श्लोकाः' पद्यरूपाः, 'तद्यथा' इत्युपप्रदर्शने ।

जं विवित्तमणाइन्नं, रहियं थीजणेण य । बंभचेरस्स रक्खट्ठा, आलयं तु निसेवए ॥ १ ॥ मणपल्हायजणणी, कामरागविवड्ढणी । बंभचेररओ भिक्खू, थीकहं तु विवज्जए ॥ २ ॥ समं च संथवं थीहिं, संकहं च अभिक्खणं । बंभचेररओ भिक्खू, निच्चसो परिवज्जए ॥ ३ ॥ अंगपच्चंगसंठाणं, चारुल्लवियपेहियं । बंभचेररओ थीणं, सोअगिज्झं विवज्जए ॥ ४ ॥ कुइयं रुइअं गीयं, हसियं थणिय कंदियं । बंभचेररओ थीणं, सोअगिज्झं विवज्जए ॥ ५ ॥ हासं खिड्डुं रइं दप्पं, सहसावत्तासियाणि य । बंभचेररओ थीणं, नाणुचिंते कयाइवि ॥६॥ पणीयं भत्तपाणं च, खिप्पं मयविवड्ढणं । बंभचेररओ भिक्खू, निच्चसो परिवज्जए ॥ ७ ॥ धम्मलद्धं मियं काले, जत्तत्थं पणिहाणवं । णाइमत्तं तु भुंजिज्जा, बंभचेररओ सया ॥ ८ ॥ विभूसं परिवज्जिज्जा, सरी-

वर्ती, ताच्छीलिको णिन्, स एव विभूषावर्त्तिक , स किमित्याह—विभूषितम्—अलङ्कृत स्नानादिना सस्कृतमितियावत् शरीर—देहो यस्य स विभूषितशरीर , तथा च 'उज्ज्वलवेष पुरुष दृष्ट्वा स्त्री कामयते' इति वचनाद्युवतिजनप्रार्थनीयो भवति, आह च सूत्रकार —'इत्थिजणस्स अहिलसणिज्जे हवइ'त्ति, तत को दोष इत्याह—'ततः' स्त्रीजनाभिलषणीयत्वत , णमिति प्राग्वत्, 'तस्य' निर्ग्रन्थस्य 'स्त्रीजनेन' युवतिजनेनाभिलष्यमाणस्य—प्रार्थ्यमानस्य ब्रह्मचारिणोऽपि ब्रह्मचर्ये शङ्का वा, यथा किमेतास्तावदित्थ प्रार्थयमाना उपभुञ्जे ?, आयतौ तु यद्भावि तद्भवतु, उतश्लिष्टा शाल्मलीश्लेष्मादयो नरक एतद्विपाका इति परिहरामीत्येवरूप सशय , शेषं प्राग्वदिति सूत्रार्थ ॥ दशममाह—

नो सद्दरूवरसगधफासाणुवाई हवइ से निग्गथे, त कह इति चेदायरियाह—निग्गथस्स खलु सद्दरूवरसगधफासाणुवाइयस्स बभयारिस्स बभचेरे सका वा कखा वा वितिगिच्छा वा समुप्पज्जिज्जा भेय वा लभिज्जा उम्मायं वा पाउणिज्जा दीहकालिय वा रोगायक हविज्जा केवलिपन्नत्ताओ धम्माओ जाव भसिज्जा, तम्हा खलु नो निग्गथे सद्दरूवरसगधफासाणुवाई हवइ से निग्गथे, दसमे बभचेरसमाहिठाणे हवइ ॥ १० ॥

'नो' नैव शब्दो—मन्मनभाषितादि रूप—कटाक्षनिरीक्षणादि चित्रादिगत वा रूपादिसम्बन्धि रसो—मधुरादिरभिवृहणीयो गन्ध —सुरभि स्पर्श —स्पर्शनानुकूल कोमलमृणालादेरेतानभिष्वङ्गहेतून् अनुपतति—अनुयातीत्येवशील शब्दरूपरसगन्धस्पर्शानुपाती भवति य स निर्ग्रन्थ । तत्कथमिति चेदित्यादि सुगम, दशम ब्रह्मचर्यसमा-

रादिसन्निवेशात्मकम्, अमीषां समाहारनिर्देशः, अङ्गप्रत्यङ्गयोर्वा संस्थानम्–आकारविशेषोऽङ्गप्रत्यङ्गसंस्थानं चारु–शोभनम् उल्लपितं च–मन्मनभाषितादि तत्सहगतमुखादिविकारोपलक्षणमेतत् प्रेक्षितं च–अर्द्धकटाक्षनिरीक्षितादि उल्लपितप्रेक्षितं ब्रह्मचर्यरतः स्त्रीणां सम्बन्धि चक्षुषा गृह्यत इति चक्षुर्ग्राह्यं सद्विवर्जयेत्, किमुक्तं भवति ?–चक्षुषि हि सति रूपग्रहणमवश्यंभावि, परं तद्दर्शनेऽपि तत्परिहार एव कर्त्तव्यो न तु रागवशगेन पुनः पुनस्तदेव वीक्षणीयमिति, उक्तं हि–"असका रूवमद्दट्ठुं, चक्खुगोयरमागयं । रागद्दोसे उ जे तत्थ, ते बुहो परिवज्जए ॥१॥"॥४॥कुड्यंसूत्रं प्रायो व्याख्यातमेव, नवरं कुड्यान्तरादिष्विति शेषः ॥ ५ ॥ हाससूत्रमपि तथैव, नवरं 'रतिं' दयिताङ्गसङ्गजनितां प्रीतिं 'दर्पं' मनस्विनीमानदलनोत्थं गर्वं 'सहसाऽवत्रासितानि च' पराङ्मुखदयितादेः सपदि त्रासोत्पादकान्यक्षिस्थगनमर्मघट्टनादीनि, पठ्यते च–'हस्सं दप्पं रइं किड्डं सह भुत्तासियाणि य' अत्र च 'सहे'ति स्त्रीभिः सार्द्धं भुक्तानि च–भोजनानि आसितानि च–स्थितानि भुक्तासितानि, शेषं स्पष्टं, नवरं सर्वत्र पूर्वकृतत्वं प्रक्रमादपेक्षणीयम् ॥ ६ ॥ पणीयंसूत्रं निगदसिद्धमेव, नवरं मदः–कामोद्रेक इह गृह्यते, तस्य विवर्द्धनम्–अतिबृंहकतया विशेषतो वृद्धिहेतुं परिवर्जयेत्॥७॥धर्मादनपेतं धर्म्यमेषणीयमित्यर्थः 'लब्धं' प्राप्तं गृहस्थेभ्य इति गम्यते, न तु स्वयमेवोपकृतं,पठ्यते च,–'धम्मलद्धं'ति धर्मेण हेतुनोपलक्षणत्वाद्धर्मलाभेन वा न तु कुण्डलादिकरणेन लब्धं धर्मलब्धं,

---

१ अशक्यं रूपमद्रष्टुं चक्षुर्गोचरमागतम् । रागद्वेषौ तु यौ तत्र तौ बुधः परिवर्जयेत् ॥ १ ॥

रपरिमंडण। बम्भचेररओ भिक्खू, सिंगारत्थं न धारए ॥ ९ ॥ सद्दे रूवे य गंधे य, रसे फासे तहेव य। पंचविहे कामगुणे, निच्चसो परिवज्जए ॥ १० ॥

जमित्यादिसूत्राणि दश। यं 'विविक्तं' रहसभूतस्तत्रैव चास्तव्यकथाद्यभावाद् 'अनाकीर्णं' असङ्कुलस्तत्प्रयोजनागतकथाधनाकुलत्वात्, 'रहितं' परित्यक्तोऽकालचारिणा वन्दनश्रवणादिनिमित्तागतेन स्त्रीजनेन, चशब्दात्पण्डकैः पिङ्गादिपुरुषैश्च, प्रक्रमापेक्षया चैव व्याख्या, अन्यत्रापि चैवं प्रक्रमाद्यपेक्षत्वं भावनीयम्, उक्तं हि—"अर्थात् प्रकरणाल्लिङ्गादौचित्याद्देशकालतः। शब्दार्थाः प्रविभज्यन्ते, न शब्दादेव केवलात् ॥ १ ॥" 'ब्रह्मचर्यस्य' उक्तरूपस्य 'रक्षार्थं' पालननिमित्तम् 'आलयं' आश्रयं, सर्वत्र लिङ्गव्यत्ययः प्राग्वत्, यत्तदोर्नित्यसम्बन्धात्तं 'तु' पूरणे 'निषेवते' भजते॥१॥मनः–चित्तं तस्य प्रल्हादः अहो! अभिरूपा एता इत्यादिविकल्पज आनन्दस्तं जनयतीति मनःप्रह्लादजननी ताम्, अत एव कामरागो–विषयाभिष्वङ्गस्तस्य विवर्द्धनी–विशेषेण वृद्धिहेतुः कामरागविवर्द्धनी तां, शेषं स्पष्टं, नवरं, 'स्त्रीकथा' "तद्वक्त्रं यदि मुद्रिता शशिकथा" इत्यादिरूपा ॥२॥ 'समं च' सह 'संस्तवं' परिचयं स्त्रीभिर्निषद्या प्रक्रमादेकासनभोगेनेति गम्यते, 'संकथां च' ताभिरेव समं सन्ततभाषणात्मिकाम् 'अभीक्ष्णं' पुनः पुनः 'णिच्चसो'त्ति नित्यमन्यत्स्पष्टम्॥३॥अङ्गानि—शिरःप्रभृतीनि प्रत्यङ्गानि–कुचकक्षादीनि संस्थानं–कटीनिविष्टरू-

---

* घणादीनि

गत्त भूसणमिट्ठं च, कामभोगा य दुज्जया। नरस्सऽत्तगवेसिस्सा, विसं तालउडं जहा ॥ १३ ॥

नवरं 'संस्तवः' परिचयः, स चेहाप्येकासनभोगेनेति प्रक्रमः, कूजितादीनि हसितपर्यन्तानि कुड्यान्तराद्यवस्थितिनिषेधोपलक्षणानि, भुक्तासितानि च स्मृतानीति शेषः, तत्र भुक्तानि-भोगरूपाणि आसितानि-स्त्र्यादिभिरेव सहावस्थितानि, हासाद्युपलक्षणं चैतत्, गात्रभूषणमिष्टं चेति, चशब्दोऽपिशब्दार्थः, तत इष्टमप्यास्तां विहितं, तथा काम्यन्त इति कामाः भुज्यन्त इति भोगाः विशेषणसमासस्ते चेष्टाः शब्दादयः, नरस्योपलक्षणत्वात्स्त्रियादेश्च आत्मगवेषिणः 'विषं' गरलः 'तालपुटं' सद्योघाति यत्रौष्ठपुटान्तर्वर्त्तिनि तालमात्रकालविलम्बतो मृत्युरुपजायते, 'यथे'त्यौपम्ये, ततोऽयमर्थः-यथैतद्विपाकदारुणं तथा स्त्रीजनाकीर्णालयाद्यपि, शङ्कादिकरणतः संयमात्मकभावजीवितस्येतरस्य च नाशहेतुत्वादिति सूत्रत्रयार्थः ॥ सम्प्रति निगमयितुमाह—

दुज्जए कामभोगे य, निच्चसो परिवज्जए। संकाठाणाणि सव्वाणि, वज्जिज्जा पणिहाणवं ॥ १४ ॥

धम्मारामे चरे भिक्खू, धिईमं धम्मसारही। धम्मारामरए दंते, बंभचेरसमाहिए ॥ १५ ॥

दुःखेन जीयन्त इति दुर्जयास्तान् 'कामभोगान्' उक्तरूपान् 'णिच्चसो'त्ति नित्यं 'परिवर्जयेत्' सर्वप्रकारं त्यजेत् 'शङ्कास्थानानि च' अनन्तरोक्तानि, पूर्वत्र चस्य भिन्नक्रमत्वात् 'सर्वाणि' दशापि वर्जयेद्, अन्यथा आज्ञाऽनवस्थामिथ्यात्वविराधनादोपसम्भवः 'प्रणिधानवान्' एकाग्रमनाः। एतद्वर्जकश्च किं कुर्यादित्याह-धर्मे आराम इव पाप-

पठ्यते च–'धर्म्मलद्धु'ति धर्म्म –उत्तम क्षमादिरूप , यथाऽऽह वाचक –'उत्तम क्षमामार्दवार्जवसत्यशौचसयमतपस्त्यागाकिञ्चन्यब्रह्मचर्याणि धर्म "(तत्त्वार्थे अ०९ सू०६) इति, त 'लब्धु' प्राप्तु, कथ भमाय निरतिचार स्यात् इति, 'मितम्' 'अद्धमसणस्स' इत्याद्यागमोक्तमानान्वितमाहारमिति गम्यते, 'काले' प्रस्तावे 'यात्रार्थं' सयमनिर्वाहणार्थं न तु रूपाद्यर्थं 'प्रणिधानवान्' चित्तस्वास्थ्योपेतो न तु रागद्वेषवशगो भुञ्जीत 'न' इति निषेधे मात्रामतिक्रान्त अतिमात्र –अतिरिक्त इत्यर्थस्त, यद्वा 'ईषदर्थे क्रियायोगे, मर्यादाया परिच्छद' इत्यादिना मात्राशब्दस्य मर्यादार्थस्यापि दर्शनाद् 'अतिमात्रम्' अतिक्रान्तमर्याद, तुशब्दस्यैवकारार्थत्वाद्व्यवहितसम्बन्धत्वाच नैव 'भुञ्जीत' अभ्यवहरेद् ब्रह्मचर्ये रत –आसक्तो ब्रह्मचर्यरत 'सदा' सर्वकाल, कदाचित्कारणतोऽतिमात्रस्याप्याहारस्यादुष्टत्वात् ॥ ८ ॥ 'विभूषाम्' उपकरणगता शुक्लपट्टाद्यात्मिका 'परिवर्जयेत्' परिहरेत् 'शरीरपरिमण्डन' केशश्मश्रुसमारचनादि ब्रह्मचर्यरतो भिक्षु 'शृङ्गारार्थं' विलासार्थं 'न धारयेत्' न स्थापयेत् न कुर्यादितियावत् ॥९॥ 'सद्दे' सूत्र स्पष्टमेव, नवर काम –इच्छामदनरूपस्तस्य द्विविधस्यापि गुणा –साधनभूता उपकारका इतियावत्, उक्त हि–'गुण साधनमुपकारक' कामगुणास्तानेवविधान् शब्दादीनिति सूत्रदशकार्थ ॥ १० ॥ सम्प्रति यत्प्राक् प्रत्येकमुक्त शङ्का वा स्यादित्यादि तद्दृष्टान्तत स्पष्टयितुमाह–

आलओ थीजणाइन्नो, थीकहा य मणोरमा । सथवो चेव नारीण, तासिं इंदियदरिसण ॥ ११ ॥

कुइय रुइय गीय, हसिय भुत्तासियाणि य । पणीय भत्तपाण च, अइमाय पाणभोयणं ॥ १२ ॥

॥ बंभचेरसमाहिठाणअज्झयणं समत्तं १६ ॥

'एषः' इत्यनन्तरोक्तः 'धर्मः' ब्रह्मचर्यलक्षणः, ध्रुवः परप्रवादिभिरप्रकम्प्यतया प्रमाणप्रतिष्ठित इतियावत् 'नित्यः' अप्रच्युतानुत्पन्नस्थिरैकस्वभावो द्रव्यार्थितया 'शाश्वतः' शश्वदन्यान्यरूपतया उत्पन्न(:)पर्यायार्थितया, यद्वा 'नित्यः' त्रिकालमपि सम्भवात् 'शाश्वतः' अनवरतभवनात्, एकार्थिकानि वा नानादेशजविनेयानुग्रहार्थमुक्तानि, जिनैः—तीर्थकृद्भिर्देशितः—प्रतिपादितो जिनदेशितः, अस्यैव त्रिकालगोचरफलमाह—'सिद्धाः' पुरा अनन्तासूत्सर्पिण्यवसर्पिणीषु सिद्ध्यन्ति 'चः' समुच्चये महाविदेहे इहापि वा तत्कालापेक्षया 'अनेन' इति ब्रह्मचर्यलक्षणेन धर्मेण सेत्स्यन्ति तथा 'परे' अन्येऽनन्तायामनागताद्धायामिति सूत्रार्थः ॥ 'इति' परिसमाप्तौ ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः, सम्प्रति नयास्ते च पूर्ववत् ॥

॥ श्रीशान्त्याचार्यकृतायामुत्तराध्ययनटीकायां शिष्यहितायां षोडशमध्ययनं समाप्तमिति ॥

सन्तापोपतप्तानां जन्तूनां निर्वृत्तिहेतुतयाऽभिलषितफलप्रदानतश्च धर्मारामस्तस्मिन् 'चरेत्' गच्छेत् प्रवर्त्तेतेतियावत्, यद्वा धर्मे आ–समन्ताद्रमत इति धर्मारामं 'सचरेत्' संयमाध्वनि यायाद् भिक्षुः प्राग्वत् 'धृतिमान्' धृति – चित्तस्वास्थ्यं तद्वान्, स चैव धर्मसारथिः–"ठिओ उ ठावए परं" इति वचनादन्येषामपि धर्मे प्रवर्त्तयिता, ततोऽन्यानपि धर्मे व्यवस्थितानुपलभ्य विशेषतो धर्मारामे रत –आसक्तिमान् धर्मारामरतः, तथा च 'दान्त' उपशान्तो ब्रह्मचर्ये समाहित –समाधानवान् ब्रह्मचर्यसमाहित इति सूत्रद्वयार्थः ॥ ब्रह्मचर्यविशुद्ध्यर्थोऽयं सर्वोऽप्युपक्रम इति तन्माहात्म्यमाह—

देवदाणवगंधव्वा, जक्खरक्खसकिन्नरा । बंभयारिं नमंसंति, दुक्करं जे करंति तं ॥ १६ ॥

देवा –ज्योतिष्कवैमानिका दानवा –भुवनपतय गन्धर्वयक्षराक्षसकिन्नरा –व्यन्तरविशेषाः समासः सुकर एव, उपलक्षणं चैतद्भूतपिशाचमहोरगकिंपुरुषाणाम्, एते सर्वेऽपि 'ब्रह्मचारिणं' ब्रह्मचर्यवन्तं यतिमिति शेषः, 'नमस्यन्ति' नमस्कुर्वन्ति 'दुष्करं' कातरजनदुरनुचरं 'जे' इति यः 'करोति' अनुतिष्ठति 'तदि'ति प्रक्रमाद्ब्रह्मचर्यमिति सूत्रार्थः ॥ सम्प्रति सकलाध्ययनार्थोपसंहारमाह—

एस धम्मे धुवे नियए, सासए जिणदेसिए ।
सिद्धा सिज्झंति चाणेण, सिज्झिस्संति तहापरे ॥ १७ ॥ त्ति बेमि ॥

चेव'त्ति, इह च पापमिति योज्यते, प्राकृतत्वाचोभयत्र विन्दुलोपः, तत्र सचित्तद्रव्यपापं—यद्विपदचतुष्पदापदेषु मनुष्यपशुवृक्षादिष्वसुन्दरम्, अचित्तद्रव्यपापं—तदेव जीवविप्रयुक्तं चतुरशीतिपापप्रकृतयो वा वक्ष्यमाणाः, मिश्रद्रव्यपापं—तथाविधद्विपदाद्येवाशुभवस्त्रादियुक्तं तत्शरीराणि वा जीववियुक्तैकदेशयुक्तानि, सन्ति हि जीवशरीरेष्वपि जीववियुक्ता नखकेशादयस्तदेकदेशाः, उक्तं हि—"तस्सेव देसे चिए तस्सेव देसे अणुवचिए"[1]त्ति, जीवप्रदेशापेक्षमेव हि तत्र चितत्वमनुपचितत्वं वा विवक्षितं, पापप्रकृतियुक्तो वा जन्तुरेव मिश्रद्रव्यपापमुच्यते, 'चेवे'ति प्राग्वत्, क्षेत्रे विचार्ये 'पापं' नरकादिपापप्रकृत्युदयविषयभूतं यत्र तदुदयोऽस्ति, 'काल' इति कालपापं—दुष्पमादिको यत्र कालानुभावतः प्रायः पापोदय एव जन्तूनां जायते, आदिशब्दादन्यत्र वा काले यत्र कस्यचिज्जन्तोस्तदुदयः, भावे विचारयितुमुपक्रान्ते पापम् 'इदम्' अनन्तरमेव वक्ष्यमाणं 'हिंस'त्ति हिंसा प्रमत्तयोगात्प्राणव्यपरोपणं 'मृषा' असदभिधानं 'चौर्यं च' स्तैन्यम् 'अब्रह्म' मैथुनं ततः 'परिग्रहः' मूर्च्छात्मकः 'अपिः' समुच्चये 'चः' पूरणे 'गुणाः' सम्यग्दर्शनादयस्तद्विपक्षभूताः अगुणाः—मिथ्यात्वादयो दोषाः, नञो विपक्षेऽपि दर्शनादमित्रादिवत्, 'भणिताः' उक्ताः, 'तुः' समुच्चये व्यवहितक्रमश्च, अगुणाश्च ये 'सूत्रे' आगमे अन्यत्र इहैव वा प्रस्तुताध्ययने। 'श्रमणे' श्रमणविषयः 'चतुष्कनिक्षेपकः' नामादिः 'तुः' पूरणे नामस्थापने पूर्ववत्, द्रव्ये निह्नवादय एव निह्नवादिकाः



१ तस्यैव देशश्चितः तस्यैव देशोऽनुपचितः

# अथ सप्तदश पापश्रमणीयमध्ययनम् ।

व्याख्यात षोडशमध्ययनम्, अधुना सप्तदशमारभ्यते, अस्य चायमभिसम्बन्ध –इहानन्तराध्ययने ब्रह्मचर्यगुप्तय उक्ता, ताश्च पापस्थानवर्जनादेवासेवितु शक्यन्ते इति पापश्रमणस्वरूपाभिधानतस्तदेवात्र काक्वोच्यत इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य च चतुरनुयोगद्वारप्ररूपणा प्राग्वत्तावद्यावन्नामनिष्पन्ननिक्षेपेऽस्य पापश्रमणीयमिति नाम, अत पापस्य श्रमणस्य च निक्षेपमाह निर्युक्तिकृत्

पावे छक्क दव्वे सचित्ताचित्तमीसग चेव । खित्तमि निरयमाई कालो अइदुस्समाईओ ॥ ३८७ ॥
भावे पाव इणमो हिंस मुसा चोरिअ च अब्बभ। तत्तो परिग्गहो च्चिअ अगुणा भणिआ य जे सुत्ते३८८
समणे चउक्कनिक्खेवओ उ दव्वमि निह्नगाईआ । नाणी सजमसहिओ नायव्वो भावओ समणो३८९

'पापे' पापविषय 'छक्क'ति षट्क षट्परिमाणो नामस्थापनाद्रव्यक्षेत्रकालभावभेदान्निक्षेप इति गम्यते, तत्र च नामस्थापने सुज्ञाने, द्रव्ये विचार्ये आगमतो ज्ञाताऽनुपयुक्त, नोआगमतस्तु व्यतिरिक्तमाह—'सचित्ताचित्तमीसग

जे केइ उ पव्वइए नियंठे, धम्मं सुणित्ता विणओववन्ने ।
सुदुल्लहं लहिउं बोहिलाभं, विहरिज्ज पच्छा य जहासुहं तु ॥ १ ॥
सिज्जा दढा पाउरणं मि अत्थि, उप्पज्जई भुत्तु तहेव पाउं ।
जाणामि जं वट्टइ आउसुत्ति !, किं नाम काहामि ? सुएणं भंते ! ॥ २ ॥

'यः कश्चित्' इत्यविवक्षितविशेषः 'तुः' पूरणे, पठन्ति च—'जे के इम'त्ति, तत्र च 'इमे'त्ति अयं 'प्रव्रजितः' निष्क्रान्तः निर्ग्रन्थः प्राग्वत्, कथं पुनरयं प्रव्रजित इत्याह—'धर्मं' श्रुतचारित्ररूपं 'श्रुत्वा' निशम्य विनयेन—ज्ञानदर्शनचारित्रोपचारात्मकेनोपपन्नो—युक्तो विनयोपपन्नः सन् 'सुदुर्लभम्' अतिशयदुष्प्रापं 'लभिउं'ति लब्ध्वा 'बोधिलाभं' जिनप्रणीतधर्मप्राप्तिरूपम्, अनेन भावप्रतिपत्त्याऽसौ प्रव्रजित इत्युक्तं भवति, स किमित्याह—'विहरेत्' चरेत्, 'पश्चात्' प्रव्रजनोत्तरकालं 'चः' पुनरर्थो विशेषद्योतकस्ततश्च प्रथमं सिंहवृत्त्या प्रव्रज्य पश्चात्पुनः 'यथासुखं' यथा यथा विकथादिकरणलक्षणेन प्रकारेण सुखमात्मनोऽवभासते तुशब्दस्यैवकारार्थत्वाद्यथासुखमेव शृगालवृत्त्यैव विहरेदित्यर्थः, उक्तं हि—"सीहत्ताए णिक्खंतो सीयालत्ताए विहरति"त्ति, स च गुरुणाऽन्येन वा हितैषिणाऽध्ययनं प्रति प्रेरितो यद्वक्ति तदाह—'शय्या' वसतिः 'दृढा' वातातपजलाद्युपद्रवैरनभिभाव्या, तथा 'प्रावरणं' वर्षाकल्पादि

१ सिंहतया निष्क्रान्तः शृगालतया विहरति

उक्तरूपा 'ज्ञानी' प्रशसाया मत्वर्थीयोत्पत्ते प्रशस्तज्ञानवान् समिति–सम्यक् सदनुष्ठानप्रवृत्त्या यमन—पापस्थानेभ्य उपरमण सयमश्चारित्रमितियावत्तेन सहित'–युक्त सयमसहितो ज्ञातव्यो भावत श्रमण इति गाथात्रयार्थ ॥ सम्प्रति प्रस्तुते योजयन्नाह—

जे भावा अकरणिज्जा इहमज्झयणमि वन्निअ जिणेहि । ते भावे सेवतो नायव्वो पावसमणोत्ति ३९०

ये 'भावा' ससक्तापठनशीलतादयोऽर्था 'अकरणीया' कर्त्तुमनुचिता 'इह' प्रस्तुतेऽध्ययने 'वन्निय'त्ति वर्णिता प्ररूपिता 'जिनै' तीर्थकृद्भिस्तान् भावान् 'सेवमान' अनुतिष्ठन् 'ज्ञातव्य' अवबोद्धव्य पापेन–उक्तरूपेणोपलक्षित श्रमण पापश्रमण, इतिशब्द पापश्रमणशब्दस्य स्वरूपपरामर्शक इति गाथार्थ ॥ एतद्विपरीतास्तु श्रमणा, तेषा फलमाह—

एयाइ पावाइ जे खलु वज्जति सुव्वया रिसओ । ते पावकम्ममुक्का सिद्धिमविग्घेण वच्चति ॥ ३९१ ॥

'एतानि' एतदध्ययनोक्तानि 'पापानि' पापहेतुभूतानि शयालुतादीनि 'ये' इत्यनिर्दिष्टरूपा 'खलु' वाक्यालङ्कारे 'वर्जयन्ति' परिहरन्ति सुव्रता ऋषय पूर्ववत्, ते पाप च तत्कर्म च पापकर्म तेन उपलक्षणत्वात्पुण्यकर्मणा च मुक्ता –त्यक्ता पापकर्ममुक्ता 'सिद्धि' सिद्धिगतिम् 'अविघ्नेन' अन्तरायाभावेन 'वच्चति'त्ति 'व्रजन्ति' गच्छन्तीति गाथार्थ ॥ गतो नामनिष्पन्ननिक्षेप, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

'तानेव' आचार्यादीन् 'खिंसति' निन्दति 'वालः' विवेकविकलो गम्यमानत्वाद्यः स पापश्रमण इत्युच्यत इति सूत्रार्थः ॥

इत्थं ज्ञानाचारनिरपेक्षं पापश्रमणमभिधाय दर्शनाचारनिरपेक्षं तमेवाह—

आयरियउवज्झायाणं, सम्मं नो पडितप्पई। अप्पडिपूअए थद्धे, पावसमणित्ति वुच्चई ॥ ५ ॥

आचार्योपाध्यायानां 'सम्यग्' अवैपरीत्येन 'न परितप्यते' न तत्तासिं विधत्ते, दर्शनाचारान्तर्गतवात्सल्यविरहितो न तत्कार्येष्वभियोगं विधत्त इति भावः, 'अप्रतिपूजकः' प्रस्तावादर्हदादिषु यथोचितप्रतिपत्तिपराङ्मुखः 'स्तब्धः' गर्वाध्मातः केनचित्प्रेर्यमाणोऽपि न तद्वचनतः प्रवर्त्तते यः स पापश्रमण इत्युच्यत इति सूत्रार्थः ॥ सम्प्रति चारित्राचारविकलं तमेवाह—

संमद्दमाणे पाणाणि, बीयाणि हरियाणि य। असंजए संजय मन्नमाणे, पावसमणित्ति वुच्चई ॥ ६ ॥ संथारं फलगं पीढं, निसिज्जं पायकंबलं। अप्पमज्जियमारुहई, पावसमणित्ति वुच्चई ॥ ७ ॥ दवदवस्स चरई, पमत्ते अ अभिक्खणं। उल्लंघणे अ चंडे अ, पावसमणित्ति वुच्चई ॥८॥ पडिलेहेइ पमत्ते, अवउज्झइ पायकंबलं। पडिलेहाअणाउत्ते, पावसमणित्ति वुच्चई ॥ ९ ॥ पडिलेहेइ पमत्ते, से किंचि हु निसामिआ। गुरुंपरिभावए निच्चं, पावसमणित्ति वुच्चई ॥ १० ॥ बहुमाई पमुहरी, थद्धे लुद्धे अणिग्गहे। असंविभागी अचियत्ते, पावसमणित्ति वुच्चई ॥११॥ विवायं च उदीरेइ, अधम्मे अत्तपण्णहा। वुग्गहे कलहे रत्ते, पावसमणित्ति वुच्चई

...पावसमणित्ति वुच्चई॥१२॥

...॥ १४ ॥

'मे' ममास्ति, किञ्च—'उत्पद्यते' जायते 'भोक्तुं' भोजनाय तथैव 'पातुं' पानाय यथाक्रममन्नं पानं चेति शेषः, तथा 'जानामि' अवगच्छामि 'यद्वर्त्तते' यदिदानीमस्ति 'आयुष्मन्नि'ति प्रेरयितुरामन्त्रणमिति, एतस्माद्धेतोः किं नाम ?, न किञ्चिदित्यर्थः, 'काहामि'त्ति करिष्यामि 'श्रुतेन' आगमेनाधीतेनेत्यध्याहारः, 'भंते'त्ति पूज्यामन्त्रणम्, इह च प्रक्रमात्क्षेपे, अयं हि किलास्याशयो यथा ये भवन्तो भदन्ता अधीयन्ते तेऽपि नातीन्द्रियं वस्तु किञ्चनावबुध्यन्ते, किन्तु ?, साम्प्रतमात्रेक्षिण एव, तच्चैतावदस्माकमप्यस्ति, तत्किं हृदयगलतालुशोषविधायिनाऽधीतेनेति ?, एवमध्यवसितो यः स पापश्रमण इत्युच्यत इतीहापि सिंहावलोकितन्यायेन सबध्यत इति सूत्रद्वयार्थः ॥ किंच—

जे केइ उ पव्वइए, निद्दासीले पगामसो। भुच्चा पिच्चा सुहं सुअई, पावसमणित्ति वुच्चई ॥ ३ ॥

यः कश्चित्प्रव्रजितः 'निद्राशीलः' निद्रालुः 'प्रकामशः' बहुशो 'भुक्त्वा' दध्योदनादि 'पीत्वा' तक्रादि 'सुखं' यथा भवत्येवं सकलक्रियानुष्ठाननिरपेक्ष एव 'स्वपिति' शेते, पठ्यते च—'वसइ'त्ति 'वसति' आस्ते ग्रामादिषु, स इत्थम्भूतः किमित्याह—पापश्रमण इति 'उच्यते' प्रतिपाद्यत इति सूत्रार्थः ॥ इत्थं न केवलमनधीयान एव पापश्रमण उच्यते, किन्तु—

आयरियउवज्झाएहिं, सुअं विणयं च गाहिए। ते चेव खिंसई बाले, पावसमणित्ति वुच्चई ॥ ४ ॥

आचार्योपाध्यायैः 'श्रुतम्' आगममर्थतः शब्दतश्च 'विनयं च' उक्तरूपं 'ग्राहितः' शिक्षितो यैरिति गम्यते

कम्बलं पात्रकम्बलं वा प्रतीतमेव, समस्तोपध्युपलक्षणं चैतत्, स एवं 'प्रतिलेखनाऽनायुक्तः' प्रत्युपेक्षानुपयुक्तः, शेषं तथैव ॥ तथा प्रतिलेखयति प्रमत्तः सन् 'किंचि हु'त्ति 'हुः' अपिशब्दार्थः, ततः किञ्चिदपि विकथादीति गम्यते, 'णिसामिअ'त्ति 'निशम्य' आकर्ण्य तत्राक्षिप्तचित्ततयेति भावः, 'गुरुपरिभासय'त्ति गुरून् परिभाषते—विवदते गुरुपरिभाषकः, पाठान्तरतो गुरुपरिभावकः, 'निलं' सदा, किमुक्तं भवति ?—असम्यक्प्रत्युपेक्षमाणोऽन्यद्वा वितथमाचरन् गुरुभिश्चोदितस्तानेव विवदतेऽभिभवति वाऽसभ्यवचनैः, यथा—स्वयमेव प्रत्युपेक्षध्वं, युष्माभिरेव वयमित्थं शिक्षितास्ततो युष्माकमेवैष दोष इत्यादि, शेषं तथैव, गुरुपरिभाषकत्वं प्रमत्तत्वस्य च निशमनहेतुत्वं पूर्वस्माद्विशेष इति न पौनरुक्त्यम् ॥ किञ्च—'बहुमायी' प्रभूतवञ्चनाप्रयोगवान् प्रकर्षेण मुखरः प्रमुखरः स्तब्धो लुब्ध इति च प्राग्वत्, अविद्यमानो निग्रहः—इन्द्रियनोइन्द्रियनियन्त्रणात्मकोऽस्येत्यनिग्रहः, संविभजति—गुरुग्लानबालादिभ्य उचितमशनादि यच्छतीत्येवंशीलः संविभागी न तथा य आत्मपोषकत्वेनैव सोऽसंविभागी, 'अचियत्ते'ति गुर्वादिष्वप्रीतिमान्, शेषं पूर्ववत् ॥ अन्यच्च—विरूपो वादो विवादः—वाक्कलहस्तं 'चः' पूरणे 'उदीरेइ'त्ति कथञ्चिदुपशान्तमप्युत्प्रासनादिना वृद्धिं नयति, 'अधर्मः' अविद्यमानसदाचारः 'अत्तपण्हह'त्ति आत्मनि प्रश्नः आत्मप्रश्नस्तं हन्त्यात्मप्रश्नहाः, यदि कश्चित्परः पृच्छेत्—किं भवान्तरयायी आत्मा उत नेति ?, ततस्तमेव प्रश्नमतिवाचालतया हन्ति, यथा—नास्त्यात्मा प्रत्यक्षादिप्रमाणैरनुपलभ्यमानत्वात्, ततोऽयुक्तोऽयं प्रश्नः, सति हि धर्मिणि धर्माश्चिन्त्यन्त इति, पठ्यते

वुच्चई ॥ १२ ॥ अथिरासणे कुक्कुईए, जत्थ तत्थ निसीअई । आसणमि अणाउत्ते, पावसमणित्ति वुच्चई॥१३॥ ससरक्खपाओ सुअई, सिज्जं न पडिलेहई । संथारए अणाउत्तो, पावसमणित्ति वुच्चई ॥ १४ ॥

'समर्दन्' हिंसन् 'प्राणानि'ति प्राणयोगात् प्राणिन —द्वीन्द्रियादीन् 'बीजानि' शाल्यादीनि 'हरितानि च' दूर्वाऽङ्कुरादीनि, सकलैकेन्द्रियोपलक्षणमेतत्, स्पष्टतरचैतन्यलिङ्गत्वाच्चैतदुपादानम्, अत एवासंयतस्तथाऽपि 'संजय मन्नमाणे'त्ति सोपस्कारत्वात्संयतोऽहमिति मन्यमान , अनेन च संविग्नपाक्षिकत्वमप्यस्य नास्तीत्युक्तं, पापश्रमण इत्युच्यते ॥ तथा 'संस्तार' कम्बल्यादि 'फलक' चम्पकपट्टादि 'पीठम्' आसन' 'निषद्या' स्वाध्यायभूम्यादिका यत्र निषद्यते 'पादकम्बल' पादपुञ्छनम् 'अप्रमृज्य' रजोहरणादिनाऽसंशोध्य उपलक्षणत्वादप्रत्युपेक्ष्य च 'आरोहति' समाक्रामति य स पापश्रमण इत्युच्यते ॥ तथा 'दवदवस्स'त्ति द्रुत द्रुत तथाविधालम्बन विनाऽपि त्वरित २ 'चरति' गोचरचर्यादिषु परिभ्राम्यति, 'प्रमत्तश्च' प्रमादवशगश्च भवतीति शेष 'अभीक्ष्ण' वार वारम् 'उल्लङ्घनश्च' बालादीनामुचितप्रतिपत्त्यकरणतोऽध कर्त्ता 'चण्डश्च' क्रोधन , यद्वा 'प्रमत्त ' अनुपयुक्त ईर्यासमितौ उल्लङ्घनश्च वत्सडिम्भादीना चण्डश्चारभटवृत्त्याश्रयणत , शेष तथैव ॥ तथा 'प्रतिलेखयति' अनेकार्थत्वात्प्रत्युपेक्षते प्रमत्त सन् 'अवउज्झइ'त्ति 'अपोज्झति' यत्र तत्र निक्षिपति, प्रत्युपेक्षमाणो वा अपोज्झति, न प्रत्युपेक्षत इत्यर्थ , किं तत् ?—पाद-

दुग्धं च—क्षीरं दधि च—तद्विकार एव दधिदुग्धे, सूत्रे च व्यत्ययः प्राग्वद्, विकृतिहेतुत्वाद्विकृती, उपलक्षणत्वाद् घृताद्यशेषविकृतिपरिग्रहः, 'आहारयति' अभ्यवहरति 'अभीक्ष्णं' वारं वारं, तथाविधपुष्टालम्बनं विनाऽपीति भावः, अत एव 'अरतश्च' अप्रीतिमांश्च 'तपःकर्मणि' अनशनादौ, शेषं प्राग्वत् ॥ अपि च—'अत्थंतंमि य' त्ति 'अस्तान्ते' अस्तमयपर्यन्ते, 'चः' पूरणे, उदयादारभ्येति गम्यते, 'सूर्ये' भास्वति आहारयत्यभीक्ष्णं, किमुक्तं भवति ?—प्रातरारभ्य सन्ध्यां यावत्पुनः पुनर्भुङ्क्ते, यदिवा 'अत्थंतमयंमि य' त्ति अस्तमयति सूर्ये आहारयति, तिष्ठति तु किमुच्यते ? इति भावः, किमेकदैवेत्याह—'अभीक्ष्णं' पुनः पुनः, दिने दिने इत्युक्तं भवति, यदि चासौ केनचिद्गीतार्थसाधुना चोद्यते, यथा—आयुष्मन् ! किमेवं त्वयाऽऽहारतत्परेणैव स्थीयते ?, दुर्लभा खल्वियं मनुजत्वादिचतुरङ्गसामग्री, तत एनामवाप्य तपस्येवोद्यन्तुमुचितमिति, ततः किमित्याह—'चोइओ पडिचोएइ' त्ति चोदितः सन् प्रतिचोदयति यथा कुशलस्त्वमुपदेशकर्मणि न तु स्वयमनुष्ठाने, अन्यथा किमेवमवगच्छन्नपि भवान्न विकृष्टं तपोऽनुतिष्ठति ?, शेषं तथैव। 'आचार्यपरित्यागी' ते हि तपःकर्मणि विषीदन्तमुद्यमयन्ति, आनीतमपि चान्नादि बालग्लानादिभ्यो दापयन्त्यतोऽतीवाहारलौल्यात्तत्परित्यजनशीलः परान्—अन्यान् पाषण्डान्—सौगतप्रभृतीन् 'मृद्वी शय्या प्रातरुत्थाय पेया' इत्यादिकदभिप्रायतोऽत्यन्तमाहारप्रसक्तांस्तत एव हेतोः सेवते—तथा तथाऽपसर्पतीति परपाषण्डसेवकः, तथा च स्वेच्छाप्रवृत्ततया 'गाणंगणिए' त्ति गणाद्गणं षण्मासाभ्यन्तर एव संक्रामतीति गाणङ्गणिक इत्या-

च–'अत्तपण्णह'त्ति तत्र च आर्त्तां—सिद्धान्तादिश्रवणतो गृहीतामाप्ता वा इहपरलोकयो सद्बोधरूपतया हिता प्रज्ञाम्–आत्मनोऽन्येषा वा वुद्धि कुतर्क्व्याकुलीकरणतो हन्ति य स आत्तप्रज्ञाहा आप्तप्रज्ञाहा वा, 'वुग्गहे'त्ति व्युद्ग्रहे दण्डादिघातजनिते विरोधे 'कलहे' तस्मिन्नेव वाचिके 'रक्त ' अभिष्वक्त , शेष प्राग्वत् ॥ अपर च अस्थिरासन , कुकुच कुकुचो वा द्वयमपि पूर्ववत्, 'यत्र तत्र' इति ससक्तसरजस्कादावपीत्यर्थ 'निषीदति' उपविशति 'आसने' पीठादौ 'अनायुक्त ' अनुपयुक्त सन्, शेष प्राग्वत् ॥ तथा सह रजसा वर्त्तेते इति सरजस्कौ तथाविधौ पादौ यस्य स तथा 'स्वपिति' शेते, किमुक्त भवति ?–सयमविराधना प्रत्यभीरुतया पादावप्रमृज्यैव शेते, तथा 'शय्या' वसतिं न प्रतिलेखयति, उपलक्षणत्वान्न च प्रमार्जयति, 'सस्तारके' फलककम्बलादौ, सुप्त इति शेष , 'अनायुक्त ' "[1]कुक्कुडिपायपसारण आयामेउ पुणोवि आउंटे" इत्याद्यागमार्थानुपयुक्त , अन्यत्तथैवेति सूत्रनवकार्थ ॥ इदानीं तपआचारातिक्रमत पापश्रमणमाह—

दुद्धदहीविगईओ, आहारेइ अभिक्खण । अरए अ तवोकम्मे, पावसमणित्ति वुच्चई ॥ १५ ॥ अत्थतमि य सूरमि, आहारेइ अभिक्खण । चोइओ पडिचोएइ, पावसमणित्ति वुच्चई ॥ १६ ॥ आयरियपरिच्चाई, परपासडसेवए । गाणगणिए दुब्भूए, पावसमणित्ति वुच्चई ॥ १७ ॥

१ कुक्कुटीवत्पादप्रसारण आयम्य ( विस्तार्य ) पुनरपि आकुञ्चयेत् ।

एयारिसे पंचकुसीलसंवुडे, रूवंधरे मुणिपवराण हिट्ठिमे। अयंसि लोए विसमेव गरहिए, न से इहं नेव परत्थलोए ॥ २० ॥ जे वज्जए एए उ सदा उ दोसे, से सुव्वए होइ मुणीण मज्झे। अयंसि लोए अमयं व पूइए, आराहए दुहओ लोगमिणं ॥ २१ ॥ तिबेमि ॥

॥ पावसमणिज्जं ॥ १७ ॥

'एतादृशः' यादृश उक्तः 'पञ्चे'ति पञ्चसङ्ख्यः कुत्सितं शीलमेषां कुशीलाः—पार्श्वस्थादयः समाहृताः पञ्चकुशीलं तद्वदसंवृतः—अनिरुद्धाश्रवद्वारः पञ्चकुशीलासंवृतो रूपं—रजोहरणादिकं वेषं धारयति रूपधरः सूत्रे तु प्राकृतत्वाद्बिन्दुनिर्देशः, 'मुनिप्रवराणाम्' अतिप्रधानतपस्विनां 'हिट्ठिमो' अधस्ताद्वर्त्ती, अतिजघन्यसंयमस्थानवर्त्तित्वान्निकृष्ट इत्यर्थः। एतत्फलमाह—'अयंसि'त्ति अस्मिन् 'लोके' जगति 'विषमिव'त्ति गर इव 'गर्हितः' निन्दितो, भ्रष्टप्रतिज्ञो हि प्राकृतजनैरपि निन्द्यते धिगेनमिति, अत एव न स 'इह' इतीह लोके 'नैवे'ति नापि परत्र लोके, परमार्थतः सन्निति शेषः, यो हि नैहिकमामुष्मिकं वा कञ्चन गुणमुपार्जयति स तद्गणनायामप्रवेशतस्तत्त्वतोऽविद्यमान एवेति। यः 'वर्जयति' परित्यजति 'एतान्' उक्तरूपान् 'सया उ'त्ति सदैव दोषान् यथासुखविहारादिपापानुष्ठानरूपान् स तथाविधः 'सुव्रतः' निरतिचारतया प्रशस्यव्रतो भवति मुनीनां मध्ये, किमुक्तं भवति ?—भावमुनित्वेनासौ मुनि-

गमिकी परिभाषा, तथा चागम —“छम्मासऽब्भतरतो गणा गणं संकम करेमाणो ” इत्यादि, अत एव च 'दुर्निन्दाया', ततश्च 'दु' इति निन्दित भूत–भवनमस्येति दुर्भूत , दुराचारतया निन्द्यो भूत इत्यर्थ , अपर तथैवेति सूत्रत्रयार्थ ॥ सम्प्रति वीर्यातिचारविरहतस्तमेवाह—

सय गेह परिचज्ज, परगेहसि वावरे। निमित्तेण य ववहरई, पावसमणित्ति वुच्चई ॥ १८ ॥

सनाइपिंड जेमेइ, निच्छई सामुदाणिय। गिहिनिसिज्ज च वाहेइ, पावसमणित्ति वुच्चई ॥ १९ ॥

स्वमेव स्वक, निजकमित्यर्थं , 'गेह' गृह 'परित्यज्य' परिहृत्य प्रव्रज्याङ्गीकरणत 'परगेहे' अन्यवेश्मनि 'वावरे'त्ति व्याप्रियते–पिण्डार्थी सन् गृहिणामात्मभाव दर्शयन् स्वतस्तत्कृत्यानि कुरुते, पठ्यते च–'ववहरे'त्ति तत एव हेतोर्व्यवहरति–गृहिनिमित्त क्रयविक्रयव्यवहार करोति, 'निमित्तेन च' शुभाशुभसूचकेन 'व्यवहरति' द्रव्यार्जन करोति, अपर च पूर्ववत् । अपि च–'सन्नाय'त्ति स्वज्ञातय –स्वकीयस्वजनास्तैर्निजक इति यथेप्सितो य स्निग्धमधुरादिराहारो दीयते स स्वज्ञातिपिण्डस्त 'जेमति' भुङ्क्ते, 'नेच्छति' नाभिलपति समुदानानि—भिक्षास्तेपा समूह सामुदानिकम्, 'अचित्त हस्तिधेनोष्ठक्' (पा० ४–२–४७) इति ठक्, बहुगृहसम्बन्धिन भिक्षासमूहमनातोऽञ्छमितियावत्, गृहिणा निषद्या–पर्यङ्कतूल्यादिका शय्या ता च 'वाहयति'त्ति सुखशीलतयाऽऽरोहति, शेप तथैवेति सूत्रद्वयार्थ ॥ सम्प्रत्यध्ययनार्थमुपसहरन्नुक्तरूपदोषासेवनपरिहारयो फलमाह—

## अथ संयतीयाख्यमष्टादशमध्ययनम् ।

उक्तं सप्तदशमध्ययनम्, अधुनाऽष्टादशमारभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तराध्ययने पापवर्जनमुक्तं, तच्च संयतस्यैव, स च भोगर्द्धित्यागत एवेति स एव संजयोदाहरणत इहोच्यत इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य च चतुरनुयोगद्वारप्ररूपणा प्राग्वद्यावन्नामनिष्पन्ननिक्षेपे संजयीयमिति नाम, ततः सञ्जयशब्दनिक्षेपायाह निर्युक्तिकृत्—

निक्खेवो संजइज्जंमि चउ० ॥ ३९२ ॥ जाणगसरीरभविए० ॥ ३९३ ॥

संजयनामं गोयं वेयंतो भावसंजओ होइ । तत्तो समुट्ठियमिणं अज्झयणं संजइज्जंति ॥ ३९४ ॥

गाथात्रयं व्याख्यातप्रायं, नवरं 'णिक्खेवो संजइज्जंमि'त्ति 'निक्षेपः' न्यासः सञ्जयीयाध्ययने अर्थात्सञ्जयस्येति गम्यते । तथा च तृतीयगाथायां 'संजयनामं गोयं वेयंतो' इत्युक्तं 'तत' इति सञ्जयादभिधेयभूतात् 'समुत्थितम्' उत्पन्नम् इदं अध्ययनं सञ्जयीयमिति, तस्माद्धेतोरुच्यत इति गाथात्रयार्थः । इत्युक्तो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रालापकनिष्पन्नस्यावसरः, स च सूत्रे सति भवत्यतः सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

मध्ये गण्यते, तया वाऽस्मिन् लोके 'अमृतमिव' सुरभोज्यमिव 'पुजित' अभ्यर्हित आराधयति 'दुहतो लोगमिण'-ति इहलोकपरलोकभेदेन द्विविध लोकम् 'इण'ति इममनेन चातिप्रतीततया प्रत्यक्ष निर्दिशतीति, इहलोके च सकल-लोकपूज्यतया परलोके च सुगत्यवासे , तत पापवर्जनमेव विधेयमिति भाव इति सूत्रद्वयार्थ ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत्, नया अपि तथैव ॥ इति श्रीशान्त्याचार्यकृतायामुत्तराध्ययनटीकाया शिष्यहिताया सप्तदशम-ध्ययन समाप्तमिति ॥

॥ इति श्रीशान्त्याचार्यकृताया शिष्यहितायामुत्तराध्ययनटी० सप्तदशमध्ययन समाप्तम् ॥

हयमारूढो राया मिए छुहित्ताण केसरुज्जाणे । ते तत्थ उ उत्तत्थे वहेइ रसमुच्छिओ संतो ॥ ३९६ ॥

गाथाद्वयं प्रतीतमेव, नवरमिह नासीरं—मृगयां प्रति 'उत्त्रस्तान्' अतिभीतानिति गाथाद्वयार्थः ॥ अत्रान्तरे यदभूत्तदाह सूत्रकृत्—

अह केसरंमि उज्जाणे, अणगारे तवोधणे । सज्झायज्झाणजुत्तो, धम्मज्झाणं झियायइ ॥ ४ ॥

अप्फोवमंडवंमी, झायई झवियासवे । तस्सागए मिए पासं, वहेइ से नराहिवे ॥ ५ ॥

'अथ' अनन्तरं केशरे उद्यानेऽनगारस्तपोधनः स्वाध्यायः—अनुप्रेक्षणादिर्ध्यानं—धर्मध्यानादि ताभ्यां युक्तो—यथाकालं तदासेवकतया सहितः स्वाध्यायध्यानयुक्तोऽत एव 'धर्मध्यानम्' आज्ञाविजयादि 'झियायइ'त्ति ध्यायति चिन्तयति, क ?—'अप्फोवमंडवंमि'त्ति अप्फोवमण्डवमिति वृक्षाद्याकीर्णे, तथा च वृद्धाः—अप्फोव इति, किमुक्तं भवति ?—आस्तीर्णे, वृक्षगुच्छगुल्मलतासंछन्न इत्यर्थः, 'मण्डपे' नागवल्ल्यादिसम्बन्धिनि ध्यायति धर्मध्यानमिति गम्यते, पुनरभिधानमतिशयख्यापकं, झवियत्ति—क्षपिता निर्मूलिता आश्रवाः—कर्मबन्धहेतवो हिंसादयो येन स तथा, 'तस्य' इत्युक्तविशेषणान्वितस्यानगारस्य 'पार्श्वं' समीपमिति सम्बन्धः, 'आगतान्' प्राप्तान् मृगान् 'वहेइ'त्ति विध्यति हन्ति वा 'स' इति सञ्जयनामा 'नराधिपः' राजेति सूत्रद्वयार्थः ॥ अमुमेवार्थं सविशेषमाह निर्युक्तिकृत्—

कपिल्ले नयरे राया, उदिन्नबलवाहणे। नामेण सजओ नाम, मिगव्व उवनिग्गए॥ १॥

काम्पिल्ये नगरे 'राजा' नृपतिरुदीर्णम्-उदयप्राप्त बल-चतुरङ्ग वाहन च-गिल्लिथिल्ल्यादिरूपं यस्य सोऽयमुदीर्णबलवाहन, यद्वा बल-शरीरसामर्थ्यं वाहन-गजाश्वादि, पदात्युपलक्षण चैतत्, स च 'नाम्ना' अभिधानेन सजय 'नाम' इति प्राकाश्ये, ततोऽयमर्थ-सजय इति नाम्ना प्रसिद्धो, मृगव्या-मृगया प्रतीति शेप, उप-सामीप्येन निर्गतो-निष्क्रान्त उपनिर्गतस्तत एव नगरादिति शेप इति सूत्रार्थ॥ स च कीदृग् विनिर्गत किं च कृतवानित्याह-

हयाणीए गयाणीए, रहाणीए तहेव य। पायत्ताणीए महया, सव्वओ परिवारिए॥ २॥

मिए छुभित्ता हयगओ, कपिल्लुज्जाणकेसरे। भीए सते मिए तत्थ, वहेइ रसमुच्छिए॥ ३॥

पाठसिद्ध, नवर पदातीना समूह पादात तस्यानीक-कटक पादातानीक तेन, सुब्व्यत्यय प्राग्वत्, एव पूर्वेष्वपि, 'महता' बृहत्प्रमाणेन मृगान् क्षिप्त्वा 'कपिलुज्जाणकेसरि'त्ति तस्यैव काम्पील्यस्य नगरस्य सन्नन्धिनि केशरनाम्न्युद्याने 'भीतान्' त्रस्तान् सतो 'मितान्' परिमितान् 'तत्र' तेषु मृगेषु मध्ये 'वहेइ'त्ति व्यथति हन्ति वा, शरैरिति गम्यते, रस-तत्पिशितास्वादस्तत्र मूर्च्छितो-गृद्धो रसमूर्छित इति सूत्रद्वयार्थ॥ अमुमेवार्थं सूत्रस्पर्शिकनिर्युक्त्या स्पष्टयितुमाह—

कपिल्लपुरवरम्मि अ नामेण सजओ नरवरिदो। सो सेणाए सहिओ नासीर निग्गओ कयाइ॥३९५॥

शीलेनेत्यर्थः ॥ ततश्च 'अश्वं' तुरगं 'विसृज्य' विमुच्य 'णं' प्राग्वत्, 'अनगारस्य' उक्तस्यैव 'सः' सञ्जयनामा नृपः 'विनयेन' उचितप्रतिपत्तिरूपेण 'वन्दते' स्तौति 'पादौ' चरणौ, अत्यादरख्यापकं चैतत्, पादावपि तस्य भगवतः स्तवनीयाविति, वक्ति च—यथा भगवन्! 'अत्र' एतस्मिन् मृगव्ये, मम अपराधमिति शेषः, 'क्षमस्व' सहस्व ॥ 'अथ' इत्यनन्तरं 'मौनेन' वाग्निरोधात्मकेन 'सो'त्ति स गर्दभालिनामा भगवान् अनगारः 'ध्यानं' धर्मध्यानम् 'आश्रितः' स्थितः 'राजानं' नृपं 'न प्रतिमन्त्रयते' न प्रतिवक्ति यथाऽहं क्षमिष्ये न वेति, 'ततः' तत्प्रतिवचनाभावतोऽवश्यमयं क्रुद्ध इति न किमपि मां प्रभाषते इति राजा 'भयद्रुतः' अतीव भयत्रस्तो, यथा न ज्ञायते किमसौ क्रुद्धः करिष्यतीति, उक्तवांश्च यथा— ॥ 'सञ्जयः' सञ्जयनामा राजाऽहमस्मि, मा भून्नीच एवायमिति सुतरां कोप इत्येतदभिधानमिति, 'इति' अस्माद्धेतोर्भगवन्! 'वाहराहि'त्ति व्याहर—संभाषय 'मे' इति सुव्व्यत्ययान्माम्, अथापि स्यात्—किमेवं भवान् भयद्रुत इत्याह—'क्रुद्धः' कुपितः 'तेजसा' तपोमाहात्म्यजनितेन तेजोलेश्यादिना 'अनगारः' मुनिः 'दहेत्' भस्मसात्कुर्यात् नरकोटीः, आस्तां शतं सहस्रं वेति, अतोऽत्यन्तभयद्रुतोऽहमिति सूत्रचतुष्टयार्थः ॥ इदमेव व्यक्तीकर्त्तुमाह निर्युक्तिकृत्—

अह आसगओ राया तं पासिअ संभमागओ तत्थ। भणइ अ हा जह इण्हिं इसिवज्झाए मणा लित्तो ३९८

अह केसरमुज्जाणे नामेण गद्दभालि अणगारो। अप्फोवमंडवमि अ झायइ झाण झविअदोसो ॥ ३९७ ॥

अहेति गाथा व्याख्यातप्रायैव, नवर 'नाम्ना' अभिधानेन गर्दभालि–गर्दभालिनामेत्यर्थ, 'झविय'त्ति क्षपिता दोषा —कर्माश्रवहेतुभूता हिंसादयो येन स तथा ॥ पुनस्तत्र यदभूत्तदाह—

अह आसगओ राया, खिप्पमागम्म सो तहिं। हए मिए उ पासित्ता, अणगारं तत्थ पासई ॥ ६ ॥

'अथ' अनन्तरम् 'अश्वगत' तुरगारूढो राजा 'क्षिप्र' शीघ्रमागत्य 'स' इति सञ्जयनामा 'तस्मिन्' यत्र मण्डपे स भगवान् ध्यायति, 'हतान्' विनाशितान् मृगान् तुशब्द एवकारार्थस्ततो मृगानेव, न पुनरनगारमित्यर्थ, 'पासित्त'त्ति दृष्ट्वा 'अनगार' साधु 'तत्र' इति तस्मिन्नेव स्थाने पश्यतीति सूत्रार्थ ॥ ततः किमसावकार्षीदित्याह—

अह राया तत्थ संभंतो, अणगारो मणाऽऽहओ। मए उ मंदपुण्णेण, रसगिद्धेण घंतुणा ॥७॥ आस विसज्जइत्ताण, अणगारस्स सो निवो। विणएण वंदई पाए, भगवं! इत्थ मे खमे ॥ ८ ॥ अह मोणेण सो भगव, अणगारो झाणमस्सिओ। रायाण न पडिमंतेइ, तओ राया भयदुओ ॥ ९ ॥ संजओ अहमस्सीति, भगवं! वाहिराहि मे। कुद्धे तेएण अणगारे, दहिज्जा नरकोडिओ ॥ १० ॥

अथ राजा 'तत्रे'ति तद्दर्शने सति 'संभ्रान्त' भयव्याकुलो, यथाऽनगारो–मुनिर्मनागिति–स्तोकेनैव 'आहत' विनाशित, तदासन्नमृगहननादित्यभिप्राय, मया तु मन्दपुण्येन 'रसगृद्धेन' रसमूर्छितेन 'घंतुण'त्ति घातुकेन हनन-

कीलंतऽन्ने नरा रायं !, हट्ठतुट्ठमलंकिया ॥ १६ ॥ तेणावि जं कयं कम्मं, सुहं वा जइ वा दुहं । कम्मुणा तेण संजुत्तो, गच्छई उ परं भवं ॥ १७ ॥

'अभओ'त्ति अभयं—भयाभावः 'पार्थिव !' नृपते ! आकारोऽलाक्षणिकः, कस्य ?—'तुब्भं'ति तव, न कश्चित्त्वां दहतीति भावः, इत्थं समाश्वास्योपदेशमाह—'अभयदाता च' प्राणिनां त्राणकर्त्ता 'भवाहि य'त्ति भव, यथा हि भवतो मृत्युभयमेवमन्येषामपीति भावः, चशब्दो योजित एव, अमुमेवार्थं सहेतुकं व्यतिरेकद्वारेणाह—'अनित्ये' अशाश्वते 'जीवलोके' प्राणिगणे, किमिति परिप्रश्ने 'हिंसायां' प्राणिवधरूपायां 'प्रसजसि' अभिष्वक्तो भवसि ?, जीवलोकस्य ह्यनित्यत्वे भवानप्यनित्यस्तत्किमिति—केन हेतुना स्वल्पदिनकृते पापमित्थमुपार्जयसि ?, नैवेदमुचितमिति भावः ॥ इत्थं हिंसात्यागमुपदिश्य राज्यपरित्यागोपदेशमाह—यदा 'सर्वं' कोशान्तःपुरादि परित्यज्य—इहैव विमुच्य गन्तव्यं भवान्तरमिति शेषः, तदपि न स्ववशस्य किन्तु अवशस्य—अस्वतन्त्रस्य 'ते' तव, क्व सति ?—अनित्ये जीवलोके, ततः किं 'राज्ये' नृपतित्वे प्रसजसि ?, राज्यपरित्याग एव युक्त इति भावः, पाठान्तरतश्च किं हिंसायां प्रसजसि ?, इह च पुनर्वचनमादरातिशयख्यापनार्थमिति न पुनरुक्तता ॥ जीवलोकानित्यत्वमेव भावयितुमाह—'जीवितम्' आयुः 'चः' समुच्चये 'एवे'ति पूरणे 'रूपं च' पिशितादिपुष्टस्य शरीरशोभात्मकं विद्युतः संपातः—चलनचमत्कारो विद्युत्सम्पातस्तद्वच्चञ्चलम्—अतीवास्थिरं विद्युत्सम्पातचञ्चलं 'यत्र' जीविते रूपे च 'तं'ति त्वं 'मुह्यसि' मोहं विधत्से, मूढश्च हिंसादौ प्रस-

वीसज्जिऊण आस अह अणगारस्स एइ सो पास । विणएण वदिऊण अवराह ते खमावेइ ॥ ३९९ ॥
अह मोणमस्सिओ सो अणगारो नरवइ न वाहरइ । तस्स तयतेयभीओ इणमट्ठ सो उदाहरइ ४००
कपिल्लपुराहिवई नामेण सजओ अह राया । तुज्झ सरणागओऽम्हि निदहिहा मा मि तेएण ॥ ४०१ ॥

गाथाचतुष्टय स्पष्टमेव, नवर त पासिय 'सभमागतो'त्ति मुनिरत्र दृश्यत इत्यसावपि मया विद्धो भविष्यतीत्याकुलत्वमापन्नो, 'भणति च' वक्ति च 'हा' इति खेदे यथेदानीं 'इसिवज्झाए'त्ति ऋषिहत्यया मनागपि लिप्तोऽहमल्पेनैव न स्पृष्ट 'तुब्भ'त्ति तव 'शरणागतोऽस्मि' त्वामेव शरणम्—आश्रय प्रतिपन्नोऽस्मि, ततश्च निर्द्धाक्षी 'मा' निषेधे 'मि' इति मा 'तेजसा' तपोजनितेनेति गम्यते, इति गाथाचतुष्टयार्थ ॥ इत्थ तेनोक्ते यन्मुनिरुक्तवास्तदाह—

अभओ पत्थिवा ! तुज्झ, अभयदाया भवाहि य । अणिच्चे जीवलोगम्मि, किं हिंसाए पसज्जसि ? ॥ ११ ॥
जया सव्व परिच्चज्ज, गतव्वमवसस्स ते । अणिच्चे जीवलोगम्मि, किं रज्जम्मि पसज्जसि ? ॥ १२ ॥ जीविय चेव
रूव च, विज्जुसपायचचल । जत्थ त मुज्झसी राय !, पिच्चत्थ नावबुज्झसी ॥ १३ ॥ दाराणि य सुया चेव,
मित्ता य तह बधवा । जीवतमणुजीवति, मय नाणुव्वयति य ॥ १४ ॥ नीहरति मय पुत्ता, पियर परमदु-
क्खिया । पियरो अ तहा पुत्ते, बधू राय ! तव चरे ॥ १५ ॥ तओ तेणऽज्जिए दव्वे, दारे य परिरक्खिए ।

'यदिवे'त्यथवा 'दुःखं' दुःखहेतुः पापप्रकृत्यात्मकमित्यर्थः । कर्मणा तेन सुखहेतुना दुःखहेतुना वा, उत्तरत्र तुशब्दस्यै-
वकारार्थत्वाद् भिन्नक्रमत्वाच्च तेनैव, न तु दुःखपरिरक्षितेनापि द्रव्यादिना 'संयुक्तः' सहितः 'गच्छति' याति 'परम्'
अन्यं 'भवं' जन्म, यतश्च शुभाशुभयोरेवानुयायिता ततः शुभहेतुं तप एव चरेरिति भाव इति सूत्रसप्तकार्थः ॥ तत-
स्तद्वचः श्रुत्वा राजा किमचेष्टतेत्याह—

सोऊण तस्स सो धम्मं, अणगारस्स अंतिए । महया संवेगनिव्वेयं, समावन्नो नराहिवो ॥ १८ ॥
संजओ चइउं रज्जं, निक्खंतो जिणसासणे । गद्दभालिस्स भगवओ, अणगारस्स अंतिए ॥ १९ ॥

'श्रुत्वा' आकर्ण्य 'तस्य' इत्यनगारस्य 'स' इति सञ्जयाभिधानो राजा 'धर्मम्' उक्तरूपम् 'अनगारस्य' भिक्षोः
'अन्तिके' समीपे 'महय'त्ति महता आदरेणेति शेषः, सुब्व्यत्ययेन वा महत्, 'संवेगनिर्वेदं' तत्र संवेगो—मोक्षाभि-
लाषो निर्वेदः—संसारोद्विग्नता 'समापन्नः' प्राप्तः 'नराधिपः' राजा 'सञ्जयः' सञ्जयनामा 'चइउं' त्यक्त्वा 'राज्यं' राष्ट्रा-
धिपत्यरूपं 'निष्क्रान्तः' प्रव्रजितः 'जिनशासने' अर्हद्दर्शने, न तु सुगतादिदेशितेऽसद्दर्शने एवेति भावः, 'गर्दभालेः'
गर्दभालिनाम्नो भगवतोऽनगारस्यान्तिक इति सूत्रद्वयार्थः ॥ सूत्रनवकोक्तमेवार्थं स्पष्टयितुमाह निर्युक्तिकृत्—
अभयं तुज्झ नरवई ! जलबुब्बुअसंनिभे अ माणुस्से । किं हिंसाइ पसज्जसि जाणंतो अप्पणो दुक्खं ? ४०१

जसीति भाव , 'राजन्' नृपते ! 'प्रेत्यार्थं' परलोकप्रयोजन नावबुध्यसे, किमुक्तं भवति ?–जानास्यपि न, किं पुनस्तत्करणमिति ॥ तथा 'दाराश्च' कलत्राणि प्राकृतत्वान्नपा निर्देश , सुताश्चैव 'मित्राणि च' प्रतीतान्येव, तथा 'बान्धवा ' स्वजना जीवन्तम् 'अनुजीवन्ति' तदुपार्जितवित्ताद्युपभोगत उपजीवन्ति, मृत 'णाणुवयति य'त्ति चशब्दस्यापिशब्दार्थत्वादनुव्रजन्त्यपि न, किं पुन सह यास्यन्तीति, तदनेन दारादीनामपि कृतघ्नतया न तेष्वास्था विधाय धर्मे उदासितव्यमित्युक्तमिति, इद च सूत्र चिरन्तनवृत्तिकृता न व्याख्यात, प्रत्यन्तरेषु च दृश्यत इत्यस्माभिरुन्नीतम् ॥ पुनस्तत्प्रतिबन्धनिराकरणायाह–'नीहरति'त्ति निस्सारयन्ति 'मृतम्' इति गतायुप 'पुत्रा ' सुता 'पितर' जनक 'परमदु खिता ' अतिशयसञ्जातदु खा अपि, किं पुनर्ये न तथा दु खभाज इति भाव , पितरोऽपि तथा पुत्रान्, 'बधु'त्ति बन्धवश्च बन्धूनिति शेप , अतश्च किं कृत्यमित्याह–राजन्! तप उपलक्षणत्वाद्दानादि 'चरे ' आसेवस्वेति ॥ अपरञ्च 'ततो'त्ति मृतनि सारणादनन्तर 'तेन' इति मित्रपित्रादिना 'अर्जिते' विढपिते 'द्रव्ये' वित्ते 'दारेषु च' कलत्रेषु च 'परिरक्षितेषु' सर्वोपायपरिपालितेषु, उभयत्रार्पत्वादेकवचन, 'क्रीडन्ति' विलसन्ति तेनैव वित्तेन दारैश्चेति गम्यते 'अन्ये' अपरे राजन् ! 'हट्ठतुट्ठमलंकिय'त्ति हृष्टा –बहि पुलकादिमन्त तुष्टा –आन्तरप्रीतिभाज 'अलङ्कृता ' विभूषिता , यत ईदृशी भवस्थितिस्ततो राजन् ! तपश्चरेरिति मध्यदीपकत्वादनन्तरसूत्रोक्तेन सम्बन्ध ॥ मृतस्य च को वृत्तान्त इत्याह–'तेनापि' मृतेन यत् 'कृतम्' अनुष्ठित कर्म 'शुभ वा' पुण्यप्रकृतिरूप, यद्वा 'सुख वा' सुखहेतु

निमित्ततः स्मृतपूर्वजन्मा तत एव चोत्पन्नवैराग्यः प्रव्रज्यां गृहीतवान्, गृहीतप्रव्रज्यश्च विहरन् सञ्जयमुनिं दृष्ट्वा तद्विमर्शार्थमिदमुक्तवान्-यथा ते 'दृश्यते' अवलोक्यते 'रूपम्' आकृतिः 'प्रसन्नं' विकाररहितं 'ते' तव 'तथा' तेनैव प्रकारेण प्रसन्नमिति प्रक्रमः, किं तत् ?-'मनः' चित्तं, न ह्यन्तः कलुषतायां बहिरप्येवं प्रसन्नतासम्भवः, तथा 'किंनामा' किमभिधानः 'किंगोत्रः' किमन्वयः 'कस्सट्ठाए व'त्ति कस्मै वा 'अर्थाय' प्रयोजनाय 'माहणे'त्ति मा वधीत्येवंरूपं मनो वाक् क्रिया च यस्यासौ माहनः, सर्वे धातवः पचादिषु दृश्यन्त इति वचनात्पचादित्वादच्, स चैवंविधः प्रव्रजित एव संभवत्यतः किं वा प्रयोजनमुद्दिश्य प्रव्रजितः, 'कथं' केन प्रकारेण 'प्रतिचरसि' सेवसे, कान् ?-'बुद्धान्' आचार्यादीन्, कथं 'विणीय'त्ति 'विनीतः' विनयवानित्युच्यत इति सूत्रद्वयार्थः ॥ सञ्जयमुनिराह—

संजओ नाम नामेणं, तहा गुत्तेण गोयमो । गद्दभाली ममायरिया, विज्जाचरणपारगा ॥ २२ ॥

यदुक्तं त्वया-किंनामा त्वमिति, तत्र सञ्जयो नाम नाम्ना । यच्चावोचः-किंगोत्रः ? इति, तत्राह-तथा 'गोत्रेण' अन्वयेन गोतमः, उभयत्राहमिति गम्यते, शेषप्रश्नत्रयप्रतिवचनमाह-'गर्दभालयः' गर्दभाल्यभिधाना मम 'आचार्याः' धर्मोपदेशकत्वादिना, विद्यतेऽनया तत्त्वमिति विद्या—श्रुतज्ञानं तथा चर्यत इति चरणं—चारित्रं विद्या च चरणं च विद्याचरणे तयोः पारगाः—पर्यन्तगामिनो विद्याचरणपारगाः, एवं च वदतोऽयमाशयः—यथा गर्दभालिभिर्धर्माचार्यैर्जविंद्यातान्निवर्त्तितोऽहं, विद्याचरणपारगत्वाच्च तैस्तन्निवृत्तौ मुक्तिलक्षणं फलमुक्तं, ततस्तदर्थं माहनोऽस्मि,

सव्वमिण चइऊण अवस्स जया य होइ गतव्व। कि भोगेसु पसज्जसि ?, किंपागफलोवमनिभेसुं ॥४०२॥
सोऊण य सो धम्म तस्सऽणगारस्स अतिए राया। अणगारो पव्वइओ रज्ज चइउ गुणसमग्ग ॥४०३॥

व्याख्यातप्रायमेव, नवर 'अप्पणो दुक्ख'ति आत्मनो दु खमिति–दु खजनक मरणमिति शेप, 'किंपागफलोपमणिभेसु'न्ति किम्पाकफलोपमा निभा–छाया येपा ते तथा आपातमधुरत्वपरिणतिदारुणत्वाभ्या, तथा 'अनगार' अविद्यमानगृहो, जात इति शेप, स च शाक्यादिरपि सभवेदत आह–'पव्वइओ'त्ति प्रकर्पेण–विपयाभिष्वङ्गादिपरिहाररूपेण व्रजितो–निष्क्रान्त प्रव्रजितो, भावभिक्षुरितियावत्, तथा गुणा –कामगुणा मनोज्ञशब्दादय आज्ञैश्वर्यादयो वा तै समग्र–सम्पूर्णं गुणसमग्रमिति गाथात्रयार्थ ॥ स चैवं गृहीतप्रव्रज्योऽधिगतहेयोपादेयविभागो दशविधचक्रवालसामाचारीरतश्चानियतविहारितया विहरन् तथाविधसन्निवेशगाजगाम, तत्र च तस्य यद्भूत्तदाह–

च्चिा रट्ठ पव्वईओ, खत्तिओ परिभासई। जहा ते दीसई रूव, पसन्न ते तहा मणो ॥ २० ॥
किनामे किगुत्ते कस्सट्ठाए व माहणे ?। कह पडियरसी बुद्धे ?, कह विणीयत्ति वुच्चसि ? ॥ २१ ॥

त्यक्त्वा 'राष्ट्र' ग्रामनगरादिसमुदाय 'प्रव्रजित' प्रतिपन्नदीक्ष 'क्षत्रिय' क्षत्रजातिरनिर्दिष्टनामा परिभापते, सञ्जयमुनिमित्युपस्कार, स हि पूर्वजन्मनि वैमानिक आसीत्, ततश्च्युत क्षत्रियकुलेऽजनि, तत्र च कुतश्चित्तथाविध-

धर्मसंस्कारा नवात्मगुणा' इतिवचनात्तद्गुणयोर्धर्माधर्मयोरप्यव्यापित्वं, तथा च द्वीपान्तरगतदेवदत्तादृष्टाकृष्टमणिमुक्तादीनां नेहागमनं स्यादिति, विभिन्नदेशस्याप्ययस्कान्तादेरयःप्रभृतिवस्त्वाकर्षणशक्तिदर्शनाद्धर्माधर्मयोरपि शरीरमात्रव्यापित्वेऽपि तद्वद्विप्रकृष्टवस्त्वाकर्षकत्वादिति न तावद्विभुरात्मा युज्यते । तथाऽविभुरप्यङ्गुष्ठपर्वाद्यधिष्ठानो यैरिष्यते तेषां सकलशरीरव्यापिचैतन्यासत्त्वं, तदसत्त्वाच्च शेषशरीरावयवेषु शस्त्रादिभेदादौ वेदनानुभवासंभवो, न चैतद् दृष्टमिष्टं वा, एवं सर्वदा कर्तृत्वादिकमपि यथा न युज्यते तथा स्वधिया वाच्यं १ । ये त्वक्रियावादिनस्तेऽस्तीतिक्रियाविशिष्टमात्मानं नेच्छन्त्येव, अस्तित्वे वा शरीरेण सहैकत्वान्यत्वाभ्यामवक्तव्यमिच्छन्ति, एकत्वे ह्यविनष्टशरीरावस्थितौ न कदाचिन्मरणप्रशस्तिः, आत्मनः शरीरानन्यत्वेनावस्थितत्वात्, तथा मुक्त्यभावाद्यनेकदोषापत्तिश्च, शरीरान्यत्वे तु शरीरच्छेदादौ तस्य वेदनाऽभावप्रसङ्गः, तस्मादवक्तव्य एवेति, अक्रियावादित्वं चैषां कथञ्चिद्भेदाभेदलक्षणप्रकारान्तराभावेन तदभावस्यैवावशिष्यमाणत्वात्, येऽप्युत्पत्त्यनन्तरमात्मनः प्रलयमिच्छन्ति तेषामपि तदस्तित्वाभ्युपगमेऽप्यनुपचरितपरलोकाद्यसम्भवात् तत्त्वतस्तदसत्त्वमेवेत्यक्रियावादित्वम्, उक्तं हि वाचकैः—"ये पुनरिहाक्रियावादिनस्तेषामात्मैव नास्ति, न चावक्तव्यः शरीरेण सहैकत्वान्यत्वे प्रति, उत्पत्त्यनन्तरप्रलयस्वभावको वा, तस्मिन्ननिर्णिक्ते च कर्तृत्वादिविशेषमूढा एवे"ति, अमीषां तु विचाराक्षमत्वमात्माऽस्तित्वस्य प्राक् प्रत्यक्षानुमानलक्षणप्रमाणद्वयसमधिगम्यत्वेन साधनात्, तस्य च शरीरात्कथञ्चिद्भिन्नाभिन्नरूपतया तत्र तत्र वक्तव्ये (व्यत्वे)न। स्थापितत्वात्,

यथा च तदुपदेशस्तथा गुरून् प्रतिचरामि, तदुपदेशासेवनाच्च विनीत इति सूत्रार्थः ॥ इत्थं विमृश्य तद्गुणबहुमाना-कृष्टचेता अपृष्टोऽपि क्षत्रिय इदमाह—

किरियं अकिरिअं विणयं, अन्नाणं च महामुणी ! । एएहिं चउहिं ठाणेहिं, मेअन्ने किं पभासई ? ॥२३॥

'क्रिया' अस्तीत्येवरूपा, लिङ्गव्यत्ययान्नपुंसकनिर्देशः, 'अक्रिया' तद्विपरीता 'विनयं' नमस्कारकरणादि, लिङ्गव्यत्ययः प्राग्वत्, तथा ज्ञानं—वस्तुतत्त्वावगमस्तदभावोऽज्ञानं, 'च' समुच्चये, 'महामुने !' सम्यक्प्रव्रज्याप्रतिपत्तिगुरुपरिचर्यादिकरणतः प्रशस्यते ! 'एतैः' क्रियादिभिश्चतुर्भिः तिष्ठन्त्येषु कर्मवशगा जन्तव इति स्थानानि—मिथ्याऽध्यवसायाधारभूतानि तैः, 'मेयण्णे'त्ति, मीयत इति मेयं—ज्ञेयं जीवादिवस्तु तज्जानन्तीति मेयज्ञाः क्रियादिभिश्चतुर्भिः स्थानैः स्वस्वाभिप्रायकल्पितैर्वस्तुतत्त्वपरिच्छेदिन इतियावत्, 'किम्' इति कुत्सितं 'पभासइ'त्ति प्रकर्षेण भाषन्ते प्रभाषन्ते, विचाराक्षमत्वात्, तथाहि—ये तावत्क्रियावादिनस्तेऽस्तिक्रियाविशिष्टमात्मानं मन्यमाना अपि तस्य सदा विभुत्वाविभुत्वकर्तृत्वाकर्तृत्वादिभिर्विप्रतिपद्यन्ते, उक्तं हि वाचकैः—क्रियावादिनो नाम येषामात्मनोऽस्तित्वं प्रत्यविप्रतिपत्तिः, किं तु स विभुरविभुः कर्त्ताऽकर्त्ता क्रियावानितरो मूर्त्तिमानमूर्त्तिरित्येवमाद्याग्रहोपहतप्रीतयस्तेऽस्ति माता पिताऽस्ति न कुशलाकुशलकर्मवैफल्यं न न सन्ति गतय इत्येवप्रतिज्ञाश्च, इह च विभुत्वं व्यापित्वं, तच्चात्मनो न घटते, शरीर एव तल्लिङ्गभूतचैतन्योपलब्धेः, न च वक्तव्यमात्मनोऽव्यापित्वे 'सुखदुःखबुद्धीच्छाद्वेषप्रयत्नधर्मा-

कविधत्वं, उक्तं वाचकैः—"एषां मौलेषु चतुर्षु कल्पेष्ववस्थितेषु तद्भेदाः सुबहवोऽवनिरुहशाखाप्रशाखानिकरवदवगन्तव्याः", तत्र तावच्छतमशीतं क्रियावादिनां, अक्रियावादिनश्च चतुरशीतिसङ्ख्याः, अज्ञानिकाः सप्तषष्टिविधाः, वैनयिकवादिनो द्वात्रिंशत्, एवं त्रिषष्ट्यधिकशतत्रयं, सर्वेऽपि चामी विचाराक्षमत्वात्कुत्सितं प्रभाषन्ते इति स्थितमिति सूत्रार्थः ॥ न चैतत्स्वाभिप्रायेणैवोच्यते, किन्तु—

इइ पाउकरे बुद्धे, नायए परिनिव्वुडे । विज्जाचरणसंपन्ने, सच्चे सच्चपरक्कमे ॥ २४ ॥

'इती'त्येतत् क्रियादिवादिनः किं प्रभाषन्ते ? इत्येवंरूपं 'पाउकरे'त्ति प्रादुरकार्षीत्—प्रकटितवान् 'बुद्धः' अवगततत्त्वः सन् ज्ञात एव ज्ञातकः—जगत्प्रतीतः क्षत्रियो वा, स चेह प्रस्तावान्महावीर एव, 'परिनिर्वृतः' कषायानलविध्यापनात्समन्ताच्छीतीभूतो विद्याचरणाभ्यामर्थात् क्षायिकज्ञानचारित्राभ्यां संपन्नो—युक्तो विद्याचरणसंपन्नोऽत एव 'सत्यः' सत्यवाक्, तथा सत्यः—अवितथस्तात्त्विकत्वेन परे—भावशत्रवस्तेषामाक्रमणं आक्रमः—अभिभवो यस्यासौ सत्यपराक्रम इति सूत्रार्थः ॥ तेषां च फलमाह—

पडंति नरए घोरे, जे नरा पावकारिणो । दिव्वं च गइं गच्छंति, चरित्ता धम्ममारियं ॥ २५ ॥

'पतन्ति' गच्छन्ति 'नरके' सीमन्तकादौ 'घोरे' नित्यान्धकारादिना भयानके ये नराः उपलक्षणत्वात्तिर्यगादयो वा पातयति नरकादिषु जन्तुमिति पापं तच्च हिंसाद्यनेकधा, इह त्वसत्प्ररूपणैव, तत्कर्त्तुम्—अनुष्ठातुं शीलमेषामिति

क्षणिकपक्षस्य तु सामुच्छेदिकनिह्नववक्तव्यतायामेवोन्मूलितत्वादिति २। विनयवादिनो विनयादेव मुक्तिमिच्छन्ति, यत उक्तं—"वैनयिकवादिनो नाम येषां सुरासुरनृपतपस्विकरितुरगहरिणगोमहिष्यजाविकशशशृगालजलचरकपोतकाकोलूकचटकप्रभृतिभ्यो नमस्कारकरणात् क्लेशनाशोऽभिप्रेतो, विनयाच्छ्रेयो भवति नान्यथेत्यध्यवसिता" एतेऽपि न विचारसहिष्णवो, न हि विनयमात्रादिहापि विशिष्टानुष्ठानविकलादभिलषितार्थावाप्तिरवलोक्यते, नापि चैषां विनयार्हत्वं, येन पारलौकिकश्रेयोहेतुता भवेत्, तथाहि—लोकसमयवेदेषु गुणाभ्यधिकस्यैव विनयार्हत्वमिति प्रसिद्धिः, गुणास्तु तत्त्वतो ज्ञानध्यानानुष्ठानात्मका एव, न च सुरादीनामज्ञानाश्रवाविरमणादिदोषदूषितानामेतेष्वन्यतरस्यापि गुणस्य सम्भव इति कथं यदृच्छया विधीयमानस्य तस्य श्रेयोहेतुतेति? ३। अज्ञानवादिनस्त्वाहुः—यथेदं जगत् कैश्चिद् ब्रह्मादिविवर्त्तं इष्यते, अन्यैः प्रकृतिपुरुषात्मकमपरैर्द्रव्यादिषड्भेदं तदपरैश्चतुरार्यसत्यात्मकमितरैर्विज्ञानमयमन्यैस्तु शून्यमेवेत्यनेकधा भिन्नाः पन्थानः, तथाऽऽत्माऽपि नित्यानित्यादिभेदतोऽनेकधैवोच्यते, तत्को ह्येतद्वेद किं चानेन ज्ञातेन?, अपवर्गं प्रत्यनुपयोगित्वात् नानस्य, केवलं कष्टं तप एवानुष्ठेयं, न हि कष्टं विनेष्टसिद्धिः, तथा चाहुः—'अज्ञानिका नाम येषामियमुपश्रुतिः, यथेह ज्ञानाधिगमप्रयासोऽपवर्गं प्रति अकिञ्चित्करो, घोरैर्व्रततपोभिरपवर्गोऽवाप्यते' इति। विचारासहत्वं चैषां विज्ञानरहितस्य महतोऽपि कष्टस्य तिर्यग्नारकादीनामिवापवर्गं प्रत्यहेतुत्वात्, तदन्तरेण व्रततपोपसर्गादीनामपि स्वरूपापरिज्ञानतः क्वचित्प्रवृत्त्यसम्भवादिति। एषां च क्रियावादिनामुत्तरोत्तरभेदतोऽने-

परलोकात्माद्यपलापित्वेन दृष्टिः—बुद्धिरेषामिति मिथ्यादृष्टयः तत एव, 'अनार्या' अनार्यकर्मप्रवृत्ताः, कथं पुनस्त एवंविधास्ते विदिता इत्याह—'विद्यमाने' सति 'परलोके' अन्यजन्मनि 'सम्यग्' अविपरीतं 'जानामि' अवगच्छामि 'अप्पगं'ति आत्मानं, ततः परलोकात्मनोः सम्यग्वेदनात् ममैवंविधत्वेन विदितास्ततोऽहं तदुक्त्याकर्णनादितः संयच्छामि किंप्रभापकाश्चैत इति सूत्रार्थः ॥ कथं पुनस्त्वमात्मानमन्यजन्मनि जानासीत्याह—

अहमासी महापाणे, जुइमं वरिससओवमे । जा सा पाली महापाली, दिव्वा वरिससओवमा ॥ २८ ॥
से चुए बंभलोगाओ, माणुस्सं भवमागए । अप्पणो य परेसिं च, आउं जाणे जहा तहा ॥ २९ ॥

'अहमासि'त्ति अहमभूवं 'महाप्राणे' महाप्राणनाम्नि ब्रह्मलोकविमाने 'द्युतिमान्' दीप्तिमान् 'वरिससतोवमे'त्ति वर्षशतजीविना उपमा—दृष्टान्तो यस्यासौ वर्षशतोपमो मयूरव्यंसकादित्वात्समासः, ततोऽयमर्थः—यथेह वर्षशतजीवी इदानीं परिपूर्णायुरुच्यते, एवमहमपि तत्र परिपूर्णायुरभूवं, तथाहि—या सा पालिरिव पालिः—जीवितजलधारणाद्भवस्थितिः, सा चोत्तरत्र महाशब्दोपादानादिह पल्योपमप्रमाणा, 'महापाली' सागरोपमप्रमाणा, तस्या एव महत्त्वात्, दिवि भवा दिव्या वर्षशतेनोपमा यस्याः सा वर्षशतोपमा, यथा हि वर्षशतमिह परमायुः तथा तत्र महापाली, उत्कृष्टतोऽपि हि तत्र सागरोपमैरेवायुरुपनीयते, न तूत्सर्पिण्यादिभिः, अथवा—"योजनं विस्तृतः पल्यस्तथा योजनमुत्सृतः । सप्तरात्रप्ररूढानां, केशाग्राणां स पूरितः ॥ १ ॥ ततो वर्षशते पूर्णे, एकैकं केशमुद्धरेत् । क्षीयते

पापकारिण , ये त्वेवविधा न भवन्ति ते किमित्याह—'दिव्या च गति' देवलोकगतिं, चशब्द पुनरर्थे, स च पूर्वेभ्यो विशेषद्योतक , 'गच्छति' यान्ति 'चरित्वा' आसेव्य धर्मं –श्रुतधर्मादिरनेकविध , इह च सत्प्ररूपणारूप श्रुतधर्म एव त, आर्यं–प्राग्वत्, तदयमभिप्राय –असत्प्ररूपणापरिहारेण सत्प्ररूपणापरेणैव च भवता भवितव्यमिति सूत्रार्थं ॥ कथ पुनरमी पापकारिण इत्याह—

मायावुइयमेय तु, मुसा भासा निरत्थिया । संजममाणोऽवि अहं, वसामि इरियामि य ॥ २६ ॥

मायया–शाठ्येन वुइयति–उक्त मायोक्तम् 'एतत्' यदनन्तर क्रियादिवादिभिरुक्त, 'तु 'एवकारार्थो भिन्नक्रमश्च मायोक्तमेव, अतश्चैतत् 'मृषा' अलीका 'भाषा' उक्ति 'निरर्थिका' सम्यगभिधेयशून्या, तत एव च 'सजममाणोऽवि'त्ति 'अपि ' एवकारार्थस्तत सयच्छन्नेव–उपरमन्नेव तदुक्त्याकर्णनादित 'अहम्' इत्यात्मनिर्देशे विशेषतस्त-त्स्थिरीकरणार्थम्, उक्त हि–"ठियतो ठावए पर"ति, 'वसामि' तिष्ठामि उपाश्रय इति शेष , 'इरियामि य'त्ति ईरे च–गच्छामि च गोचरचर्यादिष्विति सूत्रार्थ ॥ इदमपि सूत्र प्रायो न दृश्यते । कुत पुनस्त्व तदुक्त्याकर्णनादिभ्य सयच्छसीत्याह—अनन्तरसूत्राभावे च यदुक्त चतुर्भि स्थानैर्मेयज्ञा किप्रभापन्ते इति, तत्कुत इत्याह—

सव्वे ते विइया मज्झ, मिच्छादिट्ठी अणारिया । विज्जमाणे परे लोए, सम्म जाणामि अप्पग ॥ २७ ॥

'सर्वे' निरवशेषा• 'ते' क्रियादिवादिन 'विदिता ' ज्ञाता मम, यथाऽमी 'मिच्छद्दिट्ठि'त्ति मिथ्या–विपरीता

पडिक्कमामि पसिणाणं, परमंतेहिं वा पुणो। अहो उट्ठिओ अहोरायं, इइ विज्जा तवं चेर ॥ ३१ ॥

प्रतीपं क्रामामि प्रतिक्रामामि–प्रतिनिवर्त्ते, केभ्यः ?–'पसिणाणं'ति सुब्व्यत्ययात् 'प्रश्नेभ्यः' शुभाशुभसूचकेभ्यो-
ऽङ्गुष्ठप्रश्नादिभ्यः, अन्येभ्यो वा साधिकरणेभ्यः, तथा परे–गृहस्थास्तेषां मन्त्राः परमन्त्राः–तत्कार्यालोचनरूपास्तेभ्यः,
'वा' समुच्चये 'पुनः' विशेषणे, विशेषेण परमन्त्रेभ्यः प्रतिक्रामामि, अतिसावद्यत्वात्तेषां, सोपस्कारत्वात्सूत्रस्यामु-
नाऽभिप्रायेण यः संयमं प्रत्युत्थानवान् सः 'अहो' इति विस्मये 'उत्थितः' धर्मं प्रत्युद्यतः, कश्चिदेव हि महात्मैवंविधः
संभवति 'अहोरात्रम्' अहर्निशम् 'इति' इत्येतदनन्तरोक्तं 'विज्ज'त्ति विद्वान् जानन् 'तवं'ति अवधारणफलत्वाद्वा-
क्यस्य तप एव न तु प्रश्नादि 'चरेः' आसेवस्वेति सूत्रार्थः ॥ पुनस्तत्स्थिरीकरणार्थमाह—

जं च मे पुच्छसी काले, सम्मं सुद्धेण (बुद्धेण) चेयसा। ताइं पाउकरे बुद्धे, तं नाणं जिणसासणे ॥३२॥

यच्च 'मे' इति मां 'पृच्छसि' प्रश्नयसि 'काले' प्रस्तावे 'सम्यग्बुद्धेन' अविपरीतबोधवता 'चेतसा' चित्तेन, लक्षणे
तृतीया, 'ता' इति सूत्रत्वात्तत् 'पाउकरे'त्ति 'प्रादुष्करोमि' प्रकटीकरोमि प्रतिपादयामीतियावत्, 'बुद्धः' अवगत-
सकलवस्तुतत्त्वः, कुतः पुनर्बुद्धोऽस्यत आह–'तदि'ति यत्किञ्चिदिह जगति प्रचरति ज्ञानं–यथानिधवस्त्ववबोध-
रूपं तज्जिनशासनेऽस्तीति गम्यते, ततोऽहं तत्र स्थित इति तत्प्रसादाद्बुद्धोऽस्मीत्यभिप्रायः, इह च यतस्त्वं सम्य-
ग्बुद्धेन चेतसा पृच्छस्यतः प्रतिक्रान्तप्रश्नादिरप्यहं यत्पृच्छसि तत्प्रादुष्करोमीत्यतः पृच्छ यथेच्छमितीदम्पर्यार्थः ।

येन कालेन, तत्पल्योपममुच्यते ॥ २ ॥" इति वचनाद्वर्षशतै केशोद्धारहेतुभिरुपमा अर्थात्पल्यविषया यस्या सा वर्षशतोपमा, द्विविधाऽपि स्थिति , सागरोपमस्यापि पल्योपमनिष्पाद्यत्वात्, तत्र मम महापाली दिव्या भवस्थितिरासीदित्युपस्कार , अतश्चाह वर्षशतोपमायुरभूवमिति भाव । 'से' इत्यथ स्थितिपरिपालनादनन्तर 'च्युत ' भ्रष्ट 'ब्रह्मलोकात्' पञ्चमकल्पात् 'मानुष्य' मनुष्यसम्बन्धिन 'भव' जन्म 'आगत' आयात । इत्थमात्मनो जातिस्मरणलक्षणमतिशयमाख्यायातिशयान्तरमाह—आत्मनश्च परेषा वा 'आयु ' जीवित 'जाने' अवबुध्ये 'यथा' येन प्रकारेण स्थितमिति गम्यते 'तथा' तेनैव प्रकारेण न त्वन्यथेत्यभिप्राय , इति सूत्रद्वयार्थ ॥ इत्थ प्रसङ्गत परितोषतश्चापृष्टमपि स्ववृत्तान्तमावेद्योपदेष्टुमाह—

नाणा रुइ च छद च, परिवज्जिज्ज सजओ । अणट्ठा जे अ सव्वत्था, इइ विज्जामणुसचरे ॥ ३० ॥

'नाने' त्यनेकधा 'रुचि च' प्रक्रमात्क्रियावाद्यादिमतविषयमभिलाष 'छन्दश्च' स्वमतिकल्पितमभिप्रायम्, इहापि नानेति सम्बन्धादनेकविध 'परिवर्जयेत्' परित्यजेत् 'सयत ' यति । तथा 'अनर्था ' अनर्थहेतवो ये च 'सर्वार्था ' अशेषहिंसादयो गम्यमानत्वात्तान् वर्जयेदिति सम्बन्ध , यद्वा 'सव्वत्थे'त्याकारस्यालाक्षणिकत्वात्सर्वत्र क्षेत्रादावनर्था इति—निष्प्रयोजना ये च व्यापारा इति गम्यते, तान् परिवर्जयेत्, 'इती' त्येवरूपा 'विद्या' सम्यग्ज्ञानरूपामन्विति—लक्षीकृत्य 'सचरे ' त्व सम्यक् सयमाध्वनि याया इति सूत्रार्थ ॥ अन्यच्च—

चक्कवट्टी महिड्ढीओ। पव्वज्जमब्भुवगओ, मघवं नाम महाजसो ॥ ३६ ॥ सणंकुमारो मणुस्सिंदो, चक्कवट्टी महिड्ढीओ। पुत्तं रज्जे ठवित्ता णं, सोऽवि राया तवं चरे ॥ ३७ ॥ चइत्ता भारहं वासं, चक्कवट्टी महिड्ढीओ। संती संतिकरो लोए, पत्तो गइमणुत्तरं ॥३८॥ इक्खागरायवसहो, कुंथूनाम नरेसरो। विक्खायकित्ती धिइमं, मुक्खं गओ अणुत्तरं ॥ ३९ ॥ सागरंतं जहित्ता णं, भरहवासं नरेसरो। अरो अ अरयं पत्तो, पत्तो गइमणुत्तरं ॥ ४० ॥ चइत्ता भारहं वासं, चक्कवट्टी महिड्ढीओ। चिच्चा य उत्तमे भोए, महापउमो दमं चरे ॥ ४१ ॥ एगच्छत्तं पसाहित्ता, महिं माणनिसूरणो। हरिसेणो मणुस्सिंदो, पत्तो गइमणुत्तरं ॥ ४२ ॥ अन्निओ रायसहस्सेहिं, सुपरिच्चाई दमं चरे। जयनामो जिणक्खायं, पत्तो गइमणुत्तरं ॥ ४३ ॥ दसण्णरज्जं मुइयं, चइत्ता णं मुणी चरे। दसण्णभद्दो निक्खंतो, सक्खं सक्केण चोइओ ॥४४॥ नमी नमेइ अप्पाणं, सक्खं सक्केण चोइओ। जहित्तो रज्जं वइदेही, सामन्ने पज्जुवट्ठिओ। (प्रक्षिप्ता)। करकंडू कलिंगाणं, पंचालाण य दुम्मुहो। णमी राया विदेहाणं, गंधाराण य नग्गई ॥ ४५ ॥ एए नरिंदवसभा, निक्खंता जिणसासणे। पुत्ते रज्जे ठवित्ता णं,

---

१ नमिप्रव्रज्याध्ययनगतेयं, अन्याख्यानं अप्रेतनाया अपि परं सूत्राणि सप्तदश इति सप्तदशसूत्रार्थ इति चाशान्त्यभागयोः पाठात् अवश्यं अत्र गाथाः सप्तदश प्रायाः,नम्यधिकारश्चाप्रेतन्यामपि,निर्युक्तौ च नवमाध्ययने इयमिति युक्तियुक्तं मूले उच्चारणमस्या अत्रेति एषैव प्रक्षिप्ताऽत्रेति २ चइऊण गेहं प्र० नमिप्रव्रज्याध्ययने च

अथवाऽत एव लक्ष्यते यथा 'अप्पणो य परेसि च' इत्यादिना तस्यायुर्विज्ञतामवगम्य सञ्जयमुनिनाऽसौ पृष्ट कियममायुरिति, ततोऽसौ प्राह—यच्च त्वं मा कालविषय पृच्छसि तत्प्रादुष्कृतवान् 'बुद्ध' सर्वज्ञोऽत एव तज्ज्ञान जिनशासने व्यवच्छेदफलत्वाज्जिनशासन एव न त्वन्यस्मिन् सुगतादिशासने,अतो जिनशासन एव यत्नो विधेयो येन यथाऽह जानामि तथा त्वमपि जानीषे, शेष प्राग्वदिति सूत्रार्थ ॥ पुनरुपदेष्टुमाह—

किरिय च रोअए धीरो, अकिरिय परिवज्जए । दिट्ठीए दिट्ठिसंपन्नो, धम्म चरसु दुच्चर ॥ ३३ ॥

'क्रिया च' अस्ति जीव इत्यादिरूपा सदनुष्ठानात्मिका वा 'रोचयेत्' तथा तथा भावनातो यथाऽसावात्मने रुचिता जायते तथा विदध्यात् 'धीर' मिथ्यादृग्भिरक्षोभ्य, तथा 'अक्रिया' नास्त्यात्मेत्यादिका मिथ्यादृक्परिकल्पित-तत्तदनुष्ठानरूपा वा 'परिवर्जयेत्' परिहरेत्, ततश्च 'दृष्टया' सम्यग्दर्शनात्मिकया हेतुभूतया 'दिट्ठिसपन्नो'त्ति "धीर्दृष्टि शेमुषी धिषणा" इति शाब्दिकश्रुतेर्दृष्टि —बुद्धि, सा चेह प्रस्तावात्सम्यग्ज्ञानात्मिका तया सपन्नो—युक्तो दृष्टिसपन्न, एव च सम्यग्दर्शनज्ञानान्वित सन् 'धर्म' चारित्रधर्म 'चर' आसेवस्व 'सुदुश्चरम्' अत्यन्तदुरनु-ष्ठेयमिति सूत्रार्थ ॥ पुन क्षत्रियमुनिरेव सञ्जयमुनि महापुरुषोदाहरणै स्थिरीकर्त्तुमाह—

एय पुण्णपय सुच्चा, अत्थधम्मोवसोहिय । भरहोऽवि भारह वास, चिच्चा कामाइ पव्वए ॥ ३४ ॥ सगरोऽवि सागरत, भरहवास नराहिवो । इस्सरिय केवल हिच्चा, दयाए परिनिव्वुडे ॥ ३५ ॥ चइत्ता भारह वास,

भोगानिति, पुनस्त्यक्त्वेत्यभिधानं भिन्नवाक्यत्वादपौनरुक्त्यं, 'महापद्मः' महापद्मनामा 'चरे'त्ति आचरत् ॥ तथा एकं छत्रं—नृपतिचिह्नमस्यामित्येकच्छत्रां तां, कोऽर्थः ?—अविद्यमानद्वितीयनृपतिं 'महीं' पृथ्वीं 'प्रसाध्य' वशीकृत्येति सम्बन्धः, 'माणनिसूरणो'त्ति दृप्तारातिहङ्कारविनाशकः 'मनुष्येन्द्रः' इति चक्री । तथा 'अन्नितो'त्ति 'अन्वितः' युक्तः 'सुपरिच्चाइ'त्ति सुष्ठु—शोभनेन प्रकारेण राज्यादि परित्यजतीत्येवंशीलः सुपरित्यागी दमं जिनाख्यातमिति सम्बन्धः, 'चरि'त्ति अचारीच्चरित्वा च जयनामा चक्रीति शेषः प्राप्तो गतिमनुत्तराम् ॥ तथा दशार्णो नाम देशस्तद्राज्यं—तदाधिपत्यं 'मुदितं' सकलोपद्रवविरहितं प्रमोदवत् त्यक्त्वा 'णः' प्राग्वत् 'चरे'त्ति अचारीत्, अप्रतिबद्धविहारतया विहृतवानित्यर्थः, साक्षाच्छक्रेण 'चोदितः' अधिकविभूतिदर्शनेन धर्मं प्रति प्रेरितः ॥ तथा 'निष्क्रान्ताः' प्रव्रजिता निष्क्रम्य च 'श्रामण्ये' श्रमणभावे 'पर्युपस्थिताः' तदनुष्ठानं प्रत्युद्यता अभूवन्निति शेषः ॥ तथा सौवीरेषु राजवृषभः—तत्कालभाविनृपतिप्रधानत्वात्सौवीरराजवृषभः 'चेच्च'त्ति त्यक्त्वा राज्यमिति शेषः प्राग्वत्,'मुनिः' त्रैकाल्यावस्थावेदी सन् 'चरे'त्ति अचारीत्, कोऽसौ ?—'उदायणो'त्ति उदायननामा प्रव्रजितः, चरित्वा च किमित्याह—प्राप्तो गतिमनुत्तराम् ॥ 'तथैव' तेनैव प्रकारेण 'काशिराजः' काशिमण्डलाधिपतिः श्रेयसि—अतिप्रशस्ये सत्ये—संयमे पराक्रमः—सामर्थ्यं यस्यासौ श्रेयः—सत्यपराक्रमः 'पहणे'त्ति प्राहन्—प्रहतवान् कर्म महावनमिवातिगहनतया कर्ममहावनम् ॥ तथैव 'विजयः' इति विजयनामा 'अणट्ठा कित्ति पवए'त्ति, आर्षत्वाद् अनार्त्तः—आर्त्तध्यानविकलः कीर्त्या—

सामन्ने पज्जुवट्ठिआ ॥ ४६ ॥ सोवीररायवसभो, चइत्ता ण मुणीचरे । उद्दायणो पव्वइओ, पत्तो गइमणुत्तर ॥ ४७ ॥ तहेव कासिरायावि, सेओ सच्चपरक्कमो । कामभोगे परिच्चज्ज, पहणे कम्ममहावण ॥ ४८ ॥ तहेव विजओ राया, अणट्ठा कित्तिपव्वए । रज्ज तु गुणसमिद्ध, पयहित्तु महायसो ॥ ४९ ॥ तहेवुग्ग तव किच्चा, अव्वक्खित्तेण चेयसा । महाबलो रायरिसी, अद्दाय सिरसा सिर ॥ ५० ॥

सूत्राणि सप्तदश । 'एतत्' अनन्तरोक्त पुण्यहेतुत्वात्पुण्य तच्च तत् पद्यते–गम्यतेऽनेनार्थ इति पद च पुण्यपद, पुण्यस्य वा पद–स्थान पुण्यपद–क्रियादिवादिस्वरूपनानारुचिपरिवर्जनाद्यावेदक शब्दसदर्भ 'श्रुत्वा' आकर्ण्य, अर्थ्यत इत्यर्थ – स्वर्गापवर्गादि धर्म – तदुपायभूत श्रुतधर्मादिस्ताभ्यामुपशोभित–विभूषितमर्थधर्मोपशोभित 'भरतोऽपि' भरतनामा चक्रवर्त्यपि, अपिशब्द उत्तरापेक्षया समुच्चये 'भारह'ति प्राकृतत्वाद्भारत 'वर्ष' क्षेत्र 'त्यक्त्वा' हित्वा 'कामाइ'ति चस्य गम्यमानत्वात् 'कामांश्च' विषयान् प्राकृतत्वान्नपुसकनिर्देश , पव्वए'त्ति प्राव्राजीत् ॥ 'सगरोऽवी'' त्यादि सर्वमपि स्पष्ट, नवर 'सागरान्त' समुद्रपर्यन्त दिक्त्रये, अन्यत्र तु हिमवत्पर्यन्तमित्युपस्कार , तथा 'ऐश्वर्यम्' आज्ञैश्वर्यादि 'केवल' परिपूर्णमनन्यसाधारण वा 'दयया' सयमेन 'परिनिर्वृत.' इहैव विध्यातकषायानलत्वाच्छीतीभूतो मुक्तो वा ॥ तथा 'अरो य'त्ति अरनामा च तीर्थकृच्चक्रवर्त्ती 'अरय'ति रतस्य रजसो वाऽभावरूपमरतमरजो वा, पाठान्तरतोऽरस वा—श्रृङ्गारादिरसाभाव, प्राप्त सन् 'प्राप्त' गतो गतिमनुत्तरा–मुक्तिमित्यर्थ ॥ तथा त्यक्त्वोत्तमान्

कुवादिपरिकल्पितक्रियावाद्यादिदर्शनपरिहारतो जिनशासनं एव निश्चितमतयोऽभूवंस्तथा भवताऽपि धीरेण सताऽस्मिन्नेव निश्चितं चेतो विधेयमिति सूत्रार्थः ॥ किञ्च—

अच्चंतनियाणखमा, एसा मे भासिया वई। अतरिंसु तरंतेगे, तरिस्संति अणागया ॥ ५२ ॥

अत्यन्तम्—अतिशयेन निदानैः—कारणैः, कोऽर्थः ?—हेतुभिर्न तु परप्रत्ययेनैव, क्षमा—युक्ताऽत्यन्तनिदानक्षमा, यद्वा निदानं—कर्ममलशोधनं तस्मिन् क्षमा—समर्था 'एषा' अनन्तरोक्ता पाठान्तरतः 'सर्वा' अशेषा सत्या वा 'मे' मया 'भाषिता' उक्ता 'वाग्' वाणी जिनशासनमेवाश्रयणीयमित्येवंरूपा, अनयाऽङ्गीकृतया 'अतीर्षुः' तीर्णवन्तः तरन्ति 'एके' अपरे, पाठान्तरतोऽन्ये, सम्प्रत्यपि तत्कालापेक्षया क्षेत्रान्तरापेक्षया वेत्थमभिधानमिति, तथा तरिष्यन्ति 'अनागताः' भाविनो, भवोदधिमिति सर्वत्र शेष इति सूत्रार्थः ॥ यतश्चैवमतः—

कहं धीरे अहेऊहिं, अद्दायं परियावसे। सव्वसंगविणिम्मुक्को, सिद्धे भवइ नीरए ॥ ५३ ॥ त्तिबेमि ॥

॥ संजइज्जं १८ ॥

कथं धीरोऽहेतुभिः 'आदाय' गृहीत्वा, क्रियादिवादिमतमिति शेषः 'पर्यावसेत्' परीति—सर्वप्रकारमावसेत्—तत्रैव निलीयेत, नैव तत्राभिनिविष्टो भवेदिति भावः, पठ्यते च—'अत्ताणं परियावसि'त्ति आत्मानं पर्यावासयेद्, अहेतुभिः कथमात्मानमहेत्वावासं कुर्यात् ?, नैव कुर्यादित्यर्थः। किं पुनरित्थमकरणे फलमित्याह—सर्वे—निरवशेषाः सजन्ति—

दीनानाथादिदानोत्थया प्रसिद्ध्योपलक्षित सन्, यद्वा अनार्त्तो—सकलदोपविगमतोऽवाधिता कीर्त्तिरस्येत्यनार्त्त-कीर्त्ति सन्, पठ्यते च 'आणट्ठाकिइपवइ'त्ति, आना—आगमोऽर्थशब्दस्य हेतुवचनस्यापि दर्शनादर्थो—हेतुरस्या सा तथाविधा आकृतिरर्थान्मुनिवेपात्मिका यत्र तदानार्थाकृति यथा भवत्येव प्राव्राजीद्गुणै—राज्यगुणै शब्दादि-भिर्वा समृद्ध—सपन्न गुणसमृद्ध, पूर्वत्र तुशब्दस्यापिशब्दार्थत्वाद्व्यवहितसम्बन्धत्वाच्च गुणसमृद्धमपि । तथा 'अहाय'त्ति आर्पत्वाद् 'आदित' गृहीतवांस्तद्गमनेन स्वीकृतवान् शिरसेव शिरसा शिर प्रदानेनेव जीवितनिरपेक्षमिति योऽर्थ, 'शिर'ति शिर इव शिर सर्वजगदुपरिवर्त्तितया मोक्ष, पठ्यते च—'आदाय सिरसो सिरि'ति, अत्र च 'आदाय' गृहीत्वा 'शिर श्रिय' सर्वोत्तमा केवललक्ष्मी परिनिर्वृत इति शेप, इति सप्तदशसूत्रार्थ ॥ इत्थ महापुरुपो-दाहरणैर्ज्ञानपूर्वकक्रियामाहात्म्यमभिधायोपदेष्टुमाह—

कह धीरो अहेऊहिं, उम्मत्तो व्व महिं चरे ?। एए विसेसमादाय, सूरा दढपरक्कमा ॥ ५१ ॥

'कथ' केन प्रकारेण 'धीर' उक्तरूप 'अहेतुभि' क्रियावाद्यादिपरिकल्पितकुहेतुभि 'उन्मत्त इव' ग्रहगृहीत इव तात्त्विकवस्त्वपलपनेनालजालभापितया 'महीं' पृथ्वी 'चरेत्' भ्रमेत् ?, नैव चरेदित्यर्थ, किमिति ?, ये 'एते' अनन्तरोदिता भरतादय 'विशेप' विशिष्टता गम्यमानत्वान्मिथ्यादर्शनेभ्यो जिनशासनस्य 'आदाय' गृहीत्वा मनसि सम्प्रधार्येतियावत् शूरा दृढपराक्रमा एतदेवाश्रितवन्त इति शेप, अयमभिप्राय —यथैते महात्मानो विशेपमादाय

## अथ एकोनविंशं मृगापुत्रीयमध्ययनम् ।



व्याख्यातमष्टादशमध्ययनम्, अधुनैकोनविंशमारभ्यते, अस्य चायमभिसम्बन्धः—इहानन्तराध्ययने भोगर्द्धित्याग उक्तः, तस्माच्च श्रामण्यमुपजायते, तच्चाप्रतिकर्मतया प्रशस्ततरं भवतीत्यप्रतिकर्मतोच्यत इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य तु चतुरनुयोगद्वारचर्चा प्राग्वद्यावन्नामनिष्पन्ननिक्षेपे मृगापुत्रीयमिति नामातो मृगायाः पुत्रस्य च निक्षेपमाह निर्युक्तिकृत्—

निक्खेवो अ मिआए चउक्कओ दुविहो० ॥ ४०५ ॥ जाण० ॥ ४०६ ॥

मिअआउनामगोयं वेयंतो भावओ मिओ होइ । एमेव य पुत्तस्सवि चउक्कओ होइ निक्खेवो ॥४०७॥

गाथात्रयं प्राग्वत्, नवरं मृगाभिलापेन नेयम् ॥ नामनिरुक्तिमाह—

मिगदेवीपुत्ताओ बलसिरिनामा समुट्ठियं जम्हा । तम्हा मिगपुत्तिज्जं अज्झयणं होइ नायव्वं ॥४०८॥

मृगा—नाम्ना देवी—अग्रमहिषी तस्याः पुत्रः—सुतो मृगादेवीपुत्रस्तस्माद्बलश्रीनाम्नः 'समुत्थितं' समुत्पन्नं यस्मात्तस्मान्मृगापुत्रीयं—मृगापुत्रीयनामकं मृगाशब्देन मृगादेव्युक्तेरध्ययनमिदमिति शेषः, भवति 'ज्ञातव्यम्' अवबोद्धव्य-

कर्मणा सवध्यन्ते जन्तव एभिरिति सङ्गा.-द्रव्यतो द्रविणादयो भावतस्तु मिथ्यात्वरूपत्वादेत एव क्रियादिवादास्तै-र्विनिर्मुक्तो-विरहित सर्वसङ्गविनिर्मुक्त सन् सिद्धो भवति नीरजा , तदनेनाहेतुपरिहारस्य सम्यग्ज्ञानहेतुत्वेन सिद्धत्व फलमुक्तमिति सूत्रार्थं ॥ इत्थ तमनुशास्य गतो विवक्षित स्थान क्षत्रिय , शेषसञ्जयवक्तव्यता त्वाह निर्युक्तिकृत्—

काऊण तवच्चरण वहूणि वासाणि सो धुयकिलेसो । त ठाण सपत्तो ज सपत्ता न सोयति ॥४०४॥

सुगमैव, नवर धुता -अपनीता क्लिश्यन्त्येषु सत्सु जन्तव इति क्लेशा -रागादयो येन स धुतक्लेशो, यत्सप्राप्ता न शोचन्ते, शोकहेतुशारीरमानसदु खाभावादिति गाथार्थ ॥ 'इति ' परिसमाप्तौ, नवीमीति पूर्ववत् नयाश्च ॥ इति श्रीशान्त्याचार्यकृताया शिष्यहिताया मुत्तराध्ययनटीकाया सञ्जयीयनामाष्टादशमध्ययन समाप्तमिति ॥

इति श्रीशान्त्याचार्यकृतायामुत्तराध्ययनटीकाया शिष्यहिताया अष्टादशमध्ययन समाप्तमिति ॥

सुरः 'दोगुंदगो चेव'त्ति 'चः' पूरणे दोगुन्दग इव, दोगुन्दगाश्च त्रायस्त्रिंशाः, तथा च वृद्धाः—"त्रायस्त्रिंशा देवा निच्चं भोगपरायणा दोगुंदुगा इति भण्णंति", 'निच्चं' सदा 'मुदितमानसः' हृष्टचित्तः ॥ स चैवं क्रीडन् कदाचिन्मणयश्च—विशिष्टमाहात्म्याश्चन्द्रकान्तादयो रत्नानि च—गोमेयकादीनि मणिरत्नानि तैरुपलक्षितं कुट्टिमतलं यस्मिन्नसौ मणिरत्नकुट्टिमतलः, गमकत्वाद्बहुव्रीहिः, तस्मिन्, आलोक्यन्ते दिशोऽस्मिन् स्थितैरित्यालोकनं प्रासादे प्रासादस्य वाऽऽलोकनं प्रासादालोकनं तस्मिन्-सर्वोपरिवर्त्तिचतुरिकारूपे गवाक्षे वा स्थितः—उपविष्टः 'आलोकते' कुतूहलतः पश्यति, कानि?—'नगरस्य' तस्यैव सुग्रीवनाम्नः सम्बन्धीनि 'चतुष्कत्रिकचत्वराणि' प्रतीतान्येवेति सूत्रचतुष्टयार्थः ॥ ततः किमित्याह—

अह तत्थ अइच्छंतं, पासई समणसंजयं । तवनियमसंजमधरं, सीलड्ढं गुणआगरं ॥५॥ तं पेहई मियापुत्ते, दिट्ठीए अणिमिसाइ उ । कहिं मन्नेरिसं रूवं, दिट्ठपुव्वं मए पुरा ? ॥ ६ ॥ साहुस्स दरिसणे तस्स, अज्झवसाणंमि सोहणे । मोहं गयस्स संतस्स, जाईसरणं समुप्पन्नं ॥ ७ ॥ देवलोगचुओ संतो, माणुसं भवमागओ । सन्निनाणसमुप्पन्ने, जाइं सरइ पुराणयं ॥ (प्र०)॥ जाईसरणे समुप्पण्णे, मियापुत्ते महिड्ढिए । सरइ पोराणिअं जाइं, सामण्णं च पुराकयं ॥ ८ ॥

'अथ' अनन्तरं 'तत्र' इति तेषु चतुष्कत्रिकचत्वरेषु 'अतिच्छंत'न्ति अतिक्रामन्तं पश्यति श्रमणसंयतमिति श्रमणस्य शाक्यादेरपि सम्भवात्तद्व्यवच्छेदार्थं संयतग्रहणं, तपश्च—अनशनादि नियमश्च—द्रव्याद्यभि-

मिति गाथार्थ ॥ गतो नामनिष्पन्ननिक्षेप, सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपस्यावसर, स च सूत्रे सति भवति, अत सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

सुग्गीवे नयरे रम्मे, काणणुज्जाणसोहिए। राया बलभद्दुत्ति, मिया तस्सग्गमाहिसी ॥ १ ॥ तेसिं पुत्ते बलसिरी, मियापुत्तत्ति विस्सुए। अम्मापिऊणं दइए, जुवराया दमीसरे ॥ २ ॥ नंदणे सो उ पासाए, कीलए सह इत्थिहिं। देवो दोगुंदगो चेव, निच्चं मुइयमाणसो ॥ ३ ॥ मणिरयणकुट्टिमतले, पासायालोअणे ठिओ। आलोएइ नगरस्स, चउक्कतियचच्चरे ॥ ४ ॥

'सुग्रीवे' सुग्रीवनाम्नि नगरे 'रम्ये' रमणीये कानने—बृहद्वृक्षाश्रयैर्वनैरुद्याने—आरामै क्रीडावनैर्वा शोभिते—राजिते काननोद्यानशोभिते 'राजा' नृपो बलभद्र इति नाम्नेति शेष, 'मृगा' मृगानाम्नी 'तस्य' इति बलभद्रस्य राज्ञ 'अग्गमहिसि'त्ति 'अग्रमहिषी' प्रधानपत्नी ॥ 'तयो' राज्ञो पुत्र 'बलश्री' बलश्रीनामा मातापितृविहितनाम्ना लोके च मृगापुत्र इति 'विश्रुत' विख्यात, 'अम्मापिऊण'ति अम्बा(म्बा)पित्रो 'दयित' वल्लभ 'युवराज' कृतयौवराज्याभिषेको दमिन—उद्धतदमनशीलास्ते च राजानस्तेषामीश्वर—प्रभुर्दमीश्वर, यद्वा दमिन—उपशमिनस्तेषा सहजोपशमभावत ईश्वरो दमीश्वर, भाविकालापेक्ष चैतत् ॥ 'नन्दने' लक्षणोपेततया समृद्धिजनके 'स' मृगापुत्र 'तु' वाक्यान्तरोपन्यासार्थ प्रासादे 'क्रीडति' विलसति 'सह' सम 'स्त्रीभि' प्रमदाभि, क इव ?—'देव'

अह पिच्छइ रायपहे वोलंतं समणसंजयं तत्थ । तवनियमसंजमधरं सुअसागरपारगं धीरं ॥ ४११ ॥
अह देहइ रायसुओ तं समणं अणमिसाइ दिट्ठीए । कहि एरिसयं रूवं दिट्ठं मन्ने मए पुव्वं ? ॥४१२॥
एवमणुचिंतयंतस्स सन्नीनाणं तहिं समुप्पन्नं । पुव्वभवे सामन्नं मएवि एवं कयं आसि ॥ ४१३ ॥

गाथासप्तकं स्पष्टमेव, नवरं 'धृतिमान्' चितस्वास्थ्यवान् 'वज्रऋषभ'मिति अर्थाद्वज्रऋषभनाराचं संहननं यस्य स तथा 'चरमभवधारी' पर्यन्तजन्मवर्त्ती, तथा 'उण्णंदमाणहियओ'त्ति, उत्—प्राबल्येन नन्दद्—आनन्दं गच्छत् हृदयं—मनो यस्य स तथा, प्राकृतत्वाच्छतृविषये शानच्, तथा 'रुन्दान्' विस्तीर्णान् 'मार्गान्' विपणिमार्गादीन् गुणैः—ऋजुत्वसमत्वादिभिः समग्राः–परिपूर्णा गुणसमग्रास्तान्, तथा श्रुतसागरपारगं धीरमिति तपोनियमसंयमधरमित्यस्य सूत्रपदस्य हेतुदर्शनद्वारतस्तात्पर्यव्याख्यानम्, अनेनैव च भावभिक्षुत्वमुपदर्शितम्, अत एवान्यस्यैवं विशेषणायोगाच्छ्रमणसंयतमित्याह, सञ्ज्ञिज्ञानं चेह सम्यग्दृशः स्मृतिरूपमतिभेदात्मकमिति गाथासप्तकावयवार्थः ॥ सम्प्रति यदसावुत्पन्नजातिस्मरणः कृतवांस्तदाह—

विसएसु अरज्जंतो, रज्जंतो संजमंमि य । अम्मापियरं उवागम्म, इमं वयणमब्बवी ॥ ९ ॥

'विसएहिं'त्ति सुब्व्यत्ययाद् 'विषयेषु' मनोज्ञशब्दादिषु 'अरजन्' अभिष्वङ्गमकुर्वन्, क्व ?—'संयमे' उक्तरूपे

ग्रहात्मक सयमश्च–उक्तरूपस्तान् धारयति तपोनियमसयमधरस्तम्, अत एव शीलम्—अष्टादशशीलाङ्गसहस्ररूप तेनाढ्य–परिपूर्णं शीलाढ्य, तत एव च गुणाना–ज्ञानादीनामाकर इव गुणाकरस्त ॥ 'तमि'त्ति श्रमणसयत 'पेहइ'त्ति पश्यति 'मृगापुत्र' युवराज 'दृष्ट्वा' दृशा 'अणमिसाइ उ'त्ति तुशब्दस्यैवकारार्थत्वादविद्यमाननिमेषयैव, क्व 'मन्ये' जाने 'ईदृशम्' एवविध 'रूपम्' आकारो दृष्टपूर्वम् अवलोकित मया 'पुरा' इति पूर्वजन्मनि ?, शेष प्रतीतमेव, नवरम् 'अध्यवसाने' इत्यन्त करणपरिणामे 'शोभने' प्रधाने क्षायोपशमिकभाववर्त्तिनीतियावत् 'मोह' क्वेद मया दृष्ट क्वेदमित्यतिचिन्तातश्चित्तसङ्घट्टजमूर्च्छात्मक 'गतस्य' प्राप्तस्य सत ॥ तथा 'सरति'त्ति स्मरति पौराणिकी 'जाति' जन्म 'श्रामण्य च' श्रमणभाव 'पुराकृत' जन्मान्तरानुष्ठितमिति सूत्रचतुष्टयार्थ ॥ एतदेवातिस्पष्टताहेतोरनुगदितुमाह निर्युक्तिकृत्—

सुग्गीवे नयरंमि अ राया नामेण आसि बलभद्दो। तस्सासि अग्गमहिसी देवी उ मिगावई नाम ॥४०७॥
तेसिं दुण्हवि पुत्तो आसी नामेण बलसिरी धीमं। वयरोसभसंघयणो जुवराया चरमभवधारी ॥४०८॥
उन्नदमाणहिअओ पासाए नंदणंमि सो रम्मे। किलई पमदासहिओ देवो दुगुंदगो चेव ॥ ४०९ ॥
अह अन्नया कयाई पासायतलंमि सो ठिओ संतो। आलोएइ पुरवरे रुंदे मग्गे गुणसमग्गे ॥ ४१० ॥

सो लद्धबोहिलाभो चलणे जणगाण वंदिउं भणइ। वीसज्जिउमिच्छामो काहं समणत्तणं ताया !॥४१४॥

'सः' इति मृगापुत्रो लब्धः–प्राप्तो बोधिलाभो—जिनधर्मप्राप्तिरूपो येन स तथा, 'चरणान्' पादान् 'जनकयोः' मात्रापित्रोर्वन्दित्वा भणति, यथा 'विसर्जयितुम्' मुत्कलयितुं वयमात्मानमिति गम्यते 'इच्छामः' अभिलपामः, किमिति ?, यतः 'काहं'ति वचनव्यत्ययात्करिष्यामः 'श्रमणत्वं' प्रव्रज्यां 'तात !' इति पितः !, उपलक्षणत्वान्मातश्चेति गाथार्थः ॥ इदानीं तौ कदाचिद्भोगैरुपनिमन्त्रयेयातामित्यभिप्रायतो यत्तेनोक्तं तत्सूत्रकृदाह—

अम्मताय ! मए भोगा, भुत्ता विसफलोवमा । पच्छा कडुयविवागा, अणुवंधदुहावहा ॥ ११ ॥ इमं सरीरं अणिच्चं, असुइं असुइसंभवं । असासयावासमिणं, दुक्खकेसाण भायणं ॥ १२ ॥ असासए सरीरंमि, रइं नोवलभामहं । पच्छा पुरा व चइयव्वे, फेणवुव्वुयसंनिभे ॥ १३ ॥

सूत्रत्रयं प्रतीतार्थमेव, नवरं विषमिति—विषवृक्षस्तस्य फलं विषफलं तदुपमाः, तदुपमत्वमेव भावयितुमाह—पश्चात्कट्टुक इव कटुकोऽनिष्टत्वेन विपाको येषां ते तथा, आपात एव मधुरा इति भावः, 'अनुबन्धदुःखावहाः' अनवच्छिन्नदुःखदायिनः, यथा हि विषफलमास्वाद्यमानमादौ मधुरमुत्तरकालं च कटुकविपाकं सातत्येन च दुःखोपनेतृ एवमेतेऽपीति, किञ्च—अमी कामाः स्पर्शप्रधानाः, स्पर्शश्च शरीराश्रयः, तच्चेदं शरीरम् 'अनित्यम्' अशाश्वतम् 'अशुचि' स्वाभाविकशौचरहितम् 'अशुचिसंभवम्' अशुचिरूपशुक्रशोणितोत्पन्नम्, अशाश्वतः—कथञ्चिद-

'च' पुनरर्थे 'अम्मापियर'ति अम्मा(म्बा)पितरौ 'उपागम्य' उपसृत्य 'इदम्' अनन्तरवक्ष्यमाण वचनम् 'अब्रवीत्' इत्याह, इति सूत्रार्थं ॥ किं तदब्रवीदित्याह—

सुआणि मे पंच महव्वयाणि, नरएसु दुक्खं च तिरिक्खजोणिसु ।
निव्विण्णकामो मि महण्णवाओ, अणुजाणह पव्वइस्सामि अम्मो ! ॥ १० ॥

'श्रुतानि' आकर्णितानि, अन्यजन्मनीत्यभिप्रायः, 'मे' मया 'पञ्च' इति पञ्चसङ्ख्यानि 'महाव्रतानि' हिंसाविरमणादीनि, तथा नरकेषु 'दुःखं च' असातमिहैव वक्ष्यमाणं 'तिरिक्खजोणिसु'त्ति चशब्दस्याप्रयुज्यमानस्यापि "अहरहर्नयमानो गामश्वं पुरुषं पशुम्" इत्यादाविव गम्यमानत्वात् तिर्यग्योनिषु च, सर्वत्र चायं न्यायो द्रष्टव्यः, उपलक्षणं चैतद् देवमनुष्यभवयोः, ततः किमित्याह—'णिव्विण्णकामोमि'त्ति 'निर्विण्णकामः' प्रतिनिवृत्ताभिलाषोऽस्म्यहं, कुतः ?—महार्णव इव महार्णवः—संसारस्तस्माद्, यतश्चैवमतः 'अनुजानीत' अनुमन्यध्वं, मामिति शेषः, 'पव्वइस्सामी'ति प्रव्रजिष्यामि 'अम्मो'त्ति पूज्यतरत्वाद्विशिष्टप्रतिबन्धास्पदत्वाच्च मातुरामन्त्रणं, यो हि भविष्यद्दुःखं नावैति तत्प्रतिकारहेतुं वा स कदाचिदित्थमेवासीत, अहं तूभयत्रापि विज्ञ इति कथं न दुःखप्रतीकारोपायभूता महाव्रतात्मिका प्रव्रज्या प्रतिपत्स्ये इति सूत्रगर्भार्थः ॥ अमुमेवार्थमनुवादतः स्पष्टयितुमाह निर्युक्तिकृत्—

मरणग्रस्ते' वार्द्धक्यमृत्युक्रोडीकृते, अनेन मानुपत्वासारत्वमेव भावितं, क्षणमपि 'न रमे' नाभिरतिं लभेऽहमिति । इत्थं मनुष्यभवस्यानुभूयमानत्वेन निर्वेदहेतुत्वमभिधाय सम्प्रति चतुर्गतिकस्यापि संसारस्य तदाह—'जम्म'मित्यादिना, अत्र च अहो इति सम्बोधने 'दुक्खो हु'त्ति दुःखहेतुरेव संसारो जन्मादिनिबन्धनत्वात्तस्य 'यत्र' यस्मिन् गतिचतुष्टयात्मके संसारे 'क्लिश्यन्ति' बाधामनुभवन्ति, जन्मादिदुःखैरेवेति गम्यते, 'जन्तवः' प्राणिनः, इह च दुःखानुभवाधारत्वेन संसारस्य दुःखहेतुत्वमिति भावः । तथा 'खेत्त'मित्यादिनेष्टवियोगोऽशरणत्वं च संसारान्निर्वेदहेतुरुक्तः, तथा किम्पाको—वृक्षविशेषस्तस्य फलान्यतीव सुस्वादानि, अनेन चोपसंहारसूत्रेणोदाहरणान्तरद्वारेण भोगदुरन्ततैव निर्वेदहेतुरुक्ता इति सूत्रचतुष्टयावयवार्थः ॥ इत्थं निर्वेदहेतुमभिधाय दृष्टान्तद्वयोपन्यासतः स्वाभिप्रायमेव प्रकटयितुमाह—

अद्धाणं जो महंतं तु, अपाहेज्जो पवज्जई । गच्छंतो से दुही होइ, छुहातण्हाइपीडिओ ॥ १८ ॥ एवं धम्मं अकाऊणं, जो गच्छइ परं भवं । गच्छंतो से दुही होई, वाहिरोगेहिं पीडिओ ॥ १९ ॥ अद्धाणं जो महंतं तु, सपाहेज्जो पवज्जई । गच्छंतो से सुही होइ, छुहातण्हाविवज्जिओ ॥ २० ॥ एवं धम्मंपि काऊणं, जो गच्छइ परं भवं । गच्छंते से सुही होइ, अप्पकम्मे अवेयणे ॥ २१ ॥ जहा गेहे पलित्तंमि, तस्स गेहस्स जो पहू । सारभंडाणि नीणेइ, असारं अवउज्झइ ॥ २२ ॥ एवं लोए पलित्तंमि, जराए मरणेण य । अप्पाणं तारइस्सामि, तुब्भेहिं अणुमन्निओ ॥ २३ ॥

वस्थितत्वेऽप्यनित्य आवास —प्रक्रमाज्जीवस्यावस्थान यस्मिन्नित्यशाश्वतावास, पुन 'इदमि'त्यभिधानमतीवासारत्वावेशसूचक, दु खम्—असातं तद्धेतव क्लेशा —ज्वरादयो रोगा दु खक्लेशा शाकपार्थिवादिवत्समासस्तेपा 'भाजन' स्थान, यतश्चैवमतोऽशाश्वते शरीरे 'रति' चित्तस्वास्थ्य 'नोपलभे' न प्राप्नोम्यह, भोगेपु सत्स्वपीति गम्यते, शरीराश्रयत्वात्तेपामिति भाव , शरीराशाश्वतत्वमेवाह–पश्चात्पुरा वा त्यक्तव्ये शरीरे इति प्रक्रम , तद्धि पश्चादिति भुक्तभोगावस्थाया वार्द्धक्यादौ, पुरा अभुक्तभोगिताया वा वाल्यादौ त्यज्यत इति, यद्वा पश्चादिति–यथास्थित्यायु क्षयोत्तरकाल पुरा वेत्युपक्रमहेतोर्वर्पशताद्यासकलितजीवितप्रमाणात्प्रागपि 'त्यक्तव्ये' अवश्यत्याज्ये 'फेनबुद्बुदसनिभे' क्षणदृष्टनष्टतया, अनेनाशाश्वतत्वमेव भावितमिति न पौनरुक्त्यमिति सूत्रत्रयार्थ ॥ एव भोगनिमन्त्रणपरिहारमभिधाय प्रस्तुतस्यैव ससारनिर्वेदस्य हेतुमाह—

माणुसत्ते असारम्मि, वाहीरोगाण आलए। जरामरणघत्थमि, खणपि न रमामह ॥ १४ ॥ जम्म दुक्ख जरा दुक्ख, रोगा य मरणाणि य। अहो दुक्खो हु ससारो, जत्थ कीसति जतुणो ॥ १५ ॥ खित्त वत्थु हिरण्ण च, पुत्तदार च बधवा। चइत्ता ण इम देह, गतव्वमवसस्स मे ॥ १६ ॥ जह किपागफलाण, परिणामो न सुदरो। एव भुत्ताण भोगाण, परिणामो न सुदरो ॥ १७ ॥

सूत्रचतुष्टय स्पष्ट, नवर व्याधय —अतीव बाधाहेतव कुष्ठादयो रोगा —ज्वरादयस्तेपाम् 'आलये' आश्रये 'जरा-

सव्वभूएसुं, सत्तुमित्तेसु वा जगे। पाणाइवायविरई, जावज्जीवाय दुक्करं॥ २५ ॥ निच्चकालऽप्पमत्तेणं, मुसा-
वायविवज्जणं। भासियव्वं हियं सच्चं, निच्चाउत्तेण दुक्करं ॥ २६ ॥ दंतसोहणमाइस्स, अदत्तस्स विवज्जणं।
अणवज्जेसणिज्जस्स, गिण्हणा अवि दुक्करं ॥२७॥ विरई अबंभचेरस्स, कामभोगरसन्नुणा। उग्गं महव्वयं बंभं,
धारेयव्वं सुदुक्करं ॥२८॥ धणधन्नपेसवग्गेसु, परिग्गहविवज्जणं। सव्वारंभपरिच्चागो, निम्ममत्तं सुदुक्करं ॥२९॥
चउव्विहेऽवि आहारे, राईभोयणवज्जणा। संनिहीसंचओ चेव, वज्जेयव्वो सुदुक्करं ॥ ३० ॥ छुहा तण्हा य
सीउण्हं, दंसमसगा य वेयणा। अक्कोसा दुक्खसिज्जा य, तणफासा जल्लमेव य ॥ ३१ ॥ तालणा तज्जणा
चेव, वहबंधपरीसहा। दुक्खं भिक्खायरिया, जायणा य अलाभया ॥ ३२ ॥ कावोया जा इमा वित्ती, केस-
लोओ अ दारुणो। दुक्खं बंभव्वयं घोरं, धारेउं अमहप्पणो ॥ ३३ ॥ सुहोइओ तुमं पुत्ता!, सुकुमालो
सुमज्झिओ। न हुसी पभू तुमं पुत्ता!, सामन्नमणुपालिया ॥ ३४ ॥ जावज्जीवमविस्सामो, गुणाणं तु महब्भरो।
गरुओ लोहभारु व्व, जो पुत्ता! होइ दुव्वहो ॥ ३५ ॥ आगासे गंगसोउ व्व, पडिसोउव्व दुत्तरो। बाहाहिं
सागरो चेव,तरियव्वो य गुणोयही ॥३६॥ वालुयाकवले चेव,निरस्साए उ संजमे। असिधारागमणं चेव, दुक्करं
चरिउं तवो ॥ ३७ ॥ अहीवेगंतदिट्ठीए, चरित्ते पुत्त! दुच्चरे। जवा लोहमया चेव, चावेयव्वा सुदुक्करं ॥ ३८ ॥
जहा अग्गिसिहा दित्ता, पाउं होइ सुदुक्करं। तह दुक्करं करेउं जे, तारुण्णे समणत्तणं ॥ ३९ ॥ जहा दुक्खं

॥४५५॥

सूत्रपञ्च प्रकटार्थमेव, केवलमत्र प्रथमसूत्रेण दृष्टान्त उक्त , अत्र च 'अध्वान' मार्गं पथि साधु पाथेय–सम्बलक तदस्याविद्यमान सोऽपाथेय 'प्रपद्यते' अङ्गीकुरुते, क्षुत्तृष्णापीडितत्व चेह दु खित्वभवने हेतु । द्वितीयसूत्रेण दार्ष्टान्तिकोपदर्शन, व्याधिरोगपीडितत्व चात्र दु खित्वभवने निमित्त, दारिद्र्यादिपीडोपलक्षणं चैतत् । उत्तरसूत्रद्वयेन चैतत्सूत्रद्वयोक्तस्यैवार्थस्य व्यतिरेक उक्त , तत्र सुखित्वे हेतु क्षुत्तृष्णाविवर्जितत्वमुक्तम् । 'धर्मं' पापविरतिरूपम् 'अपि' पूरणे 'कृत्वा' विधाय गच्छन्नुपलक्षणत्वाद्गतश्च 'स' इति धर्मकर्त्ता प्रक्रमात्पाथेयोपमधर्मसहित सुखी भवति, सुखित्वे चाल्पकर्मत्व हेतुरवेदनत्व च, अत्र च प्रस्तावात्कर्म पाप वेदना चासातरूपा गृह्यते, अनेन धर्म-कर्मकरणाकरणयोर्गुणदोपदर्शनाद्धर्मकरणाभिप्राय प्रकटित । 'जहे'त्यादिना च सूत्रद्वयेन तमेव दृढयति, अत्र च यथा सारभाण्डानि–महामूल्यवस्त्रादीनि 'णीणेइ'त्ति निष्काशयति 'असार' जरद्वस्त्रादि 'अवउज्झइ'त्ति अपोहति–त्यजति, एव 'लोके' जगति 'पलित्तमि'त्ति प्रदीप्त इव प्रदीप्ते अत्याकुलीकृते 'आतमानं' सारभाण्डतुल्य 'तारयिष्यामि' जरामरणप्रदीप्तलोकपार नेष्यामि, धर्मकरणेनेति प्रक्रम , असार तु कामभोगादि त्यक्ष्यामीति भाव , अनेन धर्मकरणे विलम्बासहिष्णुत्वमुक्त, युष्माभिरिति द्वित्वेऽपि पूज्यत्वाद् बहुवचनम्, 'अणुमन्निओ'त्ति अनुमत —अभ्यनुज्ञात इति सूत्रपञ्चावयवार्थ ॥ एव च तेनोक्ते—

त बिंतऽम्मापियरो, सामन्न पुत्त ! दुच्चर । गुणाण तु सहस्साणि, धारेयव्वाइ भिक्खुणा ॥ २४ ॥ समया

ऽलाक्षणिकः, अपिशब्दस्य गम्यमानत्वात् 'दन्तशोधनादेरपि' अतितुच्छस्यास्तामन्यस्य, तथाऽनवद्यैपणीयस्य दत्तस्यापीति गम्यते 'गिण्हण'त्ति ग्रहणमिति तृतीयव्रतदुष्करत्वोक्तिः। 'कामभोगरसण्णुण'त्ति कामभोगाः—उक्तरूपास्तेषां रसः—आस्वादः कामभोगरसः यद्वा रसाः—शृङ्गारादयस्ततः कामभोगाश्च रसाश्च कामभोगरसास्तज्ज्ञेन, तदज्ञस्य हि तदनवगमात्तद्विषयोऽभिलाष एव न भवेत् तथा च सुकरत्वमपि स्यादित्याशयेनैवमभिधानम्, अनेन चतुर्थव्रतदुष्करत्वमुक्तम्। परिग्रहः—सत्सु स्वीकारस्तद्विवर्जनं, तथा सर्वे—निरवशेषा ये आरम्भाः—द्रव्योत्पादनव्यापारास्तत्परित्यागः, अनेन निराकाङ्क्षत्वमुक्तं निर्ममत्वं च, गम्यमानत्वाचस्य, सर्वत्र ममेति बुद्धिपरिहारः, अनेन पञ्चमहाव्रतदुष्करतोक्ता। संनिधीयते नरकादिष्वनेनात्मेति संनिधिः—घृतादेरुचितकालातिक्रमेण स्थापनं स चासौ सञ्चयश्च संनिधिसञ्चयः स चैव वर्जयितव्य इत्येतत्सुदुष्करम्, अनेन षष्ठव्रतदुष्करत्वमुक्तं, दिवागृहीतदिवाभुक्तादिभङ्गचतुष्टयरूपत्वात्तस्य। 'क्षुहे'त्यादिना परीषहाभिधानम्, अत्र च 'दंशमशकवेदना' तद्भक्षणोत्थदुःखानुभवरूपा 'दुःखशय्या च' विषमोन्नतत्वादिना दुःखहेतुर्वसतिः, 'ताडना' करादिभिराहननं 'तर्जना' अङ्गुलिभ्रमणभ्रूक्षेपादिरूपा वधश्च—लकुटादिप्रहारो बन्धश्च—मयूरबन्धादिस्तावेव परीषहौ वधबन्धपरीषहौ, 'याच्ना' प्रार्थना चकारोऽनुक्ताशेषपरीषहसमुच्चयार्थः, दुःखशब्दश्चेह क्षुद्दुःखमित्यादि प्रत्येकं योजनीयः, इह च बन्धताडने वधपरीषहेऽन्तर्भवतः, तर्जना आक्रोशे, भिक्षाचर्या च याच्ञायां, भेदोपादानं च व्युत्पत्त्यर्थमिति भावनीयं, कपोताः—पक्षिविशेषास्ते-

भरेउ जे, होइ वायस्स कुत्थलो। तहा दुक्करं करेउं जे, कीवेणं समणत्तणं ॥ ४० ॥ जहा तुलाए तोलेउं, दुक्करं मंदरो गिरी। तहा निहुअणीसंकं, दुक्करं समणत्तणं ॥ ४१ ॥ जहा भुयाहिं तरिउं, दुक्करं रयणायरो। तहा अणुवसंतेणं, दुक्करं दमसायरो ॥ ४२ ॥ भुंज माणुस्सए भोए, पंचलक्खणए तुमं। भुत्तभोगी तओ जाया!, पच्छा धम्मं चरिस्ससि ॥ ४३ ॥

सूत्रषिंगति सुगमैव, नवरं 'तं'मिति वलश्रियं मृगापुत्रापरनामकं युवराजं 'निंति'त्ति ब्रूतः—अभिधत्तः 'अम्मापियरो'त्ति अम्बापितरौ श्रामण्यं पुत्र! दुश्चरं, यतस्तत्र 'गुणानां' श्रामण्योपकारकाणां शीलाङ्गरूपाणां सहस्राणि 'धारयितव्यानि' आत्मनि स्थापयितव्यानि, प्राकृतत्वाद् दसैवकारार्थस्येह सम्बन्धाद्धारयितव्यान्येव व्रतग्रहण इति गम्यते 'भिक्षुणा' भिक्षणशीलेन सता, पठ्यते च—'भिक्खुणो'त्ति भिक्षोः सम्बन्धिनां गुणानामिति योगः। तथा 'समता' रागद्वेषाविधानतस्तुल्यता 'सर्वभूतेषु' समस्तजन्तुषु, उदासीनेष्विति गम्यते, 'शत्रुमित्रेषु वा' अपकार्युपकारिषु, 'जगति' लोके, अनेन सामायिकमुक्तं, तथा 'प्राणातिपातविरतिः' प्रथमव्रतरूपा 'जावज्जीव(वा य)'त्ति यावज्जीवं 'दुष्करं' दुरनुचरमेतदिति शेषः। नित्यकालाप्रमत्तेनेत्यप्रमत्तग्रहणं निद्रादिप्रमादवशगो हि मृषाऽपि भाषेतेति, नित्यायुक्तेन—सततोपयुक्तेन अनुपयुक्तस्यान्यथाऽपि भाषणसम्भवाद्, एतच्च दुष्करं, यच्चान्वयव्यतिरेकाभ्यामेकस्याप्यर्थस्याभिधानं तत्स्पष्टतार्थमदुष्टमेवेत्येवं सर्वत्र भावनीयम्, अनेन द्वितीयव्रतदुष्करत्वमभिहितम्। 'दंतसोहणमादिस्स'त्ति, मकारो

सा चासौ दृष्टिश्चैकान्तदृष्टिस्तया—अनन्याक्षिप्तया, अहिपक्षे दृशा, अन्यत्र तु बुद्ध्योपलक्षितम्, एकान्तदृष्टिकं वा चारित्रं दुश्चरं, विषयेभ्यो मनसो दुर्निवारत्वादिति भावः, 'जवा लोहमया चेव'त्ति एवकारस्योपमार्थत्वाद्यवा लोहमया इव चर्वयितव्याः, किमुक्तं भवति ?—लोहमययवचर्वणवत्सुदुष्करं चारित्रम् ॥ 'अग्निशिखा' अग्निज्वाला 'दीप्ते' त्युज्ज्वला ज्वालाकराला वा, द्वितीयार्थे चात्र प्रथमा, ततो यथाऽग्निशिखां दीप्तां पातुं सुदुष्करं, नृभिरिति गम्यते, यद्वा लिङ्गव्यत्ययात् सर्वधात्वर्थत्वाच्च करोतेः 'सुदुष्करा' सुदुःशका यथाऽग्निशिखा दीप्ता पातुं भवतीति योगः, एवमुत्तरत्रापि भावना, 'जे' इति निपातः सर्वत्र पूरणे, कोत्थल इह वस्त्रकम्बलादिमयो गृह्यते, चर्ममयो हि सुखेनैव भ्रियेतेति, 'क्लीवेन' निःसत्त्वेन 'निभृतं निःशङ्क' मित्यत्र निभृतं—निश्चलं विषयाभिलापादिभिरक्षोभ्यं 'निःशङ्कं' शरीरादिनिरपेक्षं शङ्काख्यसम्यक्त्वातिचारविरहितं वा ॥ १८ 'अनुपशान्तेन' उत्कटकपायेण, इह च दमसागर इत्यनेन प्राधान्यख्यापनार्थं केवलस्यैवोपशमस्य समुद्रोपमाभिधानं, पूर्वत्र तु गुणोदधिरित्यनेन निःशेषगुणानामिति न पौनरुक्त्यं ॥ गतश्चैवं तारुण्ये दुष्करा प्रव्रज्याऽतो भुङ्क्ष्वेत्यादिना पितरौ कृत्योपदेशं ब्रूतः, भुज्यन्त इति भोगास्तान् 'पञ्चलक्षणकान्' शब्दादिपञ्चकस्वरूपान् 'ततः' इति भोगभुक्तेरनन्तरं 'जाय'त्ति जातपुत्रः 'पश्चादि'ति वार्द्धक्ये 'चरिस्ससि'त्ति चरेरिति त्रिंशतिसूत्रावयवार्थः ॥ २४–४३ ॥ सम्प्रति तद्वचनानन्तरं यन्मृगापुत्र उक्तवांस्तदाह—

पार्मिय कापोती येय वृत्ति —निर्वहणोपाय , यथा हि ते नित्यशङ्किता कणकीटकादिग्रहणे प्रवर्त्तन्ते, एव भिक्षु-
रप्येषणादोषशङ्कयेव भिक्षादौ प्रवर्त्तते, सा च दुरनुचरत्वेन दारयति कातरमनासीति दारुणेत्युत्तरेण योग , अभि-
धेयवशाच्च लिङ्गविपरिणाम , उपलक्षण चैतत्समस्तोत्तरगुणानामिति, यच्चेह महाव्रतस्य पुनर्दुर्द्धरत्वाभिधान तदस्याति-
दुष्करत्वख्यापनार्थम् ॥ उपसहारमाह—सुख—सात तस्योचितो—योग्य सुखोचित 'सुकुमार' अकठिनदेह
'सुमज्जित' सुष्ठु स्नपित , सकलनेपथ्योपलक्षण चैतत्, इह च सुमज्जितत्व सुकुमारत्वे हेतु , उभय चैतत्सु-
खोचितत्वे, अतश्च 'न हुसि'त्ति नैव असि—भवसि 'प्रभु' समर्थ 'श्रामण्यम्' अनन्तरोदितगुणरूपम् 'अणुपालेउ'न्ति
अनुपालयितुम्, इह च सुखोचितत्वाभिधानमनीदृशो हीदृश दु खमपि न दु खमिति मन्यते ॥ पुनरप्रभुत्वमेवोदा-
हरणै समर्थयितुमाह—'अविश्राम' यत्रोद्धृते न विश्रम्यते 'गुणाना' यतिगुणाना 'तु' पूरणे 'महाभर' महासमूहो
गुरुको लोहभार इव यो दुर्वह स वोढव्य इति शेष , त्व तु सुखोचित इत्यतो न प्रभुरसीत्युत्तरत्रापि योजनीयम् ॥
आकाशे गङ्गाश्रोतोवद् दुस्तर इति योज्यते, लोकरूढ्या चैतदुक्त, तथा 'प्रतिश्रोतोवत्' यथा प्रतीप जलप्रवाहो
'दुस्तर' दु खेन तीर्यत इति, बाहुभ्या 'सागरो चेव'त्ति सागरवच्च दुस्तरो य स 'तरितव्य' पारगमनायावगाह-
यितव्य , कोऽसौ ?, गुणाः—ज्ञानादयस्त उदधिरिव गुणोदधि , कायवाङ्मनोनियन्त्रणा चात्र दुष्करत्वे हेतु ,
'निरास्वाद' नीरसो विषयगृद्धाना वैरस्यहेतुत्वात् ॥ 'अही'त्यादि, अहिरिवैकोऽन्तो—निश्चयो यस्या सा तथा,

वंतोऽहं, ढंकगिद्धेहिंऽणंतसो ॥ ५८ ॥ तण्हाकिलंतो धावंतो, पत्तो वेयरणिं नइं । जलं पाहंति चिंतंतो, खुरधाराहिं विवाइओ ॥ ५९ ॥ उण्हाभितत्तो संपत्तो, असिपत्तं महावणं । असिपत्तेहिं पडंतेहिं, छिन्नपुव्वो अणेगसो ॥ ६० ॥ मुग्गरेहिं मुसुंढीहिं, सूलेहिं मुसलेहि य । गयासंभग्गगत्तेहिं, पत्तं दुक्खं अणंतसो ॥ ६१ ॥ खुरेहिं तिक्खधाराहिं, छुरियाहिं कप्पणीहि य । कप्पिओ फालिओ छिन्नो, उक्कित्तो अ अणेगसो ॥ ६२ ॥ पासेहिं कूडजालेहिं, मिओ वा अवसो अहं । वाहिओ बद्धरुद्धो अ, विवसो चेव विवाइओ ॥६३॥ गलेहिं मगरजालेहिं, वच्छो वा अवसो अहं । उल्लिओ फालिओ गहिओ, मारिओ अ अणंतसो ॥६४॥ विदंसएहिं जालेहिं, लिप्पाहिं सउणो विव । गहिओ लग्गो अ बद्धो अ, मारिओ अ अणंतसो ॥६५॥ कुहाडपरसुमाईहिं, वड्ढईहिं दुमो विव । कुट्टिओ फालिओ छिन्नो, तच्छिओ अ अणंतसो ॥ ६६ ॥ चवेडमुट्ठिमाईहिं, कुमारेहिं अयं पिव । ताडिओ कुट्टिओ भिन्नो, चुण्णिओ अ अणंतसो ॥ ६७ ॥ तत्ताइं तंबलोहाइं, तउआइं सीसगाणि य । पाइओ कलकलंताइं, आरसंतो सुभेरवं ॥ ६८ ॥ तुहप्पियाइं मंसाइं, खंडाइं सुल्लगाणि य । खाविओ मि समंसाइं, अग्गिवण्णाइं णेगसो ॥ ६९॥ तुहं पिया सुरा सीहू, मेरओ अ महूणि य । पज्जिओ मि जलंतीओ, वसाओ रुहिराणि य ॥७०॥ निच्चं भीएण तत्थेणं, दुहिएणं वहिएण य । परमा दुहसंबद्धा, वेयणा वेइया मए ॥ ७१ ॥ तिव्वचंडप्पगाढाओ, घोराओ अइदुस्सहा । महब्भयाओ भीमाओ, नरएसुं

त विंतऽम्मापियरो,एवमेय जहाफुड। इहलोगे निप्पिवासस्स,नत्थि किंचिवि दुक्कर ॥४४॥ सारीरमाणसा चेव, वेयणा उ अणंतसो। मए सोढाओ[इ] भीमाओ[इ], असइ दुक्खभयाणि य ॥ ४५ ॥ जरामरणकंतारे, चाउरंते भयागरे। मया सोढाणि भीमाइं, जम्माइं मरणाणि य ॥४६॥ जहा इह अगणी उण्हो, इत्तोऽणंतगुणो तहिं। नरएसु वेयणा उण्हा, अस्साया वेइया मए ॥४७॥ जहा इह इमं सीयं, इत्तोऽणंतगुण तहिं। नरएसु वेयणा सीया, अस्साया वेइया मए ॥ ४८ ॥ कंदंतो कंदुकुंभीसु, उड्ढपाओ अहोसिरो। हुयासणे जलंतमि, पक्कपुव्वो अणंतसो ॥४९॥ महादवग्गिसंकासे, मरुंमि वइरवालुए। कालंबवालुआए उ, दड्ढपुव्वो अणंतसो ॥ ५० ॥ रसंतो कंदुकुंभीसु, उड्ढ बद्धो अबंधवो। करवत्तकरकयाईहिं, छिन्नपुव्वो अणंतसो ॥ ५१ ॥ अइतिक्खकंटगाइण्णे, तुंगे सिंबलिपायवे। खेवियं पासबद्धेणं, कड्ढोकड्ढाहिं दुक्करं ॥ ५२ ॥ महाजंतेसु उच्छूवा, आरसंतो सुभेरवं। पीलिओमि सकम्मेहिं, पावकम्मो अणंतसो ॥ ५३ ॥ कूवंतो कोलसुणएहिं, सामेहिं सबलेहि य। पाडिओ फालिओ छिन्नो, विप्फुरंतो अणेगसो ॥५४॥ असीहिं अयसिवण्णेहिं, भल्लीहिं पट्टिसेहि य। छिन्नो भिन्नो विभिन्नो य, उववन्नो पावकम्मुणा ॥ ५५ ॥ अवसो लोहरहे जुत्तो, जलंते समिलाजुए। चोइओ तुत्तजुत्तेहिं, रुज्झो वा जह पाडिओ ॥ ५६ ॥ हुआसणे जलंतमि, चिआसु महिसो विव। दड्ढो पक्को अ अवसो, पावकम्मेहि पाविओ ॥ ५७ ॥ बला संडासतुंडेहिं, लोहतुंडेहिं पक्खिहिं। विलुत्तो विल-

यथेत्यादिभिः सूत्रैस्तदाह–यथा 'इह' मनुष्यलोकेऽग्निरुष्णोऽनुभूयते 'अत' इत्येवमनुभूयमानादनन्तगुणः 'तहिं'ति तेषु,येष्वहमुत्पन्न इति भावः,तत्र च बादराग्नेरभावात्पृथिव्या एव तथाविधः स्पर्श इति गम्यते,ततश्चोष्णानुभवात्मकत्वेन 'असातः'दुःखरूपा वेदिता मया,पठन्ति च–'इत्तोऽणंतगुणा तहिं'ति, अत्र चातः–इहत्याग्नेरनन्तगुणा नरकेषूष्णा वेदना वेदिता मयेति योज्यम् ॥ तथा 'इदं' यदनुभूयते 'इह' मनुष्यलोके 'शीतं' तच्च माघादिसंभवं हिमकणानुषक्तमात्यन्तिकं परिगृह्यते, इहापि पठन्ति–'एत्तोऽणंतगुणा तहिं'ति प्राग्वत्, 'कंडुकुम्भीषु' पाकभाजनविशेषरूपासु लोहादिमयीषु 'हुताशने' अग्नौ देवमायाकृते, महादवाग्निना संकाशः–सदृशोऽतिदाहकतया महादवाग्निसङ्काशस्तस्मिन्, इह चान्यस्य दाहकतरस्यासंभवादित्थमुपमाभिधानम्, अन्यथेहत्याग्नेरनन्तगुण एव तत्रोष्णपृथिव्यनुभाव उक्तः, 'मरौ' इति मरुवालुकानिवह इव तात्स्थ्यात्तद्व्यपदेशसंभवादन्तर्भूतेवार्थत्वाचात एव वज्रवालुकानदीसम्बन्धिपुलिनमपि वज्रवालुका तत्र, यद्वा वज्रवद्वालुका यस्मिंस्त (स्मिन् स त) था तस्मिन्नरकप्रदेश इति गम्यते, 'कदम्बवालुकायां च' तथैव कदम्बवालुकानदीपुलिने च महादवाग्निसङ्काश इति योज्यते। 'ऊर्द्धम्' उपरि वृक्षशाखादौ 'बद्धः' नियन्त्रितो माऽयमितो नङ्क्षीदित्यबान्धव इति च तत्राशरणतामाह, करपत्रं–प्रतीतं क्रकचमपि तद्विशेष एव 'खेदियं'ति खिन्नं खेदः क्लेशोऽनुभूतः क्षिपितं वा पापमिति गम्यते, 'कड्ढोकड्ढाहिं'ति कर्षणापकर्षणैः परमाधार्मिककृतैः 'दुष्करम्' इति दुस्सहम् ॥ 'उच्छू व'त्ति वाशब्द उपमार्थे,तत इक्षुरिव 'आरसन्' आक्रन्दन् 'स्वकर्मभिः' हिंसाद्युपार्जितै-

वेइया मए ॥ ७२ ॥ जारिसा माणुसेलोए, ताया! दीसंति वेयणा । इत्तो अणतगुणिया, नरएसु दुक्खवेयणा ॥ ७३ ॥ सव्वभवेसु अस्साया, वेयणा वेइया मए । निमिसतरमित्तपि, ज साया नत्थि वेयणा ॥ ७४ ॥

सूत्राण्येकत्रिंशत् प्रतीतान्येव, नवर 'तद्' अनन्तरोक्त 'विंति' 'ब्रुवन्तौ' अभिदधतौ अम्बापितरौ, प्रक्रमान्मृगापुत्र आह, यथा एवमित्यादि, पठ्यते च,–'सो वेअम्मापियरो !' त्ति स्पष्टमेव नवरमिह अम्बापितराविसामन्त्रणपद, पठन्ति च—'तो वेंतऽम्मापियरो' त्ति 'विति' त्ति वचनव्यत्ययात्ततो ब्रूते अम्बापितरौ मृगापुत्र इति प्रक्रम', 'एव' मिति यथोक्त भवद्भ्या तथा 'एतत्' प्रव्रज्यादुष्करत्वं 'यथास्फुट' सत्यतामनतिक्रान्तमवितथमिति–यावत्, तथाऽपीहलोके 'निप्पिपासस्स' नि स्पृहस्य, इहलोकशब्देन च 'तात्स्थ्यात्तद्व्यपदेश' इतिकृत्वा ऐहलौकिका स्वजनधनसम्बन्धादयो गृह्यन्ते, 'नास्ति' न विद्यते 'किञ्चित्' अतिकष्टमपि शुभानुष्ठानमिति गम्यते, 'अपि' सभावने 'दुष्कर' दुरनुष्ठेय, भोगादिस्पृहायामेवास्य दुष्करत्वादिति भाव ॥ नि स्पृहताहेतुमाह–'शारीरे' त्यादिना, तत्राप्याद्यसूत्रद्वयेन सामान्येन ससारस्य दु खरूपत्वमुक्तम्, इह च शरीरमानसयोर्भवा शारीरमानस्यो वेदना प्रस्तावादसातरूपा 'दुक्खभयाणि य' त्ति दु खोत्पादकानि राजविड्वरादिजनितानि (भयानि) दु खभयानि, जरामरणाभ्यामतिगहनतया कान्तार जरामरणकान्तार तस्मिंश्चत्वारो–देवादिभवा अन्ता—अवयवा यस्यासौ चतुरन्त –ससार तत्र 'सोढानि' तदुत्थवेद नासहनेनानुभूतानि 'भीमानि' अतिदु खजनकत्वेन रौद्राणि ॥ शारीरमानस्यो वेदना यत्रोत्कृष्टा सोढा

भिर्दङ्कगृद्धैरिति योगः, एते च वैक्रिया एव, तत्र तिरश्चामभावात्, 'विलुत्तः' विविधं छिन्नः॥ तस्य चैवं कदर्थ्यमानस्य तृडुत्पत्तौ का वार्त्तेत्याह—तृष्णया क्रान्तो—ग्लानिमुपगतस्तृष्णाक्रान्तः 'पाहंती'ति पास्यामीति चिन्तयन् 'खुरधाराहिं'न्ति क्षुरधाराभिरतिच्छेदकतया वैतरणीजलोर्म्मिभिरिति शेषः, विपाटितः, पाठान्तरतश्च विपादितः—व्यापादित इत्यर्थः, उष्णेन—वज्रवालुकादिसम्बन्धिना तापेनाभि—आभिमुख्येन तप्त उष्णाभितप्तः संप्राप्तोऽसयः—खड्गास्तद्वच्छेदकतया पत्राणि—पर्णानि यस्मिंस्तदसिपत्रं, 'मुद्गरादिभिः' आयुधविशेषैर्गता—नष्टा आशा—परित्राणगोचरमनोरथात्मिका यत्र तद्गताशं यथा भवत्येवं 'भग्गगत्तेहिं'ति भग्नगात्रेण सता प्राप्तं दुःखमिति योगः, कल्पितः वस्त्रवत् खण्डितः कल्पनीभिः पाटितः द्विधाकृतः ऊर्ध्वं छुरिकाभिश्छिन्नः खण्डितः क्षुरैरिति पश्चानुपूर्व्या सम्बन्धः, इत्थं च 'उक्कंतो य'त्ति उत्क्रान्तश्चायुःक्षये मृतश्चेत्यर्थः, पाठान्तरतो नोत्कृतः—त्वगपनयनेन प्रत्येकं वा क्षुरादिभिः कल्पितादीनां सम्बन्धः ॥ 'पाशैः कूटजालैः' प्रतीतैरेव बन्धनविशेषैः 'अवशः' परवशः 'वाहितः' विप्रलब्धः, पठ्यते च—'गहितो'त्ति गृहीतो बद्धो बन्धनेन रुद्धो बहिःप्रचारनिषेधनेन, अनयोर्विशेषणसमासः, 'विवाइतो'त्ति विपादितो विनाशित इत्यर्थः, तथा 'गलैः' बडिशैर्मकरैः—मकराकारानुकारिभिः परमाधार्मिकैर्जालैश्च—तद्विरचितैर्विक्रियैरनयोर्द्वन्द्वः, समूहवाची वा जालशब्दस्तत्पुरुषश्च समासः, तथा 'उल्लिउ'त्ति आर्षत्वाद् उल्लिखितो गलैः पाटितो मकरैर्गृहीतश्च जालैः, यद्वा गृहीतोऽपि मकरजालैरेव मारितश्च सर्वैरपि, विशेषेण दशन्तीति विदंशकाः—

ज्ञानावरणादिभि 'पापकर्मा' पापानुष्ठान ॥ 'कूवतो'त्ति कूजन् 'कोलसुणएहिं'ति सूकरस्वरूपधारिभि श्यामै शबलैश्च परमाधार्मिकविशेषै 'पातितो' भुवि 'फाटितो' जीर्णवस्त्रवत् 'छिन्नो' वृक्षवदुभयदंष्ट्रादिभिरिति गम्यते 'विस्फुरन्' इतस्ततश्चलन् 'असाहिं'ति प्रहरणविशेषै, पठ्यते च—'असीहिं'ति 'असिभि' खङ्गै अत एव 'अतसी'त्यतसीपुष्पतद्वर्णाभि —कृष्णाभि 'पट्टिशैश्च' प्रहरणविशेषै 'छिन्न' द्विधाकृत 'भिन्न' विदारित 'विभिन्न' सूक्ष्मखण्डीकृत, यद्वा'छिन्न' ऊर्द्ध्वं 'भिन्न' तिर्यग् 'विभिन्न' विविधप्रकारैरूर्द्ध्वं तिर्यक्च अवतीर्णो नरक इति गम्यते,पापकर्मणेति हेतुदर्शन पापानुष्ठानपरिहार्यतारव्यापनार्थम् । 'लोहरथे' लोहमयशकटे 'जुत्तो'त्ति युजेरन्तर्भावितण्यर्थत्वाद्योजित परमाधार्मिकैरिति सर्वत्र गम्यते, 'ज्वलति' दीप्यमाने, कदाचिद्दाहभीत्या ततो नश्येदपीत्याह—समिलोपलक्षित युग यस्मिन् स तथा तत्र समिलायुते वा, पाठान्तरतश्च ज्वलत्समिलायुगे, 'चोइओ'त्ति प्रेरित 'तोत्त्रयोक्त्रै' प्राजनकयन्त्रनविशेषैर्मर्माघट्टनाहननाभ्यामिति गम्यते, 'रोज्झ' पशुविशेष 'वा' समुच्चये भिन्नक्रम 'यथा' औपम्ये ततो रोज्झवत्पातितो वा लकुटादिपिट्टनेनेति गम्यते,हुताशने ज्वलति,केत्याह—'चितासु' परमाधार्मिकनिर्मितेन्धनसञ्चयरूपासु 'महिसो विव'त्ति, 'पिव मिव विव वा इवार्थे' इति वचनात्, महिष इव 'दग्ध' भस्मसात्कृत 'पक्व' भटित्रीकृत 'पावितो'त्ति पापमस्यास्तीति भूम्नि मत्वर्थीयष्ठक् पापिक 'बलात्' हठात् सदंश —प्रतीतस्तदाकृतीनि तुण्डानि—मुखानि येषा ते संदंशतुण्डास्तै, तथा लोहवन्निष्ठुरतया तुण्डानि येषा तैर्लोहतुण्डै 'पक्खिहिं'ति पक्षि-

पठ्यते च-महालयाः-महत्यः, 'भीमाः' श्रूयमाणा अपि भयप्रदाः, एकार्थिकानि चैतान्यत्यन्तभयोत्पादनायोक्तानि, इह च वेदना इति प्रक्रमः ॥ कथं पुनस्तस्यास्तीव्रादिरूपत्वमित्याशङ्क्य 'जारिसे' त्यादिना इहत्यवेदनापेक्षया नरकदुःखवेदनाया अनन्तगुणत्वमाह, 'वेयण' त्ति प्रक्रमाद् दुःखवेदना ॥ न केवलं नरक एव दुःखवेदना मयाऽनुभूता किन्तु सर्वास्वपि गतिष्विति पुनर्निगमनद्वारेणाह-'सव्वे' त्यादिना, इह च 'असाता' दुःखरूपा निमेषः—अक्षिनिमीलनं तस्यान्तरं-व्यवधानं यावता कालेनासौ भूत्वा पुनर्भवति तन्मात्रमपि-तत्परिमाणमपि कालमिति शेषः 'यद्' इति यस्मात् 'साता' सुखरूपा नास्ति वेदना, तत्त्वतो वैषयिकसुखमसुखमेव, ईर्ष्याद्यनेकदुःखानुविद्धत्वाद्विपाकदारुणत्वाच्च ॥ सर्वस्य चास्य प्रकरणस्यायमाशयः-य एवमहं निमेषान्तरमात्रमपि कालं न सुखं लब्धवान् स कथं तत्त्वतः सुखोचितः सुकुमारो वेति शक्यते वक्तुं ?, येन च नरकेष्वत्युष्णशीतादयो महावेदना अनेकशः सोढास्तस्य महाव्रतपालनं क्षुदादिसहनं वा कथमिव बाधाविधायि ?, तत्त्वतस्तस्य परमानन्दहेतुत्वात् ,तत्प्रव्रज्यैव मया प्रतिपत्तव्येत्येकत्रिंशत्सूत्रावयवार्थः ॥ तत्रैवमुक्त्वोपरते—

तं बिंतऽम्मापियरो, छंदेणं पुत्त ! पव्वया । नवरं पुण सामण्णे, दुक्खं निप्पडिकम्मया ॥ ७५ ॥

'तं' मृगापुत्रं ब्रूतोऽम्बापितरौ छन्दः-अभिप्रायस्तेन स्वकीयेनेति गम्यते, किमुक्तं भवति ?-यथाऽभिरुचितं पुत्र !

श्येनादयस्तैर्जालै —तथाविधबन्धनै 'लेप्पाहिं'ति लेपैर्वज्रलेपादिभि श्लेषद्रव्यै 'सउणोविव'त्ति 'शकुन इव' पक्षीव गृहीतो विदशकैर्जालैश्च लग्नश्च 'श्लिष्टो' लेपद्रव्यैर्बद्ध , तैर्जालैश्च, मारितश्च सर्वैरपि, 'कुट्टित:' सूक्ष्मखण्डीकृत पाटितश्छिन्नश्च प्रायत् ,तक्षितश्च त्वगपनयनतो द्रुम इवेति सर्वत्र योज्य॥'चवेडमुट्ठिमाईहिं' ति चपेटामुष्ट्यादिभि प्रतीतैरेव 'कुमारै' अयस्कारै 'अय पिव'त्ति अय इव घनादिभिरिति गम्यते 'ताडित' आहत 'कुट्टिल' इह छिन्न 'भिन्न' खण्डीकृत 'चूर्णित' श्लक्ष्णीकृत प्रक्रमात्परमाधार्मिकै तप्तताम्रादीनि वैक्रियाणि पृथग्व्यनुभावभूतानि वा 'कलकलत'त्ति अतिक्राथत कलकलशब्द कुर्वन्ति॥ तथ प्रियाणि मासानि खण्डरूपाणि 'सोल्लगाणि'त्ति भडित्रीकृतानि स्मारयित्वेति शेप:,सभासानि मच्छरीरादेवोत्कृत्योत्कृत्य ढौकितानि 'अग्निवर्णानि' अतितप्ततयाऽग्निच्छायानि सुरादीनि मद्यविशेपणरूपाणि, इहापि स्मारयित्वेति शेप , 'पज्जितोमि'त्ति पायितोऽसि 'जलतीओ'त्ति ज्वलन्तीरिव ज्वलन्तीरत्युष्णतया वशा रुधिराणि च,ज्वल तीति लिङ्गविपरिणामेन सम्ब धनीयम् ॥'पिच' मित्यादि, नरकवक्तव्यतोपसहर्तृ सूत्रत्रयम् ,अत्र च 'भीतेन' उत्पन्नसाध्वसेन तथा 'त्रसी उद्वेगे' 'त्रस्तेन' उद्विग्नेनात एव 'दु खितेन' सजातविविधदु खेन 'व्यथितेन च' कम्पमानसकलाङ्गोपाङ्गतया चलितेन,दु खसबद्धेति वेदनाविशेपण सुखसम्बन्धिन्या अपि वेदनाया सम्भवाद्, 'वेदिते'ति चानुभूता, तीव्रा अनुभागतोऽत एव चण्डा —उत्कटा प्रगाढा —गुरुस्थितिकास्तत एव 'घोरा' रौद्रा 'अतिदुस्सहा' अत्यन्तदुरध्यासास्तत एव च महद्भय यकाभ्यस्ता महाभया,

यतश्चैवमतः 'एगे'त्यादि सर्वं स्पष्टमेव, नवरम् 'एकभूतः' एकत्वं प्राप्तोऽरण्ये, 'वे'ति वा पूरणे 'जहा उ'त्ति यथैव एवमित्येकभूतः संयमेन तपसा चेति धर्मचरणहेतुः, यदा 'आतङ्कः' आशुघाती रोगो, 'महारण्य' इति महाग्रहणममहति ह्यरण्येऽपि कश्चित्कदाचित्पश्येत् दृष्ट्वा च कृपातश्चिकित्सेदपि, श्रूयते हि केनचिद्भिपजा व्याघ्रस्य चक्षुरुद्घाटितमटव्यामिति, वृक्षमूल इति तथाविधावासाभावदर्शनं, 'को णं'ति 'अचां सन्धिलोपौ बहुल'मितिवचनादज्लोपे क एनं 'तदा' आतङ्कोत्पत्तिकाले चिकित्सति—औषधाद्युपदेशेन नीरोगं कुरुते ?, न कश्चिदित्यर्थः, चिकित्सके चासति को वेति वाशब्दः समुच्चये औषधं ददातीत्येवमुत्तरोत्तराप्राप्तिरुपदर्शनीया ॥'आहरित्तु'त्ति आहृत्य 'प्रणामयेत्' अर्पयेत्, 'अर्पेः पणाम' इति वचनात् ॥ कथं तर्हि तस्य निर्वहणमित्याह—यदा स सुखी भवति,स्वत एव रोगाभाव इति गम्यते, 'गच्छति' याति गौरिव परिचितेतरभूभागपरिभावनारहितत्वेन चरणं—भ्रमणमस्मिन्निति गोचरस्तं भक्तमिव भक्तं तद्भक्ष्यं—तृणादि तच्च पानं च भक्तपानं तस्य 'अर्थाय' प्रयोजनाय, गोचरमेव विशेषत आह—'वल्लराणि' गहनानि, उक्तञ्च—"गहणमवाणियदेसं रण्णे छेत्तं च वल्लरं जाण" 'सरांसि च' जलस्थानानि । खादित्वा निजभक्ष्यमिति गम्यते, वल्लरेषु सरःसु चेति सुब्व्यत्ययेन नेयं, तथा मृगाणां चर्या—इतश्चेतश्चोत्प्लवनात्मकं चरणं मृगचर्या तां, 'मितचारितां' वा परिमितभक्षणात्मिकां 'चरित्वा' आसेव्य परिमिताहारा एव हि स्वरूपेणैव मृगा भवन्ति, विशेषाभिधायित्वाच्च न पौनरुक्त्यं, ततश्च 'गच्छति' याति मृगाणां चर्या—चेष्टा स्वातन्त्र्योपवेशनादिका यस्यां सा मृगच-

'प्रव्रज' प्रव्रजितो भव, 'नवरम्' इति केवल 'पुन ' विशेषणे 'श्रामण्ये' श्रमणभावे 'दु खं' दु खहेतु 'निष्प्रतिकर्मता' कथञ्चिद्रोगोत्पत्तौ चिकित्साऽकरणरूपेति सूत्रार्थ ॥ इत्थ जनकाभ्यामुक्ते—

सो बिंतऽम्मापियरो !, एवमेय जहाफुड । परिकम्म को कुणई, अरन्ने मिगपक्खिणं ? ॥ ७६ ॥ एगब्भूओ अरन्ने वा, जहा ऊ चरई मिगो । एव धम्म चरिस्सामि, सजमेण तवेण य ॥ ७७ ॥ जया मिगस्स आयंको, महारण्णमि जायई । अच्छत रुक्खमूलमि, को ण ताहे चिगिच्छई ? ॥७८॥ को वा से ओसह देइ, को वा से पुच्छई सुह । को से भत्त व पाण वा, आहरित्तु पणामई ? ॥ ७९ ॥ जया य से सुही होइ, तया गच्छइ गोअर । भत्तपाणस्स अट्ठाए, वल्लराणि सराणि य ॥८०॥ खाइत्ता पाणिय पाउ, वल्लरेहिं सरेहि य । मिगचारिय चरित्ता ण, गच्छई मिगचारिय ॥ ८१ ॥ एव समुट्ठिए भिक्खू, एवमेव अणेगए । मिगचारिय चरित्ता ण, उड्ढ पक्कमई दिस ॥८२॥ जहा मिए एग अणेगचारी, अणेगवासे धुवगोअरे अ । एव मुणी गोयरिय पविट्ठे, नो हीलए नोवि य खिंसइज्जा ॥ ८३ ॥

'स' इति युवराज 'बिन्ति'त्ति आर्षत्वाद् ब्रूतेऽम्बापितरौ, यथैतन्निष्प्रतिकर्मताया दु खरूपत्व युवाभ्यामुक्त यथास्फुटमिति प्राग्वत्, पर परिभाव्यतामिद–परिकर्म रोगोत्पत्तौ चिकित्सारूप क करोति ?, न कश्चिदित्यर्थ , क्व ?–अरण्ये, केषा ?–मृगपक्षिणाम्, अथचैतेऽपि जीवन्ति विचरन्ति च, तत किमस्या दु खरूपत्वमिति भाव ,

मिगचारियं चरिस्सामि, एवं पुत्ता ! जहासुहं । अम्मापिऊहिंऽणुण्णाओ, जहाइ उवहिं तओ ॥ ८४ ॥ मिगचारियं चरिस्सामो, सव्वदुक्खविमुक्खणिं। तुब्भेहिं अम्ब ! ऽणुण्णाओ,गच्छ पुत्त ! जहासुहं ॥८५॥ एवं सो अम्मापियरं,अणुमाणित्ता ण बहुविहं । ममत्तं छिंदई ताहे,महानागुव्व कंचुयं ॥८६॥ इड्ढी वित्तं च मित्ते य, पुत्तदारं च नायओ । रेणुअं व पडे लग्गं, निद्धुणित्ता ण निग्गओ ॥ ८७ ॥

गाथा चतुष्टयं स्पष्टमेव,नवरं मृगस्येव चर्या—चेष्टा मृगचर्या तां निष्प्रतिकर्मतादिरूपां चरिष्यामीति बलश्रिया युवराजेनोक्ते पितृभ्यामभाणि—एवं यथा भवतोऽभिरुचितं तथा यथासुखं तेऽस्त्विवर्ति शेषः, एवं चानुज्ञातः सन् 'जहाति' त्यजति उपधिम्—उपकरणमाभरणादि द्रव्यतो भावतस्तु छद्मादि येनात्मा नरक उपधीयते, ततश्च प्रव्रजतीत्युक्तं भवति । उक्तमेवार्थं सविस्तरमाह—'सव्वदुक्खविमोक्खणिं' सकलासातविमुक्तिहेतुं 'तुब्भेहिं'ति युवाभ्यामम्ब ! उपलक्षणत्वात्पितश्च 'अनुज्ञातः' अनुमतः सन्, तावाहतुः—गच्छ मृगचर्ययेति प्रक्रमः पुत्र ! 'यथासुखं' सुखानतिक्रमेण । 'अनुमन्य' अनुज्ञाप्य 'ममत्वं' प्रतिबन्धं 'छिनत्ति' अपनयति महानाग इव कञ्चुकं, यथाऽसावतिजरठतया चिरप्ररूढमपि कञ्चुकमपनयति, एवमसावपि ममत्वमनादिभवाभ्यस्तमुपलक्षणत्वात् मायादींश्च ॥ अनेनान्तरोपधित्याग उक्तः, बहिरुपधित्यागमाह—'ऋद्धिं' करितुरगादिसम्पदं 'वित्तं' द्रव्यं 'णायओ'त्ति 'ज्ञातीन्' सोदरादीन् 'णिद्धुणित्त'त्ति निर्द्धूयेव निर्द्धूय त्यक्त्वेतियावत् 'निर्गतः' निष्क्रान्तो गृहादिति गम्यते, प्रव्रजित इति योऽर्थः ॥ इति सूत्रचतुष्टयार्थः । एनमेवार्थं स्पष्टयितुमाह निर्युक्तिकृत्—

र्या—मृगाश्रयभूताम् । अनेन च सूत्रपञ्चकेन दृष्टान्त उक्त, उत्तरेण सूत्रद्वयेनात्मन्येतदुपसहार, इह च 'एव'मिति मृगवत्समुत्थित —संयमानुष्ठान प्रत्युद्यतस्तथाविधाऽऽतङ्कोत्पत्तावपि न कश्चित् चिकित्साऽभिमुख इति भाव ,'एवमेव' मृगवदेव 'अणेगग त्ति अनेकगो यथा ह्यसौ वृक्षमूले नैकस्मिन्नेवास्ते किन्तु कदाचित्कचिदेवमेषोऽप्यनियतस्थानस्थ-तया, पठ्यते च—'अणिएयणे'त्ति 'अनिकेतन ' अगृह ,स चैव मृगचर्यां चरित्वा मृगवदातङ्काभावे भक्तपानार्थं गोचर गत्वा तल्लब्धभक्तपानोपष्टम्भतश्च विशिष्टसम्यग्ज्ञानादिभावत शुक्लध्यानारोहणादपगताशेषकर्मांश ऊर्द्ध दिशमिति सम्बन्धः प्रकर्षेण क्रामति—गच्छति प्रक्रामति, किमुक्त भवति ?—सर्वोपरिस्थानस्थितो भवति, निर्वृत इतियावत्, एष च निर्वृतिरेवेह मृगचर्योपमार्थत उक्ता, तत्र हि मृगोपमा मुनय इत इतश्चाप्रतिबद्धविहारितया विहृत्य गच्छ न्तीति॥ मृगचर्यामेव स्पष्टयितुमाह—यथा मृग 'एग'त्ति 'एक ' अद्वितीय 'अनेकचारी' नैकत्रैव भक्तपानार्थं चर-तीत्येवशील , 'अनेकवास ' नैकत्र वास —अवस्थानमस्यास्तीति, 'ध्रुवगोचरश्च' सर्वदा गोचरलब्धमेवाहारमाहार-यतीति, 'एव' मृगवदेकत्वादिविशेषणविशिष्टो मुनि 'गोचर्यां' भिक्षाटन प्रविष्टो न 'हीलयेद्' अवजानीयात् कद-शनादीति गम्यते, नापि च 'खिसएज्ज'त्ति निन्देत्तथाविधाहाराप्राप्तौ स्व पर वा । इह च मृगपक्षिणामुभयेषामुप क्षेपे यन्मृगस्यैव पुन पुनर्दृष्टा तत्वेन समर्थन तत्तस्य प्राय प्रशमप्रधानत्वादिति सम्प्रदाय इति सूत्राष्टकार्थ ॥ एव मृगचर्यास्वरूपमुक्त्वा यत्तेनोक्त यच्च पितृभ्या पितृवचनानन्तरं च यदसौ कृतवांस्तदाह—

मिव तां मन्यमानः प्रहसितमुख इत्यर्थः, पठन्ति च–'संवेगजणियसद्धो'त्ति स्पष्टमेव, तथा मोक्षो—मुक्तिस्तद्गमनाय वद्धमिति–धृतं चिह्नं–धर्मध्वजादि तदेव सन्नाहो–दुर्वचनशरप्रसरनिवारकः क्षान्त्यादिर्वा येन स तथा, 'पडिच्छीय'त्ति 'प्रत्यैपीत्' प्रतिपन्नवानिति गाथाचतुष्टयार्थः ॥ ततोऽसौ कीदृक् सञ्जात इत्याह—

पंचमहव्वयजुत्तो पंचसमिओ तिगुत्तिगुत्तो अ । सब्भिंतरवाहिरिए, तवोकम्मंमि उज्जुओ ॥८८॥ निम्ममो निरहंकारो, निस्संगो चत्तगारवो। समो अ सव्वभूएसु, तसेसु थावरेसु अ ॥ ८९ ॥ लाभालाभे सुहे दुक्खे, जीविए मरणे तहा । समो निंदापसंसासु, तहा माणावमाणओ ॥ ९० ॥ गारवेसु कसाएसु, दंडसल्लभएसु अ । नियत्तो हाससोगाओ, अनियाणो अबंधणो ॥ ९१ ॥ अणिस्सिओ इहं लोए, परलोए अणिस्सिओ । वासीचंदणकप्पो अ, असणे अणसणे तहा ॥ ९२ ॥ अप्पसत्थेहिं दारेहिं, सव्वओ पिहियासवो । अज्झप्पज्झाणजोगेहिं, पसत्थदमसासणो ॥ ९३ ॥

सूत्रषट्कं निगदसिद्धमेव, नवरं 'सब्भिंतरवाहिरिए'त्ति सहाभ्यन्तरैः–प्रायश्चित्तादिभिर्बाह्यैश्च–अनशनादिभिर्भेदैर्वर्तत इति सबाह्याभ्यन्तरं तस्मिन्, प्रधानत्वाच्च प्रथममभ्यन्तरोपादानं ॥ 'निर्ममः' ममत्वबुद्धिपरिहारतः 'निस्सङ्गः' सङ्गहेतुधनादित्यागतः 'समश्च' न रागद्वेषवान्निर्ममत्वादेरेव ॥ लाभेत्यादिना समत्वमेव प्रकारान्तरेणाह, अत्र च 'समः' न लाभादौ चित्तोत्कर्षभाग् नाप्यलाभादौ दैन्यवान्, जीविते मरणे समो, नैकत्राप्याकाङ्क्षावान्, 'माणावमाणओ'त्ति

नाऊण निच्छयमई एव करेहित्ति तेहिँ सो भणिओ। धन्नोऽसि तुम पुत्ता ! जसि विरत्तो सुहसएसु ४१५
सीहत्ता निक्खमिउ सीहत्ता चेव विहरसू पुत्ता !। जह नवरि धम्मकामा विरत्तकामा उ विहरन्ति४१६
नाणेण दसणेण य चरित्ततवनियमसजमगुणेहि। खतीए मुत्तीए होहि तुम वड्ढमाणो उ ॥ ४१७ ॥
सवेगजणिअहासो मुक्खगमणवद्धचिधसन्नाहो। अम्मापिऊण वयण सो पजलिओ पडिच्छीय ॥४१८॥

गाथाचतुष्टय पाठसिद्धमेव, नवरमाद्यगाथात्रयेण 'एव पुत्र ! यथासुख'मित्येतत्सूचितार्थाभिधानतो व्याख्यात, चतुर्थगाथया त्ववशिष्टसूत्र भावार्थाभिधानत , 'सुखशतेभ्य' इति बहुत्वोपलक्षण शतग्रहण, 'सीहत्ता' इति सिहतया 'निष्क्रम्य' प्रव्रज्य सिंहतयैव विहर 'पुत्र !' इति जात !, किमुक्त भवति ?—यथा सिह स्वस्थानादिनिरपेक्ष एव निष्क्रामति, निष्क्रम्य च तथैव निरपेक्षवृत्त्या विहरति, एव त्वमपि विहरेति, 'नवर ति पर धर्म एव काम — अभिलाषो येषा ते धर्मकामा , 'विरत्तकामे'त्ति प्राग्वत् 'कामविरक्ता ' विषयपराङ्मुखा , 'चरित्रतपोनियमसयमगुणै'रित्यत्र चारित्रान्तर्गतत्वेऽपि तप प्रभृतीनामुपदेशात्सामान्यविशेषयोश्च कथञ्चिद्भिन्नत्वाच्च न पौनरुक्त्य, तथा सवेगो—मोक्षाभिलाषस्तेन जनितो हासो—मुखविकाशात्मकोऽस्येति सवेगजनितहास —मुक्त्युपायोऽय दीक्षेत्युत्सव-

एवं नाणेण चरणेण, दंसणेण तवेण य। भावणाहिं विसुद्धाहिं, सम्मं भावित्तु अप्पयं ॥ ९४ ॥ बहुयाणि उ वासाणि, सामन्नमणुपालिया। मासिएण उ भत्तेणं, सिद्धिं पत्तो अणुत्तरं ॥ ९५ ॥

सूत्रद्वयमुक्तानार्थमेव, नवरं 'भावनाभिः' महाव्रतसम्बन्धिनीभिर्वक्ष्यमाणाभिरनित्यत्वादिविषयाभिर्वा 'विशुद्धाभिः' निदानादिदोषरहिताभिर्भावयित्वा–तन्मयतां नीत्वा 'अप्पयं'ति आत्मानं,'मासिएण उ भत्तेणं'ति मासे भवं मासिकं तेन तुः पूरणे 'भक्तेन' भोजनेन मासोपवासोपलक्षकत्वादस्य मासोपवासेनेतियावत् 'सिद्धिं' निष्ठितार्थतां सकलकर्मक्षयेणेति गम्यते, 'अनुत्तरां' सकलसिद्धिप्रधानाम्, अनेनाञ्जनसिद्ध्यादिव्यवच्छेदमाहेति सूत्रद्वयार्थः ॥ इड्डीत्यादिसूत्रकदम्बकस्य तात्पर्यार्थमाह निर्युक्तिकृत्—

इड्डीए निक्खंतो काउं समणत्तणं परमघोरं। तत्थ गओ सो धीरो जत्थ गया खीणसंसारा ॥४१९॥

सुगमेव, नवरम्, 'ऋद्ध्या' दीनानाथदानादिकया विभूत्या निष्क्रान्तः सन् 'परमघोरं' कातरजनातिशयदुरनुचरं यत्र गताः क्षीणसंसारा इति मोक्ष इत्यभिप्राय इति गाथाऽवयवार्थः ॥ साम्प्रतं सकलाध्ययनार्थोपसंहारद्वारेणोपदिशन्नाह सूत्रकृत्—

एवं करंति संबुद्धा (संपन्ना), पंडिया पवियक्खणा। विणियट्टंति भोगेसु, मियापुत्ते जहामिसी ॥ ९६ ॥

व्याख्यातप्रायमेव, संगता प्रज्ञा येषां ते संप्रज्ञाः संपन्ना वा ज्ञानादिभिः 'जहामिसि'त्ति, मकारोऽलाक्षणिको यथेत्यौपम्याभिधायी 'ऋषिः' मुनिरिति सूत्रावयवार्थः। इत्थमन्योक्त्योपदिश्य पुनर्भङ्ग्यन्तरेणोपदिशन्नाह—

मानापमानयो , गौरवादीनि सूत्रे सुब्व्यत्ययेन सप्तम्यन्ततया निर्दिष्टानि पञ्चम्यन्ततया व्याख्येयानि, निवृत्त इति च सर्वत्र सम्बन्धनीयम्, 'अबन्धन' रागद्वेषबन्धनरहित ॥ अत एव 'अनिश्रित' इहलोके परलोके वाऽनिश्रितो नेहलोकार्थं परलोकार्थं वाऽनुष्ठानवान् 'णो इहलोगट्ठयाए तवमहिट्ठेज्जा नो परलोगट्ठयाए तवमहिट्ठेज्जा' इत्याद्यागमात् पुनरनिश्रिताभिधान च मन्दमतिविनेयानुग्रहार्थमदुष्टमेव, वासीचन्दनकल्प इत्यनेन समत्वमेव विशेषत आह, वासीचन्दनशब्दाभ्या च तद्व्यापारकपुरुषावुपलक्षितौ, ततश्च यदि किलैको वास्या तक्ष्णोति, अन्यश्च गोशीर्षादिना चन्दनेनालिम्पति, तथाऽपि रागद्वेषाभावतो द्वयोरपि तुल्य , कल्पशब्दस्येह सदृशपर्यायत्वात्, 'अनशने' इति च नञाऽभावे कुत्साया वा, ततश्चाशनस्य–भोजनस्याभावे कुत्सिताशनभावे वा कल्प , इह चेष्टितोऽधिकाराणा प्रवृत्तिरिति पूर्वत्र समस्तमपि कल्प इत्यनुवर्त्तते, 'अप्रशस्तेभ्य' प्रशसाऽनास्पदेभ्य 'द्वारेभ्य' कर्मोपार्जनोपायेभ्यो हिंसादिभ्य 'सर्वत' सर्वेभ्यो य आश्रव –कर्मसलगनात्मक स पिहित —तद्द्वारस्थगनतो निरुद्धो येनासौ पिहिताश्रव , सापेक्षस्यापि गमकत्वात्समास , यद्वाऽप्रशस्तेभ्यो द्वारेभ्य सर्वेभ्यो निवृत्त इति गम्यते, अत एव पिहिताश्रव , कै पुनरयमेवविध ?–अध्यात्मेत्यात्मनि ध्यानयोगा –शुभध्यानव्यापारा अध्यात्मध्यानयोगास्तै , अध्यात्मग्रहण तु परस्थाना तेषामकिञ्चित्करत्वाद्, अन्यथाऽतिप्रसङ्गात्, प्रशस्त प्रशसास्पदो दमश्च—उपशम शासन च–सर्वज्ञागमात्मक यस्य स प्रशस्तदमशासन इति सूत्रपद्धार्थ ॥ सम्प्रति तत्फलोपदर्शनायाह—



## अथ विंशतितमं महानिर्ग्रन्थीयमध्ययनम् ।

व्याख्यातमेकोनविंशमध्ययनम्, अधुना विंशतितममारभ्यते, अस्य चायमभिसम्बन्धः—अनन्तराध्ययने निष्प्रतिकर्मतोक्ता, इयं चानाथत्वपरिभावनेनैव पालयितुं शक्येति महानिर्ग्रन्थहितमभिधातुमनाथतैवानेकधाऽनेनोच्यते इत्यनेन सम्बन्धेनायातमिदमध्ययनम्, अस्य च चतुरनुयोगद्वारप्ररूपणा प्राग्वत् यावन्नामनिष्पन्ननिक्षेपे महानिर्ग्रन्थीयमिति नाम, क्षुल्लकप्रतिपक्षश्च महान् इति क्षुल्लकस्य निर्ग्रन्थस्य च निक्षेपमाह निर्युक्तिकृत्—

नामं ठवणादविए खित्ते काले अ ठाण पइ भावे। एएसि खुडुगाणं पडिवक्ख महंतगा हुंति ॥४२०॥

निक्खेवो नियंठंमि चउक्कओ दुविह० ॥ ४२१ ॥

जाणगसरीरभविए तवइरित्ते अ निण्हगाईसु। भावे पंचविहे खलु इमेहिं दारेहिं सो नेओ ॥ ४२२ ॥

अत्र च नामस्थापने सुगमे, द्रव्यक्षुल्लकादीनि क्षुल्लकनिर्ग्रन्थीयाध्ययन एव महत्प्रतिपक्षं व्याख्यानयद्भिर्व्याख्यातानीति न पुनः प्रतन्यन्ते। 'णिक्खेवो नियंठंमी'त्यादि प्रतीतार्थं, नवरम्, 'एभिः' इति वक्ष्यमाणैः 'द्वारैः' व्याख्यानोपायैः 'सः' इति निर्ग्रन्थो ज्ञेय इति गाथात्रयार्थः ॥ तानि चामूनि द्वाराणि—

महप्पभावस्स महाजसस्स, मियाइपुत्तस्स निसम्म भासियं। तवप्पहाणं चरियं च उत्तमं, गइप्पहाणं च तिलोअविस्सुतं ॥ ९७ ॥ वियाणिया दुक्खविवद्धणं धणं, ममत्तबंधं च महाभयावहं। सुहावहं धम्मधुरं अणुत्तरं, धारेह निव्वाणगुणावहं महं ॥ ९८ ॥ तिबेमि ॥

॥ मियापुत्तीज्जं ॥ १७ ॥

सूत्रद्वयं निगदसिद्धमेव, नवरं मृगापुत्रस्य 'भाषितं' संसारदुःखरूपतावेदकं यत्तेन पित्रोः पुरत उक्तं, प्रधानं तपो यत्र चरिते तत्प्रधानतपो, व्यत्ययनिर्देशश्च प्राग्वत्, 'चरितं' च चेष्टितं 'गतिप्पहाणं च' इति प्रधानगतिं च मुक्तिमिति योऽर्थः, 'त्रिलोकविश्रुता' जगत्त्रितयप्रतीताम्, अनेन च फललिप्सवो हि प्रेक्षावन्तः प्रवर्त्तन्त इति काक्वा फलमाह। एतन्निशमनाच्च ममत्वं बन्ध इव सत्प्रवृत्तिविघातितया ममत्वबन्धस्तं च, महाभयावहं तत एव चौरादिभ्यो महाभयावासे, धर्मो धूरिव महासत्त्वैरुह्यमानतया धर्मधुरा–महाव्रतपञ्चकात्मिका तां, तथा निर्वाणगुणा—अनन्तज्ञानदर्शनवीर्यसुखादयस्तदावहा—तत्प्रापिका धर्मधुरा धारयतेति सम्बन्धः। इह च निर्वाणगुणावहत्वं सुखावहत्वे हेतुः 'महतिं' अपरिमितमाहात्म्यतया महती, सूत्रत्वाच्चैवं निर्देश इति सूत्रद्वयार्थः ॥ 'इति' परिसमाप्तौ ब्रवीमीति पूर्ववत्, उक्तोऽनुगमः, सम्प्रति नयास्तेऽपि प्राग्वदेव ॥ इति श्रीशान्त्याचार्यकृतायां शिष्यहितायामुत्तराध्ययनटीकायामेकोनविंशमध्ययनं समाप्तम् ॥

स्नातकोऽपि, नवरमयं क्षीणकषायवीतराग एव ३। द्वारं। 'कप्पो'त्ति 'कल्पः' स्थितास्थितकल्पो जिनकल्पादिर्वा, तत एव पुलाकादयः किं स्थितकल्पेऽस्थितकल्पे वा?, द्वयोरपि स्युः, स्थविरकल्पादिरूपकल्पापेक्षया तु पुलाकः स्थविरकल्पे जिनकल्पे वा, न तु कल्पातीतः, तथा चागमः—"पुलाए णं भंते ! किं जिणकप्पे होज्जा ? थेरकप्पे होज्जा ? कप्पाईए होज्जा ?, गोयमा ! जिणकप्पे वा होज्जा थेरकप्पे वा होज्जा णो कप्पातीते होज्ज"त्ति, अन्ये त्वाहुः—स्थविरकल्प एवेति, वकुशप्रतिसेवनाकुशीलावपि जिनकल्पे स्थविरकल्पे वा, न तु कल्पातीतौ, कषायकुशीलस्त्रिष्वपि स्यात्, निर्ग्रन्थस्नातकौ कल्पातीतावपि ४। द्वारं। 'चरित्त'मिति पुलाकवकुशप्रतिसेवनाकुशीलाः सामायिकच्छेदोपस्थापनीययोः, कषायकुशीलश्चैतयोः परिहारविशुद्धिसूक्ष्मसंपराययोश्च, निर्ग्रन्थो यथाख्यात एव, एवं स्नातकोऽपि ५। द्वारं। 'पडिसेवण'त्ति, पुलाकः प्रतिसेवको नाप्रतिसेवकः, स हि मूलगुणोत्तरगुणानामन्यतमविराधनात एव भवति, वकुशोऽपि प्रतिसेवक एव, नवरमुत्तरगुणविराधनातः, प्रतिसेवनाकुशीलः पुलाकवत्, कषायकुशीलनिर्ग्रन्थस्नातका अप्रतिसेवका एव ६। द्वारं। 'णाण'त्ति, पुलाकवकुशप्रतिसेवका द्वयो ज्ञानयोस्त्रिषु वा, तत्र द्वयोर्मतिश्रुतयोस्त्रिषु मतिश्रुतावधिषु, इह च पुलाकस्य श्रुतं नवमपूर्वतृतीयाचारवस्तुन आरभ्य यावन्नव पूर्वाणि पूर्णानि, उक्तं हि—"आरतो परओ वा न लद्धी लभइ" कषायकुशीलो द्वयोस्त्रिषु चतुर्षु वा, तत्र द्वयोर्मतिश्रुतयोस्त्रिषु मतिश्रुतावधिषु मतिश्रुतमनःपर्यायेषु (वा चतुर्षु) मतिश्रुतावधिमनःपर्यायेषु, निर्ग्रन्थोऽप्येवमेव, स्नातकस्तु केवलज्ञान एव, श्रुतज्ञाने

पण्णवण १ वेय २ रागे ३ कप्प ४ चरित्त ५ पडिसेवणा ६ नाणे ७ । तित्थ ८ लिंग ९ सरिर १० खित्ते ११ काल १२ गइ १३ ठिइ १४ सजम १५ निगासे १६ ॥ ४२३ ॥ जोगु १७ वओग १८ कसाए १९ लेसा २० परिणाम २१ बधणे २२ उदए २३ । कम्मोदीरण २४ उवसपजहण २५ सण्णा २६ य आहारे २७ ॥ ४२४ ॥ भावा २८ ऽऽगरिसे २९ काल ३० तरे ३१ समुग्घाय ३२ खित्त ३३ फुसणा य ३४ । भावे ३५ परिणामे ३६ खलु महानियठाण अप्पबहू ३७ ॥ ४२५ ॥

तत्र प्रज्ञापना–स्वरूपनिरूपण, तच्चैषा क्षुल्लकनिर्ग्रन्थीयाध्ययन एवाभिहितमिति नेहाभिधीयते १ द्वार। 'वेद'त्ति वेद —स्त्रीपुनपुसकभेद , तत्र पुलाक पुनपुसकवेदयोर्न तु स्त्रीवेदे, तत्र तथाविधलब्धेरभावात्, बकुश स्त्रीपुनपुसकवेदस्तेषु त्रिष्वपि, एव प्रतिसेवनाकुशीलोऽपि, कषायकुशील सवेदो वा स्यादवेदो वा, यदि सवेदस्त्रिष्वपि वेदेषु, अथावेद उपशान्तवेद क्षीणवेदो वा, निर्ग्रन्थस्त्ववेद एव, सोऽप्युपशान्तवेद क्षीणवेदो वा, एव स्नातकोऽपि, न त्वसावुपशान्तवेद , क्षीणमोहत्वात् २ । द्वार। 'राग' इति पुलाकबकुशप्रतिसेवककषायकुशीला सरागा एव, कषायोदयवर्त्तित्वात्तेषा, निर्ग्रन्थो वीतराग , स चोपशान्तकषायवीतराग क्षीणकषायो वा वीतराग , एव

जइ उवसंहरिउं, तहा सिणाइयाणं जो संहरणादिसंभवो सो पुमोवसंहरियाणं, जओ केवलियादिणो नोवसंहरिज्जंति" त्ति १२। द्वारं। 'गति'त्ति 'गतिः' प्रागुक्तैव नवरमिहाराधनाविराधनाकृतो विशेष उच्यते—तत्र पुलाकोऽविराधनाद् इन्द्रेपूत्पद्यते, विराधनातस्त्विन्द्रसामानिकत्रयस्त्रिंशलोकपालानामन्यतमेषु, एवं बकुशप्रतिसेवनाकुशीलावपि, कषायकुशीलः पुनरविराधनया इन्द्रेष्वहमिन्द्रेषु वा जायते, विराधनयेन्द्रादीनामन्यतमेषु, निर्ग्रन्थस्त्वहमिन्द्रेष्वेवोत्पद्यते १३। द्वारं। 'ठिति'त्ति, पुलाकस्य जघन्येन पल्योपमपृथक्त्वं स्थितिरुत्कृष्टतोऽष्टादश सागरोपमाणि, बकुशप्रतिसेवनाकषायकुशीलानामपि जघन्यतः पल्योपमपृथक्त्वमुत्कृष्टतो बकुशप्रतिसेवकयोर्द्वाविंशतिसागरोपमाणि, कषायकुशीलस्य तु त्रयस्त्रिंशत्, निर्ग्रन्थस्याजघन्योत्कृष्टा त्रयस्त्रिंशदेवेति १४। द्वारं। 'संजमे'त्ति पुलाकबकुशप्रतिसेवककषायकुशीलानामसङ्ख्येयानि संयमस्थानानि, निर्ग्रन्थस्नातकयोरजघन्योत्कृष्टमेकमेव संयमस्थानं १५। द्वारं। 'णिगासि'त्ति, आर्षत्वात्सभा( मो )लोपे सन्निकर्षः—स्वस्थानपरस्थानापेक्षया तुल्याधिकहीनत्वचिन्तनं, तत्र च संयमस्थानापेक्षया सर्वस्तोकं निर्ग्रन्थस्य, स्नातकस्य चैकमजघन्योत्कृष्टं संयमस्थानं ततः पुलाकस्यासङ्ख्येयगुणानि, एवं बकुशप्रतिसेवककषायकुशीलानामपि पूर्वपूर्वापेक्षयाऽसङ्ख्येयगुणत्वं भावनीयम्, अमीषां च पञ्चानामपि प्रत्येकमनन्ताश्चारित्रपर्यायाः, यत उक्तम्—"पुलाकस्स णं भंते! केवतिया चरित्तपज्जवा पण्णत्ता ?, गोयमा! अणंता चरित्तपज्जवा पण्णत्ता, एवं जाव सिणायस्सत्ति" तथा च—चारित्रपर्यायापेक्षया स्वस्थानं सन्निकर्षचिन्तायां

तु क कुत्र वर्त्तते इति क्षुल्लकनिर्ग्रन्थीय एवोक्तत्वान्न पुनरुच्यते ७। द्वार। 'तित्थ'त्ति इह च 'तीर्थं' यत्तीर्थकरेण क्रियते, पुलाको बकुशप्रतिसेवकौ च तीर्थे, कषायकुशीलस्तु तीर्थेऽतीर्थे वा, अतीर्थे च भवन् तीर्थकरो वा स्यात् प्रत्येकबुद्धो वा, एव निर्ग्रन्थस्नातकावपि ८। द्वार। 'लिंगि'त्ति लिङ्ग द्विधा–द्रव्यभावभेदात्, तत्रामी द्रव्यत स्वलिङ्गे अन्यलिङ्गे गृहिलिङ्गे वा स्यु, भावतस्तु स्वलिङ्ग एव ९। द्वार। 'सरीरे'त्ति पुलाकस्त्रिष्वौदारिकतैजसकार्मणेषु, बकुशप्रतिसेवनाकुशीलौ त्रिषु चतुर्षु वा, वैक्रियस्यापि तयो सभवात्, कषायकुशीलोऽप्येष पञ्चसु च, तस्याहारकेऽपि सम्भवात्, निर्ग्रन्थ स्नातकश्च पुलाकवत् १०। द्वार। 'खेत्त'त्ति 'क्षेत्र' कर्मभूम्यादि, तत्र जन्म सद्भाव च प्रतीत्य पञ्चाप्यमी कर्मभूमावेव स्यु, यथासम्भव च संहरण प्रतीत्य कर्मभूमावकर्मभूमौ वा ११। द्वार। 'कालो'त्ति कालत पञ्चापि पुलाकादयो जन्मत सद्भावतश्चावसर्पिण्या सुषमदुष्षमादुष्षमसुषमादुष्षमाभिधानेषु कालेषु स्यु, उत्सर्पिण्या दुष्षमसुषमासुषमदुष्षमयो, इद च भरतैरावतदशके, विदेहपञ्चकेषु चतुर्थकालप्रतिभागे यथासम्भव सहरण प्रतीत्य यथोक्तादन्यत्रापि काले स्यु, प्रज्ञप्त्यभिप्रायस्त्वय–जन्मत सद्भावतश्च पुलाकोऽवसर्पिण्या सुषमदुष्षमदुष्षमसुषमाकाले च, न तु शेषेषु, उत्सर्पिण्या जन्मतो दुष्षमाया दुष्षमासुषमाया सुषमादुष्षमाया, सद्भावतश्च दुष्षमासुषमाया सुषमादुष्षमाया चेति भरतैरावतयो, महाविदेहे तु चतुर्थप्रतिभागे पञ्चापि सर्वदैव स्यु, यथासम्भव सहरणतो न कदाचिन्निषिध्यन्ते, नवर तत्पुलाकस्य नास्ति,स्नातकादीना तु पूर्वसहृतत्वेन तत्सभव, उक्त हि–"पुलागलद्धीए वट्टमाणो ण सक्कि-

कषायकुशीलश्चतुर्षु संज्वलनक्रोधादिषु त्रिषु द्वयोरेकस्मिन् वा स्यात्, निर्ग्रन्थोऽकषायः, स चोपशमतः क्षयतो वा, एवं स्नातको, नवरमसौ क्षीणकषाय एव १९। द्वारं। 'लेस'त्ति पुलाकबकुशप्रतिसेवकाः पीतपद्मशुक्लाभिधानासु तिसृषु लेश्यासु, कषायकुशीलः षट्स्वपि, निर्ग्रन्थः शुक्ललेश्यायां, स्नातकस्तस्यामेवातिशुद्धायाम् २० । द्वारं। 'परिणामे य'त्ति पुलाकबकुशप्रतिसेवककषायकुशीला वर्द्धमाने हीयमानेऽवस्थिते वा परिणामे स्युः, निर्ग्रन्थस्नातकौ वर्द्धमानावस्थितपरिणामावेव, तत्र च पुलाकादयस्त्रयो वर्द्धमाने परिणामे, अवस्थिते तु जघन्येनैकं समयं, समयानन्तरं कषायकुशीलत्वादिगमनेन मरणेन वा, नवरं पुलाकस्य मरणं नास्ति, उक्तं च—"पुलाके तत्थ णो मरति"त्ति । उत्कृष्टेनान्तर्मुहूर्त्तम्, एवं हीयमानेऽपि, अवस्थिते तु जघन्यतः समयमुत्कृष्टेन सप्त समयान्, निर्ग्रन्थो जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तं वर्द्धमाने परिणामे, अवस्थिते तु जघन्येनैकं समयम् उत्कृष्टेनान्तर्मुहूर्त्तं, तथा चागमः—"णियंठे णं भंते ! केवतियं कालं वद्धमाणपरिणामे होज्जा ?, गोयमा ! जहन्नेणं अंतोमुहुत्तं, उक्कोसेणंपि अंतोमुहुत्तं । केवइयं कालं अवट्ठियपरिणामे होज्जा ?, गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं"ति । अपरे त्वयमुत्कृष्टतोऽवस्थितपरिणामे सप्त समयानित्याहुः, स्नातको जघन्येन उत्कृष्टेन च वर्द्धमानपरिणामेऽन्तर्मुहूर्त्तमवस्थितपरिणामे जघन्यतोऽन्तर्मुहूर्त्तमुत्कृष्टेन देशोनां पूर्वकोटीम् २१। द्वारं। 'बंधण'त्ति कर्मबन्धनं, तत्रायुर्वर्जाः सप्त कर्मप्रकृतीः पुलाको बध्नाति, बकुशप्रतिसेवकौ तु सप्त अष्टौ वा, आयुषोऽपि तयोर्बन्धसम्भवात्, कषायकुशीलोऽष्टौ सप्त षड् वाऽऽ-

पुलाक पुलाकस्य चरित्रपर्यायै स्याद्धीनस्तुल्योऽधिको वा, तत्र हीनोऽधिको वा भवन्ननन्तासङ्ख्यसङ्ख्येयभागसङ्ख्यातासङ्ख्यातानन्तगुणलक्षणेन षट्स्थानकेन स्यात्,एव बकुशप्रतिसेवककषायकुशीला अपि स्वस्थानहीनाधिकचिन्ताया षट्स्थानपतिता एव,निर्ग्रन्थस्नातकौ तु स्वस्थानचिन्ताया तुल्यावेव, परस्थानसन्निकर्षचिन्ताया पुलाको बकुशप्रतिसेवकनिर्ग्रन्थस्नातकेभ्यश्चरित्रपर्यायैरनन्तगुणहीनो न तु तुल्योऽधिको वा, कषायकुशीलापेक्षया षट्स्थानपतित , तथा चागम –"पुलाए ण भते! बउसस्स परट्ठाणसन्निगासेण चरित्तपज्जवेहिं किं हीणे तुल्ले अब्भहिए?, गोयमा! हीणे णो तुल्ले णो अब्भहिए, अणतगुणहीणे, एव पडिसेवणाकुसीलस्सवि, कसायकुसीलेण सम छट्ठाणवडिए, जहेव सट्ठाणणियठस्स, जहा बउसस्स एव सिणायस्सवि" केचित्तु प्रतिसेवनाकुशीलापेक्षयापि षट्स्थानपतित इत्याहु , बकुश पुलाकापेक्षया चरित्रपर्यायैरनन्तगुणाधिक प्रतिसेवककषायकुशीलौ तु प्रति षट्स्थानपतित निर्ग्रन्थस्नातकाभ्यामनन्तगुणहीन , एव प्रतिसेवककषायकुशीलयोरपि परस्थानसनिकर्षो वाच्यो नवर कषायकुशील पुलाकापेक्षया षट्स्थानपतित , निर्ग्रन्थस्नातकौ पुलाकाद्यपेक्षयाऽनन्तगुणाधिकाविति १६। द्वार। 'जोग'त्ति पुलाकादीना निर्ग्रन्थावसानाना मनोवाक्कायाख्ययोऽपि योगा स्यु , स्नातक सयोगोऽयोगो वा स्यात् १७। द्वार। 'उवओग'त्ति, पुलाकादयश्चत्वारो मतिश्रुतावधिमन पर्यायभेदतश्चतुर्भेदे साकारोपयोगे चक्षुरचक्षुरवधिविकल्पतस्त्रिविधे चानाकारोपयोगे स्यु , स्नातक केवलज्ञानदर्शनाख्ययोर्द्वयोरेव १८। द्वार। 'कसाय'त्ति पुलाकबकुशप्रतिसेवका सज्वलनकषायैश्चतु कषाया

सञ्ज्ञोपयुक्ताश्च, २६ । द्वारम् । 'आहार'त्ति पुलाकादयो निर्ग्रन्थावसाना आहारका एव, स्नातकस्तु आहारकोऽनाहारको वा २७ । द्वारं । तथा 'भव'त्ति पुलाकादयश्चत्वारो जघन्यत एकं भवग्रहणमुत्कृष्टतस्तु पुलाकनिर्ग्रन्थयोस्त्रीणि, बकुशप्रतिसेवककषायकुशीलानामष्टौ स्नातकस्याजघन्योत्कृष्टमेकमेव २८ । द्वारं । 'आगरिस'त्ति आकर्षणमाकर्षः, स चेह सर्वविरतेर्ग्रहणमोक्षौ, पुलाकादीनां चतुर्णां जघन्येनैकभविक एक एवाकर्षः, उत्कृष्टेन पुलाकस्य त्रयो बकुशप्रतिसेवककषायकुशीलानां शतशो, निर्ग्रन्थस्य द्वौ, स्नातकस्याजघन्योत्कृष्ट एकः, नानाभविकाकर्षापेक्षया पुलाकादीनां चतुर्णां जघन्येन द्वौ उत्कृष्टेन पुलाकस्य सप्त, बकुशस्य कुशीलद्वयस्य च सहस्रशो, निर्ग्रन्थस्य पञ्च, स्नातकस्य तु नास्त्येव २९। द्वारं। 'काले'त्ति पुलाको जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तं यावद्भवति, बकुशप्रतिसेवककषायकुशीलास्तु जघन्येनैकसमयमुत्कृष्टेन देशोनां पूर्वकोटिं, निर्ग्रन्थोऽपि जघन्यत एकं समयमुत्कृष्टेनान्तर्मुहूर्त्तं, तथा च भगवत्याम्-"णियंठे पुच्छा, गोयमा ! जहण्णेणं एक्कं समयं उक्कोसेणं अंतोमुहुत्तं" अन्ये तु निर्ग्रन्थोऽपि जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तमेवेति मन्यन्ते, स्नातको जघन्येनान्तर्मुहूर्त्तमुत्कृष्टतो देशोनां पूर्वकोटिम्, एवमेकजीवापेक्षया, बहुजीवापेक्षया तु पुलाकनिर्ग्रन्थौ जघन्यत एकं समयमुत्कृष्टेनान्तर्मुहूर्त्तं, बकुशः सर्वाद्धम्, एवं प्रतिसेवककषायकुशीलस्नातका अपि ३० । द्वारम् । 'अंतरे य'त्ति पुलाकादीनां चतुर्णामन्तरं जघन्येनान्तर्मुहूर्त्तमुत्कृष्टतोऽनन्तं कालं, स च कालतोऽनन्ता उत्सर्पिण्यवसर्पिण्यः, क्षेत्रत उपार्द्धपुद्गलपरावर्त्तो देशोनः, स्नातकस्य नास्त्य-

युर्मोहवर्जा , निर्ग्रन्थस्त्वेकमेव सात,स्नातकोऽप्येवमबन्धको वा २२ । द्वार । 'उदय'त्ति कर्मोदय , पुलाकबकुशप्रतिसेवककषायकुशीला अष्टविधमपि कर्म वेदयन्ते,निर्ग्रन्थो मोहवर्जा सप्त, स्नातको वेद्यायुर्नामगोत्राख्याश्चतस्र २३। द्वार। 'कम्मोदीरण'त्ति पुलाक आयुर्वेदनीयवर्जा षट् कर्मप्रकृतीरुदीरयति, बकुशप्रतिसेवकावष्टावायुर्वर्जा सप्त षट् आयुर्वेदनीयवर्जा , कषायकुशीलोऽप्येवमष्टौ सप्त षट् वेद्यायुर्मोहनीयवर्जा पञ्च वा, निर्ग्रन्थोऽप्येता एव पञ्च द्वे वा नामगोत्राख्ये, स्नातकस्त्वेते एव द्वे अनुदीरको वा २४ । द्वार । 'उवसपजहण'त्ति उवसपदनम्—उपसम्पद्—अन्यरूपप्रतिपत्ति , सा च हान च—स्वरूपपरित्याग उपसम्पद्धान, तत्र पुलाक पुलाकता त्यजस्ता परित्यजति कषायकुशीलत्वमसयम वोपसम्पद्यते, कोऽभिप्राय ?—न रूपान्तरापत्तिं विना पूर्वरूपपरित्यागो नापि तत्परित्याग विना तदापत्ति , कथञ्चिन्नित्यानित्यरूपत्वाद्वस्तुन , एव सर्वत्र भावनीय, बकुशोऽपि बकुशता त्यजन् ता परित्यजति प्रतिसेवकत्व कषायकुशीलत्वमसयम सयमासयम वोपसपद्यते, प्रतिसेवनाकुशील प्रतिसेवनाकुशीलत्व त्यजस्तत्परित्यजति बकुशत्व कषायकुशीलत्वमसयम सयमासयम वोपसम्पद्यते, कषायकुशील कषायकुशीलत्व त्यजस्तत्परित्यजति पुलाकादित्रय निर्ग्रन्थत्वमसयम सयमासयम वोपसम्पद्यते, निर्ग्रन्थो निर्ग्रन्थत्व त्यजस्तत्परित्यजति कषायकुशीलत्व स्नातकत्वमसयम वोपसम्पद्यते, स्नातक स्नातकत्व त्यजस्तत्परित्यजति सिद्धिगतिमुपसम्पद्यते २५ । द्वारं। 'सन्न'त्ति सञ्ज्ञा, तत्र पुलाकनिर्ग्रन्थस्नातका नोसञ्ज्ञोपयुक्ता , बकुशप्रतिसेवककषायकुशीला सञ्ज्ञोपयुक्ता नो-

कवद्वाच्या, पूर्वप्रतिपन्नकास्तु जघन्येन कोटिशतपृथक्त्वमुत्कृष्टेनापि तदेव, एवं प्रतिसेवका अपि, कषायकुशीलाः प्रतिपद्यमानका जघन्येन तथैव उत्कृष्टेन सहस्रपृथक्त्वं, पूर्वप्रतिपन्ना जघन्येनोत्कृष्टेन च कोटिसहस्रपृथक्त्वं, निर्ग्रन्थाः प्रतिपद्यमानका जघन्येन तथैव उत्कृष्टेन द्विषष्ट्यधिकं शतं, तत्राष्टोत्तरं शतं क्षपकाणां चतुष्पञ्चाशदुपशमकानां, पूर्वप्रतिपन्नका अपि यदा स्युस्तदा जघन्येन तथैव उत्कृष्टेन शतपृथक्त्वं, स्नातकाः प्रतिपद्यमानका जघन्येन तथैव उत्कृष्टेनाष्टोत्तरं शतं, पूर्वप्रतिपन्नकास्तु जघन्येनोत्कृष्टेन च कोटिपृथक्त्वम्, इह च जघन्यत उत्कृष्टतस्तु पृथक्त्वमेवोच्यते, तत्र तज्जघन्यं लघुतरमुत्कृष्टं बृहत्तरमिति भावनीयं ३६ । द्वारं । 'खलु महानिग्गंथाण अप्पबहुं'ति 'खलुः'वाक्यालङ्कारे महानिर्ग्रन्थानां द्रव्यनिर्ग्रन्थापेक्षयाऽमीषामेव प्रशस्यमुनीनामल्पबहुत्वं वाच्यमिति शेषः, तत्र सर्वस्तोका निर्ग्रन्थास्ततः पुलाकाः सङ्ख्येयगुणाः, पुलाकेभ्यः स्नातकाः, स्नातकेभ्यो बकुशाः, बकुशेभ्यः प्रतिसेवकाः, प्रतिसेवकेभ्यः कषायकुशीला इति ३७ द्वारगाथात्रयार्थः॥ साम्प्रतं निर्ग्रन्थनिरुक्तिद्वारेणोपसंहरन्नाह—

सावज्जगंथमुक्का अब्भंतरबाहिरेण गंथेण । एसा खलु निज्जुत्ती महानियंठस्स सुत्तस्स ॥ ४२२ ॥

प्राग्वत् । गतो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

सिद्धाण नमो किच्चा संजयाणं च भावओ । अत्थधम्मगइं तच्चं, अणुसिट्ठिं सुणेह मे ॥१॥

न्तरम्, इत्थमेकं प्रति, बहूनां तु पुलाकनिर्ग्रन्थानां जघन्येनैकसमयं उत्कृष्टेन पुलाकस्य सङ्ख्येयानि वर्षाणि निर्ग्रन्थस्य पण्मासा, उक्तं हि—"सेढिं नियमा छम्मासाउ पडिवज्जतित्ति" शेषाणां नास्त्येव ३१। द्वार। 'समुग्घाय'त्ति पुलाकस्य वेदनाकषायमारणान्तिकसमुद्घातास्त्रयो, बकुशप्रतिसेवकयोस्त एव वैक्रियतैजसान्विता पञ्च, कषायकुशीलस्य तु त एवाहारकसहिता षड्,निर्ग्रन्थस्यैकोऽपि नास्ति, स्नातकस्य केवलिसमुद्घात एकः ३२। द्वार। 'खेत्त'त्ति पुलाकादयश्चत्वारो लोकस्यासङ्ख्येयभागे नो सङ्ख्येयभागे न सङ्ख्येयेष्वसङ्ख्येयेषु वा भागेषु नापि सर्वलोके, स्नातकोऽसङ्ख्येयभागेऽसङ्ख्येयेषु भागेषु सर्वलोके वा, न शेषेषु, तथा च प्रज्ञप्ति—"सिणाए पुच्छा, गोयमा! नो संखिज्जे भागे हुज्जा असंखिज्जे भागे हुज्जा णो संखेज्जेसु भागेसु होज्जा असंखिज्जेसु भागेसु हुज्जा सव्वलोए वा होज्जत्ति" चूर्णिकारस्त्वाह—सङ्ख्येयभागादिषु सर्वेषु भवति ३३। द्वार। 'फुसणा उ'त्ति स्पर्शना च क्षेत्रवद्वाच्या ३४। द्वार। 'भावे'त्ति पुलाकादयस्त्रय क्षायोपशमिके भावे, निर्ग्रन्थ औपशमिके क्षायिके वा,स्नातक क्षायिके, इह तु पुलाकादयो निर्ग्रन्था, निर्ग्रन्थत्वं तु चारित्रनिमित्तमिति तद्धेतुभूतस्यैव भावस्य विवक्षितत्वादित्थमभिधानम्, अन्यथा मनुष्यत्वादेरौदयिकादेरपि भावस्य सम्भवात् ३५। द्वार। 'परिमाण'त्ति पुलाका प्रतिपद्यमानका कदाचित्सन्ति कदाचिन्नेति, यदा सन्ति तदा जघन्येनैको द्वौ वा त्रयो वा, उत्कृष्टत शतपृथक्त्वं, पूर्वप्रतिपन्ना अपि यदि स्युस्तदा जघन्येन तथैवोत्कृष्टेन सहस्रपृथक्त्वं, बकुशा प्रतिपद्यमानका यदा स्युस्तदा जघन्येनोत्कृष्टेन च पुला-

पभूयरयणो राया, सेणिओ मगहाहिवो । विहारजत्तं निज्जाओ,मंडिकुच्छिसि चेइए ॥२॥ नाणादुमलयाइन्नं, नाणापक्खिनिसेवियं । नाणाकुसुमसंछण्णं, उज्जाणं नंदणोवमं ॥ ३ ॥ तत्थ सो पासए साहुं, संजयं सुसमाहियं । निसन्नं रुक्खमूलंमि, सुकुमालं सुहोइयं ॥ ४ ॥ तस्स रूवं तु पासित्ता, राइणो तंमि संजए। अच्चंतपरमो आसी, अउलो रूवविम्हओ ॥ ५ ॥ अहो वन्नो अहो रूवं, अहो अज्जस्स सोमया । अहो खंती अहो मुत्ती, अहो भोगे असंगया ॥ ६ ॥ तस्स पाए उ वंदित्ता, काऊण य पयाहिणं । नाइदूरमणासन्ने, पंजली पडिपुच्छई ॥ ७ ॥ तरुणोऽसि अज्जो ! पव्वइओ, भोगकालंमि संजया ! । उवट्ठिओऽसि सामन्ने, एअमट्ठं सुणेमु ता ॥८॥

सूत्रसप्तकं पाठसिद्धमेव, नवरं प्रभूतानि रत्नानि—मरकतादीनि प्रवरगजाश्वादिरूपाणि वा यस्यासौ प्रभूतरत्नः 'विहारजत्त'न्ति सुब्व्यत्ययाद् विहारयात्रया क्रीडार्थमश्ववाहनिकादिरूपया 'निर्यातः' निर्गतो नगरादिति गम्यते, 'मंडिकुच्छिसि'त्ति मण्डिकुक्षौ मण्डिकुक्षिनाम्नि 'चैत्ये' इत्युद्याने । तदेव नानेत्यादिना विशिनष्टि—'साहुं संजयं सुसमाहियं'ति,साधुः सर्वोऽपि शिष्ट उच्यते तद्व्यवच्छेदार्थं संयतमित्युक्तं, सोऽपि च बहिःसंयमवान्निह्नवादिरपि स्यादिति सुष्ठु समाहितो—मनःसमाधानवान् सुसमाहितस्तमित्युक्तं, 'सुहोइयं'ति सुखोचितं शुभोचितं वा । 'अत्यन्तपरमः' अतिशयप्रधानः 'अतुलः' अनन्यसदृशो रूपविषयो विस्मयो रूपविस्मयः 'अहो ?' इत्यादिना विस्मयस्वरूपमुक्तम् , इह

सित–बद्धमिहाष्टविध कर्म तद् ध्मात–भस्मसाद्भूतमेषामिति सिद्धा –ध्यानानलनिर्दग्धाष्टकर्मेन्धना , उक्त हि–"सिय धतन्ति सिद्धस्स, सिद्धत्तमुधजायति"त्ति, तेभ्य , कोऽभिप्राय ?—तीर्थंकरसिद्धेभ्य इतरेभ्यश्च 'नमो' नमस्कार 'कृत्वा'–विधाय 'सयतेभ्यश्च' सकलसावद्यव्यापारोपरतेभ्य आचार्योपाध्यायसर्वसाधुभ्य इतियावत् 'भावत ' परमार्थतो न तु सवृत्त्यैव, इत्थ पञ्चपरमेष्ठिरूपेष्टदेवतास्तवमभिधायाभिधेयादित्रयमेवाह—अर्थश्च धर्मश्चार्थधर्मौ यदिवाऽर्थ्यते–हितार्थिभिरभिलष्यते इत्यर्थ , स चासौ धर्मश्चार्थधर्मस्ततस्तयोस्तस्य वा गति –गत्यर्थाना ज्ञानार्थतया हिताहितलक्षणा सरूपपरिच्छित्तिर्यया यस्या वा साऽर्थधर्मगतिस्ता, पाठान्तरतोऽर्थधर्मवर्ती वा 'तच्च'ति तथ्याम्—अविपरीताम् 'अनुशिष्टि' हितोपदेशरूपा शिक्षा 'शृणुत' आकर्णयत 'मे' इति मम मया वा कथयत कथ्यमाना चेति शेष , स्थविरवचनमेतत्, अनेन च पूर्वोत्तरकालभाविक्रियाद्वयानुगतैककर्तृप्रतिपादनेनात्मनो नित्यानित्यत्वमाह, एकान्तनित्यत्वे ह्यविचलितरूपत्वान्न पूर्वक्रियाकर्तृत्वस्वरूपपरिहारेणोत्तरक्रियाकर्तृत्वाख्यस्वरूपान्तरसम्भव , एकान्तानित्यत्वपक्षे तु क्षणध्वसित्वादुत्तरक्रियाकाल आत्मनोऽसत्त्वमेवेति नैकान्तनित्यानित्यपक्षयो पूर्वोत्तरक्रियानुगतैककर्तृसम्भव इति भावनीयम्, इह चानुशिष्टिरभिधेया, अर्थधर्मगति प्रयोजनम्, अनयोश्च परस्परमुपायोपेयभावलक्षण सम्बन्ध सामर्थ्यादुक्त इति सूत्रार्थ ॥ सम्प्रति धर्मकथानुयोगत्वादस्य धर्मकथाकथनव्याजेन प्रतिज्ञातमुपक्रमितुमाह—

तो सो पहसिओ राया, सेणिओ मगहाहिवो । एवं ते इड्ढिमंतस्स, कहं नाहो न विज्जई ? ॥ १० ॥
होमि नाहो भयंताणं, भोगे भुंजाहि संजया ! । मित्तनाईपरिवुडो, माणुस्सं खु सुदुल्लहं ॥ ११ ॥

सूत्रद्वयं प्रतीतार्थमेव, नवरम् 'एव'मिति दृश्यमानप्रकारेण 'ऋद्धिमतः' विस्मयनीयवर्णादिसम्पत्तिमतः 'कथम्' इति केन प्रकारेण नाथो न विद्यते ?, तत्कालापेक्षया सर्वत्र वर्त्तमाननिर्देशः, "यत्राकृतिस्तत्र गुणा वसन्ति", तथा 'गुणवति धनं ततः श्रीः श्रीमत्याज्ञा ततो राज्य'मिति हि लोकप्रवादः, तथा च न कथञ्चिदनाथत्वं भवतः संभवतीति भावः, यदि चानाथतैव भवतः प्रव्रज्याप्रतिपत्तिहेतुस्ततः 'होमि'त्ति भवाम्यहं 'भदन्तानां' पूज्यानां, ततश्च मयि नाथे मित्राणि ज्ञातयो भोगाश्च तव सुलभा एवेत्यभिप्रायेण भोगेत्याद्युक्तवान्, मानुष्यं खलु सुदुर्लभमिति च हेत्वभिधानमिति सूत्रद्वयार्थः ॥ मुनिराह—

अप्पणावि अणाहोऽसि, सेणिया ! मगहाहिवा । अप्पणा अणाहो संतो, कहं नाहो भविस्ससि ? ॥१२॥ एवं वुत्तो नरिंदो सो, सुसंभंतो सुविम्हिओ । वयणं अस्सुअपुव्वं, साहुणा विम्हयं निओ ॥ १३ ॥ अस्सा हत्थी मणुस्सा मे, पुरं अंतेउरं च मे । भुंजामि माणुसे भोए, आणा इस्सरियं च मे ॥ १४ ॥ एरिसे संपयग्गंमि, सव्वकामसमप्पिओ । कहं अणाहो भवई ?, मा हु भंते ! मुसं वए ॥ १५ ॥

'अप्पणावि' सूत्रं सुगममेव, एवं च मुनिनोक्ते एतं सूत्रत्रयं स्पष्टमेव, नवरमास्ते घटनैवं—स श्रेणिकनामा नरेन्द्रो

न स्पृहता, पादवन्दनाग ... 
चागम –"आलोए जिणपडिमाणं पणाम करेति"त्ति। 'प्रतिपृच्छति' प्रश्नयति, तरुणेत्यादिना प्रश्नस्वरूपमुक्तम्, इह च यत एव तरुणोऽत एव प्रव्रजितो भोगकाल इत्युच्यते, तारुण्यस्य भोगकालत्वात्, यद्वा तारुण्येऽपि रोगादिपीडाया न भोगकाल स्यादित्येवमभिधान, सोऽपि कदाचित्संयमेऽनुद्यत एव स्यात् त्व पुनरुपस्थितश्च–कृतोद्यमश्च श्रामण्ये, पठन्ति च 'उवद्वितोऽसि'त्ति, एनम् 'अर्थ'निमित्त येनार्थेन त्वमीदृश्यामप्यवस्थाया प्रव्रजित शृणोमि 'ता' इति तावत्, पश्चात्तु यत्त्व भणिष्यसि तदपि श्रोष्यामीति भाव इति श्लोकसप्तकार्थ ॥ इत्थ राज्ञोक्ते मुनिराह—

अणाहो मि महाराय!, नाहो मज्झ न विज्जई। अणुकपयं सुहिं वावि, कची नाहि तुमे मह ॥ ९ ॥

'अनाथ' अस्वामिकोऽस्मीत्यह 'महाराज!' प्रशस्तनृपते!, किमित्येव? यतो 'नाथ' योगक्षेमविधाता मम न विद्यते, तथा 'अणुकपग'ति आर्षत्वादनुकम्पको यो मामनुकम्पते, 'सुहिं'ति तत एव सुहृद् 'वावि'त्ति प्राग्वदेव 'कचि'त्ति कश्चिन्न विद्यते, ममेति सम्बन्ध, 'नाहि'त्ति प्रक्रमादनन्तरोक्तमर्थं जानीहि 'तुमि'त्ति त्व, पठ्यते च– 'कची नाभिसमेमह' कश्चिदनुकम्पक सुहृद् वाऽपि 'नाभिसमेमि' नाभिसगच्छामि, न केनचिदनुकम्पेन सुहृदा वा सङ्गतोऽहमित्यादिनाऽर्थेन तारुण्येऽपि प्रव्रजित इति भाव इति सूत्रार्थ ॥ एव च मुनिनोक्ते—

मंगं च पीडई । इंदासणिसमा घोरा, वेयणा परमदारुणा ॥ २१ ॥ उवट्ठिया मे आयरिया, विज्जामंतचिगिच्छगा । अबीआ सत्थकुसला, मंतमूलविसारया ॥ २२ ॥ ते मे तिगिच्छं कुव्वंति, चाउप्पायं जहाहियं । न य मे दुक्खा विमोयंति, एसा मज्झ अणाहया ॥ २३ ॥ पिया मे सव्वसारंपि, दिज्जाहि मम कारणा । न य दुक्खा विमोयंति, एसा मज्झ अणाहया ॥२४॥ माया (वि) मे महाराय!, पुत्तसोगदुहट्टिया । न य दुक्खा विमोयंति, एसा मज्झ अणाहया ॥ २५ ॥ भायरा मे महाराय!, सगा जिट्ठकणिट्ठगा । न य दुक्खा विमोयंति, एसा मज्झ अणाहया ॥ २६ ॥ भइणीओ मे महाराय!, सगा जिट्ठकणिट्ठगा । न य दुक्खा विमोयंति, एसा मज्झ अणाहया ॥ २७ ॥ भारिया मे महाराय!, अणुरत्तमणुव्वया । अंसुपुन्नेहिं नयणेहिं, उरं मे परिसिंचई ॥ २८ ॥ अन्नं पाणं च ण्हाणं च, गंधमल्लविलेवणं । मए नायमनायं वा, सा बाला नोवभुंजई ॥ २९ ॥ खणंपि मे महाराय!, पासाओवि न फिट्टई । न य दुक्खा विमोएइ, एसा मज्झ अणाहया ॥ ३० ॥ तओऽहं एवमाहंसु, दुक्खमा हु पुणो पुणो । वेयणा अणुहविउं जे, संसारंमि अणंतए ॥ ३१ ॥ सयं च जइ मुंचिज्जा, वेयणा विउला इओ । खंतो दंतो निरारंभो, पव्वइए अणगारियं ॥ ३२ ॥ एवं च चिंतइत्ता णं, पासुत्तो मि नराहिवा! । परियत्तंतीइ राईए, वेयणा मे खयं गया ॥ ३३ ॥ तओ कल्ले पभायंमि, आउच्छित्ता ण बंधवे । खंतो दंतो निरारंभो, पव्वईओ अणगारियं ॥ ३४ ॥ तोऽहं नाहो जाओ, अप्पणो अ परस्स य । सव्वेसिं चेव भूयाणं, तसाणं थावराण य ॥ ३५ ॥

विस्मयान्वित प्रागपि रूपादिविपयविस्मयोपेत सन् 'एवम्' उक्तनीत्या वचनमात्मनाऽप्यनाथस्त्वमित्यादिरूपमश्रुतपूर्वं साधुनोक्त सुसम्भ्रान्त –अत्याकुल सुविस्मितश्च–अतीव विस्मयोपेतो भूत्वोक्तवानिति शेप , यदुक्तवांस्तदाह–'अस्सा' इत्यादिना सूत्रद्वयेन,अत्र चाश्वा मे सन्तीत्यादिक्रिया सर्वत्राध्याहर्त्तव्या, अत एव भुनजिम 'माणुसि त्ति मानुष्यकान् भोगान् 'आना' अस्खलितशासनात्मिका 'ऐश्वर्यं च' द्रव्यादिसमृद्धि , यद्वा आज्ञया ऐश्वर्यम्–प्रभुत्व आज्ञैश्वर्यं, तथा च 'ईदृशे' अनन्तरमुक्तरूपे सम्पदामग्र सम्पदग्र–समृद्धिप्रकर्पस्तस्मिन् सति, पठ्यते च–'एरिसे सपयायमि' त्ति तत्र च सम्पदामायो–लाभ सम्पदायस्तस्मिन् 'सघकामसमप्पिय' त्ति प्राकृतत्वात् समर्पितसर्वकामे 'कथ' केन प्रकारेण 'अनाथ ' अस्वामी 'भवई' त्ति पुरुपव्यत्ययेन भवामि 'मा हु' त्ति हुशब्दस्तस्मादर्थे,यत एव तस्मान्मा भदन्त ! मृपा 'वए' त्ति वादी , पठन्ति च–'भते ! मा हु मुस वय' त्ति सूत्रत्रयार्थ ॥ यतिस्तमुवाच—

न तुम जाणासि ऽ( णे अ ) नाहस्स, अत्थ पुच्छ च पत्थिवा । जहा अणाहो भवई, सणाहो वा नरा-हिव ! ॥ १६ ॥ सुणेहि मे महाराय !, अव्वक्खित्तेण चेयसा । जहा अणाहो भवई, जहा मेअ पवत्तिय ॥२७॥ कोसवीनाम नयरी, पुराणपुरभेयिणी । तत्थ आसी पिया मज्झ, पभूयधणसचओ ॥ १८ ॥ पढमे वए महा-राय !, अउला मे अच्छिवेयणा । अहुत्था तिउलो दाहो, सव्वगत्तेसु पत्थिवा ! ॥ १९ ॥ सत्थ जहा परम तिक्ख, सरीरविवरतरे । पविसिज्ज अरी कुद्धो, एव मे अच्छिवेयणा ॥ २० ॥ तिअ मे अतरिच्छ च, उत्ति

अभिमतवस्त्वभिलापं न केवलं वहिशिकाद्येवेति भावः 'पीडयति' वाधते, वेदनेति सम्बन्धः, तत्कालापेक्षया च वर्त्तमाननिर्देशः, एवमन्यत्रापि, इन्द्राशनिः—इन्द्रवज्रं तत्समाना—तुल्या अतिदाहोत्पादकत्वादिति भावः 'घोरा' परेषामपि दृश्यमाना भयोत्पादनी 'परमदारुणा' अतीवदुःखोत्पादिका ॥ किं न कश्चित्तां प्रतिकृतवानित्याह—'उपस्थिताः' वेदनाप्रतीकारं प्रत्युद्यताः 'मे' मम 'आचार्याः' इति प्राणाचार्या वैद्या इतियावत्, 'विद्यामन्त्रचिकित्सकाः' विद्यामन्त्राभ्याम्—उक्तरूपाभ्यां व्याधिप्रतिकर्त्तारः 'अद्वितीयाः' अनन्यसाधारणतया तथाविधद्वितीयाभावात्, 'सत्थकुसल'त्ति शस्त्रेषु शास्त्रेषु वा कुशलाः शस्त्रकुशला शास्त्रकुशला वा, पठ्यते च 'नानासत्थत्थकुसल'त्ति सुगमं,मन्त्राणि च—उक्तरूपाणि मूलानि च—ओषधयस्तेषु विशारदाः—विज्ञा मन्त्रमूलविशारदाः ॥ नैवोपस्थानमात्रेणैव ते स्थिताः किन्तु ते मे चिकित्सां कुर्वन्ति 'चाउप्पायं'ति 'चतुष्पदां' भिषग्भेषजातुरप्रतिचारकात्मकचतुर्भा(त्मकभा)गचतुष्टयात्मिकां 'जहाहियं'ति 'यथाहितं' हितानतिक्रमेण यथाऽधीतं वा—गुरुसम्प्रदायागतवमनविरेचकादिरूपां,ततः किमित्याह—न चैवं कुर्वन्तोऽपि 'दुःखाद्' एवंविधरोगजनितादसाताद् 'विमोचयन्ति' विशेषेण मुत्कलयन्ति, एषा दुःखाविमोचनात्मिका ममानाथता ॥ अन्यच्च—'सर्वसारमपि' निःशेषप्रधानं वस्तुरूपं 'दिज्जाहि'त्ति दद्यात् न त्वेवमादरवानपि दुःखात् 'विमोचयंति'त्ति वचनव्यत्ययाद्विमोचयति, एवं सर्वत्र ॥ तथा पुत्रविषयः शोकः पुत्रशोकः, हा ! कथमित्थं दुःखी मत्सुतो जात इत्यादिरूपस्ततो दुःखं तेन 'अट्टिय'त्ति आर्त्ता 'अद्दिय'त्ति वा 'अर्दिता' उभयत्र पीडितेत्यर्थः,

विंशति सूत्राणि प्रायः प्रतीतार्थान्येव,नवरं 'न तुम जाणे अणाहस्स'त्ति न त्वं 'जानीपे' अवबुध्यसे,अनाथस्येति-अनाथशब्दस्यार्थं च-अभिधेयमुत्था वा-उत्थानं मूलोत्पत्तिं केनाभिप्रायेण मयोक्तं इत्येवरूपा,पठ्यते च-'अत्थ पोत्थं च'त्ति, अर्थं प्रोत्था वा-प्रकृष्टोत्थानरूपामत एव यथाऽनाथः सनाथो वा भवति तथा च न जानीपे इति सम्बन्धः ॥ शृणु 'मे' मम कथयत इति शेषः, किं तदित्याह—यथाऽनाथो भवतीत्यनाथशब्दस्याभिधेयः पुरुषो भवति, यथा 'मेय'त्ति मया च प्रवर्त्तितमिति-प्ररूपितमनाथत्वमिति प्रक्रमः, अनेनोत्थानमुक्तम् ॥ 'पुराणपुरभेयणि'त्ति, पुराणपु-राणि भिनत्ति—स्वगुणैरसाधारणत्वाद्भेदेन व्यवस्थापयति पुराणपुरभेदिनी, बहुलवचनात्कर्त्तरि ल्युट्,पठ्यते च-'नगराण पुडभेयण'त्ति लिङ्गव्यत्ययान्नगराणां मध्ये पुटभेदनं, पुनरिदमुक्तं भवति—प्रधाननगरी ॥ प्रथमे वयसि, इह प्र-क्रमाद्यौवने 'अतुला' अनुपमा अक्ष्णोर्वेदना—अक्षिरोगजनिता व्यथा 'अहोत्थ'त्ति अभूत् 'तिउले'त्ति आर्षत्वात् 'तोदकः' व्यथकः 'सर्वगात्रेषु' सर्वाङ्गेषु, पठ्यते च 'विउलो दाहो सव्वगेसु य'त्ति गतार्थं, 'सरीरविवरंतरे'त्ति शरीरविवराणि—कर्णरन्ध्रादीनि तेषामन्तरं-मध्यं शरीरविवरान्तरं तस्मिन् 'पवेसेज्ज'त्ति 'प्रवेशयेत्' प्रक्षिपेत्, शरीरविवरग्रहणमतिसुकुमारत्वादान्तरत्वचो गाढवेदनोपलक्षणं, पठ्यते च-'सरीरबीयअंतरे आवेलिज्ज'त्ति शरीर-बीज-सप्तधातवस्तदन्तरे-तन्मध्ये 'आपीडयेद्' गाढमवगाहयेत्, 'एव'मित्यापीड्यमानस्य शस्त्रवत् 'मे' ममाक्षिवे-दना, कोऽर्थः ?—यथा तदत्यन्तबाधाविधायि तथैषापीति ॥ 'त्रिक'मिति कटिभागम् 'अन्तरा' मध्ये 'इच्छा च'

रोच्छित्तितो मूलत एव न वेदनासम्भवः स्यादिति भावः ॥ 'एवं च चिंतइत्ता णं'ति न केवलमुक्त्वा चिन्तयित्वा चैवं 'पासुत्तोमि'त्ति प्रसुप्तोऽस्मि 'परियट्टंतिय'त्ति परिवर्त्तमानायाम्–अतिक्रामन्त्यां 'ततः' वेदनोपशमानन्तरं 'कल्ल'त्ति कल्यो नीरोगः सन् 'प्रभाते' प्रातः, यद्वा 'कल्ल' इति चिन्तादिनापेक्षया द्वितीयदिने प्रकर्षेण व्रजितो–गतः प्रव्रजितः, कोऽर्थः ?–प्रतिपन्नवाननगारिताम् ॥ तत इति प्रव्रज्याप्रतिपत्तेरहं नाथो जातः–संवृत्तो, योगक्षेमकरणक्षम इति भावः, 'आत्मनः' स्वस्य 'परस्य वा' अन्यस्य गुरुपादेः सर्वेषां भूतानां–जीवानां त्रसानां स्थावराणां चेति-त्रसस्थावरभेदभिन्नानामिति विंशतिसूत्रावयवार्थः ॥ किमिति प्रव्रज्याप्रतिपत्त्यनन्तरं नाथस्त्वं जातः पुरा तु न इत्याह—

अप्पा नई वेयरणी, अप्पा मे कूडसामली । अप्पा कामदुहा धेणू, अप्पा मे नंदणं वणं ॥ ३६ ॥

अप्पा कत्ता विकत्ता य, दुहाण य सुहाण य । अप्पा मित्तममित्तं च, दुप्पट्ठियसुपट्ठिओ ॥ ३७ ॥

'आत्मे'ति व्यवच्छेदफलत्वाद्वाक्यस्यात्मैव नान्यः कश्चित्, किमित्याह—'नदी' सरित् 'वैतरणी' नरकनद्या नाम, ततो महाऽनर्थहेतुतया नरकनदीव, अत एवात्मैव कूटमिव जन्तुयातनाहेतुत्वाच्छाल्मली कूटशाल्मली नरकोद्भवा। तथाऽऽत्मैव कामान्–अभिलाषान् दोग्धि–कामितार्थप्रापकतया प्रपूरयति कामदुघा धेनुरिवधेनुः,इयं च रूढित उक्ता, एतदुपमत्वं चाभिलाषितस्वर्गापवर्गावाप्तिहेतुतया, आत्मैव 'मे' मम 'नन्दनं' नन्दननामकं 'वनम्' उद्यानम्, एतदौपम्यं चास्य चित्तप्रह्लत्तिहेतुतया ॥ यथा चैतदेवं तथाऽऽह–आत्मैव 'कर्त्ता' विधायको दुःखानां सुखानां चेति

तत पुत्रशोकदु खार्त्ता पुत्रशोकदु खार्दिता वा ॥ तथा 'सग'त्ति लोकरूढित सौदर्या स्वका वा–आत्मीया वा ॥ तथा 'भइणि'त्ति भगिन्य ॥ अपर च 'भार्या' पत्नी 'अनुरक्ता' अनुरागवती 'अणुव्वय'त्ति अन्विति–कुलानुरूप व्रतम्–आचारोऽस्या अनुव्रता पतिव्रतेति यावत्, वयोऽनुरूपा वा, पठ्यते च–'अणुत्तरमणुव्वय'त्ति, इह च मकारोऽलाक्षणिकः, अनुत्तरा–अतिप्रधाना 'उर'न्ति 'उर' वक्ष 'परिसिञ्चति' समन्तात्प्लावयति ॥ स्नात्वनेनेति स्नान–गन्धोदकादि मया स्नातमस्नात वेत्यनेन सद्भावसारतामाह, पठ्यते च–'तारिसं रोगमावण्णो'त्ति, 'तादृशम्' उक्तरूप 'रोगम्' अक्षिरोगादिकम् 'आपन्ने' प्राप्ते मयीति गम्यते, सेति–भार्या बालेव बाला–अभिनवयौवना 'नोपभुङ्क्ते' नासेवते ॥ 'पासाओऽवि ण फिट्टइ'त्ति, अपि चशब्दार्थे, मत्पार्श्वाच्च नापयाति, सदा सन्निहितैवास्ते, अनेन तस्या अतिवत्सलत्वमाह ॥ 'तत' इति रोगाप्रतिकार्यतानन्तरमहम् 'एव' वक्ष्यमाणप्रकारेण 'आहंसु'त्ति उक्तवान्, यथा 'दुक्खमा हु'त्ति, हु एवकारार्थे, ततो दु क्षमैव–दु सहैव पुन पुन 'वेदना' उक्तस्वरूपा रोगव्यथा 'अनुभवितु' वेदयितु जे इति निपात पूरणे ॥ यतश्चैवमत 'सय च'त्ति चशब्दोऽपिशब्दार्थस्तत सकृदपि–एकदाऽपि यदि मुच्येऽहमिति गम्यते, कुत ?–'वेयण'त्ति वेदनाया 'विउल'त्ति विपुलाया–विस्तीर्णाया 'इत' इत्यनुभूयमानाया, तत किमित्याह—'क्षान्त' क्षमावान् 'दान्त' इन्द्रियनोइन्द्रियदमेन 'पव्वइए अणगारिय'त्ति, 'प्रव्रजेय' गृहान्निष्क्रामेय ततश्च 'अनगारता' भावभिक्षुतामङ्गीकुर्यामिति शेष ,यद्वा 'प्रव्रजेय' प्रतिपद्येयमनगारिता येन ससा-

से चिरंपि ॥ ४३ ॥ विसं तु पीयं जह कालकूडं, हणाइ सत्थं जह कुग्गहीअं । एसेव धम्मो विसओववन्नो, हणाइ वेयाल इवाविवन्नो ॥ ४४ ॥ जो लक्खणं सुविण पउंजमाणो, निमित्तकोऊहलसंपगाढे । कुहेडविज्जासवदारजीवी, न गच्छई सरणं तंमि काले ॥ ४५ ॥ तमंतमेणेव उ से असीले, सया दुही विप्परियासुवेइ । संधावई नरगतिरिक्खजोणी, मोणं विराहित्तु असाहुरूवे ॥ ४६ ॥ उद्देसियं कीयगडं नियागं, न मुचई किंचि अणेसणिज्जं । अग्गीविवा सव्वभक्खी भवित्ता, इओ चुओ गच्छइ कट्टु पावं ॥ ४७ ॥ न तं अरी कंठ छित्ता करेइ, जं से करे अप्पणिया दुरप्पा । से नाहिई मच्चुमुहं तु पत्ते, पच्छाणुतावेण दयाविहूणो ॥४८॥ निरत्थया नग्गरुई उ तस्स, जे उत्तमट्ठे विवयासमेइ । इमेवि से नत्थि परेवि लोए, दुहओऽवि से झिज्जइ तत्थ लोए ॥ ४९ ॥ एमेवऽहाछंदकुसीलरूवे, मग्गं विराहित्तु जिणुत्तमाणं । कुररी विवा भोगरसाणुगिद्धा, निरट्ठसोया परितावमेइ ॥ ५० ॥

'इयम्' अनन्तरमेव वक्ष्यमाणा 'हुः' पूरणे 'अन्या' अपरा 'अपिः' समुच्चये 'अनाथता' अस्वामिता, यदभावतोऽहं नाथो जात इत्याशयः, 'णिव'त्ति नृप 'ता'मित्यनाथताम् 'एकचित्तः' एकाग्रमनाः 'निभृतः' स्थिरः शृणु, का पुनरसावित्याह—निर्ग्रन्थानां धर्मः—आचारो निर्ग्रन्थधर्मस्तं 'लभियाणवि'त्ति लब्ध्वाऽपि 'यथा' इत्युपप्रदर्शने 'सीदन्ति' तदनुष्ठानं प्रति शिथिलीभवन्ति 'एके' केचन ईषदपरिसमासाः कातराः—निःसत्त्वाः बहुकातराः 'विभाषा सुपो

योग , प्रक्रमाघाल्यन पर 'विकरिता च' विक्षेपकथात्मैव तेपामेव, अतश्चात्मैव 'मित्रम्' उपकारितया सुहृत् 'अमित्त'त्ति 'अमित्र च' अपकारितयाऽसुहृत् । कीदृक् सन् ?–'दुप्पट्ठियसुप्पट्ठिओ'त्ति, दुष्ट प्रस्थित –प्रवृत्तो दुष्प्रस्थित दुराचारनिमातेतियावत् सुष्ठु प्रस्थितः सुप्रस्थित सदनुष्ठानकर्त्तेतियावत् योऽर्थ , एतयोर्विशेषणसमास , दुष्प्रस्थितो ह्यात्मा समस्तदु खहेतुरिति वैतरण्यादिरूप. सुप्रस्थितश्च सकलसुखहेतुरिति कामधेन्वादिकल्प । तथा च प्रव्रज्याऽवस्थायामेव सुप्रस्थितत्वेनात्मनोऽन्येषा च योगकरणसमर्थत्वानाथत्वमिति सूत्रद्वयगर्भार्थ ॥ पुनरन्यथाऽनाथत्वमाह—

इमा हु अन्नावि अणाहया निवा !, तामेगचित्तो निहुओ सुणेहि मे । नियंठधम्मं लहियाणवी जहा, सीयंति एगे बहुकायरा नरा ॥ ३८ ॥ जे पव्वइत्ताण महव्वयाइं, सम्मं (च)नो फासयई पमाया । अनिग्गहप्पा य रसेसु गिद्धे, न मूलओ छिंदइ बंधणं से ॥ ३९ ॥ आउत्तया जस्स य नत्थि कावि, इरियाइ भासाइ तहेसणाए । आयाणनिक्खेवदुगुंछणाए, न वीरजायं अणुजाइ मग्गं ॥४०॥ चिरंपि से मुंडरुई भवित्ता, अथिरव्वए तवनियमेहिं भट्ठे । चिरंपि अप्पाण किलेसइत्ता, न पारए होइ हु संपराए ॥ ४१ ॥ पोल्लेव मुट्ठी जह से असारे, अयंतिते कूडकहावणे य । राढामणी वेरुलियप्पगासे, अमहग्घए होइ हु जाणएसु ॥ ४२ ॥ कुसीललिंगं इह धारइत्ता, इसिज्झयं जीविय वूहइत्ता । असंजए संजय लप्पमाणे, विणिघायमागच्छइ

विधः पोल्लेत्यन्तःशुषिरा 'एव' इत्यवधारणे तेन पोल्लैव, न मनागपि निविडा 'मुष्टिः' अङ्गुलिसन्निवेशविशेषात्मिका 'यथा' इति सादृश्ये, पठ्यते वा—'पोल्लारमुट्ठी जह'त्ति इहापि 'पोल्लर'त्ति शुषिरा, असारत्वं चोभयोरपि सदर्थशून्यतया 'अयंतिय'त्ति 'अयन्त्रितः' अनियमितः कूटकार्षापणवत्, वाशब्दस्येहोपमार्थत्वात्, यथा ह्यसौ न केनचित्कूटतया नियन्त्र्यते, तथैषोऽपि गुरूणामप्यविनीततयोपेक्षणीयत्वात्, 'राढामणि'त्ति काचमणिर्वैडूर्यवत्प्रकाशते—प्रतिभासत इति वैडूर्यप्रकाशः—वैडूर्यमणिसदृशः 'अमहार्घकः' इत्यमहामूल्यो भवति, 'चः' समुच्चये भिन्नक्रमस्ततोऽमहार्घकश्च 'जाणएसु'त्ति ज्ञेषु मुग्धजनविप्रतारकत्वात्तस्य ॥ 'कुशीललिङ्गं' पार्श्वस्थादिवेषम् 'इह' अस्मिन् जन्मनि धारयित्वा 'ऋषिध्वजं' मुनिचिह्नं रजोहरणादि 'जीविय'त्ति आर्षत्वाज्जीविकार्थं 'बृंहयित्वा' इदमेव प्रधानमितिख्यापनेनोपबृंह्य यद्वा 'इसिज्झयंमि' सुव्यत्ययाद् ऋषिध्वजेन 'जीविय'त्ति बिन्दुलोपात् 'जीवितम्' असंयमजीवितं जीविकां वा-निर्वहणोपायरूपां बृंहयित्वेति—पोषयित्वाऽत एवासंयतः सन् 'संजय लप्पमाणे'त्ति प्राकृतत्वात्सोपस्कारत्वाच्च संयतमात्मानं लपन्, पठ्यते च—'संजयलाभमाणे'त्ति आर्षत्वात् संयतलाभः—स्वर्गापवर्गप्राप्तिरूपस्तं मन्यमानो ममायं भविष्यतीति गणयन् 'विनिघातं' विविधाभिघातरूपम् 'आगच्छति' आयाति स 'चिरमपि' प्रभूतकालमप्यास्तामल्पं नरकगत्यादाविति भावः ॥ इहैव हेतुमाह—विषं पिबन्तीति आर्षत्वात्पीतं यथा 'कालकूटं' कालकूटनामकं 'हणाइ'त्ति हन्ति, चस्य च गम्यमानत्वात् शस्त्रं च, यथा कुत्सितं गृहीतं कुगृहीतम् 'एसेव'त्ति एष एवं

वहु च पुरस्तान्वि'ति प्राग्वहुत्वप्रत्यय , ये हि सर्वथा नि सत्त्वास्ते मूलत एव न निर्ग्रन्थमार्ग प्रतिपद्यन्त इत्येवमुच्यते, यदिवा कातरा एव वहव सभवन्तीति वहुशब्दो विशेपण, 'नरा ' पुरुपा ' सीदन्तश्च नात्मानमन्याश्च रक्षयितु क्षमा इतीय सीदनलक्षणाऽपराऽनाथतेति भाव ॥ 'जो पवइत्ताणे' त्यादि सूत्राणि सीदनस्यैवानेकधा स्वरूपानुवादत फलदर्शकानि स्पष्टान्येव नवर 'नो स्पृशति' इति नासेवते 'प्रमादात्' निद्रादेरनिगृहीत —अविद्यमानविपयनियन्त्रण आत्माऽस्येत्यनिग्रहात्मा, अत एव 'रसेपु' मधुरादिपु 'गृद्ध ' गृद्धिमान् वध्यतेऽनेन कर्मेति वन्धन—रागद्वेपात्मक 'से'इति स ॥ 'आयुक्तता' दत्तावधानता 'काचिदि'ति स्वल्पाऽपि 'आयाणणिक्खेवदुगुछणाए'त्ति आदाननिक्षेपयो – उपकरणग्रहणन्यासयोर्जुगुप्सनायाम्, इह चोच्चारादीना सयमानुपयोगितया जुगुप्सनीयत्वेनैव परिस्थापना जुगुप्सनोक्ता, स ईदृक् किमित्याह—धीरैर्यातो—गतो धीरयातस्तम् 'अनुयाति' अनुगच्छति, नेति सम्वन्ध , अल्पसत्त्वतयेति भाव , क ?—'मार्ग' सम्यग्दर्शनादिक मुक्तिपथम् ॥ तथा च 'चिरमपि' प्रभूतकालमपि मुण्ड एव—मुण्डन एव केशापनयनात्मनि शेपानुष्ठानपराङ्मुखतया रुचिर्यस्यासौ मुण्डरुचि , अस्थिराणि—गृहीतमुक्ततया चलानि व्रतान्यस्येत्यस्थिरव्रत 'तपोनियमेभ्य ' उक्तरूपेभ्य 'भ्रष्ट ' च्युतश्चिरमपि 'अप्पाण'त्ति आत्मान 'क्लेशयित्वा' लोचादिना वाधयित्वा, आत्मनैवेति गम्यते, न 'पारग ' पर्यन्तगामी भवति 'हु ' वाक्यालङ्कारे 'सपराए'त्ति सपरायन्ति—भृश पर्यटन्त्यस्मिन् ज तव इति सम्पराय —ससारस्तस्य, सूत्रे च सुब्व्यत्ययात्सप्तमी ४ ॥ स चैवं-

यतश्चैवं दुश्चरितैरेव दुर्गतिप्राप्तिरतः 'न' नैव 'तम्' इति प्रस्तावादनर्थं 'कण्ठछेत्ता' प्राणहर्त्ता 'से' तस्य 'दुरप्प'त्ति प्राकृतत्वात् 'दुरात्मता' दुष्टाचारप्रवृत्तिरूपा, न चैनामाचरन्नपि जन्तुरत्यन्तमूढतया वेत्ति, ततः किमुत्तरकालमपि न वेत्स्यतीत्याह—'सः' दुरात्मताकर्त्ता ज्ञास्यति प्रक्रमाद् दुरात्मतां 'मृत्युमुखं तु' मरणसमयं पुनः प्राप्तः पश्चादनुतापेन—हा दुष्टु मयाऽनुष्ठितमित्येवंरूपेण, दया—संयमः सत्याद्युपलक्षणमहिंसा वा तद्विहीनः सन्, मरणसमये हि प्रायोऽतिमन्दधर्मस्यापि धर्माभिप्रायोत्पत्तिरित्येवमभिधानं, यतश्चैवं महाऽनर्थहेतुः पश्चात्तापहेतुश्च दुरात्मता तत आदित एव मूढतामपहाय परिहर्त्तव्येयमिति भावः॥ यस्तु मृत्युमुखप्राप्तोऽपि न तां वेत्स्यति तस्य का वार्त्तेत्याह—'णिरट्ठिए' इत्यादि, निरर्थिका तुशब्दस्यैवकारार्थस्येह सम्बन्धात् 'निरर्थकैव' निष्फलैव नाग्न्ये—श्रामण्ये रुचिः—इच्छा नाग्न्यरुचिस्तस्य 'जे उत्तमट्ठं'ति सुव्व्यत्ययादपेश्च गम्यमानत्वाद् 'उत्तमार्थेऽपि' पर्यन्तसमयाराधनारूपेऽपि आस्तां पूर्वमित्यपिशब्दार्थः 'विपर्यासं' दुरात्मतायामपि सुन्दरात्मतापरिज्ञानरूपम् 'एति' गच्छति, इतरस्य तु कथञ्चित्स्यादपि किञ्चित्फलमिति भावः, किमेवमुच्यते ?, यतः 'इमेवि'त्ति अयमपि प्रत्यक्षो लोक इति सम्बन्धः, 'से' इति तस्य 'नास्ति' न विद्यते, न केवलमयमेव परोऽपि लोको—जन्मान्तरलक्षणः, तत्रेहलोकाभावः शरीरक्लेशहेतुलोचादिसेवनात् परलोकाभावश्च कुगतिगमनतः शारीरमानसदुःखसम्भवात्, तथा च 'दुहतोऽवि'त्ति द्विधाऽपि ऐहिकपारत्रिकार्थाभावेन 'स झिज्झइ' त्ति, स ऐहिकपारत्रिकार्थसम्पत्तिमतो जनान् विलोक्य धिग् मामपुण्यभाजनमुभयभ्रष्टतयेति चिन्तया

विपादिवत् 'धम्मो'त्तिधर्मो—यतिधर्मं 'विपयोपपन्न' शब्दादिविपययुक्तो हन्ति, दुर्गतिपातहेतुत्वेन द्रव्ययतिमिति शेप 'वेताल इवाविवण्ण'त्ति अविपन्न अप्रासविपत् मन्त्रादिभिरनियन्त्रित इत्यर्थ ,पठ्यते च–'वेयाल इवाविवधणो'त्ति इह च 'अविवन्धन' अविद्यमानमन्त्रादिनियन्त्रण , उभयत्र साधकमिति गम्यते ॥ यो लक्षण 'सुविणो'त्ति स्वप्न चोरुरूप 'प्रयुञ्जान' व्यापारयन् निमित्त च–भौमादि कौतुक च–अपत्याद्यर्थं स्नपनादि तयो सप्रगाढ –अतिशयासक्तो निमित्तकौतुकसप्रगाढ 'कुहेडविज्ज'त्ति कुहेटकविद्या–अलीकाश्चर्यविधायिमन्त्रतन्त्रज्ञानात्मिकास्ता एव कर्मबन्धहेतुतयाऽऽश्रवद्वाराणि तैर्जीवितु शीलमस्येति कुहेटकविद्याऽऽश्रवद्वारजीवी 'न गच्छति' न प्राप्नोति 'शरण' त्राण दुष्कृतरक्षाक्षम 'तस्मिन्' फलोपभोगोपलक्षिते 'काले' समये ॥ अमुमेवार्थं भावयितुमाह–'तमतमेणेव उ'त्ति अतिमिथ्यात्वोपहततया 'तमस्तमसैव' प्रकृष्टाज्ञानेनैव 'तु' पूरणे 'स' द्रव्ययति• अशील सदा दु खी विराधनाजनितदु खेनैव 'विप्परियासुवेइ'त्ति विपर्यास तत्त्वादिषु वैपरीत्यम् 'उपैति' उपगच्छति, ततश्च 'सधावति' सतत गच्छति नरकतिर्यग्योनी 'मौन' चारित्र विराध्य 'असाधुरूप' तत्त्वतोऽयतिस्वभाव सन्, अनेन विराधनाया अनुबन्धवत्फलमुक्तम् ॥ कथ पुनर्मौन विराध्य कथ वा नारकतिर्यग्गती सधावतीत्याह–'उद्देसिय'मित्यादि, क्रयण–क्रीत तेन कृत—निर्वर्तित क्रीतकृत 'नित्याग' नित्यपिण्डम् 'अग्गीविव'त्ति अग्निरिव प्राकृतत्वादाकार सर्वम्–अप्राशुकमपि भक्षयतीत्येवशील• सर्वभक्षी भूत्वा कृत्वा च पापमिति योग•,'गच्छति' याति कुगतिमिति शेपः॥

'चरित्तमायारगुणन्निए'त्ति मकारोऽलाक्षणिकः, चरित्रस्याचरणम् आचारः—आसेवनं स एव गुणः, यद्वा गुणो—ज्ञानं ततस्तेन ताभ्यां वाऽन्वितश्चारित्राचारगुणान्वितः 'ततः' महानिर्ग्रन्थमार्गगमनाद् 'अनुत्तरं' प्रधानं 'संजम पालिया णं'ति 'संयमं' यथाख्यातचारित्रात्मकं 'पालयित्वा' आसेव्य 'निराश्रवः' हिंसाद्याश्रवरहितः सन् क्षपयित्वा यदिवा 'संखविया णं'ति 'सङ्क्षपय्य' संक्षयं नीत्वा 'कर्म' ज्ञानावरणीयादि 'उपैति' उपगच्छति 'स्थानं' पदं विपुलं च तदनन्तानामपि तत्रावस्थितेरुत्तमं च प्रधानत्वाद् विपुलोत्तमं 'ध्रुवं' नित्यं मुक्तिपदमितियावदिति सूत्रार्थः ॥ सर्वोपसंहारमाह—

एवुग्गदंतेऽवि महातवोधणे, महामुणी महापइणे महायसे ।
महानियंठिज्जमिणं महासुअं, से काहए महया वित्थरेणं ॥ ५३ ॥

'एवम्' उक्तप्रकारेण 'से काहए'त्ति स श्रेणिकपृष्टो मुनिरकथयत्, तत्कालापेक्षया कथयति वेति सम्बन्धः, उग्रः—उत्कटः कर्मशत्रुजयं प्रति स एव 'दान्तः' प्राग्वत् उग्रदान्तः अपिः पूरणे 'महाप्रतिज्ञः' अतिदृढव्रताभ्युपगमोऽत एव महायशा महानिर्ग्रन्थेभ्यो हितं महानिर्ग्रन्थीयम् 'इदम्' अनन्तरोक्तं, शेषं स्पष्टमिति सूत्रार्थः ॥ ततश्च—

तुट्ठो अ सेणिओ राया, इणमुदाहु कयंजली । अनाहयं जहाभूयं, सुट्ठु मे उवदंसियं ॥ ५४ ॥ तुज्झं सुलद्धं खु मणुस्सजम्मं, लाभा सुलद्धा य तुमे महेसी ! । तुब्भे सणाहा य सबंधवा य, जं भे ठिया मग्गि जिणु-

क्षीयते, 'तत्र' इत्युभयलोकाभावे सति 'लोके' जगति ॥ यदुक्तं स ज्ञास्यति पश्चादनुतापेनेति,तत्र यथाऽसौ परितप्यते तथा दर्शयन्नुपसहारमाह—'एवमेव' उक्तरूपेणैव महाव्रतास्पर्शादिना प्रकारेण 'यथाच्छन्दा' स्वरुचिविरचिताचारा कुशीला –कुत्सितशीलास्तद्रूप –तत्स्वभाव 'कुररीव' पक्षिणीव 'णिरट्ठसोय'त्ति निरर्था–निष्प्रयोजन शोको यस्या सा निरर्थशोका 'परिताप' पश्चात्तापरूपम् 'एति' गच्छति, यथा चैषाऽऽमिषगृद्धा पक्ष्यन्तरेभ्यो विपत्प्राप्तौ शोचते न च तत कश्चिद् विपत्प्रतीकार इति,एवमसावपि भोगरसगृद्ध ऐहिकामुष्मिकानर्थप्राप्तौ,ततोऽस्य स्वपरपरित्राणासमर्थत्वेनानाथत्वमिति भाव इति त्रयोदशसूत्रार्थ ॥ एतत् श्रुत्वा यत्कृत्य तदुपदेष्टुमाह—

सुच्चाण मेहावि सुभासियं इम, अणुसासण नाणगुणोववेय।
मग्ग कुसीलाण जहाय सव्व, महानियठाण वए पहेण ॥ ५१ ॥

सुगम, नवरं 'मेहावि'त्ति मेधाविन् ! सुष्ठु—शोभनप्रकारेण भाषित सुभाषितम् 'इमम्' इत्यनन्तरोक्तम् 'अनुशासन' विपदनदोपदर्शनेनार्थाद्वृत्त्या शिक्षण ज्ञानस्य गुणो नात्वा विरमणात्मकस्तेन, ज्ञानगुणाभ्या वोपपेत–युक्त ज्ञानगुणोपपेत 'वये'त्ति व्रजेस्त्व'पहेण'ति 'पथा' मार्गेण महानिर्ग्रन्थानामिति सम्बन्ध ॥ तत किं फलमित्याह–

चरित्तमायारगुणन्निए तओ, अणुत्तर सजम पालिया ण।
निरासवे सखविया ण कम्म, उवेइ ठाण विउलुत्तम धुव ॥ ५२ ॥

॥ महानियंठिज्जं ॥ २० ॥

राजा चासौ सिंहश्चातिपराक्रमवत्तया राजसिंहः, अनगारस्य च सिंहत्वं कर्ममृगान् प्रत्यतिदारुणत्वात् प्रशंसाख्यापकं वा उभयत्र सिंह इति, 'सावरोधः'सान्तःपुरः'सपरिजनः'सपरिवारः'विमलेन' विगत मिथ्यात्वमलेन ।उच्छ्वसिता इवोच्छ्वसिताः—उद्भिन्ना रोमकूपा—रोमरन्ध्राणि यस्यासावुच्छ्वसितरोमकूपः 'अतियातो'त्ति 'अतियातः' गतः स्वस्थानमिति गम्यते, 'इतरः' संयतः सोऽपि हि 'विहग इव' पक्षीव 'विप्रमुक्तः' क्वचिदपि प्रतिबन्धविरहितो विहरतीति वर्त्तमाननिर्देशः प्राग्वत्, 'विगतमोहः' विगतवैचित्त्यः, शेषं सुगममिति सूत्रत्रयार्थः ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः, सम्प्रति नयास्तेऽपि प्राग्वदेव ॥ इति श्रीशान्त्याचार्यविरचितायामुत्तराध्ययनटीकायां शिष्यहितायां महानिर्ग्रन्थीयं नाम विंशतितममध्ययनं समाप्तमिति ॥ २० ॥

इति श्रीशान्त्याचार्यकृतायां शिष्यहितायामुत्तराध्ययनटी॰विंशतितममध्ययनं समाप्तम् ॥

त्तमाण ॥ ५५ ॥ तसि नाहो अणाहाण, सव्वभूयाण सजया !। खामेमि ते महाभाग !, इच्छामि अणुसासिउ ॥५६॥ पुच्छिऊण मए तुब्भ, झाणविग्घो य ज कओ। निमतिया य भोगेहिं, त सव्व मरिसेहि मे॥५७॥

सूत्रचतुष्टय स्पष्टमेव, नवर तुष्टवेति 'च' पुनरर्थे भिन्नक्रमश्च, तत श्रेणिक पुनरिदमाह—'यथाभूत' यथाऽवस्थितम् उपदर्शित त्वयेति प्रक्रम, 'सुलद्ध खु'त्ति सुलब्धमेव 'लाभा' वर्णरूपाद्यवाप्तिरूपा धर्मविशेषोपलम्भात्मका वा सुलब्धा उत्तरोत्तरगुणप्रकर्षहेतुत्वात्, सनाथाश्च सबान्धवाश्च तत्त्वत इति गम्यते, 'यद्' यस्माद् 'भे' इति भवन्तो, जिनोत्तममार्गस्थितत्व सुलब्धजन्मत्वादौ हेतु 'तसी'ति पूर्वार्द्धेन पुनरुपबृंहणा कृता, उत्तरार्द्धेन तु क्षमणोपसपन्नते दर्शिते, इह तु 'ते'त्ति त्वा। 'अणुसासिउ'ति 'अनुशासयितु' शिक्षयितुमात्मान भवतेति गम्यते, पुन क्षमणामेव विशेषत आह—पृष्ट्वा 'कथ त्व प्रथमवयसि प्रव्रजित' इत्यादि पर्यनुयुज्य निमन्त्रिताश्च भोगैर्यदिति सम्बन्ध इति सूत्रचतुष्टयार्थ ॥ सकलाध्ययनार्थोपसहारमाह—

एव थुणित्ताण स रायसीहो, अणगारसीह परमाइ भत्तिए। सओरोहो य सपरियणो [सबधवो य], धम्माणुरत्तो विमलेण चेयसा ॥ ५८ ॥ ऊससियरोमकूवो, काऊण य पयाहिण। अभिवदिऊण सिरसा, अइयाओ नराहिवो ॥ ५९ ॥ इयरोऽवि गुणसमिद्धो तिगुत्तिगुत्तो तिदडविरओ य। विहग इव विप्पमुक्को विहरइ वसुह विगयमोहु ॥ ६० ॥ त्तिबेमि ॥

निग्गंथे पावयणे, सावए से विकोविए । पोएण ववहरंते, पिहुंडं नयरमागए ॥ २ ॥ पिहुंडे ववहरंतस्स, वाणिओ देइ धूअरं । तं ससत्तं पइगिज्झ, सदेसमह पत्थिओ ॥ ३ ॥ अह पालियस्स घरणी, समुद्दंमि पसवई । अह दारए तहिं जाए, समुद्दपालित्ति नामए ॥४॥ खेमेण आगए चंपं, सावए वाणिए घरं । संवड्ढई घरे तस्स, दारए से सुहोइए ॥ ५ ॥ बावत्तरीकलाओ अ, सिक्खिए नीइकोविए । जुव्वणेण य अप्फुण्णे, सुरूवे पियदंसणे ॥ ६ ॥ तस्स रूववइं भज्जं, पिया आणेइ रूविणिं । पासाए कीलए रम्मे, देवो दोगुंदगो जहा ॥ ७ ॥ अह अन्नया कयाई, पासायालोअणे ठिओ । वज्झमंडनसोभागं, वज्झं पासइ वज्झगं ॥ ८ ॥ तं पासिऊण संविग्गो, समुद्दपालो इणमव्ववी । अहो असुहाण कम्माणं, निज्जाणं पावगं इमं ॥ ९ ॥ संवुद्धो सो तहिं भयवं परमं संवेगमागओ । आपुच्छऽम्मापियरो, पव्वए अणगारियं ॥ १० ॥

सूत्राणि दश । इदमुत्तरं चाध्यनं क्वचित्सोपस्कारतया व्याख्यास्यते—'चम्पायां' चम्पाऽभिधानायां पुरि पालितो नाम सार्थवाहः 'श्रावकः' श्रमणोपासकः 'आसीत्' अभूद् वणिगेव वणिजः—वणिग्जातिः महावीरस्य भगवतः 'शिष्यः' विनेयः स इति, सतुः विशेषणे 'महात्मनः' प्रशस्तात्मनः । स च कीदृगित्याह—'नैर्ग्रन्थे' निर्ग्रन्थसम्वन्धिनि 'पावयणे'त्ति प्रवचने श्रावकः सः इति पालितो विशेषेण कोविदः—पण्डितो विकोविदः, कोऽर्थः ?—विदितजीवादिपदार्थः 'पोतेन व्यवहरन्' प्रवहणवाणिज्यं कुर्वन् 'पिहुण्डं' पिहुण्डनामकं नगरम् 'आगतः' प्राप्तः । तत्र च पिहुण्डे

## अथ समुद्रपालीय एकविंशमध्ययनम्।

व्याख्यातं महानिर्ग्रन्थीयं नाम विंशतितममध्ययनम्, इदानीमेकविंशमारभ्यते, अस्य चायमभिसम्बन्धः — अनन्तराध्ययनेऽनाथत्वमनेकधोक्तम्, इह तु तदालोचनाद्विविक्तचर्ययैव चरितव्यमित्यभिप्रायेण सैवोच्यत इत्यनेनाभिसम्बन्धेनायातस्याध्ययनस्य प्राग्वदनुयोगद्वारचतुष्टयं प्ररूप्य तावद् यावन्नामनिष्पन्ननिक्षेपे समुद्रपालीयमिति नामात समुद्रपालनिक्षेपाभिधानायाह निर्युक्तिकृत्—

समुद्देण पालिअम्मि अ निक्खेवु चउक्कओ दुविह दव्व । आग० ॥ ४२३ ॥
समुद्दपालिआउ वेयतो भावओ य नायव्वो । तत्तो समुट्ठिअमिणं समुद्दपालिज्जमज्झयणं ॥ ४२४ ॥

गाथाद्वयं प्रतीतार्थमेव,नवरं समुद्रपालनिक्षेपप्रस्तावे यत्समुद्रेण पालित इत्युक्तं तत्समुद्रपाल इत्यत्र समुद्रेण पाल्यते स्मेति समुद्रपाल इति व्युत्पत्तिख्यापनार्थमिति गाथाद्वयार्थः ॥ गतो नामनिष्पन्नो निक्षेपः, सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपावसरः, स च सति सूत्र इति सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

चंपाए पालिए नाम, सावए आसि वाणिए । महावीरस्स भगवओ, सीसो सो उ महप्पणो ॥ १ ॥

पश्यति बाह्यं—नगरबहिर्वर्त्तिप्रदेशं गच्छतीति बाह्यगस्तं, कोऽर्थः ?—बहिर्निष्क्रामन्तं, यद्वा 'वध्यगम्' इह वध्यशब्देनोपचाराद्वध्यभूमिरुक्ता। तथाविधं वध्यं दृष्ट्वा संवेगः-संसारवैमुख्यतो मुक्त्यभिलाषस्तद्धेतुत्वात्सोऽपि संवेगस्तं समुद्रपालः 'इदं' वक्ष्यमाणमब्रवीत्, यथा—अहो ! 'अशुभानां कर्मणां' पापानामनुष्ठानानां 'निर्याणम्' अवसानं 'पापकम्' अशुभम् 'इदं' प्रत्यक्षं यदसौ वराको वधार्थमित्थं नीयत इति भावः। एवं परिभावयन् 'संबुद्धः' अवगततत्त्वः 'सः' वणिक्पुत्रः 'तत्रे'ति तस्मिन्नेव प्रासादालोकने 'भगवान्' माहात्म्यवान्, माहात्म्येऽपि भगवच्छब्दस्य दर्शनात्, परं-प्रकृष्टं संवेगमागतः, ततश्चापृच्छ्य मातापितरौ 'पव्वये'त्ति 'प्राव्राजीत्' प्रकर्षेण गतवान्, कोऽर्थः ?—प्रतिपन्नवान्, 'अनगारितां' निरसङ्गतामिति सूत्रदशकार्थः ॥ सम्प्रति अनुवादोऽपि स्पष्टताहेतुर्व्याख्याङ्गमिति ख्यापनायैवोक्तमेवार्थमनुवदन् विशेषं च वदन्नाह निर्युक्तिकारः—

चंपाए सत्थवाहो नामेणं आसि पालिओ नामं। वीरवरस्स भगवओ सो सीसो खीणमोहस्स ॥ ४२५ ॥
अह अन्नया कयाई पोएणं गणिमधरिमभरिएणं। तो नगरं संपत्तो पिहुंडं नाम नामेणं ॥ ४२६ ॥
ववहरमाणस्स तहिं पिहुंडे देइ वाणिओ धूअं। तंपि अ पत्तिं घित्तूण निग्गओ सो सदेसस्स ॥४२७॥
अह सा सत्थाहसुआ समुद्दमज्झंमि पसवई पुत्तं। पिअदंसणसव्वंगं नामेण समुद्दपालित्ति ॥ ४२८ ॥

व्यवहरते तद्गुणाकृष्टचेता कश्चिद्वाणिजो 'ददाति' यच्छति 'धूयर'ति दुहितरम्, उदूढवांश्च तामसौ, स्थित्वा च तत्र कियन्तमपि कालं तां 'ससत्त्वा'मित्यापन्नसत्त्वां 'परिगृह्य' आदाय स्वदेशम् 'अथ' अनन्तरं 'प्रस्थितः' चलितः। तत्र चागच्छतोऽथ पालितस्य गृहिणी 'समुद्रे' जलधौ 'प्रसूते' गर्भं विमुञ्चति सेति शेषः, 'अथे'त्युपन्यासे 'दारकः' सुतः 'तस्मिन्' इति प्रसवने 'जातः' उत्पन्नः समुद्रपाल इति 'नामतो' नामाश्रित्य। क्रमेण चागच्छन् 'क्षेमेण' कुशलेनागतश्चम्पायां श्रावको वाणिजः 'घर'ति चस्य गम्यमानत्वाद् गृहं च स्वकीयं, कृतं च तत्र वर्द्धापनकादि, संवर्द्धते च 'गृहे' वेश्मनि, 'तस्य' इति पालिताभिधानवणिजो दारकः स 'सुखोचितः' सुकुमारः। एवं च प्राप्तः कलाग्रहणयोग्यतां द्विसप्ततिकलाश्च शिक्षितः, शिक्षते वा पाठान्तरतः, जातश्च 'नीतिकोविदः' न्यायाभिज्ञः, 'जोव्वणेण य अप्फुण्णे'त्ति, चस्य भिन्नक्रमत्वाद्यौवनेन 'आपूर्णश्च' परिपूर्णशरीरश्च, पठ्यते च—'जोव्वणेण य सपण्णे'त्ति, तत्र च 'सपन्नः' युक्तोऽत एव 'सुरूपः' सुसंस्थानः 'प्रियदर्शनः' सर्वस्यैवानन्ददाता। परिणयनयोग्यतां च तस्य विज्ञाय 'रूपवतीं' विशिष्टाकृतिं भार्यां पत्नीं 'पिता' पालितवणिग् 'आनयति' तथाविधकुलादागमयति 'रूपिणीं' रूपिणीनाम्नीं, परिणायितश्च तामसौ, प्रासादे क्रीडति—रमते तया सह 'रम्ये' अभिरतिहेतौ देवो दोगुन्दको यथा। अथान्यदा कदाचित् 'प्रासादालोकने' उक्तरूपे स्थितः सन् वधमर्हति वध्यस्तस्य मण्डनानि—रक्तचन्दनकरवीरादीनि तैः शोभा—तत्कालोचितपरभागलक्षणा यस्यासौ वध्यमण्डनशोभाकस्तं 'वध्यं' वधार्हं कञ्चन तथाविधाकार्यकारिणं

क्रीडनाङ्कधान्यः, 'उदधिनामा' उदधिसमानार्थसमुद्रपदोपलक्षिताभिधानः समुद्रपालनामेति यावत् । 'जोव्वणमप्फुण्ण'त्ति मकारोऽलाक्षणिको जातः प्रियदर्शनः 'अधिक'मित्यतिशयेन सविशेषलावण्यहेतुत्वाद् यौवनस्य, चतुःषष्टिगुणा अश्वशिक्षादिकलाष्टकरहिताः कला एव विज्ञानापरनामिका उच्यन्ते, 'भवनपुण्डरीके' भवनप्रधाने, पुण्डरीकशब्दस्येह प्रशंसावचनत्वात् । वध्यं पश्यतीति शेषः, 'नीणिज्जंत'न्ति नीयमानम् ('अणिज्जंत'न्ति) 'अन्वीयमानम्' अनुगम्यमानं जनशतैरविवेकिभिरिति गम्यते, पठन्ति च–'वज्झं णीणीज्जंतं पेच्छइ तो सो जणवएहिं'ति स्पष्टं, सञ्ज्ञी–सम्यग्दृष्टिः स चासौ ज्ञानी च सञ्ज्ञिज्ञानी 'भीतः' त्रस्तः सन् सांसारिकेभ्यो दुःखेभ्य इति, आर्षत्वाच सुब्व्यत्ययः, किं भणतीत्याह—'नीचानां' निकृष्टानां 'पापकर्मणां' पापहेत्वनुष्ठानानां चौर्यादीनां 'हा' इति खेदे यथा पापकं फलमिति गम्यते, 'इणमो'त्ति 'इदं' प्रत्यक्षं, किमुक्तं भवति?—यथाऽस्य चौरस्यानिष्टं फलं पापकर्मणां तथाऽस्मादृशामपीति निर्युक्तिगाथैकादशकार्थः ॥ प्रव्रज्य च यदसौ कृतवांस्तदाह सूत्रकृत्–

जहिज्ज सग्गंथ महाकिलेसं, महंतमोहं कसिणं भयाणगं। परियायधम्मं चऽभिरोअइज्जा, वयाणि सीलाणि परीसहे य ॥ १५ ॥ अहिंस सच्चं च अतेणगं च, तत्तो अ बंभं अपरिग्गहं च । पडिवज्जिया पंच महव्वयाणि, चरिज्ज धम्मं जिणदेसियं विऊ ॥ १६ ॥ सव्वेहिं भूएहिं दयाणुकंपी, खंतिक्खमे संजयबंभयारी । सावज्जजोगे परिवज्जयंतो, चरिज्ज भिक्खू सुसमाहिइंदिए ॥ १७ ॥ कालेण कालं विहरिज्ज रट्ठे, बलाबलं जाणिय

खेमेण सपत्तो सो पालिअ सावगो घर नियय। धाईदसद्धपरिवुडो अह वड्ढइ सो उदहिनामो ॥४२९॥
बावत्तरि कलाओ अ सिक्खिओ नीइकोविओ जाहे। तो जुव्वणमणुपत्तो जाओ पिअदसणो अहिअ॥४३०॥
अह तस्स पिआ पत्ति आणेई रूविणित्ति नामेण । चउसट्ठिगुणोवेय अमरवहूण सरिसरूव ॥ ४३१ ॥
अह रूविणीइ सहिओ कीलइ सो भवणपुडरीअमि। दोगुदगुव्व देवो किकरपरिवारिओ निच्च ॥ ४३२ ॥
अह अन्नया कयाई ओलोअणसठिओ सदेवीओ । वज्झ नीणिज्जत अन्निज्जत जणसएहि ॥ ४३३ ॥
अह भणइ सन्निनाणी भीओ ससारिआण दुक्खाण । नीआण पावकम्माण हा जहा पावग इणमो ४३४
सबुद्धो सो भयव सवेगमणुत्तर च सपत्तो । आपुच्छिऊण जणए निक्खतो खायजसकित्ती ॥ ४३५ ॥

व्याख्यातप्राया एव, नवर 'वीरवरस्स'त्ति नामतोऽन्येऽपि वीरा सभवन्ति स तु भगवान् भावतोऽपि वीर इति प्राधान्यख्यापक वरग्रहणम्, अनेन भगवत्समकालतामप्यस्य दर्शयति, 'गणिमधरिमभरिएण'ति गणिम–पूगफलादि धरिम—सुवर्णकादि । प्रियदर्शनानि—सकलजनाभिमतावलोकनानि सर्वाण्यङ्गानि–शिरउर प्रभृतीन्यस्येति प्रियदर्शनसर्वाङ्गस्तम् । 'धाईदसद्धपरिवुडे'त्ति दशार्द्धधात्रीपरिवृतो, दशार्द्ध च पञ्च ताश्च क्षीरमज्जनमण्डन-

पठन्ति च—'जहित्तु संगं चत्ति जहाय संगं च'त्ति वा उभयत्र हित्वा 'सङ्गं' स्वजनादिप्रतिबन्धं 'चः' पूरणे निपातः, महान् क्लेशो यस्माद्यस्मिन् वा तं महाक्लेशं, 'महंतमोहं'ति महान् मोहः—अभिष्वङ्गो यस्मिन् यतो वा तं तथाविधं, 'कसिणं'ति कृत्स्नं कृष्णं वा कृष्णलेश्यापरिणामहेतुत्वेन 'भयानकं' महाक्लेशादिरूपत्वादेव विवेकिनां भयावहं 'परियाय'त्ति प्रक्रमात् प्रव्रज्यापर्यायस्तत्र धर्मः पर्यायधर्मस्तं, चशब्दः पादपूरणे, 'अभिरोयएज्ज'त्ति आर्षत्वाद् ह्यस्तन्यर्थे सप्तमी, ततः 'अभ्यरोचत' अभिरोचितवान् तदनुष्ठानविषयां प्रीतिं कृतवान्, उपदेशरूपतां च तन्त्रन्यायेन ख्यापयितुमित्थं प्रयोगः, यद्वाऽऽत्मानमेवायमनुशास्ति—यथा हे आत्मन्! सङ्गं त्यक्त्वा प्रव्रज्याधर्ममभिरोचयेद् भवान्, एवमुत्तरक्रियास्वपि यथासम्भवं भावनीयं, प्रव्रज्यापर्यायधर्ममेव विशेषत आह—'व्रतानि' महाव्रतानि 'शीलानि' पिण्डविशुद्ध्याद्युत्तरगुणरूपाणि 'परीषहान्' इति भीमसेनन्यायेन परीषहसहनानि च। एतदभिरुच्य तदनन्तरं च यत् कृतवांस्तदाह—अहिंसां सत्यमस्तेन्यकं च 'तत्तो अ बंभं अपरिग्गहं च'त्ति ततश्च ब्रह्मचर्यमपरिग्रहं च 'प्रतिपद्य' अङ्गीकृत्य 'अबंभपरिग्गहं च' इति तु पाठे परिवर्ज्य चेत्यध्याहार्यं 'पञ्च महाव्रतानि' उक्तरूपाणि 'चरेज्ज'त्ति प्राग्वदचरत्, नाङ्गीकृत्यैव तिष्ठेदिति भावः, 'धर्मं' श्रुतचारित्ररूपं जिनदेशितं 'विऊ'त्ति विद्वान्—जानानः। 'सव्वेहिं भूएहिं' सुब्व्यत्ययात् 'सर्वेषु' अशेषेषु प्राणिषु दयया—हितोपदेशादिदानात्मिकया रक्षणरूपया वाऽनुकम्पनशीलो दयानुकम्पी पाठान्तरतो दयानुकम्पो वा, क्षान्त्या न त्वशक्त्या क्षमते—प्रत्यनीकाद्युदीरितदु-

अप्पणो अ। सीहो व सद्देण न संतसिज्जा, वइजोग सुच्चा न असब्भमाहु ॥ १८ ॥ उवेहमाणो उ परिव्व-
इज्जा, पियमप्पियं सव्व तितिक्खइज्जा। न सव्व सव्वत्थऽभिरोअइज्जा, न यावि पूयं गरिहं च संजए ॥१९॥
अणेग छंदा मिह माणवेहिं, जे भावओ से पकरेइ भिक्खू। भयभेरवा तत्थ उइंति भीमा, दिव्वा मणुस्सा
अदुवा तिरिच्छा ॥२०॥ परीसहा दुव्विसहा अणेगे, सीयंति जत्था बहुकायरा नरा। से तत्थ पत्ते न वहिज्ज
पडिए, संगामसीसे इव नागराया ॥ २१ ॥ सीओसिणा दंसमसगा य फासा, आयंका विविहा फुसंति
देहं। अकुक्कुओ तत्थऽहियासइज्जा, रयाइं खेविज्ज पुराकडाइं ॥ २२ ॥ पहाय रागं च तहेव दोसं, मोहं च
भिक्खू सययं वियक्खणो। मेरुव्व वाएण अकंपमाणे, परीसहे आयगुत्ते सहिज्जा ॥ २३ ॥ अणुन्नए नावणए
महेसी, न यावि पूयं गरिहं च संजए। से उज्जुभावं पडिवज्ज संजए, निव्वाणमग्गं विरए उवेइ ॥ २४ ॥
अरइरइसहे पहीणसंथवे, विरए आयहिए पहाणवं। परमट्ठपएहिं चिट्ठई, छिन्नसोए अममे अकिंचणे ॥ २५ ॥
विवित्तलयणाइ भइज्ज ताई, निरोवलेवाइ असंथडाइं। इसीहिं चिन्नाइं महायसेहिं, काएण फासिज्ज परी-
सहाइं ॥ २६ ॥ सण्णाणनाणोवगए महेसी, अणुत्तरं चरियं धम्मसंचयं। अणुत्तरेनाणधरे जसंसी,
ओभासई सूरिए वऽन्तलिक्खे ॥ २७ ॥

त्रयोदश सूत्राणि प्राय सुगमान्येव, नवरं 'हित्वा' त्यक्त्वा सञ्चासौ ग्रन्थश्च सद्ग्रन्थ, प्राकृतत्वाद्बिन्दुलोपस्त,

गम्यते, 'मिह'त्ति मकारोऽलाक्षणिकः 'इह' जगति 'माणवेहिं'ति सुव्व्यत्ययान्मानवेषु 'जे' इति याननेकान् छन्दान् 'भावतः' तत्त्ववृत्त्यौदयिकादिभावतो वा सः 'प्रकरोति' भृशं विधत्ते 'भिक्खु'त्ति अपिशब्दस्य गम्यमानत्वाद् भिक्षुरपि—अनगारोऽपि सन्, अत इत्थमित्थं च तद्गुणाभिधानमिति भावः । अपरञ्च—'भयभैरवाः' भयोत्पादकत्वेन भीषणाः 'तत्र' इति वाक्यप्रतिपत्तौ 'उइंति'त्ति 'उद्यन्ति' उदयं यान्ति, पठ्यते च—'उवेंति'त्ति, उपयन्ति भयभैरवा इत्यनेनापि गते भीमा इति पुनरभिधानमतिरौद्रताख्यापनायोक्तं, 'दिव्या' इत्यादावुपसर्गा इति गम्यते, 'तिरिच्छ'त्ति तैरश्चाः तथा 'परिसह'त्ति परीषहाश्च उद्यन्तीति सम्बन्धः, 'सीदन्ति' संयमं प्रति शिथिलीभवन्ति 'जत्थ'त्ति यत्र—येषूपसर्गेषु परीषहेषु च सत्सु 'से' इति सः 'तत्र' तेषु 'पत्ते'त्ति वचनव्यत्ययात्प्राप्तेषु प्राप्तो वा—अनुभवनद्वारेणायातो न ('व्यथेत' स्यात्) व्यथाभीतश्चलितो वा सत्त्वाद् भिक्षुः सन् 'सङ्ग्रामशीर्ष इव' युद्धप्रकर्ष इव 'नागराजः' हस्तिराजः । 'स्पर्शाः' तृणस्पर्शादयः 'आतङ्काः' रोगाः 'स्पृशन्ति' उपतापयन्ति 'अकुकुय'त्ति आर्षत्वात् कुत्सितं कूजति—पीडितः सन्नाक्रन्दति कुकूजो न तथेत्यकुकूजः, पठ्यते च—'अककरे'त्ति कदाचिद्वेदनाऽऽकुलितो न कर्करायितकारी, अनेन चानन्तरसूत्रोक्त एवार्थो विस्पष्टतार्थमन्वयेनोक्तः, एवंविधश्च स रजांसीव रजांसि—जीवमालिन्यहेतुतया कर्माणि 'खविज्जे'ति अक्षिपत् परीषहसहनादिभिः क्षिप्तवान् । 'मोह(म्)' इति मिथ्यात्वहास्यादिरूपोऽज्ञानं वा गृह्यते, आत्मना गुप्तः आत्मगुप्तः—कूर्मवत्सङ्कुचितसर्वाङ्गः, अनेन परीषहसहनोपाय उक्तः । किञ्च—'नयावि पूयं गरिहं च

वचनादिक सहत इति क्षान्तिक्षम, सयत इति सयत स चासौ ब्रह्मचारी च सयतब्रह्मचारी पूर्वं ब्रह्मप्रतिपत्त्या गतत्वेऽपि ब्रह्मचारीत्यभिधान ब्रह्मचर्यस्य दुरनुचरत्वख्यापनार्थम्, अनेन च मूलगुणरक्षणोपाय उक्त । 'कालेण काल'त्ति रूढित काले—प्रस्तावे यद्वा कालेन—पादोनपौरुष्यादिना कालमिति—कालोचित प्रत्युपेक्षणादि कुर्वन्निति शेप, 'राष्ट्रे' मण्डले 'बलाबल' सहिष्णुत्वासहिष्णुत्वलक्षण ज्ञात्वाऽऽत्मन यथा यथाऽऽत्मन सयमयोगहानिर्न जायते तथा तथेत्यभिप्राय, अन्यच्च सिंहवत् 'शब्देन' प्रस्तावाद्भयोत्पादकेन 'न समत्रस्यत्' नैव सत्त्वाच्चलितवान्, सिंहदृष्टान्ताभिधान च तस्य सात्त्विकत्वेनातिस्थिरत्वात्, अत एव च वाग्योगम् अर्थाद् दु खोत्पादक 'सोच'त्ति श्रुत्वा 'न' नैव 'असभ्यम्' अश्लीलरूपम् 'आहु'त्ति उक्तवान् । तर्हि किमयमकरोदित्याह—'उपेक्षमाण' तमवधीरयन् पर्यव्रजत्, तथा 'प्रियम्' अनुकूलम् 'अप्रियम्' अननुकूल 'सव्व तितिक्खएज्ज'त्ति सर्वम् 'अतितिक्षत' सोढवान्, किञ्च—'न सव्व'त्ति सर्व वस्तु सर्वत्र स्थानेऽभ्यरोचयत, न यथादृष्टाभिलाषुकोऽभूदिति भाव, यदिवा यदेकत्र पुष्टालम्बनत सेवित न तत्सर्वम्—अभिमताहारादि सर्वत्राभिलषितवान्, न चापि पूजा गर्हां वाऽभ्यरोचयतेति सम्बन्ध, इह च गर्हातोऽपि कर्मक्षय इति केचिदतस्तन्मतव्यवच्छेदार्थं गर्हाग्रहण,यद्वा गर्हा—परापवादरूपा । ननु भिक्षोरपि किमन्यथाभाव सभवति? येनेत्थमित्थ च तद्गुणाभिधानमित्याह—'अणेग'त्ति वृत्तार्द्ध, तत्र च 'अणेग'त्ति अनेके 'छन्दा' अभिप्राया सभवन्तीति

परीपहस्पर्शनाभिधानमतिशयख्यापनार्थं, ततः स कीदृगभूदित्याह–'सः' इति समुद्रपालनामा मुनिर्ज्ञानमिह श्रुतज्ञानं तेन ज्ञानम्—अवगमः प्रक्रमाद् यथावत्क्रियाकलापस्य तेनोपगतो—युक्तो ज्ञानज्ञानोपगतः, पाठान्तरतः—सन्ति–शोभनानि 'नाने' त्वनेकरूपाणि ज्ञानानि–सञ्ज्ञागपर्यायधर्माभिरुन्नितत्त्वाद्यवबोधात्मकानि तैरुपगतः सन्नानाज्ञानोपगतः 'धर्मसञ्चयं' क्षान्त्यादियतिधर्मसमुदयम् 'अणुत्तरेणाणधरे'त्ति एकारस्यालाक्षणिकत्वादनुत्तरज्ञानं—केवलाख्यं तद्धारयत्यनुत्तरज्ञानधरः, पठ्यते च—'गुणुत्तरे णाणधरे'त्ति, तत्र च गुणोत्तरो–गुणप्रधानो, ज्ञानं प्रस्तावात्केवलज्ञानं तद्धरः, एकारस्यालाक्षणिकत्वाद् गुणोत्तरं यद् ज्ञानं तद्धरो वाऽत एव यशस्वी 'ओभासइ य'त्ति अवभासते प्रकाशते सूर्यवदन्तरिक्षे, यथा नभसि सूर्योऽवभासते तथाऽसावप्युत्पन्नकेवलज्ञान इति त्रयोदशसूत्रार्थः ॥ सम्प्रत्यध्ययनार्थमुपसंहरंस्तस्यैव फलमाह—

दुविहं खवेऊण य पुन्नपावं, निरंजणे सव्वओ विप्पमुक्के ।
तरित्ता समुद्दं व महाभवोहं, समुद्दपाले अपुणागमं गए ॥ २४ ॥ त्तिबेमि ॥

॥ समुद्दपालिज्जं ॥ २१ ॥

'द्विविधं' द्विभेदं घातिकर्मभवोपग्राहिभेदेन 'पुण्यपापं' शुभाशुभप्रकृतिरूपं 'निरञ्जनः' कर्मसङ्गरहितः, पठ्यते च—'निरंगणे'त्ति अङ्गेर्गत्यर्थत्वात् निरङ्गनः—प्रस्तावात्संयमं प्रति निश्चलः शैलेश्यवस्थाप्राप्त इतियावत्, अत एव

सजये'त्ति न चापि पूजा गर्हा च प्रतीति शेष 'असजत्' सङ्ग विहितवान्,तत्र च अनुन्नतत्वमनवनतत्वं च हेतुभा-वत , उन्नतो हि पूजा प्रति अवनतश्च गर्हा प्रति सङ्ग कुर्यान्न त्वन्यथेति भाव , पूर्वत्राभिरुचिनिषेध उक्त , इह तु सङ्गस्येति पूर्वस्माद्विशेष , 'स' इति' स ' एवगुण 'ऋजुभावम्' आर्जव 'प्रतिपद्य' अङ्गीकृत्य सयतो 'निर्वाणमार्ग' सम्य-ग्दर्शनादिरूप विरत सन् 'उपैति' विशेषेण प्राप्नोति, वर्त्तमाननिर्देश इहोत्तरत्र च प्राग्वत् । तत स तदा कीदृश किं करोतीत्याह—अरतिरती सयमासयमविषये सहते— न ताभ्या बाध्यत इत्यरतिरतिसह , 'पहीणसथवे'त्ति प्रक्षी-णसस्तव सस्तवप्रहीणो वा, सस्तवश्च पूर्वपश्चात्सस्तवरूपो वचनसवासरूपो वा गृहिभि सह, प्रधान स च सयमो मुक्तिहेतुत्वात् स यस्यास्त्यसौ प्रधानवान् , परम –प्रधानोऽर्थ पुरुषार्थो वाऽनयो कर्मधारये परमार्थो—मोक्ष स पद्यते –गम्यते यैस्तानि परमार्थपदानि—सम्यग्दर्शनादीनि सु व्यत्ययात् तेषु तिष्ठति—अविराधकतयाऽऽस्ते 'छिनसोय'त्ति छिन्नशोक छिन्नानि वा श्रोतासीव श्रोतासि—मिथ्यादर्शनादीनि येनासौ छिन्नश्रोता• अत एवाममोऽकिञ्चन , इह च सयमविशेषाणामानन्त्यात्तदभिधायिपदाना पुन पुनर्वचनेऽपि न पौनरुक्त्य, तथा 'विवित्तलयनानि' स्त्र्यादिविरहि-तोपाश्रयरूपाणि विविक्तत्वादेव च 'निरोवलेवाइ'ति निरुपलेपानि—अभिष्वङ्गरूपोपलेपवर्जितानि भावतो द्रव्यतस्तु तदर्थ नोपलिप्तानि 'असस्तृतानि' बीजादिभिरव्याप्तानि, अत एव च निर्दोषतया 'ऋषिभि ' मुनिभि 'चीर्णानि' आसेवितानि, चीर्णशब्दस्य तु 'सुचीर्ण प्रोषितव्रत'मितिवत्साधुता, 'फासेज'त्ति अस्पृशत् , सोढवानित्यर्थ , पुन पुन

## अथ द्वाविंशं रथनेमीयमध्ययनम् ।

व्याख्यातं समुद्रपालीयं नामैकविंशमध्ययनम्, अधुना द्वाविंशमारभ्यते, अस्य चायमभिसम्बन्धः—अनन्तराध्ययने विविक्तचर्योक्ता, सा च चरणसहितेन धृतिमता चरण एव शक्यते कर्त्तुमतो रथनेमिवच्चरणं तत्र च कथञ्चिदुत्पन्नविश्रोतसिकेनापि धृतिश्राधेयेत्यनेनोच्यत इत्यमुना सम्बन्धेनायातमिदमध्ययनम्, अस्यापि चतुरनुयोगद्वारचर्चा प्राग्वद्विधाय नामनिष्पन्ननिक्षेप एवाभिधेय इति चेतसि व्यवस्थाप्याह निर्युक्तिकृत्—

रहनेमीनिक्खेवो चउक्कओ दुविह होइ दव्वंमि । आग० ॥ ४३७ ॥ जाण० ॥ ४३८ ॥

रहनेमिनामगोअं वेअंतो भावओ अ रहनेमी । तत्तो समुट्ठियमिणं रहनेमिज्जंति अज्झयणं ॥ ४३९ ॥

प्राग्वद् व्याख्येयं, नवरं रथनेमिशब्दोच्चारणमिह विशेषः इत्यवसितो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपावसरः, स च सूत्रे सति भवत्यतः सूत्रानुगमे सूत्रमुच्चारणीयं, तच्चेदम्—

१ क्वचित् इमे द्वे गाथे अधिके दृश्येते—सोरियपुरंमि नगरे, आसी राया समुद्दविजओत्ति । तस्सासि अग्गमहिसी सिवत्ती देवी अणुजंगी ॥ १ ॥ तेसिं पुत्ता चउरो अरिट्ठनेमी तहेव रहनेमि । तइओ य सच्चनेमी चउत्थओ होइ दढनेमी ॥ २ ॥ अन्यत्रापि ते

'सर्वत' इति चाचारान्तराच प्रक्रमादभिष्वङ्गहेतो 'तीर्त्वा' उल्लङ्घ्य 'समुद्रमिव' अतिदुस्तरतया महाभवौघं—देवादिभयसमूहम्, शेषं स्पष्टमिति सूत्रार्थः ॥ अमुमेवार्थं स्पष्टयितुमाह निर्युक्तिकृत्—

काऊण तवच्चरणं बहूणि वासाणि सो धुयकिलेसो । तं ठाणं संपत्तो जं संपत्ता न सोयंति ॥ ४३६ ॥

सुगमैव । 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत् । उक्तोऽनुगमः, सम्प्रति नयास्तेऽपि प्राग्वत् ॥ इति श्रीशान्त्याचार्यविरचितायामुत्तराध्ययनटीकायां शिष्यहितायां समुद्रपालीयं नामैकविंशतितममध्ययनं समाप्तमिति ॥ २१ ॥

श्रीशान्त्याचार्यकृतायामुत्तराध्ययनटी० शिष्य० समुद्रपालीयं नामैकविंशतितममध्ययनं ॥ समाप्तम्

संनिरुद्धे सुदुक्खिए ॥१४॥ जीवियंतं तु संपत्ते, मंसट्ठा भक्खियव्वए। पासित्ता से महापण्णे, सारहिं इणमब्बवी ॥१५॥–कस्स(अ)ट्ठा इमे पाणा, एए सव्वे सुहेसिणो। वाडेहिं पंजरेहिं च, संनिरुद्धा य अच्छहि ? ॥ १६ ॥

सूत्रषोडशकं प्रायः प्रकटार्थमेव, नवरं राजेव राजा तस्य लक्षणानि—चक्रस्वस्तिकाङ्कुशादीनि त्यागसत्यशौर्यादीनि ( ग्रन्थाग्रम् १२००० ) वा तैः संयुतो–युक्तो राजलक्षणसंयुतोऽत एव राजेत्युक्तं, 'भज्जा दुवे आसि'त्ति भार्ये द्वे अभूतां, 'तासि'न्ति तयो रोहिणीदेवक्योर्द्वौ पुत्रौ 'इट्ठौ' वल्लभौ 'रामकेशवौ' बलभद्रवासुदेवावभूतामितीहापि योज्यते, तत्र रोहिण्या रामो देवक्याश्च केशवः, इह च रथनेमिवक्तव्यतायां कस्सायं तीर्थ इति प्रसङ्गेन भगवच्चरितेऽभिधित्सितेऽपि तद्विवाहादिपूपयोगिनः केशवस्य पूर्वोत्पन्नत्वेन प्रथममभिधानं, तत्सहचरितत्वाच्च रामस्येति भावनीयं, पुनः सौर्यपुराभिधानं च समुद्रविजयवसुदेवयोरेकत्रावस्थितिदर्शनार्थम्, इह च राजलक्षणसंयुत इत्यत्र राजलक्षणानि–छत्रचामरसिंहासनादीन्यपि गृह्यन्ते। दमिनः–उपशमिनस्तेषामीश्वरः–अत्यन्तोपशमवत्तया नायको दमीश्वरः, कौमार एव क्षतमारवीर्यत्वात्तस्य। 'लक्खणसरसंजुतो'त्ति प्राकृतत्वात्स्वरस्य यानि लक्षणानि–सौन्दर्यगाम्भीर्यादीनि तैः संयुतः स्वरलक्षणसंयुतः, लक्षणोपलक्षितो वा स्वरो लक्षणस्वरः प्राग्वन्मध्यपदलोपी समासः, तेन संयुतो लक्षणस्वरसंयुतः, पठन्ति च–'वंजणस्सरसंजुओ'त्ति व्यञ्जनानि–प्रशस्ततिलकादीनि स्वरो–गाम्भीर्यादिगुणोपेतस्तत्संयुतः 'अट्ठसहस्सलक्षणधरः' अष्टोत्तरसहस्रसङ्ख्यशुभसूचककरादिरेखाद्यात्मकचक्रादिलक्षणधारकः 'गौतमः'

सोरियपुरमि नयरे, आसि राया महड्ढिए। वसुदेवत्तिनामेण, रायलक्खणसंजुए ॥ १ ॥ तस्स भज्जा दुवे आसि, रोहिणी देवई तहा। तासि दुण्हपि दो पुत्ता, इट्ठा (जे) रामकेसवा ॥२॥ सोरियपुरमि नयरे, आसि राया महड्ढिए। समुद्दविजये नाम, रायलक्खणसंजुए ॥ ३ ॥ तस्स भज्जा सिवा नाम, तीसे पुत्तो महायसो। भयवं अरिट्ठनेमित्ति, लोगनाहे दमीसरे ॥ ४ ॥ सोऽरिट्ठनेमिनामो अ, लक्खणस्सरसंजुओ। अट्ठसहस्सलक्खणधरो, गोयमो कालगच्छवि ॥ ५ ॥ वज्जरिसहसंघयणो, समचउरंसो झसोदरो। तस्स राईमई कन्नं, भज्जं जायइ केसवो ॥ ६ ॥ अह सा रायवरकन्ना, सुसीला चारुपेहिणी। सव्वलक्खणसंपन्ना, विज्जुसोआमणिप्पभा ॥ ७ ॥ अहाह जणओ तीसे, वासुदेवं महड्ढियं। इहागच्छउ कुमरो, जा से कन्नं ददामहं ॥ ८ ॥ सव्वोसहीहिं ण्हविओ, कयकोउयमंगलो। दिव्वजुयलपरिहिओ, आभरणेहिं विभूसिओ ॥ ९ ॥ मत्तं च गंधहत्थिं च, वासुदेवस्स जिट्ठयं। आरूढो सोहई अहियं, सिरे चूडामणी जहा ॥ १० ॥ अह ऊसिएण छत्तेण, चामराहि य सोहिओ। दसारचक्केण तओ, सव्वओ परिवारिए ॥११॥ चउरंगिणीए सेणाए, रइयाए जहक्कमं। तुडियाण सन्निनाएण, दिव्वेण गगणं फुसे ॥१२॥ एयारिसीए इड्ढीए, जुइए उत्तमाइ य। नियगाओ भवणाओ, निज्जाओ वण्हिपुंगवो ॥१३॥ अह सो तत्थ निज्जंतो, दिस्स पाणे भयद्दुए। वाडेहिं पंजरेहि च,

पट्टहस्तिनमित्यर्थः, शोभत इति वर्त्तमाननिर्देशः प्राग्वत्, 'चूडामणिः' शिरोऽलङ्काररत्नम्। 'अथ' अनन्तरम् 'उच्छ्रितेन' उपरिधृतेन पाठान्तरतश्च—श्वेतोच्छ्रितेन 'चामराहि य'त्ति चामराभ्यां च शोभितः 'दसारचक्केणं'ति दशार्हचक्रेण यदुसमूहेन 'चतुरङ्गिण्या' हस्त्यश्वरथपदातिरूपाङ्गचतुष्टयान्वितया 'रचितया' न्यस्तया 'यथाक्रमं' यथापरिपाटी तूर्याणां—मृदङ्गपटहादीनां सन्निनादेनेति—संनह्यत इत्यादिषु समो भृशार्थस्यापि दर्शनादतिगाढध्वनिना 'दिव्येन' इति प्रधानेन देवागमनस्यापि तदा सम्भवाद्देवलोकोद्भवेन वा 'गयणं फुसे'त्ति आर्षत्वाद् 'गगनस्पृशा' अतिप्रबलतया नभोऽङ्गणव्यापिना, सर्वत्र च लक्षणे तृतीया, 'एतादृश्या' अनन्तराभिहितरूपया 'ऋद्ध्या' विभूत्या 'द्युत्या' दीप्त्या, उत्तरत्र चशब्दोऽभिन्नक्रमतो द्युत्या चोत्तमयोपलक्षितः सन्निजकाद्भवनात् 'निर्यातः' निष्क्रान्तः 'वृष्णिपुङ्गवः' यादवप्रधानो भगवानरिष्टनेमिरितियावत्। ततश्चासौ क्रमेण गच्छन् प्राप्तो विवाहमण्डपासन्नदेशम्, 'अथ' अनन्तरं स तत्र 'निर्यन्' अधिकं गच्छन् 'दिस्स'त्ति दृष्ट्वा अवलोक्य 'प्राणान्' स 'प्राणिनः' मृगलावकादीन् 'भयद्रुतान्' भयत्रस्तान् वाटैरिति—वाटकैः—वृत्तिवरण्डकादिपरिक्षिप्तप्रदेशरूपैः 'पञ्जरैश्च' बन्धनविशेषैः 'सन्निरुद्धान्' गाढनियन्त्रितान्, पाठान्तरतस्तु—बद्धरुद्धान्, अत एव सुदुःखितान्, तथा जीवितस्यान्तो—जीवितान्तो मरणमित्यर्थस्तं संप्राप्तानिव संप्राप्तान्, अतिप्रत्यासन्नत्वात्तस्य, यद्वा जीवितस्यान्तः—पर्यन्तवर्त्ती भागस्तमुक्तहेतोः संप्राप्तान् 'मांसार्थं' मांसनिमित्तं च भक्षयितव्यान् मांसस्यैवातिगृद्धिहेतुत्वेन तद्भक्षणनिमित्तत्वादेवमुक्तं, यद्वा 'मांसेनैव

गौतमसगोत्र 'कालकच्छवि' कृष्णत्वक् । 'झसोदरो'त्ति झषो–मत्स्यस्तदुदरमिव तदाकारतयोदर यस्यासौ झषोदरो, मध्यपदलोपी समास, इतश्च गतेषु द्वारकापुरीं यदुषु निहते जरासिन्धनृपतावधिगतभरतार्द्धराज्य केशवो यौवनस्थेऽरिष्टनेमिनि समुद्रविजयादेशतो यदचेष्टत तदाह–'तस्स' अरिष्टनेमिनो राजीमतीं भार्यां गन्तुमिति शेष, याचते केशवस्तज्जनकमिति प्रक्रम । सा च कीदृशीत्याह—'अथ' इत्युपन्यासे, राजवर इहोग्रसेनस्तस्य कन्या राज्ञो वा–तस्यैव वरकन्या राजवरकन्या सुष्ठु शील—स्वभावो यस्या सा सुशीला चारु प्रेक्षितु–अवलोकितु शीलमस्या चारुप्रेक्षिणी, नाधोदृष्टितादिदोषदुष्टा, 'विज्जुसोयामणिप्पह'त्ति विशेषेण द्योतते—दीप्यत इति विद्युत् सा चासौ सौदामनी च विद्युत्सौदामनी, अथवा विद्युदग्नि सौदामिनी च तडित्, अन्ये तु सौदामिनी प्रधानमणिरित्याहु । 'अथ' इति याच्ञाऽनन्तरमाह जनकस्तस्या –राजीमत्या उग्रसेन इत्युक्त, 'जा से'त्ति सुब्व्यत्ययाद् येन तस्मै 'ददामि' विवाहविधिनोपढौकयाम्यहम् । एव च प्रतिपन्नायामुग्रसेनेन राजीमत्यामासन्ने च क्रौष्टिकयादिष्टे विवाहलग्ने यदभूत्तदाह–सर्वाश्च ता औषधयश्च–जयाविजयर्द्धिवृद्ध्यादय सर्वौषधयस्ताभि स्नपित—अभिषिक्त, कृतकौतुकमङ्गल इत्यत्र कौतुकानि–ललाटस्य मुशलस्पर्शनादीनि मङ्गलानि च–दध्यक्षतदूर्वाचन्दनादीनि 'दिव्वजुयलपरिहिय'त्ति प्राग्वत्परिहित दिव्ययुगलमिति प्रस्तावाद् दूष्ययुगल येन स तथा, वासुदेवस्य सम्बन्धिनमिति गम्यते, ज्येष्ठमेव ज्येष्ठकम्–अतिशयप्रशस्यमतिवृद्ध वा गुणै

कारणा एए, हम्मंति सुबहू जिया । न मे एयं तु निस्सेसं, परलोगे भविस्सई ॥ १९ ॥ सो कुंडलाण जुयलं, सुत्तगं च महायसो । आभरणाणि य सव्वाणि, सारहिस्स पणामई ॥ २० ॥ मणपरिणामो अ कओ, देवा य जहोइयं समोइन्ना । सव्विड्ढीइ सपरिसा, निक्खमणं तस्स काउं जे ॥ २१ ॥ देवमणुस्सपरिवुडो, सिबियारयणं तओ समारूढो । निक्खमिय वारगाओ, रेवययंमि ठिओ भयवं ॥ २२ ॥ उज्जाणे संपत्तो, ओइन्नो उत्तमाउ सीयाओ । साहस्सीए परिवुडो अह निक्खमइ उ चित्ताहिं ॥ २३ ॥ अह सो सुगंधगंधिए तुरियं मउअकुंचिए । सयमेव लुंचई केसे, पंचट्ठीहिं समाहिओ ॥ २४ ॥

सुगममेव नवरं 'तस्य' इति सारथेः बहूनां—प्रभूतानां प्राणानां—प्राणिनां विनाशनं—हननमर्थादभिधेयं यस्मिंस्तद्बहुप्राणविनाशनं 'सः' भगवान् 'सानुक्रोशः' सकरुणः, केषु ?—'जिएहि उ'त्ति जीवेषु 'तु' पूरणे ॥ मम कारणादिति—हेतोर्मद्विवाहप्रयोजने भोजनार्थत्वादमीषामित्यभिप्रायः, 'हम्मंति'त्ति हन्यन्ते वर्त्तमानसामीप्ये लट्, ततो हनिष्यन्त इत्यर्थः, पाठान्तरतः 'हम्मिहंति'त्ति स्पष्टं, 'सुबहवः' अतिप्रभूताः 'जिय'त्ति जीवाः, 'एतदि'ति जीवहननं 'तुः' एवकारार्थो नेत्यनेन योज्यते, ततः 'न तु' नैव 'निस्सेसं'ति 'निःश्रेयसं' कल्याणं परलोके भविष्यति, पापहेतुत्वादस्येति भावः, भवान्तरेषु परलोकभीरुत्वस्यात्यन्तमभ्यस्ततयैवमभिधानमन्यथा चरमशरीरत्वादतिशयज्ञानित्वाच्च भगवतः

१ सव्वाणि

मासमुपचीयते' इति प्रवादतो मासमुपचितं स्यादिति मासार्थं भक्षयितव्यानविवेकिभिरिति शेप, 'पासित्त'त्ति दृष्ट्वा, कोऽर्थ ?—उक्तविशेपणविशिष्टान् हृदि निधाय 'सः' इति भगवानरिष्टनेमिर्महती प्रज्ञा—प्रक्रमान्मतिश्रुतावधिज्ञानत्रयात्मिका यस्यासौ महाप्रज्ञ 'सारथिं' प्रवर्त्तयितार प्रक्रमाद्गन्धहस्तिनो हस्तिपकमितियावत्, यद्वाऽत एव तदा रथारोहणमनुमीयत इति रथप्रवर्त्तयितारम् । 'कस्सट्ठ'त्ति कस्य 'अर्थात्' निमित्तादिमे प्राणा, एते सर्वे 'इमे' इत्यनेनैव च गते एते इति पुनरभिधानमतिसार्द्रहृदयतया पुन पुनस्त एव भगवतो हृदि विपरिवर्त्तन्त इति ख्यापनार्थं, यदिवा 'इमे' प्रत्यक्षा 'एते' समीपतरवर्त्तिन, उक्त हि "इदम प्रत्यक्षगत समीपतरवर्त्ति चैतदो रूपम्," पठ्यते च—'बहुपाणे'त्ति प्रतीत, 'सुखैपिण' साताभिलापिण 'सन्निरुद्धे य'त्ति सन्निरुद्धा 'च' पूरणे 'अच्छिहिं'त्ति आसत इति पोडशसूत्रार्थ ॥ एव च भगवतोक्ते—

अह सारही तओ भणइ, एए भद्दा उ पाणिणो । तुज्झ विवाहकज्जमि, भोआवेउ बहु जण ॥ १७ ॥

सुगममेव, नवरम् 'अथ' इति भगवद्वचनानन्तर 'भद्दा उ'त्ति 'भद्रा एव' कल्याणा एव न तु श्वशृगालादय एव कुत्सिता अनपराधतया वा भद्रा इत्युक्त भवति, तव 'विवाहकार्ये' परिणयनरूपप्रयोजने 'भोयावेउ'त्ति भोजयितुम्, अनेन यदुक्त 'कस्यार्थादि'ति तत्प्रत्युत्तरमुक्तमिति सूत्रार्थ ॥ इत्थ सारथिनोक्ते यद्भगवान् विहितवांस्तदाह—

सोऊण तस्स वयण, बहुपाणिविणासण । चिंतेइ से महापन्ने, साणुक्कोसे जिएहि उ ॥ १८ ॥ जइ मज्झ

सारस्वतादिप्रबोधनभवनगमनमहादानानन्तरं निष्क्रमणाय पुरीनिर्गममुपवर्णयांबभूवेति सूत्रसप्तकार्थः ॥ एवं च प्रतिपन्नप्रव्रज्ये भगवति—

वासुदेवो अ णं भणई, लुत्तकेसं जिइंदियं। इच्छियमणोरहे तुरियं, पावसू तं दमीसरा! ॥२५॥ नाणेणं दंसणेणं च, चरित्तेणं तवेण य। खंतीए मुत्तीए, वद्धमाणो भवाहि य ॥ २६ ॥ एवं ते रामकेसवा, दसारा य बहू जणा। अरिट्ठनेमिं वंदित्ता, अइगया बारगाउरिं ॥ २७ ॥

सूत्रत्रयं स्पष्टं, नवरं वासुदेवश्चेति चशब्दाद्बलभद्रसमुद्रविजयादयश्च 'लुप्तकेशम्' अपनीतशिरोरुहं ईप्सितः—अभिलपितः स चासौ मनोरथश्च भगवन्मनोरथविषयत्वान्मुक्तिरूपोऽर्थ ईप्सितमनोरथस्तं 'तुरियं'ति त्वरितं 'पावसु'त्ति प्राप्नुहि, आशीर्वचनत्वादस्य आशिषि 'लिङ्लोटा'वित्याशिषि लोट् ॥ 'तम्' इति त्वं 'वर्द्धमानः' इति वृद्धिभाक् 'भवाहि य'त्ति भव, चशब्द आशीर्वादान्तरसमुच्चये। 'एवम्' उक्तप्रकारेण 'वन्दित्वा' स्तुत्वेति योगः, इह चैवंविधाशीर्वचनानामपि गुणोत्कर्षसूचकत्वेन स्तवनरूपत्वमविरुद्धमिति भावनीयं, 'दसारा य'त्ति दशार्हाः, चशब्दो भिन्नक्रमस्ततः 'बहु'त्ति बहवो जनाश्च 'अतिगताः' प्रविष्टा इति सूत्रत्रयार्थः ॥ तदा च कीदृशी सती राजीमती किमचेष्टतेत्याह—

सोऊण रायकन्ना, पव्वज्जं सा जिणस्स उ। णीहासा उ निराणंदा, सोगेण उ समुच्छिया ॥ २८ ॥

कुत एवंविधचिन्तावसर ?, एवं च विदितभगवदाकूतेन सारथिना मोचितेषु सत्त्वेषु परितोषितोऽसौ यत्कृतवांस्तदाह—'सो' इत्यादि 'सुत्तक चे'ति कटीसूत्रम्, अर्पयतीति योग, किमेतदेवेत्याह—आभरणानि च सर्वाणि शेषाणीति गम्यते, ततश्च 'मन परिणामश्च' अभिप्राय कृतो निष्क्रमण प्रतीति गम्यते, 'देवा ' चतुर्निकाया एव 'यथोचितम्' औचित्यानतिक्रमेण समवतीर्णा , पाठान्तरत समवपतिता , चकाराभ्या चेह समुच्चयार्थाभ्यामपि तुल्यकालताया ध्वन्यमानत्वात्तदैवेति गम्यते, 'सर्वर्द्ध्या' समस्तविभूत्या 'सपरिषद ' बाह्यमध्याभ्यन्तरपर्षत्त्रयोपेता 'निष्क्रमणम्' इति प्रक्रमान्निष्क्रमणमहिमान 'तस्य' इति भगवतोऽरिष्टनेमिन कर्तुं 'जे' इति निपात पूरणे। 'शिबिकारत्न' देवनिर्मितमुत्तरकुरुनामकमिति गम्यते, 'तत ' तदनन्तर 'समारूढ ' अध्यासीन 'निष्क्रम्य' निर्गत्य 'द्वारकात ' द्वारकापुर्या 'रैवतके' उज्जयन्ते 'स्थित ' गमनान्निवृत्त । तत्रापि कतर प्रदेश प्राप्त स्थित इत्याह—'उद्यान' सहस्राम्रवणनामक सप्राप्त , तत्र चावतीर्ण 'सीयातो'त्ति शिबिकात 'साहस्सीए'त्ति सहस्रेण प्रधानपुरुषाणामिति शेष 'परिवृत ' परिवेष्टित 'अथ' स्थानान्तरं 'निष्क्रामति' श्रामण्य प्रतिपद्यते 'तु ' पूरणे 'चित्ताहि'त्ति चित्रासु चित्राख्ये नक्षत्रे । कथमित्याह—'सुगन्धिगन्धिकान्' स्वभावत एव सुरभिगन्धीन् 'त्वरित' शीघ्र 'मृदुकुञ्चितान्' कोमलकुटिलान् 'स्वयमेव' आत्मनैव 'लुञ्चति' अपनयति केशान् 'पञ्चाट्टाभि '–पञ्चमुष्टिभि 'समाहित ' समाधिमान्, सत्र सावद्य ममाकर्तव्यमिति प्रतिज्ञारोहणोपलक्षणमेतत् । इह तु वन्दिकाचार्य सत्त्वमोचनसमये

सा पव्वईया संती, पव्वावेसी तहिं बहुं । सयणं परियणं चेव, सीलवंता बहुस्सुआ ॥३२॥ गिरिं रेवययं जंती, वासेणोल्ला उ अंतरा । वासंते अंधयारंमि, अंतो लयणस्स सा ठिया ॥ ३३ ॥ चीवराणि विसारंती, जहा जायत्ति पासिया । रहनेमी भग्गचित्तो, पच्छा दिट्ठो अ तीइवि ॥ ३४ ॥ भीया य सा तहिं दट्ठुं, एगंते संजयं तयं । बाहाहिं काउं संगुप्फं, वेवमाणी निसीयई ॥ ३५ ॥

सूत्रचतुष्टयं स्पष्टमेव, नवरं 'सा' इति राजीमती 'पव्वावेसि'त्ति प्राविव्रजत्—प्रव्राजितवती 'तहिं'ति तस्यां द्वारकापुरि । 'रैवतकम्' उज्जयन्तं 'यान्ती' गच्छन्ती, भगवद्वन्दनार्थमिति गम्यते, 'वर्षेण' वृष्ट्या 'उल्ल'त्ति आर्द्रा स्तिमितसकलचीवरेतियावत्, 'अन्तरे' त्यन्तरालेऽर्द्धपथ इत्यर्थः, 'वासंति'त्ति वर्षति, नीरद इति गम्यते, 'अन्धकारे' अपगतप्रकाशे, कस्मिन् ?—'अन्तः' मध्ये, उक्तं हि, 'अन्तःशब्दोऽधिकरणप्रधानं मध्यमाह' लयनमिह गुहा तस्यां 'सा' राजीमती 'स्थिता' इत्यासिता, असंयमभीरुतयेति गम्यते, तत्र च 'चीवराणि' सङ्घाट्यादिवस्त्राणि 'विसारयन्ती' विस्तारयन्ती अत एव 'यथाजाता' अनाच्छादितशरीरतया जन्मावस्थोपमा 'इती' त्येवंरूपा 'पासिय'त्ति दृष्ट्वा(ष्टा), तद्दर्शनाच्च 'रथनेमिः' रथनेमिनामा मुनिः 'भग्नचित्तः भग्नपरिणामः सन् प्रक्रमात्संयमं प्रति, स हि तामुदाररूपामवलोक्य समुत्पन्नतदभिलाषातिरेकः परवशमनाः समजनि, पश्चाद्दृष्टश्च 'तया' राजीमत्या 'अपि' पुनरर्थे, प्रथमप्रविष्टैर्हि नान्धकारप्रदेशे किञ्चिदवलोक्यते, अन्यथा हि वर्षणसम्भ्रमादन्यान्याश्रयगतासु शेषसाध्वीष्वेकाकिनी

राईमई विचिंतेइ, धिरत्थु मम जीवियं । जाऽहं तेण परिचत्ता, सेयं पव्वइउं मम ॥ २९ ॥ अह सा भमरसंनिभे, कुच्चफणगप्पसाहिए । सयमेव लुचई केसे, धिइमती ववसिया ॥ ३० ॥

सूत्रत्रयं स्पष्टं, नवरं निष्क्रान्ता हासाविहासौ, चशब्दो भिन्नक्रमस्ततो निरानन्दा च, 'समवसृता' अवष्टब्धा । धिगस्तु मम जीवितमिति स्वजीवितनिन्दोक्तावायकं खेदवचो, याऽहं तेन परित्यक्तेति खेदहेतुप्रदर्शनं, ततश्च 'श्रेयः' अतिशयप्रशस्यं 'प्रव्रजितुं' प्रव्रज्यां प्रतिपत्तुं मम येनान्यजन्मन्यपि नैवं दुःखभागिनी भवेयमिति भावः । इत्थं चासौ तावदवस्थिता यावदन्यत्र प्रविहृत्य तत्रैव भगवानाजगाम, ततः उत्पन्नकेवलस्य भगवतो निशम्य देशनां विशेषत उत्पन्नवैराग्या किं कृतवतीत्याह—'अहे'त्यादि, 'अथ' अनन्तरं 'सा' राजीमती 'भ्रमरसंनिभान्' कृष्णतया आकुञ्चिततया च, कूर्चः—गूढकेशोन्मोचको वंशमयः फणकः—कङ्कतकस्ताभ्यां प्रसाधिताः—संस्कृता ये तान् 'स्वयम्' आत्मनैव 'लुञ्चति' अपनयति, भगवदनुज्ञयेति गम्यते, 'केशान्' कचान् 'धिइमति'त्ति धृतिमती व्यवसितेति—अध्यवसिता सती, धर्मं विधातुमिति शेषः इति सूत्रत्रयार्थः ॥ तत्प्रव्रज्याप्रतिपत्तौ च—

वासुदेवो अ णं भणइ, लुत्तकेसिं जिइंदियं । संसारसागरं घोरं, तर कन्ने ! लहुं लहुं ॥ ३१ ॥

स्पष्टमेव, नवरं 'तर' इत्युक्तम्, आशीर्वचनत्वादयमप्याशिषि लोट्, 'लघु लघु' त्वरितं त्वरितं, संभ्रमे द्विर्वचनमिति सूत्रार्थः ॥ तदवसरवक्तव्यतामाह—

तावद्भोगलक्षणमस्य फलमुपभुञ्जमहे इत्याशयः, भुक्तभोगाः पुनः 'पश्चाद्' इति वार्द्धक्ये 'जिनमार्गं' जिनोक्तमुक्तिपथं 'चरिस्सामो'त्ति चरिष्यामः, शेषं स्पष्टमिति सूत्रत्रयार्थः ॥ ततो राजीमती किमचेष्टतेत्याह—

दट्ठूण रहनेमिं तं, भग्गुज्जोयपराइयं। राईमई असंभंता, अप्पाणं संवरे तहिं ॥ ३९ ॥ अह सा रायवरकन्ना, सुट्ठिया नियमव्वए। जाई कुलं च सीलं च, रक्खमाणी तयं वदे ॥ ४० ॥ जइऽसि रूवेण वेसमणो, ललिएण नलकूबरो। तहावि ते न इच्छामि, जइऽसि सक्खं पुरंदरो ॥ ४१ ॥ धिरत्थु ते जसो कामी !, जो तं जीवियकारणा। वंतं इच्छसि आवेउं, सेयं ते मरणं भवे ॥ ४२ ॥ अहं च भोगरायस्स, तं चऽसि अंधगवण्हिणो। मा कुले गन्धणा होमो, संजमं निहुओ चर ॥ ४३ ॥ जइ तं काहिसि भावं, जा जा दिच्छसि नारिओ। वायाविद्धुव्व हडो, अट्ठिअप्पा भविस्ससि ॥४४॥ गोवालो भंडवालो वा, जहा तद्दव्वऽणिस्सरो। एवं अणीसरो तंपि, सामन्नस्स भविस्ससि ॥ ४५ ॥

सूत्रसप्तकं पाठसिद्धं, नवरं 'भग्गुज्जोयपराइयं'ति भग्नोद्योगः—अपगतोत्साहः प्रस्तावात्संयमे स चासौ पराजितश्च—अभिभूतः स्त्रीपरीषहेण भग्नोद्योगपराजितस्तम् 'असम्भ्रान्ता' नायं बलादकार्ये प्रवर्त्तयितेत्यभिप्रायेणात्रस्ता 'आत्मानं' स्वं 'संवरे'त्ति समवारीत्—आच्छादितवती चीवरैरिति गम्यते, 'तस्मिन्' इति लयनमध्ये पीडया शङ्कया च भयं स्यादित्येवमुक्तं। 'सुस्थिता' निश्चला 'नियमव्रते' इतीन्द्रियनोइन्द्रियनियमने प्रव्रज्यायां च जातिं कुलं शीलं

प्रविशेदपि न तत्रेयमिति भाव , भीता च मा कदाचिदसौ मम शीलभङ्ग विधास्यतीति, 'तस्मिन्' इति लयने दृष्ट्वा 'एकान्ते' विविक्ते 'तकम्' इति रथनेमि, किं कृतवत्यसावित्याह—'वाहाहि'ति बाहुभ्या कृत्वा 'सगोप' परस्परबाहुगुम्फन स्तनोपरिमर्कटबन्धमितियावत्, 'वेपमाना' शीलभङ्गभयात्कम्पमाना 'निषीदति' उपविशति, तदाश्लेषादिपरिहारार्थमिति भाव इति सूत्रचतुष्टयार्थ ॥ अत्रा तरे—

अह सोऽवि रायपुत्तो, समुद्दविजयगओ। भीय पवेविर दट्ठु, इम वक्कसुदाहरे ॥ ३६ ॥ रहनेमी अह भद्दे!, सुरूवे! चारुभासिणी!। मम भयाहि सुअणु!, न ते पीला भविस्सई ॥ ३७ ॥ एहि ता सुजिमो भोगे, माणुस्स खु सुदुल्लह। भुत्तभोगा पुणो पच्छा, जिणमग्ग चरिस्सिमो ॥ ३८ ॥

अथ च 'सोऽपी'ति स पुन 'राजपुत्र' रथनेमि भीता प्रवेपिता च अकस्माद्राजीमतीम् 'उदाहरे'त्ति उदाहरत्—उक्तवान्, किं तदित्याह—रथनेमिरहमिति, अनेनात्मनि रूपवत्त्वाद्यभिमानत स्वप्रकाशन तस्याभिलापोत्पादनार्थं विश्वासविशसनहेत्व यशङ्कानिरासार्थं वा स्वनामख्यापन, 'मम'ति मा 'भजस्व' सेवस्व सुतनु! न 'ते' तव 'पीडा' बाधा भविष्यति, सुखहेतुत्वाद्विषयसेवनस्येति भाव , यद्वा ता ससम्भ्रमा दृष्ट्वैवमाह—'म म भयाहि'त्ति मा मा भैषी सुतनु! यतो न 'ते' तव पीडा भविष्यति, कस्यचिदिह पीडाहेतोरभावात्, पीडया शङ्कया च भय स्यादित्येवमुक्तम्, 'एहि' आगच्छ 'ता' इति तस्मात्तावद्वा मानुष्य 'खु' इति निश्चित सुदुर्लभ, तदेतदवाप्ताविदमपि

ज्वलद्वह्निपातभीरुतया पुनरपि पिबन्ति, तथा च वृद्धाः—"सप्पाणं किल दो जाईओ–गंधणा य अगंधणा य. तत्थ गंधणा णाम जे डसिए मंतेहिं आकड्ढिया तं विसं वणमुहातो आवियंति, अगंधणा उण अवि मरणमज्झवसंति ण य वंतमाइयंति ।" किं तर्हि कृत्यमित्याह–संयमं निभृतः–स्थिरः 'चर' आसेवस्व, यदि त्वं 'भावं' प्रक्रमाद्भोगाभिलापरूपं या याः 'दिच्छसि'त्ति द्रक्ष्यसि तासु तास्विति गम्यते, ततः किमित्याह—वातेनाविद्धः—समन्तात्ताडितो वाताविद्धो भ्रमित इतियावत् हठो–वनस्पतिविशेषः स इवास्थितात्मा–चञ्चलचित्ततयाऽस्थिरस्वभावः । 'गोपालः' यो गाः पालयति 'भाण्डपालो वा' यः परकीयानि भाण्डानि भाटकादिना पालयति, पठ्यते च—'दण्डपालो वा' नगररक्षको वा यथा 'तद्द्रव्यस्य'गवादेः सततरक्षणीयस्य 'अनीश्वरः' अप्रभुः, विशिष्टतत्फलोपभोगाभावात्, एवमनीश्वरस्त्वमपि श्रामण्यस्य भविष्यसि, भोगाभिलाषतस्तत्फलस्यापि विशिष्टस्याभावादिति भाव इति सूत्रसप्तकार्थः ॥ एवं तयोक्तो रथनेमिः किं कृतवानित्याह—

तीसे सो वयणं सुच्चा, संजईए सुभासियं । अंकुसेण जहा नागो, धम्मे संपडिवाइओ ॥ ४६ ॥
मणगुत्तो वयगुत्तो, कायगुत्तो जिइंदिओ । सामन्नं निच्चलं फासे, जावज्जीवं दढव्वओ ॥ ४७ ॥

१ सर्पाणां किल द्वे जाती–गन्धनाश्च अगन्धनाश्च. तत्र गन्धना नाम ये दष्टा मन्त्रैराकृष्टास्तद्विषं व्रणमुखादापिबन्ति, अगन्धनाः पुनः अपि मरणमध्यवसन्ति न च वान्तमापिबन्ति

च 'रक्खमाणी'त्ति रक्षन्ती, शीलध्वसे हि कदाचिदस्या एवविधैव जाति कुल चेति सम्भावनातस्ते अपि विनाशिते स्यातामित्येवमुक्त, यद्यपि 'असि' भवसि 'रूपेण' आकारसौन्दर्येण 'वैश्रमण' धनद 'ललितेन' सविलासचेष्टितेन 'नलकूवर' देवविशेष 'ते' इति त्वा 'साक्षात्' समक्ष 'पुरन्दर' इन्द्रो रूपाद्यनेकगुणाश्रयो य इति भाव, रूपाद्यभिमानी चायमित्येवमुक्त ॥ अपर च–धिगस्तु 'ते' तव पौरुषमिति गम्यते, अयश कामिन्निव अयश कामिन्!–अकीर्त्त्यभिलापिन्!, दुराचारवाञ्छितया, यद्वा 'ते' तव यशो–महाकुलसभवोद्भूत धिगस्त्वियति सम्बन्ध 'कामिन्!' भोगाभिलापिन्! 'जीवितकारणात्' जीवितनिमित्तमाश्रित्य, तदनासेवने हि तथाविधदशायासौ मरणमपि स्यादित्येवमभिधान, 'वान्तम्' उद्गीर्ण यत् शृगालैरपि परिहृत तदिच्छसापातु, यथा हि कश्चिद्वान्तमापातुमिच्छत्येव भवानपि प्रव्रज्याग्रहणतस्त्यक्तान् भोगान् पुनरापातुमिवापातुम्–उपभोक्तुमिच्छति अत 'श्रेय' कल्याण 'ते' तव मरण भवेत्, न तु वा ताऽपान, ततो मरणस्यैवाल्पदोषत्वात्, अनूदित चैतद्–"विज्ञाय वस्तु निन्द्य त्यक्त्वा गृह्णन्ति किं क्वचित्पुरुषा ?। वान्त पुनरपि भुङ्क्ते न च सर्व सारमेयोऽपि ॥ १ ॥" 'अहमि' त्यात्मनिर्देशे 'च' पूरणे 'भोजराजस्स' उग्रसेनस्य त्व च 'असि' भवसि अन्धकवृष्णे, कुले जात इत्युभयत्र शेष, अतश्च 'मा' इति निषेधे 'कुले' अन्वये 'गधणे'त्ति 'गन्धनाना' सर्पविशेषाणा 'होमो'त्ति भूव, तच्चेष्टितानुकारितयेति भाव, ते हि वान्तमपि विष

ततश्च श्रामण्यं 'निश्चलं' स्थिरं 'फासे'त्ति अस्प्राक्षीद्–आसेवितवान्, शेषं स्पष्टमिति सूत्रद्वयार्थः ॥ उभयोरप्युत्तर-वक्तव्यतामाह—

उग्गं तवं चरित्ता णं, जाया दुन्निवि केवली । सव्वं कम्मं खवित्ता णं, सिद्धिं पत्ता अणुत्तरं ॥ ४८ ॥

उग्रं कर्मरिपुदारणतया 'तपः' अनशनादि 'चरित्ता णं'ति चरित्वा 'जातौ' भूतौ 'द्वावपी'ति रथनेमिराजीमत्यौ 'केवली'ति केवलिनौ 'सर्वं' निरवशेषं 'कर्म' भवोपग्राहि 'खवित्ता णं'ति क्षपयित्वा सिद्धिं प्रासावनुत्तरामिति सूत्रार्थः ॥ सम्प्रति निर्युक्तिरनुश्रियते—

सोरियपुरंमि नयरे आसी राया समुद्दविजओत्ति। तस्सासि अग्गमहिसी सिवत्ति देवी अणुज्जंगी ४४३
तेसिं पुत्ता चउरो अरिट्ठनेमी तहेव रहनेमी। तइओ अ सच्चनेमी चउत्थओ होइ दढनेमी ॥ ४४४ ॥
जो सो अरिट्ठनेमी बावीसइमो अहेसि सो अरिहा। रहनेमि सच्चनेमी एए पत्तेयबुद्धा उ ॥ ४४५ ॥
रहनेमिस्स भगवओ गिहत्थए चउर हुंति वाससया। संवच्छर छउमत्थो पंचसए केवली हुंति ॥४४६॥
नववाससए वासाहिए उ सव्वाउगस्स नायव्वं । एसो उ चेव कालो रायमईए उ नायव्वो ॥ ४४७ ॥

अत्र च प्रथमगाथया रथनेमेरन्वय उक्तः । 'तेसिं'ति 'तयोः' समुद्रविजयशिवादेव्योः, प्रसङ्गतश्चेह शेषपुत्राभिधा-

सूत्रद्वयम् 'तस्या ' राजीमत्या 'स ' रथनेमि 'वचनम्' अनन्तरोक्तानुशिष्टिरूप 'श्रुत्वा' आकर्ण्य 'सयताया ' ब्रह्म-जिताया सुष्ठु-सवेगजनकत्वेन भाषितम्-उक्त सुभाषितम् 'अङ्कुशेन' प्रतीतेन यथा 'नाग ' हस्ती पथीति शेष , एव 'धर्मे' चारित्रधर्मे 'सपडिवाइओ' त्ति 'सप्रतियातित ' सस्थित , तद्वचसैवेति गम्यते। अत्र च वृद्धसप्रदाय –"णेउरपडियाक्खाणयय भणिऊण जाव ततो रुट्ठेण राइणा देवी मेंठो हत्थी य तिन्निवि छिन्नकडगे चडावियाणि, भणिओ य मेंठो–एत्थ वाहेहि हत्थि, दोहि य पासेहि वेणुग्गहा ठविया, जाव एगो पाओ आगासे ठविओ, जणो भणइ–कि एस तिरियो जाणइ ?, एयाणि मारेयव्वाणि, तहावि राया रोस न मुञ्चति, ततो अ तिन्नि पाया आयासे कया, एगेण ठितो, लोगेण अक्कदो कतो–किमेय हत्थिरयण वावाइज्जति ?, रण्णा मिठो भणिओ—तरसि णियत्तेउ ?, भणइ—जइ दुयग्गाणवि अभय देसि, दिण्ण, ततो तेण अकुसेण नियत्तिओ हत्थित्ति ।" इह चायमभिप्राय —यथाऽयमीदृगवस्थो द्विपोऽङ्कुशवशत पथि सस्थित एवमयमप्युत्पन्नविश्रोतसिकस्तद्वचनेन अहितप्रवृत्तिनिवर्त्तकतयाऽङ्कुशप्रायेण धर्मे इति,

---

१ नूपुरपण्डिताख्यानक भणित्वा यावत्ततो रुष्टेन राज्ञा देवी हस्तिपक हस्ती च त्रयोऽपि छिन्नटके आरोहिता , भणितश्च हस्तिपक – अत्र पातय हस्तिन, द्वयोश्च पार्श्वयो वशग्राहा स्थापिता , यावदेक पाद आकाशे स्थापित , जनो भणति–किमेष तिर्यङ् जानाति ?, एते मारयितव्ये, तथापि राजा रोष न मुञ्चति, ततश्च त्रय पादा आकाशे कृता , एकेन स्थित , लोकेनाक्रन्द कृत –किमेतत् हस्तिरत्न व्यापाद्यते ?, राज्ञा मेण्ठो भणित —शक्नोपि निवर्तयितु ?, भणति–यदि द्वयोरप्यभय ददासि, दत्त, ततस्तेनाङ्कुशेन निवर्त्तितो हस्तीति ।

# अथ त्रयोविंशं केशिगौतमीयमध्ययनम्



व्याख्यातं रथनेमीयनामकं द्वाविंशतितममध्ययनम्, अधुना त्रयोविंशतितममारभ्यते, अस्य चायमभिसम्बन्धः– इहानन्तराध्ययने कथञ्चिदुत्पन्नविश्रोतसिकेनापि रथनेमिवद् धृतिश्चरणे विधेयेत्यभिहितम्, इह तु परेषामपि चित्तविप्लुतिमुपलभ्य केशिगौतमवत्तदपनयनाय यतितव्यमित्यभिप्रायेण यथा शिष्यसंशयोत्पत्तौ केशिपृष्टेन गौतमेन धर्मस्तदुपयोगि च लिङ्गादि वर्णितं तथाऽनेनाभिधीयत इत्यमुना सम्बन्धेन प्राप्तस्यास्याध्ययनस्य प्राग्वदुपक्रमादि प्रतिपाद्यं यावन्नामनिष्पन्ननिक्षेपे केशिगौतमीयमिति नाम, अतः केशिगौतमशब्दयोर्निक्षेपोऽभिधेयः, तत्र च वर्त्तमानतीर्थाधिपप्रथमगणधरतयैतत्तीर्थापेक्षया गौतमस्य ज्येष्ठत्वादादौ तदभिधानस्य तदनु केशिशब्दस्य निक्षेपमाह निर्युक्तिकृत्—

निक्खेवो गोअमंमी चउक्कओ दुवि० ॥ ४४८ ॥ जाण० ॥ ४४९ ॥

गोयमनामागोयं वेयंतो भावगोयमो होइ । एमेव य केसिस्सवि निक्खेवो चउक्कओ होइ ॥ ४५० ॥

नम्, 'अहेसि'त्ति अभूत्, इह च यदरिष्टनेमेरर्हत्त्व रथनेमेश्च प्रत्येकबुद्धत्वमुक्त तदर्हद्भ्रातृत्वेन स्वगुणप्रकर्षेण च रथनेमेर्माहात्म्यख्यापनार्थम् । चतुर्थगाथया पर्यायपरिमाणाभिधान, तत्र चत्वारि वर्षशतानि गृहस्थपर्याय वर्ष छद्मस्थपर्याय वर्षशतकपञ्चक केवलिपर्याय इति मिलितानि नव वर्षशतानि वर्षाधिकानि सर्वायुरभिहितम्, एष 'चेव-त्ति'ति चतुशब्दौ पूरणे, तत एष एव च वर्षाधिकवर्षशतनवकलक्षण, शेष स्पष्टमिति गाथापञ्चकार्थ ॥ सम्प्रति प्रतिभग्नपरिणामतया मा भूद्रथनेमौ कस्यचिदवज्ञेति सूत्रकृदाह—

एव करति सबुद्धा, पडिया पवियक्खणा । विनियट्टति भोगेसु, जहा सो पुरुसोत्तमो ॥ ४९ ॥ त्तिबेमि

॥ रहनेमिज्ज ॥ २२ ॥

'एवम्' इति वक्ष्यमाण 'कुर्वन्ति' विदधति 'सबुद्धा' बोधिलाभत 'पण्डिता' बुद्धिमत्त्वेन 'प्रविचक्षणा' प्रकर्षेण शास्त्रज्ञतया न त्वनीदृशा, किमित्याह—विशेषेण कथञ्चिद्विस्रोतसिकोत्पत्तावपि तन्निरोधलक्षणेन निवर्त्तन्ते, 'भोगेसु'न्ति भोगेभ्यो यथा स 'पुरुषोत्तमो' रथनेमि, अनीदृशा ह्येकदा भग्नपरिणामा न पुन सयमे प्रवर्त्तितु क्षमा, ततो भोगविनिवर्त्तनात् सबुद्धादिविशेषणान्वितत्वेन कथमयमवज्ञास्पद भवेदिति भाव, उपदेशपरतया वा प्राग्वद्व्याख्येयमिति सूत्रार्थ ॥ 'इति' परिसमाप्तौ, ब्रवीमीति पूर्ववत्, उक्तोऽनुगम, सम्प्रति नया, तेऽपि प्राग्वदेव ॥ इति श्रीशान्त्याचार्यकृतायामुत्तराध्ययनटीकाया शिष्यहिताया द्वाविंशतितममध्ययन समाप्तमिति ॥२२॥

ज्जुसंस्थानतयैव तेन व्यवस्थापनात्, मुक्त्यवस्थाऽपेक्षया वा, पठ्यते च—'अरिहा लोयविस्सुए। सवन्नू सव्वदंसी य, धम्मतित्थस्स देसए ॥' स्पष्टमेवेति सूत्रार्थः ॥ ततः किमित्याह—

तस्स लोगपईवस्स, आसि सीसे महायसे। केसी कुमारसमणे, विज्जाचरणपारगे ॥२॥ ओहिनाणसुए बुद्धे, सीससंघसमाउले। गामाणुगामं रीयंते, सेऽवि सावत्थिमागए ॥३॥ तिंदुयं नाम उज्जाणं, तंमि नयरमंडले। फासुए सिज्जसंथारे, तत्थ वासमुवागए ॥ ४ ॥

'तस्स' इति पार्श्वनाम्नोऽर्हतो लोके प्रदीप इव प्रदीपस्तद्गतसकलवस्तुप्रकाशकतया लोकप्रदीपस्तस्यासीच्छिष्यो महायशाः 'केशिः' केशिनामा कुमारश्चासावपरिणीततया श्रमणश्च तपस्वितया कुमारश्रमणो विद्याचरणे—ज्ञानचारित्रे तयोः पारगः—पर्यन्तगामी विद्याचरणपारगः, 'ओहिनाणसुए'त्ति सुव्यत्ययादवधिज्ञानश्रुताभ्यां "मइपुव्वं जेण सुयं" इत्यागमात्मतिपूर्वकतया श्रुतस्य मत्या च 'बुद्धः' अवगतहेयोपादेयविभागो विशेषाभिधायित्वाद्स्यापुनरुक्तता, शिष्याणां सङ्घः—समूहस्तेन समाकुलः—आकीर्णः परिबृंहित इतियावत् शिष्यसङ्घसमाकुलो ग्रामानुग्रामं पूर्ववत् 'रीयंते'—त्ति 'रीयमाणः' विहरन् 'श्रावस्तीं' श्रावस्तीनाम्नीं, 'तम्मि'त्ति तस्याः श्रावस्त्याः 'नगरमण्डले' पुरपरिक्षेपपरिसरे 'प्रासुके' स्वाभाविकागन्तुकसत्त्वरहिते, केत्याह—शय्या—वसतिस्तस्यां संस्तारकः—शिलाफलकादिः शय्यासंस्तारकस्तस्मिन् 'तत्रे'-ति तिन्दुकोद्याने वासम्—अवस्थानम् 'उपागतः' प्राप्तः, शेषं स्पष्टमिति सूत्रत्रयार्थः ॥ अस्मिंश्चान्तरे यदभूत्तदाह—

गाथात्रय प्राग्वन्नवर गौतमाभिलाप एव विशेष , 'एवमेव' उक्तप्रकारेणैव 'केशेरपि' केशिशब्दस्यापि निक्षेप( )चतुष्कको भवति, ज्ञातव्य इति शेष , गाथात्रयार्थ ॥ नामा वर्थमाह—

गोअम केसीओ आ सवायसमुट्ठिय तु जम्हेय । तो केसिगोयमिज्ज अज्झयण होइ नायव ॥ ४५१ ॥

गौतमात् केशिनश्च सवाद —परस्परभाषण वचनैक्य वा यतस्तयोस्तात्पर्यत एकार्थाभिधायितयै(ते)व तत सवादात्समुत्थितम्—उत्पन्न सवादसमुत्थितम्, अनेन भावार्थ उक्त , तु अवधारणे, ततो गौतमात्केशिनश्च सवादसमुत्थितमेव यस्मादेतत्–प्रस्तुत तत केशिगौतमयोर्भवमित्यर्थे 'नामधेयेन नामधेयत्वेऽस्ये'ति वृद्धसञ्ज्ञत्वात्, 'वृद्धाच्छ ' (पा० ४–२–११४) इति छप्रत्यये केशिगौतमीयमध्ययन 'भवति' ज्ञातव्यमिति गाथार्थ ॥ उक्तो नामनिष्पन्ननिक्षेप , इदानीं सूत्रालापकनिष्पन्ननिक्षेपावसर , स च सूत्रे सति भवतीति सूत्रानुगमे सूत्रमुच्चारणीय, तच्चेदम्—

जिणे पासित्ति नामेण, अरहा लोगपूइए । सबुद्धप्पा य सव्वन्नू, धम्मतित्थयरे जिणे ॥ १ ॥

'जिन ' परीषहोपसर्गजेता पार्श्व इति नाम्नाऽभूदिति शेष , स चान्योऽपि समवसत आह–अर्हति देवेन्द्रादिविहितानि वन्दननमस्करणादीन्यर्हन् तीर्थकृदित्यर्थ , अत एव लोकपूजित सबुद्ध —तत्त्वावगमवानात्माऽस्येति सबुद्धात्मा, 'च पूरणे, स चानुत्पन्नकेवलोऽपि स्यादित्याह–'सर्वज्ञ ' सकलद्रव्यपर्यायवित्, तथा धर्म एव तीर्यते भवाम्भोधिरनेनेति तीर्थ धर्मतीर्थं तत्करणशीलो धर्मतीर्थकर 'जिन ' जितसकलकर्मा, भवोपग्राहिकर्मणामपि दग्धर-

ततः 'उभयोवि'त्ति उभावपि केशिगौतमौ 'तत्र' इति श्रावस्त्यां 'विहरिंसु'त्ति वचनव्यत्ययाद् व्यहार्ष्टां, विहृतवन्तावित्यर्थः, 'अल्लीण'त्ति 'आलीनौ' मनोवाक्कायगुप्तावाश्रितौ वा, प्रक्रमात्तस्यामेव पुरि, यद्वा 'अलीनौ' पृथगवस्थानेन परस्परमश्लिष्टौ 'सुसमाहितौ' सुष्ठु ज्ञानादिसमाधिमन्तौ, 'उभयोः' द्वयोः तयोरेव केशिगौतमयोः 'शिष्यसङ्घानां' शिष्यसमूहानां 'संयतानां' संयमिनां 'तपस्विनां' विशिष्टतपोऽन्वितानां 'तत्रे'ति तस्यामेव श्रावस्तीपुरि 'चिन्ते'ति वक्ष्यमाणविकल्पा गुणाः—सम्यग्दर्शनादयस्तद्वतां, 'ताइणं'ति प्राग्वत् तायिनां त्रायिणां वा, चिन्तास्वरूपमाह—'कीदृशः ?' किंस्वरूपः 'वा' विकल्पे पुनरर्थे वा 'इमो'त्ति अयम्—अस्मत्सम्बन्धी 'धर्मः' महाव्रतात्मकः 'अय'मिति परिदृश्यमानगणभृच्छिष्यसम्बन्धी 'धम्मो व'त्ति वाशब्दो भिन्नक्रमस्ततश्चायं वा धर्मः कीदृशः ?, आचरणमाचारो—वेषधारणादिको बाह्यः क्रियाकलाप इत्यर्थः, स एव सुगतिधारणाद्धर्मः, प्राप्यते हि बाह्यक्रियामात्रादपि नवमग्रैवेयकमितिकृत्वा, तस्य प्रणिधिः—व्यवस्थापनमाचारधर्मप्रणिधिः, 'इमावि'त्ति प्राकृतत्वादयं वाऽस्मत्सम्बन्धी 'सा व'त्ति तत एव स वा द्वितीययतिसत्कः, अयं चाशयः—अस्माकममीषां च सर्वज्ञप्रणीत एव धर्मस्तत्किमस्यैतत्साधनानां च भेद इति तदेतदवबोद्धुमिच्छामो वयमिति । उक्तामेव चिन्तामभिव्यक्तीकर्त्तुमेवाह—'चाउज्जामो य'त्ति चातुर्यामः—महाव्रतचतुष्टयात्मको यो धर्मः 'देशितः' कथितः 'पार्श्वेन' पार्श्वनाम्ना तीर्थकृतेति सम्बन्धः, 'जो इमो'त्ति चकारस्य प्रश्लेषाद् यश्चायं पञ्च शिक्षाः—प्राणातिपातादिविरमणोपदेशात्मिकाः संजाता

अह तेणेव कालेण, धम्मतित्थयरे जिणे । भयव वद्धमाणुत्ति, सव्वलोगमि विस्सुए ॥५॥ तस्स लोगपईवस्स, आसि सीसे महायसे। भयव गोयमे नाम, विज्जाचरणपारगे ॥ ६ ॥ बारसगविऊ बुद्धे, सीससघसमाउले । गामाणुगाम रीयते, सेऽवि सावत्थिमागए ॥ ७ ॥ कुट्ठग नाम उज्जाण, तमि नयरमडले । फासुएसिज्जसथारे, तत्थ वासमुवागए ॥ ८ ॥

स्पष्टमेव, नवरम् 'अथ' इति वक्तव्यान्तरोपन्यासे 'तेणेव कालेण'ति तस्मिन्नेव काले, सूत्रत्वात्सप्तम्यर्थे तृतीया, वर्द्धमानो नाम्नाऽभूदिति शेष, 'विश्रुत' विख्यात, गौतमो नामेति गोत्रनामतोऽन्यथा हि इन्द्रभूत्यभिधान एवासौ, 'बारसगविउ'त्ति द्वादशाङ्गवित् 'सेऽवि'त्ति सोऽपि गौतमनामा भगवान् 'तम्मि'न्ति इहापि तस्या श्रावस्त्या इति सूत्रचतुष्टयार्थ ॥ तत किमजनीत्याह—

केसीकुमारसमणे, गोयमे अ महायसे । उभओऽवि तत्थ विहरिंसु, अल्लीणा सुसमाहिया ॥ ९ ॥ उभओ सीससघाण, सजयाण तवस्सिण । तत्थ चिंता समुप्पन्ना, गुणवताण ताइण ॥ १० ॥ केरिसो वा इमो धम्मो, इमो धम्मो व केरिसो ? । आयारधम्मप्पणिही, इमा वा सा व केरिसी ? ॥ ११ ॥ चाउज्जामो अ जो धम्मो, जो इमो पचसिक्खिओ । देसिओ वद्धमाणेण, पासेण य महामुणी ॥ १२ ॥ अचेलगो अ जो धम्मो, जो इमो सतरुत्तरो । एगकज्जपवन्नाण, विसेसे किं नु कारण ? ॥ १३ ॥